# महाभाष्यम्

। भाष्यप्रदीपेन विवरणेन च सहितं ।

काश्यां राजकीयपाठालये श्रीमद्बालन्टैन्नामकतदध्यक्षप्रेरितैस्तत्रत्यैः

श्रीनारायणशास्त्रिदेवदत्तदुर्गादत्तशर्मभिर्व्याकरणपण्डितैः श्रीमच्चतुर्वेदहीरानन्दशर्मभिरलङ्कारपण्डितैश्च संशोधितं

सांख्यशास्त्राध्यापकश्रीमत्काशीनाथभट्टेवताम् । ३ । पदवा

...र्णावावारपारीः

मिर्जापुरपत्तने विवेदिदुर्बलिशर्मणा संशोध्य मुद्राक्षरैरुपनिबद्धं भारतवर्षीय-
पश्चिमोत्तरप्रदेशाध्यक्षनियोगान्मुद्रितम्

॥ सन् १८५५ ईस्वी ॥

वेदरूपा तत्रि
नमति
ष्यवेनक्षयेन

१

॥ वि० ॥ श्री गणेशाय नमः। नत्वा साम्बशिवं देवीं वागधिष्ठानिकां गुरून्। पाणिन्यादिमुनीन् वन्द्यान्पितरौच सतीशिवौ ।१। नागेशभट्टो नागेशभाषितार्थविचक्षणः । हरिदीक्षितपादाब्जसेवनावाप्तसन्मतिः ।२। याचकानां कल्पतरोररिकक्षहुताशनात्। शृङ्गवेरपुराधीशाद्रामतो- लब्धजीविकः ।३। नाविस्तीर्णं न विस्तीर्णं मध्यानामपि बोधकृत्। भाष्यप्रदीपव्याख्यानं कुर्वेऽहंतु यथामति।४। भाष्यं व्याचिकीर्षुः शिष्टाचारप्राप्तं मङ्गलं शिष्यशि- क्षायै निबध्नाति सर्वेति । क्रान्तानां पञ्चमश्लोकोत्तरार्द्धेनान्वयः । सर्वाकारत्वं सर्वोपादानकारणत्वात् । मृदादिवत् । कार्य्यातिरिक्तदृश्यस्वरूपाभावान्निराकार- त्वम् । कर्तृत्वादिश्लाघ्यचत्वम् । स ऐक्षतेति श्रुतेः । अतीन्द्रियत्वं विगतेन्द्रियत्वेन । पश्यत्यचक्षुरित्यादिश्रुतेः । सर्वप्रत्यक्षीकरणंतु स्वरूपचैतन्येनैव । इन्द्रियावि षयत्वेनवातीन्द्रियत्वम्। सदसद्रूपता । प्रपञ्चधर्म्मः । एतच्च स्त्रियामिति सूत्रे वक्ष्यते । तामतीतम् । तद्रहितमित्यर्थः ॥

॥ कै० ॥ श्री गणेशाय नमः। सर्वाकारं निराकारं विश्वाध्यक्षमतीन्द्रियम् । सदसद्रूपतातीतमदृश्यं माय- यावृतैः ।१। ज्ञानलोचनसंलक्ष्यं नारायणमजं विभुम् । प्रणम्य परमात्मानं सर्वविद्याविधायिनम् ।२। पुरुषाः प्रतिपद्यन्ते देवत्वं यदनुग्रहात् । सरस्वतीञ्च तां नत्वा सर्वविद्याधिदेवताम् ।३। पदवाक्यप्रमाणानां पारं यातस्य धीमतः। गुरोर्महेश्वरस्यापि कृत्वाचरणवन्दनम् ।४। महाभाष्यार्णवावारपारीणं विवृतिप्लवम्। यथागमं विधास्ये ऽहं कैयटो जैयटात्मजः ।५ ॥

॥ वि० ॥ एवञ्च सदेवेति भावः। नन्वीदृशमस्माभिः कुतो न गृह्यत इत्यत आह। अदृश्यमित्यादि ।१। माययावृतैरित्यस्य कृत्यमाह। ज्ञानेति । तत्त्वमस्या- दिवाक्यजनिताखण्डाद्वितीयसच्चिदानन्दब्रह्माकारावृत्तिर्ज्ञानं। तदेव लोचनं तेन संप्रेक्ष्यमित्यर्थः। नारायणमित्यादि । सर्वनरसमूहान्तर्यामिणमित्यर्थः। सर्वविद्या वेदरूपा तद्विधायिनम्। २ । वचनसन्दर्भविशेषरूपे ग्रन्थे समुचितत्वाद्वागधिदेवतां नमति। पुरुषा इति देवत्वं । पाण्डित्यम् । ३ । सम्प्रदायशुद्धिं द्योतयन् गुरुं नमति। पदेति । व्याकरणमीमांसातर्काणामित्यर्थः। धीमतः । ऊहापोहकुशलस्य ।४। महाभाष्येति । व्याख्यातृत्वे ऽप्यस्येष्ट्यादिकथनेनान्वाख्यातृत्वादितरभा- ष्यवैलक्षण्येन महत्त्वम्। अवारपारयोर्भवम्। सूयतेऽनेनेति सवः सेतुः। यथागमम् । सम्प्रदायमनतिलङ्घ्येत्यर्थः ॥५।

॥ वि० ॥ औद्धत्यं परिहरति भाष्येति । मयूरव्यंसकादिसमासो रूपकश्चेति बोध्यम् । पिशुनत्वं दुष्टत्वम । ६ । नन्वेवं कथं प्रवृत्तिरत आह तथापीति । तत्रत्यसारांश एवात्र निबद्ध इति भावः । शनैरित्यनेनात्यन्तग्रन्थासंकोचः । पङ्गुवदित्यनेन व्याख्येयांशापरित्यागो व्याख्यानस्याविस्तृतत्वंच बोध्यते । ७ । यद्यपि पाणिनिना ब्राह्मणेन निष्कारण इत्यादिश्रुतेः संध्योपासनादाविव प्रत्यवायपरिहारार्थितयैवोत्तमाधिकारिप्रवृत्तिसंभवात् प्रयोजनं नोक्तं वार्त्तिककृतापि शास्त्रपूर्वकप्रयोगे धर्म इत्यनेन मध्यमाधिकारिणः ॥

॥ कै० ॥ भाष्याब्धिः क्वातिगम्भीरः क्वाहं मन्दमतिस्ततः । छात्राणामुपहास्यत्वं यास्यामि पिशुनात्मनाम् । ६ ।
तथापि हरि बद्धेन सारेण ग्रन्थसेतुना । क्रममाणश्शनैः

॥ भा० ॥ अथ शब्दानुशासनम् । अथेत्ययं शब्दोऽधिकारार्थः प्रयुज्यते ॥

॥ कै० ॥ पारं तस्य प्राप्तास्मि पङ्गुवत् । ७ । भाष्यकारो विवरणकारत्वाद्व्याकरणस्य साक्षात्प्रयोजनमाह । अथ शब्दानुशासनमिति । प्रयोजनप्रयोजनानितु रक्षोहादीनि पश्चाद्वक्ष्यति ॥

॥ वि० ॥ परमप्रयोजनं दर्शितम् भगवांस्तु विवरणकारत्वान्मन्दाधिकारिणां प्रवृत्तेः प्ररोचकप्रयोजनप्रतिपत्तिप्रवणत्वाद्व्यवहितेषु स्वर्गापूर्वादिष्वनाश्वासात्साक्षात्प्रयोजनं शब्दव्युत्पत्तिलक्षणं वदतीत्याह भाष्यकार इति । तत्र शब्दज्ञानरूपे प्रयोजने उक्ते विषयोऽप्युक्त एव शास्त्रजन्यज्ञानविषयस्यैव शास्त्रविषयत्वादिति बोध्यम् । तज्जिज्ञासुरधिकारी । प्रतिपाद्यप्रतिपादकभावस्सम्बन्ध इत्यर्थादेव लब्धम् । ननु कानि पुनरित्यादिना प्रयोजनानि वक्ष्यति तेन पौनरुक्त्यमत आह साक्षादिति तदेवाह प्रयोजन प्रयोजनानीति ॥



॥ वि० ॥ व्याख्यातुमित्यस्य शब्दानुशासनमित्यादिनेति शेषः । तावत् प्रथमं व्याचष्टे इति पदार्थज्ञानायानन्तर्याद्यर्थकत्वनिरासायचेति शेषः । भाष्यत्वादेवच स्ववाक्यव्याख्यानमिति भावः । नन्विति विनाप्यथशब्दोऽधिकारार्थ इत्येवोच्यतामत आह एवंहीति । पदान्तरैः शब्दपदाधिकारार्थपदप्रयुज्यत इति पदैः । व्याख्यातुमिति । अधिकारार्थत्वेनेति शेषः । अथेतिशब्दोऽधिकारार्थ इत्युक्ते आनन्तर्याद्यर्थकत्वमप्रमाणमिति भ्राम्येदतोऽयमिति । भाष्ये योऽयमस्मिन्वाक्ये स इत्यर्थः विस्पष्टेति नवेतीत्यादावर्थपरताया दर्शनेन तथा भ्रमं निवर्त्तयितुमित्यर्थः । ननु निपातानां द्योतकत्वादभिधेयवाच्यर्थशब्दोऽनुपपन्नोऽत आह अधिकार इति । प्रस्ताव इति प्रारम्भ इत्यर्थः । सचार्थाद्व्याख्यायमानस्य अर्थशब्दः प्रयोजनवाचीति भावः । निपातानांच द्योतकत्वमिति ॥

॥ कै० ॥ स्ववाक्यं व्याख्यातुं तदवयवमथशब्दं तावद्व्याचष्टे । अथेत्ययमिति । इतिशब्दोऽथशब्दस्य स्वरूपेऽवस्थापनाय प्रयुक्तः । एवं हि पदान्तरैस्सामानाधिकरण्येन सम्बन्धे सति अथ शब्दो व्याख्यातुं शक्यते । स्वरूपेऽवस्थितश्च सर्वनाम्ना परामृश्यते अयमिति । शब्द इति स्वरूपकथनं विस्पष्टप्रतिपत्त्यर्थम् । अधिकारार्थ इति । अधिकारः प्रस्तावो द्योत्यत्वेनास्य प्रयोजनमित्यर्थः । निपातानाञ्च द्योतकत्वं वाक्यपदीये निर्णीतम् ॥

॥ वि० ॥ निपातानां द्योतकत्वंचेत्यर्थः । उपसर्गातिरिक्तनिपातानां द्योतकत्ववाचकत्वोभयस्वीकारस्याव्ययं विभक्तीति सूत्रे भाष्ये स्पष्टत्वात् । उपसर्गाणांतु द्योतकत्वमेवेति स्पष्टं गतिर्गतावित्यत्र भाष्ये इति तत्रैव निरूपयिष्यामः । अत एव साक्षात्क्रियते गुरुरित्यादि सङ्गच्छते । प्रारम्भक्रियाविषयत्वद्योतकस्याप्यथशब्दस्यान्यार्थं नीयमानदध्यादिवन्मङ्गलत्वमपीत्युभयार्थमथशब्दः प्रयुज्यते इति फलितम् । परेत्वत्र वाचकत्वमेवेच्छन्ति अधिकृतमितिच तदर्थंवदन्ति । भाष्ये प्रयुज्यत इत्यनेन वर्त्तमाननिर्देशेन सर्वलोकसिद्धमस्याधिकारार्थत्वं नतु वृद्ध्यादिवत्पारिभाषिकमिति ध्वनितम् ॥

॥ वि० ॥ ननु विवरणेऽधिकृतमित्यधिकं वाचकपदाभावाद् द्योतकत्वानुपपत्तिश्चेत्यत आह अनेकेति । उच्यते श्रूयते क्रियत इति प्रतीयत इति एतावतैव द्योतकत्वमिति भावः । ननु भावसाधनानुशासनपदस्य शास्त्रपदेन सामानाधिकरण्यमनुपपन्नमत आह व्याकरणस्यचेति । अन्वर्थत्वात्प्रयोजनाभिधानोपपत्तिः । अनुशिष्यन्तेऽसाधुशब्देभ्यो विविच्य बोध्यन्त ऽनेनेति करणल्युडन्ततया शास्त्रपदेन सामानाधिकरण्यमिति भावः । इदमेव ध्वनयितुं भाष्ये नामपदोपादानं नामनामिनोरभेदान्नामशास्त्रमिति सामानाधिकरण्यम् । अनेनैवापभ्रंशानामविषयत्वं सूचितं ध्वनीनांच । केषामितिप्रश्नस्तु किं लौकिकमात्रविषयशाकटायनादिशास्त्रमधिकृतमुत वैदिकमात्रविषयप्रातिशाख्यमितीति परे ॥

॥ कै० ॥ अथशब्दस्याधिकारार्थत्वे यो वाक्यार्थस्सम्पद्यते तं दर्शयति । शब्दानुशासनमिति । अनेकक्रियाविषयस्यापि शब्दानुशासनस्यारभ्यमाणताथशब्दसन्निधाने प्रतीयते । व्याकरणस्यचेदमन्वर्थं नाम शब्दानुशासनमिति । अत्रचाचार्यस्य कर्त्तुः प्रयोजनाभावादनुपादानादुभयप्राप्त्यभावान्नोभयप्राप्तौ ॥

॥ भा० ॥ शब्दानुशासनं नाम शास्त्रमधिकृतं वेदितव्यम् । केषां शब्दानाम् । लौकिकानां वैदिकानाञ्च ॥

॥ कै० ॥ कर्मणीत्यनेन षष्ठी । अपितु कर्त्तृकर्मणोः कृतीत्यनेनेति कर्मणिचेति समासप्रतिषेधाप्रसङ्गादिध्मप्रव्रश्चनादिवत्समासः ॥

॥ वि० ॥ ननु कर्मणिचेति निषेधात्कथं कर्मषष्ठ्यन्तेन समासो ऽत आह अत्रचाचार्यस्येति । उभयोरुपादान एवोभयप्राप्तिरित्याम्नाने इति सूत्रे भाष्ये स्पष्टम् । कर्त्तृकर्मणोरिति षष्ठ्यामपि समासनिषेधः कुतो नेत्यत आह इध्मेति । चस्येत्यर्थकतया कर्मणीत्युच्चार्यविहितषष्ठ्यैव समासनिषेध इति भावः । भाष्ये शास्त्रमित्यस्य कर्त्तव्यत्वेनेति शेषः । विवरणकारस्त्वाख्यातव्यत्वेनेति शेष उचित इत्यन्ये । शास्त्रत्वंचास्य साधुत्वरूपैकप्रयोजनसम्बद्धत्वाद्बोध्यम् ॥



॥ वि० ॥ सामान्यशब्दत्वादिति । लोकव्यवहारे ध्वनावपभ्रंशेच शब्दशब्दप्रयोगादिति भावः । एतेन ध्वनिव्यङ्ग्य एव तपरसूत्रादौ शब्दशब्दप्रयोगादिदं चिन्त्यमित्यपास्तम् । ननु व्रीहीन्प्रोक्षतीत्यादौ सामान्यशब्दस्याप्यपूर्वीयेषु विशेषेषु प्रवृत्तिवत्तद्वाचके साधौ तद्विशेषे प्रवृत्तिर्भविष्यतीत्यत आह विनेति । व्रीहिशब्दस्यतु प्रकरणाद्विशेषे प्रवृत्तिरिति भावः । वाशितादीनामित्यादिनापभ्रंशसंग्रहः । उत्तरपदार्थसंसृष्टपूर्वपदार्थस्य कथं सर्वनाम्ना परामर्शोऽत आह उत्तरपदार्थान्तर्गतस्येति । ततः पृथगुपस्थित्यविषयस्येत्यर्थः । बुद्ध्या मानस्या यद्वा वाक्यजन्यबुद्ध्या । वेदाङ्गत्वादिति तत्त्वंचागमसिद्धम् । अनेन तन्त्रीशब्दादीनामविषयता सूचिता नच वेदाङ्गत्वाद्वैदिका एव विषयास्सुः । तत्र तत्र भाषायां छन्दसीत्याद्युक्त्योभयोरपि विषयत्वात् । ननु चिदानन्दस्वरूपब्रह्मातिरिक्तस्य सर्वस्य

॥ कै० ॥ शब्दशब्दस्यसामान्यशब्दत्वाद्विना प्रकरणादिना विशेषेऽवस्थानाभावात्तन्त्रीशब्दकाकवाशितादीनामप्यनुशासनप्रसङ्ग इति मत्वा पृच्छति केषामिति । उत्तरपदार्थान्तर्गतस्यापि पूर्वपदार्थस्य बुद्ध्या प्रविभागात्प्रत्यवमर्शः । यथा राजपुरुष इत्युक्ते कस्य राज्ञ इति । सिद्धान्तवादीतु व्याकरणस्य वेदाङ्गत्वात्सामर्थ्याद्विशेषावगतिरिति मत्वाह लौकिकानामिति । लोके विदिता इति लोकसर्वलोकाभ्यां ठञिति ठञ् । अथवा भवार्थेऽध्यात्मादित्वाट्ठञ् । एवं वेदे भवा वैदिकाः । वैदिकानामपि लौकिकत्वेऽपि प्राधान्यख्यापनाय पृथगुपादानम् । यथा ब्राह्मणा आयाता वसिष्ठोऽप्यायात इति वसिष्ठस्य । तेषांतु प्राधान्यं यत्नेनापभ्रंशपरिहारात् । अथवा भाषाशब्दानामेव लौकिकत्वमिति भेदेन निर्देशः ॥

॥ वि० ॥ लोकपदार्थत्वादेदस्यापि लोकान्तर्गतत्वाद्भेदेनाभिधानं न युज्यत इत्यत आह वैदिकानामिति । वैदिकानां लौकिकत्वेऽपीति पाठः । तेषांत्विति । लौकिकानां यात्रे कर्मण्येव तत्परिहारस्तेषांतु सर्वत्रेति भावः । भाषाशब्दानामिति । भाषाप्रयोज्यप्रयोजकवृद्धव्यवहारस्तत्र प्रयुज्यमानानामित्यर्थः । एवंच वेदमात्रान्तर्गतकर्णेभिर्देवासो गृभ्णामीत्याद्यतिरिक्तपरतालौकिकशब्दस्य तैस्तद्व्यवहारादर्शनात् । अत एव गौरश्व इत्यादीनां लौकिकोदाहरणत्वसंगतिः । लोक स्वरानादराद्वेदे तदादराच्च स्वरविशिष्टानां वेदमात्रविषयतामभिप्रेत्य शन्न इत्यादीनां वैदिकोदाहरणत्वसंगतिरिति भावः ॥

॥ वि॰ ॥ लोके पदानामुदाहरणत्वोक्तौ वेदे वाक्यानामेव तत्त्वोक्तावाशयमाह तत्रेति । पदान्तरसमभिव्याहारेण स्वरविशेषाच्च वेदे वाक्यानामुदाहरणत्वोक्तिरित्यपि बोध्यम् । लोकवेदसाधारणतया पाणिनीयशब्दानुशासनस्यैवात्राधिकृतत्वञ्च तु शाकटायनादिव्याकरणस्येत्युत्तराशयं परे । भाष्ये लौकिकास्तावदिति । तावच्छब्दोऽनुक्रमे पूर्वं लौकिका उदाह्रियन्ते पश्चाद्वैदिका इत्यर्थः । वैदिकानां प्रधानत्वेऽपि लौकिकानां पूर्वनिर्देशस्तद्वदादरसूचनार्थः । अभेदेन लोके इति । अभेदेनैवेत्यर्थः । शब्दपरत्वाभिप्रायेणास्य गौरिति प्रयोगाभावादिति भावः । पुरोवर्त्तिव्यक्तिं पश्यतो वाचकजिज्ञासया

॥ कै॰ ॥ तत्र लोके पदानुपूर्वांनियमाभावात्पदान्येव दर्शयति गौरश्व इति । वेदेत्वानुपूर्वीनियमाद्वाक्यान्युदाहरति शन्न इति । अयं गौरयं शुक्ल इति ॥

॥ भा॰ ॥ तत्र लौकिकास्तावत् । गौरश्वः पुरुषो हस्ती शकुनिर्मृगो ब्राह्मण इति । वैदिकाः खल्वपि शन्नो देवीरभीष्टये । ईषेत्वोर्जेत्वा । अग्निमीळे पुरोहितम् । अग्न आयाहि वीतय इति । अथ गौरित्यत्र कश्शब्दः ॥

॥ कै॰ ॥ शब्दार्थयोरभेदेन लोके व्यवहारदर्शनाच्छब्दस्वरूपनिर्द्धारणाय पृच्छति । अथेति । गौरिति विज्ञाने प्रतिभासमानेषु वस्तुषु कश्शब्द इत्यर्थः ॥

॥ वि॰ ॥ कोऽयमिति प्रश्नेऽयं गौरयं वर्णश्शुक्ल इत्युत्तरस्थले सन्निहितमुद्दिश्य तादात्म्येन शब्दविधेयताप्रतीतिरिति तात्पर्यम् । शब्दार्थयोस्तादात्म्यमेव शक्तिः स्पष्टंचेदं पातञ्जलभाष्ये इति मञ्जूषायामस्माभिर्हरिसंमततया व्युत्पादितम् । अत एव जात्यादिव्यक्त्योरिव रामेति द्व्यचरं नाममानभङ्गः पिनाकिन इत्यादौ शब्दार्थयोरप्यभेदेन व्यवहारः । अथ गौरिति भाष्ये अथेत्यस्य पृच्छ्यते इति शेषः । किं पृच्छ्यते तदाह गौरित्यत्रेत्यादि । कः शब्द इति । कः शब्दशब्दाभिधेय इति प्रश्नः । प्रतिभासमानेषु । शब्दजातिव्यक्त्यादिषु ॥



॥ वि॰ ॥ कः शब्द इति कः शब्दशब्दाभिधेय इति प्रश्नः । प्रतिभासमानेषु शब्दजातिव्यक्त्यादिषु । नन्वेवं गुणक्रिययोश्शब्दत्वाशङ्कानुपपन्ना नहि ते अपि गौरितिशब्दजन्यबोधे भासेत इति चेन्न । गुणगुणिनोः क्रियाक्रियावतोश्चाभेदात् । शब्दार्थयोश्च तत्त्वात् तदभिन्नाभिन्नस्येति न्यायेन तच्छङ्कोपपत्तेः । यथा परमकारणाभिन्नकार्य्यकारणकस्य परमकारणेनाप्यभेदः । यद्वा गुणसमूहो द्रव्यमिति पक्षे तस्य भाव इति सूत्रस्थभाष्यसम्मते समूहस्य गोशब्दवाच्यत्वेऽवयवभूतगुणादीनामपि तद्वाच्यत्वमिति शङ्का बोध्या । अत्र गौरिति विज्ञान इति सामान्योक्त्या तदाकारप्रत्यक्षादिज्ञाने ऽपि गुणादीनां

॥ कै॰ ॥ अथेति गौरिति विज्ञाने प्रतिभासमानेषु वस्तुषु कश्शब्द इत्यर्थः । तान्येव वस्तूनि क्रमेण निर्द्दिशति किं यत्तदिति ॥

॥ भा॰ ॥ अथ गौरित्यत्र कश्शब्दः । किं यत्तत्सास्नालाङ्गूलककुदखुरविषाण्यर्थरूपं स शब्दः ॥

॥ कै॰ ॥ उद्दिश्यमानप्रतिनिर्द्दिश्यमानयोरेकत्वमापादयन्ति सर्वनामानि पर्य्यायेण तल्लिङ्गमुपाददत इति । कामचारतस्स शब्द इति पुल्लिङ्गेन निर्द्देशः ॥

॥ वि॰ ॥ सामान्यरूपेण भानमत एव प्रत्यक्षदृष्टेऽपि आम्रफलादौ रसविशेषादिजिज्ञासा । विशेषजिज्ञासायास्सामान्यज्ञानपूर्वकत्वादित्यन्ये । निरूपितंचैतन्मञ्जूषायाम् । यत्तदिति समुदायो यद्वृत्तार्थे वर्त्तते । तस्यैव पुनस्तद्वृत्तेन स इत्येतेन परामर्शः । यद्वा प्रसिद्धौ । ननु यदित्यस्य नपुंसकत्वेन तच्छब्देऽपि नपुंसकलिङ्गमेवोचितमत आह उद्दिश्यमानेति । सिद्धवत्कीर्त्तनमुद्देशः । प्रतिपाद्यतया विधेयतयावा कीर्त्तनं प्रतिनिर्द्देशः । यथा शैत्यं हि यत्सा प्रकृतिर्जलस्येत्यादौ स्त्रीलिङ्गनिर्द्देशः । तल्लिङ्गमिति तयोर्लिङ्गमित्यर्थः ॥

॥ वि० ॥ भाष्योक्तहेतुमुपपादयति भिन्नेन्द्रियेति । सामान्यव्यतिरिक्तत्वे सति श्रोत्रेन्द्रियग्राह्यत्वंहि शब्दलक्षणमिति भावः । यदि च द्र-व्येति यदि द्रव्यं शब्दशब्दाभिधेयं स्यादित्यर्थः । तथाहि सति द्रव्यादीनां तन्त्रान्तरे निरूपितत्वात्तस्य वैयर्थ्यापत्तिरित्यपि बोध्यम् । तत्र द्रव्य-स्य क्रियाद्याश्रयत्वात्पूर्वमुक्तिः । क्रियागुणौ जात्याश्रयाविति तयोस्ततः पूर्वमुक्तिः । वैशेषिकसिद्धगुणानामपि संयोगविभागादीनामपि क्रियात्वं ध्वनयितुं गुणा-त्प्राक् क्रियोक्तिरिति ध्येयम् । यत्तर्हि शुक्ल इत्यादौ गुणस्य शब्दत्वशङ्का परे वाक्ये इति शब्देन प्रकारार्थेन सुरभ्यादिभेदभिन्नगन्धादिलिङ्गसंख्यादिरूपगुण संग्रह

॥ कै० ॥ नेत्याहेति भिन्नेन्द्रियग्राह्यत्वान्न द्रव्यं शब्द इति प्रतीतम् । अपि तु द्रव्यमिति यदि द्रव्यानुशासनं विवक्षितमभविष्यदथद्रव्यानुशासनमित्येवावक्ष्यत् । अनेनैव न्यायेन गुणक्रियासामान्यानां निराकृते ऽपि शब्दत्वे प्रपञ्चार्थं तच्चोद्यपूर्वकं निराकरोति यत्तर्हीति । गोशब्दार्थे चैषां संभवाच्छब्दत्वमाशंक्यते ॥

॥ भा० ॥ नेत्याह द्रव्यं नाम तत् । यत्तर्हि तदिङ्गितं चेष्टितं निमिषितमिति स शब्दो नेत्याह क्रिया नाम सा । यत्तर्हि तच्छुक्लो नीलः कपिलः कपोत इति स शब्दो नेत्याह गुणो नाम सः । यत्तर्हि तद्भिन्नेष्वभिन्नं

॥ कै० ॥ परिहारस्तु पूर्ववत् । तत्रेङ्गितमभिप्रायस्य सूचकः शरीरव्यापारः । चेष्टितं कायपरिस्पन्दः । निमिषितमक्षिव्यापारः । शुक्लो नील इति द्रव्यस्य प्रागुपन्यासाद्गुणमात्राभिधायिनोऽत्र शुक्लादयो द्रष्टव्याः । भिन्नेष्वभिन्नमिति अनेन सामान्यस्यैकत्वं कथ्यते ॥

॥ वि० ॥ इति न न्यूनता । ननु शब्दस्यापि गुणत्वाद्गुणो नाम स इत्युत्तरमसंगतं तस्य द्रव्यत्वे द्रव्यं नाम तदित्युत्तरासंगतिरिति चेन्न । उक्तद्रव्याश्रितो गुणो नाम स इत्यर्थात् । श्रोत्राग्राह्यत्वादेव क्रियादीनां शब्दत्वे निरस्ते किमुत्तरग्रन्थेनेत्यत आह **अनेनैवेति** गोशब्दार्थे चैषां संभवादिति । अभेदसंभवात्तेन तदभि-न्नाभिन्नस्य तदभिन्नत्वमिति न्यायेन शब्दत्वाशङ्का तेषामिति भावः । यद्वा गोशब्दार्थे गुणसमूहे समूहितयैषां संभवादित्यर्थः । शरीरव्यापारो रोमाञ्चादिः । एकत्वमिति अनेकसमवेतत्वस्याप्युपलक्षणम् ॥



॥ वि० ॥ नित्यत्वेन संयोगनिरासः । एकत्वेन प्रत्यभिज्ञा प्रत्यक्षरूपं प्रमाणं दर्शितम् । भूतशब्दप्रयोगानुपपत्तिं परिहरति सत्ताख्य-मिति । एवं हि वृक्षवदाम्र इत्यापत्तेः । सामान्यश्रुतेस्सर्वसामान्यविषयत्वेन प्रवृत्तायास्सङ्कोचे कारणाभावाच्च उपमाकथनस्य प्रकृते ऽनुपयो-गाच्चाध्याहारे गौरवाच्च नेदं युक्तं किन्तु स्वरूपवाची सः वृद्धिसंज्ञासूत्रस्थभाष्यप्रयोगस्य प्रमाणभूतस्य स्वयं करिष्यमाणव्याख्यानरीत्यास्यापि व्याख्यानसंभवात् । पितृ-भूत इत्यत्राप्यन्यत्रान्यशब्दप्रयोगस्सादृश्येन इति सादृश्यप्रतीतिर्नत्वस्य सादृश्यवाचकत्वे मानमस्तीति दिक् । भाष्ये आकृतिर्जातिस्संस्थानं ब्रवीति । आक्रियते व्यव-च्छिद्यते स्वाश्रयोऽनयेति व्युत्पत्तेरिति भावः । शङ्कापरभाष्ये सामान्यभूतमित्यस्य तद्व्यञ्जकत्वञ्चेत्यप्यर्थो बोध्यः । जातिमात्रपरत्वे जात्याकृतिव्यक्तयः

॥ कै० ॥ छिन्नेष्वच्छिन्नमित्यनेनतु नित्यत्वं सामान्यभूतमिति सत्ताख्यं महासामान्यं गोत्वादे-स्सामान्यविषयस्योपमानं निर्दिष्टं सामान्यमिव ॥

॥ भा० ॥ छिन्नेष्वच्छिन्नं सामान्यभूतं स शब्दो नेत्याह । आकृतिर्नाम सा । कस्तर्हि शब्दः ॥

॥ कै० ॥ सामान्यभूतं भूतशब्द उपमार्थे यथा पितृभूत इति । द्रव्यादिषु निरस्तेषु पृच्छति कस्तर्हीति ॥

॥ वि० ॥ पदार्थ इति गौतमसूत्रेण तस्यापि पदार्थत्वबोधनात् प्रत्यक्षादौ तद्ग्रहणाच्च तस्य शब्दत्वाशङ्का तत्समाधानाभावे न्यूनता स्यात । सिद्धे शब्दार्थेति वार्त्तिकव्याख्याने भाष्ये तस्यापि पदार्थत्वं कैयटो वक्ष्यति । तदभिन्नाभिन्नस्य तदभिन्नत्वमिति न्यायस्तु यत्र स्वाभिन्नद्वारकस्स्वस्वरूपानुगमस्तद्विषयः । यथा प-रमकारणकार्य्योपादानके परमकारणादेः । अत एव सुखदुःखयोर्नैक्यं नापि कुण्डलकटकयोस्तत्कुण्डलारम्भकस्वर्णावयवानुगमस्य कटके ऽभावात । एवं गुण-समूहस्यानुद्भूतावयवभेदस्य वाच्यत्वे ऽपि समूहिनां तत्तद्रूपेणावाच्यत्वान्न तेषां शब्दत्वाशङ्केति भावः । पृच्छतीति प्रश्नविषयविशेषान्तराभावात्सामान्यरूपेण पृच्छतीत्यर्थः ॥

॥ वि॰ ॥ भाष्ये उच्चारितेनेति । शारीरमारुताभिहतकंठादिस्थानैरवयवद्वाराभिव्यक्तेन येनेत्यर्थः । अत्र विषाणान्तैरवयवैर्गुणादयोऽप्युपलक्ष्यन्ते । संप्रत्ययो ज्ञानम् । ननु प्रत्यायकशब्दस्य वर्णसमूहरूपतया येनेत्येकवचनमयुक्तम् नच वनमितिवत्समूहाभिप्रायं तत् समूहस्यास्थिरस्य निरूपयितुमशक्यत्वादत आह वैयाकरणा इति । वर्णव्यतिरिक्तपदानभ्युपगमे एकैकस्य वर्णस्य वाचकत्वं समुदायस्य वा नाद्य इत्याह वर्णानां प्रत्येकमिति द्वितीयमनूद्य दूषयति आनर्थक्येतु प्रत्येकमिति । प्रत्येकमानर्थक्येतु समुदायस्य वाचकत्वमुपेयं तत्तु न युक्तमिति शेषः । यतस्तत्र नयद्वयम् उत्पद्यमानसमुदायस्याभिव्यज्यमानसमुदायस्य वा वाचकत्वमिति तत्राद्यं दूषयति उत्पत्तिपक्ष इति । उत्पत्त्यभावादित्यस्य समुदायाभावादित्यनेनान्वयः । द्वितीयं दूषयति अभिव्यक्तीति । उत्पत्त्याभिव्यक्तेर्ध्वस्तत्वादित्यर्थः । ननु पक्षद्वयेऽपि पूर्वपूर्ववर्णानुभवजन्यसंस्कारसहकृतान्त्यवर्णानुभवहेतुकैकस्मृत्युपारूढानां वाचकत्वमस्त्वत आह एकस्मृतीति ।

॥ कै॰ ॥ उत्तरमाह येनोच्चारितेनेति । वैयाकरणा वर्णव्यतिरिक्तस्य पदस्य वाक्यस्य वा वाचकत्वमिच्छन्ति वर्णानां प्रत्येकं वाचकत्वे द्वितीयादिवर्णोच्चारणानर्थक्यप्रसङ्गादानर्थक्येतु प्रत्येकमुत्पत्तिपक्षे यौगपद्येनोत्पत्त्यभावादभिव्यक्तिपक्षेतु क्रमेणैवाभिव्यक्त्या समुदायाभावादेकस्मृत्युपारूढानां ॥

॥ भा॰ ॥ येनोच्चारितेन सास्नालाङ्गूलककुदखुरविषाणिनां संप्रत्ययो भवति स शब्दः ॥

॥ कै॰ ॥ वाचकत्वे सरोरस इत्यादावर्थप्रतिपत्त्यविशेषप्रसङ्गात् । तद्व्यतिरिक्तस्फोटो नादाभिव्यंग्यो वाचको विस्तरेण वाक्यपदीये व्यवस्थापितः ॥

॥ वि॰ ॥ ननु तस्य नित्यत्वे सर्वदार्थप्रतीतिप्रसङ्गोऽत आह नादेति । नादो वर्णः । ननु येन क्रमेणानुभूता वर्णास्तेनैव क्रमेणैकस्मृत्युपारूढानां वाचकत्वेन नार्थप्रतीत्यविशेषप्रसङ्गोऽन्यथा त्वयापि वर्णानां स्फोटव्यञ्जकत्वाभ्युपगमात् कथं पूर्वोक्ताद्दोषान्निस्तारस्तवापीत्यत आह विस्तरेणेति । इदमेकं पदमेकं वाक्यमिति प्रत्ययः स्फोटसत्त्वे तदेकत्वे च प्रमाणम् अनुभवक्रमेणैव स्मरणमित्यर्थे दृढप्रमाणाभावाच्च क्रमेणानुभूतानां व्युत्क्रमेणापि स्मरणदर्शनात् । मम तु यथा पटे नानारञ्जकद्रव्याहितनानावर्णोपरागः क्रमेण तथैकस्मिन्नेव तस्मिन्नुच्चारणक्रमेण क्रमवानेव तत्तद्वर्णस्वरूपानुरागस्स च स्थिरस्तस्य च मनसा ग्रहणमिति न दोषः । तत्र येनेत्येकवचनेन विषाणिनामिति बहुवचनेन चानेकोच्चारणविषयगौरित्यस्यैकत्वं सूचितम् । एवं च तेनैव दृष्टान्तेन घटपटादिबोधकसाधारण्येन वाचकस्यैकत्वं सूचितम् । भेदप्रत्ययस्त्वौपाधिक इत्याद्यस्मत्कृतमञ्जूषायां शक्तिवादे द्रष्टव्यम् ॥



॥ वि॰ ॥ नन्वेवं तस्य ताल्वोष्ठपुटव्यापारविषयत्वाभावादुच्चारितेनेत्ययुक्तमत आह । प्रकाशितेनेति । अभिव्यञ्जकैरिति शेषः । भाष्येऽथवा प्रतीतपदार्थक इति । लोके व्यवहर्तृषु पदार्थबोधकत्वेन प्रसिद्धः श्रोत्रेन्द्रियग्राह्यत्वाद्वर्णरूपध्वनिसमूह एव शब्द इत्यर्थः । तस्यार्थबोधकताप्यविचारितरमणीयस्यैव लोके सिद्धा तादृशस्यैव शास्त्रेणान्वाख्यानमिति तात्पर्यम् । तदाह अन्यत्रेति । संग्रहादौ तपरसूत्रे भाष्ये चेत्यर्थः । ध्वनिपदेनात्र वैखरी । स्फोटपदेनाभिव्यक्तकत्वादिको मध्यमावस्थ आन्तरश्शब्द उच्यते । कथमस्येति । कुर्वन्नित्यस्य वर्त्तमानार्थकत्वादित्यर्थः । भाष्ये कानि पुनश्शब्दानुशासनस्येति ।

॥ कै॰ ॥ उच्चारितेन प्रकाशितेनेत्यर्थः । अथवेति । अन्यत्र ध्वनिस्फोटयोर्भेदस्य व्यवस्थापितत्वादिहाभेदेन व्यवहारेऽपि न दोषः द्रव्यादयो न शब्दशब्दवाच्या इत्यत्र तात्पर्यात् । ध्वनिं कुर्वन्निति । विधिप्रतिषेधयोरप्रवृत्तविषयत्वात्कयमस्य विभिः सम्बन्धः । उच्यते । शब्दं कुर्वन्नपि

॥ भा॰ ॥ अथवा प्रतीतपदार्थको लोके ध्वनिः शब्द उच्यते । तद्यथा शब्दं कुरु मा शब्दं कार्षीः शब्दकार्ययं माणवक इति ध्वनिं कुर्वन्नेवमुच्यते तस्माद्ध्वनिश्शब्दः । कानि पुनश्शब्दानुशासनस्य प्रयोजनानि ॥

॥ कै॰ ॥ शब्दं कुर्वित्युच्यते विरामाशङ्कायां तन्निवृत्तये तथानभिमतशब्दश्रवणोद्वेजितेनोच्यते मा शब्दं कार्षीरिति । कानि पुनरिति । किं सन्ध्योपासनादिवद्व्याकरणाध्ययनं नित्यं कर्म अथ काम्यमिति प्रश्नः ॥

॥ वि॰ ॥ शब्दज्ञानफलकव्याकरणाध्ययनस्येत्यर्थः । तदाह किं सन्ध्येति । शब्दज्ञानद्वाराध्ययनस्य तदज्ञानप्राप्तप्रत्यवायपरिहारःफलम उत तदतिरिक्तमपि किंचिदिति प्रश्नाशय इत्यर्थः । प्रयोजनशब्दः करणव्युत्पत्त्या प्रयोजकपरोऽपि तेन व्याकरणाध्ययनस्य प्रयोजकं किंचिदस्ति नवेत्यपि प्रश्नाशयो बोध्यः । अत एवोत्तरे आगमपदोपादानम् । नपुंसकमनपुंसकेनेत्येकशेषः । तत्रैकवद्भावस्य वैकल्पिकत्वात्प्रश्ने बहुवचनमुत्तरे एकवचनं बोध्यम् ॥

॥ वि० ॥ पुरुषार्थो धर्मो मोक्षश्च । ननु शिष्याचार्यसम्बन्ध एव महान्वेदरक्षाहेतुः किं व्याकरणेनेत्यत आह लोक इति । भ्राम्ये-दिति । भ्रमेण पाठान्तरं कल्पयेदित्यर्थः । नवाचार्यवचनाङ्गमनिर्वृत्तिः भ्रंशशङ्कया तेष्वविश्वासात् । वेदार्थावगमद्वारापि व्याकरणं पुरु-षार्थसाधनमित्याह वेदार्थंचेति । एवंच वेदार्थज्ञानपूर्वकं शुद्धतत्तन्मन्त्रैस्तद्विहितकर्मानुष्ठानेन स्वर्गसुखमुपनिषदर्थज्ञानेन वक्ष्यमाणरीत्या वा मोक्षश्च पुरुषार्थो व्याकरणाध्ययनस्य फलमिति भावः ॥

॥ कै० ॥ पारम्पर्येण पुरुषार्थसाधनतामस्याह रक्षेति । लोके लोपाद्यदृष्टं वेदे दृष्ट्वा भ्राम्येदवैयाकरणः वैयाकर-णस्तु न भ्राम्यति वेदार्थंचाध्यवस्यति । तत्र लोपागमयोरुदाहरणं देवा अदुह्रेति दुहेर्लङो झस्यादादेशे कृते लोपस्त आ-त्मनेपदेष्विति तलोपः बहुलं छन्दसीति

॥ भा० ॥ रक्षोहागमलघ्वसन्देहाः प्रयोजनम् । रक्षार्थं वेदानामध्येयं व्याकरणं लोपागमव-र्णविकारज्ञो हि सम्यग्वेदान्परिपालयिष्यतीति ॥

॥ कै० ॥ रुटि सति रूपमेतत् । वर्णविकारो यथा । उद्ग्राभञ्च निग्राभञ्चेति हृग्रहोर्भश्छ-न्दसि हस्येति वक्तव्यमिति हस्य भकारः उदि ग्रह इत्यत्र उद्ग्राभनिग्राभौच छन्दसि स्रुगुद्यमननिपा-तनयोरिति वचनादुन्निपूर्वाद्ग्रहेर्घञ् ॥

॥ वि० ॥ विकार इति । लोपस्तु न विकार इति पृथग्गणितः । भावरूप एवचादेशोऽत्र विकारः । हृग्रहोर्भ इति इदञ्च गृभ्णामीत्याद्यर्थमावश्यकम् एतेनोद्ग्राभनिग्राभौचेत्यनेन भस्यापि सिद्धत्वादेतदुपन्यासश्चिन्त्य इति परास्तम् अन्यार्थमावश्यकेन तेनैव भस्य सिद्धौ तदंशे निपातनाश्रयणवैयर्थ्यात् निपूर्वा-द्ग्रहेर्घञ्विधायकाभावादाह उद्ग्राभनिग्राभौचेति ॥



॥ वि० ॥ भाष्ये खल्वपीति निपातसमुदायोनिश्चयार्थः । ऊहःखल्वपीत्यस्य प्रयोजनमिति शेषः । ननु यत्र प्रकरणे ये मन्त्राः पठितास्त-त्र तेषां तथैव प्रयोग इष्ट इति नोहेन प्रयोजनमित्याशङ्क्य प्रकृतावूहाभावेऽपि विकृतावूह इति दर्शयितुम्प्रकृतिशब्दार्थमाह । इहेति । य-स्मिन्नाग्नेयादौ यागान्तरेण सौर्यादिना । प्रकृतिविकृत्यवगमश्च द्विदेवत्यत्वैकदेवत्यत्वादिसाम्येन बोध्यः । अन्यत्र पठितमन्त्राणाङ्कथमन्यत्रगमनमत आह । प्र-कृतिवदिति । यथा सोपकारा प्रकृतिरनुष्ठीयते तथा विकृतिरपीति तदर्थः । तदनेनोपकारातिदेशे तत्पृष्ठभावेन पदार्था अप्यतिदिश्यन्ते इतिकर्त्तव्यतायास्सा-वनायास्साकाङ्क्षत्वादेतन्मूलकमेव प्रकृतिवदितीति मीमांसकसरणिः ॥

॥ कै० ॥ ऊहःखल्वपीति । इह यस्मिन्याग इतिकर्त्तव्यतोपदिष्टा यागान्तरेणोपजीव्यते सा प्रकृतिः येनचो-पजीव्यते सा विकृतिः प्रकृतिवद्विकृतिः कर्त्तव्येति मीमांसकैर्व्यवस्थापिते न्याये प्रकृतिप्रत्ययादीनामूहं वैयाकरणस्स-म्यग्विजानाति । तत्राग्नेर्मन्त्रोऽस्ति अग्नये त्वा जुष्टन्निर्वपामीति

॥ भा० ॥ ऊहःखल्वपि न सर्वैर्लिङ्गैर्नच सर्वाभिर्विभक्तिभिर्वेदे मन्त्रा निगदितास्तेचावश्यं यज्ञ-गतेन पुरुषेण यथायथं विपरिणमयितव्याः तान्नावैयाकरणः शक्नोति विपरिणमयितुम् तस्मा-दध्येयं व्याकरणम् ॥

॥ कै० ॥ तत्र सौर्यञ्चरुन्निर्वपेद्ब्रह्मवर्चसकाम इति सौर्य्ये चरौ मन्त्र ऊह्यते सूर्य्याय त्वा जुष्टन्निर्वपामीति विस्त-रेण भर्त्तृहरिणा प्रदर्शित ऊहः ॥

॥ वि० ॥ पदार्थान्तर्गताश्च मन्त्राः तत्र अग्निसम्बन्धिनिर्वापप्रकाशकमन्त्रस्थाग्निपदस्य सूर्यसम्बन्धिनिर्वापप्रकाशनासमर्थत्वात्तदपहाय तत्स्थाने सूर्यायेत्यूह्यमि-त्याह । तत्राग्नेरिति । मन्त्र ऊह्यत इति । यद्यप्यूहे न मन्त्रत्वन्तथाप्येकदेशस्योहेऽपि अनेकपदसमुदाये मन्त्रत्वप्रत्यभिज्ञानात्तद्घटिते समुदाये मन्त्रत्वव्यवहा-रः कर्म्मणस्साङ्गत्वञ्चेति बोध्यम् । सोऽयम्प्रकृत्यूहः अन्येऽप्यूह्याः ऊहज्ञस्य हि आर्त्विज्यलाभेन द्रव्यप्राप्तिद्वारा ऐहिकसुखसिद्धिः फलमिति बोध्यम् । भाष्ये लिङ्गप-दञ्च प्रकृत्यादेरुपलक्षणम् । यथायथमिति । अर्थप्रकाशनसामर्थ्यानतिलङ्घनेनेत्यर्थः ॥

१४

॥ वि० ॥ ननु वक्ष्यमाणागमस्य न व्याकरणफलत्वमत आह । प्रवर्त्तक इति नित्यकर्म्मतामिति । एतेन नित्यकाम्यता व्याकरणाध्ययनस्येत्युक्तम् नित्यत्वञ्चाध्येयज्ञेयपदार्थविशेषणीभूताध्ययनज्ञानयोर्बोध्यम् । अत्र ब्राह्मणेनेत्युक्तेरन्यस्यैवमध्ययनं काम्यमेवेति सूचयतीति कश्चित । निष्कारण इति । कारणशब्दः फलपरः । ननु नित्यत्वेऽपि प्रत्यवायपरिहाररूपम्फलमस्त्येवेत्यत आह । दृष्टमिति । अध्ययनादिनिष्टङ्कारणानपेक्षत्वं विषय आरोप्य निष्कारणो वेद इति प्रयोगः ॥

॥ कै० ॥ आगम इति । आगमः प्रयोजकः प्रवर्त्तकः नित्यकर्म्मतां व्याकरणाध्ययनस्य दर्शयति ।

॥ भा० ॥ आगमः खल्वपि ब्राह्मणेन निष्कारणो धर्म्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्चेति ।

॥ कै० ॥ प्रयोजनशब्देनच फलम्प्रयोजकश्चोच्यते । निष्कारण इति । दृष्टं कारणमनपेक्ष्येत्यर्थः ॥

॥ वि० ॥ आगमपदेन श्रुतिः श्रुतावपि जनमेजयाद्युपाख्यानवत्पौरुषेयव्याकरणस्यापि नित्यताबोधनमुपपद्यते यद्वा तेन प्रोक्तमितिसूत्रोक्तभाष्यरीत्या वेदार्थवद्व्याकरणार्थोऽपि अनादित्वरूपनित्यतावानिति श्रुत्या तस्य नित्यत्वबोधनमिति बोध्यम् । धर्म्मत्वञ्च वेदस्य पुरुषयत्नसाध्यतया धर्म्मत्वेनाभिमताध्ययनज्ञानकर्म्मत्वेनौपचारिकमित्याहुः ॥

१५

॥ वि० ॥ षडङ्गः शिक्षाकल्पव्याकरणनिरुक्तच्छन्दोज्यौतिषाङ्गसहितो वेदः स्वशाखारूपः । अध्येय इत्यतः प्रेरणाविषयाध्ययनकर्म्मेतिबोधः यद्यपि तेन प्रोक्तमितिसूत्रे भाष्ये वक्ष्यमाणरीत्या वेदत्वं शब्दतदर्थोभयनिष्ठं तथापि ज्ञेय इत्यस्य सम्यगर्थबोधपर्य्यवसाय्यध्ययनङ्कार्य्यमित्यर्थे तात्पर्यम् अत एव समानमीहमानानामधीयानानाञ्च केचिदर्थैर्युज्यन्ते केचिन्नेति वक्ष्यति भाष्यकृत् । अध्ययनतथाज्ञानयोश्च समुच्चयः अनेनातादृशस्याधर्म्मत्वं सूचयति श्रुत्या मिलितस्यैव धर्म्मत्वबोधनात् । तथाच व्यासः । वेदार्थज्ञो जपं जप्त्वा तथैवाध्ययनं द्विजः कुर्वन्स्वर्गमवाप्नोति नरकन्तु विपर्यय इति । जपपदं मन्त्रसाध्यकर्म्ममात्रोपलक्षणम् ॥

॥ कै० ॥ प्रधानञ्चेति । पदपदार्थावगमस्य व्याकरणनिमित्तत्वात्तन्मूलत्वाद्वाक्यवाक्यार्थो

॥ भा० ॥ प्रधानञ्च षडङ्गेषु व्याकरणम् प्रधाने कृतो यत्नः फलवान् भवति । लघ्वर्थञ्चाध्येयं व्याकरणम् ॥

॥ कै० ॥ वसायस्येतिभावः । लघ्वर्थमिति । लाघवेन शब्दज्ञानमस्य प्रयोजनम् ॥

॥ वि० ॥ ज्ञाधातोश्च ज्ञानानुकूलो मनःप्रणिधानविषयेन्द्रियसंयोगसम्पादनादिरूपो व्यापारोऽर्थस्तस्यैवात्र विधेयत्वम् एतेन ज्ञानस्याविधेयत्वादिदञ्चिन्त्यमित्यपास्तम । ननु गुणानाम्परस्परसम्बन्धाभावात् षडङ्गेषु प्रधानमित्यनुपपन्नमत आह । पदेति । एवञ्च वेदार्थज्ञाने व्याकरणम्प्रधानङ्कारणमितिभावः । भाष्ये प्रधाने कृतो यत्न इति । प्रधानविषये निर्वृत्त इत्यर्थः अन्यथा यत्नविषयकृतेरसम्भवादसङ्गतिः स्पष्टैव । भाष्येच फलवानित्यत्र फलपदेन वाक्यार्थावगमो विवक्षितः एतच्छास्त्रञ्च पदपदार्थावगमद्वारा वाक्यार्थावगमोपयोगीति बोध्यम् एवञ्च व्याकरणानध्ययनप्रयुक्तस्य वेदार्थाज्ञानप्रयुक्तस्यच प्रत्यवायस्य परिहारकतयास्य नित्यत्वमिति बोध्यम् ॥

॥ वि॰ ॥ अवश्यमित्यनेन विवचितं दर्शयति अध्यापनमिति । लाघवञ्च प्रतिपदपाठापेचया प्रकृत्यादिविभागेनान्वाख्यानस्य विवचितम् । नन्वसन्देहसन्देहाभावः सच नात्यन्ताभावस्तस्य नित्यत्वात् नच ध्वंसः तत्तद्विषयकव्याकरणज्ञानवतस्सन्देहस्यैवाभावेन तदसम्भवात् यस्त्वधीतव्याकरणस्यापि क्वचित्सन्देहः स तद्विषयकवैयाकरणत्वाभाववानेव । वेदनार्थे हि तत्र प्रत्ययोऽत आह । प्रागभाव इति । तत्परिपालनञ्च शास्त्राध्ययनफलं

॥ कै॰ ॥ ब्राह्मणेनेति । अध्यापनञ्च ब्राह्मणस्य वृत्तिः नचाशब्दज्ञं तमुपश्लिष्यन्ति शिष्या इति । असन्देहार्थमिति । सन्देहस्य प्रागभावोऽत्र द्रष्टव्यः

॥ भा॰ ॥ ब्राह्मणेनचावश्यं शब्दा ज्ञेया इति । नचान्तरेण व्याकरणं लघुनोपायेन शब्दाश्शक्या विज्ञातुम् । असन्देहार्थञ्चाध्येयं व्याकरणम् । याज्ञिकाः पठन्ति स्थूलपृषतीमाग्निवारुणीमनड्वाहीमालभेतेति तस्यां सन्देहः स्थूलाचासौ पृषतीच स्थूलपृषती स्थूलानि वा पृषन्त्यस्याः स्थूलपृषतीति । ताम् नावैयाकरणस्स्वरतोऽध्यवस्यति यदि पूर्वपदप्रकृतिस्वरत्वं ततो बहुव्रीहिरथान्तोदात्तत्वं ततस्तत्पुरुष इति ॥

॥ कै॰ ॥ नतु प्रध्वंसाभावः नहि वैयाकरणस्य संशय उत्पद्य विनश्यति इतरस्यैव तदुत्पादात् । स्वरत इति । पूर्वपदस्य प्रकृतिस्वराद् बहुव्रीह्यर्थावसाय इत्यर्थः ॥

॥ वि॰ ॥ नतु स्वरूपं तस्याजन्यत्वात् तत्पालनञ्च प्रतियोगिजनककारणविध्वंसनं प्रागभावस्य प्रतियोगिजन्मनाश्यत्वादिति बोध्यम् । भाष्ये याज्ञिकाः पठन्तीति । यज्ञकाण्डभवा वैदिकाः शब्दा याज्ञिकास्ते पठन्तीत्यर्थः । ऋषिः पठति शृणोत ग्रावाण इतिवत्प्रयोगः तत्र ऋषिर्वेदः । सन्सूत्रे भाष्ये एष प्रयोगः । ताम् अनड्वाहीम् । कस्तर्हि निश्चयस्तत्राह पूर्वपदस्येति ॥



॥ वि॰ ॥ नन्वम्लेच्छत्वादीनाम् बहुत्वाद्बहूनामनुग्रहो न्याय्य इति प्रथमतोऽभिधानमयुक्तमत आह । मुख्यानीति । प्रधानत्वादेव तेषां प्रथमतोऽभिधानमितिभावः तेषां प्रधानत्वञ्च पदपदार्थज्ञानाधीनत्वेनान्तरङ्गत्वात् । वक्ष्यमाणानाञ्च वहिरङ्गशब्दापशब्दप्रयोगविधिनिषेधविषयत्वादानुषङ्गिकत्वम्बोध्यम् । ननु भूय इत्येकवचनमनुपपन्नं प्रयोजनानीत्यनेन सामानाधिकरण्यादत आह । पुनरिति । इमानिचेति । चस्समुच्चये ॥

॥ कै॰ ॥ मुख्यानि प्रयोजनानि प्रदर्श्यानुषङ्गिकाणि प्रदर्शयति । इमानिचेति ।

॥ भा॰ ॥ इमानिच भूयश्शब्दानुशासनस्य प्रयोजनानि । तेऽसुराः दुष्टश्शब्दः यदधीतम् यस्तु प्रयुङ्क्ते अविद्वांसः विभक्तिङ्कुर्वन्ति यो वा इमाम् चत्वारि उतत्वः सक्तुमिव सारस्वतीम् दशम्याम्पुत्रस्य सुदेवोऽसि वरुणेति । तेऽसुराः ॥

॥ कै॰ ॥ भूय इति । पुनरित्यर्थः आनुषङ्गिकत्वाच्चैषां वर्गद्वयोपादानम् ॥

॥ वि ॥ भाष्ये प्रयोजनानीति । प्रवर्त्तकानि फलानिचेत्यर्थः । तत्र वक्ष्यमाणवाक्यानि प्रवर्त्तकानि तद्बोध्यानि फलानीतिविवेकः । ननु रक्षादिभिः सहैवैतानि कुतो न पठितानीत्यत आह । आनुषङ्गिकत्वादिति । एषामानुषङ्गिकत्वं तेषां प्रधानत्वम्बोधयितुन्तयोक्तिरितिभावः ॥

॥ वि० ॥ ननु परावभूवुस्तस्माद्ब्राह्मणेनेतिश्रुतौ पराभवस्यापशब्दभाषणफलत्वावगतेः पराभूता माभूमेत्यध्येयमितिवक्तुमुचितमत आह । निन्दार्थवादेनेति । द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादः स्यादितिन्यायेन यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोतीत्यादावपापश्लोकश्रवणस्य प्राशस्त्यमात्रपरत्ववदस्य निन्दामात्रपरत्वादितिभावः प्रकरणाच्च क्रत्वङ्गोऽयन्निषेधः । केचिदाहुरिति । अत्रारुचिवीजन्तु सर्वः प्लुतस्याहसमनिच्छता विभाषा कर्त्तव्य इति । पदेति । सर्वस्य द्वे इत्यत्र पदग्रहणस्य वार्त्तिककृतोक्तत्वादितिभावः ॥

॥ कै० ॥ तेऽसुरा हेलय इति । निन्दार्थवादेन न म्लेच्छितवा इति म्लेच्छनन्निषिध्यते । तत्र केचिदाहुः हे हे प्रयोगे हेहयोरिति प्लुते प्रकृतिभावेच कर्त्तव्ये तदकरणम्म्लेच्छनमिति । पदद्विर्वचने कार्य्ये वाक्यद्विवर्चनं लत्वञ्च म्लेच्छनमित्यपरे

॥ भा० ॥ तेऽसुरा हेलयो हेलय इतिकुर्वन्तः परावभूवुः तस्माद्ब्राह्मणेन न म्लेच्छितवै नापभाषितवै म्लेच्छो ह वा एष यदपशब्दः म्लेच्छा माभूमेत्यध्येयं व्याकरणम् तेऽसुराः ॥

॥ कै० ॥ न म्लेच्छितवा इत्यस्य पर्य्यायो नापभाषितवा इति कृत्यार्थ इति तवैप्रत्ययः म्लेच्छा इति कर्म्मणि घञ् ॥

॥ वि० ॥ ननु नेदं द्वित्वं किन्त्वैच्छिकः पुनः प्रयोगोऽत आह । लत्वञ्चेति । न म्लेच्छितवै इत्येतम्म्लेच्छभाषाविषयमितिभ्रमनिरासार्थं तद्विवरणन्नापभाषितवै इति । ह वै इति प्रसिद्धौ । अपशब्दत्वं व्याकरणानुगतशब्दस्येषद्भ्रंशन एव प्रसिद्धमितिभावः । ननु म्लेच्छो नाम पुरुषविशेषो देशविशेषो वा स कथमपशब्दोऽत आह । घञिति । निन्दावचनात् म्लेच्छतेरितिभावः निन्दाच शास्त्रबोधितविपरीतोच्चारणेन पापसाधनत्वात् एवञ्च म्लेच्छा इत्यस्य निन्द्या इत्यर्थ इति दिक् ॥



॥ वि० ॥ असर्वनामत्वात्तसोऽप्राप्तेराह । स्वरेणेति आद्यादित्वादितिच । तमित्यस्य यच्छब्दापेक्षितत्वादाह । यदर्थेति । मिथ्या प्रयुक्त इत्यस्य विवरणन्ततोऽर्थान्तरमिति । न केवलन्तदर्थमेव नाहेत्येतावत् किन्तु प्रत्यवायोत्पादनद्वारा हिंसकोऽपीत्याह वागेवेति । यथाध्वर्युकृताद्धोमाद्यजमाने धर्मोत्पत्तिरेवन्तत्कृतापशब्दप्रयोगात्तस्मिन्प्रत्यवाय इत्याशयः । तत्र दृष्टान्तमाह यथेति वृत्रेणेति । हेतौ तृतीया फलमपीह हेतुः ॥

॥ कै० ॥ दुष्टशब्द इति । स्वरेण स्वरतः आद्यादित्वात्तसिः । मिथ्या प्रयुक्त इति । यदर्थप्रतिपादनाय प्रयुक्तस्ततोऽर्थान्तरं स्वरवर्णदोषात्प्रतिपादयन्नाभिमतमर्थमाहेत्यर्थः । वागेव वज्रो हिंसकत्वात् यथेन्द्रशत्रुशब्दः स्वरदोषाद्यजमानं हिंसितवानित्यर्थः । इन्द्रस्याभिचारो वृत्रेणारब्धः तत्रेन्द्रशत्रुर्वर्द्धस्वेतिमन्त्र ऊहितः तत्रेन्द्रस्य शमयिता

॥ भा० ॥ दुष्टशब्दः दुष्टशब्दस्स्वरतो वर्णतो वा मिथ्या प्रयुक्तो न तमर्थमाह स वाग्वज्रो यजमानं हिनस्ति ॥

॥ कै० ॥ शातयिता वा भवेतिक्रियाशब्दोऽत्र शत्रुशब्द आश्रितो नतु रूढिशब्दः तदाश्रयणे हि बहुव्रीहितत्पुरुषयोरर्थभेदः तत्रेन्द्रामित्रत्वे सिद्धे सति इन्द्रस्य शत्रुर्भवेत्यत्रार्थे प्रतिपाद्येऽन्तोदात्ते प्रयोक्तव्ये आद्युदात्त ऋत्विजा प्रयुक्त इति अर्थान्तराभिधानादिन्द्र एव वृत्रस्य शातयिता सम्पन्नः ॥

॥ वि० ॥ मन्त्र इति । नत्रोहितस्य कथं मन्त्रत्वमितिवाच्यम् मन्त्रशब्दस्य वोधकपरत्वात् अत एव मन्त्रो हीनः स्वरत इति प्रसिद्धमपि शिक्षापाठं विहाय भाष्ये दुष्टशब्द इति पठितं तत्रत्यमन्त्रशब्दस्य शब्दमात्रपरतेतिसूचयितुम् । शत्रुशब्दस्यामित्रपर्य्यायत्वे बहुव्रीहितत्पुरुषयोरविशेषोऽत आह । तत्रेन्द्रस्येति । शदेर्णन्तादौणादिकः कुन् प्राज्ञादिगणे निपातनाद्ध्रस्वत्वम् शमेस्तु तत्वम् ॥

॥ वि॰ ॥ सम्बोधनविभक्त्यभावायाह । इन्द्रशत्रुत्वस्येति । नन्वत्र यज्ञकर्मणीत्येकश्रुतौ प्राप्तायाम्पूर्वपदप्रकृतिस्वरकरणं स्वरापराध इति वक्तुं युक्तम् नच तथैवास्तु शतपथब्राह्मणतद्भाष्यविरोधात् तत्रह्याद्युदात्तत्वकरणमेव स्वरापराध उक्त इत्यादि स्पष्टमस्मत्कृतैकश्रुत्यवादेऽत आह ऊह्यमानस्यचेति । तदुक्तमनाम्नातेष्वमन्त्रत्वमिति नचास्यामन्त्रत्वे लौकिकशब्देन क्रियमाणस्य कर्म्मणः कथम्फलजनकत्वमितिवाच्यम् सूर्य्याय त्वेत्यादेर्लौकिकघटितस्य ऊहविधायकशास्त्रवलेन फलजनकत्ववदुपपत्तेरित्याहुः ॥

॥ कै॰ ॥ इन्द्रशत्रुत्वस्य विधेयत्वात्सम्बोधनविभक्तेरनुवाद्यविषयत्वाद् इहाभावः यथा राजा भव युध्यस्वेति । ऊह्यमानस्यचामन्त्रत्वाद्यज्ञकर्म्मणीतिजपादिपर्य्युदासे मन्त्राणामेकश्रुतिर्विधीयमाना नेह भवति ॥

॥ भा॰ ॥ यथेन्द्रशत्रुस्स्वरतोऽपराधात । दुष्टान् शब्दान्माप्रयुच्क्ष्महीत्यध्येयं व्याकरणम् दुष्टश्शब्दः । यदधीतम् यदधीतमविज्ञातन्निगदेनैव शब्द्यते अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित् । तस्मादनर्थकम्माधिगीष्महीत्यध्येयं व्याकरणम् यदधीतम् ॥

॥ कै॰ ॥ अविज्ञातमिति । अविदितस्वरादिसंस्कारत्वादर्थापरिज्ञानाद्वा । निगदेनेति । पाठमात्रेण । न तज्ज्वलतीति । निष्फलम्भवति । अनर्थकमिति । निष्प्रयोजनम् ॥

॥ वि॰ ॥ नन्वधीतमविज्ञातमितिविरुद्धमत आह । अविदितेति । शुष्कैध इतिसान्तक्लीवैधश्शब्देनादन्तपुल्लिङ्गेन वा निर्वाह्यम् । निरुक्तेतु यद्गृहीतमविज्ञातमिति पठ्यते तत्र गृहीतं शब्दतः अविज्ञातमर्थत इतिबोध्यम् । भाष्ये तस्मादनर्थकमिति । अनेन निन्दार्थवादेन निष्प्रयोजनाध्ययनानौचित्येन निष्प्रयोजनन्नाध्येयमितिनिषेधकल्पनादितिभावः । अतो निषिद्धमध्ययनं माभूदितिव्याकरणमध्येयमितितात्पर्य्यम् ॥



॥ वि॰ ॥ एकः पूर्वपरयोरित्यत्र भाष्ये पठितैकशब्द इत्यादिश्रुतिमूलकमाह । भाष्ये यस्त्विति । अभ्युदयहेतुत्वम् । अदृष्टद्वारा पुरुषार्थसाधनत्वम् । कुशलोऽधीतव्याकरणः लक्षणास्मरणपूर्वकं यः प्रयुङ्क्ते इतिफलति । विशेष इति । अर्थविशेष इत्यर्थः । तदाह स एवेति । साधर्म्यात् । साधर्म्यमूलकाद्भेदारोपात् । भाष्ये यथावत् । अम्बूकृतादिदोषरहितम् । वाचो योगः प्रकृतिप्रत्ययविभागेनार्थविशेषपरत्वन्तद्वेत्तीतिवाग्योगविद् । श्रुतत्वादिति ।

॥ कै॰ ॥ यस्तु प्रयुङ्क्ते इति । अनेनाभ्युदयहेतुत्वं व्याकरणाध्ययनस्य दर्शयति । विशेष इति । स एव शब्दः क्वचिदर्थे केनचिन्निमित्तेन प्रयुक्तस्साधुरन्यथात्वसाधुः यथा अश्वे ऽस्वशब्दो धनाभावनिमित्तकस्साधुः जातिनिमित्तकोऽसाधुः ॥

॥ भा॰ ॥ यस्तु प्रयुङ्क्ते यस्तु प्रयुङ्क्ते कुशलो विशेषे शब्दान्यथावद्व्यवहारकाले सोऽनन्तमाप्नोति जयम्परत्र वाग्योगविद्दुष्यतिचापशब्दैः कः वाग्योगविदेव कुत एतत् यो हि शब्दाञ्जानाति अपशब्दानप्यसौ जानाति यथैव हि शब्दज्ञाने धर्म्मः

॥ कै॰ ॥ गविच गोणीशब्दस्साधर्म्यात्प्रयुक्तः साधुः जातिप्रयुक्तस्त्वसाधुः । क इति । वाग्योगविदः श्रुतत्वाद्दोषदर्शनाच्च प्रश्नः । प्रष्टैव परमतमाशङ्क्याह । वाग्योगविदेवेति ॥

॥ वि॰ ॥ एकत्र जयाप्तिदोषयोश्चकारेण समुच्चयप्रतिपादनाच्चेत्यपि बोध्यम् । दोषदर्शनादिति । शास्त्रस्याधर्म्महेतुत्वं दोष इत्यर्थः । वादिप्रतिवादिपूर्वपक्षोत्तरपरतया व्याख्यानेऽसामञ्जस्यम्मत्वाह । प्रष्टैवेति । भाष्ये कुत एतदिति । वाग्योगविदो दोषः कुत इत्यर्थः ॥

२२

॥ वि० ॥ ननु साधुज्ञानस्य धर्मजनकता यथा शास्त्रोक्ता न तथासाधुज्ञानस्याधर्मजनकता शास्त्रोक्तेत्यत आह । यथेति । एवञ्चापशब्दज्ञानमधर्मसाधनन्धर्महेतुशब्दज्ञानविरोधित्वात् यद्यद्विरोधि तत्तद्विरोधिफलकं यथा श्लैष्मिकद्रव्यसेवेत्यनुमानम्प्रमाणमितिभावः । एवञ्च शास्त्रस्याधर्महेतुतया तत्र प्रवृत्तिर्न स्यादिति नेदं वचो व्याकरणाध्ययनानुष्ठापकं स्यादिति तात्पर्य्यम् ।

॥ कै० ॥ एवमपशब्दज्ञानेऽपीति । यथा श्लैष्मिकद्रव्यसेवया श्लैष्मिकव्याधिसम्भवः तद्विपरीतसेवयात्वारोग्यन्तथात्रापि यथोक्तव्याख्यमितिभावः । भूयांसोऽल्पीयांस इति । परमतापेक्षया प्रकर्षप्रत्ययः यदि

॥ भा० ॥ एवमपशब्दज्ञानेऽप्यधर्मः अथवा भूयानधर्मः प्राप्नोति भूयांसोऽपशब्दा अल्पीयांसश्शब्दाः एकैकस्य हि शब्दस्य बहवोऽपभ्रंशाः । तद्यथा गौरित्यस्य शब्दस्य गावी गोणी गोता गोपोतलिकेत्येवमादयो बहवोऽपभ्रंशाः ।
अथ योऽवाग्योगविद् अज्ञानन्तस्य शरणम् ॥

॥ कै० ॥ मन्यसे बहवश्शब्दा अल्पेऽपशब्दाः अङ्गभूयस्त्वाच्च फलभूयस्त्वमिति तन्न यस्माद्भूयांसोऽपशब्दा अल्पीयांसस्तु शब्दाः । अज्ञानमिति । तथाच तिरश्चां ब्रह्महत्यादिफलाभावः ॥

॥ वि० ॥ नन्वस्त्वधर्मोऽपि तथापि धर्माधिक्यायाध्येयं व्याकरणमत आह । भाष्येऽथवेति । अङ्गभूयस्त्वादिति । अङ्गानान्धर्मजनकानाम्भूयस्त्वादित्यर्थः । एवञ्च यज्ञादेः पापजनकत्वेऽप्यधिकधर्म्मजनकत्वाद्यथा तत्र प्रवृत्तिस्तथा प्रकृतेऽपीतिभावः । अल्पीयांसः शब्दा इति । एवञ्च खट्टतिमञ्चिष्मचीरवदनुपादेयन्तद्विज्ञानमितिभावः । नन्वेवं सामर्थ्यादवाग्योगविदेव दुष्यतीत्यत्र कर्त्तास्त्वत आह भाष्येऽथ योऽवाग्योगविदिति ॥

२३

॥ वि० ॥ अत्यन्तमित्यर्थेऽत्यन्तायेत्यव्ययम् । पुरुषाणामिति । मनुष्याणामित्यर्थः तिरश्चामत्यन्तायोग्यत्वादस्त्वज्ञानं शरणम्मनुष्याणान्तु योग्यत्वात्तैर्निषिद्धानुष्ठानवर्जनार्थमवश्यं शास्त्रं विज्ञेयमतोऽवाग्योगविदो महाननर्थ इतिभावः । तत्र नात्यन्तायेत्यनेन शास्त्राज्ञानन्नैव शरणन्दोषद्वयप्रसङ्गात् किन्तु वध्यादेर्ब्राह्मणत्वाद्यज्ञानमेव पापाल्पत्वे प्रयोजकमितिध्वनितम् ।

॥ कै० ॥ नात्यन्तायेति । पुरुषाणां विधिनिषेधयोरधिकारात्तत्परिज्ञाने प्रयत्नस्य न्याय्यत्वात् । प्रकरणात्सामर्थ्यं बलीय इत्याह । अवाग्योगविदिति । वाग्योगवित्तूभयज्ञोऽपि शब्दान्प्रयुङ्क्ते नापशब्दानितिज्ञानपूर्वकात्प्रयो-

॥ भा० ॥ विषम उपन्यासः नात्यन्तायाज्ञानं शरणम्भवितुमर्हति यो ह्यजानन्वै ब्राह्मणं हन्यात्सुरां वा पिबेत्सोऽपि मन्ये पतितस्स्यात् एवन्तर्हि सोऽनन्तमाप्नोति जयम्परत्र वाग्योगविद्दुष्यति चापशब्दैः कः अवाग्योगविदेव अथ यो वाग्योगविद् विज्ञानन्तस्य शरणम् क्व पुनरिदम्पठितं भ्राजा नाम श्लोकाः ॥

॥ कै० ॥ गादभ्युदयभाग् भवति । श्लोकस्यापरिज्ञानात् पृच्छति । क्व पुनरिति । प्रातिपदिकार्थप्रश्ने चात्र तात्पर्य्यम् किन्तदस्ति यत्रेदम्पठितमित्यर्थः अत एव श्लोका इति प्रथमान्तेनोत्तरम् अन्यथा श्लोकेष्विति वाच्यं स्यात् ॥

॥ वि० ॥ भाष्ये यो ह्यजानन्निति । निषेधशास्त्रमजानन्ब्राह्मणत्वादिज्ञानपूर्वकन्तद्वधादि कुर्य्यात्सोऽपि पतित एवेत्यर्थः । प्रकरणादिति । सन्निधेरित्यर्थः । नन्वेवं वाग्योगविदोऽपशब्दज्ञानादधर्म्मस्स्यादत आह । वाग्योगेति । एवञ्चापशब्दप्रयोग एवाधर्महेतुर्न ज्ञानमात्रमिति न दोष इतिभावः । भ्राजा नाम कात्यायनप्रणीताः श्लोका इत्याहुः ॥

२४

॥ वि॰ ॥ भाष्ये किञ्चात इति । अतः प्रश्नात्किं विवक्षितमित्यर्थः । उदुम्बरस्ताम्रम् । दुष्टत्वमिति । इदमुपलक्षणम् अन्यचाप्य-दुष्टत्वस्य । ननु कर्त्तरि क्तान्तप्रमत्तशब्दस्य गीतशब्देन समासोऽनुपपन्नः तत्र भवत इत्यनेन साकाङ्क्षत्वादत आह । प्रमादेनेति । भावे क्तान्त इतिभावः । विप्रतिपन्नत्वेन वेदविषयविप्रतिपत्त्याश्रयत्वेन तत्त्वं स्वस्मिन्नारोप्य दैत्यनाशाय पूज्यस्यापि भगवत ईश्वरस्य तथोक्तिरिति स न प्रमाण-मितिभावः ॥

॥ कै॰ ॥ आप्तोक्तत्वापरिज्ञानादाह । किञ्च भो इति । यदुदुम्बरेति । अयं श्लोकस्सौत्रामणीयागे सुरापानस्य दुष्टत्वमुद्भावयति । प्रमत्तगीत इति । प्रमादेन विप्रतिपन्नत्वेन गीत इत्यर्थः ॥

॥ भा॰ ॥ किञ्च भोः श्लोका अपि प्रमाणम् किञ्चातः यदि प्रमाणमयमपि प्रमाणम्भवितुमर्हति यदुदुम्बरवर्णानां घटी-नाम्मण्डलम्महत् पीतन्न गमयेत्स्वर्गङ्किन्तत्क्रतुगतन्नयेदिति । .प्रमत्तगीत एष तत्रभवतो यस्त्वप्रमत्तगीतस्तत्प्रमाणम् । यस्तु प्रयुङ्क्ते । अविद्वांसः । अविद्वांसः प्रत्यभिवादे नाम्नो ये न प्लुतिं विदुः कामन्तेषुतु विप्रोष्य ॥

॥ कै॰ ॥ कात्यायनोपनिबद्धभ्राजाख्यश्लोकमध्यपठितस्यत्वस्य श्रुतिरनुग्राहिकास्ति एकश्शब्दस्सुज्ञातस्सुप्र-युक्तः स्वर्गे लोके कामधुग्भवतीति ॥

॥ वि॰ ॥ भाष्ये यस्त्वप्रमादेन गीतो यस्य कस्यापि तत्प्रमाणमितिप्रतिनिर्देशलिङ्गम् । ननु कथञ्ज्ञातमयमप्रमत्तगीत इत्यत आह । श्रुतिरनुग्राहिकेति । भाष्येऽविद्वांस इति । अत्र योग्यत्वाद्व्याकरणङ्कर्म बोध्यम् । प्रत्यभिवादेऽभिवादानन्तरप्रयोज्याशीर्वादवचने नाम्नोऽभिवादकनाम्नष्टेः प्लुतिङ्कर्त्तुं ये न जानन्ति तेषु कामन्निश्शङ्कं विप्रोष्य प्रवासादेत्य यद्वा कामं विध्यनुसारमन्तरैवेत्यर्थः ॥

२५

॥ वि॰ ॥ अयमहमित्यनुकरणस्यानितिपरत्वेऽपि कृभ्व्योगाभावाद्गतित्वाभावेन वदेदित्यस्य तिङन्तत्वेनच समासाभाव इत्याहुः । अत्र क्वचि-दयमहमिति वदेत् अनुकरणञ्चानितिपरमितिगतित्वात्समास इति पाठो दृश्यते सोऽपपाठः । भाष्ये स्त्रीवदिति । तद्वत्करणेन शास्त्राज्ञानि-त्वकृतापमानप्रयुक्तदुःखभाजो माभूमेतिभावः । ननु प्रकृतौ प्रयाजमन्त्रास्सविभक्तिका एव पठ्यन्ते तत्किमनेन वचनेनेत्यत आह प्रयाजेति ।

॥ कै॰ ॥ स्त्रीष्विवेति । प्रत्यभिवादे हि गुरुणा प्लुतः कार्यः प्लुतङ्कर्त्तुंन्न जानाति स स्त्रीवद्व-क्तव्योऽयमहमिति नत्वभिवादये देवदत्तोऽहमित्यादिना संस्कृतप्रयोगेणेत्यर्थः ॥

॥ भा॰ ॥ स्त्रीष्विवायमहं वदेत् स्त्रीवन्माभूमेत्यध्येयं व्याकरणम् अविद्वांसः । विभक्तिङ्कुर्वन्ति याज्ञिकाः पठन्ति प्रयाजास्सविभक्तिकाः कार्या इति नचान्तरेण व्याकरणम्प्रयाजास्सविभक्तिकाश्शक्याः कर्त्तुम् विभक्तिङ्कुर्वन्ति ॥

॥ कै॰ ॥ प्रयाजा इति । प्रयाजमन्त्रा ऊह्यमाना अग्निशब्दप्रकृतिकविभक्तियुक्ता इत्यर्थः यथा समिधस्समिधोऽग्नेऽग्न आज्यस्य व्यन्तु वर्हिं अग्निरग्निरिति ॥

॥ वि॰ ॥ ऊह्यमाना याग्निशब्दप्रकृतिकविभक्तिस्तद्युक्ता इत्यर्थः । नन्वग्निशब्दप्रकृतिकेत्यसङ्गतम् अपूर्वविभक्तिमात्रविधाने न केवलः प्रत्यय इतिनिषेधात् यत्किञ्चित्प्रातिपदिकप्रकृतिकास्सर्वा विभक्तयः प्रयोक्तव्या इति प्राप्नोतीतिचेन्न त्वमग्ने प्रयाजानुयाजानाम्पुरस्तात्त्वम्पश्चादितिमन्त्रवर्णेनाग्निशब्दप्रकृतिका एव ता इत्याशयात् तत्राग्नेर्देवताया एकत्वादेकवचनमेव विभक्तयश्च प्रथमाद्वितीयातृतीयाषष्ठीसप्तम्य एवेति श्रौतसम्प्रदायः ॥

New No ६२२

॥ वि॰ ॥ व्यञ्जनसहित इति । यथा ये यजामह इति पञ्चाक्षरमिति वर्णाश्चाहुः पूर्वसूत्रे इतिभाष्याद्वर्णमात्रमित्यन्ये । सकृत्प्रयुक्ता-र्त्विजीनशब्दस्योभयपरत्वे युक्तिमाह । विद्वानिति । वेदार्थज्ञ इत्यर्थः । चत्वारीति । ऋङ्मन्त्रः । शब्दस्येति । शब्दशास्त्रप्रतिपाद्यस्ये-त्यर्थः । वृषभाकारश्शब्दशास्त्रप्रतिपाद्यः शब्दो रोरवीति महान्देवः अन्तर्यामिरूपः शब्दो मर्त्त्यां आविवेश स्वाभेदमाविष्कृतवानितिमन्त्रतात्पर्य्यम् ॥

॥ कै॰ ॥ पदश इति । पदम्पदमितिसङ्ख्यैकवचनाच्च वीप्सायामितिशस् । स्वरश इति । स्वर उदा-त्तादिः । अक्षरश इति । अक्षरं व्यञ्जनसहितो ऽच् । आर्त्विजीन इति । ऋत्विजमर्हतीत्यार्त्विजीनो यजमानः ऋत्विक्कर्माऽर्हतीतियाजकोऽप्यार्त्विजीनः यज्ञर्त्विग्भ्याङ्घखञाविति सूत्रेण

॥ भा॰ ॥ यो वा इमाम् यो वा इमाम्पदशः स्वरशोऽक्षरशो वाचं विदधाति स आर्त्विजीनो भवति आर्त्विजीनास्स्यामेत्यध्येयं व्याकरणम् यो वा इमाम् । चत्वारि चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्त्यां आविवेशेति । चत्वारि शृङ्गाणि चत्वारि पदजातानि नामाख्यातोपसर्गनिपाताश्च । त्रयोऽस्य पादाः त्रयः कालाः भूतभ-विष्यद्वर्त्तमानाः । द्वे शीर्षे द्वौ शब्दात्मानौ नित्यः कार्य्यश्च ॥

॥ कै॰ ॥ यज्ञर्त्विग्भ्यान्तत्कर्माऽर्हतीतिचोपसङ्ख्यानमितिवार्त्तिकेनच खञ् । विद्वान् यजेत विद्वानेव याजये-दिति द्वयोरपि विदुषोरधिकारात् । चत्वारीति । शब्दस्य वृषभत्वेन निरूपणम् । त्रयः काला इति । लडादिविषयाः । नित्यः कार्य्यश्चेति । व्यङ्ग्यव्यञ्जकभेदेन ॥

॥ वि॰ ॥ महतो देवस्य शब्दब्रह्मणो व्याकरणज्ञाप्यतया व्याकरणज्ञस्तदाविष्ट इव भवतीति यावत् । भाष्ये पदजातानि । परापश्यन्तीमध्यमावैखरीरूपाणि अत एवाग्रे निपाताश्चेतिचकारः सङ्गच्छते । नामाख्यातेति । नामशब्देन सुबन्तम् नमत्याख्यातार्थम्प्रति विशेषणीभवतीतिव्युत्पत्तेः । आख्यातम् तिङन्तम् । उपसर्गनिपातयोः पृथगुपादानङ्गोबलीवर्द्दन्यायेन । व्यङ्ग्य आन्तरः । व्यञ्जकः वैखरीरूपः ॥



॥ वि॰ ॥ तिङ्विभक्तीनां षट्त्वादाह । सुप इति । सहशेषेणेति । शेषः षष्ठ्यर्थः तत्सहितकारकाभिधायकत्वेन सुप्तिङोरुभयोरपि सङ्ग्रह इतिभावः । भाष्ये उरसीत्यादि । हकारम्पञ्चमैर्युक्तमन्तस्थाभिश्च संयुतम् उरस्यन्तं विजानीयात् । मूर्द्धन्या ऋटुरषा इत्युक्तेः मूर्द्धैव शिरः कण्ठ इत्यनेन मुखान्तर्गतकण्ठादिस्थानमुपलक्ष्यते । ननु वर्षति मूत्रेण भूमिं सिञ्चतीति वृषभ इत्युच्यते तत्कथं शब्द एवमित्यत आह । कामाना-मिति । मेघ उदकमिवोक्तचतुःशृङ्गत्वादिगुणवैशिष्ट्येन ज्ञानपूर्वकप्रयोगेण कामानान्दानादित्यर्थः । द्विशृङ्गद्विपाद्द्विकरकण्ठमात्रबद्धलौकिकवृषभादस्य व्यतिरेकः ॥

॥ कै॰ ॥ सप्त विभक्तय इति । सुप इत्यर्थः केचित्तु तिङामपरिग्रहप्रसङ्गात्सहशेषेण सप्त कारकाणि

॥ भा॰ ॥ सप्त हस्तासो अस्य सप्त विभक्तयः त्रिधा बद्धस्त्रिषु स्थानेषु बद्धः उरसि कण्ठे शिरसीति वृषभो वर्षणात् रोरवीति शब्दङ्करोति कुत एतत् रौतिश्शब्दकर्मा महो देवो मर्त्यां आविवेशेति । महान्देवः शब्दः मर्त्या मरणधर्म्माणो मनुष्याः तानाविवेश महता देवेन नः साम्यं स्यादित्यध्येयं व्याकरणम् ॥

॥ कै॰ ॥ विभक्तिशब्दाभिधेयानीति व्याचक्षते । वर्षणादिति । कामानाञ्ज्ञानपूर्वकानुष्ठानफलत्वात् । महतेति । परेण ब्रह्मणेत्यर्थः ॥

॥ वि॰ ॥ किं रोरवीति तत्राह । भाष्ये महान्देव इत्यादि । महान् परब्रह्मस्वरूपो देवोऽन्तर्यामिरूपः शब्दो मर्त्येष्वाविष्ट इत्यर्थः । तदावेशफलमाह । महता देवेनेति । साम्यं सायुज्यम् तदुक्तं हरिणा । अपि प्रयोक्तुरात्मानं शब्दमन्तरवस्थितम् प्राहुर्महान्तं वृषभं येन सायुज्यमिष्यते आहच चत्वारि शृङ्गा त्रयो अस्य पादा इत्यादि ऋङ्मन्त्रः । इह द्वौ शब्दात्मानौ कार्य्यो नित्यश्च तत्रान्त्यस्सर्वेश्वरः सर्वशक्तिर्महान् शब्दवृषभस्तस्मिन् खलु वाग्योगविद् शास्त्रजशब्द-ज्ञानपूर्वकम्प्रयोगेण क्षीणपापः पुरुषो विच्छिद्याहङ्कारग्रन्थीनत्यन्तं संसृज्यते इति तदर्थं तद्व्याख्यातारः ॥

॥ वि॰ ॥ एतावन्त्येवेति । वाक्परिमितानीति षष्ठीतत्पुरुषः पदजातानि परापश्यन्तीमध्यमावैखर्य्यः । नामादीनिच नामादिमध्येच एकैकं चतुष्पादम् । भाष्ये मनस ईषिणः । चित्तशुद्धिक्रमेण वशीकर्त्तारः विषयान्तरेभ्यो व्यावर्त्याहिंसका वा तेच वैयाकरणाः अन्येषां

॥ कै॰ ॥ चत्वारीत्यनेनैकदेशेन सदृशेन वाक्यान्तरमपि सूच्यत इत्याह । अपर आहेति परिमितानीति प्राप्ते शेश्छन्दसि बहुलमिति शेर्लोपे परिमितेतिभवति परिमितानि परिच्छिन्नान्येतावन्त्येवेत्यर्थः । मनीषि-शब्दः पृषोदरादित्वात्साधुः । कथं मनीषिण एव वदन्तीत्याह

॥ भा॰ ॥ अपर आह चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति । चत्वारि वाक्परिमिता पदानि चत्वारि पद-जातानि नामाख्यातोपसर्गनिपाताश्च तानि विदुर्ब्राह्मणा ये मनीषिणः मनस ईषिणो मनीषिणः गुहा त्रीणि निहिता नेङ्गयन्ति गुहायां त्रीणि निहितानि नेङ्गयन्ति न चेष्टन्ते न निमिषन्तीत्यर्थः ॥

॥ कै॰ ॥ गुहेति । अज्ञानमेव गुहा तस्यामित्यर्थः सुपां सुलुगिति सप्तम्या लुक् व्याकरणप्रदीपेनतु तानि प्रकाशन्ते तत्र चतुर्णां पदजातानामेकैकस्य चतुर्थभागं मनुष्या अवैयाकरणा वदन्ति नेङ्गयन्तीत्यस्यैव व्याख्यानं न चेष्टन्ते न निमिषन्तीति ॥

॥ वि॰ ॥ तदज्ञाने हेतुमाह गुहेति । एकैकस्य नामादिरूपस्य चतुर्थं भागम् एकैकस्य चतुरंशत्वात् परादीनां वा त्रयोंऽशा मध्यमान्ताः । गुहा अज्ञानं हृद-यादिरूपाच वैयाकरणास्तु शास्त्रबलेन तद्बललब्धयोगेनच गुहान्धकारं विदार्य सर्वं जानातीतिभावः । न निमिषन्तीति । ज्ञानसामान्यविषयत्वाभाव उच्यते ॥



॥ वि॰ ॥ भाष्ये यन्मनुष्येषु वर्तते इति । ज्ञानविषयतया तद्वाचश्चतुर्थमित्यन्वयः । तस्मात्सकलपदज्ञानाय मनीषित्वाय वाध्येयं व्या-करणमितिशेषः । हरिरप्याह वैखर्य्या मध्यमायाश्च पश्यन्त्याश्चैतदद्भुतम् अनेकतीर्थभेदायास्त्रय्या वाचः परं पदम् तत्र श्रोत्रविषया वैखरी मध्यमा हृदयदेशस्था पदप्रत्ययानुपपन्त्या व्यवहारकारणम् पश्यन्ती तु लोकव्यवहारातीता योगिनां तु तत्रापि प्रकृतिप्रत्ययविभागावगतिरस्ति परायां तु नेति त्रय्या इत्युक्तम् स्वरूपज्योतिरेवान्तःपरावागनपायिनी तस्यां दृष्टस्वरूपायामधिकारो निवर्त्तत इत्युक्तेः अनेकतीर्थभेदायाः नामाख्यातादिवीणावेणुमृदङ्गशब्दादिरू-

॥ कै॰ ॥ उतत्व इति । त्वशब्दोऽन्यवाची उतशब्दोऽपिशब्दस्यार्थे सच भिन्नक्रमः

॥ भा॰ ॥ तुरीयं वाचो मनुष्या वदन्ति तुरीयं वा एतद्वाचो यन्मनुष्येषु वर्तते चतुर्थमित्यर्थः चत्वारि । उतत्वः । उतत्वः पश्यन्न ददर्श वाचमुतत्वः शृण्वन्न शृणोत्येनाम् ॥

॥ कै॰ ॥ प्रत्यक्षेण शब्दस्वरूपमुपलभमानो ऽपि अर्थापरिज्ञानान्न पश्यतीत्यर्थः ॥

॥ वि॰ ॥ पानेकभेदायाः । आह खल्वपि चत्वारि वाक्परिमितानीतिऋग्मन्त्र इतितद्व्याख्यातारः । उतत्व इति । उतोशब्दोऽप्यर्थे बहूनामपि समान-पृष्ठोदरपाणिपादानामध्ययनमधीयानानामेकः कश्चित्पश्यन्नपि स्वभ्यस्ताध्ययनोऽपि तीक्ष्णबुद्धिरपि सन् न पश्यति अर्थानभिज्ञत्वात् अर्थपरिज्ञानफला हि वागि-त्यभिप्रायः एवमेकः शृण्वन्नपि न शृणोत्येनां वाचं य एवद्यर्थं सम्यगवबुध्यते तेनैवहि सा सम्यक् श्रुता भवति ॥

३०

॥ वि॰ ॥ एवमर्द्धेनाविद्वांसं निन्दित्वार्द्धान्तरेण विद्वांसं स्तौति । उतो त्वस्मै । अप्येकस्मै कस्मैचिद्वैयाकरणाय तन्वं शरीरं विवृणोति प्रकाशयति सम्यग्ज्ञानं हि प्रकाशनसमर्थस्य अर्थो हि वाचश्शरीरम् । अथोपमायुक्तयोत्तमया वाचान्यपादेन तमेव स्तौति यथा जाया विवृतसर्वाङ्गावयवाभूत्वोशती कामयमाना भर्त्रे प्रेम्णा दर्शयत्यात्मानम् कस्मिन्काले यदा सुवासा निर्णिक्तवासा नीरजस्का ऋतुकालेषु तदा द्युतितमां स्त्री पुरुषं प्रार्थयते

॥ कै॰ ॥ उतो इति । उत उ इति निपातसमाहारः । अविद्वांसमाहार्द्धमिति । अविद्वल्लक्षणमर्थमर्द्धर्च आहेत्यर्थः ॥

॥ भा॰ ॥ उतो त्वस्मै तन्वं विसस्रे जायेव पत्य उशती सुवासाः उतत्वः अपि खल्वेकः पश्यन्नपि न पश्यति अपि खल्वेकः शृण्वन्नपि न शृणोत्येनामविद्वांसमाहार्द्धम् उतो त्वस्मै तन्वं विसस्रे तनुं विवृणुते जायेव पत्य उशती सुवासाः तद्यथा जायेव पत्ये कामयमाना सुवासाः स्वमात्मानं विवृणुते एवं वाग् वाग्विदे स्वमात्मानं विवृणुते वाक् नो विवृणुयादात्मानमित्यध्येयं व्याकरणम् उतत्वः ॥

॥ वि॰ ॥ यथा तत्पुरुषस्तां यथावत्पश्यति शृणोतिच तद्वचनार्थं नान्यदा घनपटप्रावृतशरीराम् एवं स एवैनां वाचं पदशः प्रकृतिप्रत्ययविभागेन विग्रह्यार्थमस्याः पश्यति शृणोतिचेत्यर्थः । अयमर्थो निरुक्ततद्भाष्ययोस्स्पष्टः । भाष्ये वाग्विदे । वैयाकरणाय ॥

३१

॥ वि॰ ॥ भाष्ये सक्तुमिवेति । यत्र व्याकरणे धीरा ध्यानवन्तः सन्तस्तितउना सक्तुमिव ध्यानयुक्तमनसा तत्करणकज्ञानेन वाचमक्रताकृपत असाधुभ्यो विविक्तां कृतवन्तः ते तत्करणेन शुद्धचित्ता अत्र ब्रह्मप्रतिपादकशब्दे शब्दार्थयोरभेदबुद्ध्या सखायः समानख्यातयः समानज्ञानाः तच्छब्दे ब्रह्मैकत्वज्ञानवन्तस्तेनैव दृष्टान्तेन सर्वपदार्थेषु ब्रह्मनिरूपिताभेदज्ञानवन्तः सख्यानि सायुज्यानि जानते प्राप्नुवन्तीत्यर्थः यत एषां वाचि भद्रा लक्ष्मीः

॥ कै॰ ॥ सचतेरिति । षचसेचन इत्यस्य । दुर्धाव इति । दुःशोधः यथा तितउना सक्तोस्तुषाद्यपनीयते तथा व्याकरणेन वाचोऽपशब्दा इत्यर्थः । कसतेरिति । पृषोदरादित्वाद्वर्णव्यत्ययः । ततवदिति । विस्तारयुक्तमित्यर्थः । तुन्नवदिति । बहुच्छिद्रम् । धीरा इति । वैयाकरणाः ।

॥ भा॰ ॥ सक्तुमिव सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत अत्रा सखायस्सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताधिवाचि सक्तुः सचतेर्दुर्धावो भवति कसतेर्विपरीताद्विकसितो भवति तितउर्परिपवनं भवति ततवद्वा तुन्नवद्वा धीरा ध्यानवन्तः मनसा प्रज्ञानेन वाचमक्रत वाचमकृपत अत्रा सखायः सख्यानि जानते अत्र सखायस्सन्तस्सख्यानि जानते ॥

॥ कै॰ ॥ वाचमक्रतेति । अपशब्देभ्यो विविक्तां कृतवन्तः मन्त्रे घसेतिच्लेर्लुकि सत्यक्रतेतिरूपम् । अत्रा सखाय इति । ऋचि तुनुघेतिदीर्घः सखायः समानख्यातयो भेदग्रहस्य निवृत्तत्वात्सर्वमेकमितिमन्यते । सख्यानीति । सायुज्यानीत्यर्थः ॥

॥ वि॰ ॥ स्वप्रकाशब्रह्मरूपा अधि अधिकं निहिता स्थिता भवतीति ऋगर्थः । सचतेर्दुर्धाव इति । यतस्सचतेरतो दुःशोध्यार्थप्रतिपादको भवतीत्यर्थः । तितउशब्द इत एव भाष्यान्नपुंसकः चालनी तितउः पुमानितिकोशात्पुल्लिङ्गोऽपि । विस्तारेति । तनोतेर्डउः सन्वच्चेति व्युत्पत्तेरितिभावः । तुन्नेति । तुदधातोः कर्मणि डउः सन्वच्चेतिभावः । ध्यानं ज्ञातार्थभावनम् । मनसेतिव्यापारपरं तदाह प्रज्ञामेनेति ॥

॥ वि० ॥ भाष्ये वेति । किन्तद्यन सायुज्यानि प्राप्नुवन्तीतिप्रश्नः । उत्तरयति य एष इति । दुर्गमार्ग्गप्राप्यत्वात् दुर्ग्गमार्ग्गत्वोपचारः । दुर्ग्गत्वमेवाह एकेति । ज्ञानेनैवेति । निर्विकल्पकज्ञानेनैवेत्यर्थः अत एव दुर्ग्गत्वम् नान्यः पन्था इति श्रुतेरितिभावः । भाष्ये वाग्विषय इति छेदः अत एव श्रवणोपपत्तिः वाग्वेदरूपाच । वेदान्तेष्विति । सत्यञ्ज्ञानमित्यादिषु परमार्थसंविल्लक्षणा परमार्थब्रह्ममात्रविषयज्ञानविषयाखण्डार्थरूपा सैषां वाचि निहितेत्यर्थः सर्वोऽपि वेदस्तेषाम्ब्रह्मपरः वेदैश्च सर्वैरहमेव वेद्य इत्युक्तेरितिभावः । अयम्भावः ये शास्त्रतः प्रकृतिप्रत्ययविभागेन साधून् ज्ञात्वा शास्त्रार्थध्यानवन्तो मानसज्ञानेन वाचमसाधुभ्यः पृथक्कृतवन्तस्ते तज्ज्ञानपूर्वकसाधुशब्दप्रयोगैर्लब्धान्तःकरणशुद्धयोऽत्र य एष दुर्गो मार्गो ब्रह्मरूपस्तत्रात्मना सह समानख्यातयस्त्यक्तभेदभावनाः सख्यानि सायुज्यानि प्राप्नुवते यत एषां वाचि वेदाख्ये ब्रह्मणि भद्रा लक्ष्मीः सर्वभासकब्रह्मरूपा सा अधि अधिकन्निहिता भवति

॥ कै० ॥ एकगम्य इति । ज्ञानेनैव प्राप्यः । वाचीति । वेदाख्ये ब्रह्मणि या लक्ष्मीर्वेदान्तेषु परमार्थसंविल्लक्षणोक्ता सैषान्निहितेत्यर्थः ॥

॥ भा० ॥ क य एष दुर्ग्गो मार्ग्गः एकगम्यो वाग्विषयः के पुनस्ते वैयाकरणाः कुत एतद्भद्रैषां लक्ष्मीर्निहिताधिवाचि एषां वाचि भद्रा लक्ष्मीर्निहिता भवति लक्ष्मीर्लक्षणाद्भासनात्परिवृढा भवति सक्तुमिव ॥

॥ वि० ॥ एतच्छास्त्रसाध्यप्रयोगव्यङ्ग्यन्त्वस्य ध्वनिरूपवैखरीरूपरूपितस्यैव तैर्वाचकत्वस्वीकारेण तस्यचात्यन्तविचारे ब्रह्मातिरेके मानानुपलम्भेन तत्तदुपाधिभिन्नचित एव बोधकतया तैर्ग्रहात् एवं सर्वबोधकेषु ब्रह्मबुद्धौ जातायान्तेनैव दृष्टान्तेन सर्वपदार्थेषु ब्रह्मबुद्धिर्वैयाकरणानामिति । यत्तु पदपदार्थवाक्यार्थमर्यादया सत्यमित्यादितस्तेषान्तद्बोधात्मा तेषां वाचि निहितेति तन्न यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सहेतिश्रुत्या ब्रह्मणस्तन्मर्यादया शब्दाबोध्यत्वोक्तेः तत्रहि अप्राप्येत्यस्य सम्बन्धज्ञानेऽविषयीभूयासंबन्ध्यचेत्यर्थः । आद्यं शब्देऽन्यम्मनसि शुद्धचित्तस्य तूभयमपि बोधकमखण्डविषयस्य दृश्यतेत्वग्रयाबुद्ध्येति श्रुत्यन्तरात् नतु पदपदार्थमर्यादयेतिबोध्यम् । लक्षणादित्यस्य व्याख्या भासनादिति परिवृढा अज्ञाननिवर्त्तनेन प्रश्वी एतेच मन्त्राः सर्वानुक्रमेऽन्यत्र विनियुक्ता अपि भाष्यप्रामाण्यादेतत्तात्पर्य्यका अपीतिबोध्यम् । चत्वारीत्यादि ऋक्चतुष्टयं व्याकरणस्य मोक्षजनकत्वम्प्रतिपादयति ॥



॥ वि० ॥ भवार्थ इति । प्रायश्चित्तसाधनत्वेन तद्भवत्वम् । पञ्चमीतियोगविभागादिति । सुप्सुपेति तु युक्तम् । ननु दशम्याम्पुत्रस्येति प्रयोजनस्वरूपगणने भाष्ये उक्तम्

॥ कै० ॥ प्रायश्चित्तीयामिति । भवार्थे वृद्धाच्छः । प्रायश्चित्तीया इति । प्रायश्चित्ताय पापशोधनाय श्रुतिस्मृतिविहिताय कर्म्मणे हितास्तन्निमित्तोत्पादना माभूमेत्यर्थः । दशम्युत्तरकालमिति । दशम्या उत्तर इति पञ्चमीतियोगविभागात्समासः ततः कालशब्देन बहुव्रीहिः क्रियाविशेषणञ्चैतत् दशदिनान्याशौचम्भवतीति दशम्युत्तरकालमित्युक्तम् ।

॥ भा० ॥ सारस्वतीम् । याज्ञिकाः पठन्ति आहिताग्निरपशब्दम्प्रयुज्य प्रायश्चित्तीयां सारस्वतीमिष्टिन्निर्व्वपेदिति प्रायश्चित्तीया माभूमेत्यध्येयं व्याकरणम् सारस्वतीम् । दशम्याम्पुत्रस्य याज्ञिकाः पठन्ति दशम्युत्तरकालम्पुत्रस्य जातस्य नाम विदध्यात् घोषवदाद्यन्तरन्तस्थमवृद्धन्त्रिपुरुषानूकम् अनरिप्रतिष्ठितम् ॥

॥ कै० ॥ यदपि गृह्यकाराः पठन्ति दशम्याम्पुत्रस्येति तैरपि दशम्यामितिसामीपिकमधिकरणं व्याख्येयम् । घोषवन्तो ये वर्णाः शिक्षायाम्प्रदर्शिताः तदादि । अन्तरन्तस्थमिति । मध्ये यरलवा यस्य तदित्यर्थः । त्रिपुरुषानूकमिति । नामकरणे योऽधिकारी पिता तस्य ये त्रयः पुरुषास्ताननुकायत्यभिधत्त इति त्रिपुरुषानूकम् अन्येषामपि दृश्यत इतिदीर्घः ॥

॥ वि० ॥ गृह्येऽपि तथैव पठ्यते अतो दशम्युत्तरकालमित्ययुक्तमत आह । तैरपीति । शिक्षायामिति । ते च हशः अन्तरन्तस्था यस्येत्यर्थः । त्रिपुरुषानूकं त्रिपुरुषशब्दे न द्विगुः मूलविभुजादित्वात्कः । भाष्येऽनरीति । अमनुष्येऽरिभिन्ने इतिवार्थः ॥

३४

॥ वि० ॥ सत्यदेव इति । वरुणो यथा सत्येन दीव्यति द्योतत इति यौगिकोऽयं शब्दस्तथान्येष्वपीत्यर्थः । यस्येतिपञ्चमीस्थाने षष्ठी यस्मात्ते काकुदन्तालु प्राप्य सिन्धवस्सप्तसमुद्ररूपाः सप्त विभक्तयोऽनुचरन्ति प्रकाशन्ते इत्यर्थः ।

॥ कै० ॥ सुदेवो असीति । वरुणस्येयं स्तुतिः यतो हेतोर्व्याकरणज्ञानात्ततो हेतोरन्येऽपि सत्य-
देवा भवन्तीत्यर्थः । सिन्धव इति । नद्य इव विभक्तय इत्यर्थः ।

॥ भा० ॥ तद्धि प्रतिष्ठिततमम्भवति द्व्यक्षरञ्चतुरक्षरं वा नाम कृतङ्कुर्य्यान्न तद्धितमिति नचान्तरेण व्याकरणङ्कृ
तस्तद्धिता वा शक्या विज्ञातुम् दशम्यामुत्पन्नस्य । सुदेवो असि सुदेवो असि वरुण यस्य ते सप्त सिन्धवः अनुचरन्ति
काकुदं सूर्म्यं सुषिरामिव । सुदेवो असि वरुण सत्यदेवोऽसि यस्य ते सप्त सिन्धवस्सप्तविभक्तयः अनुचरन्ति
काकुदन्तालु काकुर्जिह्वा साऽस्मिन्नुद्यत इति काकुदम् ॥

॥ कै० ॥ अनुचरन्तीति । तास्त्वनुप्राप्य प्रकाशन्त इत्यर्थः । साऽस्मिन्नुद्यत इति । अनेकार्थत्वा-
द्धातूनामुद्धिप्यत इत्यर्थः ॥

॥ वि० ॥ अनेकार्थत्वादिति । वदेरधिकरणे घञर्थे इति कः शकन्ध्वादित्वात्पररूपम् पृषोदरादित्वादैकस्योकारस्य लोपः नुदेर्वाधिकरणे कः पृषोदरादित्वान्नुलोपः ॥

३५

॥ वि० ॥ सूर्मिं शोभनामयःप्रतिमाम् सुषिराम् ऊषसुषीति रप्रत्ययेन सच्छिद्राम्प्रविश्याऽग्निर्यथा तत्रत्यं मलम्भस्मीकृत्य प्रतिमां शुद्धाङ्करोति एवन्तालुदेशे प्रकाशम्प्राप्य विभक्त्यन्ताश्शब्दाश्शारीरम्पापमपाकुर्वन्तीत्यर्थः अनेन स्वर्गप्राप्तिः फलमित्युक्तम् । एवन्तर्हीति । वेदातिरिक्तवि-
षय एव प्रयोजनान्वाख्यानन्नतु वेदविषय इत्येवं रूपं विषयविभागम् तृतीयस्य प्रश्न इत्यन्ये ।

॥ कै० ॥ सूर्म्यमिति । सूर्म्मिमितिप्राप्ते अमि पूर्व इत्यत्र वा छन्दसीत्यनुवृत्त्या यणादेशः । किम्पुनरिति ।
ननु कानि पुनरस्येति येन पृष्टं स एव कथम्पृच्छति किम्पुनरिति एवन्तर्हि भाष्यकारः प्रयोजनान्वाख्यानस्य
विषयविभागन्दर्शयति पुरा वेदाध्ययनात्पूर्वं व्याकरणमधीयते ते बाल्यात्प्रष्टुमसमर्था इति न प्रयोजनमन्वा-

॥ भा० ॥ सूर्म्यं सुषिरामिव तद्यथा शोभनामूर्मिं सुषिरामग्निरन्तः प्रविश्य दहति एवं सप्त सिन्धवस्सप्त विभक्तयः तालु
अनुचरन्ति तेनासि सत्यदेवः सत्यदेवास्स्यामेत्यध्येयं व्याकरणम् सुदेवो असि । किम्पुनरिदं व्याकरणमेवाधिजिगांसमानेभ्यः
प्रयोजनमन्वाख्यायते न पुनरन्यदपि किञ्चित् ओमित्युक्त्वा ॥

॥ कै० ॥ ख्येयम् अद्यत्वे तु स्वल्पायुष्ट्वात्पूर्वमेव वेदम्प्रधानमधीयते ततः प्रष्टुं समर्थत्वाद्व्याकरणाध्ययनस्य
प्रयोजनं पृच्छन्तीति अवश्यान्वाख्येयम्प्रयोजनम् । न पुनरन्यदिति । वेदमप्यधिजिगांसमानेभ्य इत्यर्थः ।
ओमित्युक्त्वेति । अभ्युपगम्येत्यर्थः ॥

॥ वि० ॥ किञ्चित्पदार्थमाह । वेदमपीति । शेषपूरणमन्यत् किन्तत्किञ्चिदित्याकाङ्क्षायाम्भाष्ये ओमितुक्त्वेति । पठन्तीत्यनन्तरमेतेभ्योऽपीति शेषः एवञ्च वेदमधिजिगांसमानेभ्यो वेदाध्ययनप्रयोजनङ्किमिति नान्वाख्यायते इति प्रश्नः वेदाध्ययनवद्व्याकरणाध्ययनमपि प्रयोजनमन्तरैव करिष्यन्तीति प्रयोजनविचारो व्यर्थ इतितात्पर्य्यम् । नन्वोमित्यधिकमित्याह अभ्युपगम्येति । विनैव प्रयोजनज्ञानमितिशेषः ॥

३६

॥ वि० ॥ भाष्ये उत्तरमाह । पुराकल्पे इति । युगान्तरे इत्यर्थः । संस्कार उपनयनम् । करणमाभ्यन्तरप्रयत्नः अनुप्रदानन्नादादिबाह्यप्रयत्नः तेनाधीतव्याकरणेभ्य इत्यर्थः ते तदानीमपि कर्म्मानुष्ठानफलकत्वं वेदस्य जानन्तो नित्यत्वं वा तदध्ययनस्य जानन्तो न तदध्ययनप्रयोजनम्पृच्छन्तीति न कदाचिदपि वेदाध्ययनप्रयोजनोपदेश इति तात्पर्य्यम् । न तथेति । किन्तु विपरीतमित्यर्थः ॥

॥ कै० ॥ वृत्तान्तश इति । वृत्तान्तः प्रपाठक उच्यते वृत्तान्तं वृत्तान्तम्पठन्तीत्यर्थः । अद्यत्वेशब्दो निपातोऽस्मिन्काल इत्यस्यार्थे वर्त्तते ॥

॥ भा० ॥ वृत्तान्तशश्शमित्येवमादीन् शब्दान्पठन्ति पुराकल्प एतदासीत् संस्कारकालोत्तरन्ब्राह्मणा व्याकरणं स्माधीयते तेभ्यस्तत्तत्स्थानकरणनादानुप्रदानज्ञेभ्यो वैदिकाश्शब्दा उपदिश्यन्ते तदद्यत्वे न तथा वेदमधीत्य त्वरिता वक्तारो भवन्ति वेदान्नो वैदिकाश्शब्दाः सिद्धा लोकाच्च लौकिकाः अनर्थकं व्याकरणमिति तेभ्य एवं विप्रतिपन्नबुद्धिभ्योऽध्येतृभ्यस्सुहृद्भूत्वाचार्य्य इदं शास्त्रमन्वाचष्टे इमानि प्रयोजनान्यध्येयं व्याकरणमिति उक्तश्शब्दः स्वरूपमप्युक्तम् प्रयोजनान्यप्युक्तानि । शब्दानुशासनमिदानीङ्कर्त्तव्यम् तत्कथङ्कर्त्तव्यम् किं शब्दोपदेशः कर्त्तव्यः आहोस्विदपशब्दोपदेशः आहोस्विदुभयोपदेश इति ॥

॥ कै० ॥ त्वरिता इति । विवाहादौ । उभयोपदेश इति । हेयोपादेयोपदेशे स्पष्टा प्रतिपत्तिर्भवति इत्युभयोपदेश उद्भावितः ॥

॥ वि० ॥ भाष्ये आचार्य्यपदेन शास्त्राध्यापको भाष्यकृदेव विवक्षितः । इदं शास्त्रमिति । प्रयोजनान्वाख्यानमित्यर्थः । भाष्ये उक्तश्शब्द इति । लौकिकानाञ्चेत्यनेन विषयभूतश्शब्द उक्त इत्यर्थः । स्वरूपमपीति । अथ गौरित्यादिना अयमुपसंहारो ग्रन्थस्य विषयप्रयोजननिरूपणमेतावता कृतमितिबोधयितुम् तेनैव सम्बन्धाधिकारिणावुक्ताविति पृथङ्नोक्तौ ॥

३७

॥ वि ॥ किंयत्तङ्गोऽन्यच डतराभावादाह । अन्यतरान्येति । तत्र सुशब्दोपदेशः प्रयोगविध्यर्थोऽनुवादः अपशब्दोपदेशस्तु प्रयोगप्रतिषेधार्थः । पञ्च पञ्चनखा इत्यस्य नियमत्वन्दर्शयति । अर्थित्वादिति । नियम्यमानम् पुनः शब्देन बोध्यमानमित्यर्थः नन्वस्य परिस-

॥ कै० ॥ यद्यपि प्रतिपत्तिः स्पष्टा गौरवन्तु भवतीत्यत आहान्यतरेति । शब्दापशब्दयोरित्यर्थः अन्यतरान्यतमशब्दावव्युत्पन्नौ

॥ भा० ॥ अन्यतरोपदेशेन कृतं स्यात्तद्यथा भक्ष्यनियमेनाभक्ष्यप्रतिषेधो गम्यते पञ्च पञ्चनखा भक्ष्या इत्युक्ते गम्यते एतदतोऽन्येऽभक्ष्या इति अभक्ष्यप्रतिषेधेन वा भक्ष्यनियमः तद्यथा अभक्ष्यो ग्राम्यकुक्कुटः अभक्ष्यो ग्राम्यसूकर इत्युक्ते गम्यते एतदारण्यो भक्ष्य इति एवमिहापि यदि तावत् शब्दोपदेशः क्रियते गौरित्येतस्मिन्नुपदिष्टे गम्यते एतद्गाव्यादयोऽपशब्दा इति अथाप्यपशब्दोपदेशः क्रियेत गाव्यादिषु उपदिष्टेषु गम्यते एतद्गौरित्येष शब्द इति ॥

॥ कै० ॥ स्वभावाद्विबहुविषये निर्द्धारणे वर्त्तते । पञ्चेति । अर्थित्वाद्भक्षणम्प्राप्तम्पञ्चसु पञ्चनखेषु नियम्यमानं सामर्थ्यादन्येभ्यो निवर्त्तते ॥

॥ वि० ॥ ह्रस्वत्वात्कार्थन्नियमत्वेन व्यवहारो ऽस्ति च नियमपरिसङ्ख्ययोर्भेदः पाक्षिकाप्राप्तिकाप्राप्तांशपरिपूरणफलो नियमः अन्यनिवृत्तिफलाच परिसङ्ख्येति चेन्न नियमेऽप्यप्राप्तांशपरिपूरणरूपफलबोधनद्वाराऽऽर्थान्यनिवृत्तेः सत्त्वेनाभेदमाश्रित्योक्तेः ॥

॥ वि० ॥ विधिरिति । अपूर्वविधिरित्यर्थः ये तु पञ्चपदस्य तदतिरिक्ते लक्षणा भक्ष्यपदस्य चाभक्ष्ये सेति वदन्ति तेषाम्पदद्वये लक्षणागौरवम् अस्यैव नियमत्वेन भक्ष्यनियमेनाभक्ष्यप्रतिषेधो गम्यत इति भाष्यविरोधश्च नियमपदस्य तद्बोधके लक्षणायां सैव दोषः अक्षरास्वारस्यञ्च नियम्यमानभक्षणं सामर्थ्यादन्येभ्यो निवर्त्तत इति कैयटासङ्गतिश्च दृष्टान्तदार्ष्टान्तिकयोरत्यन्तवैषम्यापत्तिश्च अन्यनिवृत्तिफला परिसङ्ख्येति अभियुक्तोक्तिविरोधश्च

॥ कै० ॥ नत्वयं विधिरप्राप्तेरभावात् । किम्पुनरिति । उभयोपदेशाङ्कुरोद्भावपि प्रशस्यो तयोः को ज्यायानित्यर्थः ॥

॥ भा० ॥ किम्पुनरत्र ज्यायः लघुत्वाच्छब्दोपदेशः लघीयान् शब्दोपदेशः गरीयानपशब्दोपदेशः एकैकस्य शब्दस्य बहवोऽपभ्रंशाः तद्यथा गौरित्यस्य गावी गोणी गोता गोपोतलिकादयोऽपभ्रंशाः इष्टान्वाख्यानङ्खल्वपि भवति । अथैतस्मिञ्छब्दोपदेशे सति किं शब्दानाम्प्रतिपत्तौ प्रतिपदपाठः कर्त्तव्यः गौरश्वः पुरुषो हस्ती शकुनिर्मृगो ब्राह्मण इत्येवमादयश्शब्दाः पठितव्याः नेत्याह अनभ्युपाय एष शब्दानाम्प्रतिपत्तौ प्रतिपदपाठः ॥

॥ कै० ॥ इष्टेति । साधुशब्दप्रयोगाद्धर्म्मावाप्तेरित्यर्थः अथवोपादेयोपदेशात्साक्षात्प्रतिपत्तिर्भवतीतिभावः ॥

॥ वि० ॥ सिद्धस्य पुनर्विधानात्मापकप्रमाणस्य तदितराविषयत्वरूपसङ्कोचकल्पनन्तेनान्येषाम्भक्षणाभावः तद्भक्षणे प्रायश्चित्तञ्च सिद्धात्येव समभिव्याहारे सोऽपि स्फुटमस्यार्थस्यैव द्योतकोऽन्ययोगव्यवच्छेद एवकारार्थ इति तु सामान्यप्रमाणसङ्कोचफलितमर्थमादाय नेयम् । भक्ष्यनियम इति भक्ष्यानुमतिरूप उपदेश इत्यर्थः । भाष्ये प्रतिपत्तावित्यस्योपायभूत इतिशेषः । अनभ्युपाय इति । तत्त्वस्याशक्यत्वेन कृत्स्नाभिमतानभ्युपायत्वात् ॥



॥ वि० ॥ तत्रार्थवादमाह । बृहस्पतिरिति । ननु शब्दानामिति पुनरुक्तमत आह । योगरूढ इति । अर्थपौनरुक्त्यमाशङ्क्य निराकरोति । तत्रेति । ननु यावदेवाध्येष्यते तावदेवाभ्युपयुक्तं स्यादत आह भाष्ये । चतुर्भिरिति । उक्तमेव तदाशयमाह । एकदेशेत्यादि । विद्योपयोगाधारभूतानाङ्कालानां विद्याम्प्रत्यप्याधारत्वात्तस्य च करणत्वविवक्षा बोध्या चतुर्षु कालेषु विद्योपयुज्यते इति फलितोऽर्थः तत्राद्ययोर्विद्यार्थ्ययम्बुद्धिमानित्याद-

॥ कै० ॥ बृहस्पतिरिन्द्रायेति । प्रतिपदपाठस्याशक्यताम्प्रतिपादयितुमयमर्थवादः । शब्दानामिति । शब्दपारायणशब्दो योगरूढः शास्त्रविशेषस्य तत्र प्रतिपदोक्तानामितिविशेषणाभिधानाय गम्यमानार्थस्यापि शब्दानामित्यस्य प्रयोगः

॥ भा० ॥ एवं हि श्रूयते बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रम्प्रतिपदोक्तानां शब्दानां शब्दपारायणम्प्रोवाच नचान्तञ्जगाम बृहस्पतिश्च प्रवक्ता इन्द्रश्चाध्येता दिव्यं वर्षसहस्रमध्ययनकालः नान्तञ्जगाम किम्पुनरद्यत्वे यस्सर्वथा चिरञ्जीवति स वर्षशतञ्जीवति चतुर्भिश्च प्रकारैर्विद्योपयुक्ता भवति आगमकालेन स्वाध्यायकालेन प्रवचनकालेन व्यवहारकालेनेति तत्रागमकालेनैवास्यायुः कृत्स्नम्

॥ कै० ॥ एकदेशोपयोगादपि लोके उपयुक्तमित्युच्यते यथौषधसंस्कृतघृतमात्रैकदेशोपयोगे उपयुक्तङ्घृतमिति व्यवहारः तथेह नेति प्रतिपादयति । चतुर्भिरिति । आगमकालो ग्रहणकालः स्वाध्यायकालोऽभ्यासकालः प्रवचनकालोऽध्यापनकालः व्यवहारो याज्ञे कर्मणि ॥

॥ वि० ॥ एपूर्व्वकमन्त्रवस्त्रादिलाभरूपोपयोगः तृतीये प्रतिष्ठा सच्छिष्यलाभद्वारार्थप्राप्तिः सत्कारविशेषश्च चतुर्थे यज्ञाद्यनुष्ठानकालेऽपशब्दप्रयोगप्रयुक्तप्रायश्चित्ताभावः कर्म्मसाङ्गता दक्षिणालाभः प्रतिष्ठाचेत्युपयोगः तादृशश्चोपयोगस्सर्वोध्ययन एव ॥

॥ वि० ॥ भाष्ये पर्य्युपयुक्तमिति । समाप्तमित्यर्थः । पर्यवसन्नमितिपाठान्तरम् । नचेष्टापत्तिः विद्योच्छेदापत्तेः कर्मसु प्रायश्चित्तवि-
धिवैयर्थ्यापत्तेश्च । ननु तदात्मकत्वाल्लक्षणस्य मतोरनुपपत्तिरत आह । सामान्यविशेषाविति ।

॥ कै० ॥ किञ्चिदिति । सामान्यविशेषौ यस्मिंस्तत्सामान्यविशेषवत् । कर्मण्यण् आतोऽनुपसर्गे क इत्यादि-

॥ भा० ॥ पर्य्युपयुक्तं स्यात् तस्मादनभ्युपायश्शब्दानाम्प्रतिपत्तौ प्रतिपदपाठः कथन्तर्हीमे शब्दाः
प्रतिपत्तव्याः किञ्चित्सामान्यविशेषवल्लक्षणम्प्रवर्त्यम् येनाल्पेन यत्नेन महतो महतः शब्दौघान्प्रतिप-
द्येरन् किम्पुनस्तत् उत्सर्गापवादौ कश्चिदुत्सर्गः कर्त्तव्यः कश्चिदपवादः कथञ्जातीयकः पुनरुत्सर्गः क-
र्त्तव्यः कथञ्जातीयकोऽपवादः सामान्येनोत्सर्गः कर्त्तव्यः तद्यथा कर्मण्यण् तस्य विशेषेणाऽपवादः
तद्यथा आतोऽनुपसर्गे क इति । किम्पुन-

॥ कै० ॥ सकलशास्त्रव्यवस्थैकतरपक्षाश्रयणे न सिध्यतीति पक्षद्वयाऽऽश्रयणम्प्रश्नपूर्वकङ्करोति किम्पुनरिति ॥

॥ वि० ॥ लक्षणं शास्त्रमित्यर्थः । भाष्ये कथञ्जातीयक इति । केन प्रकारेणेत्यर्थः एतेनैवञ्जातीयकेन शास्त्रेण सुशब्दोपदेशप्रवृत्तिः पाणिनेरुचितेतिसूचितम् ॥



॥ वि० ॥ आकृतिपक्ष इति । तत्र उद्देश्यतावच्छेदकजात्याक्रान्ते क्वचिच्चरितार्थयोर्द्वयोः सत्प्रतिपक्षन्यायेन विरोधस्थले उभयोरप्यप्राप्तौ
विप्रतिषेधे परमिति विध्यर्थन्तु नियमार्थमिति सकृद्गताविति न सिध्यति व्यक्तौ तु तद्व्यक्तिविषययोरपि शास्त्रयोरचारितार्थ्यात्पर्यादेशोभ-

॥ कै० ॥ आकृतिपक्षे केवल आश्रीयमाणे सकृद्गतौ विप्रतिषेध इत्यादि नोपपद्यते केवलेऽपिच व्यक्तिपक्षे
पुनः प्रसङ्गविज्ञानादित्यादि न घटते तस्माल्लक्ष्यसिद्धये क्वचित्प्रदेशे कश्चित्पक्षः परिगृह्यते तत्र जातिवादिन
आहुः जातिरेव शब्देन प्रतिपाद्यते

॥ भा० ॥ राकृतिः पदार्थ आहोस्विद्द्रव्यम् उभयमित्याह कथञ्ज्ञायते उभयथाह्याचार्येण
सूत्राणि प्रणीतानि ॥

॥ कै० ॥ व्यक्तीनामानन्त्यात्सम्बन्धग्रहणासम्भवात् सा जातिस्सर्वव्यक्तिष्वेकाकारप्रत्ययदर्शनादस्तीत्यवसी-
यते तत्र गवादयः शब्दा भिन्नद्रव्यसमवेतां जातिमभिदधति तस्याम्प्रतीतायान्तदावेशात्तदवच्छिन्नन्द्रव्यम्प्रतीयते

॥ वि० ॥ यप्राप्तौ नियमार्थन्तदिति पुनः प्रसङ्गेत्यादि न सिद्ध्यतीत्यर्थः इदञ्च विप्रतिषेधसूत्रे निरूपयिष्यते । तस्याम्प्रतीतायामिति । शब्दशक्यत्वेन गृही-
तायामित्यर्थः एवमभिदधतीत्यस्याभिधाविषयत्वेन गृह्णन्तीत्यर्थः तदावेशात्तत्समवायात् । प्रतीयत इति । अविनाभावाच्छब्दजन्यबोधविषयो भवतीत्यर्थः ॥

॥ वि॰ ॥ प्रत्ययो ज्ञानम् । उपलक्षणभावेनेति । शक्यतावच्छेदकत्वेनेत्यर्थः । तत्र तु न शक्तिरिति मञ्जूषायाम्प्रतिपादितम् । भाष्ये जात्याख्यायामिति । व्यक्तौ पदार्थे सम्पन्ना व्रीहय इति व्यक्तिबहुत्वाद्बहुवचनं सिद्धमेवेति व्यर्थन्तत्स्यादितिभावः । सरूपाणामिति । आकृते-रेकत्वादेवैकशब्दप्रयोगोपपत्तौ तदुक्तिसम्भवो व्यक्तिपक्ष एवेतिभावः नचाकृतिपक्षेऽपि अक्षाः पादा इत्याद्यर्थं स आवश्यक इति वाच्यम् तावतीषु काञ्चिदेकाञ्जातिं स्वीकृत्य तस्या एव शब्दवाच्यत्वम् परम्परयाच व्यक्तिप्रत्यय इति सरूपसूत्रे कैयटेनैव वक्ष्यमाणत्वात् जातौ न जातिरितिपरेषान्दर्शनन्नास्माकमितिच तत्रोक्तम् ।

॥ कै॰ ॥ शुक्लादयः शब्दा गुणसमवेताञ्जातिमाचक्षते गुणे तु तत्सम्बन्धात्प्रत्ययः द्रव्ये सम्बन्धिसम्बन्धात्सञ्ज्ञाश-ब्दानामप्युत्पत्तिप्रभृत्याविनाशात्पिण्डस्य कौमारयौवनाद्यवस्थाभेदेऽपि स एवायमित्यभिन्नप्रत्ययनिमित्ता डित्थ-त्वादिका जातिर्वाच्या क्रियास्वपि जातिर्विद्यते सैव धातुवाच्या पठति पठतः पठन्ति इत्यादेरभिन्नस्य प्रत्ययस्य सद्भा-

॥ भा॰ ॥ आकृतिम्पदार्थम्मत्वा जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्यामित्युच्यते
द्रव्यम्पदार्थम्मत्वा सरूपाणामेकशेष आरभ्यते किम्पुनर्नित्यश्शब्द आहोस्वित्कार्य्यः ॥

॥ कै॰ ॥ वात्तन्निमित्तजात्यभ्युपगमः । व्यक्तिवादिनस्त्वाहुः शब्दस्य व्यक्तिरेवाभिधेया जातेस्तूपलक्षणभावेना-श्रयणादानन्त्यादिदोषानवकाशः । किम्पुनरिति । विप्रतिपत्त्या संशयः । केचिद्ध्वनिव्यङ्ग्यवर्णात्मकन्नित्यं शब्द-माहुः । अन्ये वर्णव्यतिरिक्तम्पदस्फोटमिच्छन्ति । वाक्यस्फोटमपरे सङ्गिरन्ते । अन्येतु ध्वनिरेव शब्दः सच
कार्य्यस्तद्व्यतिरेकेणान्यस्यानुपलम्भादित्याचक्षते ॥

॥ वि॰ ॥ विप्रतिपत्त्येति । शब्दानान्नित्यत्वे व्यर्थं व्याकरणशास्त्रमितिप्रश्नाशयः । केचित् मीमांसकाः । वर्णात्मकमिति । पदवाक्येच वर्णसमूहरूपे ए-वेतितदाशयः । अत्र मते एकम्पटपदमित्याद्यनुपपत्तेराह । ऋन्ये । वैयाकरणाः । अपरे । त एव मुख्याः पदे वर्णानामिव वाक्ये पदानाङ्कल्पितत्वात्तेषाम-र्थवत्त्वमपि काल्पनिकमिति वाक्यस्यैव शब्दत्वमिति तद्भावः । अन्येत्विति । वैशेषिकादयः । ध्वनिरिति । सच वर्णावर्णात्मकत्वेन द्विविधः एवञ्च क-ण्ठादिवच्छास्त्रमपि तस्य कारणमित्याशयः ॥



॥ वि॰ ॥ सङ्ग्रहो व्याडिकृतो लक्षश्लोकसङ्ख्यो ग्रन्थ इति प्रसिद्धिः । भाष्ये उभयथापीति । एवञ्च निष्फलोऽयं विचार इतिभावः साधुत्व-ज्ञानायोभयथापि शास्त्रमावश्यकमितितात्पर्यम् । अथ पाणिनिसूत्रव्याख्यानभूतं वार्त्तिकमवतारयति । कथम्पुनरिति । अत एवात्रैव पाणि-निनामग्रहणम् इतः पूर्वन्तु सवार्तिकशास्त्रान्वाख्यानप्रयोजनविषयप्रदर्शनपरो भाष्यकारस्यैव ग्रन्थ इतिबोध्यम् ॥

॥ कै॰ ॥ सङ्ग्रह इति । ग्रन्थविशेषे । कथम्पुनरिति । किमाचार्य्य एव स्रष्टा शब्दार्थसम्बन्धानामथ स्मर्त्तेतिप्रश्नः ॥

॥ भा॰ ॥ सङ्ग्रह एतत्प्राधान्येन परीक्षितम् नित्यो वा स्यात्कार्य्यो वेति तत्रोक्ता दोषाः प्रयोज-नान्यप्युक्तानि तत्राप्येष निर्णयः यद्येवन्नित्यः अथापि कार्य्यः उभयथापि लक्षणं प्रवर्त्यमिति कथ-म्पुनरिदम्भगवतः पाणिनेराचार्य्यस्य लक्षणम्प्रवृत्तम् ॥

॥ वि॰ ॥ शब्दार्थसम्बन्धानामिति । शब्दाश्चार्थाश्च सम्बन्धाश्चेति द्वन्द्वः एवञ्च किमपूर्वशब्दनिष्पादनद्वारार्थविशेषसम्बन्धनिष्पादकत्वं शास्त्रस्य किं वा सिद्धश-ब्दार्थसम्बन्धबोधकत्वमिति प्रश्नार्थ इतितात्पर्य्यम् । सिद्धे शब्दार्थसम्बन्ध इति वार्त्तिके समाहारद्वन्द्वात्सप्तमी सम्बन्धश्च प्रत्यासत्त्या शब्दार्थयोरेव त्रयाणामात्य-न्तिकाविश्लेषप्रदर्शनाय समाहारनिर्देश इतिबोध्यम् ॥

४४

॥ वि० ॥ व्यक्तिस्फोटेति । सा पदवाक्यरूपा नित्यैवेति तद्भावः एतच्चोपपादितम्प्राक् । कार्यशब्दिकानामिति । कार्यशाब्दिकानामिति-त्वपपाठः उत्तरपदवृद्धेर्दुर्लभत्वात् । असत्योपाधीति । जातिरूपेत्यर्थः जातिर्हि तन्मते आविद्यको धर्मविशेषः यद्वा सर्वेषान्धर्माणाम्ब्रह्मण्य-ध्यस्तत्वेन शुक्तिरजतादिज्ञाने शुक्त्यादीनां विशेष्यत्ववत्सर्वचाधिष्ठानभूतम्ब्रह्मैव विशेष्यम् विशेष्यमेवच द्रव्यमितिभावः । शब्दार्थयोर्नित्यत्वपक्षे तत्सम्बन्धस्य नित्य-

॥ कै० ॥ सिद्ध इति । तत्र नित्यशब्दो जातिस्फोटलक्षणो व्यक्तिस्फोटलक्षणो वा कार्यशब्दिकानामपि मते प्रवाहनि-त्यतया अर्थस्यापि जातिलक्षणस्य नित्यत्वम् द्रव्यपक्षे ऽपि सर्वशब्दानामसत्योपाधिव्यवच्छिन्नम्ब्रह्मतत्त्वं वाच्यमिति नित्यता

॥ भा० ॥ सिद्धे शब्दार्थसम्बन्धे सिद्धे शब्देऽर्थे सम्बन्धेचेति अथ
सिद्धशब्दस्य कः पदार्थः नित्यपर्यायवाची सिद्धशब्दः कथञ्ज्ञायते ॥

॥ कै० ॥ प्रवाहनित्यतया वा सम्बन्धस्य व्यवहारपरम्परयानादित्वान्नित्यता । सिद्धशब्दस्य नित्यानित्ययोर्दर्शनात्पृच्छति । अथेति । नित्येति । नित्यलक्षणस्यार्थस्य पर्यायेण वाचकस्तमेवार्थङ्कदाचिन्नित्यशब्द आह कदाचित् सिद्धशब्द इत्यर्थः ॥

॥ वि० ॥ त्वेऽप्यनित्यत्वपक्षे कथं सम्बन्धस्य नित्यत्वमत आह । सम्बन्धस्येति । प्रवाहनित्यतया तयोरिव तस्यापि नित्यत्वमितिभावः शब्दार्थयोस्सम्बन्धश्च शक्तिरूपस्तादात्म्यमेवेत्यन्यत्र प्रपञ्चितम् । भाष्ये सिद्धशब्दस्य कः पदार्थ इति । अत्र पदार्थशब्दो रूढः सिद्धशब्दसम्बन्धी कः पदार्थ इत्यर्थः ॥

४५

॥ वि० ॥ कूटस्थेष्विति । कूटमयोघनस्तद्वत्तिष्ठन्ति ये तेषु संसर्गिनाशेऽपि स्वयमनष्टेष्वित्यर्थः । नन्वयोघनस्यापि तर्हि नित्यत्वं स्यादत आह । अविचालिष्विति ।

॥ कै० ॥ कूटस्थेष्विति । अविनाशिषु । अविचालिष्विति । देशान्तरप्राप्तिरहितेषु । ननुचेति । सिद्धशब्दात्क्रियानिष्पन्नोऽप्यर्थोऽवगम्यत इत्यर्थः । सङ्गृह्ये तावदिति । तत्रहि किङ्कार्यश्शब्दोऽथ सिद्ध

॥ भा० ॥ यत्कूटस्थेष्वविचालिषु भावेषु वर्त्तते तद्यथा सिद्धा द्यौः सिद्धा पृथिवी सिद्धमाकाशमिति
ननुच भोः कार्य्येष्वपि वर्त्तते तद्यथा सिद्ध ओदनः सिद्धसूपः सिद्धा यवागूरिति यावता कार्य्येष्वपि
वर्त्तते तत्र कुत एतन्नित्यपर्य्यायवाचिनो ग्रहणम् न पुनः कार्य्ये यस्सिद्धशब्द इति सङ्गृह्ये तावत्
कार्यप्रतिद्वन्द्विभावान्मन्यामहे नित्यपर्यायवाचिनो ग्रहणमिति इहापि तदेव ॥

॥ कै० ॥ इति पक्षद्वयविचारः कृतः तत्र कार्य्यप्रतिपक्षाभिधायी सामर्थ्यात्सिद्धशब्द इतिस्थितम् तत्समान-
तन्त्रत्वादिहापि तथैव युक्तमित्यर्थः ॥

॥ वि० ॥ भाष्ये द्यावापृथिव्यादर्यपि व्यावहारिकनित्यत्वाभिप्रायेण दृष्टान्तितम् आकाशस्यापि व्यावहारिकनित्यत्वमेवाचार्याभिमतम् एवञ्च तत्र रूढत्वान्नि-त्यवाचकस्यैव ग्रहणमितिभावः ॥

॥ वि० ॥ ग्रन्थान्तरानालोचनेऽपि नियामकमाह । भाष्येऽथवेति । एतेन तत्समानतन्त्रत्वाद्यत्क्येकपदार्थवादोऽपि तव स्यादित्यपास्तम् । नन्वेकपदान्यपीत्युक्त्वाऽब्भक्ष इत्यस्य पदद्वयात्मकस्योदाहरणमसङ्गतमत आह । एवशब्देति । नियामकप्रत्यायकसामर्थ्यन्दर्शयति । इहापीति । कार्य्यवाचिन एव ग्रहणाभावे मूलमाह । कार्य्याणामिति । प्राक्प्रध्वंसयोरितिपाठः ॥

॥ कै० ॥ अथवेति । एवशब्दप्रयोगे द्विपदमवधारणम् द्योतकत्वेन एवशब्दस्यापेक्षणात् यदातु द्योतकमन्तरेण सामर्थ्यादवधारणङ्गम्यते तदा तदेकपदमित्युच्यते तत्र सर्व एवापो भक्षयन्तीत्यब्भक्षश्रुतिः सामर्थ्यान्नियममवगमयति । अप एवेति । इहापि नित्यानित्यव्यतिरेकेण राश्यन्तराभावात्सिद्धशब्दोपादानान्नियमोऽवगम्यते । सिद्ध एवेति । कार्य्याणान्तु पदार्थानाम्प्राक्प्रध्वंसावस्थयोस्सिद्धता नास्तीति न ते सिद्धा एव ॥

॥ भा० ॥ अथवा सन्त्येकपदान्यप्यवधारणानि तद्यथा अब्भक्षो वायुभक्ष इति अप एव भक्षयति वायुमेव भक्षयतीति गम्यते एवमिहापि सिद्ध एव न साध्य इति । अथवा पूर्वपदलोपोऽत्र द्रष्टव्यः ॥

॥ कै० ॥ अथवेति । कथम्पुनर्देवदत्तशब्दे सञ्ज्ञात्वेन विनियुक्ते एकदेशः प्रयुज्यते नह्यसौ सञ्ज्ञात्वेन विनियुक्तः नचैकदेशात्स्मर्य्यमाणस्य समुदायस्य वाचकत्वमुपपद्यते प्रतीयमानस्य प्रत्यायकत्वासम्भवादुच्चार्य्यमाणस्यैव वाचकत्वात् एवन्तर्ह्यनुनिष्पादिन्योऽवयवसरूपाः सञ्ज्ञा विनियोगकाले विनियुक्ता एव ॥

॥ वि० ॥ भाष्येऽप एवेति । गम्यत इतिवाक्ये इवसमासेऽपि सामर्थ्यात्तदतिरिक्तभक्षणाभावो गम्यत इत्यर्थः । अथवेति । मनुष्यदृष्ट्याद्यपेक्षयाकाशादीनामप्यत्यन्तसिद्धत्वमितिभावः । प्रतीयमानस्येति । एतदणुदित्सूत्रे उपपादयिष्यते । एवन्तर्हीति । एवमेव घटपदङ्कलशपर्य्याय इत्यादिप्रयोगाः अन्यथा पर्य्यायवाचीति प्रयोज्यं स्यात् ॥



॥ वि० ॥ विनापि प्रत्ययम्पूर्वोत्तरपदयोर्लोप इति लोपविधायकन्तर्हि किमर्थमत आह । लोपस्त्विति । वर्णानाम् द्वे इत्यादीनाम तत्रापि क्वचित्पूर्वपदस्यैव क्वचिदुत्तरपदस्यैव क्वचिदुभयोरिति लोकव्यवहारेण निर्णयम् एवं वर्णानां शक्यभावोऽपि तेनैव निर्णय इति तत्त्वम् । निष्पन्नत्वेति । विद्यमानकालसम्बन्धो निष्पन्नत्वम् ।

॥ कै० ॥ लोपस्तु वर्णानां साधुत्वम्माभूदित्यन्वाख्यायते इहापि नित्यानित्ययोर्निष्पन्नत्वाविशेषात्सिद्धश्रुतिरूपात्ता प्रकर्षङ्गमयति अत्यन्तसिद्ध इति । न्यायाद्वा नित्यत्वं शब्दादीनां स्थितमित्याह । अथवेति ।

॥ भा० ॥ अत्यन्तसिद्धः सिद्ध इति तद्यथा देवदत्तो दत्तः सत्यभामा भामेति अथवा व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणमिति नित्यपर्य्यायवाचिनो ग्रहणमिति व्याख्यास्यामः किम्पुनरनेन वर्ण्येन किन्न महता कण्ठेन नित्यशब्द एवोपात्तः यस्मिन्नुपादीयमानेऽसन्देहस्स्यात् मङ्गलार्थम् माङ्गलिक आचार्य्यो महतश्शास्त्रौघस्य मङ्गलार्थं सिद्धशब्दमादितः प्रयुङ्क्ते ॥

॥ कै० ॥ नहि सन्देहमात्रादलक्षणता भवति पुनः प्रमाणान्तरेण निश्चयोत्पादात् । वर्ण्येनेति । प्रयत्नव्याख्यातव्येनेत्यर्थः । अगर्हिताभीष्टार्थसिद्धिर्मङ्गलम् तत्प्रयोजन आचार्य्यो माङ्गलिकः ॥

॥ वि० ॥ ननु निर्युक्तिकं व्याख्यानमयुक्तं विपरीतस्यापि सम्भवादत आह । न्यायादेति । दृढव्यवहारादेव पदार्थसम्बन्धानान्नित्यत्वं सङ्ग्रहादौ स्थितमिति व्याख्यानतस्सिद्धशब्देन तदेवोपात्तमित्यर्थः । सिद्धिर्मङ्गलमिति । तस्या मङ्गलत्वञ्च कार्य्ये कारणरूपोपचारादितिबोध्यम् तत्प्रयोजनमस्येति प्राग्वतीयठञ् ॥

॥ वि॰ ॥ तत्र मङ्गलानुष्ठानप्रयोजनान्याह भाष्ये मङ्गलादीनीत्यादिना । ग्रन्थे तन्निबन्धनस्य फलमाह अध्येतारश्चेत्यादिना । आनुषङ्गिकमङ्गलसम्पत्त्येत्यर्थः । अध्ययननिर्वृत्तिः तत्समाप्तिः । सिद्धिः सिद्धिविषयोऽर्थः । मङ्गलार्थमित्यनेनेत एव वार्त्तिकप्रवृत्तिस्सूचिता असन्दिग्धो नित्यशब्दः किन्न प्रयुक्त इत्युक्तन्तचापि सन्देहमाह भाष्ये । अयङ्खल्विति । आभीक्ष्ण्येन बाहुल्येन अभीक्ष्णमितिपाठेऽप्येवमेवार्थः । प्रयुज्यन्त इति ।

॥ कै॰ ॥ प्रथन्त इति । अध्ययनस्याविच्छेदात् । वीरपुरुषाणीति । श्रोतॄणाम्परैरपराजयात् । आयुष्मत्पुरुषाणीति । शास्त्रानुष्ठाने धर्म्मोपचयादायुर्वर्द्धनात् ।

॥ भा॰ ॥ मङ्गलादीनि हि शास्त्राणि प्रथन्ते वीरपुरुषाणिच भवन्ति आयुष्मत्पुरुषाणिच अध्येतारश्च सिद्धार्था यथा स्युरिति अयङ्खल्वपि नित्यशब्दो नावश्यङ्कूटस्थेष्वविचालिषु भावेषु वर्त्तते किन्तर्ह्याभीक्ष्ण्येऽपि वर्त्तते तद्यथा नित्यप्रहसितो नित्यप्रजल्पित इति यावताऽऽभीक्ष्ण्येऽपि वर्त्तते तचाप्यनेनैवार्थस्स्यात् व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणमिति ॥

॥ कै॰ ॥ सिद्धार्था इति । अध्ययननिर्वृत्तिरेव तेषां सिद्धिः । नावश्यमिति । ततश्चाभीक्ष्ण्येन ये शब्दाः प्रयुज्यन्ते आगोपालाङ्गनन्तेषामेवान्वाख्यानं स्यात् न विरलप्रयोगाणाम् ॥

॥ वि॰ ॥ साक्षाच्छब्दे आभीक्ष्ण्यासम्भवात्प्रयोगद्वारा तद्ग्राह्यम् एवञ्च नित्यशब्दोपादानेऽपि सप्रयोजनकोऽन्यन्तरसम्भवेन तचापि सन्देह एवेतिभावः । नित्ये शब्दार्थसम्बन्धे इत्यस्य शब्दार्थसम्बन्धे ज्ञाते सति नित्यप्रयोगविषये शब्दे शास्त्रम्प्रवृत्तमित्यर्थस्स्यादितितात्पर्य्यम् ॥



॥ वि॰ ॥ नन्वाभीक्ष्ण्यवाचिनो नित्यं क्रियापदसाकाङ्क्षतया कथङ्केवलस्य प्रयोगोऽत आह । विनापिचेति । नन्वेवमर्थग्रहणं व्यर्थमत आह । द्रव्यपक्षे इति । योग्यताबोधजनकत्वयोग्यता तादात्म्यम् तदुक्तम्भाष्ये । नित्योह्यर्थवतामिति । शब्दानामित्यर्थः ननु तादात्म्यस्य सम्बन्धत्वे

॥ कै॰ ॥ विनापिच क्रियापदप्रयोगेणाभीक्ष्ण्यवृत्तिर्नित्यशब्दः प्रयुज्यते यथा आश्चर्य्यमनित्ये नित्यवीक्षयोरिति । अर्थसम्बन्धेचेति । द्रव्यपक्षे द्रव्यस्यानित्यत्वादर्थग्रहणं सम्बन्धविशेषणार्थमुपात्तमनित्येऽर्थे कथं सम्ब-

॥ भा॰ ॥ पश्यतित्वाचार्य्यो मङ्गलार्थश्च सिद्धशब्द आदितः प्रयुक्तो भवति शक्ष्यामि चैनन्नित्यपर्य्यायवाचिनं वर्णयितुमिति अतस्सिद्धशब्द एवोपात्तो न नित्यशब्दः अथ कम्पुनः पदार्थम्मत्वा एष विग्रहः क्रियते सिद्धे शब्देऽर्थे सम्बन्धेचेति आकृतिमित्याह कुत एतत् आकृतिर्हि नित्या द्रव्यमनित्यम् अथ द्रव्ये पदार्थे कथं विग्रहः सिद्धे शब्दे अर्थसम्बन्धेचेति नित्योह्यर्थवतामर्थैरभिसम्बन्धः अथवा द्रव्य एव पदार्थ एष विग्रहो न्याय्यः सिद्धे शब्देऽर्थे सम्बन्धेचेति ॥

॥ कै॰ ॥ न्धस्य नित्यतेतिचेत् योग्यतालक्षणत्वात्सम्बन्धस्य तस्याश्च शब्दाश्रयत्वाच्छब्दस्यच नित्यत्वाददोषः ॥

॥ वि॰ ॥ कथन्तस्य नित्यत्वमितिचेन्न नष्टभाविवस्तुनोऽपि शब्देन बोधाद्बौद्धार्थेन तस्य तादात्म्यन्नित्यमित्याशयात् शब्दवृत्तिधर्म्मस्यैवार्थवृत्तिधर्म्माभेदमापन्नस्य तादात्म्यत्वेनादोषाच्च । शब्दस्यच नित्यत्वादिति । आकाशवत्तन्निष्ठश्शब्दोऽपि नित्यः व्यञ्जकाभावात्तु न सर्वदोपलम्भ इतिभावः ॥

५०

॥ वि॰ ॥ ननु घटादिद्रव्यस्य कथन्नित्यतेत्यत आह । असत्येति । सच कम्बुग्रीवादिमदाकारादिरूपः तद्व्यङ्ग्यजातिरूपो वा । भाष्ये यद्याकृतिशब्देन तद्व्यङ्ग्यमुच्यते तर्हि तदप्याविद्यकत्वेन व्यञ्जकानित्यत्वेनचानित्यमित्याह । जातेरपीति । अनेनैतत्प्रकरणस्याकृतिपदस्य

॥ कै॰ ॥ द्रव्यं हि नित्यमिति । असत्योपाध्यवच्छिन्नं ब्रह्मतत्त्वन्द्रव्यशब्दवाच्यमित्यर्थः । आकृतिरि-

॥ भा॰ ॥ द्रव्यं हि नित्यम् आकृतिरनित्या कथं ज्ञायते एवं हि दृश्यते लोके मृत्कयाचि-
दाकृत्या युक्ता पिण्डो भवति पिण्डाकृतिमुपमृद्य घटिकाः क्रियन्ते घटिकाकृतिमुपमृद्य कुण्डि-
काः क्रियन्ते तथा सुवर्णङ्कयाचिदाकृत्या युक्तम्पिण्डो भवति पिण्डाकृतिमुपमृद्य रुचकाः क्रियन्ते
रुचकाकृतिमुपमृद्य कटकाः क्रियन्ते कटकाकृतिमुपमृद्य स्वस्तिकाः क्रियन्ते पुनरावृत्तस्सुवर्णपिण्डः
पुनरपरयाऽऽकृत्या युक्तः खदिराङ्गारसवर्णे कुण्डले भवतः आकृतिरन्याचान्याच भवति द्रव्यम्पुन-
स्तदेव आकृत्युपमर्द्देन द्रव्यमेवावशिष्यते आकृतावपि पदार्थ एष विग्रहो न्याय्यः सिद्धे शब्दे अर्थे
सम्बन्धेचेति ननुचोक्तमाकृतिरनित्येति नैतदस्ति नित्याऽऽकृतिः ॥

॥ कै॰ ॥ ति । संस्थानं ब्रह्मदर्शनेच गोत्वादिजातेरप्यसत्वादनित्यत्वम् । आत्मैवेदं सर्वमितिश्रुतिवचनात् ॥

॥ वि॰ ॥ व्यङ्ग्यव्यञ्जकोभयपरतां सूचयति गौतमेनाप्युक्तञ्जात्याकृतिव्यक्तयः पदार्थ इति । भाष्ये खदिराङ्गारसवर्णे कुण्डले भवत इतिप्रयोगादच्यन्ते विकृतेः कर्त्तृत्वं बोध्यम् आकृतिपदेन जातिरित्यभिप्रायेण भाष्ये आकृतावपि पदार्थ इति ॥

५१

॥ वि॰ ॥ क्वचिदुपरतेतिकृत्वा न सर्वत्रोपरतेत्यन्वयः । ननु परमो नाशश्चेत्तत्काले एवान्यत्र सत्त्वं विरुद्धमत आह । अनभीति । ननु परमार्थदृष्ट्या सर्वमनित्यमत आह । अद्वैतेनेति । नित्यत्वमिति । सर्वदा एकाकारपरामर्शदर्शनेन यावद्व्यवहारकालन्तस्या अपि ध्रुवादित्वेन नित्यत्वमितिभावः । अथावयवसंस्थानरूपाया जातिव्यञ्जिकाया आकृतेर्यावद्व्यवहारकालमध्ये मध्ये उत्पत्तौ नाशेऽपि प्रकारान्तरेण नित्यत्वमाह । भाष्येऽथवेति ।

॥ कै॰ ॥ न क्वचिदुपरतेति । अनभिव्यक्तेत्यर्थः अद्वैतेन लौकिकव्यवहाराभावात् व्यवहारेचाकृतेरेकाकारपरामर्श-
हेतुत्वान्नित्यत्वम् । अथवेति । असत्यत्वेऽपि तत्त्वतो लोकव्यवहाराश्रयणेन जातेर्नित्यत्वं साध्यते त्रिविधाचानित्यता
संसर्गानित्यता यथा स्फटिकस्य लाक्षाद्युपधाने स्वरूपतिरोधानेन पररूपप्रतिभासः उपधानापगमे स्वरूपप्रतिभासात्तु

॥ भा॰ ॥ कथम् न क्वचिदुपरतेतिकृत्वा सर्वत्रोपरता भवति द्रव्यान्तरस्थातूपलभ्यते अथवा नेद-
मेव नित्यलक्षणम् ध्रुवङ्कूटस्थमविचाल्यनपायोपजनविकार्य्यनुत्पत्त्यवृद्ध्यव्यययोगि यत्तन्नित्यमिति ॥

॥ कै॰ ॥ परिणामाभावः परिणामानित्यता यथा बदरीफलस्य श्यामतातिरोभावे लौहित्यस्याविर्भावः प्रध्वंसा-
नित्यता सर्वात्मना विनाशः एतत्त्रिविधानित्यताप्रतिक्षेपेण नित्यताम्प्रतिपादयितुमुक्तम् । ध्रुवमित्यादि । तत्र
ध्रुवङ्कूटस्थमिति संसर्गाऽनित्यता परिहृता अविचालीति परिणामाऽनित्यता अनपायेत्यादिना प्रध्वंसाऽनित्यता ॥

॥ वि॰ ॥ नित्यत्वलक्षणे ध्रुवपदस्यैव व्याख्यानङ्कूटस्थमिति रूपान्तरापत्तिर्विचालः यथा पयसो दध्यादिरूपता अनेन परिणामाऽनित्यता परास्ता उत्पत्तेः सत्तापर्यन्तत्वादनुत्पत्तीत्यनेन जन्मसत्तारूपौ भावविकारौ निरस्तौ अवृद्धीत्यनेन तृतीयो वृद्धिलक्षणः अनुपजनेतिचतुर्थः परिणामः अनपायेतिपञ्चमोऽपचयः एतद्रूपविकाररहितमितितदर्थः अव्ययेतिषष्ठो विनाशः इदञ्च ब्रह्मविषयन्नित्यत्वं यावद्व्यवहारमेकरूपस्थितपदार्थविषयञ्च ॥

॥ वि० ॥ अयमेव न नित्यशब्दार्थः प्रवाहाविच्छेदेऽताद्दृश्यपि नित्यत्वव्यवहारादित्याह भाष्ये । यस्मिंस्तत्त्वमिति । यस्मिन्विहतेऽपि तत्त्वं तद्धर्मः प्रवाहनित्यताचानेनोक्ता तन्नाशेऽपि तद्धर्मो न नश्यति आश्रयप्रवाहाविच्छेदादितिभावः । यन्नित्यमिति । व्यक्तिजात्याकृतीना-

॥ कै० ॥ यन्नित्यमिति । बुद्धिप्रतिभासः शब्दार्थो यदा यदा शब्द उच्चारितस्तदा तदार्थाकारा बुद्धिरुपजा-
यत इति प्रवाहनित्यत्वादर्थस्य नित्यत्वमित्यर्थः । लोकत इति । अन्यथा कार्य्येषु वस्तुषु लोकव्यवहारोऽन्यथा

॥ भा० ॥ तदपि नित्यम् यस्मिंस्तत्त्वन्न विहन्यते किम्पुनस्तत्त्वम् तस्य भावस्तत्त्वम् आकृतावपि
तत्त्वन्न विहन्यते अथवा किन्न एतेन इदन्नित्यमिदमनित्यमिति यन्नित्यन्तम्पदार्थम्मत्वा एष विग्रहः
क्रियते सिद्धे शब्दे अर्थे सम्बन्धेचेति कथम्पुनर्ज्ञायते सिद्धः शब्दः अर्थसम्बन्धश्चेति लोकतः यल्लोके-
ऽर्थमर्थमुपादाय शब्दान्प्रयुञ्जते नैषान्निर्वृत्तौ यत्नङ्कुर्वन्ति ये पुनः कार्य्या भावाः निर्वृत्तौ तावत् तेषां
यत्नः क्रियते तद्यथा घटेन कार्य्यङ्करिष्यन् कुम्भकारकुलङ्गत्वाह कुरु घटङ्कार्य्यमनेन करिष्या-
मीति न तद्वच्छब्दान्प्रयुयुक्षमाणो वैयाकरणकुलङ्गत्वाह कुरु शब्दान्प्रयोक्ष्य इति ॥

॥ कै० ॥ नित्येषु शब्दश्च व्यवहारोऽनादिरिद्धव्यवहारपरम्पराव्युत्पत्तिपूर्वक इति शब्दादीनान्नित्यत्वङ्घ-
टादयस्त्वर्थक्रियार्थिभिरन्यत आनीयन्ते उत्पादविनाशयुक्ताश्चोपलभ्यन्ते नैवं शब्दादयः ॥

॥ वि० ॥ म्मध्ये यन्नित्यमित्यर्थः । ननु शशशृङ्गादिपदार्थानाङ्कथन्नित्यत्वन्तेषां स्वरूपस्यैवाभावादत आह । बुद्धिप्रतिभास इति । वाह्यः पदार्थो न शाब्द-
बोधे विषयः किन्तु बौद्धः सच प्रवाहनित्य इतिभावः एतच्च मञ्जूषायां विस्तरेण निरूपितम् । शब्दादीनान्नित्यत्वमिति । व्याकरणनिष्पाद्यत्वमित्यर्थः ॥



॥ वि० ॥ तावत्येवेति । वैयाकरणकुलमगत्वैवेत्यर्थः । ननु सकृदन्वितस्य लोकत इत्यस्य पुनरर्थप्रयुक्ते इत्यनेनान्वयः कथम् । वार्त्तिकेचैकवाक्य-
तयैवान्वयः प्रतीयतेऽत आह । अत्रेति । अनाश्रित्येति । न्यूनतापरिहारायेत्यर्थः । लोकत इत्यस्यच लोकव्यवहारत इत्यर्थः । भाष्येऽर्थप्रयुक्त
इति । अर्थज्ञानप्रयोजनेन कृत इत्यर्थः । परस्य विशिष्टार्थबोधो भवत्विति शब्दः प्रयुज्यते । प्रयोगेणाविर्भूतशब्दज्ञानेनार्थज्ञानादितिभावः । एवम्प्राप्ते शब्दप्रयोगे शास्त्रे-

॥ कै० ॥ तावत्येवार्थमिति । बुद्ध्या वस्तु निरूप्येत्यर्थः । अत्र भाष्यकारेण सम्भवन्तीमप्येकवाक्यतामनाश्रित्य
वाक्यत्रयं स्थापितम् । सिद्धे शब्दार्थसम्बन्धे शास्त्रम्प्रवृत्तमित्येकं वाक्यम् । कथं ज्ञायत इति प्रश्ने लोकतो ज्ञायत इति
द्वितीयम् । लोकत इत्यस्याऽऽवृत्त्या लोकतोऽर्थप्रयुक्त इत्यादि तृतीयम् । शब्दप्रयोग इति । प्रयोगग्रहणेन प्रयो-

॥ भा० ॥ तावत्येवार्थमुपादाय शब्दान्प्रयुञ्जते यदि तर्हि लोक एषु शब्देषु प्रमाणङ्किं शास्त्रेण क्रियते ।
लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्म्मनियमः । लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्म्म नियमः
क्रियते । किमिदन्धर्म्मनियम इति । धर्म्माय नियमो धर्म्मनियमः । धर्म्मार्थो वा नियमो धर्म्मनियमः ।

॥ कै० ॥ गाद्यम्मो ननु ज्ञानमात्रादित्युक्तम्भवति अर्थेनात्मप्रत्यायनाय प्रयुक्तोऽर्थप्रयुक्तः । धर्माय नियम
इति । चतुर्थ्या तादर्थ्यं प्रतिपाद्यते सम्बन्धसामान्येतु षष्ठीं विधाय समासः कर्त्तव्यः चतुर्थीति समासस्य प्रकृतिवि-
कारभाव एव विधानात् । धर्म्मार्थ इति । धर्म्मार्थत्वान्नियम एव धर्म्मशब्देनाभिधीयते इति कर्म्मधारयसमासः ॥

॥ वि० ॥ गास्येयम्प्रकृतिरयम्प्रत्यय इत्यादिप्रकृत्यादिविभागज्ञानद्वारा गवादय एव प्रयुक्ता धर्म्मजनका न गाव्यादय इतिनियमः क्रियते इतितात्पर्य्यम् । विधा-
नादिति । तादर्थ्यस्य षष्ठ्यर्थत्वबोधनायत्वेवम्प्रयोग इतिभावः । चतुर्थीति । योगविभागो न भाष्यारूढः सुप्सुपेतिसमास इत्यप्यगतिकगतिरित्येवं व्याख्यातम् ॥

५४

॥ वि० ॥ द्वितीयपचात्तृतीये विशेषं दर्शयति । लिङादीति । प्रभाकराङ्गीकृतमतेनेदम् । तन्मते हि लिङादीनामपूर्वरूपङ्कार्यं वाच्यम् । तदेवच स्वस्मिन्पुरुषम्प्रयुञ्जानन्नियोग इत्युच्यते स एव धर्म्मस्तेन प्रयुज्यते आचिप्यत इति कर्म्मल्युडन्तः प्रयोजनशब्दः सचासाधुनिवृत्तिरूपो नियमः धर्म्मप्रयोजन इति षष्ठीसमासः । एवञ्च द्वितीये धर्म्मफलको नियम इत्यर्थः । तृतीये धर्म्मप्रयोज्य इत्यर्थ इतिभेदः । केचित्तु धर्म्माय नियम इत्यनेन प्रत्यवायपरिहारधर्म्मायायं नियमः । असाधुप्रयोगेऽधर्म्मोत्पत्तेः । धर्म्मार्थो नियम इत्यनेन धर्म्मस्य यज्ञादेरङ्गभूत इत्यर्थः । नान्ततं वदेदिति क्रत्वङ्गवाक्येन क्रतुवैगुण्य-

॥ कै० ॥ धर्म्मप्रयोजन इति । लिङादिविषयेण नियोगाख्येन धर्म्मेण प्रयुक्त इत्यर्थः । प्रियतद्धिता इति ।
नायमपशब्दः किन्तु ये लोकवेदयोर्भवा अवयवास्ते लोकवेदशब्दाभ्यामभिधातुं शक्यन्ते

॥ भा० ॥ धर्म्मप्रयोजनो वा नियमो धर्म्मनियमः । यथा लौकिकवैदिकेषु । प्रियतद्धिता
दाक्षिणात्या यथा लोकवेदयोरिति प्रयोक्तव्ये यथा लौकिकवैदिकेष्विति प्रयुञ्जते ॥

॥ कै० ॥ आधाराधेयकल्पनयातु तद्धितप्रयोगः प्रियतद्धितत्वनिमित्तः । यथा कश्चिद्वनस्पतय इति प्रयुङ्क्ते
कश्चिद्वानस्पत्यमिति समूहप्रत्ययान्तम् ॥

॥ वि० ॥ बोधनात् धर्म्मप्रयोजनो नियम इत्यनेनैकशब्द इति श्रुतेर्नियमाद्दृष्टम्पुरुषार्थकरं सूचितमित्याहुः । नन्वीदृशो धर्म्मनियमः क्व दृष्टोऽत आह भाष्ये । यथेति । ननु लोकवेदयोरित्येव सिद्धे तद्धितनिर्देशोऽयुक्तोऽत आह । प्रियतद्धिता इति । नन्वन्यार्थेऽन्यशब्दप्रयोगेऽपशब्दत्वं स्यादत आह । नायमिति । ते लोकवेदेति । अवयवे समुदायशब्दप्रयोगदर्शनादितिभावः । आधाराधेयकल्पनयात्विति । लोकरूपसमुदायतदवयवयोरित्यादिः ॥

५५

॥ वि० ॥ नाचावयवावयविविभाग इति । तत्र भव इत्यादिव्यवहारप्रयोजको विभागारोपोऽवयवावयविनोर्नेत्यर्थः । कृतान्तेषु । कृतान्तः सिद्धान्तः तत्प्रतिपादकवाक्येष्वित्यर्थः । भक्ष्यञ्च नामेत्यस्य तद्भवति यदितिशेषः । शक्यं चुदिति सामानाधिकरण्यङ्कथं भिन्नलिङ्गत्वादत आह । शकेरिति ।

॥ कै० ॥ अथवेति । नाचावयवावयविविभागः किन्तर्हि वेदलोकव्यतिरिक्तसिद्धान्तशब्दार्थो भवरूप इ-
त्यर्थः । लौकिकः स्मृत्युपनिबद्धः वैदिकः श्रुत्युपनिबद्धः । शक्यञ्चानेनेति । शकेः कर्म्मसामान्ये लिङ्गस-
र्वनामनपुंसकयुक्ते कृत्यप्रत्ययः

॥ भा० ॥ अथवा युक्त एवाच तद्धितार्थः । यथा लौकिकेषु वैदिकेषुच कृतान्तेषु । लोके तावत्
अभक्ष्यो ग्राम्यकुक्कुटः अभक्ष्यो ग्राम्यसूकर इत्युच्यते भक्ष्यञ्च नाम क्षुत्प्रतिघातार्थमुपादीयते
शक्यञ्चानेन श्वमांसादिभिरपि क्षुत्प्रतिहन्तुम् तच नियमः क्रियते इदम्भक्ष्यमिदमभक्ष्यमिति ॥

॥ कै० ॥ ततश्शब्दान्तरसम्बन्धादुपजायमानमपि क्लीवत्वं बहिरङ्गत्वादन्तरङ्गं संस्कारं न बाधत इति शक्यं
क्षुदित्युक्तम् यदातु पूर्वमेव विशेषविवक्षा तदा शक्या क्षुदितिभवत्येव यदातु प्रतिघातस्यैव क्षुत्कर्म्म शकेस्तु
प्रतिघातः तदा क्षुधम्प्रतिहन्तुं शक्यमिति भवति ॥

॥ वि० ॥ तदा क्षुधमिति । ननु प्रधानक्रियानिरूपितशक्तेरभिधाने गुणक्रियानिरूपितशक्तेरनभिहिताया अभिहितवत्प्रकाशस्य स्वादुमिणमुलित्यत्र वक्ष्यमाणत्वेन कथमेतदितिचेन्न प्रधानतिङन्तार्थक्रियानिरूपितशक्तेरेवायं स्वभावो यत्स्वसमानाधिकरणगुणशक्तेरभिहितवत्प्रकाश इत्यभिमानात् वस्तुत इदमयुक्तमेवेतिस्वादुमीत्यत्र निरूपयिष्यामः ॥

॥ वि० ॥ खेद इति । एवञ्च ग्राम्यकुक्कुटपरदारादौ विशेषनिषेधस्येतराभ्यनुज्ञाफलकतया आरण्यतद्भक्षणस्वदारगमनयोर्यथा दोषाभावो यथाच ग्राम्यकुक्कुटभक्षणपरदारगमनयोरधर्म्मस्तथा शास्त्रजनितज्ञानपूर्वके गवादिप्रयोगेऽपूर्वोत्पत्तिरूपं फलं शास्त्रेण बोध्यते तेषां साधुत्वबोधनात्

॥ कै० ॥ खेदादिति । खेदयतीति खेदो रोगः । इन्द्रियनियमासामर्थ्यं वा खेदः । पयोव्रत इति ।

॥ भा० ॥ तथा खेदात्स्त्रीषु प्रवृत्तिर्भवति समानश्च खेदविगमो गम्यायामगम्यायाञ्च तत्र नियमः क्रियते इयङ्गम्या इयमगम्येति । वेदे खल्वपि पयोव्रतो ब्राह्मणः यवागूव्रतो राजन्यः आमिक्षाव्रतो वैश्य इत्युच्यते व्रतञ्च नाम अभ्यवहारार्थम् उपादीयते शक्यञ्चानेन शालिमांसादीन्यपि व्रतयितुम् तत्र नियमः क्रियते । तथा वैल्वः खादिरो वा यूपस्स्यादित्युच्यते यूपश्च नाम पश्वनुबन्धार्थमुपादीयते शक्यञ्चानेन यत्किञ्चिदेवकाष्ठमुच्छ्रित्यानुच्छ्रित्य वा पशुरनुबन्धुं तत्र नियमः क्रियते । तथाग्नौ कपालान्यधिश्रित्याभिमन्त्रयते । भृगूणामङ्गिरसां धर्म्मस्य तपसा तप्यध्वमिति अन्तरेणापि मन्त्रमग्निर्दहनकर्म्मा कपालानि सन्तापयति तत्र नियमः क्रियते ॥

॥ कै० ॥ सत्यामर्थितायां पय एव व्रतयतीति नियमोऽयं नतु विधिः । अर्थित्वाभावे कारणाभावात् ॥

॥ वि० ॥ अर्थादपशब्दानामधर्म्मजनकत्वं बोध्यते । एकविधेस्तदितरनिषेधफलकत्वात् । यथैकनिषेधस्यापराभ्यनुज्ञाफलकत्वमितिभावः दृष्टान्ततात्वंशेन वक्ष्यमाणवैदिकानान्तु सर्वांशेनेतिबोध्यम् । व्रतयतीति । अभ्यवहार्य्यत्वेनोपादत्ते इत्यर्थः । भाष्ये उच्छ्रित्यानुच्छ्रित्य वेति । सन्तक्ष्यासन्तक्ष्य वेत्यर्थः । निखन्यानिखन्य वेत्यर्थ इत्यन्ये ॥



॥ वि० ॥ ननु अपभ्रंशा न वाचकाः वाच्यप्रतीत्यन्यथानुपपत्त्या कल्प्यमानशक्तेश्शिष्टप्रयुक्तसंस्कृतेष्वेव कल्पनात् तदनुसारेणैवचापभ्रंशानां साधुस्मरणेन बोधकत्वोपपत्तेः समानायामित्यनुपपन्नमिति शङ्कते । यद्यपीति । तथापीति । एवञ्च वाचकत्वाभावेऽप्यर्थप्रत्यायकत्वाविशेषेण समानायामित्युक्तम् । निरूढिमागता इति । तेच शक्तिभ्रमेण बोधका इति भावः शक्तिभ्रमश्चेत्थम् केनचिद्गावीतिप्रयुक्ते गौरितिसाधुशब्दस्मरणात्प्रयोज्यस्य बोधेऽपि तटस्थस्य गावीशब्दादेवास्य गोबोध इतिभ्रमस्तन्मूलकोऽन्येषामपि भ्रम इति । वस्तुतो विनिगमनाविरहाद्भाषाशब्देष्वपि शक्तिरेवेत्याह । अन्येत्विति ।

॥ कै० ॥ समानायामिति । यद्यपि साक्षादपभ्रंशा न वाचकास्तथापि स्मर्य्यमाणसाधुशब्दव्यवधानेनार्थम्प्रत्याययन्ति । केचिच्चापभ्रंशाः

॥ भा० ॥ एवं क्रियमाणमभ्युदयकारि भवतीति । एवमिहापि समानायामर्थगतौ शब्देनचापशब्देनच तत्र धर्म्मनियमः क्रियते शब्देनैवार्थोऽभिधेयो नापशब्देनेति । एवं क्रियमाणमभ्युदयकारि भवतीति ॥

॥ कै ॥ परम्परया निरूढिमागताः साधुशब्दानस्मारयन्त एवार्थम्प्रत्याययन्ति । अन्येतु मन्यन्ते साधुशब्दवदपभ्रंशा अपि साक्षादर्थस्य वाचका इति ॥

॥ वि० ॥ साधुत्वञ्चैतन्मते शब्दगतधर्म्मसाधनतावच्छेदकं वैजात्यमेव यद्यपि साधूनेव भाषेतेति न श्रूयते तथापि फलनिर्द्देशवाक्ये तन्निर्द्देशादेवेदृशविधिः कल्प्यते तत्र के साधव इत्याकाङ्क्षायामेत एव साधव इति व्याकरणेन प्रतिपादनात्तद्द्वारा शास्त्रेण धर्म्मनियमो विधीयते इति बोध्यम् । भाष्ये शब्देनैवेति । साधुनैवेत्यर्थः । एवं क्रियमाणमिति । शास्त्रज्ञानपूर्वकमुच्चार्य्यमाणमित्यर्थः ॥

५६

॥ वि० ॥ खेद इति । एवञ्च ग्राम्यकुक्कुटपरदारादौ विशेषनिषेधस्येतराभ्यनुज्ञाफलकतया आरण्यतद्भक्षणस्वदारगमनयोर्यथा दोषाभावो यथाच ग्राम्यकुक्कुटभक्षणपरदारगमनयोरधर्म्मस्तथा शास्त्रजनितज्ञानपूर्वके गवादिप्रयोगेऽपूर्वोत्पत्तिरूपं फलं शास्त्रेण बोध्यते तेषां साधुत्वबोधनात्

॥ कै० ॥ खेदादिति । खेदयतीति खेदो रोगः । इन्द्रियनियमासामर्थ्यं वा खेदः । पयोव्रत इति ।

॥ भा० ॥ तथा खेदात्स्त्रीषु प्रवृत्तिर्भवति समानश्च खेदविगमो गम्यायामगम्यायाञ्च तत्र नियमः क्रियते इयङ्गम्या इयमगम्येति । वेदे खल्वपि पयोव्रतो ब्राह्मणः यवागूव्रतो राजन्यः आमिक्षाव्रतो वैश्य इत्युच्यते व्रतञ्च नाम अभ्यवहारार्थम् उपादीयते शक्यञ्चानेन शालिमांसादीन्यपि व्रतयितुम् तत्र नियमः क्रियते । तथा बैल्वः खादिरो वा यूपस्स्यादित्युच्यते यूपश्च नाम पश्वनुबन्धार्थमुपादीयते शक्यञ्चानेन यत्किञ्चिदेवकाष्ठमुच्छ्रित्यानुच्छ्रित्य वा पशुरनुबन्धुं तत्र नियमः क्रियते । तथाग्नौ कपालान्यधिश्रित्याभिमन्त्रयते । भृगूणामङ्गिरसां धर्म्मस्य तपसा तप्यध्वमिति अन्तरेणापि मन्त्रमग्निर्दहनकर्म्मा कपालानि सन्तापयति तत्र नियमः क्रियते ॥

॥ कै० ॥ सत्यामर्थितायां पय एव व्रतयतीति नियमोऽयं नतु विधिः । अर्थित्वाभावे कारणाभावात् ॥

॥ वि० ॥ अर्थादपशब्दानामधर्म्मजनकत्वं बोध्यते । एकविधेस्तदितरनिषेधफलकत्वात् । यथैकनिषेधस्यापराभ्यनुज्ञाफलकत्वमितिभावः दृष्टान्ततात्वंशेन वक्ष्यमाणवैदिकानान्तु सर्वांशेनेतिबोध्यम् । व्रतयतीति । अभ्यवहार्य्यत्वेनोपादत्ते इत्यर्थः । भाष्ये उच्छ्रित्यानुच्छ्रित्य वेति । सन्तक्ष्यासन्तक्ष्य वेत्यर्थः । निखन्यानिखन्य वेत्यर्थ इत्यन्ये ॥

५७

॥ वि० ॥ ननु अपभ्रंशा न वाचकाः वाच्यप्रतीत्यन्यथानुपपत्त्या कल्प्यमानशक्तेश्शिष्टप्रयुक्तसंस्कृतेष्वेव कल्पनात् तदनुसारेणैवचापभ्रंशानां साधुस्मरणेन बोधकत्वोपपत्तेः समानायामित्यनुपपन्नमिति शङ्कते । यद्यपीति । तथापीति । एवञ्च वाचकत्वाभावेऽप्यर्थप्रत्यायकत्वाविशेषेण समानायामित्युक्तम् । निरूढिमागता इति । तेच शक्तिभ्रमेण बोधका इति भावः शक्तिभ्रमश्चेत्थम् केनचिद्गावीतिप्रयुक्ते गौरितिसाधुशब्दस्मरणात्प्रयोज्यस्य बोधेऽपि तटस्थस्य गावीशब्दादेवास्य गोबोध इतिभ्रमस्तन्मूलकोऽन्येषामपि भ्रम इति । वस्तुतो विनिगमनाविरहाद्भाषाशब्देष्वपि शक्तिरेवेत्याहु । अन्येत्विति ।

॥ कै० ॥ समानायामिति । यद्यपि साक्षादपभ्रंशा न वाचकास्तथापि स्मर्य्यमाणसाधुशब्दव्यवधानेनार्थम्प्रत्याययन्ति । केचिच्चापभ्रंशाः

॥ भा० ॥ एवं क्रियमाणमभ्युदयकारि भवतीति । एवमिहापि समानायामर्थगतौ शब्देनचापशब्देनच तत्र धर्म्मनियमः क्रियते शब्देनैवार्थोऽभिधेयो नापशब्देनेति । एवं क्रियमाणमभ्युदयकारि भवतीति ॥

॥ कै ॥ परम्परया निरूढिमागताः साधुशब्दानस्मारयन्त एवार्थम्प्रत्याययन्ति । अन्येतु मन्यन्ते साधुशब्दवदपभ्रंशा अपि साक्षादर्थस्य वाचका इति ॥

॥ वि० ॥ साधुत्वञ्चैतन्मते शब्दगतधर्म्मसाधनतावच्छेदकं वैजात्यमेव यद्यपि साधूनेव भाषेतेति न श्रूयते तथापि फलनिर्द्देशवाक्ये तन्निर्द्देशादेवेष्टशविधिः कल्प्यते तत्र के साधव इत्याकाङ्क्षायामेत एव साधव इति व्याकरणेन प्रतिपादनात्तद्द्वारा शास्त्रेण धर्म्मनियमो विधीयते इति बोध्यम् । भाष्ये शब्देनैवेति । साधुनैवेत्यर्थः । एवं क्रियमाणमिति । शास्त्रज्ञानपूर्वकमुच्चार्य्यमाणमित्यर्थः ॥

५८

॥ वि॰ ॥ अस्त्यप्रयुक्त इत्यादेः प्रकृतोपयोगमाह । प्रयोगमूलत्वादिति । लोकतोऽर्थप्रयुक्ते शब्दयोगे शास्त्रेण धर्म्मनियम इत्यनेन प्रयुक्तेष साध्वसाधुषु प्रयुक्तसाध्वन्वाख्यानेन तेषु धर्म्मः प्रयुक्तासाधुष्वधर्म्म इत्यर्थकेनेदं सूचितम् । एवञ्चाप्रयुक्तानामप्रयोगेणैवासाधुत्वानुमानादसाधूनाम-प्यनेनान्वाख्यानादप्रामाण्यमितिभावः । वार्त्तिकोक्तनियमानुपपत्तिश्चेत्यपि बोध्यम् । भाष्ये किमत इति ।

॥ कै॰ ॥ अस्त्यप्रयुक्त इति । प्रयोगमूलत्वादस्याः स्मृतेरप्रयुक्तानामन्वाख्यानादप्रामाण्यमाशङ्कते यथा घटादीनां विनाप्यर्थक्रियया

॥ भा॰ ॥ अस्त्यप्रयुक्तः । सन्ति वै शब्दा अप्रयुक्ताः । तद्यथा । ऊष तेर चक्र पेचेति । किमतो यत्सन्त्यप्रयुक्ताः प्रयोगाद्धि भवान् शब्दानां साधुत्वमध्यवस्यति य इदानीमप्रयुक्ताः नामी साधवः स्युः । इदं विप्रतिषिद्धम् । यदुच्यते सन्ति वै शब्दा अप्रयुक्ता इति यदि सन्ति नाप्रयु-क्ताः अथाप्रयुक्ता न सन्ति सन्तिचाप्रयुक्ताश्चेति विप्रतिषिद्धम् । प्रयुञ्जान एव हि खलु भवान् आह सन्ति शब्दा अप्रयुक्ता इति ॥

॥ कै॰ ॥ सत्त्वङ्गम्यते नैवं शब्दानां ते हि सर्वदा व्यवहाराय प्रयुज्यमानासन्तस्सत्त्वेनावसीयन्त इत्याह । इदमिति ॥

॥ वि॰ ॥ अप्रयुक्तसत्त्वं नास्माकमनिष्टं साधुमाचार्यत्वाद्व्याकरणस्येत्यर्थः । उत्तरम् । प्रयोगादिति । तथाचाप्रयोगादसाधुत्वानुमानमितिभावः । विप्रति-षिद्धमुपपादयति । यथेति । एवञ्च सत्त्वे प्रयोग आवश्यक एव अप्रयोगेच सत्त्वमेव न स्यादिति भावः । ननु लक्षणवशेन सत्त्वङ्केनाप्यप्रयोगाच्चाप्रयुक्तत्वमिति न विरोधोऽतो भाष्ये । प्रयुञ्जान एवेति ॥

५९

॥ वि॰ ॥ ननु मया प्रयुक्तश्चेत्किम् तत्र सोपहासमाह । कश्चेदानीमिति । स्वयमेव प्रयोगङ्कृत्वा सन्तिचाप्रयुक्ता इत्यादीनां शब्दानां प्रयोग साधुर्योग्यस्स्यादित्यर्थः । त्वत्प्रयोगेणैव प्रयुक्तत्वावगमेऽप्रयुक्तत्वोक्तिर्विरुद्धेतिभावः ।

॥ कै॰ ॥ कश्चेदानीमित्युपहासपरम् । उत्तरन्त शास्त्रदृष्ट्या प्रकृतिप्रत्ययादिसद्भावादनुमितिसत्त्वात् व्यवहारेतु न दृश्यन्त इत्युक्तम् ।

॥ भा॰ ॥ कश्चेदानीमन्यो भवज्जातीयकः पुरुषः शब्दानाम्प्रयोगे साधुः स्यात् । नैतद्विप्रतिषिद्धम् । सन्तीति तावद्ब्रूमः यदेताञ्छास्त्रविदः शास्त्रेणानुविदधते अप्रयुक्ता इति ब्रूमः यल्लोकेऽप्रयुक्ता इति । यदप्युच्यते कश्चेदानीमन्यो भवज्जातीयकः पुरुषश्शब्दानाम्प्रयोगे साधुस्स्यादिति । न ब्रूमोऽस्माभिरप्रयुक्ता इति कथं तर्हि लोकेऽप्रयुक्ता इति । ननु भवानप्यभ्यन्तरो लोके । अभ्यन्तरोऽहं लोके नत्वहं लोकः ॥

॥ कै॰ ॥ नत्वहं लोक इति । यथा लोकोऽर्थावगमाय शब्दान्प्रयुङ्क्ते नैवमयैतेऽर्थे प्रयुक्ता अपितु स्वरूपपदार्थका इत्यर्थः ॥

॥ वि॰ ॥ ननु लोकान्तर्भूतस्य नत्वहं लोक इतिवचो विरुद्धमत आह । यथेति । अर्थबोधाय शब्दान्प्रयुञ्जानो हि मम लोकत्वेनाभिमत इत्यर्थः ॥

॥ वि० ॥ भाष्येऽर्थे शब्दप्रयोगादिति । अर्थविषयकज्ञानाय शब्दप्रयोगादित्यर्थः । तदाशयमाह । अर्थसद्भाव इति । भाष्ये प्रयोगान्यत्वादिति । प्रयुज्यत इति प्रयोगः शब्दः सोऽन्यो यस्यार्थस्यास्ति तत्त्वादित्यर्थः । सर्वनाम्नः परनिपातः पूर्वनिपातप्रकरणानित्यत्वात् । पदान्तरसहित इति । पदान्तरं क्व यूयमिति तत्र क्तेत्यनेन साधनपारोक्ष्यं निष्ठया भूतत्वङ्कर्तृत्वञ्च यूयमित्यनेन मध्यमपुरुषबोध्यमाभिमुख्यं चेतनत्वं वा बहुत्वञ्च वसेः साचान्नत्यर्थाकर्म्मकेत्यत्र निर्द्दिशात्तरतेर्गत्यर्थत्वात्कर्त्तरि क्तः । नन्वाख्याते क्रियाविशेष्यको बोधोऽत्र च कर्तृविशेष्यक इति कथं लिङन्तसमानार्थत्वमितिचेन्न । विषयता-

॥ कै० ॥ अर्थे शब्दप्रयोगादिति । अर्थसद्भावश्शब्दसद्भावे लिङ्गं नहि विना शब्देनार्थप्रत्यायनमुपपद्यते । इतरोऽन्यथासिद्धत्वमाह । अप्रयोग इति । यतोऽन्ये तेषामर्थानां सन्ति वाचकाः ततो नैषामनुमानमुपपद्यते । यद्यप्यूषेत्यस्योषिता

॥ भा० ॥ अस्त्यप्रयुक्त इतिचेन्नार्थे शब्दप्रयोगात् । अस्त्यप्रयुक्त इतिचेत्तन्न । किङ्कारणम् ।
अर्थे शब्दप्रयोगात् । अर्थे शब्दाः प्रयुज्यन्ते । सन्तिचैषां शब्दानामर्थाः येष्वर्थेषु प्रयुज्यन्ते ।
अप्रयोगः प्रयोगान्यत्वात् । अप्रयोगः खल्वप्येषां शब्दानां न्याय्यः । कुतः । प्रयोगान्यत्वात् ।
यदेतेषां शब्दानामर्थेऽन्यान्प्रयुञ्जते । तद्यथा । ऊषेत्यस्य शब्दस्यार्थे क्व यूयमुषिताः । तेरेत्यस्यार्थे क्व यूयन्तीर्णाः । चक्रेत्यस्यार्थे क्व यूयं कृतवन्तः । पेचेत्यस्यार्थे क्व यूयं पक्ववन्त इति ॥

॥ कै० ॥ इति समानार्थो न भवति परोक्षतादेर्विशेषस्यानवगमात् तथापि तत्प्रत्यायनाय पदान्तरसहितः प्रयुज्यते ॥

॥ वि० ॥ विशेषानादरेण तथोक्तेः । नचाख्याते क्रियाविशेष्यकबोधे पक्ष्यति भवति अपाचीद्भवतीति भूवादिसूत्रस्थभाष्यप्रयोगविरोधः अतीतानागतपाककर्तृकसत्ताया वर्त्तमानत्वासङ्गतेरितिवाच्यम् । वर्त्तमानसामीप्ये तत्र लटस्सत्त्वात् । तरति ब्रह्महत्यां योऽश्वमेधेन यजते इत्यादौ यत्कर्तृको यागस्तत्कर्तृकं तरणमितिबोधः । अत एव ह्रस्वो नपुंसक इतिसूत्रे रमते ब्राह्मणकुलमिति क्रियाप्रधानमितिभाष्ये उक्तम् ॥



॥ वि० ॥ नन्वप्रयुक्तानुशासने निर्मूलत्वाच्छास्त्रस्याप्रामाण्यं स्यादत आह । सम्प्रतीति । पाणिनेर्व्याकरणप्रणयनकाल इत्यर्थः । पूर्वप्रयोगसत्ता च व्याकरणप्रणयनादेवानुमीयते इतिभावः । इदमपि यत्र भाष्यवार्त्तिककाराभ्यामप्रयुक्तत्वन्नोक्तं तदभिप्रायकमनुमानं बोध्यम् । वार्षशतिकानीति । वर्षशब्दो दिवसपरः यथाश्रुत एव वा । आहरति । सामग्र्यभावादितिभावः । ननु सत्राणां बहुयजमानकानामृषिभिर्वशिष्ठादिभिस्सम्प्रदीय-

॥ कै० ॥ सम्प्रत्यप्रयुज्यमानानामपि पूर्वम्प्रयुक्तत्वादनुशासनङ्कर्त्तव्यमत आहाप्रयुक्ते इति । ऋषिसम्प्रदाय इति । वेदाध्ययनमित्यर्थः ॥

॥ भा० ॥ अप्रयुक्ते दीर्घसत्त्रवत् । यद्यप्रयुक्ताः अवश्यं दीर्घसत्त्रवल्लक्षणेनानुविधेयाः । तद्यथा ।
दीर्घसत्त्राणि वार्षशतिकानि वार्षसहस्रिकाणि च नचाद्यत्वे कश्चिदप्याहरति केवलमृषिसम्प्रदायो धर्म्म इतिकृत्वा याज्ञिकाश्शास्त्रेणानुविदधते । सर्वे देशान्तरे । सर्वे खल्वप्येते शब्दा देशान्तरेषु प्रयुज्यन्ते नचैवोपलभ्यन्ते । उपलब्धौ यत्नः क्रियताम् । महाञ्छब्दस्य प्रयोगविषयः । सप्तद्वीपा वसुमती त्रयो लोकाश्चत्वारो वेदास्साङ्गास्सरहस्या बहुधा भिन्ना एकशतमध्वर्युशाखाः

॥ कै० ॥ सर्व इति । इदमत्र तात्पर्य्यम् । यस्य कस्यचिद्वचनात्प्रयोगाप्रयोगौ न व्यवतिष्ठेते अपितु शिष्टानामेव वचनात् ॥

॥ वि० ॥ मानत्वाभावादृषिसम्प्रदाय इत्ययुक्तमत आह । वेदेति । भाष्ये कृत्वेत्यनन्तरमधीयत इति शेषः । याज्ञिकाश्च कल्पसूत्रेणान्वाचचत इत्यर्थः । अत्र सत्राणाङ्कर्मत्वम् । अनुपलब्ध्या चाप्रयुक्तत्वं शङ्कते भाष्ये । नचैवेति । इतरलोकापेक्षया वसुमत्यां शब्दबाहुल्यात्तस्याः पृथग्ग्रहणम् अनेनान्यपातालपर्यन्तसङ्ग्रहः । त्रयो लोकाः स्वस्त्वेनोपरितनसकलसङ्ग्रहः । रहस्यमुपनिषद् मन्वादिस्मृतयो वा वेदनिगूढार्थप्रकाशकत्वात् । एवञ्च देशान्तरशब्दश्शास्त्रान्तरवेदान्तरोपलक्षक इतिबोध्यम् ॥

॥ वि॰ ॥ भाष्ये हम्मतिरित्यत्र रंहतिरित्यत्रच गतिकर्म्मेत्यनुकर्षः । दातिर्लवनार्थ इति । क्तिन्नन्तं क्तिजतं वा लवनेऽर्थे दातिशब्दम्माच्याः

॥ कै॰ ॥ वाकोवाक्यशब्देनोक्तिप्रत्युक्तिरूपो ग्रन्थ उच्यते । यथा किंस्विदावपनम्महत् भूमिरावपनम्महदिति ।

॥ भा॰ ॥ सहस्रवर्त्मा सामवेदः एकविंशतिधा बाह्वृच्यम् नवधाथर्वणो वेदः वाकोवाक्यम् इतिहासः पुराणम् वैद्यकमित्येतावाञ्छब्दस्य प्रयोगविषयः एतावन्तं शब्दस्य प्रयोगविषयमननुनिशम्य सन्त्यप्रयुक्ता इतिवचनङ्केवलं साहसमात्रमेव । एतस्मिंश्चातिमहति शब्दस्य प्रयोगविषये ते ते शब्दास्तत्र तत्र नियतविषया दृश्यन्ते । तद्यथा । शवतिर्गतिकर्म्मा कम्बोजेष्वेव भाषितो भवति विकार एवैनमार्या भाषन्ते शव इति । हम्मतिस्सुराष्ट्रेषु रंहतिः प्राच्यमध्यमेषु गमिमेवत्वार्य्याः प्रयुञ्जते । दातिर्लवनार्थे प्राच्येषु दात्रमुदीच्येषु । येचाप्येते भवतोऽप्रयुक्ता अभिमताश्शब्दास्तेषामपि प्रयोगो दृश्यते । क्व वेदे तद्यथा सप्तास्मे रेवतीरेव दूष यद्वो रेवती रेवत्यान्तमूष ॥

॥ कै॰ ॥ पूर्वचरितसङ्कीर्त्तनमितिहासः । वंशाद्यनुकीर्त्तनम्पुराणम् । विकार इति । जीवतो मृतावस्था विकारः । तत्रेत्यर्थः ॥

॥ वि॰ ॥ प्रयुञ्जते तत्रार्थे दात्रशब्दमुदीच्या इत्यर्थः ॥



॥ वि॰ ॥ वार्त्तिकोक्तो धर्म्मनियमः श्रुतिसिद्धस्तस्यामुभयोश्श्रवणात्प्रश्न इत्याह । एकश्शब्द इति । तत्र यद्देकस्मादपूर्वन्तदेतरत्तदर्थमितिन्यायाद्द्वयोस्साम्येन फलसम्बन्धाभावाद्विकल्पायोगेनैकस्य प्राधान्यमपरस्याङ्गत्वङ्कल्प्यम् । तत्र प्रथमं वा नियम्येतेतिन्यायाश्रयेणाह । तत्र किमिति । सर्वत्रैव हि विज्ञानं संस्कारित्वेन गम्यते पराङ्गत्वात्मविज्ञानादन्यत्रेत्यवधार्य्यतामितिन्यायेन ज्ञानस्य ज्ञेयशेषतया धर्म्महेतुत्वाभावात्प्रयोगाङ्गतया

॥ कै॰ ॥ किम्पुनरिति । एकश्शब्दस्सम्यग्ज्ञातस्सुप्रयुक्तस्स्वर्ग्गे लोके कामधुग्भवतीतिश्रुतिः तत्र किं सम्यग् ज्ञातः कामधुग् भवति सुप्रयोगात्तु सम्यग्ज्ञातत्वानुमानमित्यर्थ आहोस्वित्सुप्रयुक्तः

॥ भा॰ ॥ यन्मे नरः श्रुत्यन्वृद्ध चक्र । यत्रानश्वकाजरसन्तनूनामिति । किम्पुनश्शब्दस्य ज्ञाने धर्म्मः आहोस्वित्प्रयोगे । कश्चात्र विशेषः । ज्ञाने धर्म्म इतिचेत्तथाऽधर्म्मः । ज्ञाने धर्म्म इतिचेत्तथाऽधर्म्मोऽपि प्राप्नोति यो हि शब्दान् जानाति अपशब्दानप्यसौ जानाति यथैव शब्दज्ञाने धर्म्मः एवमपशब्दज्ञानेऽप्यधर्म्मः । अथवा भूयानधर्मः प्राप्नोति । भूयांसोऽपशब्दाः । अल्पीयांसश्शब्दाः । एकैकस्य हि शब्दस्य बहवोऽपभ्रंशाः । तद्यथा । गौरित्यस्य शब्दस्य गावी गोणी गोता गोपोतलिकेत्येवमादयोऽपभ्रंशाः ॥

॥ कै॰ ॥ कामधुग्भवति सुप्रयुक्तत्वन्तु सम्यग्ज्ञानादित्यर्थ इतिप्रश्नः । ज्ञाने धर्म्म इतिचेदिति । यथा श्लेष्मणः प्रकोपनं स्नेहद्रव्यं रूक्षन्तु वायोः तथेहापि प्राप्तमितिभावः ॥

॥ वि॰ ॥ दृष्टार्थत्वाच्च प्रयोगस्य फलम्प्रतिसन्निहितत्वाच्चाह । आहोस्विदिति । यथा श्लेष्मण इति । तथा धर्मजनकज्ञानविपरीतत्वात्तद्विपरीतजनकत्वेनापशब्दज्ञानादधर्मप्राप्तिरित्यर्थः ॥

॥ वि० ॥ प्रयोगे इति । एवञ्च प्रयोगादेवाधर्म्मवद्धर्म्मोऽपीतिज्ञानाद्धर्म्म इति वेदविरुद्धमितिभावः । भाष्ये फलाद्व्यतिरेच्य इति । फलवद्व्यभावप्रतियोगी न कार्य इत्यर्थः । प्रयत्नवैयर्थ्यमिति । व्याकरणाध्ययनविषयकप्रयत्नवैयर्थ्यमित्यर्थः । साधीय इति क्रियाविशेषणम् ॥

॥ कै० ॥ आचार इति । प्रयोगे । ऋषिः । वेदः । नच प्रयत्न इति । यदि प्रयत्नेन विना फलं स्यात्प्रयत्नस्य वैयर्थ्यमापद्येतेत्यर्थः । व्यतिरेक इति । परिहासः ॥

॥ भा० ॥ आचारे नियमः । आचारे पुनर्ऋषिर्नियमं वेदयते । तेऽसुरा हेलयो हेलय इतिकुर्व्वन्तः पराबभूवुरिति । अस्तु तर्हि प्रयोगे । प्रयोगे सर्वलोकस्य । यदि प्रयोगे धर्म्मस्सर्व्वो लोकोऽभ्युदयेन युज्येत । कश्चेदानीम्भवतो मत्सरः यदि सर्व्वो लोकोऽभ्युदयेन युज्येत । न खलु कश्चिन्मत्सरः प्रयत्नानर्थक्यन्तु भवति फलवताच नाम प्रयत्नेन भवितव्यम् । नच प्रयत्नः फलाद्व्यतिरेच्यः । ननुच ये कृतप्रयत्नास्ते साधीयश्शब्दान्प्रयोचयन्ते त एव साधीयोऽभ्युदयेन योचयन्ते । व्यतिरेकोऽपि वै लक्ष्यते । दृश्यन्ते हि कृतप्रयत्नाश्चाप्रवीणाः अकृतप्रयत्नाश्च प्रवीणाः । तत्र फलव्यतिरेकोऽपि स्यात् । एवन्तर्हि नापि ज्ञाने एव धर्म्मो नापि प्रयोग एव । किन्तर्हि । शास्त्रपूर्वके शब्दप्रयोगेऽभ्युदयस्तत्तुल्यं वेदशब्देन । शास्त्रपूर्वकं यश्शब्दान् प्रयुङ्क्ते

॥ वि० ॥ शास्त्रसंस्कारवताम्प्रभूतशब्दप्रयोगजन्यबह्वपूर्वद्वारा बहुतराभ्युदयफलत्वमित्यर्थः । भाष्ये तत्र फलव्यतिरेक इति । कौशलव्यतिरेकवत् फलव्यतिरेकोऽपि स्यादिति तस्य व्याकरणाध्ययनं व्यर्थमेव स्यादितिभावः । शास्त्रपूर्वके इति । व्याकरणाध्ययनपूर्वके इत्यर्थः । तत्र वेदाङ्गत्वादेतद्व्याकरणाध्ययनपूर्वकप्रयोगे एव धर्म इति प्रामाणिकाः ॥



॥ वि० ॥ वेदशब्द इति । बोधक इत्यर्थः प्रमाणमित्यर्थो वा । तस्य यथेति । तस्य यथा य उ चैनमेवं वेदेतिग्रन्थेन वेदतो ज्ञात्वानुष्ठानम्फलायोक्तम् । तथास्यापि शास्त्रज्ञानपूर्वकः प्रयोगः फलायेत्येकश्शब्द इत्यादिनोक्तमित्यर्थः । भाष्ये प्रमाणमिति । प्रामाणिकमित्यर्थः ।

॥ कै० ॥ तत्तुल्यमिति । वेदशब्दो यस्यार्थस्य स वेदशब्दः । तस्य यथा ज्ञात्वानुष्ठानन्तथा शब्दानामपि

॥ भा० ॥ सोऽभ्युदयेन युज्यते तत्तुल्यं वेदशब्देन । वेदशब्दा अप्येवमभिवदन्ति । योऽग्निष्टोमेन यजते य उ चैनमेवं वेद । योऽग्निन्नाचिकेतञ्चिनुते य उ चैनमेवं वेद । अपर आह तत्तुल्यं वेदशब्देनेति । यथा वेदशब्दा नियमपूर्वमधीताः फलवन्तो भवन्ति एवं यश्शास्त्रपूर्वकं शब्दान्प्रयुङ्क्ते सोऽभ्युदयेन युज्यत इति । अथवा पुनरस्तु ज्ञाने एव धर्म्म इति । ननुचोक्तं ज्ञाने धर्म्म इतिचेत् तथाऽधर्म्म इति । नैष दोषः । शब्दप्रमाणका वयं यच्छब्द आह तदस्माकम्प्रमाणम् । शब्दश्च शब्दज्ञाने धर्म्ममाह नापशब्दज्ञानेऽधर्म्ममाह । यच्च पुनरशिष्टाप्रतिषिद्धन्नैव तद्दोषाय भवति नाप्यभ्युदयाय । तद्यथा । हिक्कितहसितकण्डूयितानि नैव दोषाय भवन्ति नाप्यभ्युदयाय ॥

॥ कै० ॥ प्रकृत्यादिविभागज्ञानपूर्वकः प्रयोग इत्यर्थः । अपर आहेति । वेदश्चासौ शब्दश्चेति वेदशब्द इति कर्म्मधारयः ॥

॥ वि० ॥ शब्दश्च शब्दज्ञाने इति । एकश्शब्दस्सम्यग्ज्ञात इत्यादिः । हेलयो हेलय इत्यादितु अपशब्दप्रयोगेऽधर्म्ममाह नतु ज्ञान इतिभावः । यद्यपि तत्र प्रयुक्त इत्यप्युक्तन्तथाप्यवैयाकरणस्य सम्यक्प्रयोगादपि धर्म्माभावेन ज्ञानमेव तद्धेतुः प्रयोगस्तु तस्य द्वारमितिभावः ॥

६६

॥ वि॰ ॥ भाष्ये अभ्युपाय एवेति । अपशब्दज्ञाननान्तरीयकं शब्दज्ञानमिति शब्दज्ञानेन फले जननीये सहकारितैवापशब्दज्ञानस्य न पृथक्फलतेतिभावः । अपशब्दज्ञानमपशब्दत्वेन तज्ज्ञानम् । एवं शब्दज्ञाने इत्यपि । अपशब्दज्ञानत्वेन तज्ज्ञाने हि तद्भिन्नत्वेन शब्दज्ञानम्भवति । यो हीति । भाष्यस्य य एवापशब्दान् जानाति असावेव शब्दान् जानातीति तज्ज्ञानसमानाधिकरणशब्दज्ञानादेव धर्म्म इति न ततो विपरीतफलकल्पना युक्तेतिभावः । तदाहापशब्दज्ञाननान्तरीयकत्वादिति । बहुव्रीहिः । नहि वह्न्यानयननान्तरीयकम् पात्रानयनन्ततः पृथक्फलम्भवति ॥

॥ कै॰ ॥ अथवेति । अपशब्दज्ञाननान्तरीयकत्वाच्छब्दज्ञानस्य पृथक्फलमपशब्दज्ञानस्य नास्तीत्यर्थः ।

॥ भा॰ ॥ अथवाभ्युपाय एवापशब्दज्ञानं शब्दज्ञाने । योह्यपशब्दाञ्जानाति शब्दानप्यसौ जानाति । तदेवञ्ज्ञाने धर्म्म इतिब्रुवतोऽर्थादापन्नम्भवति अपशब्दज्ञानपूर्वके शब्दज्ञाने धर्म्म इति । अथवा कूपखानकवदेतद्भविष्यति । तद्यथा । कूपखानकः कूपङ्खनन् यद्यपि मृदा पांसुभिश्चावकीर्णो भवति सोऽप्सु सञ्जातासु तत एव तद्गुणमासादयति येन सच दोषो निर्हन्यते भूयसाचाभ्युदयेन योगो भवति । एवमिहापि यद्यपशब्दज्ञाने अधर्म्मस्तथापि यस्त्वसौ शब्दज्ञाने धर्मस्तेन सच

॥ वि॰ ॥ तुष्यतु दुर्ज्जन इतिन्यायेनापशब्दज्ञानस्य विपरीतत्वमात्रेणाधर्म्मसाधनत्वमभ्युपगम्यापि भाष्ये समाधन्तरमाह । अथवा कूपेति । मृत् आर्द्रा पांसुश्शुष्का । यत्कर्मनान्तरीयककर्म्मजन्यो यो विपरीतत्वमात्रेण कल्प्योऽवैधो दोषः स तत्कर्म्मजन्यफलनाश्यो यथा कूपखनननान्तरीयकशरीरव्यापारजन्यो मृल्लेपस्तत्फलजलनाश्य इति सामान्यतोदृष्टानुमानात् तन्नाशानुमानमितिबोध्यम् ॥

६७

॥ वि॰ ॥ उत्कृष्टधर्म्मेति । धर्म्मस्य विधिबोध्यत्वादुत्कृष्टत्वम् अधर्म्मस्यतु वचनाबोध्यत्वेन विपरीतत्वमात्रेण कल्प्यस्याल्पत्वेन तत्फलधर्म्मनाश्यत्वम् । यागीयहिंसाया न हिंस्यादितिवचनेन दुष्टताबोधनाद्दुष्टत्वमेवेत्यन्यत्र विस्तरः । भाष्येऽन्यत्रानियम इति । यज्ञे सुशब्दप्रयोगाद्धर्म्मोऽपशब्दप्रयोगादधर्म्म इति तत्रैव तयोः प्रयोगनियमः । तदतिरिक्तस्थलेतु सुशब्दापशब्दयोः प्रयोगेऽनियमः । योऽपि यज्ञे दोषः सोऽपि तदङ्गभूतसङ्कल्पोत्था-

॥ कै॰ ॥ दोष इति । उत्कृष्टधर्म्मफलावाप्तौ स्वल्पमधर्म्मफलमुत्पन्नमप्यनुत्पन्नकल्पम्भवतीत्यर्थः ॥

॥ भा॰ ॥ दोषो निर्घानिष्यते । भूयसाचाभ्युदयेन योगो भविष्यति । यदप्युच्यते आचारे नियम इति । याज्ञे कर्म्मणि स नियमः । अन्यत्रानियमः । एवं हि श्रूयते । यर्वाणस्तर्वाणो नाम ऋषयो बभूवुः प्रत्यक्षधर्माणः परापरज्ञा विदितवेदितव्या अधिगतयाथातथ्याः । ते तत्र भवन्तो यद्वानस्तद्वान इति प्रयोक्तव्ये यर्वाणस्तर्वाण इति प्रयुञ्जते । याज्ञे पुनः कर्म्मणि नापभाषन्ते । तैः पुनरसुरैर्याज्ञे कर्म्मण्यपभाषितं ततस्ते पराभूताः ॥

॥ कै॰ ॥ प्रत्यक्षधर्म्माण इति । योगिप्रत्यक्षेण सर्वं बिदितवन्तः । परापरज्ञाः । विद्याऽविद्याविभागज्ञाः ॥

॥ वि॰ ॥ द्विविषय एव श्रुतौ हेलयो हेलयो नश्यध्वमित्यूह एव । विदितवेदितव्या इत्यनेन श्रवणमनननिदिध्यासनसम्पदुक्ता । अधिगतयाथातथ्या इत्यनेन साक्षात्कार उक्तः । याथातथ्यं स्वार्थे ष्यञ् । वेदितव्यस्य यद् यथा तथा स्वरूपं सत्यं स्वरूपं शुद्धसच्चिदानन्दरूपन्तदधिगतम्प्रत्यक्षेण प्राप्तं यैरित्यर्थः । याज्ञे पुनरित्यनेन तत्त्वज्ञानिनामपि कर्म्माधिकारं सूचयति । प्रयुञ्जते इति । वर्त्तमानसमीपे भूते लट् । एवन्नापभाषन्त इत्यपि । अत एव तन्नामानो बभूवुरित्यर्थः ॥

॥ वि॰ ॥ व्याकरणपदार्थविचारस्य सङ्गतिन्दर्शयितुमाह । उक्तमिदमिति । आदिना तस्मादध्येयं व्याकरणमित्यादिपुनःपुनरुक्तिर्गृह्यते । ननु सूत्रसमुदायस्य व्याकरणस्येदं सूत्रमित्युपपद्यतेऽत आह । द्वाभ्यामिति । सूत्रपदेनाप्यष्टाध्याय्येव यदोच्यते तदापीष्यतेऽयम्प्रयोगः स न सिद्ध्येदित्यर्थः । ननु किमुच्यते षष्ठ्यर्थोऽनुपपन्न इति पर्य्यायतया सह प्रयोगोऽपि न स्यादत आह । सामान्यविशेषेति । सूत्रं सामान्यं व्याकरणं विशेषः ।

॥ कै॰ ॥ अर्थेति । उक्तमिदम् नचान्तरेण व्याकरणमित्यादि । तत्र पक्षद्वयेऽपि दोषदर्शनात् पदार्थप्रश्नः । षष्ठ्यर्थ इति । द्वाभ्यामपि शब्दाभ्यामष्टाध्याय्याः प्रतिपादनाद्व्यतिरेकाभावः

॥ भा॰ ॥ अथ व्याकरणमित्यस्य शब्दस्य कः पदार्थः । सूत्रम् । सूत्रे व्याकरणे षष्ठ्यर्थोऽनुपपन्नः । सूत्रे व्याकरणे षष्ठ्यर्थो नोपपद्यते व्याकरणस्य सूत्रमिति । किन्तदन्यत्सूत्राद्व्याकरणम् यस्यादः सूत्रं स्यात् ॥

॥ कै॰ ॥ समान्यविशेषशब्दतयातु द्वयोः प्रयोगो न विरुद्ध्यते यदात्वष्टाध्याय्येकदेशः सूत्रशब्देनोच्यते तदा षष्ठ्यर्थोऽप्युपपद्यते ॥

॥ वि॰ ॥ सूत्रशब्देनाष्टाध्याय्येव । तदेकदेशेतु योगव्यवहार एव योगे योगे उपतिष्ठत इत्यादौ । यदात्विति । सूत्राणिचाप्यधीयान इति भाष्ये वक्ष्यमाणत्वादितिभावः । वस्तुत एकदेशस्य सूत्रत्वेऽपि तस्यापि साक्षात्परम्परया वा व्याकरणत्वात् षष्ठ्यर्थानुपपत्तिरेवेतितत्त्वम् ॥



॥ वि॰ ॥ समुदायस्यातिरिक्तत्वेऽपि दोषमाह भाष्ये । शब्दाप्रतिपत्तिरिति । व्याकरणाच्छब्दान्प्रतिपद्यामहे इति शब्दविषयव्यवहारासिद्धिः प्राप्नोतीत्यर्थः । यतः केवलसूत्रेभ्यश्शब्दप्रतिपत्तिर्न दृश्यते । व्याकरणस्य शब्दप्रतिपत्तिहेतुत्वञ्च लोकसिद्धम् व्याकरणाच्छब्दान्प्रतिपद्यामहे इति व्यवहारात् । सेयम्प्रतिपत्तिसाधनता सूत्राद्यावर्त्तमाना तद्वाच्यां व्याकरणशब्दवाच्यतां व्यावर्त्तयतीतिभावः । तदाह । न हीति । भाष्ये चर्चापदानि

॥ कै॰ ॥ शब्दाप्रतिपत्तिरिति । न हि व्याख्यानरहितसूत्रमात्रश्रवणाच्छब्दाः प्रतीयन्ते । समुदितमिति । समुदायादे-

॥ भा॰ ॥ शब्दाप्रतिपत्तिः । शब्दानाञ्चाप्रतिपत्तिः प्राप्नोति व्याकरणाच्छब्दान्प्रतिपद्यामह इति । न हि सूत्रत एव शब्दान्प्रतिपद्यन्ते । किन्तर्हि । व्याख्यानतश्च । ननुच तदेव सूत्रं विगृहीतं व्याख्यानम्भवति न केवलानि चर्चापदानि व्याख्यानम् वृद्धिः आद् ऐजिति । किन्तर्हि । उदाहरणम्प्रत्युदाहरणं वाक्याध्याहार इत्येतत्समुदितं व्याख्यानम्भवति । एवन्तर्हि शब्दः । शब्दे ल्युडर्थः । यदि शब्दो व्याकरणं ल्युडर्थो नोपपद्यते व्याक्रियन्ते शब्दा अनेनेति व्याकरणमिति ॥

॥ कै॰ ॥ वार्थावसायोत्पादादित्यर्थः । शब्द इति । करणे ल्युड्विधीयते शब्दश्च व्याक्रियमाणत्वात्कर्म्म न तु करणमितिभावः ॥

॥ वि॰ ॥ चर्च्यमानानि विभज्यमानानीत्यर्थः । शब्दइति । लक्ष्यमित्यर्थः । अत्र पक्षे षष्ठ्यर्थ उपपद्यते शब्दाप्रतिपत्तिहेतुता तु तदवस्था । वाक्याध्याहार इति । वाक्यघटकपदानां सूत्रान्तरे श्रुतानां स्वरितत्वप्रतिज्ञयाध्याहारः कल्पनमित्यर्थः । यद्वा वाक्याध्याहार इत्यनेन वार्त्तिककृद्वाक्यानां सूत्रतात्पर्य्यविषयता वाक्यैकदेशन्यायेन सूचिता । ननु राजभोजना इतिवत्कर्म्मल्युटि न दोषोऽत आह । करणे इति । कर्म्मणि स तु क्वाचित्क इतिभावः ॥

॥ वि० ॥ लक्षणप्रपञ्चाभ्यामिति । यथा कर्मधारयप्रकरणे अलुक्प्रकरणेच । विजिगीषुकथायां हि अभिहिताभिधानमशक्तिसूचकत्वाद्दोषाय

॥ कै० ॥ भवेचेति । शब्देऽप्यन्वाख्यायकत्वेन भवो योग इतिचेन्न । मीमांसादियोगस्यापि शब्दम्प्रति

॥ भा० ॥ न हि शब्देन किञ्चिद्व्याक्रियते । केन तर्हि । सूत्रेण । भवे । भवेच तद्धितो नोपपद्यते व्याकरणे भवो योगो वैयाकरण इति । न हि शब्दे भवो योगः । क्व तर्हि । सूत्रे । प्रोक्तादयश्च तद्धिताः । प्रोक्तादयश्च तद्धिता नोपपद्यन्ते । पाणिनिना प्रोक्तम्पाणिनीयम् आपिशलम् काशकृत्स्न-मिति । न हि पाणिनिना शब्दाः प्रोक्ताः । किन्तर्हि । सूत्रम् । किमर्थमिदमुभयमुच्यते भवे प्रोक्ता-दयश्च तद्धिता इति । न प्रोक्तादयश्च तद्धिता इत्येव । भवेऽपि तद्धितश्चोदितस्स्यात् । पुरस्ता-दिदमाचार्येण दृष्टं भवे तद्धित इति तत्पठितम् । तत उत्तरकालमिदन्दृष्टम्प्रोक्तादयश्च तद्धिता इति तदपि पठितम् । नचेदानीमाचार्याःसूत्राणि कृत्वा निवर्त्तयन्ति । अयन्तावददोषः । यदु-च्यते शब्दे ल्युडर्थ इति । नावश्यङ्करणाधिकरणयोरेव ल्युड्विधीयते । किन्तर्हि । अन्येष्वपि कारकेषु कृत्यल्युटो बहुलमिति । तद्यथा ॥

॥ कै० ॥ विचारकत्वाद्वैयाकरणत्वप्रसङ्गः । नचेदानीमिति । लक्षणप्रपञ्चाभ्यां मूलसूत्रवद्वार्त्तिकाना-मुपपत्त्या दोषाभावः ॥

॥ वि० ॥ इहतु व्युत्पादनार्थत्वान्न दोषकृदितिभावः । पूर्वं सामान्ये उक्ते पश्चाद्विशेषकथनम्प्रपञ्चार्थमिति युज्यते । अत्र तु विपरीतमिति न तत्साम्यमित्यन्ये ॥



॥ वि० ॥ प्रतीयन्त इति । एवञ्च विपरीतव्यावृत्तिः सदृशसङ्ग्रहश्च व्याकृतिरितिभावः । एतेन शब्दाप्रतिपत्तिरप्यत्र पक्षे उद्धृता

॥ कै० ॥ प्रस्कन्दनमिति । यद्यप्ययम्भीमादिस्तथापि कृत्यल्युटो बहुलमित्यस्यैव भीमादयोऽपादान इत्ययम्प्रपञ्च इतिभावः । गौरित्युक्त इति । साक्षादिमति यदा कश्चित्प्रत्ययङ्गौरित्युच्यते तदाच वाचकान्तराणान्निवृत्तिः कृता

॥ भा० ॥ प्रस्कन्दनम्प्रपतनमिति । अथवा शब्दैरपि शब्दा व्याक्रियन्ते । तद्यथा । गौरित्युक्ते सर्वे सन्देहा विनिवर्त्तन्ते नाश्वो न गर्द्दभ इति । अयन्तर्हि दोषः । भवे प्रोक्तादयश्च तद्धिता इति । एवन्तर्हि लक्ष्यलक्षणे व्याकरणम् । लक्ष्यञ्च लक्षणञ्चैतत्समुदितं व्याकरणम्भवति । किम्पु-नर्लक्ष्यम् किं वा लक्षणम् । शब्दो लक्ष्यः लक्षणं सूत्रम् । एवमप्ययन्दोषः । समुदाये व्याकरण-शब्दः प्रवृत्तो ऽवयवे नोपपद्यते । सूत्राणिचाप्यधीयान इष्यते वैयाकरण इति । नैष दोषः । समुदायेषु हि प्रवृत्ताश्शब्दा अवयवेष्वपि वर्त्तन्ते । तद्यथा । पूर्वे पञ्चाला उत्तरे पञ्चालाः

॥ कै० ॥ भवति । एवमेकस्मिन्नुदाहरण उपन्यस्ते सर्वाणि तत्सदृशानि शब्दान्तराणि प्रतीयन्ते । पूर्वे पञ्चाला इति । जनपदान्तरनिवृत्तिविवक्षायामेकदेशेऽपि समुदायरूपारोपात्प्रयोगः ॥

॥ वि० ॥ व्यावर्त्यव्यावर्त्तकरूपलक्ष्यलक्षणस्यातिप्रसक्तत्वात्पृच्छति भाष्ये । किम्पुनरिति । जनपदान्तरेति भावप्रधानो निर्द्देशः ॥

॥ वि० ॥ यदेति । मात्रा परिच्छिन्नोंऽशः । औषधसंस्कृते तत्रसमुदाये घृतादिशब्दस्य रूढिरितिभावः । अशुक्लेऽप्यवयवे इति प्रयोग इत्यनेनान्वेति । आरोपादिति । समुदायस्य शुक्लत्वे अशुक्लावयवे प्रयोगेच हेतुः । तत्र समुदाये शुक्लत्वारोपे हेतुरवयवान्तरस्य शौक्ल्यादिति । वनैकदेशे पुष्पिते पुष्पितं वनमितिवदेकदेशेऽपि शुक्ले शुक्लः पट इतिव्यवहार इतिबोध्यम् । शब्दार्थभेदादिति । अनेकावस्थायुक्तं शिरो राहुशब्दार्थः ।

॥ कै० ॥ तैलमिति । यदौषधसंस्कृता घृततैलमात्रा भवति तदेतदुदाहरणम् । आकृतिवाचित्वेतु घृततैल-शब्दयोस्संस्थानप्रमाणनिरपेक्षा सर्वत्र मुख्या वृत्तिः । शुक्ल इति । अशुक्लेऽप्यवयवेऽवयवान्तरस्य शौक्ल्यात्समु-

॥ भा० ॥ तैलम्भुक्तम् घृतम्भुक्तम् शुक्लो नीलः कपिलः कृष्ण इति । एवमयं समुदाये व्याकरण-शब्दः प्रवृत्तोऽवयवेऽपि वर्त्तते । अथवा पुनरस्तु सूत्रम् । ननुचोक्तं सूत्रे व्याकरणे षष्ठ्यर्थोऽनुपपन्न इति । नैष दोषः । व्यपदेशिवद्भावेन भविष्यति । यदप्युच्यते शब्दाप्रतिपत्तिरिति । नहि सूत्रत एव शब्दान्प्रतिपद्यन्ते । किन्तर्हि । व्याख्यानतश्चेति । परिहृतमेतत् । तदेव सूत्रं विगृहीतं व्याख्यानम्भवतीति । ननुचोक्तन्न केवलानि चर्चापदानि व्याख्यानम् वृद्धिः आद् ऐजिति

॥ कै० ॥ दायस्य शुक्लत्वे सत्यारोपात्प्रयोगः । व्यपदेशिवद्भावेनेति । यथा राहोश्शिर इत्येकस्मिन्नपि वस्तुनि शब्दार्थभेदाद्भेदव्यवहारः । एवमिहापि व्याकरणशब्देन शास्त्रस्य व्याकृतिक्रियायाङ्करणरूपत्वमुच्यते । सूत्रश-ब्देनतु समुदायरूपतेति भेदव्यवहार उपपद्यते ॥

॥ वि० ॥ यत्किञ्चिदेकावस्थायुक्तं शिरश्शब्दार्थः । तादृशराहुशब्दार्थस्य तादृशशिरःपदार्थोऽवयव इति षष्ठ्यर्थोपपत्तिरितिभावः । सूत्रशब्देनतु समुदायरूपतेति । अनेकावस्थायुक्तस्य तस्य व्याकृतिक्रियाकरणावस्थाविशिष्टमवयव इति तद्रूपावयवस्यायं समुदाय इत्यर्थः । ईदृशे स्थले विकल्पात्मकञ्ज्ञानं वस्तु-शून्यमेव । व्यपदेशिवद्भावविषयेऽप्येवमेव । शब्दज्ञानानुपाती वस्तुशून्यो विकल्प इति योगसूत्रे पतञ्जल्युक्तेरित्यन्ये ॥



॥ वि० ॥ भाष्येऽविजानत इति । मन्दबुद्धेरित्यर्थः । सूत्रत एवेति । एतन्मूलकमेव पद्यते । सूत्रेष्वेव हि तत्सर्वं यद्वृत्तौ यच्च वार्त्तिके इति । ननु लोकप्रसिद्धमातृकापाठेनैव वर्णज्ञानसम्भवान्माहेश्वरो वर्णसमाम्नायः किमर्थ इति पृच्छति भाष्ये । किमर्थ इति । पाणिनये महादेवकृत इत्यर्थः । ननु साधुत्वान्वाख्यानम्फलमत आह । नहीति । उत्तरं वृत्तिसमवायार्थ इति । वृत्तिश्शास्त्रप्रवृत्तिस्तदुपयोगिसमवायो वर्णगतः क्रम-विशेषः स बोध्यत्वेनार्थः प्रयोजनं यस्य तथोक्तः ।

॥ कै० ॥ सूत्रत एवेति । पदच्छेदादिभिस्सूत्रार्थस्यैवाभिव्यञ्जनात् । आत इति निपातः अतश्च हेतोरित्यर्थः । नाद इति । नैतदित्यर्थः ।

॥ भा० ॥ किन्तर्हि । उदाहरणम्प्रत्युदाहरणं वाक्याध्याहार इत्येतत्समुदितं व्याख्यानम्भव-तीति । अविजानत एतदेवम्भवति । सूत्रत एव हि शब्दान्प्रतिपद्यन्ते । आतश्च सूत्रत एव । यो ह्युत्सूत्रङ्कथयेत् नादो गृह्येत । अथ किमर्थो वर्णानामुपदेशः । वृत्तिसमवायार्थ उपदेशः । वृत्तिसमवायार्थो-वर्णानामुपदेशः कर्त्तव्यः ॥

॥ कै० ॥ अथवा नादोऽर्थरहितत्वाद्घोषमात्रमेव गृह्येतेत्यर्थः । किमर्थ इति । नहि वर्णोपदेशेन कस्यचित्सा-धुशब्दस्यानुशासनमितिभावः । वृत्तिसमवायार्थ इति । लाघवेन शास्त्रप्रवृत्त्यर्थ इत्यर्थः ॥

॥ वि० ॥ सति ह्यक्षरसमाम्नायेऽजादिसञ्ज्ञाभिर्लाघवेन शास्त्रप्रवृत्तिरिग्यण इत्यादौ यथासङ्ख्यप्रवृत्तिश्चेतिभावः । अनेनास्य शास्त्रबहिर्भूतत्वं सूचितम् । अत एव मङ्गलार्थम्महतश्शास्त्रौघस्यादितो वृद्धिशब्दं पठतीति वक्ष्यति । अन्यकर्त्तृकत्वञ्च सूचितम् । पाणिनिशास्त्रप्रवृत्त्यर्थ उपदेश इत्युक्ते उपदेशे गुरुक-र्त्तृतायास्स्वरसतः प्रतीतेः सिद्धोच्चारणेऽपि मन्त्रोपदेश इत्यादावुपदेशव्यवहारात् । अनुबन्धकरणार्थ इत्यत्र करणपदेनेतरस्य सिद्धत्वसूचनात् । तत्करणञ्चो-पदेशकर्त्तृकर्त्तृकमेव प्रत्यासत्तेरित्याहुः ॥

॥ वि० ॥ भाष्ये किमिदमिति । कोऽयं समास इति प्रश्नः । धर्मनियमवदिति षष्ठीसमासः । पच्चचयभेदमुपपादयति । आद्यतात्पर्य-न्तूक्तं लाघवेन शास्त्रप्रवृत्त्यर्थ इति । ननु नेदमाद्योच्चारणमस्यानादित्वात् तत्कथमुपदेशत्वव्यवहारोऽत आह भाष्ये । उच्चारणमिति । ढक्कानिना-

॥ कै० ॥ धर्म्मनियमवत्समासः । वृत्त्यर्थ इति । शास्त्रप्रवृत्तिप्रत्यासन्नत्वं समवायस्य दर्शयति । इग्यण इत्यादौ हि यथासङ्ख्यशास्त्रं वर्णसन्निवेशमाचादेवावतिष्ठते ।

॥ भा० ॥ किमिदं वृत्तिसमवायार्थ इति । वृत्तये समवायो वृत्तिसमवायः । वृत्त्यर्थो वा समवायो वृत्तिसमवायः । वृत्तिप्रयोजनो वा समावायो वृत्तिसमावायः । का पुनर्वृत्तिः । शास्त्रप्रवृत्तिः । अथ कस्समवायः । वर्णानामानुपूर्व्येण सन्निवेशः । अथ क उपदेशः । उच्चारणम् । कुत एतत् । दिशिरुच्चारणक्रियः उच्चार्य हि वर्णानाह उपदिष्टा इमे वर्णा इति । अनुब-न्धकरणार्थश्च । अनुबन्धकरणार्थश्च वर्णानामुपदेशः कर्त्तव्यः । अनुबन्धानासङ्क्ष्यामीति । नह्यनुपदिश्य वर्णाननुबन्धाः शक्या आसङ्क्तुम् । स एष वर्णानामुपदेशो वृत्तिसमवायार्थश्च । अनुबन्धकरणार्थश्च । वृत्तिसमवायश्चानुबन्धकरणञ्च ॥

॥ कै० ॥ वृत्तिप्रयोजन इति । पारम्पर्य्येण शास्त्रप्रवृत्तावस्याङ्गत्वम् । सति हि समवाय इत्सञ्ज्ञा तत आदिरन्त्येनेति ततो ढ्रलोप इत्यादिशास्त्रप्रवृत्तिः ॥

॥ वि० ॥ देनाभिव्यक्तिरित्यर्थः । फलान्तरमाहानुबन्धकरणार्थश्चेति । अनुबन्धबोधनार्थ इत्यर्थः । चेनाकारस्य विवृतगुणत्वसङ्ग्रहः उपलक्षणत्वेन वा । अनुब-न्धत्वञ्च समुदायान्त्यत्वे सति नान्यथेति तात्पर्यम् ॥



॥ वि० ॥ ननु प्रत्याहारशब्देन सूत्रञ्चेत्तादर्थ्यमनुबन्धानामनुपपन्नमत आह । प्रत्याहारशब्देनेति । अधिकरणव्युत्पत्त्या अर्श आद्यचा वेतिभावः । भाष्ये वृत्त्यर्थ इति । लाघवेन शास्त्रप्रवृत्त्यर्थ इत्यर्थः । एतेन प्रत्याहारद्वारा समवायस्य वृत्त्यर्थता दर्शिता । भोत्स्यामह इति । अन्तर्भावितण्यर्थः बोधयिष्यामह इत्यर्थः । एवं विज्ञातुमित्यस्य ज्ञापयितुमित्यर्थः । सतिह्युपदेशे इति । एवञ्च व्याकरणाध्येतॄणामक्षरसमाम्नायेनै-वावश्यकेनेष्टवर्णज्ञाने सिद्धे न तदर्थम्मातृका पाठनीयेतिभावः ॥

॥ कै० ॥ प्रत्याहारार्थमिति । प्रत्याहारशब्देनाणादिकास्सञ्ज्ञा उच्यन्ते । इष्टबुद्ध्यर्थश्चेति । सतिह्युपदेशे कला-दिदोषरहिता ये वर्णा निर्द्दिष्टाः ते तथैव प्रयोक्तव्या इत्युक्तम् भवति । एकश्रुत्या सूत्राणाम्पाठात्सर्वेषामुदात्ता-दीनामुपदेशः

॥ भा० ॥ प्रत्याहारार्थम् । प्रत्याहारो वृत्त्यर्थः । इष्टबुद्ध्यर्थश्च । इष्टबुद्ध्यर्थश्च वर्णानामुपदेशः । इष्टान्वर्णान्भोत्स्यामह इति । नह्यनुपदिश्य वर्णानिष्टा वर्णाश्शक्या विज्ञातुम् । इष्टबुद्ध्यर्थश्चेतिचे-दुदात्तानुदात्तस्वरितानुनासिकदीर्घप्लुतानामप्युपदेशः । इष्टबुद्ध्यर्थश्चेतिचेदुदात्तानुदात्तस्वरितानुनासिक-दीर्घप्लुतानामप्युपदेशः कर्त्तव्यः । एवङ्गुणा अपि हि वर्णा इष्यन्ते । आकृत्युपदेशात्सिद्धम् । आकृ-त्युपदेशात्सिद्धमेतत् । अवर्णाकृतिरुपदिष्टा सर्वमवर्णकुलङ्ग्रहीष्यति । तथेवर्णाकृतिः तथोवर्णाकृतिः ॥

॥ कै० ॥ कर्त्तव्य इत्याह । इष्टबुद्ध्यर्थश्चेतिचेदिति । आकृत्युपदेशादिति । उपात्तोऽपि विशेषो नान्तरीय-कत्वाज्जातिप्राधान्यविवक्षायान्न विवक्ष्यत इत्यर्थः ॥

॥ वि० ॥ एकश्रुत्येति । त्रैस्वर्य्येण पाठेतु द्वयोरेव कर्त्तव्यतां वदेदित्यर्थः । तेषां लोकतः सिद्धौतु दोषरहितानामपि तत एव सिद्धेरुपदेशवैयर्थ्यापत्तिरिति-भावः । त्रैस्वर्य्येण पाठेऽप्यन्यतमपाठेऽन्यस्य कर्त्तव्यत्वाभिप्रायेण सर्वेषाङ्ग्रहणमित्यन्ये । आकृत्युपदेशे किमित्यकारादिह्रस्वव्यक्तिविशेषोपादानम् । तदुपादाने व्युत्पन्त्यन्तरग्रहणानापत्तिश्चेत्यत आह । उपात्त इति । नान्तरीयकत्वञ्च तं विना जातिमुच्चारयितुमशक्यत्वात् ॥

७६

॥ वि० ॥ संवृतादीनामिति । भाष्ये तादृशदोषरहितानामाकृतिग्रहणात्प्राप्तस्य ग्रहणस्य प्रतिषेधो वक्तव्य इत्यर्थः । तदाह एकारादीनां संवृतत्वमिति । अविशिष्ट इति । संश्लिष्टः सन्दिग्ध इति यावत् ।

॥ कै० ॥ संवृतादीनामिति । एकारादीनां संवृतत्वन्दोषो नत्वकारस्य तस्य संवृतगुणत्वात् । तत्र सन्ध्यक्षरेषु विवृततमे-
ष्ूच्चार्य्येषु संवृतत्वन्दोषः । कलः स्थानान्तरनिष्पन्नः काकलित्वेन प्रसिद्धः । ध्मातश्श्वासभूयिष्ठतया दीर्घ इव लक्ष्यते ।
एणीकृतोऽविशिष्टः किमयमोकारोऽथौकार इति यत्र सन्देहः । अम्बूकृतो व्यक्तोऽप्यन्तर्मुखमिव श्रूयते । अर्द्धको दीर्घोऽपि
ह्रस्व इव । ग्रस्तो जिह्वामूले निगृहीतः ॥

॥ भा० ॥ आकृत्युपदेशात् सिद्धमितिचेत्संवृतादीनाम्प्रतिषेधः । आकृत्युपदेशात् सिद्धमितिचेत्
संवृतादीनाम्प्रतिषेधो वक्तव्यः । के पुनस्संवृतादयः । संवृतः कलो ध्मात एणीकृतो ऽम्बूकृतोऽर्द्धको
ग्रस्तो निरस्तः प्रगीत उपगीतः क्ष्विण्णो रोमश इति । अपर आह । ग्रस्तन्निरस्तमवलम्बित-
न्निर्हतमम्बूकृतन्ध्मातमथो विकम्पितम् । सन्दष्टमेणीकृतमर्द्धकन्द्रुतं विकीर्णमेतास्स्वरदोषभावना इति ।
अतोऽन्ये व्यञ्जनदोषाः ॥

॥ कै० ॥ अव्यक्त इत्यपरे । निरस्तो निष्ठुरः । प्रगीतः सामवदुच्चारितः । उपगीतः समीपवर्णान्तरगीत्यानुरक्तः ।
क्ष्विण्णः कम्पमान इव । रोमशो गम्भीरः । अवलम्बितो वर्णान्तरसम्भिन्नः । निर्हतो रूक्षः । सन्दष्टो वर्द्धित इव ।
विकीर्णो वर्णान्तरप्रसृतः । एकोऽप्यनेकनिर्भासीत्यपरे । स्वरदोषभावना इति । स्वरदोषगोचाणि । अनन्ता हि दोषा
अशक्तिप्रमादकृताः ॥

॥ वि० ॥ ह्रस्व इवेति । तदल्पकालसङ्कोचेनोच्चारित इत्यर्थः । निष्ठुर इति । त्वरित इत्यन्ये । गोचाणीति । स्वरदोषजातय इत्यर्थः ॥

७७

॥ वि० ॥ भाष्ये गर्गादिविदादिपाठादिति । संवृतादिदोषरहितानामेव तत्र पाठादितिभावः । साधुत्वमिति । निवृत्तकलादिदोषवत्त्व-
मित्यर्थः । गार्ग्य इत्यादीनामिति । तत्रत्यानाङ्कलादिदोषनिवृत्तिर्न स्यादित्यर्थः । तदाह ततश्चेति । परेतु समुदायानामेतत्प्रकृतिकयन्त-
समुदायानां साधुत्वं यथा स्यादित्यर्थम्पाठश्चरितार्थो न कलादिदोषन्निवर्त्तयेदित्येव भाष्यार्थः । पाठश्चैव विशेष्यत इत्यग्रिमभाष्यस्वरसादित्याहुः । निदर्शना-
र्थत्वादिति । तत्रावर्णस्य अ अ इति कृतैव तद्वत्तदनन्तरमन्येषामपि करिष्यामीति भावः । एतेनावर्णप्रतिपत्तेः कृतत्वाद्वक्ष्यामीत्यनुपपन्नमित्यपास्तम् । भाष्ये

॥ कै० ॥ अस्त्वन्यदिति । गर्ग इत्यादिनैव सन्निवेशेन गर्गादीनां साधुत्वं यथा स्यात् गार्ग्य इत्यादीनाम्मा भूत् ततश्च तद्गतानामेवाकारादीना-
न्दोषनिवृत्तिः कृतास्यान्नतु समुदायान्तरस्थानाम् । यद्यपि प्रत्ययविध्यर्थो

॥ भा० ॥ नैष दोषः । गर्गादिविदादिपाठात्संवृतादीनान्निवृत्तिर्भविष्यति । अस्त्वन्यद्गर्गादिविदादिपाठे
प्रयोजनम् । किम् । समुदायानां साधुत्वं यथा स्यादिति । एवन्तर्ह्यष्टादशधा भिन्नान्निवृत्तकलादिकामव-
र्णस्य प्रत्यापत्तिं वक्ष्यामि । सा तर्हि वक्तव्या । लिङ्गार्थातु प्रत्यापत्तिः । लिङ्गार्था सा तर्हि भवति । तत्तर्हि
वक्तव्यम् यद्यप्येतदुच्यते । अथवैतर्हि अनेकमनुबन्धशतन्नोच्चार्य्यम् इत्सञ्ज्ञाच न वक्तव्या लोपश्च न वक्तव्यः ॥

॥ कै० ॥ गर्गादीनाम्पाठस्तथापि प्रसङ्गात् समुदायसाधुत्वायापि भवति । निवृत्तकलादिकामिति । अकारस्य संवृतत्वान्निवृत्तसंवृतत्वादि-
कामिति नोक्तमकारस्य निदर्शनार्थत्वात्सर्ववर्णानां शास्त्रान्ते प्रत्यापत्तिरित्यर्थः ॥

॥ वि० ॥ सा तर्हि वक्तव्येति । तथाच प्रत्यापत्त्याश्रयणे गौरवमितिभावः । लिङ्गार्थात्विति । अनुबन्धस्थानीयतत्तद्धात्वादिगतकलादिलिङ्गनिवृत्त्येत्यर्थः । नाकृति-
निर्द्देशप्रयुक्तदोषपरिहारमात्रप्रयोजना प्रत्यापत्तिः किन्तु सर्वानुबन्धेत्सञ्ज्ञाशास्त्रादकरणफलिकापीति न गौरवमितिभावः । तदेव विवृणोति तत्तर्हीत्यादिना ।
धात्वादिगतकलादिलिङ्गमित्यर्थः । अथवैतर्हीत्यस्य तथापीत्यर्थः । अनेकमनुबन्धशतमिति । एकैकस्यानुबन्धस्य शतश उच्चारणात्तादृशाश्चानेक उच्चारणीया
इत्यर्थः ॥

७८

॥ वि० ॥ यथेति । एधश्चादयोऽ नुदात्तङितः कलदोषयुक्ताः पाठ्याः स्वरितञितश्च ध्माताः । तत्र कलादात्मनेपदम् ध्मातात्कर्त्तृगामिणि क्रियाफले इति सूत्रे कार्य्ये । एवं टकितौ कलध्मातौ पठित्वाद्यन्तौ कलध्मातावितिपाठ्यम् । एवं ड्वितोऽर्द्धकदोषयुक्तान्पठित्वा

॥ कै० ॥ यदनुबन्धैरिति । यथा स्वरितत्वमधिकारार्थम् एवमात्मनेपदार्थङ्कलादिकम्प्रतिज्ञाय कलादात्मनेपदमित्यादि करिष्यते नतु अनुदात्तङित इत्यादि । ननुचानुबन्धाभावे कथमणादिकास्सञ्ज्ञा उपपद्यन्ते

॥ भा० ॥ यदनुबन्धैः क्रियते तत्कलादिभिः करिष्यते । सिद्ध्यत्येवम् अपाणिनीयन्तु भवति । यथान्यासमेवास्तु । ननुचोक्तम् । आकृत्युपदेशात्सिद्धमितिचेत्संवृतादीनाम्प्रतिषेध इति । परिहृतमेतत् गर्गादिविदादिपाठात्संवृतादीनान्निवृत्तिर्भविष्यति । ननुचान्यद्गर्गादिविदादिपाठे प्रयोजनमुक्तम् । किम् । समुदायानां साधुत्वं यथा स्यादिति ॥

॥ कै० ॥ आदिरन्त्येनेत्यत्रादिकलौ सहेत्युक्ता अ उ इत्यादिकास्सञ्ज्ञाः करिष्यन्ते स्वरसन्धिश्चासन्देहाय न करिष्यत इत्यदोषः ॥

॥ वि० ॥ अर्द्धकात् क्रिरिति ड्वितश्च ग्रस्तान्पठित्वा ग्रस्तादथुच् इत्यादिबोध्यम् । एतेच कलादयः प्रक्रियादशायामेव प्रयोगेतु शुद्ध एव शास्त्रान्ते प्रत्यापत्तिकरणात् । आदिः कलैस्सहेतिपाठः । भाष्येऽपाणिनीयमिति । वर्णसमाम्नायसमर्थनाय प्रवृत्तस्यैकदोषपरिहाराय सकलशास्त्रस्य व्याख्यानसापेक्षगुरुप्रकारेणान्यथाकरणे वृश्चिकभियेत्यादिन्याय आपततीतिभावः ॥

७९

॥ वि० ॥ नन्वपठितेषु दोषनिवृत्तिर्न स्यादत आह । यथाभूता इति । गर्गाद्यकारादिषु एकरूपेण पठितेषु तज्जातीया एव ते सर्वत्र साधव इत्यनुमातुं शक्यत इतिभावः । भाष्ये पाठश्चैवेति । विशेष्यते तत्तत्प्रत्ययवैशिष्ट्येन बोध्यत इत्यर्थः । द्विष्ठानीत्यस्य द्वयोरर्थयोस्तिष्ठन्तीत्यर्थ इत्यत आह । शब्दस्यापीति । तत्र कः कीदृशो धावतीतिप्रश्ने श्वेत इत्युत्तरम् । श्वा इत इतिच्छेदेन क इत्यस्योत्तरम् ॥

॥ कै० ॥ उभयमिति । यथाभूता गर्गादिस्था अकारादयस्तथाभूता एव सर्वत्र प्रयोक्तव्या इति प्रतिपाद्यत इत्यर्थः । द्विगता इति । द्वावर्थौ गताः प्रयोजनद्वयस्य सम्पादका इत्यर्थः । तथा वाक्यान्यपीति । शब्दस्याप्यर्थवद्विगतत्वमित्यर्थः ।

॥ भा० ॥ एवन्तर्ह्युभयमनेन क्रियते पाठश्चैव विशेष्यते कलादयश्च निवर्त्त्यन्ते । कथम्पुनरेकेन यत्नेनोभयं लभ्यमित्याह । द्विगता अपि हेतवो भवन्ति । तद्यथा । आम्राश्च सिक्ताः पितरश्च प्रीणिता इति । तथा वाक्यान्यपि द्विष्ठानि भवन्ति । श्वेतो धावति अलम्बुसानां यातेति । अथवा इदन्तावदयम्प्रष्टव्यः । क्वेमे संवृतादयः श्रूयेरन्निति । आगमेषु । आगमाश्शुद्धाः पठ्यन्ते । विकारेषु तर्हि । विकाराः शुद्धाः पठ्यन्ते । प्रत्ययेषु तर्हि । प्रत्ययाः शुद्धाः पठ्यन्ते । धातुषु तर्हि । धातवोऽपि शुद्धाः पठ्यन्ते ॥

॥ कै० ॥ अथवेति । केवलानां वर्णानां लोके प्रयोगाभावाद्वात्वादीनां शुद्धानाम्पाठात्तत्स्थत्वाच्च वर्णानान्न कश्चिद्दोषः ॥

॥ वि० ॥ श्वेत इतिच्छेदेन कीदृश इत्यस्योत्तरमिदम् । एवङ्क्षेपाञ्जनपदानाङ्गन्ता को वा समर्थ इतिप्रश्न उत्तरम् । अलमित्यादि । अलम्बुसा देशविशेषाः । बुसानाम्पलालवर्णानां याता प्राप्तिमान् अलं समर्थ इतिचार्थः । पातेति क्वचित्पाठः । पा रक्षणे इत्यस्य रूपम् । केवलानामिति । एवञ्च कलादिदोषाणान्न कुत्रापि प्रसक्तिरितिभावः ॥

॥ वि० ॥ भाष्ये यानि तर्ह्यग्रहणानीति । कार्य्यविधावकृतानुवादानीत्यर्थः । उपदेश इति । ङ्याप्प्रातिपदिकादित्यादावनुवादरूपेण ग्रहणामित्यर्थः । तेनोद्देशश्च प्रातिपदिकानान्नोपदेश इत्यादेच इतिसूत्रस्थभाष्यविरोध इत्यपास्तम् । नन्वेवमतिप्रसङ्गस्स्यादत आह । शिष्टेति ।

॥ कै० ॥ यानि तर्हीति । डित्थादीनि । एतेषामपीति । शिष्टप्रयुक्तत्वेनोणादीनाम्पृषोदरादीनाञ्च साधुत्वाभ्यनुज्ञानात्स-

॥ भा० ॥ प्रातिपदिकेषु तर्हि । प्रातिपदिकान्यपि शुद्धानि पठ्यन्ते । यानि तर्ह्यग्रहणानि प्रातिपदिकानि । एतेषामपि स्वरवर्णानुपूर्वीज्ञानार्थ उपदेशः कर्त्तव्यः । शशः षष इति माभूत् । पलाशः पलाष इति माभूत् । मञ्चको मञ्जक इति माभूत् । आगमाश्च विकाराश्च प्रत्ययास्सह धातुभिः । उच्चार्य्यन्ते ततस्तेषु नेमे प्राप्ताः कलादयः । इति भगवत्पतञ्जलिविरचिते महाभाष्ये प्रथमाध्यायस्य प्रथमे पादे प्रथममाह्निकम् ॥ ❋ ॥

॥ कै० ॥ र्वेषामत्र सङ्ग्रहस्सिद्धः । इत्युपाध्यायजैयटपुत्रकैयटकृते भाष्यप्रदीपे प्रथमाध्यायस्य प्रथमे पादे प्रथममाह्निकम् ॥ ❋ ॥

॥ वि० ॥ एवं संहतादीनाम्प्रतिषेध इत्यस्मिन्प्रत्याख्याते इष्टबुद्ध्यर्थ इत्यपि प्रत्याख्यातप्रायमेवेत्यलम् । इति शिवभट्टसुतसतीगर्भसम्भवनागोजीभट्टकृते भाष्यप्रदीपोद्योते प्रथमस्य प्रथमपादे प्रथममाह्निकम् ॥ ❋ ॥ ❋ ॥ ❋ ॥ ❋ ॥



॥ वि० ॥ अइउण् । ननु चतुर्दशसूत्र्याः प्रयोजनमुक्तमेव तत्किं पुनरत्र तद्ग्रहणेनेत्याशङ्क्याह । सर्वेति । विशेषेण । तद्रूपेण । प्रत्येकं वर्णेभ्यो विभक्तिमाशङ्क्याह । स्वरूपेणेति । शब्दजन्यज्ञानविषयो हि शब्दस्यार्थः । एवञ्च स्वरूपमपि स्वजन्यबोधविषयत्वेनार्थः । अनुकार्यमर्थ इतितु स्पष्टमेव । एवं विद्यमानस्याप्यर्थवत्त्वस्याविवक्षितत्वादर्थवत्सूत्रेऽग्रहणादित्यर्थः । स्वरूपस्य श्रोत्रगृहीतस्यैव शाब्दे भानोपपत्तौ न तत्र शक्तिः कल्प्या अनुकार्यञ्च सादृश्येनोपस्थापयतीति न तत्रापि वृत्तिः । वृत्त्यार्थबोधकत्वञ्चार्थवत्त्वमर्थवत्सूत्रे निविष्टमितिभावः ।

॥ कै० ॥ अइउण् । सर्ववर्णानविशेषेण विचार्य विशेषेणात्र विचारः क्रियते । अकारस्येति । अत्राकारादीनां स्वरूपेणानुकार्येण वा सतोऽप्यर्थवत्त्वस्या-

॥ भा० ॥ अइउण् । अकारस्य विवृतोपदेश आकारग्रहणार्थः ॥

॥ कै० ॥ विवक्षितत्वाद्विभक्त्यनुत्पत्तिः । स्वरसन्धिस्तु न प्रवर्त्तते वर्णोपदेशकालेऽजादिसञ्ज्ञानामनिष्पादात् ॥

॥ वि० ॥ अनुकरणत्वभङ्गान्न विभक्तिरिति तत्त्वम् सौत्रत्वाद्वा । कारप्रत्ययोऽपि बाहुलकान्न । स्वरसन्धिस्त्विति । सौत्रत्वात्संहिताया अविवक्षणादेतिभावः । अजादिसञ्ज्ञानामनिष्पादादितितु चिन्त्यम् वर्णोपदेशे इत्सञ्ज्ञायामच्प्रत्याहारेच निष्पन्ने वप्रर्त्तमानानां यणादीनां सुद्ध्युपास्य इत्यादौ तटस्थ इवोद्देश्यतावच्छेदकाक्रान्ते वर्णोपदेशादावपि प्रवृत्तेर्दुर्वारत्वात् अन्यथा तुल्यास्यप्रयत्नमित्यादौ सवर्णदीर्घादि न स्यात् ॥

॥ वि॰ ॥ अत्र सूत्रे तत्रेतिपाठेऽप्येवमेवार्थः । वाक्यापरिसमाप्तिन्यायेनेह ग्रहणकशास्त्राप्रवृत्तेः सावर्ण्येऽपि नात्र तद्ग्रहणमिति व्यर्थो विवृतोपदेशोऽत आह । प्रदेशेष्विति । अकःसवर्णे इत्यादौ । तत्राप्यकारः संवृत एवेतिभावः । ननु विवृतपदस्य गुणिपरत्वे सविशेषणत्वात्

॥ कै॰ ॥ तत्राकारस्य संवृतत्वाद्दीर्घप्लुतयोर्विवृतत्वात्प्रयत्नभेदात्सवर्णसञ्ज्ञाया अप्रसङ्गात् प्रदेशेष्वकारेण दीर्घप्लुतयोर्ग्रहणं न प्राप्नोतीति विवृतत्वमकारस्योपदिश्यते । विवृतस्य गुणस्योपदेशो विवृतोपदेशस्तत्र गुणस्य नित्यसापेक्षत्वादकारापेक्षत्वेऽपि

॥ भा॰ ॥ अकारस्य विवृतोपदेशः कर्त्तव्यः । किं प्रयोजनम् । आकारग्रहणार्थः ॥

॥ कै॰ ॥ समासो यथा देवदत्तस्य गुरुकुलमिति । आकारग्रहणार्थ इति । विवृतोपदेश आकारग्रहणार्थ इति सामानाधिकरण्येन निर्देशादाकारग्रहणं विवृतोपदेशस्य प्रयोजनमिति सामर्थ्यादवगमात्प्रोद्यानुरूपमुत्तरं न भवतीति न चोदनीयम् ॥

॥ वि॰ ॥ समासो न स्यादत आह । विवृतस्य गुणस्येति । भाष्ये कर्त्तव्य इत्यस्य प्रतिज्ञेय इत्यर्थः । एतेन तस्योच्चारयितुमशक्यत्वमित्यपास्तम् । भाष्ये किं प्रयोजनमित्यत्र उद्दिश्येत्यध्याहारः । कर्त्तव्य इत्यनुषङ्गश्च ॥



॥ वि॰ ॥ नन्वाकारग्रहणं सवर्णग्रहणमेवेति भेदाभावात्कथं तस्य करणत्वमत आह । येन शास्त्रेणेति । नन्वाकृतिभेदात्कथं तत्पक्षे ऽप्यकारेणाऽऽकारग्रहणमत आह । आकारस्यापीति । केवलकण्ठ्यत्वे सति स्वरत्वमत्वजातिव्यञ्जकमितिदीर्घप्लुतयोरपि सेतिभावः । प्रातिपदिकार्थमात्रे प्रथमायां यथाश्रुतेऽन्वयो न जायतेऽत आह । अत्रचेति । उत्तरेऽपि तर्हि प्रथमा कुतो नेत्यत आह । प्रयोगाभावादिति । निमित्तादिशब्दप्रयोगाभावे ऽपि

॥ कै॰ ॥ सवर्णग्रहणेनेति । येन शास्त्रेणाणुदित्सवर्णस्येत्यनेन सर्वे सवर्णा गृह्यन्ते तेन करणेनेत्यर्थः । किञ्च कारणमिति । आकृतिपक्षाश्रयेण ग्रहणकशास्त्रस्य प्रत्याख्यानादाकारस्याप्यत्वजातिसद्भावात्सिद्धं ग्रह-

॥ भा॰ ॥ अकारः सवर्णग्रहणेन आकारमपि यथा गृह्णीयात् । किञ्च कारणं न गृह्णीयात् ॥

॥ कै॰ ॥ णमितिभावः । अत्रच निमित्तकारणहेतुषु सर्वासां प्रायदर्शनमिति प्रथमा कृता तेन कस्मात् कारणादित्यर्थः सम्पद्यते । विचारभेदादित्यत्र तु कारणशब्दस्य प्रयोगाभावात् प्रायग्रहणादसर्वनाम्नो वा प्रथमाद्वितीययोरभावाद्विभाषा गुणे स्त्रियामिति पञ्चमी विहिता ॥

॥ वि॰ ॥ तदर्थे गम्यमाने स्यादेव विभक्तिरत आह । प्रायग्रहणादिति । विभाषा गुणे इति । निमित्तेत्यादिवार्त्तिके सर्वासामित्येतन्न पञ्चमीतृतीयाविधायकं किन्तु हेताविति विभाषा गुणेति सिद्धयोस्तयोरन्याभिरबाधायानुवादकमेवेतिभावः ॥

॥ वि॰ ॥ विवारयतीति । सचाभ्यन्तरप्रयत्नः । दोषापत्तिरिति । दण्डाढकमित्यादौ दीर्घानापत्तिर्दोष इत्यर्थः । ननु प्रयत्नभेदेऽपि

॥ कै॰ ॥ विवारयति विकासयत्यास्यमिति विवारः प्रयत्नः । व्यक्तिपक्षे ग्रहणकशा-

॥ भा॰ ॥ विवारभेदात् । किमुच्यते विवारभेदादिति । न पुनः कालभे-
दादपि । यथैवह्ययं विवारभिन्न एवं कालभिन्नोऽपि । सत्यमेवमेतत् । वक्ष्यति
तुल्यास्यप्रयत्नं सवर्णमित्यत्रास्यग्रहणस्य प्रयोजनम् । आस्ये येषां तुल्यो देशः
प्रयत्नश्च ते सवर्णसञ्ज्ञा भवन्तीति ॥

॥ कै॰ ॥ स्वारम्भाद्दोषापत्तिः व्यक्तिपक्षे भेदान्तरसद्भावादाह । किमुच्यत इति ॥

॥ वि॰ ॥ जातिसद्भावात्स्यादेव ग्रहणमत उक्तम् । व्यक्तिपक्षे इति ॥



॥ वि॰ ॥ ननु कालस्य व्यापकत्वाद्बाह्यत्वेन समाधानमयुक्तम् । किञ्च कालो न प्रयत्न इति तद्भेदे कथं सवर्णत्वाप्राप्तिरत आह । प्रयत्ना-
भीति । बाह्यत्वं व्युत्पादयति । प्रसिद्धेति । प्रसिद्धपरिमाणं यद्वस्त्वन्तरगतम्परिच्छेदकक्रियान्तरं परिच्छेद्यक्रियापेक्षयान्यत्तदपेक्षणादित्यर्थः ।
एवञ्च बाह्यपरिच्छेदकक्रियापेक्षया बाह्यत्वोक्तिरितिभावः ॥

॥ कै॰ ॥ बाह्यश्चेति । प्रयत्नाभिनिर्वृत्तत्वात्कालस्य प्रयत्नत्वमभ्युपगम्य बाह्यत्वेन परिहारः । प्रसिद्धपरिमाणवस्त्वन्तरग-
तपरिच्छेदकक्रियान्तरापेक्षणात्कालव्यवहारस्य बाह्यत्वङ्कालस्य । यथा व्रीहिः प्रस्थादिव्यवहारः परिमाणद्रव्यकृत एवम्माचादि-
व्यपदेशो निमेषादिक्रियाकृतः । अथवा नाभिप्रदेश एव विशिष्ट-

॥ भा॰ ॥ बाह्यश्च पुनरास्यात्कालः । तेन स्यादेव कालभिन्नस्य ग्रहणं न पुनर्विवारभिन्नस्य ॥

॥ कै॰ ॥ प्रयत्नारम्भाद्दीर्घादिनिष्पत्त्या नाभेश्चास्याद्बाह्यत्वात्कालस्य बाह्यत्वम् । विवृतत्वादीनाञ्चास्यवर्त्तिप्रयत्ननिष्पाद्य-
त्वादाभ्यन्तरत्वम् । द्रुतादिवृत्तयस्तु यथा न भेदिकास्तथा तपरसूत्रे वक्ष्यते ।

॥ वि॰ ॥ क्रियैव कालो नातिरिक्त इतिमते इदम् । अतिरिक्तः क्षणसमूहः काल इतिमते परिहरति । अथवेति । अयम्भावः । नाभिप्रदेशावच्छिन्नय-
त्नेन प्रेरितो वायुस्तत्तत्स्थानाभिघातोत्तरं वर्णाभिव्यञ्जक इति शिक्षादौ स्पष्टम् । वायोरल्पत्वाधिक्यानिच ह्रस्वदीर्घत्वादिरूपकालव्यञ्जकानीति । ननु ह्रस्व-
दीर्घयोःकालभेदादतो भिस इत्यादौ दीर्घग्रहणवत् विलम्बितवृत्त्योच्चारितस्य ह्रस्वाकारस्यापि द्रुतमध्यापेक्षया कालाधिक्याद्भिसऐसावविधायके ग्रहणानापत्तिरत
आह । द्रुतादीति ॥

८६

॥ वि॰ ॥ उपदिश्यमानस्येत्यत्र वार्तिककृतः कर्तृत्वे पक्षयोर्भेदो न स्यादत आह । किं सूत्रकारेणेति । सूत्रकारो महेश्वरः । वेदपुरुषो वा । येनाक्षरसमाम्नायमित्याद्यैतिह्यादित्याहुः ।

॥ कै॰ ॥ किम्पुनरिति । किं सूत्रकारेणैव विवृतोपदेशः कृतो वार्तिककारेणतु तस्य प्रयोजनमुक्तमथवाऽकृत एव विवृतोपदेशो वार्तिककृता कर्त्तव्यत्वेनोपन्यस्त इतिप्रश्नः । दुरवधारत्वादुपदिष्टोऽपि विवृतो व्याख्यानेन विना न

॥ भा॰ ॥ किम्पुनर्विवृतस्योपदिश्यमानस्य प्रयोजनमन्वाख्यायते । आहोस्वित्संवृतस्योपदिश्य-
मानस्य विवृतोपदेशश्चोद्यते । विवृतस्योपदिश्यमानस्य प्रयोजनमन्वाख्यायते ॥

॥ कै॰ ॥ शक्यते विज्ञातुमिति प्रत्यक्षेऽप्यकारे प्रश्नोऽयन्नासमञ्जसः । तत्र प्रत्यापत्त्या पूर्वः पक्ष आश्रितः
अन्यथा शास्त्रान्ते प्रत्यापत्तिवचनमनर्थकं स्यात् स्वरूपप्रच्यवाभावात् ॥

॥ वि॰ ॥ ननु प्रत्यक्षतोऽकारे श्रुते तद्गतगुणस्यापि ज्ञातत्वात्प्रश्नोऽयमसङ्गतोऽत आह । दुरवधारत्वादिति । विवृतत्वादीनां श्रोत्रेन्द्रियग्राह्यत्वाभावादिति भावः । अन्यथा । संवृतत्वे । स्वरूपप्रच्यवे हि पुनः संवृतविधानं युक्तं स्यादितिभावः ॥

८७

॥ वि॰ ॥ प्रयोग एवेति । अतिखट्व इत्यादिप्रयोगे ह्रस्वेनान्तरतम्याद्विवृतोऽकारः प्राप्तः संवृत एव भवत्वित्यर्थम्प्रत्यापत्तिवच इतिभावः । नन्विति । अचश्चेत्युक्तेरच एव ह्रस्वत्वेन भाव्यमितिभावः । गोस्त्रियोरित्यत्रैतद्वारणार्थमेवोपस्थितिस्स्यादितितात्पर्य्यम् ।

॥ कै॰ ॥ अस्तित्वन्यदिति । प्रयोग एव प्राप्ते विवृतत्वे संवृतत्वप्रत्यापत्तिः स्यादित्यज्ञापकमेतदित्यर्थः ॥

॥ भा॰ ॥ कथञ्ज्ञायते यदयम् अ अ इत्यकारस्य विवृतस्य संवृतताप्रत्यापत्तिं शास्ति । नैतद-
स्ति ज्ञापकम् । अस्तित्वन्यदेतस्य वचने प्रयोजनम । किम् । अतिखट्वः अतिमाल इत्यत्रा-
ऽऽन्तर्य्यतो विवृतः प्राप्नोति संवृतः स्यादित्येवमर्था प्रत्यापत्तिः । नैतदस्ति ॥

॥ कै॰ ॥ नन्विहासति विवृतोपदेशे सावर्ण्याभावादकारेणाऽऽकारस्याग्रहणादच्त्वाभावात्कथमतिखट्व इति
ह्रस्वः । नैष दोषः । उदीचामातः स्थान इति ज्ञापकाद्भवति आकारस्य ह्रस्वः ॥

॥ वि॰ ॥ उदीचामात इति । नचापोऽन्यतरस्यामिति ह्रस्वे चरितार्थमिदं नचाचाच्परिभाषोपतिष्ठते फलाभावादितिवाच्यम् । शास्त्रस्याल्पविषयतापत्तेः । गोशब्दसाहचर्य्येण स्त्र्यंशेऽप्यचश्चेत्यस्याप्रवृत्तेश्च । तदंशे हि फलाभावान्न प्रवर्तत इति दिक् ॥

॥ वि॰ ॥ नन्वाद्यपक्षे प्रयोजनान्वाख्यानमात्रपरत्वं द्वितीये विवृतोपदेशपरत्वमपीति विशेषस्य स्पष्टत्वादत आह । विवृतोपदेश इत्यत्रेति ।

॥ कै॰ ॥ नैव लोक इति । प्रयुक्तानामनुशासनात्प्रयोगे च विवृतस्याकारस्याभावात्संवृत एव भविष्यतीति प्रत्यापत्तिर्ज्ञापिकैव ।

॥ भा॰ ॥ नैव लोके न च वेदे विवृतोऽकारोऽस्ति । कस्तर्हि । संवृतः । योऽस्ति स भविष्यति । तदेतत्प्रत्यापत्तिवचनं ज्ञापकमेव भविष्यति विवृतस्योपदिश्यमानस्य प्रयोजनमन्वाख्यायत इति । कः पुनरत्र विशेषः । विवृतस्योपदिश्यमानस्य प्रयोजनमन्वाख्यायेत संवृतस्योपदिश्यमानस्य वा विवृतोपदेशश्चोद्येतेति । न खलु कश्चिद्विशेषः । आहोपुरुषिकामात्रन्तु भवानाह संवृतस्योपदिश्यमानस्य विवृतोपदेशश्चोद्यत इति । वयन्तु ब्रूमो विवृतस्योपदिश्यमानस्य प्रयोजनमन्वाख्यायत इति ॥

॥ कै॰ ॥ कः पुनरिति । विवृतोपदेश इत्यत्र कृत इति वा कर्त्तव्य इति वा वाक्यशेषाध्याहारे न कश्चिद्विशेष इत्यर्थः । आहोपुरुषिकेति । अहो अहम्पुरुष इत्यहङ्कारवान् अहोपुरुषः । तस्य भाव इति मनोज्ञादित्वाद्वुञ् अहङ्कारवत्त्वमित्यर्थः ॥

॥ वि॰ ॥ आहोपुरुषिकेत्यत्र वुञः प्राग् मयूरव्यंसकादित्वात्समासः । अहो इति । अहमित्यर्थे । तत्र प्रयोजनान्वाख्यानमित्येव ज्यायः प्रत्यापत्तेः । अकर्त्तृके आज्ञापादनाभावाच्चेत्याहुः ॥



॥ वि॰ ॥ प्रत्यापत्त्या अइउणित्यत्रैव प्रक्रियादशायां सर्वत्राकारो विवृतः प्रतिज्ञात इत्यजानन् शङ्कते भाष्ये । तस्य विवृतोपदेशादिति । तस्येत्यस्य वर्णसमाम्नायस्थस्येत्यर्थः । संवृतस्येति । धात्वादिस्थस्येत्यर्थः । ननु अइउणित्यादौ कस्यानुकरणमित्यत्र विनिगमकाभावादाह ।

॥ कै॰ ॥ तस्येति । यदा प्रत्याहारे विवृतोऽकार उपदिष्टस्तदा प्रयत्नभेदात्तेन संवृतस्याकारस्य ग्रहणाभावादच्कार्य्यं न स्यादिति तत्सिद्धये सर्वस्याकारस्य विवृतत्वं कर्त्तव्यमित्यर्थः । तेन शाम्यतीत्यादौ दीर्घादि सिद्ध्यति । ननु सर्वेषामकाराणां

॥ भा॰ ॥ तस्य विवृतोपदेशादन्यत्रापि विवृतोपदेशः सवर्णग्रहणार्थः । तस्यैतस्याक्षरसमाम्नायिकस्य विवृतोपदेशादन्यत्रापि विवृतोपदेशः कर्त्तव्यः । क्वान्यत्र । धातुप्रातिपदिकप्रत्ययनिपातस्थस्य । किं प्रयोजनम् । सवर्णग्रहणार्थः । आक्षरसमाम्नायिकेनास्य ग्रहणं यथा स्यात् । किञ्च कारणं न स्यात् । विवारभेदादेव । आचार्यप्रवृत्तिर्ज्ञापयति भवत्याक्षरसमाम्नायिकेन धात्वादिस्थस्य ग्रहणमिति ॥

॥ कै॰ ॥ यत्सामान्यं तदनुकरणमत्राकारः तस्य च विवृतत्वे प्रतिज्ञायमाने सर्वेषां तत्प्रतिज्ञातं भवतीति किमुच्यते तस्य विवृतोपदेशादिति । एवं तर्हि यदा कस्यचिदेवाकारस्येदमनुकरणं स्वरूपपदार्थको वाऽकारस्तदेदमुच्यत इत्यदोषः ॥

॥ वि॰ ॥ स्वरूपपदेति । स्वरूपपदार्थकत्वं यथा तथोक्तं भाष्ये । विवारभेदादिति । प्रयत्नभेदादित्यर्थः । ग्राहकस्य विवृतत्वाद् ग्राह्यस्य संवृतत्वादितिभावः ॥

॥ वि० ॥ प्रत्याहारे इति । संग्राहके शास्त्र इत्यर्थः । वक्तव्यमिति । एवञ्च प्रयत्नभेदेनासवर्णस्यापि अत्वजात्याक्रान्तस्य विवृतेनाकारेण ग्रहणं ज्ञाप्यत इत्यर्थः । यद्यप्येकोऽपीति । प्रत्युच्चारणं वर्णान्यत्वात् आक्षरसमाम्नायिकस्य प्रयोगेऽभावादितिभावः । आदिरन्त्येनेत्यस्य चान्त्यसदृशेन सहोच्चार्य्यमाण आदिसदृश इत्याद्यर्थः । तत्र ककारादिचिह्नेनागादिशब्दस्यस्तत्सदृशत्वादिवृत एव ।

॥ कै० ॥ यदयमिति । अत्र हि ककारेण चिह्नेन प्रत्याहारस्थो विवृतो निर्दिष्टः । तेनच संवृतस्याग्रहणे इकः सवर्ण इति

॥ भा० ॥ यदयमकः सवर्णे दीर्घ इति प्रत्याहारेऽको ग्रहणं करोति । कथंकृत्वा ज्ञापकम् ।
नहि द्वयोराक्षरसमाम्नायिकयोर्युगपत्समवस्थानमस्ति ॥

॥ कै० ॥ वक्तव्यम् । नहि द्वयोरिति । यद्यप्येकोऽपि विवृतो नास्ति तथापि द्व्यधिष्ठानत्वादेकादेशस्य द्वयोरित्युक्तम् ॥

॥ वि० ॥ सादृश्यञ्च व्यक्तिभेदे सति सर्वधर्मसाम्यप्रयुक्तं ग्राह्यं तस्यच प्रयोगस्थेऽभावेऽप्यनेन तद्ग्रहणं ज्ञाप्यत इति तात्पर्य्यम् । केचित्तु देवदत्त अजस्तीत्यादौ प्रत्याहारलिङ्गेनैक आक्षरसमाम्नायिकोऽस्ति तदर्थं भाष्ये द्वयोरित्युक्तमित्याहुः । भाष्ये युगपत्समवस्थानमित्यस्य प्रयोगे इत्यादिः ॥



॥ वि० ॥ नैतदिति । अक इत्यकारेण विवृतेन दीर्घस्य विवृतस्य ग्रहणादज्ञापकमेतदित्यर्थः । क एष यत्न इति । धात्वादयः पठिताः

॥ भा० ॥ नैतदस्ति ज्ञापकम् । अस्तिह्यन्यदेतस्य वचने प्रयोजनम् । किम् । यस्याऽऽक्ष-
रसमाम्नायिकेन ग्रहणमस्ति तदर्थमेतत्स्यात् । खट्वाढकं मालाढकमिति । सति प्रयोजने न ज्ञा-
पकं भवति । तस्माद्विवृतोपदेशः कर्त्तव्यः । क एष यत्नश्चोद्यते । विवृतोपदेशो नाम ।
विवृतो वा उपदिश्येत संवृतो वा । को न्वत्र विशेषः ॥

॥ वि० ॥ तत्राकारो विवृतः पठ्यतां नहि किञ्चिद्गौरवं भवति तत्किमुच्यते ऽन्यत्रापि विवृतोपदेशः कर्त्तव्य इति प्रश्नः ॥

९२ ॥ वि॰ ॥ एवमर्थ इति । इत्त्वावेवं शब्दः प्रकारवति वर्तते इति बहुव्रीहिः । प्रातिपदिकानीति । धातुप्रत्यययोरप्युपलक्षणं बोध्यम् । सर्वाण्यग्रहणानि प्रातिपदिकादीनि विवृताकारयुक्तानि पठनीयानीत्यर्थः । तद्गुरु भवति तस्मादिति । यतः सर्वोच्चारणं गुरु अतो धात्वादिस्थ इतिवाच्यमित्यर्थः । ननु धातूनां बहुधा पाठाद् धात्वादीत्ययुक्तमत आह । अग्रहणेति । प्रातिपदिकेत्युपलक्षणम् ।

॥ कै॰ ॥ यानीति । प्रतिपदपाठस्याशक्यत्वात्तस्य विवृतोपदेशादित्यनेन वचनेन सर्वस्याकारस्य विवृतोपदेशः कार्यतया चोद्यत इत्यर्थः । धात्वादिस्थ इति । अग्रहणप्रातिपदिकार्थे विवृतत्वेऽवश्यचोदनीये धात्वादिस्थस्यापि

॥ भा॰ ॥ स एष सर्व एवमर्थो यत्नो यान्येतानि प्रातिपदिकान्यग्रहणानि तेषामेतेनाभ्युपा-
येनोपदेशश्चोद्यते तद् गुरु भवति तस्माद्वक्तव्यं धात्वादिस्थश्च विवृत इति ॥

॥ कै॰ ॥ संवृतस्यैव पठितस्य कार्य्यार्थं विवृतत्वं प्रतिज्ञेयम् । अन्यथा दोषरूपविवृतोच्चारणे प्रयत्नस्य गौरवं स्यात् ॥

॥ वि॰ ॥ धात्वादिस्थस्यापीति । पठितधात्वादिस्थस्यापीत्यर्थः । एतेनाग्रहणधात्वादीत्येव वक्तुमुचितमित्यपास्तम् । संवृतस्यैवेति । एवं धात्वादिस्थश्च विवृतवत्कार्य्यं लभत इत्यतिदेशोऽयमितिभावः । अन्यथेति । गुणोच्चारणाद्दोषोच्चारणे यत्नाधिक्यमितिभावः ॥

९३ ॥ वि॰ ॥ ननु संवृतयोस्तयोरभावेऽपि संवृतस्य विवृतौ न स्यातामेव आन्तरतम्याभावात् । नचैको यणिव एच इगिवानन्तरतमावपि भवि- ष्यतः सामर्थ्येन तत्र तथाङ्गीकारेऽपि खट्वाढकमित्यादौ चरितार्थस्याकः सवर्ण इत्यादेर्विषये तथा कल्पने मानाभावादत आह । असत्यपीति ।

॥ कै॰ ॥ विवृतत्वप्रतिज्ञाने प्रयोजनान्तरमाह । दीर्घेति । असति विवृतत्वप्रतिज्ञाने संवृतस्य स्थाने सावर्ण्यात्

॥ भा॰ ॥ दीर्घप्लुतवचनेच संवृतनिवृत्त्यर्थः । दीर्घप्लुतवचनेच संवृतनिवृत्त्यर्थो विवृतोप-
देशः कर्त्तव्यः । दीर्घप्लुतौच संवृतौ माभूतामिति । वृक्षाभ्यां देवदत्ता३ इति । नैव लोके नच
वेदे दीर्घप्लुतौ संवृतौ स्तः । कौ तर्हि । विवृतौ । यौ स्तस्तौ भविष्यतः । स्थानी प्रकल्पयेदे-
तावनुस्वारो यथा यणम् । संवृतस्थानी संवृतौ दीर्घप्लुतौ प्रकल्पयेत् । अनुस्वारो यथा यणम् ।
तद्यथा । संय्यँन्ता संव्वँत्सरः । यँल्लोकं तँल्लोकमिति । अनुस्वारः स्थानी यणमनुनासिकं
प्रकल्पयति ॥

॥ कै॰ ॥ संवृतयोरेव दीर्घप्लुतयोः प्रसङ्ग इत्यर्थः । नैव लोक इति । असत्यपि सावर्ण्ये लिङ्गादकारस्य संवृ-
तस्य विवृतौ दीर्घप्लुतौ भविष्यतः । यदयमतो दीर्घो यञि अतोरोरप्लुतादप्लुत इत्याहेतिभावः ॥

॥ वि॰ ॥ सावर्ण्ये इति । आन्तरतम्ये इत्यर्थः । एवञ्चातो दीर्घ इति अतो रोरित्यत्राप्लुतादित्यतो विशेषणाच्च सामान्यापेक्षं ज्ञापकमितिभावः । संवृतदी- र्घादिवदनुनासिकयवलानामपि वेदलोकयोरसत्त्वं मन्यमान आह भाष्ये । स्थानी प्रकल्पयेदित्यादि ॥

॥ वि० ॥ तद्वत् विवृतौ दीर्घप्लुतावपि कुतो न सन्तावित्यत आह । अशक्यत्वादिति । केचित्तु शिष्टसम्मतत्वात्ते सन्तः । इमौतु न तथेतिभाव इत्याहुः ।

॥ कै० ॥ सतस्तचेति । अशक्यत्वाद्दीर्घप्लुतयोः संवृतयोरुच्चारणस्येत्यर्थः । एवमपीति । असति विवृतत्वप्र-

॥ भा० ॥ विषम उपन्यासः । युक्तं यत्सतस्तत्रप्रकृप्तिर्भवति । सन्ति हि यणः सानुनासिका निरनुनासिकाश्च । दीर्घप्लुतौ पुनर्नैव लोके नच वेदे संवृतौ स्तः । कौ तर्हि । विवृतौ । यौ स्तस्तौ भविष्यतः । एवमपि कुत एतत् तुल्यस्थानौ प्रयत्नभिन्नौ भविष्यतः । न पुनस्तुल्यप्रयत्नौ स्थानभिन्नौ स्यातामीकार ऊकारो वेति । वक्ष्यति स्थाने ऽन्तरतम इत्यत्र स्थान इति वर्त्तमाने पुनः स्थाने ग्रहणस्य प्रयोजनं यत्रानेकविधमान्तर्यन्तत्र स्थानत आन्तर्यं बलीयो यथा स्यादिति ॥

॥ कै० ॥ तिन्नाने संवृतस्याकारस्य संवृतावेवेकारोकारौ प्राप्नुतः । व्यृतः संवृता अन्यत्रार्भवसाम्न इति कैश्चिदी-कारोकारयोः संवृतत्वाभ्युपगमात् ॥

॥ वि० ॥ सन्ति हि यण इति । भाष्ये यण इति बाहुल्याभिप्रायेण रेफस्यानुनासिकत्वाभावादितिबोध्यम् । नन्वीकारोकारयोः कथं संवृतत्वमत आह व्यृतः संवृता इति । इउक्कृत इत्यर्थः । क्वचित्तु व्यत इतिपाठः इकारोकारा ऽकारा इत्यर्थः ॥



॥ वि० ॥ एवञ्चाद्यप्रयोजनार्थमेव सर्वत्राकारस्य विवृतत्वं प्रतिज्ञेयमिति स्थिते शङ्कते भाष्ये । तत्रानुवृत्तीति । एतद्विशेषणोपादानस्य फलमाह । अकः सवर्ण इति । अनण्त्वादिति । अक्षरसमाम्नायेऽपठितत्वादाकारस्येवानण्त्वमित्यर्थः । प्रत्युच्चारणं भेदेऽपि अक इत्यादौ ककारेण चिह्नेनैतदनुकरणत्वानुमानमितिभाव : । तदनुगत इति । साक्षाल्लक्ष्यसंस्कारकबोधजनक इत्यर्थः ।

॥ कै० ॥ तत्रानुवृत्तिनिर्देश इति । अकः सवर्णे दीर्घ इत्यादावयमेवाकारोऽनुकृत इति ककारादिना चिह्नेन ज्ञायते ततश्चाणत्वात्तस्य ग्राहकत्वमस्तु अस्यच्चावित्यादौत्वकारस्यानण्त्वाद्ग्राहकत्वन्न प्राप्नोतीत्यर्थः । वृत्तिः शास्त्रस्य लक्ष्ये प्रवृत्ति-

॥ भा० ॥ तत्रानुवृत्तिनिर्देशे सवर्णाग्रहणमनण्त्वात् । तत्रानुवृत्तिनिर्देशे सवर्णानां ग्रहणं न प्राप्नोति । अस्यच्वौ यस्येतिच । किं कारणम् । अनण्त्वात् । नह्येते अणः । येऽनुवृत्तौ । के तर्हि । ये अक्षरसमाम्नाये उपदिश्यन्ते । एकत्वादकारस्य सिद्धम् । एकोऽयमकारो यश्चाक्षरसमाम्नाये यश्चा-नुवृत्तौ यश्च धात्वादिस्थः ॥

॥ कै० ॥ स्तदनुगतो निर्देशोऽनुवृत्तिनिर्देशः । एकत्वादकारस्येति । एकैवाकारव्यक्तिः । उदात्तादिभेदप्रतिभासस्तु व्यञ्जकध्वनिकृतः । खड्गतैलादर्शादिभेदे प्रतिबिम्बप्रतिभासभेदवत् । अकारस्य निदर्शनार्थत्वादिकारादीनामप्यैक्यं बोध्यम् ॥

॥ वि० ॥ ननूदात्तादिविरुद्धधर्माध्यासाद्भेदः स्यादत आह । उदात्तादीति । प्रतिबिम्बप्रतिभासभेदवदिति । भिन्नभिन्नाकारप्रतिबिम्बप्रतिभासवदित्यर्थः । इकारादीनामपीति । सर्वध्वनिभिरेकस्य स्फोटस्यैव तत्तद्रूपेणाभिव्यञ्जनात् । तत्तद्रूपाभिव्यक्तिकृतश्च परस्परं भेदव्यवहारोऽपीतिभाव: ॥

९६

॥ वि० ॥ भाष्ये ऽनुबन्धसङ्कर इत्यस्यानुबन्धकार्यसङ्कर इत्यर्थः । ङीवादीति । टिड्ढेत्यादिना । आदिना णित्त्वप्रयुक्तयुक् । पर्यायेण कित्त्वणित्त्वप्रयुक्तकार्य्ययोरप्यविरोध इतिभावः ।

॥ कै० ॥ अनुबन्धसङ्कर इति । एकत्वे काणटगादीनां भेदाभावाङ्गोदादौ ङीवादिः प्राप्नोति । किरिणेति । नगोश्वन्सावर्णेति प्रतिषेधादकारो नोदाहृतः । घटेनेति । एक एवाकारो दिरुच्चार्य्यत इति द्यच्त्वाभावः ।

॥ भा० ॥ अनुबन्धसङ्करस्तु । अनुबन्धसङ्करस्तु प्राप्नोति । कर्मण्यण् आतोऽनुपसर्गे क इति केऽपि णित्कार्यं प्राप्नोति । एकाजनेकाज्ग्रहणेषु चानुपपत्तिः । एकाजनेकाज्ग्रहणेषु चानुपपत्तिः प्राप्नोति । तत्र को दोषः । किरिणा गिरिणा इत्येकाऽलक्षणमन्तोदात्तत्वं प्राप्नोति । इहच घटेन तरति घटिक इति द्यज्लक्षणष्ठन्न प्राप्नोति । द्रव्यवच्चोपचाराः । द्रव्यवच्चोपचाराः प्राप्नुवन्ति । तद्यथा । द्रव्येषु नैकेन घटेनानेको युगपत्कार्यं करोति । एवमिममकारन्नानेको युगपदुच्चारयेत् ॥

॥ कै० ॥ ठंस्तु वाहुकादिष कृतार्थः । द्रव्यवदिति । उपचारो व्यवहारः । यथैकेन घटेनोदकाहरणा-दिक्रियां युगपदनेको न करोति तथैकमकारं युगपदनेको नोच्चारयेदित्यर्थः ॥

॥ वि० ॥ भाष्येऽनुपपत्तिरिति । इष्टव्यवस्थाया इतिभावः । अव्याप्त्यतिव्याप्त्योः प्रसङ्गादिति तात्पर्यम् । प्रतिषेधादिति । सावेकाच इति प्राप्तस्येत्यर्थः । ठंस्त्विति । नेद्यचष्ठन्निति विहितः ॥

९७

॥ वि० ॥ करणत्वेनेति । अधिकरणस्य करणत्वविवक्षयेत्यर्थः । सामान्यरूपतयेति । विषयत्वरूपेणेत्यर्थः । भाष्यकारस्त्विति । एकविषये नानालिङ्गकरणादर्शनादिषयभेदेन तदित्यत्र तात्पर्य्यम् । गुणा उदात्तादय इतिभ्रमं व्यावर्त्तयति । गुणा अनुबन्धा इति ।

॥ कै० ॥ विषयेणेति । वार्त्तिककारेण करणत्वेन सामान्यरूपतयाचाभेदेन विषयो निर्द्दिष्टः । भाष्यकारस्त्वधिकरणत्वं व्यक्तिभेदाद्दीप्साञ्च प्रतिपादयति । विषये विषय इति । सर्वगुणमिति । गुणाश्च अनुबन्धाः कार्यायाश्रितत्वादुपकारकत्वात्तत्र कर्मणि कणिति ब्रूयादित्यर्थः । शल्य-कवदिति । शल्यकः प्राणिविशेषः । स यथा कण्टकतुल्यैः पक्षैर्व्याप्यते नैवं सर्वानुबन्धयुक्तोऽकारः शक्यो निर्द्देष्टुम् । आद्यन्तयोरेवेत्सञ्ज्ञाविधानाद्

॥ भा० ॥ विषयेणतु नानालिङ्गकरणात्सिद्धम् । यदयं विषये विषये नानालिङ्गमकारङ्करोति । कर्मण्यण् आतोऽनुपसर्गे क इति । तेन ज्ञायते । नानुबन्धसङ्करोऽस्तीति । यदिहि स्यात् नानालिङ्गकरणमनर्थकं स्यात् । एकमेवायं सर्वगुणमुच्चारयेत् । नैतदस्ति ज्ञापकम् । इत्सञ्ज्ञाप्रक्लृप्त्यर्थमेतत्स्यात् । नह्यनुबन्धैः शल्यकवच्छक्य उपचेतुम् । इत्सञ्ज्ञायां हि दोषस्स्यात् । आयम्य हि दयोरित्सञ्ज्ञा स्यात् । कयोः । आद्यन्तयोः । एवन्तर्हि विषयेण तु पुनर्लिङ्गकरणात्सिद्धम् । यदयं विषये विषये पुनर्लिङ्गमकारङ्करोति । प्राग्दीव्यतोऽण् शिवादिभ्योऽणिति । तेन ज्ञायते । नानुबन्धसङ्करोऽस्तीति । यदि हि स्यात् पुनर्लिङ्गकरणमनर्थकं स्यात् । अथवा पुनरस्तु विषयेणतु नानालिङ्गकरणात्सिद्धमित्येव । ननूचोक्तमित्सञ्ज्ञाप्रक्लृप्त्यर्थमेतत्स्यादिति । नैष दोषः । लोकत एतत्सिद्धम् ॥

॥ कै० ॥ मध्यपातिनां श्रवणप्रसङ्गात् । इत्सञ्ज्ञैवाऽऽयच्छते व्याप्रियत इत्येककर्तृकत्वादायम्येत्युक्तम् । एवन्तर्हीति । विषयेणेत्येतद-न्यथा व्याचष्टे । नानाशब्दमपनीय पुनः शब्दम्पठित्वा यद्यनुबन्धसङ्करस्स्यात् अकारमेव शिवादिभ्यो विदध्यात् । अथोच्येत णित्कृतमेव यथा स्यात् ञित्कृतम्माभूत् इतिनियमार्थमेतत्स्यात् । तन्न । नियमाद्विधेर्बलीयस्त्वात् । अथवेति । न ब्रूमः सर्वगुणमुच्चारयेदिति । किन्तर्हि ॥

॥ वि० ॥ तेषाङ्गुणत्वमुपपादयति । कर्य्यायेति । व्याप्रियते विषयत्वेन गृह्णातीत्यर्थः । एककर्त्तृकत्वादिति । स्यादित्यनेनेत्सञ्ज्ञारूपैककर्तृकत्वादित्यर्थः । नाने-तिस्थिते कथमन्यथा व्याख्यानमत आह । नानाशब्दमिति । नियमादिति । ज्ञापकत्वे हि विध्यर्थत्वमितिभावः । अत्र वाक्यद्वयेऽपि तुशब्दः पूर्वपक्षव्यावृत्तौ ॥

॥ वि॰ ॥ यथा लोके इति । प्रभ्वाज्ञया गूढचरादिरितिशेषः । एवञ्च लोकव्यवहारदृष्टान्तेनैवासङ्करसिद्ध इत्यर्थः । यत्र । देशे काले वा । तद्गुण एवेति । भाष्येऽपि तल्लिङ्गस्तत्रेति सावधारणं व्याख्येयमितिभावः । यथा विकृतियागे इति । तत्र हि प्राप्तसामिधेन्यनु-

॥ कै॰ ॥ यथा लोके इह मुण्डो भव इह नग्नो भवेति यद्गुणको यत्रोच्यते तद्गुण एव तत्र भवति ।
एवमिहापि याभ्यः प्रकृतिभ्यो यदनुबन्धविशिष्टो विधीयते तासु तदनुबन्धनिमित्तमेव कार्य्यं सम्पादयति ।

॥ भा॰ ॥ तद्यथा । लोके कश्चिद्देवं देवदत्तमाह इह मुण्डो भव इह जटिलो भव इह
शिखी भवेति । यल्लिङ्गो यत्रोच्यते तल्लिङ्गस्तत्रोपतिष्ठते । एवमयमकारो यल्लिङ्गो यत्रोच्यते
तल्लिङ्गस्तत्रोपस्थास्यते । यदप्युच्यते एकाजनेकाज्ग्रहणेषुचानुपपत्तिरिति । एकाजनेकाज्ग्र-
हणेचाऽऽवृत्तिसङ्ख्यानात् । एकाजनेकाज्ग्रहणेच आवृत्तेस्सङ्ख्यानादनेकाच्त्वम्भविष्यति ।
तद्यथा । सप्तदश सामिधेन्यो भवन्तीति । त्रिः प्रथमामन्वाह त्रिरुत्तमामन्वाहेत्यावृत्तितः
सप्तदशत्वम्भवति ॥

॥ कै॰ ॥ आवृत्तिसङ्ख्यानादिति । यथा विकृतियागे त्रयोदश सामिधेन्यः प्रथमोत्तमयोस्त्रिरावृत्त्या स-
प्तदश सम्पद्यन्ते

॥ वि॰ ॥ वादेन सप्तदशत्वं विहितम् । तच्च त्रिः प्रथमामित्यादिवाक्यबोधितया प्रथमोत्तमयोस्त्रिरावृत्त्यैवेतिभावः । त्रिरावृत्त्येति । आवृत्तिः पुनरुच्चार-
णम् । तज्जन्यसङ्ख्यया द्वादशत्ववदत्रानेकाच्त्वमितिभावः । भाष्ये आवृत्तेः सङ्ख्यानात् । गणनादित्यर्थः ॥



॥ वि॰ ॥ भवेदावृत्तितः कार्य्यम्परिहृतमिति । आवृत्त्या कार्य्यं सिद्धमितिकृत्वा दूषणम्परिहृतम्भवेदित्यन्वयः । लिङ्गादिति । अनेन

॥ कै॰ ॥ तथा घटेन तरतीति द्व्यज्लक्षणष्ठन् भवति । ननु मुख्ये विषये कृतार्थत्वाद्वचनस्य गौणन्द्व्यच्त्वङ्क-
थङ्कार्य्यनिमित्तम् । उच्यते । गोद्व्यच इत्यत्राऽश्वशब्दप्रतिषेधाल्लिङ्गादावृत्तिभेदेनापि भेदाश्रये कार्य्यप्रवृत्ति-

॥ भा॰ ॥ एवमिहाप्यावृत्तितोऽनेकाच्त्वम्भविष्यति भवेदावृत्तितः
कार्य्यम्परिहृतम् । इहतु खलु किरिणा गिरिणेति एकाज्लक्षणमन्तो-
दात्तत्वम्प्राप्नोत्येव । एतदपि सिद्धम् । कथम् । लोकतः ॥

॥ कै॰ ॥ भवेदिति गिरिणेत्यादावावृत्तिभेदेऽपि मुख्यमेकाच्त्वन्न निवर्त्तते इतिभावः । एतदपीति ।
लोके पूर्वा सङ्ख्या सङ्ख्यान्तरेण मुख्येन गौणेनच बाध्यत इत्यर्थः ।

॥ वि॰ ॥ लिङ्गेन श्रुतिस्मृतिसिद्धत्वादस्य व्यवहारस्य गौणत्वमेव नेति ज्ञाप्यत इतिभावः । मुख्यमिति । आवृत्तिकृतद्व्यच्त्वेन स्वगतैकाच्त्वस्य बाधायोग
इतिभावः ॥

॥ वि॰ ॥ ननु स्वस्य प्रतिग्रहीतृत्वासम्भवादेकन्यूनता नच पुनर्दानन्दत्तस्यान्यस्वत्वाक्रान्ततया पुनर्दानासम्भवादत आह । वित्तेनेति । ननु षष्ठीसमासे सहस्रसङ्ख्याया विशेष्यत्वात्कथन्दानेन सम्बन्धः कथं वा सम्पन्ना इति बहुवचनान्तेन सामानाधिकरण्यमत आह । ऋषयस्सहस्र-मिति । अत एव सर्वे ते इत्यनेन सामानाधिकरण्यम् । परनिपातो भाष्यप्रामाण्यात् । एकैकश इत्यत्र उभयोरपि द्योतकत्वेन द्योतकसमुच्चयस्यच बहुशो

॥ कै॰ ॥ ऋषिसहस्रमिति । वित्तेन क्रीत्वा प्रत्येकन्दत्त्वा सहस्रदक्षिणा ऋषयस्सम्पन्ना इत्यर्थः ।

॥ भा॰ ॥ तद्यथा । लोके ऋषिसहस्रमेकाङ्कपिलामेकैकशः सहस्रकृत्वो दत्त्वा

॥ कै॰ ॥ ऋषयस्सहस्रम् ऋषिसहस्रमिति कर्मधारये सम्पन्ना इत्यस्य साक्षादृषिभिस्सम्बन्धः ॥

॥ वि॰ ॥ दृष्टत्वेन द्विर्वचनशसोर्यौगपद्यम् । यथा यथाजातीयको गार्ग्यायणीत्यादौ तत्रच यथा ष्फसत्त्वे समुच्चित्य द्योतकता अभावे गार्गीतिङीपैव तथा प्रकृतेऽपि शसो वैकल्पिकत्वात्पक्षे एकैकमित्यपि । द्व्यादिशब्दविषयेतु न समुच्चित्य द्योतकता । अनभिधानात् । एकशब्देतु समुच्चित्य प्रत्येकञ्च द्योतकता । अभिधानस्वभावात् । यत्र तद्धितेनानुक्ता वीप्सा तत्र द्विर्वचनम्भवत्येव यथैकैकशो देहीति । भाष्यस्याप्ययमाशयः । यत्र तद्धितमात्रेण लोके वीप्सानभिधानन्तत्र द्विर्वचनमपि । यत्र माषश इत्यादौ तावतैव वीप्साविधानन्तत्र न कदापि तयोस्समुच्चय इतिदिक् ॥



॥ वि॰ ॥ सामर्थ्यलक्षण इति । सामर्थ्यकृतो गुणभूतैर्ऋषिभिः सम्बन्ध इत्यर्थः । सर्वे ते इत्यत्र तच्छब्देन गुणभूतस्यापि परामर्शोऽत्र पक्षे बोध्यः । अत एव दत्त्वेति समानकर्तृकत्वम् । सहस्रदक्षिणा इति । सहस्रदक्षिणा गोरूपा येषान्दातृणान्ते इत्यर्थः । तेन गोसहस्रदान-फला एव ते नत्वेकगोदानमात्रफला इति व्यवहारो यथा स्मृतौ तथा प्रकृतेऽपीतिभावः ॥

॥ कै॰ ॥ षष्ठीसमासेतु सामर्थ्यलक्षणः सम्बन्धः । यथा ब्राह्मणशतम्भोज्यतामिति भुजेर्ब्राह्मणैस्सह । सम्भ-

॥ भा॰ ॥ तथा सर्वे ते सहस्रदक्षिणाः सम्पन्नाः । एवमिहाप्यनेकाच्त्वम्भविष्यति ।
यदप्युच्यते । द्रव्यवच्चोपचाराः प्राप्नुवन्तीति । भवेद्यदसम्भवि कार्य्यन्तन्नानेको युगप-
त्कुर्य्यात् । यत्तु खलु सम्भवि कार्य्यमनेकोऽपि तद्युगपत्करोति । तद्यथा । घटस्य दर्शनं
स्पर्शनं वा । सम्भविचेदङ्कार्य्यमकारस्योच्चारणन्नाम अनेकोऽपि युगपत्करिष्यति ।

॥ कै॰ ॥ विचेति । एकस्यैवाकारस्य युगपत्स्थानकरणनिष्पन्नध्वनिव्यङ्ग्यत्वात् सर्वैः शक्यमित्यर्थः ।

॥ वि॰ ॥ भुजेर्ब्राह्मणैरिति । सङ्ख्याया भोक्तृत्वानुपपत्तेर्गुणभूतब्राह्मणैरेव भुजेस्सम्बन्ध इतिभावः । भाष्येऽनेकाच्त्वमिति । तन्मात्रमित्यर्थः । एकस्यै-वेति । व्यापकस्येत्यपि बोध्यम् । अकारस्येत्यप्युपलक्षणमित्युक्तम् । भाष्ये उच्चारणन्नामेत्युत्तरमत इति शेषः ॥

॥ वि० ॥ आन्यभाव्यमित्यस्यान्यत्वमित्यर्थो नेत्याह । अन्यस्येति । अथवेति । भावशब्दः कर्तृसाधन इतिभावः । एवञ्च प्रतिप्रयोगमकारस्यान्यत्वमित्यर्थः । यथेति । एवञ्चाग्र इत्याद्यकारो दण्डेत्यकाराद्भिन्नः । दण्ड अग्रमित्यादौ कालव्यवधानात् । दण्ड इहेति प्रयोगे इकारवत् । तथा दण्ड इत्याद्यकारोऽन्याकाराद्भिन्नः । शब्दव्यवायात् । कृतिरित्यादौ तकारव्यवहितेकारवत् । इत्यनुमानैर्भेदे सिद्धे उदात्तादिविरुद्धधर्मप्रत्य-

॥ कै० ॥ एवम्परिहृतेष्वपि तत्र दोषेषु न्यायेनाकारस्य भेदं साधयति । आन्यभाव्यमिति । अन्यस्य भावोऽन्यभावः । ततो ब्राह्मणादिषु स्वार्थे विधानार्थात्पाठात्स्वार्थे ष्यञ् । अथवाऽन्यो भावोऽन्यद्वस्तु तस्य भाव इति भावे ष्यञ् । इह कालशब्दाभ्यां व्यवधानं भिन्नानान्दृष्टम् । यथा असंहितायाम् अइउइत्यादीनाङ्कालव्यवायः । इतितिरित्यादौ शब्दव्यवायः ।

॥ भा० ॥ आन्यभाव्यन्तु कालशब्दव्यवायात् । आन्यभाव्यन्त्वकारस्य । कुतः । कालशब्दव्यवायात् । कालव्यवायात् शब्दव्यवायाच्च । कालव्यवायात् दण्ड अग्रम् । शब्दव्यवायात् । दण्डः । नचैकस्यात्मनो व्यवायेन भवितव्यम् । भवतीतिचेत् । भवत्यान्यभाव्यमकारस्य ॥

॥ कै० ॥ तत्र तकारेण ऋकारेकारयोर्व्यवधानात् । एकत्वेतु व्यवधानन्न दृष्टम् । यथा अ इ उ इति केवलोकार उच्चार्यते तस्मादुदात्तादिगुणभेदात् कालशब्दव्यवायाच्च नानात्वमकारस्य । प्रत्यभिज्ञानञ्चात्वादिसामान्यनिबन्धनम् । यद्यपि शब्दव्यवायेऽपि कालव्यवायोऽस्ति तथापि कालव्यवाय एव द्विधा दर्शितः शब्दशून्यः शब्दवांश्च ॥

॥ वि० ॥ योऽपि पारमार्थिक एवेत्याशयेन तद्भेदादपि भेदसिद्धिरित्यभिप्रेत्याह । उदात्तादीति । नानात्वमकारस्येति । युक्तमितिशेषः । ननु य एवोदात्तोऽकारः स एव देवदत्तेनानुदात्तः कृत इति प्रत्यभिज्ञाविरोधोऽत आह । प्रत्यभिज्ञानञ्चेति ।



॥ वि० ॥ विभुत्वन्निराचष्टे भाष्ये । युगपच्च देशेति । अर्कादिशब्दा एव देशपदेनोच्यन्ते । देशपृथक्त्वेष्विति । देशानाम्पृथक्त्वेषु भेदेषु सत्स्वित्यर्थः । एवं वर्णानामनेकत्वे परेण साधिते वर्णैकत्ववादी एकत्वं स्थापयितुन्तद्दूषणोद्धारमाह भाष्ये । यदि पुनरिति । तत्र शकुनिवदिति दृष्टान्तस्य तद्वत्परिच्छिन्नत्वे न तात्पर्यन्तन्मते तस्य विभुत्वादितिध्वनयन्नाह । कालशब्दाभ्यामिति । व्यक्तिस्फोटवादिन इति । व्यक्तेर्नित्यत्वैकत्ववादिन एकैव

॥ कै० ॥ यदि पुनरिति । कालशब्दाभ्यां व्यञ्जकानामेव ध्वनीनां व्यवायो न व्यङ्ग्यस्येति व्यक्तिस्फोटवादिनो भावः ।

॥ भा० ॥ युगपच्च देशपृथक्त्वदर्शनात् । युगपच्च देशपृथक्त्वदर्शनान्मन्यामहे आन्यभाव्यमकारस्येति । यदयं युगपद्देशपृथक्त्वेषूपलभ्यते अश्वः अर्कः अर्थ इति । न ह्येको देवदत्तो युगपत्स्रुघ्ने मथुरायाञ्च सम्भवति । यदि पुनरिमे वर्णाः शकुनिवत्स्युः । तद्यथा । शकुनय आशुगामित्वात्पुरस्तादुत्पतिताः पश्चाद्दृश्यन्ते ॥

॥ कै ॥ यथा शकुनिः पङ्क्त्यादौ स्थित आशु सञ्चारादन्ते भवति एवं व्यञ्जकध्वनिसन्निधानासन्निधानाभ्यामकारस्योपलम्भानुपलम्भावित्यर्थः ॥

॥ वि० ॥ शब्दव्यक्तिरितिवादिन इत्यर्थः । अनेनाद्यन्दूषणम्परिहृतम् द्वितीयम्परिहरति । यथेति । एवमिति । अस्यानेकदेशेषु युगपदुपलम्भो व्यञ्जकवशादितिशेषः । पूर्वदृष्टस्य पश्चाद्दर्शनेऽपि अव्यवहितस्य व्यवधानेऽपि न भेद इत्येतन्मात्रेण दृष्टान्त इतिभावः । नन्वेवं विभुत्वे नित्यत्वेच सर्वत्र देशे सर्वदोपलम्भापत्तिरत आह । व्यञ्जकेत्यादि ॥

१०४

॥ वि० ॥ जातिस्फोटेति । जातिरेव एका शब्दव्यक्तयस्त्वनन्ता इतिवादीत्यर्थः । भाष्येऽनित्यत्वमेवं स्यादिति । व्यक्तेरेकत्ववादी तस्या-

॥ कै० ॥ जातिस्फोटवादी व्यक्तिस्फोटवादिनं पर्यनुयुङ्क्ते । अनित्यत्वमिति । भवता
जातिस्तावन्नाभ्युपगम्यते । व्यक्तेरेवैकत्वनित्यत्वप्रतिज्ञानात् ।

॥ भा० ॥ एवमयमकारो द इत्यत्र दृष्टो ण्ड इत्यत्र दृश्यते । नैवं शक्यम् ।
अनित्यत्वमेवं स्यात् । नित्याश्च शब्दाः । नित्येषु च शब्देषु कूटस्थैरविचालिभिर्व-
र्णैर्भवितव्यमनपायोपजनविकारिभिः । यदिचायं द इत्यत्र दृष्टो ण्ड इत्यत्र दृश्येत

॥ कै० ॥ तत्रैकत्वं नित्यत्वञ्च नोपपद्यते । दण्ड इत्युदात्तानुदात्तस्वरभेदेन भिन्नत्वात् ।
नह्येकस्यैवोदात्तत्वपरित्यागेनानुदात्तत्वं युक्तम् ॥

॥ वि० ॥ नित्यत्वं मन्यते इतिभावः । ननु विभोरेकस्यापि व्यञ्जकवशादनेकत्रोपलब्धौ कथमनित्यतेत्यत आह । भवतेति । भाष्येऽपि नित्याश्च शब्दा
इत्यस्य तवेत्यादिः ॥

१०५

॥ वि० ॥ भाष्योक्तकूटस्थत्वाभावमुपपादयति । रूपान्तरेति । तस्माद्भिन्ना एवानित्या एवाकारा इतिपाठः । नित्या एवेति पाठस्त्वयुक्तः ।
अनन्तवर्णवादे तदनित्यत्वस्यैवेष्टत्वादितिबोध्यम् । यद्यप्यनुदात्तत्वादीनां ध्वनिनिष्टत्वाङ्गीकारान्न दोषस्तथापि स्फटिकस्येवास्यापि इतरसन्निधा-

॥ कै० ॥ रूपान्तरपरिग्रहादनित्यत्वप्रसङ्गात् । तस्माद्भिन्ना एवानित्या

॥ भा० ॥ नायं कूटस्थः स्यात् । यदि पुनरिमे वर्णा आदित्यवत्स्युः ।
तद्यथा । एक आदित्योऽनेकाधिकरणस्थो युगपद्देशपृथक्त्वेषूपलभ्यते ॥

॥ कै० ॥ एव अकाराः । प्रत्यभिज्ञात्वत्वनिबन्धनेति जातिस्फोटपक्षोऽत्र स्थितः ॥

॥ वि० ॥ नेन तद्रूपपरिग्रहे संसर्गानित्यताविरोधिकूटस्थत्वाभाव इतिभावः । पुनरप्येकत्वनित्यत्वे साधयति भाष्ये । यदि पुनरित्यादिना । एकस्यैवाकार-
स्यानेकदेशेषूपलब्धिरादित्यस्येव भवतीति न तावद् व्यक्तिभेदः सिध्यति । अन्यथा आदित्यस्याप्यनेकत्वापत्तिरनित्यत्वापत्तिश्च तद्देशसंसर्गाणाल्पप्रकाशत्वा-
धिकप्रकाशत्वादिगुणसंसर्गादितिभावः ॥

१०६

॥ वि० ॥ विषम इति । आदित्यदृष्टान्तेनानेकदेशोपलभ्यमानाकारादिपचकैक्यसाधकः प्रत्यभिज्ञायमानत्वहेतुरनेकद्रष्टृकानेकदेशोपलब्धि-विषयत्वरूपोपाधियुक्त इति न तेन भेदसाधकशब्दव्यवायहेतोः सत्प्रतिपक्षता युक्तेतिभावः । अकारं पुनरुपलभत इत्यस्यैको द्रष्टाऽनेकाधि-करणस्थमितिशेषः । शब्दस्याकाशरूपैकाधिकरणत्वेनानेकाधिकरणत्वमयुक्तमित्याशयेनाह भाष्ये । अकारमपि नोपलभत इति । अकारमप्यनेकाधिकरणस्थं नोपलभत इत्यर्थः । श्रोत्रोपलब्धिरिति । श्रोत्र एव उपलब्धिर्यस्येत्यर्थः । करणक्तिन्नन्तेन समानाधिकरणबहुव्रीहिर्वा ॥

॥ कै० ॥ व्यक्तिस्फोटवाद्याह । अकारमपीति । श्रोत्रोपलब्धिरिति । श्रोत्रोपलब्ध्या शब्दस्याकाशदेशत्वं

॥ भा० ॥ विषम उपन्यासः । नैको द्रष्टा आदित्यमनेकाधिकरणस्थं युगपद्देशपृथक्त्वेषूप-लभते । अकारं पुनरुपलभते । अकारमपि नोपलभते । किं कारणम् । श्रोत्रोपलब्धि

॥ कै० ॥ प्रतिपादयति । आकाशप्रदेशविशेषस्य श्रोत्रत्वादिन्द्रियाणामसम्बद्धविषयाग्रहणा-

॥ वि० ॥ एतद्विशेषणफलं दर्शयति । श्रोत्रेति । ननु दिश एव श्रोत्रत्वात् कथं तत्रोपलब्ध्याकाशदेशत्वसिद्धिरत आह । आकाशेति । कर्णशष्कुल्यवच्छिन्नं नभ एव श्रोत्रं चक्षुरादिवच्छ्रोत्रस्यापि भूतत्वमावश्यकमितिभावः । दिशोऽनतिरिक्तमेवचाकाशमितितत्त्वम् । ननु तथाप्यतेजोंऽशगतघटादिरूपस्य तैजसचक्षु-र्ग्राह्यत्ववदनाकाशदेशगतस्यापि शब्दस्याकाशात्मकश्रोत्रग्राह्यत्वं किं न स्यादित्याशङ्क्य किमसम्बद्धं तद् ग्राहकं सम्बद्धं वा नाद्य इत्याह । असम्बद्धेति । अन्यथा रामेश्वरादिप्रदेशावच्छिन्नशब्दस्यापि श्रवणप्रसङ्गः ॥

१०७

॥ वि० ॥ द्वितीयेऽपि किं श्रोत्रस्य विषयदेशगमनात्सम्बन्ध उत शब्दस्य श्रोत्रदेशगमनात् नोभयमपीत्याह । गमनाभावादिति । श्रोत्र-स्यचेति चेन शब्दपरिग्रहः । उभयोरपि गमनाभावे हेतुर्निष्क्रियत्वम् । दूरदेशस्थशब्दाग्रहणान्तु दूरत्वादेर्दोषस्य प्रतिबन्धकत्वाच्छ्रोत्रदेशेऽन-भिव्यक्तेः । आकाशदेशत्वेच तद्देव तस्यापि व्यापकत्वेन श्रोत्रदेशेऽभिव्यक्तस्य तेन ग्रह इतिभावः । आहङ्कारिकाणीन्द्रियाणीति साङ्ख्यमतेऽपि इन्द्रियाणां स्वाधिष्ठानभूतवृत्तिगुणग्राहकत्वनियमादाकाशदेशत्वं श्रोत्रोपलब्ध्या शब्दस्य सिध्यतीतिबोध्यम् ।

॥ कै० ॥ श्रोत्रस्यच निष्क्रियत्वाद्गमनाभावादाकाशदेशत्वं शब्दस्यावश्याभ्युपेतव्यम् । बुद्धिनिर्ग्राह्य इति ।

॥ भा० ॥ बुद्धिनिर्ग्राह्यः ।

॥ कै० ॥ पूर्वपूर्वध्वन्युत्पादिताभिव्यक्तिजनितसंस्कारपरम्पराप्राप्तपरिपाकान्त्यबुद्धिनिर्ग्राह्य इत्यर्थः ॥

॥ वि० ॥ श्रोत्रोपलब्धिरित्येव बुद्धिनिर्ग्राह्यत्वस्योक्तत्वात्पौनरुक्त्यमाशङ्क्याह । पूर्वपूर्वेति । एवञ्चाशु तिरोधीयमानानेकवर्णवद् घटकलशादिशब्दग्रहणसम्भ-वदर्शनाय तदुक्तमिति न पौनरुक्त्यम् । प्राप्तपरिपाकेति । तत्सहकृतेत्यर्थः । अन्त्यबुद्धिरन्त्यवर्णबुद्धिः । एवञ्च तादृशसंस्कारविशिष्टान्तःकरणसंयुक्तेन तादृ-शसंस्कारविशिष्टेन श्रोत्रेणान्त्यवर्णसम्बद्धेन वर्णसमुदायप्रतिबिम्बवदखण्डस्फोटरूपपदादिप्रत्यक्षमितिभावः ॥

१०८

॥ वि० ॥ नन्वेवं सर्वदा शब्दोपलम्भः स्यादतो भाष्ये प्रयोगेणाभिज्वलित इति । तद् व्याचष्टे । प्रयुज्यत इति । ध्वनिरिति । वर्ण इत्यर्थः । भाष्ये एकञ्च पुनराकाशमिति । एवञ्चैकस्मिन्नाम्रफले एक एव यथा रूपरसगन्धादिस्तथा तदाश्रयस्यैकत्वात् तद्गतशब्दोऽप्येक एव तत्रैवच तस्योपलम्भ इति भिन्नदेशोपलम्भ एवासिद्ध इतिभावः । नन्वेकत्वेऽयं पूर्वोऽयं परोऽयं देवगृहे ऽयं राजगृह इति भेदप्रतिभासः कथमत आह । देशभेदेनत्विति । औपाधिको भेदस्तु आकाशस्येव न शब्दस्याप्येकत्वे वाधकः ।

॥ कै० ॥ प्रयोगेणेति । प्रयुज्यत इति प्रयोगो ध्वनिस्तेनाभिव्यक्तः । देशभेदेनतु प्रतिभासो भिन्नदेशावस्थितपुरुषोदीरिताभिव्यञ्जकध्वनिकृतः । भेदवाद्याह । आकाशदेशा इति । यथा पृथिव्या एकत्वे

॥ भा० ॥ प्रयोगेणाभिज्वलित आकाशदेशशब्दः । एकञ्च पुनराकाशम् । आकाशदेशा अपि बहवः । यावता बहवस्तस्मादान्यभाव्यमकारस्य ॥

॥ कै० ॥ ऽपि स्रुघ्नमथुरादिदेशव्यवहार एवमाकाशस्यापि संयोगिघटादिपदार्थावच्छेदेन भेदव्यवहार इत्यर्थः । एवं व्यक्तिस्फोटपक्षे निराकृते जातिस्फोटपक्ष एवाश्रीयते ॥

॥ वि० ॥ एवं संसर्गानित्यतापि तस्येव नास्यापि वाधिका । तस्यापि नीलं नभ इत्यादिसंसर्गानित्यताप्रतीतेरित्याशयः । अत्र शब्द इत्येकवचनेन स्फोटस्यैकत्वमखण्डत्वञ्च ध्वनितम् । ननु निरवयवस्य कथं प्रदेशवाहुल्यमत आह । यथेति । एवञ्चौपाधिकभेदेन भेदो दुर्वारस्सर्वत्र भेद औपाधिक एव स एवच व्यवहारोपयोगीत्याशयः । श्रोत्रसम्बन्धस्तु प्रदेशान्तरोत्पन्नशब्दस्यापि वीचीतरङ्गन्यायेन कदम्बमुकुलन्यायेन वा तन्त्रान्तरे व्युत्पादित एव ॥

१०९

॥ वि० ॥ तत्रापि पक्षेऽस्य च्वावित्यादौ दोषो नेत्याह भाष्ये । आकृतिग्रहणादिति । तदाह । अकारजातिरिति । सर्वप्रदेशेष्विति । प्रत्याहारेऽस्य च्वावित्यादौच । अकारव्यक्तीनामानन्त्यमाश्रित्य वार्त्तिककृता वर्णसमाम्नायस्थस्य विवृतत्वेऽपि धात्वादिस्थस्यापि विवृतोपदेशो नोदितः । भाष्यकृतातु प्रयोगस्थानां प्रत्याहारस्थैर्ग्रहणाय तत्र जातिनिर्देशे आवश्यके जातेर्विवृतत्वप्रतिज्ञानेनैव सर्वसिद्धेः स दोषो वारितः । अस्य च्वावित्यादौतु सत्यपि विवृतत्वेऽनण्त्वात्सर्वावर्णग्रहणं न स्यादित्यपि जातिनिर्देशेनैव परिहृतम् । एवञ्चाणुदित्सूत्रे ऽणग्रहणं न कार्यमित्याशयः । तस्याश्चेति । स्वाश्रयव्यक्तिद्वा-

॥ कै० ॥ आकृतिग्रहणादिति । अकारजातिः सर्वप्रदेशेषु निर्दिश्यते नान्तरीयकस्तु व्यक्तिनिर्देशः । तत्र प्रत्याहारेऽकारजातेर्निर्देशात् तस्याश्च विवृतत्वप्रतिज्ञानाच्छास्त्रान्तेच तस्या एव प्रत्यापत्तिविधानं तदेवं जातिनिर्देशादनुवृत्ति-

॥ भा० ॥ आकृतिग्रहणात् सिद्धम् । अवर्णाकृतिरुपदिष्टा सर्वमवर्णकुलं ग्रहीष्यति तथेवर्णाकृतिस्तथोवर्णाकृतिः ॥

॥ कै० ॥ निर्देशस्थेनाकारेण ग्रहणमाकारस्य सिद्धम् । अष्टन आ विभक्तावित्यत्रतु सत्यपि जातिनिर्देशे दीर्घोच्चारणसामर्थ्याद्ध्रस्वस्य ग्रहणं न भवति । अन्यथा ह्रस्वमेवोच्चारयेत् । प्लुतश्च विषये स्मृत इतिन्यायात्प्लुतस्याग्रहणम् ।

॥ वि० ॥ रेत्यर्थः । तत्र प्रत्यापत्तिवाक्ये तपरनिर्देशात्पक्षमेकशेषनिर्देशाद्वा ह्रस्वस्यैव संवृतत्वं बोध्यम् । ननु जातिनिर्देशेऽतिप्रसङ्ग इत्याह । अष्टन इति । अन्यथा ह्रस्वमेवेति । नच तन्निर्देशेऽन्तरतमपरिभाषया दीर्घो न स्यादिति दीर्घविधानं दीर्घनिर्देशेतु तत्सामर्थ्यात्तस्यापि विधानं जातिग्रहणादन्यस्यापीतिवाच्यम् दीर्घनिर्देशसामर्थ्येनान्तरतमपरिभाषावाधकल्पनापेक्षया ह्रस्वानुपस्थितेरेव कल्पने लाघवमित्याशयात् । ननु दीर्घोच्चारणसामर्थ्यान्माभूद्ध्रस्वः प्लुतस्तु स्यादत आह । प्लुतश्चेति । विषये दूराद्धूतादौ । अनेनापि प्लुतविधानेंऽशेऽनुवाददोषः स्यादितिभावः ॥

११०

॥ वि॰ ॥ सर्वत्राकृतिर्निर्द्दिष्टेत्यत्र ज्ञापकमाह भाष्ये । तद्वच्चेति । सादृश्ये वतिभ्रमं व्यावर्त्तयति । स इति । अथवा वत्यन्तमेतदिति । तद्वदित्यस्यास्य च्चावित्यादिवदित्यर्थः । तदाह । तत्र न्यायेनेति । तत्रास्य च्चावित्यादौ । आकृतिग्रहणप्रयुक्तातिप्रसङ्गनिवारणार्थमेव हि तत्र तत्र तपरकरणम् । जातिपक्षेऽपि विहतत्वप्रतिज्ञाऽकःसवर्णे इत्यादेर्दण्डाऽऽनतिरित्यादौ दीर्घार्थमावश्यिकैव ।

॥ कै॰ ॥ तद्वच्चेति । स आकृतिपक्षो यत्रास्ति तत् तद्वत् । अथवा वत्यन्तमेतत् ।

॥ भा॰ ॥ तद्वच्च तपरकरणम् । एवञ्च कृत्वा
तपराः क्रियन्ते । आकृतिग्रहणेनातिप्रसक्तमिति ।

॥ कै॰ ॥ तत्र न्यायेनाकृतिपक्षस्य स्थापितत्वात् तपरेष्वपि स एव पक्षः स्थित इत्यर्थः ।

॥ वि॰ ॥ एवं प्रत्यापत्तिवचोऽप्यावश्यकमेव तुल्यन्यायात् । जातिग्रहणप्रयुक्तातिप्रसङ्गनिवारणाय तपरत्ववद्विधेये त्यदादीनाम इत्यादौ तद्वारणायाप्रत्यय इत्येतदितिवोधितम् । अत्र पक्षेऽणग्रहणप्रत्याख्यानेऽपि ऋलृवर्णयोः सावर्ण्येन समानजातित्वातिदेशान्न दोष इतिभावः ॥

१११

॥ वि॰ ॥ आवात्तामिति । वसेर्लुङ् तसस्ताम् सिच् सः सीति तत्वं वदव्रजेति वृद्धिः झलो झलीति सलोपः । ननु वचनसामर्थ्यात् झल्सद-

॥ कै॰ ॥ हल्ग्रहणेषुचेति । अवश्याश्रयणीयतामाकृतिपक्षस्य दर्शयति । व्यक्तिपक्षे ह्येकस्यैव तकारस्यानुकरणं खफछठेत्यत्र तकार

॥ भा॰ ॥ ननुच सवर्णग्रहणेनातिप्रसक्तमितिकृत्वा तपराः क्रियेरन् । प्रत्याख्यायते तत् । सवर्णेऽण्-
ग्रहणमपरिभाष्यमाकृतिग्रहणादनन्यत्वाच्चेति । हल्ग्रहणेषुच । किम् । आकृतिग्रहणात्सिद्धमित्येव ।
झलो झलि । अवात्ताम् । अवात्तम् । अवात्त । यत्रैतन्नास्ति अण् सवर्णान् गृह्णातीति ॥

॥ कै॰ ॥ इति द्वयोस्तकारयोर्झल्त्वं न स्यात् । अपित्वेकस्यैवेत्यवात्तामित्यत्र सिज्लोपो न स्यात् । अभित्था इत्यादावेवतु स्यात् ॥

॥ वि॰ ॥ थेऽपि भविष्यतीत्यत आह । अभित्था इति । भिदेर्लुङि सचि रूपम् ॥

११२

॥ वि० ॥ आकृत्यनाश्रयणेऽप्याह भाष्ये । रूपसामान्यादिति । तद्व्याचष्टे व्यक्तीति । अभेदव्यवहार इति । रूपसादृश्यनिबन्धनप्रत्यभिज्ञाकृताभेदव्यवहार इत्यर्थः । अल्पमहत्स्थूलकृशह्रस्वदीर्घगोघटादिषु गौर्घट इत्यादिव्यवहारवदितिभावः ।

॥ कै० ॥ रूपसामान्यादिति । व्यक्तिनिर्देशेऽपि भेदापरामर्शेन लोकवदभेदव्यवहारोऽप्यस्तीति सिद्धमि-

॥ भा० ॥ रूपसामान्याद्वा । रूपसामान्याद्वा सिद्धमेतत् । तद्यथा । तानेव शाटकान् आच्छादयामो ये मथुरायाम् । तानेव शालीन् भुञ्ज्महे ये मगधेषु । तदेवेदं भवतः कार्षापणं यन्मथुरायां गृहीतम् । अन्यस्मिंश्चान्यस्मिंश्च रूपसामान्यात्तदेवेदमिति भवति एवमिहापि रूपसामान्यात्

॥ कै० ॥ ष्टम् । व्यक्तिव्यतिरिक्तन्तु सामान्यं भवतु वा मा वा भूत् सर्वथा लोक इव शास्त्रे व्यवहार इत्यर्थः ॥

॥ वि० ॥ एवञ्च व्यक्तिव्यतिरिक्तजातिस्वीकारोऽपि व्यर्थ एवेत्याशयेनाह । व्यक्तिव्यतिरिक्तन्त्विति । मा वेति । अनुगतप्रतीतिव्यवहारयोस्सादृश्येनैवोपपत्तेरिति भावः । सादृश्यञ्चात्र समानध्वनिकृतम् ॥

११३

॥ वि० ॥ ऋलृक् । भाष्ये अथ लकारेति । यद्यप्येतच्चतुर्दशसत्री विवृतौ नन्दीश्वरकृतकाशिकायामनेकेषामृषीणां नानाविधार्थजिज्ञासायां शिवेन सर्वजिज्ञासानिवृत्तये एषा ढक्कानिनादेन प्रकाशितेत्युक्तमितीदमनुपपन्नं तथापि पाणिन्युद्देश्यकं फलमस्ति न वेति एतत्तात्पर्यम् । अन्त्यवर्णचतुर्दशकन्तु पाणिन्युद्देशेनैवोपदिष्टमित्यपि तत्रैव स्पष्टम् । प्रयोगविषय इति कर्मधारयः । प्रयोगादन्यत्रानभिव्यज्यमानतया प्रयोगो विषय इत्युक्तः ।

॥ कै० ॥ ऋलृक् । अल्पीयानिति । ऋकारापेक्षः प्रकर्षः । ऋकारस्याल्पः प्रयोगः ततोऽप्यस्याल्पतरः प्रयोगः । अल्पप्रयोगस्यापि कार्यार्थ

॥ भा० ॥ ऋलृक् । अथ लृकारोपदेशः किमर्थः । किं विशेषेण लृकारोपदेशश्चोद्यते न पुनरन्येषामपि वर्णानामुपदेशश्चोद्येत । यदि किञ्चिदन्येषामपि वर्णानामुपदेशे प्रयोजनमस्ति लृकारोपदेशस्यापि तद्भवितुमर्हति । को वा विशेषः । अयमस्ति विशेषः । अस्य हि लृकारस्याल्पीयांश्चैव हि प्रयोगविषयः । यश्चापि प्रयोगविषयः सोऽपि कॢपिस्थस्य । कॢपेश्च लत्वमसिद्धम् ॥

॥ कै० ॥ उपदेशः कर्त्तव्य इत्याशङ्क्याह । यश्चापीति । तत्र ऋकारावस्थायामेवोदात्तादिषु स्थानेऽन्तरतम इति स्थानिसदृशलकारो भविष्यति ॥

॥ वि० ॥ अल्पेति । यथा मुञ्चादशित्यादेः । ननु ऋकारे ऽच्कार्यप्रवृत्तावपि लृकारे कथं तत्कार्योदात्तत्वादीनां दर्शनमत आह । तत्रेति । स्थानेऽन्तरतम इतीति । यद्यपि कृपो रो ल इत्यत्र रेफलकारयोः स्थान्यादेशभावस्तथापि तद्द्वारा ऋकारलृकारयोरपि स इतिभावः ॥

११४

॥ वि॰ ॥ अर्थगतमिति । शब्दातिरिक्तमर्थरूपमित्यर्थः । यद्वा व्यक्तेरेव वाच्यता तस्यां प्रकारताविशेष्यताख्यविषयताद्वयाङ्गीकाराच्छक्ति-ग्रहोपपत्तिः सविकल्पकोपपत्तिश्च तत इतिभावः । प्रयोक्त्रभिप्रायेणैवेति । शक्तिबोधनं प्रयोक्त्रधीनमितिभावः । अन्यथा शब्दार्थसम्बन्ध-स्यानित्यतापत्तिः । एवञ्च स्वेच्छयैकस्यां व्यक्तौ सङ्केत्यमानः शब्दो यदृच्छाशब्द इतिबोध्यम् । ननु ऋकारस्याच्त्वे ऋलृवर्णयोस्सावर्ण्याद् ऋकारेण लृकारस्यापि

॥ कै॰ ॥ यदृच्छेति । अर्थगतं प्रवृत्तिनिमित्तमनपेक्ष्य यः शब्दः प्रयोक्त्रभिप्रायेणैव प्रवर्त्तते स यदृ-

॥ भा॰ ॥ तस्यासिद्धत्वादृकारस्यैवाच्कार्याणि भविष्यन्ति नार्थ लृकारोपदेशेन । अत उत्तरं पठति । लृकारोपदेशो यदृच्छाशक्तिजानुकरणप्लुत्याद्यर्थः । लृकारोपदेशः क्रियते । यदृच्छाश-ब्दार्थः । अशक्तिजानुकरणार्थः । प्लुत्याद्यर्थश्च ॥

॥ कै॰ ॥ च्छाशब्दो डित्थादिः । ऋकारलृकारयोस्सवर्णविधिरित्यस्य वार्त्तिककारवाक्यत्वात् सूत्रकारे-णानाश्रितत्वादच लृकारोपदेशः कृतः ॥

॥ वि॰ ॥ ग्रहणादच्कार्यसिद्धौ किं लृकारोपदेशेनेत्यत आह । लृकारेति । उपदेशः कृत इति । पाणिनये शिवेनेति शेषः । वस्तुतोऽच तस्यानुपदेशेऽप्रामाणिकत्वशङ्कया सवर्णविधिरपि तयोर्वक्तुमशक्य इति तदुपदेशः । सवर्णविधिद्वारकं फलमपि स्थलचय एवेति तत्रैव प्रयोजनोपन्यास इतिबोध्यम् ॥

११५

॥ वि॰ ॥ ननु सत्त्वमसत्त्वं वा क्रियायोगमर्थगतमङ्गीकृत्य डित्थादीनामपि व्युत्पत्तेरर्थगतार्थरूपप्रवृत्तिनिमित्तानपेक्षशब्दसत्त्वे किं मानमत आह । अर्थवदिति । चिन्त्यमिदम् । बहुच्पूर्वं तस्य चारितार्थ्यात् । एतदर्थं तद्धितपदं तद्विशिष्टपरम् । अप्रत्यय इत्युक्तेश्च पचतकीत्यादौ न दोषः । प्रत्ययश्च तद्धितभिन्न एव बहुपटवस्तिष्ठन्तीत्यादौ यं समुदायमिति न्यायेन न दोष इति कैयटाशयमन्ये । ननु लृतकस्यासाधुत्वात्कथं शास्त्रविषयतेत्यत

॥ कै॰ ॥ अर्थवत्सूत्रारम्भाच्चाव्युत्पन्ना यदृच्छाशब्दास्सन्तीत्यवगम्यते गाव्यादीनान्तु गवादिभिर्निव-

॥ भा॰ ॥ यदृच्छाशब्दार्थस्तावत् । यदृच्छया कश्चिद् लतको नाम तस्मिन्नच्कार्याणि यथा स्युः । दध्लृतकाय देहि मध्लृतकाय देहि । उदङ्ङ्लृतकोऽगमत प्रत्यङ्ङ्लृतकोऽग-मत । चतुष्टयी शब्दानां प्रवृत्तिः । जातिशब्दाः । गुणशब्दाः । क्रियाशब्दाः ॥

॥ कै॰ ॥ र्त्तितत्वादसाधुत्वम् । ऋतकशब्दस्त्वर्थाश्रयेणैव प्रयुक्त इति लृतकशब्दस्यानिवर्त्तकः ॥

॥ वि॰ ॥ आह । गाव्यादीनामिति । ऋतकेन लतकानिवृत्तौ हेतुरर्थाश्रयेणेति । स्वगतक्रियारूपार्थाश्रयेणेत्यर्थः । अर्थतस्सजातीयस्यैव निवृत्तिः । एकप्रवृत्तिनिमित्तकत्वे सति अन्वाख्यातमनन्वाख्यातस्य निवर्त्तकमितिभावः । तद्ध्वनयन्नाह भाष्ये चतुष्टयीति । शब्दानामर्थे या प्रवृत्तिः सा प्रवृत्तिनिमि-त्तभेदात्प्रकारचतुष्टयवतीत्यर्थः ॥

११६

॥ वि॰ ॥ तत्र यदृच्छाशब्दो नाम वक्त्रा स्वेच्छया सन्निवेशितः । सचानेकविधः । एकव्यक्तिसन्निवेशितो डित्थादिरेकस्तत्र न किञ्चिद-
तिरिक्तं प्रवृत्तिनिमित्तमानन्त्यव्यभिचारयोरभावात् किन्तु शक्यस्यैवार्थस्य विषयताद्वयेन भानम् । तदुत्तरत्वादेः प्रकारत्वावच्छिन्नः स एवार्थः ।
यद्वाशब्दपराद्वाच्योऽर्थ एव त्वादिः । एवं कादिपदानां कादीनामेकत्वमते तेषु शक्तिः । ततो डित्थादिपदादिव शक्यार्थ एव त्वादिः । कुत्वमिति कुरितिच पर्यायौ ।

॥ कै॰ ॥ अशक्तिजानुकरणशब्दस्य जातिशब्दत्वमिच्छन्ति यस्मादनुक्रियमाणशब्दे या जातिः समवेता तत्सम्बद्धम-

॥ भा॰ ॥ यदृच्छाशब्दाश्चतुर्थाः । अशक्तिजानुकरणार्थः अशक्त्या कयाचित् ब्राह्मण्या ऋतक
इति प्रयोक्तव्ये लृतक इति प्रयुक्तं तस्यानुकरणं ब्राह्मण्यॢतक इत्याह कुमार्य्ॢतक इत्याहेति ॥

॥ कै॰ ॥ नुकार्यमनुकरणं प्रत्याययति ॥

॥ वि॰ ॥ अनेकत्वमते तत्तज्जात्युपलक्षिते सा । टिघुभादीनान्तु तच्छक्यानामानन्त्यात्तत्पदमेव प्रवृत्तिनिमित्तं तदेवच तदुत्तरत्वाद्यर्थः । भत्वादिपदैर्भादि-
सञ्ज्ञैवोच्यते । अत एव वृद्धिसूत्रे वक्ष्यति कुत्वं कस्मान्न भवति चोः कुः पदस्येति भत्वात् कथं भसञ्ज्ञेति । अनेनच भाष्येण कुकुत्वपदयोर्भत्वभसञ्ज्ञापदयोः पर्य्या-
यत्वं स्पष्टमेवोक्तम् । सञ्ज्ञाच पदमेव । ननु चतुर्विधेष्वनुकरणशब्दाः क्वान्तर्भवन्तीत्यत आहाशक्तिजेति । यस्मादिति । अनुक्रियमाणशब्दव्यक्तयो बह्व्यः प्रत्य-
भिज्ञातु जातिनिबन्धना रूपसादृश्यनिबन्धना वेतिभावः । एतेऽपि यदृच्छाशब्दाः स्वेच्छयैव वक्त्रा शब्दपरतया प्रयोगादित्यन्ये ॥

११७

॥ वि॰ ॥ प्लुत्यादिकञ्च गुरोरनृत इति प्लुतः । अनचिचेति द्वित्वम् । प्रपूर्वात्क्लृपेरन्तर्भावितण्यर्थात्कर्मणि क्ते गतिरनन्तर इति पूर्वपदप्र-
कृतिस्वरे वर्ज्यमानस्वरेण शिष्टस्यानुदात्तत्वे उदात्तादनुदात्तस्येति स्वरितत्वम् । अनृत इति निषेधस्तु न ऋदिदॢदिदिति पृथगनुबन्धकरणेन
क्वचित्परस्पराग्रहणज्ञापनात् । न्याय्य इति । सञ्ज्ञात्वेन कल्पयितुमिति शेषः । तत्र हेतुमाह ।

॥ कै॰ ॥ न्याय्यभावादिति । ऋतकशब्दो न्याय्यः कृदन्तं नाम कुर्यादिति स्मृतावुक्तत्वात् । ऋतिः सौत्रो धातुः ।
तत औणादिकः कुन् शिल्पिसञ्ज्ञयोरपूर्वस्यापीति कुन्प्रत्ययः । सञ्ज्ञादिष्विति । आदिशब्देनैतद्दर्शयति जातिगुणक्रि-

॥ भा॰ ॥ प्लुत्याद्यर्थश्च ऌकारोपदेशः कर्त्तव्यः । के पुनः प्लुत्यादयः । प्लुतिद्विर्वचनस्वरिताः ।
क्लृ३प्तशिख क्लृप्तः प्रक्लृप्तः । प्लुत्यादिषुच कार्येषु क्लृपेर्लत्वं सिद्धम् । तस्य सिद्धत्वादच्कार्याणि न सि-
ध्यन्ति । तस्माद्लृकारोपदेशः क्रियते । नैतानि सन्ति प्रयोजनानि । न्याय्यभावात्कल्पनं सञ्ज्ञादिषु ।

॥ कै॰ ॥ यानिमित्ता अपि शब्दाः शास्त्रोचिता एव प्रयोक्तव्या इति । सर्वशब्दव्युत्पत्तिपक्षे किमर्थवत्सूत्रेणेतिचेत् ।
शिष्टप्रयुक्तानामेवाव्युत्पत्तिपक्षोऽप्यस्तीति ज्ञापनायार्थवत्सूत्रोपादानम् । अनुकरणशब्दानामप्यव्युत्पन्नत्वात्तदर्थञ्च ॥

॥ वि॰ ॥ कृदन्तमिति । प्रकृतिप्रत्ययादिविभागेनान्वाख्यातत्वमेव न्याय्यत्वमित्याशयेन शङ्कते । सर्वशब्देति । शिष्टप्रयुक्तत्वमपि न्याय्यत्वमिति परिहारः ।
नच तस्यैव प्रयोगे लृतकशब्दो बोधकोऽपि न स्यादितिवाच्यम् । बोधकत्वेऽप्यसाधुत्वान्न शास्त्रीयकार्यनिमित्तत्वमित्याशयात् ॥

॥ वि॰ ॥ तद्ध्वनितं भाष्ये साधु मन्यन्त इति ग्रन्थेन । ऋतक एवासाविति । ऋतकशब्दप्रतिपाद्य एवासौ न लृतकशब्दप्रतिपाद्य इत्यर्थः । इदानीन्त्विति । भाष्ये कल्पयितव्य इत्यस्य विनियुक्तत्वेन ज्ञेय इत्यर्थः । साधुर्ऋतक एव नामत्वेन कृतो न लृतकः । अशक्त्यात् तथोच्चारण-

॥ कै॰ ॥ अपर आहेति । पूर्वमुक्तम् ऋतकशब्द एव न्याय्यत्वान्नियोक्तव्यो नतु लृतकशब्द इति इदानीन्तु ऋतकशब्दस्यैवायमपभ्रंशोऽशक्तिजत्वाल्लृतकशब्द इत्युच्यते । अयं तर्हीति । ऋतकशब्दोऽन्वाख्यातत्वाद्भवतु

॥ भा॰ ॥ न्याय्यस्य ऋतकशब्दस्य भावात् कल्पनं सञ्ज्ञादिषु साधु मन्यन्ते । ऋतक एवासौ न लृतक इति । अपर आह । न्याय्य ऋतकशब्दः शास्त्रान्वितोऽस्ति स कल्पयितव्यः । साधुः सञ्ज्ञादिषु ऋतक एवासौ न लृतकः । अयं तर्हि यदृच्छाशब्दोऽपरिहार्यः । लृफिडः । लृफिड्डः एषोऽपि ऋफिडः । ऋफिड्डश्च । कथम् ॥

॥ कै॰ ॥ लृतकशब्दस्य निवर्त्तकः । ऋफिड ऋफिड्ड इत्येतौत्वनन्वाख्याताविति कथम् लृफिड लृफिड्ड इत्येतयोर्निवर्त्तकौ स्यातामितिभावः । एषोऽपीति । उणादयो बहुलमित्येतावन्वाख्याताविति भावः ॥

॥ वि॰ ॥ मित्यपभ्रंशत्वान्न शास्त्रविषय इतिभावः । अशक्तिजत्वादिति । जिह्वाऽपाटवजत्वादित्यर्थः । एवञ्चासाधुरेवेतिभावः । लृतकाल्लृफिड्डे वैषम्यं दर्शयति । ऋतकशब्द इति । लृतकशब्दस्येति । अनन्वाख्यातस्येत्यादिः । फिडफिड्डयोरुणादिष्वदर्शनादाह । उणादय इति । बाहुलकसिद्धावेतावित्यर्थः ॥



॥ वि॰ ॥ अर्त्तिप्रवृत्तिश्चैवेति । तथाच फिडफिड्डयोः स एव प्रकृतिर्नतु लृ इति धात्वन्तरं कल्प्यम् । सञ्ज्ञासु धातुरूपाणीतितु अनादि-शिष्टप्रयोगसाधने उपायमात्रं नत्वाधुनिकक्रियमाणसञ्ज्ञानुग्राहकमितिभावः । एवञ्च देशभाषानुसारेण क्रियमाणं कूचीमञ्चीत्याद्यसाधु शास्त्रा-विषयश्चेत्युक्तम् । अर्त्तेरिति । यतस्तस्य लोके प्रवृत्तिर्लक्ष्यतेऽतः फिडादिप्रकृतित्वेनापि तस्यैव प्रवृत्तिरित्यर्थः । एवं यदृच्छाशब्दानङ्गीकृत्य शास्त्रान्वितानां क्वचिच्छिष्टप्रयुक्तानामेव यत्र कुत्रचित्सञ्ज्ञात्वेन विनियोगो नान्येषामित्येव लृतकलृफिड्डादीनां शास्त्रविषयत्वाभावान्न तदर्थं लृकरोपदेश इत्युक्तम् । इदानीं न

॥ कै॰ ॥ अर्त्तिप्रवृत्तिरिति । अर्त्तेः फिडफिड्डप्रकृतित्वेन प्रवृत्तिरित्यर्थः । न सन्तीति ।

॥ भा॰ ॥ अर्त्तिप्रवृत्तिश्चैव हि लोके लक्ष्यते फिडफिड्डौ औणादिकौ प्रत्ययौ । चयीच शब्दानां प्रवृत्तिः । जातिशब्दा गुणशब्दाः क्रियाशब्दा इति । न सन्ति यदृच्छाशब्दाः ॥

॥ कै॰ ॥ अद्यत्वेऽपि यदा नाम क्रियते तदा प्रशस्यरूपा क्रिया गुणो वाध्यारोप्यत इतिभावः ॥

॥ वि॰ ॥ सन्त्येव यदृच्छाशब्दा इति पक्षावष्टम्भेन तदर्थत्वं प्रत्याचष्टे भाष्ये । चयीचेति । चेनेदं ध्वनितम् । नन्वेवं डित्थादीनां क्वान्तर्भावोऽत आह । अद्यत्वेऽपीति । एवञ्च सर्वेऽपि व्युत्पन्नाः क्रियादिशब्दा एवेतिभावः । प्रशस्यरूपेति । अत्यन्तप्रशंसायोग्येत्यर्थः । एवञ्च येषां क्रियागुणादिप्रवृत्तिर्निमित्तकत्वं तेषां क्रियाद्यारोपेणार्थबोधकत्वमिति तात्पर्यम् । यद्वा । पूर्वपूर्वगर्तडित्थादिगतप्रशस्तगुणक्रियारोपेण तत्प्रवृत्तिनिमित्तक एव डित्थादिभ्यो बोधः । आद्ये डित्थेतु तद्व्यक्तेरेव विषयताद्वयेन भानमिति सैव प्रवृत्तिनिमित्तमपीति तस्य भाव इतिसूत्रे भाष्ये उपपादयिष्यते ॥

१२०

॥ वि० ॥ अव्युत्पन्नेति । सञ्ज्ञाशब्दा अव्युत्पन्ना इति पक्षाश्रयणेनेत्यर्थः । आचार्य्येणेति । शिवो वेदपुरुषो वाचाचार्यः । एवञ्च यदृच्छाशब्दसद्भावाश्रयेण प्रयोजने उक्ते तदनाश्रयणेन तत्प्रयोजननिराकरणमयुक्तमितिभावः । ऋतकशब्द लृतकशब्दस्य साधुत्वाभावकल्पक इत्याद्यं दूषणमप्ययुक्तमित्याह भाष्ये । समानेचेति । तत्रार्थशब्दः प्रवृत्तिनिमित्ताभिप्राय इत्याह । इहचेति । तच्छब्दस्वरूपस्य व्यक्तिस्वरूपस्य वार्थे प्रवृत्ति-

॥ कै० ॥ अन्यथा कृत्वेति । अव्युत्पत्तिपक्षाश्रयणेनाचार्य्येणोपदिष्ट लृकारः । वार्त्तिककारस्तु व्युत्पत्तिपक्षाश्रयणेन प्रत्याचष्टे । समानेचेति । इहच भिन्नार्थत्वम् ।

॥ भा० ॥ अन्यथा कृत्वा प्रयोजनमुक्तमन्यथा कृत्वा परिहारः । सन्ति यदृच्छाशब्दा इति कृत्वा प्रयोजनमुक्तम् । न सन्तीतिपरिहारः । सामानेचार्थे शास्त्रान्वितोऽशास्त्रान्वितस्य निवर्त्तको भवति । तद्यथा । देवदत्तशब्दो देवदिन्नशब्दं निवर्त्तयति न गाव्यादीन् । नैष दोषः ॥

॥ कै० ॥ लृतकशब्दो हि यदा सञ्ज्ञात्वेन विनियुज्यते क्वचित्पिण्डे तदा तच्छब्दस्वरूपाध्यासः । ऋतकेतु विपर्ययः । भिन्नस्वरूपौच तौ शब्दावितिभावः ॥

॥ वि० ॥ निमित्तत्वेनाध्यास इत्यर्थः । विपर्यय इति । क्रियाप्रवृत्तिनिमित्तमित्यर्थः । भिन्नस्वरूपौ । भिन्नप्रवृत्तिनिमित्तौ । यदितु ऋतकोऽपि शब्दप्रवृत्तिनिमित्तकस्तदा भिन्नरूपत्वादेव प्रवृत्तिनिमित्तविपर्ययः । व्यक्तेरेव प्रवृत्तिनिमित्तत्वमितिपक्षे ऋतकसङ्केतविषयव्यक्तेर्लृतकसङ्केतविषयव्यक्तिर्भिन्नैवेति तद्विपर्ययोऽस्त्येवेतिबोध्यम् ॥

१२१

॥ वि० ॥ भाष्ये समाधत्ते । पक्षान्तरैरपीति । जातिपक्षेत्विति । यत्तु अत्रादिनानार्थानामेकशेषाय तत्पक्षेऽप्यावश्यकमिति तत्तु जातिगतजातिस्वीकारेण परिहृतम् । पक्षान्तरैरपि परिहारा भवन्तीति वार्तिकृतैवमुक्तम् । वस्तुतश्चतुष्टयीपक्षेऽपि दोषपरिहारः सुकरः । यदुक्तम् ऋतको न लृतकनिवर्त्तक इति माभूत्तस्य निवर्त्तकत्वं शिष्टप्रयोगाभावात्तु तन्निवृत्तिः । न्याय्यत्वमपि वार्त्तिके शिष्टप्रयुक्तत्वमेवेत्यभिसन्धाय भगवतानुक्तमपि स्वयं मन्दबुद्ध्यनुग्रहाय स्फुटमाह । व्युत्पन्नेति । पारम्पर्यागताः । अनादयः । एवञ्च शिष्टाप्रयुक्तयदृच्छाशब्दा असाधुत्वेन शास्त्राविषया इति भाष्यतात्पर्यम् ।

॥ कै० ॥ पक्षान्तरैरपीति । यथा द्रव्यपक्षे सरूपाणामित्यस्यारम्भः । जातिपक्षेतु प्रत्याख्यानमेवमस्या-

॥ भा० ॥ पक्षान्तरैरपि परिहारा भवन्ति ॥

॥ कै० ॥ पीत्यर्थः । अव्युत्पन्नसञ्ज्ञाशब्दपक्षेऽपि पारम्पर्यागताः शिष्टप्रयुक्ता एव सञ्ज्ञाः कर्त्तव्याः ॥

॥ वि० ॥ यत्तु चतुष्टयीतिपक्षे लृतकादीनां डित्थादिवच्छास्त्रविषयत्वमेवेत्यस्माद्भाष्याल्लभ्यत इति तन्न । पक्षभेदेनैकस्य शास्त्रविषयत्वतदविषयत्वाङ्गीकारे न वेति सूत्रस्थभाष्यविरोधात् । डित्थादीनां पाणिन्यादिशिष्टप्रयुक्तत्वेन साधुत्वाच्छास्त्रविषयत्वेऽपि अन्येषां तद्विषयत्वे मानाभावाच्च । किञ्च साध्वसाधुबहिर्भूतानामपि शास्त्रविषयत्वे साध्वनुशासनेऽस्मिन् शास्त्रे इति तत्र तत्र भाष्योक्त्यसङ्गतिः । किञ्च शास्त्रविषयत्वमथ तद्यङ्न्यसाधुत्वाभाव इत्यशक्यमिति दिक् ॥

॥ वि० ॥ अनुकरणं शिष्टस्य वा अशिष्टाप्रतिषिद्धस्य वा भवति । तत्राद्यं साधु अन्त्यं न दोषाय नाप्यभ्युदयायेति भाष्येऽन्वयः । अर्थात्प्रतिषिद्धानुकरणस्य दुष्टत्वं बोध्यम् । ननु शिष्टानुकरणं नासाधु अशिष्टाप्रतिषिद्धस्य वा नासाधु । आद्यस्याभ्युदयजनकत्वात् । अन्त्यस्याभ्युदयाजन-

॥ कै० ॥ प्रयोजनान्तरमपि वार्त्तिककारः प्रत्याचष्टे । अनुकरणमिति । अनुकार्यस्य दुष्टत्वादनुकरणेऽपि दुष्टत्वमन्यते सुरापानानुकरणवत् ॥

॥ भा० ॥ अनुकरणं शिष्टाशिष्टाप्रतिषिद्धेषु यथा लौकिकवैदिकेषु । अनुकरणं हि शिष्टस्य साधु भवति अशिष्टाप्रतिषिद्धस्य वा नैव तद्दोषाय भवति नाभ्युदयाय । यथा लौकिकवैदिकेषु । तद्यथा । लौकिकेषु वैदिकेषुच कृतान्तेषु । लोके तावत् । य एवमसौ ददाति य एवमसौ यजते य एवमसावधीत इति तस्यानुकुर्वन् दद्याच्च यजेत वा अधीयीतच सोऽप्यभ्युदयेन युज्यते । वेदेऽपि । एवं विश्वसृजः सत्राणि अध्यासत इति तेषामनुकुर्वन् तद्वत्सत्राण्यध्यासीत सोऽप्यभ्युदयेन युज्यते । अशिष्टाप्रतिषिद्धं यथा । य एवमसौ हिक्कति य एवमसौ हसति य एवमसौ कण्डूयतीति तस्यानुकुर्वन् हिक्केच्च हसेच्च कण्डूयेच्च नैव तद्दोषाय स्यान्नाभ्युदयाय । यस्तु खल्वेवमसौ ब्राह्मणं हन्ति य एवमसौ सुरां पिवतीति तस्यानुकुर्वन् ब्राह्मणं हन्यात् सुरां वा पिवेत् सोऽपि मन्ये पतितः स्यात् ॥

॥ वि० ॥ । कत्वेऽपि दोषाजनकत्वात् । एवञ्च प्रकृते किमायातमत आह । अनुकार्यस्य दुष्टत्वादिति । अर्थलब्धं तदादाय प्रकृतोपयोग इत्यर्थः । अत एव भाष्ये तद्दृष्टान्तेनोपपादयिष्यति । यस्तु खल्विति । एवञ्चासाध्वनुकरणस्यासाधुत्वात् शास्त्राविषयत्वात्तदर्थता लृकारोपदेशस्य न युज्यत इतिभावः । भाष्ये यजेत वेति । यागोऽत्र स्मार्त्तो ग्राह्यः ॥



॥ वि० ॥ सादृश्याभावादिति । नचैकजातीयेष्वपि व्यक्तिभेदेन सादृश्यसम्भवः । सुरापानत्वादेरेव तादृशस्थले सादृश्येन तदतिरिक्तसादृश्याभावादित्याशयात् तदाह । नास्त्येति । दानादीनां कथं लौकिकत्वेनोपन्यासोऽत आह । स्मार्तत्वादिति । अस्वस्थेनेति । आस्तिकत्वे

॥ कै० ॥ भाष्यकारस्त्वनुकरणार्थत्वं समर्थयते । विषम इति । नह्यनुकार्यस्य दोषेणानुकरणस्य दुष्टत्वं विहितकरणाद्धि धर्मोत्पत्तिः प्रतिषिद्धाचरणाच्चाधर्मो भवति नत्वनुमानेन धर्माधर्मयोर्व्यवस्थेति मन्यते ।

॥ भा० ॥ विषम उपन्यासः । यश्चैवं हन्ति यश्चानुहन्ति उभौ तौ हतः । यश्चापि पिवति यश्चानुपिवति उभौ तौ पिवतः । यस्तु खल्वेवमसौ ब्राह्मणं हन्ति एवमसौ सुरां पिवतीति तस्यानुकुर्वन् स्नातानुलिप्तो माल्यगुणकण्ठः कदलीस्तम्भं छिन्द्यात् पयो वा पिवेत् न स मन्ये पतितः स्यात् ॥

॥ कै० ॥ सुरापानादौतु तस्या एव क्रियाया अनुष्ठानात्सादृश्याभावान्नास्त्यनुकरणत्वं दानादीनां स्मार्तत्वाल्लौकिकत्वमुच्यते । स्नातानुलिप्त इति । स्वस्थचित्तत्वं दर्शयति । अस्वस्थेन हि चित्तेनाकार्यं क्रियते । माल्यगुणकण्ठ इति । लोकमध्ये प्रकाशत इत्यर्थः । अकार्यंह्यप्रकाशं क्रियते

॥ वि० ॥ सत्यपीतिभावः । माल्यगुणकण्ठ इति । मालायां साधूनि माल्यानि पुष्पाणि तैर्युक्तो गुणः सूत्रं कण्ठे यस्येत्यर्थः । गड्वादित्वात्परनिपातः । अकार्यं हीति । इह लोके भीरुणेत्यर्थः ॥

॥ वि० ॥ भाष्ये प्रयोजनप्रत्याख्यानवादी शङ्कते । एवमिहापीति । प्रयोजनवादी समाधत्ते । अयं त्वन्य इति । अर्थभेदेन साधुत्वे दृष्टान्तमाह । अश्वेति । अस्य हीति । एवञ्च तदर्थं व्याकरणानुगतत्वमपशब्दत्वमितिभावः ॥

॥ कै० ॥ लृतकशब्दोऽपि यदा ऋतकार्थे प्रयुज्यते तदापशब्दः यदात्वनुकार्यं प्रत्याययति तदा साधुरेवार्थभेदात् । अश्वगोण्यादि-

॥ भा० ॥ एवमिहापि य एवमसावपशब्दम्प्रयुङ्क्ते इति तस्यानुकुर्वन् अपशब्दम्प्रयुञ्जीत सोऽप्यपशब्दभाक् स्यात् । अयन्त्वन्योऽपशब्दपदार्थकः शब्दो यदर्थ उपदेशः कर्त्तव्यः । नचापशब्दपदार्थकः शब्दोऽपशब्दो भवति । अवश्यञ्चैतदेवं विज्ञेयम् । यो हि मन्यते अपशब्दपदार्थकः शब्दोऽपशब्दो भवतीति अपशब्द इत्येव तस्यापशब्दः स्यात् । नचैषोऽपशब्दः । अयं खल्वपि भूयोऽनुकरणशब्दोऽपरिहार्यः यदर्थ उपदेशः कर्त्तव्यः । साध्वलृकारमधीते मध्वलृकारमधीत इति । कस्यस्य पुनरेतदनुकरणम् । क्लृपिस्थस्य । यदि क्लृपिस्थस्य क्लृपेश्च लत्वमसिद्धं तस्यासिद्धत्वादृकार एवाच्कार्याणि भविष्यन्ति ॥

॥ कै० ॥ वत् । अपशब्द इत्येवेति । अस्य गाव्यादयोऽपभ्रंशा वाच्याः । अयमिति । असाधोरनुकरणमित्येतदप्यत्र नास्ति ।

॥ वि० ॥ भाष्ये तुष्यतु दुर्जनन्यायेन साध्वनुकरणार्थत्वम् लृकारोपदेशस्याह । अयं खल्वपीति । यद्यप्यर्थशून्यवर्णानां न साधुत्वं तथापि वर्णात्कारविधानेन तेषां साधुत्वमितिभावः ॥



॥ वि० ॥ भवेत्तदर्थेनेति । तदर्थेन क्लृपिस्थलकारार्थेन लृकारस्योपदेशेन प्रयोजनं न भवति एवं यद्यपि भवेत्तथापि तदनुकरणार्थेनार्थ इत्यर्थः । ननु क्लृपिस्थस्यासिद्धत्वात्कथं तदनुकरणमत आह । प्रयोगस्थस्येति । प्रयोगे । अनुकरणप्रयोगे । शास्त्रे तदीयकार्ये वाऽसिद्धत्वं

॥ कै० ॥ भवेदिति । प्रयोगस्थस्येदमनुकरणं प्रयोगेच पूर्वत्रासिद्धमिति नास्तीतिभावः । प्रकृतिवदिति । तत्र यथा क्लृपेर्लत्वस्यासिद्धत्वादृकारद्वारेण लृकारस्याच्कार्यं तथानुकरणस्यापीत्यर्थः । द्विरिति । पचन्तु

॥ भा० ॥ भवेत्तदर्थेन नार्थः स्यात् । अयं त्वन्यः क्लृपिस्थपदार्थकः शब्दो यदर्थ उपदेशः कर्त्तव्यः । न कर्त्तव्यः । इदमवश्यं कर्त्तव्यम्प्रकृतिवदनुकरणं भवतीति । किं प्रयोजनम् । द्विः पचन्त्वित्याह तिङ्ङतिङः इति निघातो यथा स्यात् । अग्नी इत्याह ईदूदेद्द्विवचनं प्रगृह्यमिति प्रगृह्यसंज्ञं यथा स्यात् ॥

॥ कै० ॥ पचन्त्विति केनचिदुक्ते द्विः पचन्त्वित्यनुकरणम् । एतच्च क्रियासाधनाद्यनभिधानात्तिङन्तन्न भवति । एवमग्नी इत्यनुकरणं द्व्यर्थानभिधानान्न द्विवचनान्तम् ।

॥ वि० ॥ पौर्वापर्यस्य तत्रैव सम्भवान्नचैवं प्रकृते इतिभावः । ऋकारद्वारेणेति । ऋकारबुद्ध्येत्यर्थः । भाष्ये द्विः पचन्त्विति । पचन्त्विति द्विराहेत्यन्वयः । असत्यतिदेशे तिङन्तत्वाभावे हेतुमाह । एतच्चेति । द्व्यर्थेति । एतदर्थमेव द्विवचनमित्यन्वर्थसञ्ज्ञाकरणम् ॥

१२६

॥ वि० ॥ नन्विति । एवञ्च पाठाभावे मूलस्यैवाच्त्वाभावात् कथं तदनुकरणेऽच्कार्यमिति तदर्थं उपदेश आवश्यक इतिभावः । अनुमीयन्त इति । इदं चिन्त्यम् । आनुमानिकवचनेन कृतस्य वर्णस्य प्रत्याख्यानायोगात् । तस्माद्गम्लृ इत्यादिस्थ लृकारो धर्माजनकत्वान्न साधुरिति वक्तुं युक्तम् । एवञ्चाशक्तिजानुकरणेतिवार्त्तिकेऽशक्तिजपदं व्यर्थमिति कैयटतात्पर्यम् । एवं साध्वनुकरणार्थत्वे लृकारोपदेशस्य प्रकृतिवदित्याश्रयणेन

॥ कै० ॥ ननु गम्लृसृप्लृ इत्यादिस्थस्य यदानुकरणं तदा कथं प्रकृतिवद्भावः । द्युताद्लृदित इति लृकारे परतो यणादेशकरणादित्सञ्ज्ञानुवादाच्च धात्वनुबन्धस्य लृकारस्याच्कार्याण्यनुमीयन्ते । ततस्तदनुकरणस्य सिद्धः प्रकृतिवद्भावः ।

॥ भा० ॥ यदि प्रकृतिवदनुकरणं भवतीत्युच्यते अपशब्द एवासौ भवति । कुमार्य्लृतक इत्याह ब्राह्मणय्लृतक इत्याह । अपशब्दो ह्यस्य प्रकृतिः । नचापशब्दः प्रकृतिः ॥

॥ कै० ॥ नचापशब्द इति । सिद्धान्तवादी प्रकरणाद्धि शास्त्रीया प्रकृतिराश्रीयते शास्त्रनिबन्धनञ्च कार्यमतिदिश्यते । अपशब्दस्य न शास्त्रीया प्रकृतिः । अनुपदिष्टत्वात् ॥

॥ वि० ॥ खण्डते तेनैवाशक्तिजानुकरणार्थत्वमपि खण्डयति पूर्व्वपक्षी भाष्ये । यदि प्रकृतिवदिति । ननु माभूदपशब्दोपदेशः प्रकृतित्वन्तु कथं नेत्यत आह । प्रकरणादिति । अतिदेशस्य शास्त्रीयत्वमनेन दर्श्यते तच्च प्रत्यासत्त्या शास्त्रीयप्रकृत्यादेरेव ग्रहणमुचितमितिभावः । उपलक्षणं भाष्यमित्याह । शास्त्रनिबन्धनञ्चेति ॥

१२७

॥ वि० ॥ नापि तदतिदेष्टुमित्यादि चिन्त्यम् । अब्राह्मणे ब्राह्मणत्वाद्यतिदेशवत्सम्भवादिति कश्चित् । तदेवमिति । अशक्तिजस्य शास्त्रीयप्रकृतित्वाभावान्न तदनुकरणेऽतिदेशप्रवृत्तिरित्यपशब्दत्वाभावादच्कार्यसिद्ध्यर्थम् लृकारोपदेश इत्यर्थः । इदानीं प्लुत्याद्यर्थत्वं तस्य

॥ कै० ॥ नचापशब्दत्वं शास्त्रीयं कार्यं नापि तदतिदेष्टुं शक्यं न हि साधोरसाधुत्वातिदेशो युक्तिमान् । तदेवं भाष्यकारेणाशक्तिजानुकरणार्थत्वम् लृकारोपदेशस्य स्थापितम् । एकदेश-

॥ भा० ॥ नह्यपशब्दा उपदिश्यन्ते । नचानुपदिष्टा प्रकृतिरस्ति ।
एकदेशविकृतस्यानन्यत्वात्प्लुत्यादयः । एकदेशविकृतमनन्यवद्भवतीति प्लुत्यादयोऽपि भविष्यन्ति । यदि एकदेशविकृतमनन्यवद्भवतीत्युच्यते राज्ञः क्व राजकीयम् अल्लोपोऽन इति लोपः प्राप्नोति ॥

॥ कै० ॥ विकृतस्येति । ऋकारे रेफभागस्य लत्वे कृते स एव ऋकार इति प्रत्यभिज्ञानादितिभावः ॥

॥ वि० ॥ परिहरति भाष्ये । एकदेशेति । रेफभागस्येति । वर्णैकदेशा वर्णग्रहणेन गृह्यन्त इतिपक्षे इत्यर्थः । प्रत्यभिज्ञानादिति । एवञ्च छिन्नपुच्छश्वदृष्टान्तेन लोकन्यायसिद्धमस्य ऋत्वमित्यर्थः । व्याख्यानभाष्येऽनन्यवदित्यस्यान्यवन्नेत्यर्थः । अन्यसादृश्यस्यापि निषेधे तत्त्वं दृढीकृतम् ।

सिद्धान्त्येकदेशी वर्तिं दृष्ट्वा स्थानिवत्सूत्रमनेनोपन्यस्तमित्याशयेनाह । षष्ठीनिर्दिष्टस्येति । तत्सम्बन्ध्येकदेशविकृतमादेशरूपमित्यर्थः । नन्वल्लोपोऽन इत्यत्रानपि षष्ठीनिर्दिष्ट एवेत्यत आह । राज्ञ इति । येन विकारेण यस्य विकृतस्य यद्रूपमेकदेशविकृतन्यायेन प्राप्यते तद्रूपावच्छिन्नस्य तेन रूपेण तद्विकारविधौ षष्ठीनिर्दिष्टस्येति तदर्थ इतिभावः । भाष्ये प्लुतो न प्राप्नोतीति ॥

॥ कै० ॥ षष्ठीनिर्दिष्टस्येति । राज्ञः कचेत्यत्र राजन्शब्दः षष्ठीनिर्दिष्टो नत्वन् इति लोपाभावः ।

॥ भा० ॥ एकदेशविकृतमनन्यवत्षष्ठीनिर्दिष्टस्य । यदि षष्ठीनिर्दिष्टस्येत्युच्यते क्लृप्तशिख इति प्लुतो न प्राप्नोति । न ह्यत्र ऋकारः षष्ठीनिर्दिष्टः । कस्तर्हि । रेफः । ऋकारोऽप्यत्र षष्ठीनिर्दिष्टः । कथम् । अविभक्तिको निर्देशः । कृप उः रः लः कृपो रो ल इति ॥

॥ कै० ॥ यद्येवं कृपो रो ल इत्यत्रापि ऋकारः षष्ठ्या न निर्दिष्ट इत्यनन्यत्वं न प्राप्नोतीत्याह । यदीति ॥

॥ वि० ॥ द्विर्वचनादेरप्युपलक्षणम् । कस्तर्हि रेफ इति । कृप इतित्ववयवषष्ठीतिभावः । कृप उरिति कृपेरेफस्य लस्तदवयव ऋकारस्यच लकारघटित आदेश इत्यर्थः । स्थानिनिर्देश एव तादृशादेशकल्पक इतिभावः । एतेन तस्यावयवषष्ठ्यन्तत्वेन स्थानषष्ठीनिर्दिष्टत्वाभावादिदं चिन्त्यमित्यपास्तम् ॥



॥ वि० ॥ ननु स्थानिवत्सूत्रे हि तथा प्रकृतेच न तेनातिदेश उच्यते किन्तु छिन्नपुच्छश्वदृष्टान्तेन प्रत्यभिज्ञयाऽनन्यत्वमुच्यते तत्र षष्ठीनिर्दिष्टस्येति वक्तुमेवाशक्यमित्याशयेनाह । भाष्येऽथवेति । ननु कादेशेऽन्त्वमिवैकदेशविकृतन्यायेन नकारान्तत्वमपि कुतो नेत्यत आह । नच राजनिति ।

॥ कै० ॥ अथवेति । षष्ठीनिर्दिष्टस्येति नापेक्ष्यते । नकारान्तस्येति । नच राजन्शब्दः कादेशे कृते नकारान्तो भवति श्वेव पुच्छे छिन्ने न पुच्छवानितिभावः । अरवत इति । रोऽस्यास्ति नित्यमिति नित्ययोगे

॥ भा० ॥ अथवा पुनरस्तु अविशेषेण । ननुचोक्तं राज्ञः कच राजकीयम् अल्लोपोऽन इति लोपः प्राप्नोतीति । नैष दोषः । वक्ष्यत्येतत् । श्वादीनां सम्प्रसारणे नकारान्तग्रहणमनकारान्तप्रतिषेधार्थमिति । तत्प्रकृतमुत्तरत्रानुवर्त्तिष्यते । अल्लोपोऽनः । नकारान्तस्येति । इह तर्हि क्लृप्तशिख । अन्तत इति प्रतिषेधः प्राप्नोति । रवत्प्रतिषेधाच्च । रवत्प्रतिषेधाच्चैतत्सिध्यति । गुरोररवत इति वक्ष्यामि ॥

॥ कै० ॥ मतुप् तेन ऋकार एव रवान् । ननु वर्त्तक इत्यादावकारः । न रवानरवानिति समासः । नित्ययोगप्रतिपादनाय बहुव्रीहिर्न कृतः । गुरोररस्येति ॥

॥ वि० ॥ एकदेशपदेन ससम्बन्धिकतयोपस्थितावयविधर्म एव विकारविशिष्टे आरोप्यते नत्ववयव एव लोकव्यवहारादितिभावः । भाष्ये इह तर्हीति । एकदेशविकृतन्यायेन ऋत्वादितिभावः । रोऽस्यास्तीति । इदञ्चिन्त्यम् । अवयवादावेव मत्वर्थो नानन्तरादाविति वर्त्तक इत्यादौ रवत्त्वस्योपपादयितुमशक्यत्वान्नित्ययोगपर्यन्तधावनमफलमिति ॥

॥ वि० ॥ भाष्ये स एष इति । प्लुत्याद्यर्थं विद्यमानलृकारोपदेशोऽरवतो ह्रस्वस्येति गुरुन्यासरूपसूत्रभेदेन प्रत्याख्यायत इति यत्तदयुक्तमि-त्यर्थः । कुत इत्यत आह । सैषेति । यतः सैषा प्रत्याख्यानात्मिका उक्तिः महतो वंशस्तम्बाल्लट्वानुकर्षाभिन्नेत्युक्ते यथा महतो वंशस्तम्बाल्लट्वा-

॥ कै० ॥ ह्रस्वस्येति । तन ह्रस्वस्यैव रवतः प्लुतनिषेधो न दीर्घस्य ।

॥ भा० ॥ यद्यरवत इत्युच्यते। होटक्लृकारः। होतृकारः। अत्र न प्राप्नोति। गुरोररवतो ह्रस्वस्येति वक्ष्यामि। स एष सूत्रभेदेन लृकारोपदेशः प्लुत्याद्यर्थः सन्प्रत्याख्यायते । सैषा महतो वंशस्तम्बाल्लट्वानुकृष्यते ॥

॥ कै० ॥ वार्त्तिककारस्य लृकारप्रत्याख्यानं निष्प्रयोजनमित्याह सैषेति ॥

॥ वि० ॥ नुकर्षणमयुक्तम्। एवं लृकारप्रत्याख्यानमिति गम्यते । तदाह । निष्प्रयोजनमिति । सूत्रभेदपरिकल्पनं विना क्लृप्तशिखे प्लुतसाधनस्याशक्यत्वान्निष्प्रयोजनमित्यर्थः । वंशस्तम्बादिति । ल्यब्लोपे पञ्चमी तमवलम्ब्येत्यर्थः । लट्वा पक्षिविशेषः फलविशेषो वा । तद्यथा । बह्वायाससाध्यमल्पफलञ्च युक्तन्तथा लृकारोपदेशप्रत्याख्यानमपीत्यर्थः ॥



॥ वि० ॥ एओङ् । ऐऔच् । विचार्य्यत इति । कृत्वा चिन्तान्यायेनायं विचार इतिबोध्यम् । इदं पदार्थमाह । तपरेति । असत्त्वभूतेति । एवञ्चेदमापरामर्शोऽनुपपन्न इतिभावः । बुद्ध्या परामृष्टेति । उपदेशपदार्थभूतेत्यर्थः । कर्म्मभावमिति । इदम्पदवाच्यत्वेनेतिभावः । यथेति । इदं चिन्त्यम् । कर्त्तृकर्म्मेतरकारकाभाववत्त्वस्यैवासत्त्वपदार्थत्वात् । पक्षद्वये स्वरूपवैलक्षण्यस्यानुभवसिद्धत्वेन तद्विषयः प्रश्नोऽनुचितोऽत आह ।

॥ कै० ॥ एओङ् । ऐऔच् । इदं विचार्य्यत इति । तपरातपरसन्ध्यक्षरोपदेशो विचार्य्यत इत्यर्थः । तच्चोपदिश्येरन्नित्यत्रासत्त्वभूता यद्यपि क्रियाभिधीयते तथापि बुद्ध्या परामृष्टा सत्त्वरूपतामापादिता विचारक्रियायां कर्म्मभावमनुभवति । यथा पश्य मृगो धावतीति सरणं दर्शने । कश्चात्रेति । कार्य्ये को विशेष इतिप्रश्नः ।

॥ भा० ॥ एओङ् । ऐऔच् । इदं विचार्य्यते । इमानि सन्ध्यक्षराणि तपराणि वोपदिश्येरन् । एत् ओत् ङ् । ऐत् औत् च् इति । अतपराणि वा यथान्यासमिति । कश्चात्र विशेषः । सन्ध्यक्षरेषु तपरोपदेशश्चेत्तपरोच्चारणम् । सन्ध्यक्षरेषु तपरोपदेशश्चेत्तपरोच्चारणङ्कर्त्तव्यम् ॥

॥ कै० ॥ तपरोपदेशश्चेदिति । यद्यप्युपदेश उच्चारणन्तथापि तपरोपदेशफलञ्चेदस्ति ततस्तकारोच्चारणङ्कर्त्तव्यमित्यर्थः । सन्ध्यक्षराणीत्यन्वर्था पूर्वाचार्य्यसञ्ज्ञा । सन्धीयमानावयवत्त्वात् ॥

॥ वि० ॥ कार्य्ये इति । भेदाभावादुद्देश्यविधेयभावो ऽनुपपन्न इत्याशङ्क्य परिहरति । यद्यपीत्यादि । फलञ्चेदिति । सम्प्रदाने षष्ठितिभावः । फलस्यैव करणत्वविवक्षया करणे षष्ठित्यन्ये । सन्धीयमानावयवत्वादिति । अइउणिति शिष्यमाणवर्णसदृशावयवसन्धानेनास्य निष्पन्नत्वादित्यर्थः ॥

॥ वि० ॥ भाष्ये प्लुतिग्रहणं त्रिमात्रपरम् । आदिना चतुर्मात्रग्रहणम् । नन्वोमभ्यादाने इत्यादिनाऽन्तरतमपरिभाषासंस्कृतेनैज्रूपप्लुत-

॥ कै० ॥ प्लुत्यादिष्विति । प्लुतसञ्ज्ञामभ्युपगम्याच्कार्य्याणि न सिद्ध्यन्तीत्युच्यते । प्लुत एव न प्राप्नोतीति दर्शयितुमाह । प्लुतसंज्ञाचेति । त्रिमात्रस्याचः प्लुतसञ्ज्ञा विधीयते तपरत्वे तु त्रिमात्रस्याग्रहणादच्त्वा-

॥ भा० ॥ प्लुत्यादिष्वज्विधिः । प्लुत्यादिष्वजाश्रयो विधिर्न्न सिध्यति । गोऽ३त्रात नौऽ३त्रात इत्यचानचिचेत्यच उत्तरस्य यरो द्वे भवत इति द्विर्व्वचनन्न प्राप्नोति । इहच प्रत्यङ्ङुतिकायन उदङ्ङु-पगव अचीति ङमुण्न प्राप्नोति । प्लुतसञ्ज्ञाच । प्लुतसञ्ज्ञाच न सिद्ध्यति । ऐ३तिकायन औ३-पगव । ऊकालोऽज्झ्रस्वदीर्घप्लुतसञ्ज्ञो भवतीति प्लुतसञ्ज्ञा न प्राप्नोति । सन्तु तर्ह्यतपराणि । अतपर एच इग्घ्रस्वादेशे । यद्यतपराणि एच इग्घ्रस्वादेश इति वक्तव्यम् । किम्प्रयोजनम् ॥

॥ कै० ॥ भावः । तत्रैचां प्लुतो विधीयमान इकारोकाराभ्यां गृहीत ई३कार ऊ३कारश्च स्यात् । अतपर इति । असति हि तपरत्व एकारौकाराभ्यां मात्रिकयोरईकाराईौकारयोर्ग्रहणादच्त्वाद्ध्रस्वत्वादिधानं स्यादिति सूत्रं कर्त्तव्यम् । तपरत्वे तु तयोर्ग्रहणाभावात्प्राप्त्यभावः ॥

॥ वि० ॥ विधानादनच्त्वेऽपि तेषां प्लुतसञ्ज्ञा भविष्यतीत्यत आह । तत्रैचामिति । ताभ्यामपि तेषां यथाकथञ्चिदान्तरतम्यसत्त्वादितिभावः ॥



॥ वि ॥ भाष्येऽर्द्ध एकार इति । मात्रिकत्वेनार्द्धत्वम् । समांशवाचिनोऽपि पुंस्त्वमेतद्भाष्यप्रामाण्यात् । भाष्ये तेनाप्येतद्वक्तव्यमित्यत्र एतच्छ-ब्देन नियामकं सूत्रम्परामृश्यते । सूत्रन्यासभेदेऽपि गुरुलाघवतो विशेषो नास्तीत्याह । सूत्रारम्भं प्रतीति । विश्लिष्टेति । उपलभ्यमानेत्यर्थः ।

॥ कै० ॥ ननुचेति । सूत्रारम्भम्प्रति न कश्चिद्विशेष इत्यर्थः । अतपरत्व एच इतिवक्तव्यं तपर-

॥ भा० ॥ एचो ह्रस्वादेशशासनेषु अर्द्ध एकारोऽर्द्ध ओकारो वा माभूदिति । ननुच यस्यापि तपराणि तेनाप्येतद्वक्तव्यम् । इमावैचौ समाहारवर्णौ मात्राऽवर्णस्य मात्रेवर्णोवर्णयोस्तयोर्ह्रस्वादेश-शासनेषु कदाचिदवर्णः स्यात् कदाचिदिवर्णोवर्णौ मा कदाचिदवर्णम् भूदिति ॥

॥ कै० ॥ त्वेत्वैच इति । ऐचोर्विश्लिष्टावर्णत्वात्संश्लिष्टावर्णावईकाराईौकारौ न भवतः ॥

॥ वि० ॥ संश्लिष्टेति । स्पष्टमनुपलभ्यमानेत्यर्थः । एवञ्चैङ्विषये नावर्णप्राप्तिः । अर्द्धेङोस्तु तपरनिर्द्देशेऽनच्त्वाद्ध्रस्वत्वमेव नेति भावः । एङोः शुद्ध-तालव्यत्वमेवेति न तयोः स्थानेऽवर्णप्राप्तिरिति तत्त्वम् । संश्लिष्टावर्णाविति कैयटस्याप्यत्रैव तात्पर्य्यमिति ॥

१३४

॥ वि॰ ॥ भाष्ये प्रत्याख्यायत एतदिति । एतदेज्विषयमेच इति सूत्रम् । वर्त्तमानसामीप्ये लट् । भूयसाचेति । तद्द्वारकभूयःस्थानसा-
म्यादित्यर्थः । भाष्ये इदमपीति । एङ्विषयमपीत्यर्थः । सस्थानत्वादिति । इकारोकाराभ्यां समानस्थानत्वादित्यर्थः । तदाह । तालव्य

॥ कै॰ ॥ ऐचोश्चेति । अर्द्धमात्राऽवर्णस्याद्ध्यर्द्धमात्रेवर्णोवर्णयोर्भूयसाच व्यपदेशो मल्लग्रामवदितीकारोकारावेव भविष्यतः । सिद्धमेङः

॥ भा॰ ॥ प्रत्याख्यायत एतत् । ऐचोश्चोत्तरभूयस्त्वादिति । यदि प्रत्याख्यानपक्षः । इदमपि प्रत्या
ख्यायते । सिद्धमेङः सस्थानत्वादिति । ननुच एङः सस्थानतरौ अर्द्ध एकारोऽर्द्ध ओकारः । न तौस्तः ।

॥ कै॰ ॥ इति । अर्द्धैकारार्द्धौकारौ न स्तः । तत्र तालव्य एकार ओष्ठ्य ओकार इति तयोः स्थान इकारोकारावेव भविष्यतः ।

॥ वि॰ ॥ इति । तालव्य एवेत्यर्थः । इदञ्च मतमष्टमेऽपि भाष्ये स्पष्टम् । शब्दपरविप्रतिषेधेनोत्तरभागसदृश इति विवरणोक्तन्तु चिन्त्यम् । अन्त-
रङ्गत्वेन पूर्वसदृशस्यैवापत्तेः । स्पष्टञ्चेदन्नित्यः परयणादेश इत्यादिनाचः परस्मिन्नित्यत्र भाष्ये ॥

१३५

॥ वि॰ ॥ भाष्ये तावेवेति । लाघवादितिभावः । ग्रहणमिति । प्रदेशेषु इतिशेषः । नन्वेवं मात्रिकयोरेव गुणसंज्ञा स्यादत आह ।
गुणेति । एवमपि अत्र ह्रस्वपाठेऽर्द्धमात्रालाघवं भवति । अकारस्यार्द्धमिति । सुजाते ए अश्वेत्यकारलेखस्तु प्रामादिकः । शास्त्रविशेषाध्या-

॥ कै॰ ॥ तावेवेति । ताभ्यामुपदिष्टाभ्यां दीर्घप्लुतयोरपि ग्रहणं सिध्यतीतिभावः । गुणसंज्ञायान्तु दीर्घावेवैकारौकारौ निर्द्देश्यौ । सुजात

॥ भा॰ ॥ यदि हि तौ स्यातान्तावेवायमुपदिशेत् । ननुच भोः छन्दोगानां सात्यमुग्रिराणायनीया अर्द्धमे-
कारमर्द्धमोकारञ्चाधीयते सुजाते ए१ अश्वसूनृते । अध्वर्यो ओ१ अद्रिभिः सुतम् । शुक्रं ते ए१ अन्यद्यजन्ते ए१
अन्यदितिच । पार्षदकृतिरेषा तत्रभवताम् । नैव हि लोके नाप्यन्यस्मिन्वेदे अर्द्ध एकारोऽर्द्ध ओकारो वास्ति ।
एकादेशे दीर्घग्रहणम् । एकादेशे दीर्घग्रहणङ्कर्त्तव्यम् । आद्गुणो दीर्घो वृद्धिरेचि दीर्घ इति ॥

॥ कै॰ ॥ इति । अन्तः पादस्थस्याऽव्यपरस्याकारस्य अर्द्धमेकारमर्द्धमोकारञ्च विदधति । पार्षदकृतिरिति । गीतिवशात्तथोच्चारणमित्यर्थः ॥

॥ वि॰ ॥ यिनां समवायः परिषत पर्षदा तत्र भवा कृतिरित्यर्थः । तदेवमतपरवादिमतसाधारण्येनैच इगिति सूत्रस्य कर्त्तव्यताकर्त्तव्यते उपपाद्यातपरवा-
दिमते ऽसाधारणन्दूषणमाह भाष्ये । एकादेशे इति । एकः पूर्व्वपरयोर्दीर्घ इति सूत्रङ्कार्य्यमित्यर्थः ।

॥ वि० ॥ अन्यस्यासम्भवादिति । अयम्भावः । यथा ष्टाब्वोरिञ्चेत्यचातपरत्वे ष्टाब्वोर्दीर्घस्य स्थाने घुमास्थेत्येव दीर्घकारे सिद्धे पुनर्वचनमदीर्घार्थमित्यविशेषाद्ध्रस्वप्लुतयोः प्रसङ्गे तदुक्तम्प्लुतस्य विषये इति । एवञ्च दूराद्धूतादिविषयेऽप्यनेनैव प्लुते पचेऽनुवाददोषस्तत्र ॥

॥ कै० ॥ आन्तर्य्यत इति । अन्यस्यासम्भवादिदमत्र नास्ति प्लुतस्य विषये प्लुत इति ॥

॥ भा० ॥ किम्प्रयोजनम् । आन्तर्य्यतस्त्रिमात्रचतुर्मात्राणां स्थानिनान्त्रिमात्रचतुर्मात्रा आदेशा मा भूवन्निति । खट्वा इन्द्रः खट्वेन्द्रः । खट्वा उदकम् खट्वोदकम् । खट्वा ईषा खट्वेषा । खट्वा ऊढा खट्वोढा । खट्वा एलका खट्वैलका । खट्वा ओदनः खट्वौदनः । खट्वा ऐतिकायनः खट्वैतिकायनः । खट्वा औपगवः खट्वौपगवः । तत्तर्हि दीर्घग्रहणङ्कर्त्तव्यम् । न कर्त्तव्यम् । उपरिष्टाद्योगविभागः करिष्यते । अकः सवर्णे । एको भवति । ततो दीर्घः । दीर्घश्च स भवति यः स एकः पूर्वपरयोरित्येवन्निर्दिष्ट इति । इहापि तर्हि प्राप्नोति । पश्नुं विद्धं पचन्तीति । नैष दोषः ॥

॥ वि० ॥ इहतु प्लुत एव प्राप्नोतीति खट्वा इन्द्र इत्यादिविषयकशास्त्रवैयर्थ्यमेवेत्यनुवाददोषः सोढव्य एवेति वैषम्यमिति । भाष्ये यः स इति प्रसिद्धार्थकम् ॥



॥ वि० ॥ वा छन्दसीत्यत्रेति । वा छन्दसीत्यस्याचानुवृत्त्यर्थमित्यर्थः । पूर्वरूपार्थेति । पूर्वव्यक्त्यात्मकपूर्वरूपार्थेत्यर्थः । भाष्ये पर इतीयतेति । ह्रस्वत्वादिरूपमितिभावः ।

॥ कै० ॥ अम्येक इति । प्रथमयोरिति सिद्ध एतदपि किमर्थमुच्यत इति चेत् । वा छन्दसीत्यत्रानुवृत्त्यर्थन्तस्मात्पूर्वश्रुतिः पूर्वरूपार्था सैवचोत्तरत्रानुवर्त्तत इति विद्धमिति पूर्वरूपं भविष्यति । अथवेति ।

॥ भा० ॥ इह तावत्पशुमिति । अम्येक इतीयता सिद्धं सोऽयमेवं सिद्धे सति यत्पूर्वग्रहणं करोति तस्यैतत्प्रयोजनम् । यथाजातीयकः पूर्वस्तथाजातीयक उभयोर्यथा स्यादिति । विद्धमिति । पूर्व इत्येवानुवर्त्तते । अथवा । आचार्य्य प्रवृत्तिर्ज्ञापयति नानेन सम्प्रसारणस्य दीर्घो भवतीति । यदयं हल उत्तरस्य सम्प्रसारणस्य दीर्घत्वं शास्ति । पचन्तीति । अतो गुणे पर इतीयता सिद्धं सोऽयमेवं सिद्धे सति यद्रूपग्रहणङ्करोति तस्यैतत्प्रयोजनम् । यथाजातीयकम्परस्य रूपं तथाजातीयकमुभयोर्यथा स्यादिति । इह तर्हि खट्वर्श्यो मालर्श्य इति दीर्घवचनादकारो न अनान्तर्य्यादेकारैकारौ न । तत्र को दोषः ॥

॥ कै० ॥ विधिनियमसम्भवेच विधिरेव बलीयानिति विधेर्बलीयस्त्वान्नियमो न भवति हल एव दीर्घत्वं यथा स्यात उतमित्यादौ माभूदिति ॥

॥ वि० ॥ सिद्धान्ते रूपग्रहणं स्पष्टार्थमेव । अस्य भाष्यस्य पूर्वपचयुक्तित्वात् । अकारो नेति । रपरत्वेऽपि द्विमात्रत्वरूपदीर्घत्वासम्भव एव ॥

१३८

॥ वि० ॥ विगृहीतस्येति । दीर्घश्रुतिपरिभाषयोर्विरोधेन जातिपक्षे व्यक्तिपक्षे वा तद्विषयकलक्षणानुपप्लवादितिभावः । ननु गुणवृद्धिसंज्ञ-
योस्तपरत्वाभावात्पूर्वोक्तदोषापरिहृतेश्च भाष्यमयुक्तमित्याशङ्क्याह । तपरसञ्ज्ञीति । तपरशब्दनिर्दिष्टे सञ्ज्ञिनि गुणवृद्धिसञ्ज्ञे प्रवर्त्तेते

॥ कै० ॥ तपरे इति । तपरसंज्ञिसहचरिते गुणवृद्धिसंज्ञे इत्यर्थः ॥

॥ भा० ॥ विगृहीतस्य श्रवणम्प्रसज्येत । न ब्रूमो यत्र क्रियमाणे दोषस्तत्र कर्त्तव्यमिति ।
किन्तर्हि । यत्र क्रियमाणे न दोषस्तत्र कर्त्तव्यमिति । क्व च क्रियमाणे न दोषः । सञ्ज्ञाविधौ
वृद्धिरादैच् दीर्घः । अदेङ् गुणो दीर्घ इति । तत्तर्हि दीर्घग्रहणङ्कर्त्तव्यम् । न कर्त्तव्यम् ।
कस्मादेवाचान्तर्य्यतस्त्रिमात्रचतुर्मात्राणां स्थानिनां त्रिमात्रचतुर्मात्रा आदेशा न भवन्ति ।
तपरे गुणवृद्धी । ननु च तः परो यस्मात्सोऽयन्तपरः । नेत्याह ॥

॥ वि० ॥ इत्यर्थः । एवञ्च त्रिमात्रादीनान्तत्र सञ्ज्ञितयाऽनिर्द्देशान्नोक्तदोष इतिभावः । भाष्ये ननुचेति । एवञ्चैङैचौ न तपरावितिभावः । नेत्याहेति ।
स एव तपर इति नेत्याहेत्यर्थः ।

१३९

॥ वि० ॥ अर्थभेदेन शब्दभेदे तन्त्रन्यायेति । तद्भेदेऽपि शब्दैक्यपक्षे आह । एकस्यैव द्विशक्तित्वादिति । एकशेषेति । समाहार-
द्वन्द्वविषये एकशेषाभावेनैकवचनानुपपत्त्येदश्चिन्त्यम् ।

॥ कै० ॥ तादपीति । तन्त्रन्यायाश्रयणादेकस्यैव वा द्विशक्तित्वादेकशेषाश्रयणाद्वाऽनेका-

॥ भा० ॥ तादपि परस्तपर इति । यदि तादपि परस्तपरः ।
ऋदोरविति इहैव स्यात् यवः स्तवः । लवः पव इत्यत्र न स्यात् । नैष
तकारः । कस्तर्हि । दकारः । अथ किन्दकारे प्रयोजनम् ॥

॥ कै० ॥ र्थाभिधानमितिभावः । बहुव्रीहिवादी चोदयति । किन्दकार इति ॥

॥ वि० ॥ सुखमुखार्थं इतिपाठे मयूरव्यंसकादित्वात्समासः । ननु एङैजिति सञ्ज्ञायास्तात्परत्वेऽपि सञ्ज्ञिनामेकारादीनाङ्गिमागतमिति चेन्न । तपर-
शब्दबोध्योऽपि वर्णस्तत्कालस्यैव सञ्ज्ञेत्यर्थान्न दोषः ॥

१४०

॥ वि० ॥ गुणानाञ्चेति । अणसु गुणानां तत्त्वाभावेऽपि अनण्त्वादेव दीर्घादिविषये तत्त्वमितिभावः । ननु दिव्वे दिव उदित्यत्र तत्काल-ग्रहणं न स्यादत आह । तपरसूत्रेचेति ।

॥ कै० ॥ समासद्वयवादी तं प्रत्याह । अथ किन्तकार इति । तत्र केवलबहुव्रीहिवादिनो निष्प्रयोजनं तपरत्वम् ऋकारस्यानण्त्वाद्भिन्नकालानां ग्रहणाप्रसङ्गात् गुणानाञ्चाभेदकत्वात् तत्प्राप्त्यर्थत्वाभावात् । अथवा-ऽसन्देहार्थो वा सुखमुखार्थो वा तकारः । एवं मम दकार इत्यर्थः । तिल्स्वरितमित्यत्रत्यभाष्येणास्य विरोधः तत्र हि तिदिति प्रत्ययग्रहणाच्चोदितम् ।

॥ भा० ॥ अथ किं तकारे । यद्यसन्देहार्थस्तकारः । दकारोऽपि । अथ मुखसुखार्थस्तकारः । दकारोऽपीति ॥

॥ कै० ॥ इह माभूत् दिव उत् द्युभ्यामिति । ततो दिव्वाश्रयेण प्रत्याख्यातम । तपरसूत्रेच दकारश्चर्त्व-भूतो निर्दिश्यते तेन तत्कालस्य ग्राहको दकार इत्युक्तम् । इहच दकाराभ्युपगमेन लवादिषु दोषः परि-हृतः । अत्राहुः । थकारस्थानिको धकारस्थानिको वा दकारोऽत्र विवक्षितः । कस्तर्हि । दकार इति ॥

॥ वि० ॥ इहेति । तपरसूत्रे दकारानाश्रयणेनचेत्यपि बोध्यम् । थकारस्थानिक इति । तस्यचैतद्दृष्ट्याऽसिद्धत्वान्न तत्र तपरसूत्रप्रवृत्तिरितिभावः ।

१४१

॥ वि० ॥ अवयवग्रहणेनावयवसदृशवर्णग्रहणेन ग्रहणं स्यान्न वेति भाष्यार्थस्तत्फलितमाह । तत्र केवलेति । नन्वकारेण एङवयवग्रहणस-न्देहवद् अकारादीनामेङादिसंज्ञा प्राप्नोतीति विचारोऽपि कुतो नेत्यत आह । तत्र समुदायेति । अत एव प्राटतीत्यादौ न पररूपम् । तत्र दृ-

॥ कै० ॥ वर्णान्तरसमानाकृतय इति । आकारादिष्वकारादिसदृशा अवयवा ऋकारलृकारयो रेफलका-रसदृशावयवौ सन्ध्यक्षरेष्वकारेकारोकारसदृशाः । तत्र केवलवर्णकार्यमवयवेषु भवति न वेति विचारः । इह समुदाया अपीति । ऋलृ एओ ऐऔ इति । अवयवा अपीति । अइउण् रट् लणिति । तत्र समु-

॥ भा० ॥ इदं विचार्यते । य एतेष वर्णेषु वर्णैकदेशा वर्णान्तरसमानाकृतयस्तेषामवयवग्रहणेन ग्रहणं स्याद्वा न वेति कुतः पुनरियं विचारणा । इह समुदाया अप्युपदिश्यन्ते अवयवा अपि ।

॥ कै० ॥ दायपरे निर्देशे सन्निहिता अप्यवयवा नान्तरीयकत्वादेङादिसंज्ञां न लभन्ते । अवयवपरेच निर्देशे समुदायो न संज्ञाभाक् । यथा हयवरेत्यादावनच्कस्य हलो दुःखेनोच्चार्यत्वान्निर्दिष्टोऽप्यकारो-ऽन्यत्र प्राधान्येन निर्देशाद्धलादि संज्ञां न प्रतिपद्यते इति दध्यत्रेत्यादावनच्क एव यणादेशः प्रवर्त्तते ॥

॥ वि० ॥ दृष्टान्तमाह । अवयवपरेचेति । यथावयवपरे निर्देशे समुदायो न संज्ञाभाक् । एवं समुदायपरे निर्देशे ऽवयवा न तद्भाज इत्यर्थः । तदुपपादयति । यथेति । अन्यत्रेति सर्वस्यावयवस्यान्यत्र पृथङ्निर्देशे समुदायनिर्देशः स्वपर एव । सर्वस्यावयवस्यान्यत्रानिर्देशेतु समुदायनिर्देशो ऽनिर्दिष्टावयवपर इति विवेकः ॥

१४२

॥ वि० ॥ नन्वेजादिसंज्ञानामवयवावृत्तित्वे कथमेचो निवर्त्तकेनायादिना तदवयवस्य निवृत्तिरत आह । तत्रासत्यामपीति । तन्नि-
वृत्तिं विना समुदायनिवृत्तेः कर्त्तुमशक्यत्वादितिभावः । अवयवकार्यम् । दीर्घः । समुदायकार्यम् । अय् । तत्रच साक्षादिति ।
दीर्घे । अयादिकार्ये हि समुदायव्यवधानेनावयवो नोदितो न साक्षादितिभावः ।

॥ कै० ॥ तत्रासत्यामप्येजादिसंज्ञायामयादयः समुदायादेशा अपि नान्तरीयकत्वादवयवान्निव-
र्त्तयन्ति । एवं स्थिते अग्न इन्द्र इत्यादौ यत्रावयवकार्यञ्च प्राप्नोति समुदायकार्यञ्च तत्रान्तरङ्गत्वा-
त्तत्रच साक्षाच्चोदितत्वात्प्रत्यक्षत्वात्परत्वाच्चावयवकार्यप्रसङ्गः । अवयवावगतिपूर्वकत्वाद्धि समुदाया-
वगमस्य समुदायकार्यं बहिरङ्गम् । अयादीनान्त्ववकाशः । अग्न आयाहीति । नन्वत्रापि यणा-
देशो ऽवयवस्य प्राप्नोति । येन नाप्राप्त इति मध्ये ऽपवादा इति वा यण एवायादयो बाधकाः स्युः ।
तत्र यथा दधीन्द्र इत्यत्र दधिशब्दस्य इकारः सवर्णदीर्घत्वं प्रतिपद्यते एवमेकारस्थोऽपि प्रतिपद्येत ।
प्रत्याहारे एओङ् ऐऔजित्यत्रावयवानां प्राधान्येनानिर्देशादित्येवं ग्रहणपक्षाशङ्काबीजमुपन्यस्तम् ॥

॥ वि० ॥ साक्षाच्चोदितत्वं प्रत्यक्षत्वे हेतुः । नन्वयादिरनवकाशोऽत आह । अयादीनामिति । नन्विति । ततश्च विध्यन्तरपूर्वकोऽयादिः सर्वस्य बाधकः
स्यादितिभावः । परिहरति । येनेति । प्राधान्येनानिर्देशादिति । अस्यैजादिसंज्ञाभावेऽपि स्वतन्त्राकारेण ग्रहणं स्यादितिशेषः ॥

१४३

॥ वि० ॥ भाष्ये अभ्यन्तरश्चेति । तदुच्चारणं विना समुदायोच्चारणस्याशक्यत्वादित्यर्थः । तदाह तद्यथा वृक्ष इति । तदुपपादयति ।
तिरोहितत्वादित्यादिना । समुदायकार्ये पारतन्त्र्यादिति । समुदायसम्पादनरूपे कार्ये पारतन्त्र्यादित्यर्थः । स्वकार्यस्याप्रयोजकत्वादिति ।
स्वकार्यनिरूपितप्रयोजकत्वाभावादित्यर्थः ।

॥ कै० ॥ इदानीमग्रहणपक्षशङ्काबीजमुपन्यस्यते । अभ्यन्तरश्चेति । तिरोहितत्वादवय-
वानां समुदायकार्येच पारतन्त्र्यात् स्वकार्यस्याप्रयोजकत्वान्नरसिंहवज्जात्यन्तरयोगाद्वर्णान्तरसारू-

॥ भा० ॥ अभ्यन्तरश्च समुदाये अवयवः । तद्यथा । वृक्षः प्रचलन् सहावयवैः प्रच-
लति । तत्र समुदायस्थस्यावयवस्यावयवग्रहणेन ग्रहणं स्याद्वा न वेति जायते विचारणा ।
कश्चात्र विशेषः । वर्णैकदेशा वर्णग्रहणेन चेत् सन्ध्यक्षरे समानाक्षरविधिप्रतिषेधः ॥

॥ कै० ॥ प्यमात्रेण तत्कार्यप्रवर्त्तनादित्यर्थः । समानाक्षरेति । समानशब्देन पूर्वाचा-
र्यनिर्देशादकोऽभिधीयन्ते दशसमाना इति वचनात । तेन सवर्णकार्यं प्राप्नोतीत्यर्थः ॥

॥ वि० ॥ तत्प्रयोजकत्वाभावे हेतुर्नरसिंहवदिति । तदवयवे नरत्वाद्यभाववदेतदवयवेऽप्यत्वाद्यभाव इतिभावः । वचनादिति । अ आ इ ई उ ऊ ऋ ॠ ऌ
ॡ दश समाना इति पूर्वव्याकरणवचनादित्यर्थः । समानकार्यम् । अग्रूपसमानाक्षरकार्यमित्यर्थः । सवर्णकार्यमितिपाठे सवर्णदीर्घरूपकार्यमित्यर्थः ॥

१४४

॥ वि॰ ॥ भाष्ये दीर्घाच्छे इति । दीर्घस्य च्छे तुगितिहि तदर्थः । ननु ह्रस्वस्येत्यत्राच इत्येव सिद्धे ह्रस्वग्रहणसामर्थ्यादेव तुग्नेतिचेच ।

॥ कै॰ ॥ असिद्धत्वाच्चेति । असिद्धवदत्राभादित्यनेन ॥

॥ भा॰ ॥ वर्णैकदेशा वर्णग्रहणेन चेत् सन्ध्यक्षरे समानाक्षराश्रयो विधिः प्राप्नोति स प्रतिषेध्यः । अग्ने इन्द्र वायो उदकम् । अकः सवर्णे दीर्घ इति दीर्घत्वं प्राप्नोति । दीर्घे ह्रस्वविधिप्रतिषेधः । दीर्घे ह्रस्वाक्षराश्रयो विधिः प्राप्नोति स प्रतिषेध्यः । आलूय प्रलूय ह्रस्वस्य पिति कृति तुग्भवतीति तुक् प्राप्नोति । नैष दोषः । आचार्यप्रवृत्तिर्ज्ञापयति न दीर्घे ह्रस्वाश्रयो विधिर्भवतीति । यदयं दीर्घाच्छे तुकं शास्ति । नैतदस्ति ज्ञापकम् । अस्तिह्यन्यदेतस्य वचने प्रयोजनम् । किम् । पदान्ताद्वेति विभाषां वक्ष्यामीति । यत्तर्हि योगविभागं करोति । इतरथा हि दीर्घात्पदान्ताद्वेत्येव ब्रूयात् । इह तर्हि खट्वाभिः मालाभिः अतो भिस ऐसित्यैसभावः प्राप्नोति । तपरकरणसामर्थ्यान्न भविष्यति । इह तर्हि याता वाता अतो लोप आर्द्धधातुके इत्यकारलोपः प्राप्नोति । ननुचात्रापि तपरकरणसामर्थ्यादेव न भविष्यति । अस्ति ह्यन्यत्तपरकरणे प्रयोजनम् । किम् । सर्वस्य लोपो माभूदिति । अथ क्रियमाणेऽपि तपरे परस्य लोपे कृते पूर्वस्य कस्मान्न भवति परलोपस्य स्थानिवद्भावादसिद्धत्वाच्च ॥

॥ वि॰ ॥ पदलाघवाभावादित्याशयात् । अस्तिहीति । तत्र दीर्घादित्यस्याभावे कुश्यच्छायेत्यादावपि विकल्पः स्यादितिभावः । असिद्धवदिति । चिणो लुङ्न्यायेनेतिभावः ॥

१४५

॥ वि॰ ॥ भाष्ये उत्तरार्थमेतदिति । इह किञ्चित्त्वपो इति न्यायस्तु नाश्रितः । अत्र केवलाकारोच्चारणे उत्तरत्र ककाराकारयोरुच्चारणे गौरवादितिभावः । सन्निपातेति । नच दीर्घेणैव स निवर्त्तितः । दीर्घेऽप्यत्वजातिसम्बन्धसत्त्वेन न तथा सन्निपातक्षतिः । लोपेतु तस्यापि निवृत्तेस्तद्विरोधस्य स्पष्टत्वादितिभावः । परेतु जातिपक्षे तपरसूत्रं व्याप्यजातिनिर्द्देशस्यैव बोधकमिति यत्वनिमित्तसन्निपातस्य दीर्घेण निवृत्तिर्जातैव न कस्याप्यनु-

॥ कै॰ ॥ यत्तर्हीति । नन्वसति कित्त्वे आकारस्थस्याकारस्य लोपे कृते द्वयोरकारयोः पररूपस्य धातुस्थत्वन्तवद्भावाच्छन्दोगायेत्य-

॥ भा॰ ॥ एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति नाकारस्थस्यातो लोपो भवतीति । यदयमातोऽनुपसर्गे क इति ककारमनुबन्धङ्करोति । कथं कृत्वा ज्ञापकम् । कित्करणे एतत्प्रयोजनं कितीत्याकारलोपो यथा स्यादिति । यदिच आकारस्थस्याकारस्य लोपः स्यात्कित्करणमनर्थकं स्यात् परस्याकारस्य लोपे कृते द्वयोरकारयोः पररूपेण हि सिद्धं रूपं स्याद् गोदः कम्बलद इति । पश्यतित्वाचार्यो नाकारस्थस्यातो लोपो भवतीति । अतः ककारमनुबन्धङ्करोति । नैतदस्ति ज्ञापकम् । उत्तरार्थमेतत्स्यात् तुन्दशोकयोः परिमृजापनुदोरिति । यत्तर्हि गापोष्टगित्यनन्यार्थं ककारमनुबन्धं करोति ॥

॥ कै॰ ॥ चातो धातोरित्याकारलोपप्रसङ्गः । नैष दोषः । सन्निपातपरिभाषया लोपो न भविष्यति । अकारं ह्याश्रित्य यशब्दः कृतो लोपस्यानिमित्तं दीर्घत्वन्तु कष्टायेति निपातनाद्भवति ॥

॥ वि॰ ॥ इतिस्त्वस्माद्व्याप्यात्वजातियत्वादिसन्निपातनिमित्तो दीर्घो न स्वसन्निपातविघातकलोपनिमित्तम् । सन्निपातपरिभाषायाश्च स्वप्रवृत्तेः प्राक् स्वनिमित्तभूतो यादृशः सन्निपातः स्वातिरिक्ततद्विघातकस्य स्वयमनिमित्तमित्यर्थः । मात्राकालिकत्वसमानाधिकरणव्यापकजातिनिर्द्देशपक्षेऽप्यङ्गसंज्ञा तन्निमित्तं स्यादिति कृन्मेजन्तसूत्रवक्ष्यमाणरीत्या यादेशनिमित्तसन्निपातस्य न लेशतोऽपि क्षतिरिति वदन्ति ॥

१४६

॥ वि० ॥ प्रातर्कृतं तद् लृकार इत्यादौ रोरि तोर्लीतितु नापादितं तस्याभितो ऽज्भागसत्त्वेन तेन व्यवधानात्तदप्राप्तेः । अग्ने इन्द्रेत्यादौ सवर्णदीर्घव्यावृत्तये आह । सामान्येनेति । गोह्यचोऽङ्ख्येति गोग्रहणं नौह्यचष्ठन्निति नौग्रहणम् । वर्णावयवाश्रयकार्याभावस्येति ।

॥ कै० ॥ एकवर्णवदिति । अवयवसङ्ख्याश्रयेण वाक्शब्दस्य द्व्यच्त्वात्तन्निमित्तं कार्यं प्राप्नोतीत्येकवदि-

॥ भा० ॥ एकवर्णवच्च । एकवर्णवच्च दीर्घो भवतीति वक्तव्यम् । किम्प्रयोजनम् । वाचा तरतीति द्व्यज्लक्षणष्ठन् माभूदिति । इह च वाचो निमित्तं तस्य निमित्तं संयोगोत्पाताविति द्व्य-ज्लक्षणो यद् माभूदिति । अत्रापि गोनौ ग्रहणं ज्ञापकं दीर्घाद् द्व्यज्लक्षणो विधिर्न भवतीति । अयन्तु सर्वेषामेव परिहारः ॥

॥ कै० ॥ त्यतिदेशः क्रियते । गोनौग्रहणं ज्ञापकमिति । सामान्येन ज्ञापकं वर्णावयवाश्रयकार्याभा-वस्येत्यग्ने एहीत्यादावेङः पदान्तादतीत्यादि न भवति ॥

॥ वि० ॥ वर्णावयवेषु भेदेनाप्रतिभासमानेषु वर्णाश्रयकार्याभावस्येत्यर्थः । तेन मातॄणामित्यादौ णत्वादिसिद्धिः । भेदेन प्रतिभासात् सामान्यापेक्षज्ञा-पकं विनापि न्यायेन निर्वाहमाह भाष्ये । अयन्त्विति ॥

१४७

॥ वि० ॥ अभिन्नबुद्धिविषयस्येत्यस्य व्याख्या एकत्वालम्बनज्ञानग्राह्यस्येति । समुदायस्य योऽवयव इति । वर्णसमुदायस्येत्यर्थः । व्यधिकरणे इति । सामानाधिकरण्येनान्वयेऽव्यपवृक्तस्येति व्यर्थं

॥ कै० ॥ नाव्यपवृक्तस्येति । व्यपवर्गो व्यपवृक्तं भेदः । तेनाव्यपवृक्तस्याभिन्नबुद्धिविषयस्यैकत्वालम्बनग्राह्यस्य समुदायस्य योऽवयवस्तस्मिंस्तद्विधिः पृथग्भूतवर्णविधिर्न भवतीत्यर्थः । अव्यपवृक्तस्यावयवस्येति व्यधिकरणे षष्ठी

॥ भा० ॥ नाव्यपवृक्तस्यावयवे तद्विधिर्यथा द्रव्येषु । नाव्यपवृक्तस्यावयवस्यावयवाश्रयो विधिर्भवति यथा द्रव्येषु ॥

॥ कै० ॥ अव्यपवृक्तस्य समुदायस्य योऽवयवस्तस्येत्यर्थः । नहि सम्भवमात्रेण कार्याणि क्रियन्ते अपितु यत्र तद्बुद्धिरस्ति तत्रैवेत्यर्थः । माषा न भोक्तव्या इति निषेधस्तु मिश्रेष्वपि प्रवर्त्तते तत्र तद्बुद्धितद्रसास्वादनसम्भवात् ॥

॥ वि० ॥ सर्वस्याप्यवयवस्यावयविनाऽव्यपवृक्तत्वादितिभावः । भाष्ये अवयवाश्रयः । अवयवशब्दस्तत्स्थवर्णाश्रयः । उक्तेऽर्थे युक्तिमाह । नहीति ॥

॥ वि० ॥ ननु सामिधेनीशब्दस्य ऋक्षु शक्तत्वे न काष्ठमय्यावाधीयत इति भाष्यमयुक्तमत आह । साहचर्यादिति । तदाधेयत्वेनेति भावः । तत्र सप्तदशेति । यद्यपि एकैका समिदरत्निमात्रमिति मिलितानां सप्तदशानां समिधां सप्तदशारत्निमात्रत्वं भवति एकस्यापि ताव-त्त्वमस्ति तथाप्यव्यपवृक्तस्य मुदायावयवत्वाद् न व्यपवृक्ताश्रयकार्यप्रसङ्ग इतिभावः । नह्यव्यपवृक्तत्वमात्रनिबन्धनं तदनभ्याधानं किन्तु

॥ कै० ॥ सप्तदशेति । सामिधेनीशब्द ऋचां वाचकः साहचर्यात्काष्ठेषु वर्त्तते । तत्र सप्तदशहस्ते काष्ठे

॥ भा० ॥ तद्यथा । द्रव्येषु सप्तदशसामिधेन्यो भवन्तीति न सप्तदशारत्निमात्रं काष्ठमय्या-वाधीयते । विषम उपन्यासः । प्रत्यृचञ्चैव हि तत्कर्म चोद्यते । असम्भवश्चाग्नौ वेद्याञ्च ॥

॥ कै० ॥ सप्तदशकाष्ठानीति बुद्धेरभावान्न तस्याभ्याधानम् । असम्भव इति । अर्द्धचतुर्हस्ता हि वेदिः ॥

॥ वि० ॥ असम्भवनिबन्धनमित्याह भाष्ये । विषम इति । आहितपुनर्ग्रहणस्य निषिद्धत्वादेकस्य काष्ठस्य प्रत्यृचमाधानं न सम्भवतीतिभावः । युक्त्यन्तर-माह । असम्भवश्चेति । तमुपपादयति । अर्द्धचतुर्हस्तेति । अर्द्धेन चतुर्हस्तेति तृतीयातत्पुरुषः । समिधोऽग्निवेदिबहिर्भावनिषेधाच्चासम्भव इतिभावः ॥



॥ वि० ॥ अव्यपवृक्तमिति । अर्थाभावेऽव्ययीभावस्तदाह । व्यपवर्गस्येति । वस्तुतस्तत्पुरुष एवायम् । व्यपवृक्तभिन्नतैलमांसरूपा गावः सर्षपाश्चेत्यर्थः । नञाव्ययीभावस्याभावादित्यग्रे वक्ष्यते । भाष्ये कामचार इति ।

॥ कै० ॥ यथा तर्हीति । अल्पप्रमाणत्वात् स्यात्सम्भव इतिभावः । अव्यपवृक्तमिति । व्यपव-

॥ भा० ॥ यथा तर्हि सप्तदशप्रादेशमात्रीराश्वत्थीः समिधोऽभ्यादधीतेति न सप्तदशप्रादेशमात्रङ्काष्ठमभ्यावभ्याधीयते । अत्रापि प्रतिप्रणवञ्चैतत् कर्म चोद्यते तुल्यश्चासम्भवोऽग्नौ वेद्याञ्च । यथा तर्हि तैलं न विक्रेतव्यं मांसं न विक्रेतव्यमिति व्यपवृक्तञ्च न विक्रीयते । अव्यपवृक्तञ्च गावः सर्षपाश्च विक्रीयन्ते । तथा लोम-नखं स्पृष्ट्वा शौचङ्कर्त्तव्यमिति व्यपवृक्तं स्पृष्ट्वा नियोगतः कर्त्तव्यम् । अव्यपवृक्ते कामचारः । यत्र तर्हि व्यपवर्गोऽस्ति । क्व च व्यपवर्गोऽस्ति । सन्ध्यक्षरेषु ॥

॥ कै० ॥ र्गस्याभावेनेत्यर्थः । यत्र तर्हीति । ऐऔ इत्यत्र हि स्फुटोऽकारप्रतिभासोऽस्ति ॥

॥ वि० ॥ स्पर्शे कामचारस्तेन शौचाभाव इत्यर्थः । एङोः संश्लिष्टावर्णत्वेन व्यपवर्गस्यास्पष्टत्वात्सन्ध्यक्षरग्रहणमैजभिप्रायमित्याह । ऐऔ इति ॥

॥ वि० ॥ अकारस्येति । यद्यप्येचो विवृततमास्तथापि विवृततरत्वमस्त्येवेतिभावः । प्रयत्नभेदादेव एङैचोः परस्परं सावर्ण्याभावः । एङो

॥ कै० ॥ विवृतत्वादिति । अकारस्य विवृतोपदेशादत्र प्रकर्षो विवक्षितस्तदाह । विवृततरमिति ।
तत्र प्रयत्नभेदादसावर्ण्यादकारेण सन्ध्यक्षरावयवस्य ग्रहणं नास्तीत्यर्थः ।

॥ भा० ॥ सन्ध्यक्षरेषु विवृतत्वात् । सन्ध्यक्षरेषु यदवर्णं विवृततरं तदन्यस्मादवर्णाद् ये अपीवर्णोवर्णे विवृततरे ते अन्याभ्यामिवर्णोवर्णाभ्याम् ॥

॥ कै० ॥ तदेवमाकारादिस्थस्यावयवस्य भेदेनाग्रहणादग्रहणम् । सन्ध्यक्षरस्थस्यत्वसावर्ण्यात् । ऋकारस्थस्तु रेफो भेदेन प्रतिभासाद्गृह्यत इति नुडादिसिद्धिः ॥

॥ वि० ॥ विवृततरत्वादेचां विवृततमत्वादिति बोध्यम् । नुडादीति । आनृजे इत्यत्र नुट् । आदिना चक्लृपे इत्यत्र लत्वं मातॄणामित्यादौ णत्वञ्चेति बोध्यम् ॥



॥ वि० ॥ सादृश्याच्चेति । चस्त्वर्थे । समुदाये । सन्ध्यक्षरादौ । सत्यपि गोसादृश्ये गवये गोत्वस्येव सन्ध्यक्षराद्यवयवेषु अत्वादिजातेरभावादकारादिग्रहणेन ग्रहणं नेतिभावः । ऐकारादीनामेकेच्छाप्रयत्नजन्यत्वेनैकत्वमेव अकारादिवत् । अत एवैषां पदवन्न वर्णसमूह-

॥ कै० ॥ अथवेति । नरसिंहवद्वर्णान्तरत्वात्सादृश्याच्च प्रत्यभिज्ञानात्तत्त्वासिद्ध्या पृथगुपलब्धानां वर्णानां समुदाये नास्ति

॥ भा० ॥ अथवा पुनर्न गृह्यन्ते । अग्रहणाच्चेन्नुड्विधिलादेशविनामेषु ऋकारग्रहणम् । अग्रहणाच्चेन्नुड्विधिलादेशविनामेषु ऋकारस्य ग्रहणं कर्त्तव्यम् । तस्मान्नुड् द्विहलः । ऋकारे चेति वक्तव्यम् । इहापि यथा स्यात् आनृधतुः । आनृधुरिति । यस्य पुनर्गृह्यन्ते द्विहल इत्येव तस्य सिद्धम् । यस्यापि न गृह्यन्ते तस्याप्येष न दोषः । द्विहल्ग्रहणं न करिष्यते तस्मान्नुड् भवतीत्येव यदि न क्रियते । आटतुः । आटुरित्यत्रापि प्राप्नोति । अश्नोतिग्रहणं नियमार्थं भविष्यति ॥

॥ कै० ॥ सत्त्वम् । समुदायवाचो युक्तिरपि तत्र वर्णान्तरे न तात्त्विकी । भ्रान्तिवशात्त्ववयवसद्भावाश्रयेण प्रवृत्ता ॥

॥ वि० ॥ त्वेन प्रतिभास इति तदेवाह । समुदायवाच इति । भ्रान्तिवशादिति । भ्रान्तिगृहीतावयवसद्भावाश्रयेणेत्यर्थः । एवञ्च भ्रान्तिरेव ग्रहणप्रपञ्चबीजमितिभावः । अत एव गोनौग्रहणं चरितार्थम् । विनामो णत्वम् ॥

१५२

॥ वि० ॥ ननु विकरणविशेषनिर्देशेन श्नाविकरणनिवृत्त्यर्थं सूत्रं स्यादत आह । नलश्नातिरेवेति । तथाहि सति नाश्न इत्येव वदेदिति भावः । नियमज्ञापकस्य । नियमबोधकस्य ।

॥ कै० ॥ अश्नोतेरिति । सामान्येनावर्णोपधो निवर्त्यते नलश्नातिरेव सामान्यापेक्षत्वान्नियमज्ञापकस्य ।

॥ भा० ॥ अश्नोतेरेवावर्णोपधस्य नान्यस्यावर्णोपधस्येति । लादेशेच ऌकारग्रहणं कर्त्तव्यम् ।
क्ृपो रो लः । ऌकारस्यचेति वक्तव्यम् । इहापि यथा स्यात् क्लृप्तः क्लृप्तवानिति । यस्य
पुनर्गृह्यन्ते र इत्येव तस्य सिद्धम् । यस्यापि न गृह्यन्ते तस्याप्येष न दोषः । ऌकारोऽप्यत्र
निर्दिश्यते । कथम् अविभक्तिको निर्देशः । कृप उः रः लः । कृपो रो ल इति ॥

॥ कै० ॥ अविभक्तिक इति । तत्र ऌकारनिर्देशस्य सामर्थ्यादिभागं परिकल्प्यादेशो विधीयते ॥

॥ वि० ॥ नन्वखण्डवर्णपक्षे ऌकारप्रश्लेषेऽपि कथं सिध्यतीत्यत आह । तत्र ऌकारेति । एवञ्च रेफपदेन तत्सदृश आरोपितरेफत्ववानपि गृह्यत इति फलितम् ॥

१५३

॥ वि० ॥ मात्रशब्दः सामान्याभिप्राय इत्याह । जातीति । जातिश्चावयवानवयवसाधारणीत्याशयेनाह । ततश्चेति । एवं विधाच रत्वलत्वजातिरेवेत्यतिप्रसङ्गो न । स्थान्यादेशभावश्च जातेर्व्यक्तिद्वारको बोध्यः । वस्तुतः स्फोट एव श्रोत्रग्राह्यः । वायुनिष्ठा रत्वादिनाच तस्याभिव्यक्तिः । एवञ्च साक्षाद्रत्ववतोऽभावेन कल्पत इत्यत्राप्यप्रवृत्तावस्य वैयर्थ्यापत्तिः । एवञ्च रेफावभासिनः स्फोटस्य प्रसङ्गे लकारावभासः स्फोट इत्यर्थः । एवञ्च कृपावपि तत्प्रवृत्तिः सम्भवत्येव तत्रापि रेफावभाससत्त्वात् । आकारादौ तु नैवं ह्रस्वाद्यवभास इति न तत्राकारावभासप्रयुक्तकार्यापत्तिः । तदुक्तं

॥ कै० ॥ स्फोटमात्रमिति । जातिस्फोट इत्यर्थः । ततश्चान्तर्भूतानन्तर्भूतरेफलकारव्यक्तिव्यङ्ग्यं सामान्यं स्थान्यादेशभावेनाश्रीयते ॥

॥ भा० ॥ अथवोभयतः स्फोटमात्रं निर्दिश्यते रश्रुतेर्लश्रुतिर्भवतीति । विनामे ऌकारग्रहणं
कर्त्तव्यम् । रषाभ्यां नो णः समानपदे । ऌकाराच्चेति वक्तव्यम् । इहापि यथा स्यात् । मातॄणां
पितॄणामिति । यस्य पुनर्गृह्यन्ते रषाभ्यामित्येव तस्य सिद्धम् । न सिध्यति ॥

॥ वि० ॥ श्रुतेरित्यादि । यत्तु स्वतन्त्रास्वतन्त्रसाधारणजातिपरतयैतद्भाष्यव्याख्यानम् । तन्न । तादृशजातौ मानाभावात् । नरसिंहदृष्टान्तानुपपत्तेश्च । सादृश्यात्तु प्रत्यभिज्ञेत्यादिस्वोक्तिविरोधापत्तेश्च । किञ्चैवं सति रजातेरित्येव भगवान् वदेत् । किञ्च तादृशजातिसत्त्वे वर्णैकदेशानामपि तज्जातिमत्त्वेन वर्णग्रहणेन ग्रहणपक्षस्यैव सिद्धा ग्रहणपक्षमुक्त्वा अथवा न गृह्यत इति पक्षे तत्समाधानपरभाष्यासङ्गतेः । अत एवाष्टमे रषाभ्यामितिसूत्रे यथा नरसिंहावयवानां नरत्वसिंहत्वजातियोगाभावात्पुरुषमृगराजाभ्यामेकाकृतियोगाभाव एवं वर्णवर्णैकदेशयोरपीति कैयट आहेति वदन्ति ॥

॥ वि० ॥ ऋकारेणेति । ऋकारावयवस्य रेफस्येव तदज्भागस्यापि केनचिदकारादिना ग्रहणादट्त्वमिति मन्यते । जात्यभिव्यक्तीति । अत्वादिजातीत्यर्थः ।

॥ कै० ॥ यत्तदिति । रेफाद्भक्तेरिति समानाधिकरणे पञ्चम्यौ । अड्व्यवाय इति । ऋकारेण यथा दीर्घो गृह्यते एवमृका-

॥ भा० ॥ यत्तद्रेफात्परं भक्तेः तेन व्यवहितत्वान्न प्राप्नोति । माभूदेवम् । अड्व्यवाय इत्येव सिद्धम् । न सिध्यति । वर्णैकदेशाः के वर्णग्रहणेन गृह्यन्ते ये व्यपृक्ता अपि वर्णा भवन्ति । यच्चापि रेफात्परं भक्तेः न तत्क्वचिदपि व्यपृक्तं दृश्यते । एवं तर्हि योगविभागः करिष्यते । रषाभ्यां नो णस्समानपदे । ततो व्यवाये । व्यवायेच रषाभ्यां नो णो भवति । ततोऽ-ट्कुप्वाङ्नुम्भिरिति । इदमिदानीं किमर्थम् । नियमार्थम् ॥

॥ कै० ॥ रभागोऽपीतिभावः । न सिध्यतीति । तस्य भागस्य स्फुटप्रतिभासाविषयत्वाज्जात्यभिव्यक्तिहेतुत्वाभावाच्चेतिभावः ॥

॥ वि० ॥ एवञ्च न केनाप्यचा तद्ग्रहणमितिभावः । अत्र जात्यभिव्यक्तिहेतुत्वाभावे स्फुटप्रतिभासाविषयत्वं हेतुः । चो हेतौ । अतो न सिध्यतीत्यर्थः ॥



॥ वि० ॥ नन्वाकारादिभिर्व्यवायेऽपि न स्यादाक्षरसमाम्नायिकत्वाभावादत आह । आकारादयोऽपीति । भक्तिस्त्विति । असवर्णत्वा-दनुपदेशाच्चेतिभावः । भाष्ये न्नमनशब्दमिति सञ्ज्ञाभूतमित्यभिप्रायः । गन्धर्वगानमित्यादौ सुबुत्पत्तेः पूर्वं समासेऽपि णत्ववारणाय अख-ण्डपदे इत्यर्थकसमानपदे इत्यत्र पदस्यार्थबोधकस्यैव ग्रहणेन सखण्डत्वे असञ्ज्ञायां णत्वप्राप्त्यभावादिति बोध्यम् । छन्दस्यृदित्यस्यतु नात्र प्राप्तिः ।

॥ कै० ॥ एतैरेवेति । आकारादयोऽप्यकारादिभिः प्रत्यायितत्वादाक्षरसमाम्नायिकाः भक्तिस्तु न प्रत्याय्या नच प्रत्यायिकेति नियमेन न निवर्त्यते ॥

॥ भा० ॥ एतैरेवाक्षरसमाम्नायिकैर्व्यवाये नान्यैरिति । यस्यापि न गृह्यन्ते तस्याप्येष न दोषः । आचा-र्यप्रवृत्तिर्ज्ञापयति भवत्यृकारान्नो णत्वमिति । यदयं क्षुभ्नादिषु न्नमनशब्दं पठति । नैतदस्ति ज्ञापकम् । वृद्ध्यर्थमेतत्स्यात् । नार्नमनिरिति । यत्तर्हि तृप्नोतिशब्दं पठति । यच्चापि न्नमनशब्दं पठति । ननु चोक्तं वृद्ध्यर्थमेतत्स्यादिति । बहिरङ्गा वृद्धिरन्तरङ्गं णत्वम् । असिद्धं बहिरङ्गमन्तरङ्गे । अथवा उपरि-ष्टाद्योगविभागः करिष्यते । ऋतो नो णो भवतीति । ततः । छन्दस्यवग्रहादिति । ऋत इत्येव । प्लुता-वैच इदुतौ । एतच्च वक्तव्यम् ॥

॥ वि० ॥ ईदृशे विषयेऽवग्रहाभावादित्याहुः । बहिरङ्गा वृद्धिरिति । त्रिपाद्यामपि बहिरङ्गपरिभाषा प्रवर्त्तत इति वार्त्तिकमतेनैतत् । भाष्यमतेतु तृप्नो-तिशब्दपाठस्यैव ज्ञापकता बोध्या । ऋतो नो ण इति । मातृणामित्यादौ दीर्घस्य बहिरङ्गासिद्धत्वाण्णत्वम् । यद्वा । प्रशास्तृणामिति निर्देशाण्णत्वम् । अत्र तपरत्वं मुखसुखार्थमेव । उत्तरत्राप्येवमेव फलाभावात् । ध्वनितश्चेदं वृत्तौ ॥

१५६

॥ वि० ॥ ननु गुर्व्वयवटेरित्यर्थाङ्गीकारे गुरुरूपटेः प्लुतो न स्यादत आह । तन्त्रेति । स्थानषष्ठ्यन्तावयवषष्ठ्यन्तयोर्गुरुशब्दयोरित्यर्थः । गुर्व्वयवटिश्चैच एव सम्भवति नान्यस्य आकारादेः । तदवयवस्य व्यपदृक्तत्वाभावादितिभावः । अच्त्वाभावादिति ।

॥ कै० ॥ गुरोष्टेरिति । ऐकारो गुरुः तस्य टेरिति सिद्धम् । तन्त्रन्यायाश्रयणाच्च गुरोरपि स्थाने प्लुतो भवति देवद-त्तेति । क्रियते न्यास एवेति । अवश्यकर्त्तव्यतां दर्शयति । व्यपदृक्तोऽपि भागयोर्विद्दततरत्वात्

॥ भा० ॥ यस्य पुनर्गृह्यन्ते गुरोष्टेरित्येव प्लुत्या तस्य सिद्धम् । यस्यापि न गृह्यन्ते तस्याप्येष न दोषः । क्रियत एतन्न्यास एव । तुल्यरूपे संयोगे द्विव्यञ्जनविधिः । तुल्यरूपे संयोगे द्विव्यञ्ज-नाश्रयो विधिर्न सिध्यति । कुक्कुटः पिप्पली पित्तमिति । यस्य पुनर्गृह्यन्ते तस्य द्वौ ककारौ द्वौ पकारौ द्वौ तकारौ । यस्यापि न गृह्यन्ते तस्यापि द्वौ ककारौ द्वौ पकारौ द्वौ तकारौ ॥

॥ कै० ॥ प्रयत्नभेदादिकारोकाराभ्यामग्रहणादच्त्वाभावात् । तुल्यरूप इति । तुल्यरूपावयवत्वात्संयोगस्तुल्यरूपः । तस्यै-कवर्णत्वं पूर्वपक्षे । सिद्धान्ते तु वर्णद्वयरूपता । आशूच्चारणात्तु भ्रान्तमेकत्वज्ञानमिति शिष्टसमाचारः ॥

॥ वि० ॥ तन्मूलटित्वाभावाच्चेत्यपि बोध्यम् । संयोग इति । संयोगसञ्ज्ञार्ह इत्यर्थः । तस्यैकवर्णत्वमिति । एवञ्च संयोगसञ्ज्ञा न स्यादितिभावः । संयोगे इति भाष्यन्तु संयोगार्हे इत्यर्थपरमिति तात्पर्यम् । शिष्टसमाचारः । शिष्टव्यवहारः ॥

१५७

॥ वि० ॥ भाष्ये मात्राकालोऽत्रेति बहुव्रीहिस्संयोगोऽन्यपदार्थः । मात्रिकव्यञ्जनाभावेऽनुपदिष्टत्वं हेतुः । कुक्कुट इत्याद्युच्चारणान्तु नोपदेशः । अनुपदिष्टत्वं नाम अक्षरसमाम्नायेऽपठितत्वं ग्राहकशास्त्रेणागृहीतत्वञ्च । अनुपदिष्टं सत् सत्त्वेन कथं शक्यं विज्ञातुमित्यर्थः । एवञ्चानुपदिष्ट-स्यासत्त्वात् तत्प्रतिपत्तिरशक्येत्याह । असच्चेति । क्वचित्तु असच्चेत्यादिग्रन्थो न दृश्यते ।

॥ कै० ॥ अत्रापीति । सानुनासिकनिरनुनासिकौ द्वावत्र वर्णावित्यर्थः ॥

॥ भा० ॥ कथम् । मात्राकालोऽत्र गम्यते नच मात्रिकं व्यञ्जनमस्ति । अनुपदिष्टं सत् कथं शक्यं विज्ञातुम् । असच्च कथं शक्यं प्रतिपत्तुम् । यद्यपि तावदत्रैतत् शक्यते वक्तुम् । यत्रैतन्नास्त्यण् सवर्णान् गृह्णातीति । इह तु कथं सँय्यन्ता । सँव्वत्सरः । यँल्लोकं तँल्लोक-मिति । यत्रैतदस्त्यण् सवर्णान् गृह्णातीति । अत्रापि मात्राकालो गम्यते नच मात्रिकं व्यञ्जनमस्ति । अनुपदिष्टं सत् कथं शक्यं विज्ञातुम् । असच्च कथं शक्यं प्रतिपत्तुम् ॥

॥ वि० ॥ अनेन लृकारापाठे तस्यासत्त्वशङ्कया तयोस्सावर्ण्यविधिरप्यशक्य इति सूचितम् । यत्रैतदस्तीति भाष्ये हलोऽनन्तरा इत्यत्र यकारादिभिरस्य ग्रहणे हल्द्वयाभाव इतिभावः । सानुनासिकेति । अणुदित्सूत्रं हि विद्यमानस्य लोकसिद्धस्य सवर्णस्य ग्राहकमेव नत्वप्रसिद्धसवर्णकल्पकमितिभावः ॥

॥ वि० ॥ हयवरट्। नन्वयं हकार इत्यनेनैकत्वं हकारस्य सूचितमिति कथं तद्विरुद्धं पूर्वश्चेत्यादिना भेदाश्रयणमत आह। पूर्वपरेति। एतद्भाष्यादेकत्वं वर्णानामित्येव पक्षो भगवतस्सम्मत इति ज्ञायते। भाष्ये यदि पुनरिति। नचैवं परहकाराभावे लकारस्याप्यभावेन तन्त्राद्याश्रयणेन हलन्त्यमित्यत्रान्योऽन्याश्रयपरिहारो वक्ष्यमाणो विरुध्येतेति वाच्यम्। रन्त्यं हरिति न्यासेन लन्त्यं हल् इति न्यासेन वा तत्परिहारात ॥

॥ कै० ॥ हयवरट्। पूर्वश्चेति। पूर्वपरोच्चारणक्रियाभेदादेकस्यैव हकारस्य पूर्वपरव्यपदेशः ॥

॥ भा० ॥ हयवरट्। सर्वे वर्णाः सकृदुपदिष्टाः। अयं हकारो द्विरुपदिश्यते पूर्वश्चैव परश्च। यदि पुनः पूर्व एवोपदिश्येत पर एव वा। कश्चात्र विशेषः। हकारस्य परोपदेशे अड्ग्रहणेषु हग्रहणम्। हकारस्य परोपदेशेऽड्ग्रहणेषु हकारस्य ग्रहणं कर्त्तव्यम् ॥

॥ वि० ॥ लाघवाभावेऽपि एवं कर्त्तुं शक्यं न वेत्येव विचारतात्पर्यात्। यद्वा हरन्त्यमित्यस्यैवाटन्त्या हर्बोधकसूत्रसमुदायान्त्यमिदित्यर्थः। परेतु परहकाराभावेऽपि लइत्येव सूत्रं कार्यं प्रातिशाख्यादिप्रसिद्धहलादिप्रत्याहारसिद्ध्यर्थम्। तदर्थं रान्तस्यापि शक्तिकल्पने गौरवात्। हलन्त्यमित्यस्याटन्त्या हल्प्रत्याहारबोधकसूत्रसमुदायान्त्यमिदित्यप्यर्थ इत्यदोष इत्याहुः। अड्ग्रहणेष्विति। अड् गृह्यते येषु सूत्रेष्वित्यर्थः ॥



॥ वि० ॥ शश्छोटीत्यस्योदाहरणाऽदाने बीजमाह। हकारपरस्येति। नच तत्शृहित्याहेत्युदाहरणसम्भवः। शास्त्रबोधितं सौत्रञ्च विहाय हलामुच्चारणार्थाचं विनोच्चारणस्यासाधुत्वेन तादृशोदाहरणाभाव इत्याशयात्। अचच भाष्ये एतदुदाहरणाऽदानमेव मानम्। आतोऽटि-

॥ कै० ॥ शश्छोऽटीति। हकारपरस्य शकारस्याभावात् प्रसङ्गोच्चारितमेतत्। उत्वेचेति। अशत्वमपि प्रयोजयतीति वक्तव्यम्। भो हसतीति रोर्यत्वार्थम् ॥

॥ भा० ॥ आतोऽटि नित्यम्। शश्छोऽटि। दीर्घादटि समानपादे। हकारेचेति वक्तव्यम्। इहापि यथा स्यात्। महां हि सः। उत्वेच। उत्वेच हकारग्रहणं कर्त्तव्यम्। अतो रोरप्लुतादप्लुते। हशिच। हकारेचेति वक्तव्यम्। इहापि यथा स्यात्। पुरुषो हसति। ब्राह्मणो हसति। अस्तु तर्हि पूर्वोपदेशः। पूर्वोपदेशे कित्त्वकेड्विधयो झल्ग्रहणानिच। यदि पूर्वोपदेशः कित्त्वं विधेयम्। स्निहित्वा स्नेहित्वा। सिस्निहिषति सिस्नेहिषतीति। रलो व्युपधाद्धलादेरिति कित्त्वं न प्राप्नोति ॥

॥ वि० ॥ दीर्घादटीत्युभयोरुदाहरणं महां हि स इति। अट्कुप्वितिसूत्रेऽपि ग्रहणफलमर्हणेति बोध्यम्। अशत्वमपीति। इदमिण्त्वस्याप्युपलक्षणम्। तेन लिलिहिढ्वे इत्यादौ विभाषेट इति ढत्वविकल्पसिद्धिरिति केचित्। भाष्ये हशिचेति सिद्धान्तरीत्या निर्देशः। इदानीन्तु यशिचेति सूत्रम् ॥

॥ वि० ॥ अहकाराणि स्युरिति । अतस्तत्र हकारग्रहणङ्कर्त्तव्यमितिभावः । अदाग्धामिति । घत्वस्यासिद्धत्वादितिभावः । स्वरूपप्रति-पत्त्यर्थ एवायमक्षरसमाम्नाय इति भ्रमं वारयति भाष्ये । यदि किञ्चिदिति । तद्व्याचष्टे प्रयोजनार्थ इति । शास्त्रीयप्रयोजनार्थः । एव-

॥ कै० ॥ यदिच किञ्चिदिति । प्रयोजनार्थो हि वर्णानामुपदेशो न स्वरूपप्रतिपत्त्यर्थः ॥

॥ भा० ॥ क्सविधिः । क्सश्च विधेयः । अधुक्षत । अलिक्षत् । शल इगु-पधादनिटः क्स इति क्सो न प्राप्नोति । इड्विधिः । इट्च विधेयः । रुदिहि । स्वपिहि । वलादिलक्षण इड् न प्राप्नोति । झल्ग्रहणानिच । किम् । अहकाराणि स्युः । तत्र को दोषः । झलो झलीतीह न स्यात् । अदाग्धाम् । अदाग्धम् । तस्मात्पूर्वश्चैवोपदेष्टव्यः परश्च । यदिच किञ्चिदन्यत्राप्युपदेशे प्रयोजनमस्ति तत्राप्युपदेशः कर्त्तव्यः ॥

॥ वि० ॥ स्वाद्यहकारस्याणि णोरपि प्रयोजनं सूचितम् । अत एव मध्वा हसन्तीति पुंयोगादिति सूत्रे भाष्यप्रयोगस्सङ्गच्छते । एतेन पूर्वहकारोपदेशप्र-योजनवार्त्तिके न्यूनता परिहृता । कर्त्तव्य इत्यस्य स्यादिति शेषः । उपदेशोऽत्रोच्चारणमात्रम् । अन्यत्रापि । प्रत्याहारान्तरे सर्वथा हकारस्य द्वैधोपदेशः कर्त्तव्य इत्यत्रास्य तात्पर्य्यम् ॥



॥ वि० ॥ दोषप्रयोजनेति । अन्यतरपक्षीयदोष एवान्यतरपक्षे प्रयोजनमिति बोध्यम् । णकारोऽत्रेति । स्थानेऽन्तरतमत्वादितिभावः ।

॥ कै० ॥ इदमिति । उभयत्रापि दोषप्रयोजनसद्भावात्प्रश्नः । स्वर्नयतीति । णकारोऽत्र प्राप्नोति न ह्यत्र सवर्णग्रहणमस्ति । मद्रह्रद इति ।

॥ भा० ॥ इदं विचार्य्यते । अयं रेफो यकारवकाराभ्याम्पूर्व एवोपदिश्येत हरयव-डिति । पर एव वा यथान्यासमिति । कश्चात्र विशेषः । रेफस्य परोपदेशे ऽनुनासिक-द्विर्वचन परसवर्णप्रतिषेधः । रेफस्य परोपदेशे ऽनुनासिकद्विर्वचनपरसवर्णानाम्प्रतिषेधो वक्तव्यः । अनुनासिकस्य । स्वर्नयति प्रातर्नयति । यरोऽनुनासिकेऽनुनासिको वेत्यनुनासिकः प्राप्नोति । द्विर्वचनस्य मद्रह्रदो भद्रह्रदः । यर इति द्विर्वचनम्प्राप्नोति ॥

॥ कै० ॥ द्विर्वचने कृते तस्यासिद्धत्वाद्रोरीति रेफलोपो नास्ति हलो यमामितिलोपस्तु पाक्षिक इति पक्षे रेफद्वयश्रवणप्रसङ्गः ॥

॥ वि० ॥ ननु रेफस्य सवर्णाभावात् कथमत्रानुनासिकोऽत आह । न ह्यत्रेति । ननु द्वित्वेऽपि रो रीति हलो यमामिति वा लोपान्न दोषोऽत आह । द्विर्वचन इति ॥

॥ वि० ॥ भाष्येऽवव्युपधादिति । अव् इति लुप्तपञ्चमीकम् । ननु पूर्वोपदेशे इग्यण इत्यादौ यथासङ्ख्यनिर्वाहः कथमिति चेन्न सञ्ज्ञा-

॥ कै० ॥ कुण्डं रथेनेति । अनुनासिकेनैव परसवर्णेन भाव्यमिति नियमाभावाद्रेफः प्राप्नोति तस्यचासिद्धत्वाद्रो-
रीति रेफलोपो नास्ति ॥

॥ भा० ॥ परसवर्णस्य । कुण्डं रथेन वनं रथेन । अनुस्वारस्य ययि परसवर्ण इति परसवर्णः प्राप्नोति ।
अस्तु तर्हि पूर्वोपदेशः । पूर्वोपदेशे किच्चप्रतिषेधो व्यलोपवचनञ्च । यदि पूर्वोपदेशः किच्चप्रतिषे-
ध्यम् । देवित्वा दिदेविषतीति रलो व्युपधादिति किच्चम्प्राप्नोति । नैष दोषः । नैवं विज्ञायते रलः व्युप-
धादिति । किन्तर्हि । रलः अवव्युपधादिति । किमिदमवव्युपधादिति । अवकारान्तात् व्युपधादिति । व्य-
लोपवचनञ्च । व्योश्च लोपो वक्तव्यः । जोवेरदानुक् । जीरदानुः । गोधेरः । पचेरन् यजेरन् ।
वलीति लोपो न प्राप्नोति । नैष दोषः । रेफोऽप्यत्र निर्दिश्यते । लोपो व्योर्वलीति रेफेच वलिचेति ।
अथवा पुनरस्तु परोपदेशः । ननुचोक्तं रेफस्य परोपदेशे ऽनुनासिकद्विर्वचनपरसवर्णप्रतिषेध इति ।
अनुनासिकपरसवर्णयोस्तावत्प्रतिषेधो न वक्तव्यः ॥

॥ वि० ॥ विधानसामर्थ्येन तत्र तद्भावितपक्षाश्रयणान्न दोषः ॥



॥ वि० ॥ भाष्ये रेफोष्मणामिति । विजातीय इतिशेषः । तेन सजातीयेषु सत्स्वपि न दोषः । ननु माभूद्रेफस्य विजातीयः सवर्णस्त-
थाप्यनुनासिकविधौ सवर्णग्रहणाभावादनुनासिकः स्यादेवेत्यत आह । अनुनासिकपरेति । नहि रेफस्येति । नच रेफस्य णकारः स्थानेऽन्त-
रतमो भवत्येवेति वाच्यम् । स्थानेऽन्तरतमे इति सप्तम्यन्तपाठे स्थानप्रयत्नोभयान्तरतमे स्पर्शे चिन्मात्रमित्यादौ चरितार्थोऽनुनासिकविधिः प्रयत्नासदृशे रेफे न
प्रवर्त्तते इति भावात् । नापीति । यद्यप्यन्तरतमानन्तरतमयोः प्राप्तावन्तरतम एवेति स्थानेऽन्तरतम इत्यनेन नियमः कुण्डं रथेनेत्यादौचानन्तरतमस्यैव
प्राप्तिरितीदमयुक्तन्तथापि सम्भवदनुस्वारान्तरतमके ऽङ्कित इत्यादौ चरितार्थः परसवर्णविधी रेफे न प्रवर्त्तते इतिभावः । इदञ्जातिपक्षे इति केचित् ।

॥ कै० ॥ रेफोष्मणामिति । अनुनासिकपरसवर्णविधाने हि स्थानेऽन्तरतम इति परिभाषो-

॥ भा० ॥ रेफोष्मणां सवर्णा न सन्ति ॥

॥ कै० ॥ पस्थानाद्दोषाभावः । नहि रेफस्य णकारोऽन्तरतमो नाप्यनुस्वारस्य रेफः ॥

॥ वि० ॥ वस्तुतो व्यक्तिपक्षेऽपि तादृशव्यक्तौ चरितार्थोऽस्यां व्यक्तौ न प्रवर्त्तते इति वक्तुं शक्यन्तदस्यतीको यणचीत्यत्र कैयटः । द्रव्येऽपि पदार्थे उत्सर्गापवादभावः
सन्दिग्धत्वाश्रयोऽस्त्येवेति । केचित्तु स्थानेऽन्तरतम इति सप्तम्यन्तपाठप्रत्याख्यानपरभाष्यविरोधेनास्या युक्तेरसम्भवदुक्तिकत्वम् । किञ्चैवं सति ऊष्मग्रहणभाष्ये
व्यर्थं स्यात् तस्मादनुनासिकविधौ सवर्णपदापकर्षपरम्भाष्यम् । रेफोष्मणामित्यस्यचानुनासिकोऽनुस्वारान्तरतमश्च सवर्णो नास्तीत्यर्थः । अत एव मह्येष्मानित्यादौ
सूत्ररीत्या स्थानप्रयत्नोभयान्तरतमङ्कारसम्भवेऽपि नानुनासिकः । नाज्झलाविति निषेधेन सवर्णत्वाभावादितिभाष्याशय इत्याहुः ॥

१६४

॥ वि॰ ॥ नन्वयत्वादप्रसक्तद्वित्वस्य हस्य ग्रहणमयुक्तमत आह । हकारवदिति । ननु एककर्तृकयोर्भोजनपरिवेषणयोर्युगपदसम्भवादस्तु तत्र बाधः प्रकृतेतु लक्ष्यभेदेन भिन्नवाक्यावगतनिमित्तकार्यिभावः किन्न स्यात् यथावगतकार्यित्वस्यापि इको निमित्तत्वन्दध्युदकादावत आह । तत्रेति । लक्ष्यभेदेन कार्यित्वनिमित्तत्वसम्भवेऽपीत्यर्थः । सामान्यविशेषविध्योरेकवाक्यतायामित्यन्वयः । शब्दो वाक्यात्मा । अर्थस्तदर्थः । सम्बन्धः

॥ कै॰ ॥ नेमौ रहाविति । हकारवद्रेफोऽपि न कार्यीत्यर्थः । तत्रैकवाक्यतायां सामान्यविशेषवि-

॥ भा॰ ॥ द्विर्वचनेऽपि नेमौ रहौ कार्यिणौ द्विर्वचनस्य । किन्तर्हि निमित्तमिमौ रहौ द्वि-र्वचनस्य । तद्यथा । ब्राह्मणा भोज्यन्तामाठरकौण्डिन्यौ परिवेविष्टामिति नेदानीन्तौ भुञ्जाते ॥

॥ कै॰ ॥ ध्योर्लोकव्यवहारादेव शब्दार्थसम्बन्धपरिज्ञानवत्सामान्यविधेर्विशेषविधिर्बाधकः ॥

॥ वि॰ ॥ प्रतिपाद्यप्रतिपादकभावः । तेषाम्परिज्ञानम् । तद्यथा । लोकव्यवहारादेव तथा तयोर्बाध्यबाधकभावः सम्भवेऽपि भवतीत्येतदपि लोकव्यवहारादेव ब्राह्मणेभ्यो दधि दीयतान्तक्रङ्कौण्डिन्यायेत्यादिरूपादवगतमित्यर्थः । विशेषसन्निधाने सामान्यशब्दस्य तद्व्यतिरिक्तपरत्वञ्च तद्बीजम् । परिज्ञानवदितिपाठः ॥

१६५

॥ वि॰ ॥ एवञ्चाचोरहाभ्यामित्यत्र सामान्यविशेषविधित्वाभावेऽपि तत्र बाधे यद्बीजन्तत्प्रकृतेऽप्यस्त्येवेत्याह । प्रत्यक्षस्येति । अविलम्बितप्र-तीतिकत्वम्प्रत्यक्षत्वम् । विलम्बिततत्कत्वञ्चानुमेयत्वम् । लक्ष्येति । ज्ञापकाल्लक्ष्यानुरोधाद्वा सत्यपि सामान्यविशेषभावे क्वचिद्बाधकत्वं विशे-षविधेर्नाश्रीयते जातिव्यक्तिपक्षयोरुभयोरपीतिभावः । क्वचिदपेक्षा नास्तीति । बाध्यबाधकभावस्येतिशेषः । यथेति । बाध्यबाधकभावाभावे दृष्टान्तोऽयन्तु कार्यित्वनिमित्तत्वयोः समावेशे इति बोध्यम् ।

॥ कै॰ ॥ प्रत्यक्षश्च विशेषविधिः । सामान्यविधिस्त्वनुमेय इति रेफस्य कार्यित्वन्निमित्तत्वेन बाध्यते । दध्युदकादौतु स्थानित्वेन निमित्तत्वमिकस्तस्मादित्युत्तरस्येत्यादेर्ज्ञापकान्न बाध्यते । लक्ष्यस्थित्यपेक्ष-णाद्वा बाध्यबाधकभावेन क्वचिदपेक्षा नास्ति । यथा चिक्षीषतीति दीर्घत्वद्विर्वचनयोः ॥

॥ वि॰ ॥ केचित्तु तक्रकौण्डिन्यन्यायोऽपि सामान्यविषयानाक्रान्तविषयाभावरूपानवकाशत्वमूलक एव । अस्तिच प्रकृते तत् । नह्येतद्बोध्यनिमित्तत्वं सामा-न्यशर्त्वप्रयुक्तकार्यित्वानाक्रान्ते क्वचिदप्यस्ति सर्वत्राचः परत्वादनचीत्यस्य प्राप्तेरतो युक्तो लक्ष्यानुरोधात्सामान्येन कार्यित्वबाधः । नचैवमिको यणित्यादौ मत्वर्थ इत्यादौ सामान्यप्राप्तनिमित्तत्वाभावेन कार्यित्वस्य चारितार्थ्यादिति भाष्याभिप्रायमाहुः ॥

॥ वि० ॥ ननु कार्यार्थ इत्यत्र कार्यं साधुत्वञ्चेत् खरवसानयोरित्यादिना सिद्धमत आह । विधानादिति । उपदिश्यन्त इतिपाठे भाष्ये वर्त्तमानसामीप्ये लट् । उपदिष्टा इत्यर्थः । प्रवृत्तिनिमित्तेति । प्रकृते भासमानवैशिष्ट्यप्रतियोगिरूपः प्रकारस्थमर्थ इतिभावः । केन प्रवृत्तनिमित्तेनायोगवाहशब्दवाच्यतैषामित्यत्र तात्पर्यम् । नन्वनुपदिष्टाश्चेति चकारश्रवणादनुच्चारितत्वमयोगवाहशब्दस्य प्रवृत्तिनिमित्तान्तरमित्याभाति तदयुक्तम्

॥ कै० ॥ इदमिति । विधानादेषां साधुत्वं स्यात् प्रत्याहारप्रतिबद्धन्तु कार्यन्न प्राप्नोति । के पुनरिति ।
तत्स्वरूपप्रश्नः । कथमिति । प्रवृत्तिनिमित्तप्रश्नः । अयुक्ता

॥ भा० ॥ इदं विचार्यते । इमे अयोगवाहा न क्वचिदुपदिश्यन्ते श्रूयन्तेच तेषाङ्कार्यार्थ
उपदेशः कर्त्तव्यः । के पुनरयोगवाहाः । विसर्जनीयजिह्वामूलीयोपध्मानीयानुस्वारयमाः ।
कथम्पुनरयोगवाहाः । यदयुक्ता वहन्ति अनुपदिष्टाश्च श्रूयन्ते ।

॥ कै० ॥ इत्यस्यैव हेतुकथनमनुपदिष्टाश्चेति । अयुक्ताः । प्रत्याहारलक्षणेन । पाठाभावादसम्बद्धा इत्यर्थः ॥

॥ वि० ॥ अनुपदेशपदार्थस्यानुच्चारणस्य तत्राभावात् प्रयोगेपूच्चारितत्वात् । नच प्रत्याहारसूत्रानुच्चारितत्वन्तथा यदयुक्ता इत्यनेनैव तदर्थलाभेन पौनरुक्त्यापत्तेरत आह । अयुक्ता इत्यस्यैव हेतुकथनमिति । प्रत्याहारबोधकलक्षणेनायुक्ता इत्यन्वयः । तद्व्याचष्टे । पाठाभावादिति ॥



॥ वि० ॥ ग्रहणकशास्त्रेण प्रदेशे प्रवर्त्तमानेन यो वर्णस्तेषां ग्राहकस्तस्य पाठाभावादित्यप्यर्थः । एषान्नास्तीति । अतो ऽयुक्ता इत्यर्थः । एवञ्चाक्षरसमाम्नायेऽयुक्ताः सन्तो वहन्ति प्रयोगन्निर्वाहयन्तीत्ययोगवाहपदव्युत्पत्तिर्दर्शिता । न पठ्यत इति । तत्र यत इत्यध्याहार्यमितिभावः ।

॥ कै० ॥ उपदेशो द्विविधः पाठो ग्रहणकशास्त्रेण प्रत्यायनञ्च । स द्विविधोऽप्येषान्नास्तीत्यर्थः । चशब्दो हेतौ यतोऽनुप-

॥ भा० ॥ क्व पुनरेतेषामुपदेशः कर्त्तव्यः । अयोगवाहानामट्सु णत्वम् । अयोगवाहानामट्सूपदेशः कर्त्तव्यः ।
किम्प्रयोजनम् । णत्वम् । उरःकेण उरᳲकेण । उरःपेण उरᳲपेण । अड्व्यवाय इति णत्वं सिद्धम्भवति ।
शर्षु जश्भावषत्वे । शर्षूपदेशः कर्त्तव्यः । किम्प्रयोजनम् । जश्भावषत्वे । अयमुब्जिरुपध्मानीयोपधः पठ्यते तस्य
जश्त्वेकृते उब्जिता उब्जितुमित्येतद्रूपं यथा स्यात् ॥

॥ कै० ॥ दिष्टास्ततोऽयुक्ता इत्यर्थः । क्वचित्तु चशब्दो न पठ्यते । शर्ष्विति । शर्षु पाठे झल्त्वमिति झलां जश्
झशीति जश्त्वं सिध्यति ॥

॥ वि० ॥ भाष्ये उरःकेणेति । उरः कायतीतिसुबुत्पत्तेः पूर्वं समासेऽपि सोऽपदादाविति न सत्वम् । पाशकल्पककाम्येष्वेव तत्प्रवृत्तेः । ननु शरां जशो भवन्तीति लक्षणाभावात् शर्षु पाठस्य जश्भावः प्रयोजनमत आह । शर्षु पाठे इति ॥

॥ वि ॥ यदीति । पूर्वत्र द्विर्वचने इत्यन्वयः । ननु पूर्वन्द्वित्वे जश्त्वात्पूर्वमेव हलादिः शेषे कथमुपध्मानीयस्याभ्यासे जश्त्वं झश्परत्वा-भावात् । अभ्यासे चर्चेत्यनेन स्थान्तरतम्यात्प्रकृतिचराश्चर एवेति उपध्मानीय एव स्यादितिचेच्चिन्त्यमेवैतत् । उपध्मानीयश्रवणापादनेनापि

॥ कै० ॥ उपध्मानीयादेरिति । यदि द्विर्वचने पूर्वत्र जश्त्वमसिद्धमथापि पूर्वत्रासिद्धीयमद्वित्व इतिसिद्धं सर्वथो-
विजिषतीति प्राप्नोति ॥

॥ भा० ॥ यद्युपध्मानीयोपधः पठ्यते उजिजिषतीति उपध्मानीयादेरेव द्विर्वचनम्प्राप्नोति ।
दकारोपधे पुनर्नन्द्राः संयोगादय इति प्रतिषेधः सिद्धो भवति । यदि दकारोपधः पठ्यते का
रूपसिद्धिः । उब्जिता उब्जितुमिति । असिद्धे भ उब्जेः । इदमस्ति स्तोः श्चुना श्चुरिति । ततो
वक्ष्यामि भ उब्जेः । उब्जेः श्चुना सन्निपाते भो भवतीति । तत्तर्हि वक्तव्यम् । न वक्तव्यम् ॥

॥ वि० ॥ भाष्यसामञ्जस्यात् । अन्येतु द्वित्वे कृतेऽपि द्वित्वाश्रयस्य कार्ये कर्त्तव्ये ऽसिद्धत्वन्नेत्यपि पूर्वत्रासिद्धीयमित्यस्यार्थ इति परत्वाज्जश्त्वे कृत एव हलादिः शेष इत्याशयान्न दोषः ॥



॥ वि० ॥ द्विर्वचनङ्कथमिति । बकाररहितस्येतिशेषः । ननु निपातनाल्लक्षणमात्रं स्यान्नतु प्रदेशविशेषावच्छिन्नमत आह । अथापीति ।

॥ कै० ॥ निपातनादिति । द्विर्वचनङ्कथम् । निपातनाद्वाक्यशेषोऽनुमीयते असिद्धप्रकरणे स्तोः श्चुना श्चुरित्यचोब्जेर्भ
इति । तत्र नन्द्रा इति दकारस्य द्विर्वचननिषेधः कर्त्तव्यो नतु द्विर्वचनमिति पूर्वत्रासिद्धीयमद्विर्वचन इत्यस्याप्रवृत्त्या
भत्वस्यासिद्धत्वादिष्टद्विर्वचनसिद्धिः ।

॥ भा० ॥ निपातनादेतत्सिद्धम् । किन्निपातनम् । भुजन्युब्जौपाण्युपतापयोरिति । इहापि तर्हि प्रा-
प्नोति अभ्युद्गः समुद्ग इति । अकुत्वविषये तन्निपातनम् । अथवा नैतदुब्जेरूपम् । गमेरेव । ड्युपसर्गाड्डो
विधीयते अभ्युद्गः समुद्ग इति । षत्वञ्च प्रयोजनम् । सर्पिःषु धनुःषु । शर्व्यवाय इति षत्वं सिद्धम्भवति ।
नुम्विसर्जनीयशर्व्यवायेऽपीति विसर्जनीयग्रहणन्न कर्त्तव्यम्भवति । नुमश्चापि तर्हि ग्रहणं शक्यमकर्तुम् ।
कथम् । सर्पींषि धनूंषि अनुस्वारे कृते शर्व्यवाय इत्येव सिद्धम् ।

॥ कै० ॥ अथापि न वाक्यशेषानुमानन्निपातनमेव प्रतिपादकन्तथापि दकारोपधनिर्देशसामर्थ्याद्द्विर्वचने कृते दकारस्य
बत्वम्प्रवर्त्तते । अकुत्वविषय इति । विशिष्टविषयमनुमानमित्यर्थः ।

॥ वि० ॥ नचाभ्युद्ग इत्यादौ दकारोच्चारणं सार्थकम् । नैतदुब्जेरूपमिति भाष्योक्त्या दोषाभावात् । उपतापातिरिक्तविषयेऽस्माद् घञ् नानभिधानादिति तदा-शयः । अकुत्वविषये निपातनमितिपचान्तरेत्वाद्यमेव समाधानम् ।

॥ वि॰ ॥ अनुस्वारस्य शर्वादिति । यद्यपि इणाकवर्गाभ्यामुत्तरो नुमा व्यवहितः सकारः सर्पिष्षु इत्यादौ सम्भवति तथापि तदनभिधानमितिभावः । पुंस्वित्यत्र सम्पुङ्कानामित्येतत्प्रवृत्तिपरविवरणग्रन्थस्तु चिन्त्य एव । तस्य समः सुटि पुमः खय्यम्परे कानाम्रेडिते इति

॥ कै॰ ॥ अवश्यमिति । अनुस्वारस्य शर्वात्तद्व्यवाये षत्वे सिद्धे नुम्ग्रहणन्नियमार्थन्नुमो योऽनुस्वारस्तत्रैव यथा स्यात् । अन्यत्र माभूत्पुंस्विति ।

॥ भा॰ ॥ अवश्यन्नुमो ग्रहणङ्कर्त्तव्यम् । अनुस्वारविशेषणन्नुम्ग्रहणन्नुमो योऽनुस्वारस्तत्र यथा स्यात् । इह माभूत्पुंस्विति । अथवा अविशेषेणोपदेशः कर्त्तव्यः । किम्प्रयोजनम् । अविशेषेण संयोगोपधासञ्ज्ञालोऽन्त्यद्विर्वचनस्थानिवद्भावप्रतिषेधाः । अविशेषेण संयोगसञ्ज्ञा प्रयोजनम् ।

॥ कै॰ ॥ अविशेषेणेति । प्रयोजनविशेषमनपेक्ष्य सकलप्रयोजनोद्देशेन यत्रयत्र प्रदेशे प्रयोजनसिद्धिस्तत्रतत्रोपदेशः कार्य्य इत्यर्थः ।

॥ वि॰ ॥ सूत्रत्रयमात्र विषयत्वात् । ननु सूत्रविशेषानाश्रयणे तत्रत्याहारासन्निवेशात्कथन्तन्निबन्धनकार्य्यप्रवृत्तिरत आह । प्रयोजनविशेषमिति । अविशेषेणेति भाष्यस्य प्रयोजनविशेषनिर्द्देशं विनेत्यर्थ इतिभावः । यत्रयत्रेत्यादि । यद्यत्प्रयोजनसिद्धिरुद्देश्या तत्तद्विषयकसकलप्रयोजनोद्देशेनेत्यर्थः ॥



॥ वि॰ ॥ जश्त्वे कृते संयोगसञ्ज्ञायामिति । कार्य्यकालपक्षे इदम् । भाष्ये इदुदुपधस्येति । विसर्गस्याल्त्वे ह्युपधात्वमितिभावः । इदुदुपधस्य सकारस्येति । विसर्गस्थान्युपलक्षणमेतत् । अत एव निरोऽपि निष्कृतमिति सिध्यति ।

॥ कै॰ ॥ उज्जक इति । उपध्मानीयस्य जश्त्वे कृते संयोगसञ्ज्ञायान्तस्यासिद्धत्वात्संयोगाभावाद् गुरुत्वाभावात् प्लुतो न स्यात् ॥

॥ भा॰ ॥ उ३ज्जक । हलोऽनन्तराः संयोग इति संयोगसञ्ज्ञा संयोगे गुर्विति गुरुसञ्ज्ञा गुरोरिति प्लुतो भवति । उपधासञ्ज्ञाच प्रयोजनम् । निष्कृतम् । दुष्कृतम् । निष्पीतम् । दुष्पीतम् । इदुदुपधस्यचाप्रत्ययस्येति षत्वं सिद्धं भवति । नैतदस्ति प्रयोजनम् । न इदुदुपधग्रहणेन विसर्जनीयो विशेष्यते किन्तर्हि सकारो विशेष्यते । इदुदुपधस्य सकारस्य यो विसर्जनीय इति ॥

॥ वि॰ ॥ अत एव वक्ष्यमाणपक्षान्तरेणाविरोधः । निष्कृतमित्यादौ सुबुत्पत्तेः पूर्वं समासेऽपि इणः ष इति न । पाशकल्पककाम्येष्वेव तत्प्रवृत्तेः ।

१७२

॥ वि॰ ॥ द्विर्वचनं प्रयोजनमिति । विसर्गजिह्वामूलीयादेर्द्विरुच्चारणे विशेषस्याग्रहादुच्चारणस्य कर्त्तुमशक्यत्वाच्च शास्त्रप्राप्तिमात्रेणैतत्प्र-योजनकथनमिति सन्तोष्टव्यम् ॥

॥ कै॰ ॥ महोरस्केनेति । पूर्वत्रासिद्धीये न स्थानिवदिति निषेधोऽचः परस्मिन्पूर्वविधावित्यस्य नतु स्थानिवदादेश इत्यस्य ॥

॥ भा॰ ॥ अथवोपधाग्रहणान्न करिष्यते । इदुद्भ्यान्तु परं विसर्ज्जनीयं विशेषयिष्यामः । इदुद्भ्यामुत्तरस्य विसर्ज्जनीयस्येति । अलोऽन्त्यविधिश्च प्रयोजनम् । इचस्तरति । प्लुचस्तरति । अलोऽन्त्यस्य विधयो भवन्तीत्यलो-ऽन्त्यस्य सत्वं सिद्धम्भवति । एतदपि नास्ति प्रयोजनम् । निर्द्दिश्यमानस्यादेशा भवन्तीति विसर्ज्जनीयस्यैव भविष्यति । द्विर्वचनं प्रयोजनम् । उर≍कः । उर≍पः । अनचिच । अच उत्तरस्य यरो द्वे भवत इति द्विर्वचनं सिद्धम्भवति । स्थानिवद्भावप्रतिषेधश्च प्रयोजनम् । यथेह भवति उरः केण । उरः पेणेत्यड्व्यवाय इति णत्वम् । एवमिहापि स्थानिवद्भावात्प्राप्नोति व्यूढोरस्केन महोरस्केनेति । तत्रानल्विधाविति प्रतिषेधः सिद्धो भवति ॥

वि॰ ॥ ननु सोऽपदादाविति सत्वस्य स्थानिवत्वम्पूर्वत्रासिद्धीये इति निषेधान्नेत्यत आह । पूर्वत्रेति ॥

१७३

॥ वि॰ ॥ इमे इत्यनेन न हयवरट्सूत्रस्था एव गृह्यन्ते किन्तु वर्णमात्रमित्याह । इदानीमिति । अर्थवन्त इति साध्यम् । वर्णा इतिपक्षः । पक्षतावच्छेदकमेव हेतुः । धातुप्रातिपदिकेत्यादिस्तु दृष्टान्तः । अनुत्पत्तिज्ञानम् । अनुत्पन्त्युपायज्ञानम् ।

॥ कै॰ ॥ इदानीमन्यदपि वर्णगतं वस्तु विचार्यते । किं पुनरिति । पक्षद्वयेऽपि प्रतिवर्णं विभक्त्युत्पत्त्यनुत्प-त्तिज्ञानं विचारस्य प्रयोजनम ॥

॥ भा॰ ॥ किं पुनरिमे वर्णा अर्थवन्त आहोस्विदनर्थकाः । अर्थवन्तो वर्णा धातुप्रातिपदिकप्रत्यय-निपातानामेकवर्णानामर्थदर्शनात् । धातव एकवर्णा अर्थवन्तो दृश्यन्ते । एति अध्येति अधीत इति । प्रातिपदिकान्येकवर्णान्यर्थवन्ति । आभ्याम् एभिः एषु । प्रत्यया एकवर्णा अर्थवन्तः । औपगवः काप-टवः । निपाता एकवर्णा अर्थवन्तः । अ अपेहि इ इन्द्रम्पश्य । उ उत्तिष्ठ अ अपक्राम । धातुप्राति-पदिकप्रत्ययनिपातानामेकवर्णानामर्थदर्शनान्मन्यामहे अर्थवन्तो वर्णा इति ॥

॥ वि॰ ॥ भाष्ये धातव इत्यादि । प्रक्रियाश्रयप्रकृतिप्रत्ययानां वाचकत्वमित्येवंरूपवर्णस्फोटाश्रयेण । अयञ्च शास्त्रव्यवहारमात्रोपयोगी । एतद्वासना-वशादेव लोकव्यवहारेऽपि शास्त्रज्ञास्तथा व्यवहरन्ति । धर्म्मश्चैवंविधज्ञानस्योपयोग इतिबोध्यम् ॥

१७४

॥ वि॰ ॥ हेत्वन्तरमाह । वर्णव्यत्ययेचेति । ननु कूपादौ न सिंहादाविव वर्णव्यत्ययोऽत आहैकस्येति । तस्यवान्वयेति । ऊपशब्दस्य

॥ कै॰ ॥ वर्णव्यत्यय इति । एकस्य वर्णस्याभ्युपगमोऽन्यस्यापगमो व्यत्ययः । सककारस्येति । तस्यैवान्वयव्यतिरेका-
वनुविधत्तेऽर्थोवसाय इतिभावः ॥

॥ भा॰ ॥ वर्णव्यत्ययेचार्थान्तरगमनात् । वर्णव्यत्ययेचार्थान्तरगमनान्मन्यामहे अर्थ-
वन्तो वर्णा इति । कूपः सूपो यूप इति । कूप इति सककारेण कश्चिदर्थो गम्यते । सूप
इति ककारापाये सकारोपजनेचार्थान्तरङ्गम्यते । यूप इति ककारसकारापाये यकारोपजने
चार्थान्तरङ्गम्यते । तेन मन्यामहे यः कूपे कूपार्थः स ककारस्य । यस्सूपे सूपार्थस्स सकारस्य ।
यो यूपे यूपार्थः स यकारस्येति ॥

॥ वि॰ ॥ तु तदीयशक्त्युद्बोधकत्वरूपं द्योतकत्वम्मादिवत् । अत एव तेषामिवैषामपि प्रातिपदिकसंज्ञापादनङ्करिष्यते ॥

१७५

॥ वि॰ ॥ तृतीयहेतुमाह । वर्णानुपलब्धौचेति । अनर्थगतेरित्यस्य तद्वर्णसत्तायां योऽर्थस्तदर्थानवगतेरित्यर्थ इत्याह । अर्थान्तरेति ।
प्रश्नमुपपादयति भाष्ये । न साधीय इति । नञि काकुः । परमतापेक्षयेति ।

॥ कै॰ ॥ वर्णानुपलब्धौचेति । अर्थान्तरावगमात्प्रकृतोऽर्थो न गम्यत इति विवक्षितम् । इतरस्त्वर्थावगत्य-
भावमात्रमनेनोक्तमिति पृच्छति । किन्तर्हीति । साधीय इति । परमतापेक्षया प्रकर्ष आरोप्यते । यथा न

॥ भा॰ ॥ वर्णानुपलब्धौचानर्थगतेः । वर्णानुपलब्धौचानर्थगतेर्मन्यामहेऽर्थवन्तो वर्णा इति ।
वृक्षः ऋक्षः काण्डीरः आण्डीर इति । वृक्ष इति सवकारेण कश्चिदर्थो गम्यते । ऋक्ष इति
वकारापाये सोऽर्थो न गम्यते । काण्डीर इति सककारेण कश्चिदर्थो गम्यते । आण्डीर इति
ककारापाये सो ऽर्थो न गम्यते । किन्तर्ह्युच्यतेऽनर्थगतेरिति । न साधीयो ह्यत्रार्थस्य गतिर्भ-
वति । एवन्तर्हीदम्पठितव्यं स्यात् । वर्णानुपलब्धौचातदर्थगतेरिति । किमिदमतदर्थगतेरिति ॥

॥ कै॰ ॥ किञ्चिद्यन्त्रन करोतीत्युक्ते कश्चिदाह सुतरामयङ्करोतीति । एवन्तर्हीति । प्रकृतोऽर्थो न
गम्यते । अर्थान्तरन्तु गम्यत इत्यर्थः ॥

॥ वि॰ ॥ परेणानर्थगतेरित्युक्तत्वात् । इहार्थगतिरस्तीत्यभ्युपगम्य परमते कटाक्षेण अन्यस्थलीयार्थगत्यपेक्षयाचातिशयेनार्थगतिरस्तीति विवक्षेतिभावः ॥

॥ वि० ॥ तच्छब्दार्थमाह । वर्णस्येति । परेतु तच्छब्देन तद्वर्णघटितपरामर्शे न कश्चिद्दोषः । अत एव पूर्वं भाष्ये सकारेण कश्चि-
दर्थो गम्यत इत्युक्तमित्याहुः । लाघवेन तु कर्म्मधारयमाह भाष्ये । सोऽर्थ इति । प्रकृतोऽर्थः । तस्मिन्वर्णे सति योऽर्थः प्रतीयते स इत्यर्थः ।

॥ कै० ॥ तस्यार्थ इति । वर्णस्य । परम्मति वर्णानामर्थवत्त्वमसिद्धमिति कथन्तस्येति
वर्णः परामृश्यत इत्याह । अथवा सोऽर्थ इति । प्रकृतोऽर्थ इत्यर्थः । उष्ट्रमुख इति ।
गतार्थत्वादप्रयोग एव द्वितीयस्य मुखशब्दस्य लोपोऽभिधीयते । अत्र हि उष्ट्रो मुखमस्येत्येव

॥ भा० ॥ तस्यार्थस्तदर्थस्तदर्थस्य गतिस्तदर्थगतिः । न तदर्थगतिरतदर्थग-
तिः । अतदर्थगतेरिति । अथवा सोऽर्थस्तदर्थस्तदर्थस्य गतिस्तदर्थगतिः ।
न तदर्थगतिरतदर्थगतिः । अतदर्थगतेरिति । स तर्हि तथा निर्द्देशः
कर्त्तव्यः । न कर्त्तव्यः । उत्तरपदलोपोऽत्र द्रष्टव्यः । तद्यथा । उष्ट्रमुखमिव
मुखमस्य उष्ट्रमुखः । खरमुखः ॥

॥ कै० ॥ विग्रहः । नच प्राणी प्राण्यन्तरस्य मुखम्भवतीति विशिष्टावयववृत्तिरुष्ट्रशब्दः
सादृश्यान्मुखं विशिनष्टि । एवमिहाप्यनर्थगतेरित्यत्रार्थशब्देन प्रक्रान्तोऽर्थ उच्यते नार्थ-
मात्रमित्यर्थः ॥

॥ वि० ॥ ननु दृष्टान्ते सप्तम्युपमानपूर्वेति वचनेनोत्तरपदलोपेऽपि प्रकृते तच्छब्दलोपः केन । किञ्च तच्छब्द उत्तरपदमपि न नञः समासाभावादत
आह । गतार्थत्वादिति । तथाच तद्वचापि लक्षणेतिभावः ॥



॥ वि० ॥ चतुर्थहेतुमाह भाष्ये । सङ्घातार्थवत्त्वाच्चेति । एका सिकतेतिभाष्यप्रयोगादेव सिकताशब्दस्यैकवचनान्तत्वमपि ।

॥ भा० ॥ एवमतदर्थगतेरनर्थगतेरिति । सङ्घातार्थवत्त्वाच्च । सङ्घातार्थवत्त्वाच्च मन्यामहे
अर्थवन्तो वर्णा इति । येषां सङ्घाता अर्थवन्तः । अवयवा अपि तेषामर्थवन्तः । येषाम्पुनरव-
यवा अनर्थकाः । समुदाया अपि तेषामनर्थकाः । तद्यथा । एकश्चक्षुष्मान्दर्शने समर्थः तत्स-
मुदायश्च शतमपि समर्थम् । एकश्च तिलस्तैलदाने समर्थः तत्समुदायश्च खारीशतमपि समर्थ-
म् । येषाम्पुनरवयवा अनर्थकाः । समुदाया अपि तेषामनर्थकाः । तद्यथा । एकोऽन्धो दर्शने-
ऽसमर्थः तत्समुदायश्च शतमप्यसमर्थम् । एकाच सिकता तैलदाने असमर्था तत्समुदायश्च
खारीशतमप्यसमर्थम् । यदि तर्हि इमे वर्णा अर्थवन्तः । अर्थवत्कृतानि प्राप्नुवन्ति । का-
न्यर्थवत्कृतानि । अर्थवदधातुरप्रत्ययः प्रातिपदिकमिति प्रातिपदिकसञ्ज्ञा प्रातिपदिकादिति
स्वाद्युत्पत्तिः सुबन्तम्पदमिति पदसञ्ज्ञा । तत्र को दोषः ॥

॥ वि॰ ॥ तदन्तर्गतत्वादिति। इदश्चिन्त्यम्। इत्यम्भूतलक्षणे इतिसूत्रस्थस्वग्रन्थविरोधात्। तत्र हि सञ्ज्ञाप्रवृत्त्युत्तरकालजातविभक्तेस्तन्मध्यपतितत्वेऽपि तदवयवत्वन्नेत्युक्तम्। तस्मादन्तरङ्गत्वादवयवप्रातिपदिकत्वे तन्निमित्तसुपि तदनन्तरङ्कृदन्तत्वनिमित्तकप्रातिपदिकत्वे सुब्लोप इतिवक्तुं युक्तम्। धनतीत्यादौतु न तदापत्तिः। धातुप्रत्ययान्तपदयोस्तदवयवपरत्वेन तत्र तदप्राप्तेः। धात्वादेस्तदवयवत्वन्तु व्यपदेशिवद्भावेन बोध्यम्।

॥ कै॰ ॥ नलोपादीनीति। अवयवान्तु विभक्तेर्न्न भवति। यतो यदैवावयवानाम्प्रातिपदिकसंज्ञा प्रवर्त्तते तदैव समुदायस्यापीति तदन्तर्गतत्वाद्विभक्तेर्लुका भवितव्यम्। समासग्रहणेनच

॥ भा॰ ॥ पदस्येति नलोपादीनि प्राप्नुवन्ति धनं वनमिति ॥

॥ कै॰ ॥ तुल्यजातीयस्य सुबन्तावयवसमुदायस्य प्रातिपदिकसञ्ज्ञा निवार्य्यते नत्वर्थवत्समुदायमात्रस्य। येनैवचार्थेन समुदायस्यार्थवत्त्वं तेनैव तदवयवानामपीति विभक्त्युत्पत्तिश्चोद्यते ॥

॥ वि॰ ॥ वस्तुत इत्यम्भूतेतिसूत्रस्थकैयटोक्तिरयुक्तेति तत्रैव निरूपयिष्याम इति न दोषः। धकारे जश्त्वमादिपदार्थः। सुबन्तावयवसमुदायस्येति। सुबन्तावयवेति बहुव्रीहिस्ततः कर्म्मधारयः। इदमुपलक्षणम्भेदे सति यदर्थयोः संसर्गस्तद्वारकार्थवत्समुदायस्य। तेन तिङन्तसमुदायस्य व्यावृत्तिः। प्रकृते न भेद इत्याह। येमैव चेति ॥



॥ वि॰ ॥ तन्त्रैकमिति। सङ्घातस्यैकत्वमिति भाष्यस्य सङ्घातस्याप्येकत्वमर्थः। एवञ्च विभक्तिः समुदायादेवेति भावः। ननु समुदायादुत्पद्यमाना विभक्तिः सर्ववर्णसम्बन्धिनी चेत् प्रतिवर्णं पदत्वम्प्राप्नोतीत्यत आह। पदसञ्ज्ञात्विति। यतस्यार्थबोधनाय विभक्त्युत्पत्तिस्तस्य सञ्ज्ञा प्रवर्त्तते नत्वेषामितिभावः। केचित्तु विभक्तिः प्रकृत्यर्थगतप्रकृतिबोध्यसङ्ख्याद्योतिका सङ्ख्याच समुदायस्यैवार्थो न प्रत्येकवर्णानामिति न तेभ्यः स्वाद्युत्पत्तिः।

॥ कै॰ ॥ अत्र परिहारमाह। सङ्घातस्येति। इह इत्यत्रैकत्वं विभक्त्या द्योत्यते तन्त्रैकमित्येकैव विभक्तिरुत्पद्यते। यथा बहवो द्रष्टार एकेनैव प्रदीपेन दृश्यमर्थम्पश्यन्ति साचोत्पद्यमाना समुदायादेव तन्त्रेण सर्वानु-

॥ भा॰ ॥ सङ्घातस्यैकार्थ्यात्सुबभावो वर्णात्। सङ्घातस्यैकत्वमर्थस्तेनच वर्णात्सुबुत्पत्तिर्न्न भवति ॥

॥ कै॰ ॥ ग्राहिण्युत्पद्यते समुदायद्विर्वचनवत्। पदसञ्ज्ञातु समुदायस्यैव भवति नतु प्रत्येकमसुबन्तत्वाद् यस्मात्प्रत्ययविधिरित्यनुवर्त्तनात् ॥

॥ वि॰ ॥ एकत्वं सङ्घातस्यार्थ इति भाष्यस्वरसात। प्रकृत्यंशे वर्णव्यत्ययापाययोः सङ्ख्यान्तरानुपजनात्सा समुदायस्यैवार्थ इति तद्भावः। नचाव्ययेभ्य इवैकवचनं दुर्वारम्। सङ्ख्यारहितार्थप्रतिपादकेषु तथा स्वीकारेऽपि वस्तुतः सङ्ख्यावत्यर्थे सङ्ख्यानभिधायकस्वाद्युत्पत्तौ मानाभावात्। एवञ्चैषां प्रकृतित्वमेव नेति न केवला प्रकृतिरित्यस्यापि न विषयः। एतेन प्रत्येकं पदसञ्ज्ञानुग्रहाय द्विर्वचनवैषम्यात्स्वादेव प्रत्येकं सुबुत्पत्तिरित्यपास्तमित्याहुः ॥

॥ वि० ॥ अनुमानेन साधितामर्थवत्तामत्यक्षविरोधेन दूषयति । अनर्थकास्त्विति । सर्ववर्णानामपचत्वे हेतोर्भागासिद्धत्वं स्यादत आह । धात्वादीति । विपक्षे बाधकमाह । अन्यथेति । वर्णव्यत्ययेत्यादिहेतोरर्थानुपलब्धेरिति हेतोश्च धात्वाद्यतिरिक्तवर्णविषयत्वे एव सङ्गतेरित्यपि बोध्यम् । असमासाशङ्कयेति । तथाच वीप्सा न प्रतीयेतेतिभावः । तेनैवेति । वीप्सायान्तस्य विधानादितिभावः ।

॥ कै० ॥ अनर्थकास्त्विति । धात्वादिव्यतिरिक्ता वर्णाः पक्षीक्रियन्ते । अन्यथा शास्त्रविरोधः प्राप्नोति किमिदमित्यसमासशङ्कया

॥ भा० ॥ अनर्थकास्तु प्रतिवर्णमर्थानुपलब्धेः । अनर्थकास्तु वर्णाः । कुतः । प्रतिवर्णमर्थानुपलब्धेः । नहि प्रतिवर्णमर्था उपलभ्यन्ते । किमिदं प्रतिवर्णमिति । वर्णंवर्णं प्रति प्रतिवर्णम् । वर्णव्यत्ययापायोपजनविकारेष्वर्थदर्शनात् । वर्णव्यत्ययापायोपजनविकारेष्वर्थदर्शनान्मन्यामहे अनर्थका वर्णा इति ।
वर्णव्यत्यये कृतेस्तर्कः । कसेः सिकताः । हिंसेः सिंहः । वर्णव्यत्ययो नार्थव्यत्ययः ॥

॥ कै० ॥ प्रश्नः । समासेनतूत्तरम् । तेनैव वीप्सा द्योतितेति द्विर्वचनन्न भवति । वर्णव्यत्ययेति । यदुक्तं वर्णव्यत्ययेचार्थान्तरगमनाद्वर्णानुपलब्धौचानर्थगतेरिति तस्यानैकान्तिकत्वमुद्भाव्यते ॥

॥ वि० ॥ ननु वर्णव्यत्ययादिष्वर्थदर्शनं नार्थवत्त्वाभावसाधकमत आह । यदुक्तमिति । एवञ्चार्थवत्त्वसाधकहेतौ व्यभिचारप्रदर्शनाद्वा अनर्थकतासाधकत्वमस्य । भाष्ये अर्थदर्शनादित्यस्य वर्णव्यत्ययाद्यभावे योऽर्थस्तस्यैव दर्शनादित्यर्थः । नार्थव्यत्यय इत्यस्य नार्थान्तरावगतिः किन्तु तस्यैवावगतिरित्यर्थः ॥



॥ वि० ॥ उभयस्य न्याय्यत्वं विषयभेदेनेत्याह । यत्रान्वयेति । यथा एति इत इत्यादौ न सर्वत्र कूपादावित्यर्थः ॥

॥ कै० ॥ उभयमित्याहेति । यत्रान्वयव्यतिरेकाभ्यामर्थवत्ता शक्यते कल्पयितुं तत्रैवासावभ्युपगन्तव्या न सर्वत्रेत्यर्थः ॥

॥ भा० ॥ अपायो लोपः । घ्नन्ति घ्नन्तु अघ्नन । वर्णापायो नार्थापायः । उपजन आगमः । लविता लवितुम् । वर्णोपजनो नार्थोपजनः । विकार आदेशः । घातयति घातकः । वर्णविकारो नार्थविकारः । यथैव वर्णव्यत्ययापायोपजनविकारा भवन्ति तद्वदर्थव्यत्ययापायोपजनविकारैरपि भवितव्यन्नचेह तद्वत् । अतो मन्यामहे अनर्थका वर्णा इति । उभयमिदं वर्णेषूक्तमर्थवन्तो ऽनर्थका इतिच । किमत्र न्याय्यम् । उभयमित्याह । कुतः । स्वभावतः । तद्यथा । समानमीहमानानाञ्चाधीयानानाञ्च केचिदर्थैर्युज्यन्ते अपरे न न चेदानीं कश्चिदर्थवानिति कृत्वा सर्वैरर्थवद्भिः शक्यम्भवितुम् कश्चिद्वानर्थक इति कृत्वा सर्वैरनर्थकैस्तत्र किमस्माभिः शक्यङ्कर्त्तुम् । यद्धातुप्रातिपदिकप्रत्ययनिपाता एकवर्णा अर्थवन्तोऽन्येऽनर्थका इति स्वाभाविकमेतत् । कथं य एष भवता वर्णानामर्थवत्तायान्तु हेतुरुपदिष्टोऽर्थवन्तो वर्णा धातुप्रातिपदिकप्रत्ययनिपातानामेकवर्णानामर्थदर्शनाद्वर्णव्यत्ययेचार्थान्तरगमनाद्वर्णानुपलब्धौचानर्थगतेः संघातार्थवत्त्वाच्चेति ॥

१८२

॥ वि० ॥ न कूपसूपेति । वर्णानामर्थवत्त्व ऊपशब्दस्य विष्वन्वयादर्थान्वयः स्यात् । नच दृश्यते । ततः समुदायान्तरत्वप्रयुक्तमेवार्थान्तरत्वन्तदर्थानवगतिश्च नतु व्यत्ययादिकृतमित्यर्थः । ननु ककारसकारयकाराणामेवार्थवत्त्वमूपस्तु शक्त्युद्बोधक एवेति कस्यार्थस्य सत्ता तच तचापाद्यत इति चेत् ।

॥ कै० ॥ सङ्घातान्तराणीति । तदुक्तम् । न कूपसूपयूपानामन्वयोऽर्थस्य विद्यते । ततोऽर्थान्तरवाचित्वं
सङ्घातस्यैव गम्यत इति ॥

॥ भा० ॥ सङ्घातान्तराण्येवैतानि एवञ्जातीयकान्यर्थान्तरेषु वर्त्तन्ते कूपः सूपो यूप इति । यदि हि वर्णव्यत्ययकृतमर्थान्तरगमनं स्यात् । भूयिष्ठः कूपार्थः सूपे स्यात् सूपार्थश्च कूपे कूपार्थश्च यूपे यूपार्थश्च कूपे सूपार्थश्च यूपे यूपार्थश्च सूपे । यतस्तु खलु न कश्चित्कूपस्य वा सूपे सूपस्य वा कूपे कूपस्य वा यूपे यूपस्य वा कूपे सूपस्य वा यूपे यूपस्य वा सूपे अतो मन्यामहे सङ्घातान्तराण्येवैतान्येवञ्जातीयकान्यर्थान्तरेषु वर्त्तन्त इति । इदं खल्वपि भवता वर्णानामर्थवत्त्वां ब्रुवता साधीयो ऽनर्थकत्वं द्योतितम् । योहि मन्यते यः कूपे कूपार्थः स ककारस्य यः सूपे सूपार्थः स सकारस्य यो यूपे यूपार्थः स यकारस्येति
ऊपशब्दस्तस्यानर्थकः स्यात् ॥

॥ वि० ॥ तर्हि भग्नमेव वर्णानामर्थवत्त्वन्तचैव पदे । ऊपयोरर्थाभावात् । किञ्च । संख्या समुदायस्यैवार्थ इत्यपि नियन्तुमशक्यम् । कूपगतैकत्वस्य यूपादिभिरप्रतीत्या संख्ययापि कादिभिरन्वयव्यतिरेकसत्त्वात् । द्विर्वचनेन वैषम्यन्तु प्रागुक्तमेव । तस्मात्समुदायस्यैवार्थवत्त्वं तदेव ध्वनयन्नाह भाष्ये । इदं खल्वपीत्यादि ॥

१८३

॥ वि० ॥ दृष्टाहीति । अतदर्थेन रथाङ्गेन गुणिनो रथस्य यथार्थवत्ता तथा प्रकृतेऽपीतिभावः । भाष्येऽज्ग्रहणेष्विति । प्रत्याहारेऽचरसमाम्नायेऽज्ग्रहणेषु अच्प्रत्याहारग्राहकेषु पठितानामनुबन्धानाम्प्रत्यासत्त्याऽचु ग्रहणङ्कुतो नेत्यर्थः । तत्फलितार्थमाह । य एते इति । अचु ।

॥ कै० ॥ एतस्यापीति । दृष्टाह्यतदर्थेन गुणेन गुणिनोऽर्थवत्ता सुराङ्गवद्रथाङ्गवच्चेति । आचारादिति । आचारो व्यवहारः । दृषिम्हषिकृषेरिति यण् न कृतः ॥

॥ भा० ॥ तचेदमपरिहृतं सङ्घातार्थवत्त्वाच्चेति एतस्यापि प्रातिपदिकसञ्ज्ञायाम्परिहारं वक्ष्यति । अइउण् । ऋऌक् । एओङ् । ऐऔच् । प्रत्याहारेऽनुबन्धानाङ्कथमज्ग्रहणेषु न । य एते अचु प्रत्याहारार्था अनुबन्धाः क्रियन्ते एतेषामज्ग्रहणेषु ग्रहणङ्कस्मान्न भवति । किञ्च स्यात् । दधि णकारीयति मधु णकारीयतीति इको यणचीति यणादेशः प्रसज्येत । आचारात् । किमिदमाचारादिति । आचार्याणामुपचारात् । नैतेष्वाचार्या अच्कार्याणि कृतवन्तः ॥

॥ वि० ॥ तद्बोधकसूत्रेषु प्रागुक्तेषु । प्रत्याहारार्थाः । तदुपकारकाः । अज्ग्रहणेन । अच्शब्देन । अणादिप्रत्याहारेषु तेषां ग्रहणे फलाभावम्मनसि निधायाज्ग्रहणेनेत्युक्तम् । नच हशादौ टग्रहणस्यापत्तिः । हल्पूच्चारणार्थाकारोच्चारणेनोच्चारणार्थवर्णहीनहलां हल्घटिते प्रत्याहारे ग्रहणाभावस्य वक्तुं शक्यत्वात् ॥

॥ वि० ॥ प्राधान्येन। प्रत्याहारेषु ग्रहणार्थत्वेन। परार्थेति। अजादिस्वरूपबोधनार्थत्वेन परार्थत्वम्। यथाऽकारादयः सञ्ज्ञिविशेषसमर्प्पणायोपात्ता न तथाऽणादय इत्यर्थः। अप्रधानत्वमप्याचार्य्याचारेण साधयति भाष्ये। आचार्य्यस्येति। आचार्य्यशब्देनानादिः शब्दपुरुषः। एव-

॥ कै० ॥ अप्रधानत्वादिति। प्रधानाप्रधानसन्निधौ प्रधानमेव कार्य्याणाम्प्रयोजकमिति परार्थानामनुबन्धाना-मच्सञ्ज्ञा न प्रवर्त्तते इत्यर्थः। शैलीति। शीले भवा शैली समवधानपूर्व्विका प्रवृत्तिः। यथा लोके ब्राह्मणैः सह

॥ भा० ॥ अप्रधानत्वात्। अप्रधानत्वाच्च। न खल्वप्येतेषामच्सु प्राधान्येनोपदेशः क्रियते। क्व तर्हि। हल्षु। कुत एतत। एषा ह्याचार्य्यस्य शैली लक्ष्यते यत्तुल्यजातीयाँस्तुल्यजातीयेषूपदिशति अचोऽच्सु-हलो हल्षु। लोपश्च बलवत्तरः ॥

॥ कै० ॥ ब्राह्मणा भोज्यन्ते चत्रियैस्सह चत्रिया इति। एवमिहापि वर्णा आचार्य्येण निर्द्दिष्टा इत्यर्थः। लोप-श्चेति। परत्वान्नित्यत्वाद्वा। आदिरन्त्येन सहेतेत्यनेनाच्सञ्ज्ञाविधानकालेऽनुबन्धानां लोपादसन्निधानादच्सञ्ज्ञा न प्रवर्त्तते। अनुबन्धा ह्युच्चारण एव सन्ति इत्सञ्ज्ञाप्रतिबद्धञ्च कार्य्यमसन्त एव प्रतिपादयन्ति स्वतस्तु न किञ्चि-त्कार्य्यम्प्रतिपद्यन्ते ॥

॥ व० ॥ च्वान्यच सञ्ज्ञिविशेषसमर्पणायोपात्तत्वादितामसञ्ज्ञित्वमेवेतिभावः। परत्वादित्याद्यन्तरङ्गत्वोपलक्षणम्। एवञ्च पूर्वमनुबन्धलोपादादिरन्त्येनेति सञ्ज्ञाविधानकालेऽसन्निधानादित्यन्वयः। एवञ्चानुबन्धसदृशभिन्नानामेव मध्यगसदृशानाङ्ग्राह्यतां बोधयतीतिभावः ॥



॥ वि० ॥ भाष्ये लोपः खल्वपि तावदिति। सर्वतः प्रथममित्यर्थः। यत्तु एवमपि लणित्यकारस्य हल्षु ग्रहणापत्तेराचारादित्येव स-माधिरत्र युक्त इति। तन्न। अतो ल्रान्तस्येतिसूत्रे लकारोच्चारणेन लणसूत्रस्थस्यानुनासिकत्वाभावज्ञापनात्। एवञ्च तस्यानुबन्धत्वमेव न किन्तूच्चारणार्थत्वमेव। अत एव भाष्येऽइउणित्यादिसूत्रचतुष्टयोपादानेनैवैतद्विचारप्रवृत्तिः कृता।

॥ कै० ॥ ऊकालोऽजिति। सिद्धेऽच्त्वे योगविभागेन कालविशेषावच्छिन्नस्याच्त्वं

॥ भा० ॥ लोपः खल्वपि तावद्भवति। ऊकालोऽजिति वा योगस्तत्कालानां यथा भवेत्। अचाङ्ग्रहणमच्कार्य्यन्तेनैषान्न भविष्यति। अथवा योगवि-भागः करिष्यते। ऊकालोऽच्। उ ऊ उ३ इत्येवङ्कालोऽज् भवति। ततो ह्रस्वदीर्घप्लुतः। ह्रस्वदीर्घप्लुतसञ्ज्ञश्च भवति ऊकालोऽच् ॥

॥ कै० ॥ नियम्यते। ततोऽनबन्धानामूकालत्वाभावादच्त्वाभावः ॥

॥ वि० ॥ श्लोकेचाजग्रहणेष्वित्येवोक्तम्। उरण्रपरसूत्रेच लपरत्वस्योपसंख्यानमेव कार्य्यमिति तुल्यास्यसूत्रे वक्ष्यते। भाष्ये तत्कालानामचाङ्ग्रहणमच्पदेन यथा स्यादिति योगविभागः कार्य्य इत्यन्वयः। सिद्धेऽच्त्वे इति। अकारादीनामुपदेशात्सवर्णग्रहणाच्चेतिभावः ॥

१८६

॥ वि॰ ॥ ननु ककारद्वयस्य मात्रिकवर्णत्वद्वयमेकस्यैव क्लृगित्युपदेशादत आह । ककाराकृतेरिति । नच वर्णद्वयेनेति । जातिरपि स्वपर्य्याप्त्यधिकरणव्यङ्ग्यैव तद्द्वारैव च कार्य्यभागितिभावः । भाष्ये एष एवार्थ इति । अपर आहेत्यादिना वार्तिककृतोक्त इत्यर्थः । ह्रस्वा-

॥ कै॰ ॥ एवमपीति । ककाराकृतेरुपदेशान्मात्रिकत्वाच्चत्वमन्यते । अत्रच यद्यप्ययं परिहारो-

॥ भा॰ ॥ एवमपि कुक्कुट इत्यत्र प्राप्नोति । तस्मात्पूर्वोक्त एव परिहारः । एष एवार्थः ।
अपर आह । ह्रस्वादीनां वचनात् प्राग् यावत्तावदेव योगोऽस्तु । अच्कार्य्याणि यथा स्युस्तत्का-
लेष्वचु कार्य्याणि ।

॥ कै॰ ॥ ऽस्ति द्वावेतौ ककारौ नच वर्णद्वयेनैका जातिर्व्यज्यत इति । तथापि पूर्वमेव मात्राकालोऽत्र
गम्यते नच मात्रिकं व्यञ्जनमस्तीत्युक्तत्वात्पुनरिह नोक्तः ॥

॥ वि॰ ॥ दीनामिति । ह्रस्वदीर्घप्लुत इत्यतः प्राग्यावद् ऊकालोऽजिति तावदेवास्तु पृथक् सूत्रम् । फलन्दर्शयति । अजनिमित्तकार्य्याणि तत्कालेष्वचु कर्त्तुमर्हाणि यथा स्युरित्यन्वयः ॥

१८७

॥ वि॰ ॥ अणः सुष्ठूपदेशः अणसूपदेशः । अणशब्दोच्चारणं तदन्तःस्थानाम्बोधकमणुदित्यत्र किमर्थं क्रियते इत्यर्थो भाष्यस्येत्यत आह । अजुदिदिति । अणसु अणमध्ye तेनाच स्थाने किमर्थ उपदेश इति तु नार्थ इत्याह । इणग्रहणेनेति । इह संय्यतेत्यादिभाष्यं गुणा भेदका इति पक्षे । भेदकत्वपक्षे इदमेवाणग्रहणम्मानमितिभावः ।

॥ कै॰ ॥ अथ किमर्थमिति । अजुदित्सवर्णस्येति कस्मान्न कृतमिति प्रश्नः । इणग्रहणेन ग्रहणार्थस्त्वन्तःस्थानामवश्यङ्कर्त्तव्य
उपदेशो गीर्ष्वित्यादौ मूर्द्धन्यो यथा स्यादिति ॥

॥ भा॰ ॥ अथ किमर्थमन्तःस्थानामणसूपदेशः क्रियते । इह संय्यन्ता संव्वत्सरः यंल्लोकं तंल्लोकमिति परसवर्णस्या-
सिद्धत्वादनुस्वारस्यैव द्विर्वचनम् । तत्र परस्य परसवर्णे कृते तस्य ययग्रहणेन ग्रहणात्पूर्वस्यापि परसवर्णो यथा स्यात ।
नैतदस्ति प्रयोजनम् । वक्ष्यत्येतत् द्विर्वचने परसवर्णत्वं सिद्धं वक्तव्यमिति । यावता सिद्धत्वमुच्यते परसवर्ण एव तावद्भ-
वति । परसवर्णे तर्हि कृते तस्य यर्ग्रहणेन ग्रहणाद् द्विर्वचनं यथा स्यात् । माभूद्द्विर्वचनम् ॥

॥ वि॰ ॥ यथास्थितसूत्रन्यासे इदम् । जातिपक्षेणाणग्रहणप्रत्याख्यानेतु न कश्चिद्विचारः । एवङ्गुणा अभेदका इति न्याय्यपक्षेऽपि न विचार इतिबोध्यम् । भाष्ये वक्ष्यत्येतदिति । सिद्धत्ववचनञ्चावश्यकम् । अन्यथा परस्यानुस्वारस्य वा पदान्तस्येति परसवर्णे तस्यासिद्धत्वात्पूर्वस्यानुस्वारस्य ययीत्यस्यानापत्तौ रूपासि-
द्ध्यापत्तेः । तर्हि द्विर्वचनसिद्धिरेव फलमित्याह । परसवर्णे तर्हीति ॥

१८८

॥ वि० ॥ ननु न भेदो ऽनुपलब्धेरत आह । श्रुतिकृत इति । यदि नित्यो लोपः स्यादिति । तदा भेदो न स्यादित्यर्थः । विभाषा-चेति । चस्त्वर्थे । एकदेश्याह । यथाऽभेद इति । यथा द्विर्वचनप्रवृत्त्यप्रवृत्त्योर्भेदो न भवति तथैवास्तु मानुवृत्तद्विभाषाग्रहणमितिभावः ।

॥ कै० ॥ ननुच भेद इति । श्रुतिकृतोऽस्त्येव भेदः सूक्ष्मत्वात्तु दुर्लक्ष्यः ॥

॥ भा० ॥ ननुच भेदो भवति । सति द्विर्वचने त्रियकारमसति द्विर्वचने द्वियकारम् । नास्ति भेदः । सत्यपि द्विर्वचने द्वियकारमेव । कथम् । हलो यमां यमि लोप इत्येवमेकस्य लोपेन भवितव्यम् । एवमपि भेदः । सति द्विर्वचने कदाचिद्द्वियकारकङ्कदाचित्त्रियकारकम् । असति द्वियकारमेव । स एष कथं भेदो न स्यात् । यदि नित्यो लोपः स्यात् । विभाषाच स लोपः । यथाऽभेदस्तथाऽस्तु । अनुवर्तते विभाषा शरोऽचि यद्वारयत्ययं द्वित्वम । यदयं शरोऽचीति द्विर्वचनं शास्ति तज्ज्ञापयत्याचार्यः । अनुवर्तते विभाषेति । कथं कृत्वा ज्ञापकम् । नित्ये हि तस्य लोपे प्रतिषेधार्थो न कश्चित्स्यात् । यदि नित्यो लोपः स्यात् प्रतिषेधवचनमनर्थकं स्यात् । अस्त्वत्र द्विर्वचनम् । झरो झरि सवर्णे इति लोपो भविष्यति । पश्यतित्वाचार्यो विभाषा स लोप इति ततो द्विर्वचनप्रतिषेधं शास्ति । नैतदस्ति ज्ञापकम् ॥

॥ वि० ॥ तृतीयो ज्ञापकमुपन्यस्यति । अनुवर्त्तत इत्यादिना । झरो झरीति लोपे इत्यर्थः । मध्यस्थतया हलो यमामित्यस्यापि वैकल्पिकत्वं सिद्धमितिभावः ॥

१८९

॥ वि० ॥ लोपापवाद इति । यद्यपि हर्य्यनुभव इत्यादौ तदुदाहरणे लोपेऽप्राप्तेऽपि द्विर्वचनमारभ्यते तथापि कृते द्वित्वे पश्चाल्लोपेऽपि द्विर्वचनं व्यर्थमित्याशयेनापवादत्वोक्तिरितिभावः । तयोर्य्योगयोः । लोपविधायकयोः । प्रत्तमित्यादौ दाधातोः क्ते आतस्तकारो ऽच उपसर्गादित्यनेन । आदित्ये आदित्याद्भवाद्यर्थण्यान्ताद् ण्यः । तद्याचष्टे ज्ञापकत्वमस्य विघटयतीति । सर्वथाऽसंभवीत्युपसंहरतीत्यर्थः ।

॥ कै० ॥ तदेतदिति । ज्ञापकत्वमस्य विघटयति । आचार्य्योपदेशपारम्पर्य्यात्तु ज्ञायते अनुवर्तते विभाषेति तस्मात् त्रिव्य-ञ्जनसंयोगश्रवणाय अणुदिदिति णकारेण प्रत्याहारः कृतो न चकारेणेति स्थितम् ।

॥ भा० ॥ नित्येऽपि तस्य लोपे स प्रतिषेधोऽवश्यं वक्तव्यः । यदेतदचो रहाभ्यामिति द्विर्वचनं लोपापवादः स विज्ञायते । कथम् । यर इत्युच्यते एतावन्तश्च यरः । यदुत झरो वा यमो वा । यदिचात्र लोपस्स्याद् द्विर्वचनमनर्थकं स्यात् । किन्तर्हि तयोर्योगयोरुदाहरणम् । यदकृते द्विर्वचने त्रिव्यञ्जनसंयोगः । प्रत्तम् अवत्तम् आदित्य इति । इहेदानीङ्कर्त्ता हर्त्तेति द्विर्वचनसामर्थ्याल्लोपो न भवति । यथेह द्विर्वचनसामर्थ्याल्लोपो न भवति एवमिहापि लोपो न स्यात् कर्षति वर्षतीति । तस्मान्नित्येऽपि लोपेऽवश्यं स प्रतिषेधो वक्तव्यः । तदेतदत्यन्तं सन्दिग्धमाचार्य्याणां वर्त्तते विभाषाऽनुवर्तते न वेति ॥

॥ वि० ॥ ज्ञापकेन तदनुवृत्तिं साधयतस्तत्खण्डनेऽनुवृत्तिः सन्दिग्धैवेतिभावः । लणसूत्रे विभाषा स लोप इत्युक्तेराह । आचार्य्येति । अणग्रहणात्तु ज्ञापकादित्यपि कश्चित् तत्तु वार्त्तिककृताऽणग्रहणप्रत्याख्यानान्नोक्तम् ॥

१९०

॥ वि० ॥ लण् । किमिति । क प्रत्यासत्तिः क व्याप्तिरिति सन्देह इत्यर्थः । भाष्ये कतमस्मिन्निति । वक्ष्यमाणरीत्या सर्वत्र निर्णायकसत्त्वात्प्रश्नः ॥

॥ कै० ॥ लण् । सन्देहो भवतीति । किम्प्रत्यासत्तिराश्रीयते अथवा व्याप्तिरिति सन्देहः ॥

॥ भा० ॥ लण् । अयं णकारो द्विरनुबध्यते पूर्वश्चैव परश्च । तत्राण्ग्रहणेष्विण्ग्रहणेषु च सन्देहो भवति पूर्वेण वा स्युः परेण वेति । कतमस्मिंस्तावदण्ग्रहणे सन्देहः । ढ्रलोपे पूर्वस्य दीर्घोऽण इति । असन्दिग्धम्पूर्वेण न परेण । कुत एतत् । पराभावात् । नहि ढ्रलोपे परेऽणस्सन्ति । ननुचायमस्ति आतृढम् आतृढमिति । एवन्तर्हि सामर्थ्यात्पूर्वेण न परेण । यदिहि परेण स्यादण्ग्रहणमनर्थकं स्यात् । ढ्रलोपे पूर्वस्य दीर्घोऽच इत्येव ब्रूयात् ॥

॥ वि० ॥ कतरस्मिन्नितिपाठेऽपि डतरादिविधौ उपाधिप्रत्याख्यानान्न दोष इति बोध्यम् । नहि ढ्रलोप इति । वर्ढेत्यादौ गुणोऽसिद्ध इतिभावः । दीर्घोऽच इत्येवेति । मात्रालाघवाभावेऽपि संग्राह्यलाघवायासन्देहायचेतिभावः ॥

१९१

॥ वि० ॥ तथा गीष्केति । विसर्गस्यासिद्धत्वादितिभावः । तेषु च कृतेष्विति । परत्वादितिभावः । योगविभागस्य भाष्यानारूढत्वा-

॥ कै० ॥ नहि के पर इति । नत्वल्योपानक्केति ह्रस्वे कर्त्तव्ये नहो ध इत्यस्यासिद्धत्वादस्ति के परतो हकारः । तथा गीष्केत्यादौ रेफः

॥ भा० ॥ अथवैतदपि न ब्रूयात् । अचो ह्येतद्भवति ह्रस्वो दीर्घः प्लुत इति । अस्मिंस्तर्ह्यण्ग्रहणे सन्देहः । के ऽण इति । असन्दिग्धं पूर्वेण न परेण । कुत एतत् । पराभावात् । नहि के परे ऽणः सन्ति । ननुचायमस्ति गोका नौकेति । एवन्तर्हि सामर्थ्यात्पूर्वेण न परेण । यदि हि परेण स्यादण्ग्रहणमनर्थकं स्यात् । के ऽच इत्येव ब्रूयात् । अथवैतदपि न ब्रूयात् । अचो ह्येतद्भवति ह्रस्वो दीर्घः प्लुत इति । अस्मिंस्तर्ह्यण्ग्रहणे सन्देहः । अणो ऽप्रगृह्यस्यानुनासिक इति । असन्दिग्धम्पूर्वेण न परेण । कुत एतत् ॥

॥ कै० ॥ अत्राहुः । न मु न इत्यत्र योगविभागेन धत्वादीनामसिद्धत्वाभावात्तेषु च कृतेषु हकारादीनामभावः ॥

॥ वि० ॥ ह्रोकेत्यादिभाष्यात् के परे इति भाष्याच्च तेषामनभिधानं वक्तुं युक्तम् । भाष्ये ऽचो हीति । अचश्चेति परिभाषणादितिभावः ॥

१९२

॥ वि० ॥ नहि पदान्ता इति । पदानामेवानुनासिको ऽवसाने जायते इत्याशयेनेदमुक्तन्तु तत्र पदान्ताधिकारोऽस्ति । लोप इति । अत्रा हलो विशेषणादितिभावः । पर्य्युदासेनेति । क्रियमाणेऽप्यण्ग्रहणे इत्यर्थः । भाष्येऽपि न सत्त्वन्निषिध्यते किन्तु कार्य्यित्वमेवेत्याह । कार्य्यभाज इति । एवञ्चानुनासिकप्राप्तियोग्याः पदान्ता न सन्तीत्यर्थः । वस्तुतोऽस्या अग्रे सिद्धान्त्युक्तितेन तदज्ञानेनैव पूर्वपक्षस्योचित्येनैवं भाष्यव्याख्या-

॥ कै० ॥ नहि पदान्ता इति । ननु भोभगो इत्यत्राऽण्ग्रहणस्य प्रयोजनं वक्ष्यते दृचव् करोतीत्यत्र हलि सर्वेषामिति लोपो माभूदिति तत्कथमुच्यते नहि पदान्ता इति ।

॥ भा० ॥ पराभावात् । नहि पदान्ताः परे ऽणस्सन्ति । ननुचायमस्ति कर्त्ट हर्त्ट । एवन्तर्हि सामर्थ्यात्पूर्वेण न परेण ॥

॥ कै० ॥ उच्यते । अप्रगृह्यस्येति पर्य्युदासेनाच एवानुनासिकेन भाव्यं नतु हल इत्युक्तम् । नहि पदान्ता इति । कार्य्यभाज इत्यर्थः ॥

॥ वि० ॥ नमनुचितम् । पूर्वपक्षस्य सन्देहस्यचानुत्थानात् । तस्मादष्टमाध्यायस्थभाष्यमेकदेश्युक्तिरित्येवोचितम् । व्याख्यातञ्च तथोपाध्यायैरित्थमेव । भाष्ये कर्त्ट हर्त्ट इति । अचामुपलक्षणम् । अत एवाचोऽप्रगृह्यस्येत्युक्तमन्यथाकोऽप्रगृह्यस्येति वदेत् ॥

१९३

॥ वि० ॥ निषेधात्सम्प्रसारणप्रसङ्ग इति । चिन्त्यमिदम् । णौ परतस्तत्प्रकृतिभूतप्रातिपदिकस्य टिलोपविधानेन दृश्वतः स्थानित्वे माना-भावेन वकारे एकदेशविकृतन्यायेन दृश्वतित्वस्य दुर्लभत्वात् । अर्द्धाधिकविकारेण प्रत्यभिज्ञाऽभावाच्च । अत एव राजकीयमित्यादावल्लोपो न । दृश्व एव टिलोपस्थानित्वेतु प्रकृतिभावापत्तिः । एतेन विचि एकदेशविकृतन्यायेन दृश्वतित्वात्षत्वापत्तिः । नच णिलोपस्य स्थानिवत्त्वान्न षत्वम् ।

॥ कै० ॥ अचोऽप्रगृह्यस्येति । हलो हि न भाव्यमित्यत्राण्ग्रहणसामर्थ्यात्पूर्वेणेति स्थितम् । तत्र दृचं दृश्वतीति क्विपि कृते दृचदृश्वमाचष्टे इति णिचि टिलोपेच कृते दृचवयतेर्विचि दृचविति भवति । क्विपितु कौ लुप्तं प्रति न स्था-

॥ भा० ॥ यदि हि परेण स्यात् । अण्ग्रहणमनर्थकं स्यात् । अचोऽप्रगृह्यस्यानुनासिक इत्येव ब्रूयात् ॥

॥ कै० ॥ निवदिति निषेधात्सम्प्रसारणप्रसङ्गः । लोपो व्योर्वलीति वलोपप्रसङ्गश्च । विचितु स्थानिवद्भावादल्-निमित्तो वलोपो न भवति । हलि सर्वेषामित्यनेनतु लोपे क्रियमाणे पूर्वत्रासिद्धे न स्थानिवदिति स्थानिवत्त्वनिषे-धाद्लोपः प्राप्तो ऽण्ग्रहणानुवृत्त्या निवर्त्तते ॥

॥ वि० ॥ पूर्वत्रासिद्धीये तन्निषेधादिति परास्तम् । नच व्रश्चेति सूत्र पदाधिकारेण व्रश्चान्तमेकदेशविकृतन्यायेन सुलभमिति वाच्यम् । स्कोरिति सूत्रादन्ते ग्रहणमनुवर्त्य वैयधिकरण्येनैवान्वयाऽऽश्रयणेनादोषात् । अत एवान्ते ग्रहणञ्चरितार्थम् अर्द्धाधिकविकाराच्च । एवञ्च दृचभ्रज्जो णिजन्तात्क्विपि दृचभ् इत्यादि षत्वन्नेत्याहुः । वलोपप्रसङ्गश्चेति । इदमुपलक्षणम् । कौ विधौ स्थानिवत्त्वनिषेधादूठ्प्रसङ्गश्चेत्यपि बोध्यम् ॥

१९४

॥ वि० ॥ भाष्ये रो रीति । चिपार्थां वहिरङ्गासिद्धत्वाभावादितिभावः । भष्भाव एकाचो वशित्यनेन । तत्र ह्येकाच इति झषन्तस्येति च धातोरित्यपेक्षया व्यधिकरणषष्ठीति भावः । रुत्वं दश्चेत्यनेन ॥

॥ कै० ॥ अजर्घा इति । गृधेर्यङि लुकि रुगागमेऽभ्यासस्य कृते लङि सिपि शब्लुकि गुणारपरत्वसिब्लोपभष्भावजश्त्वरुत्वरलोपदीर्घत्वेषु रूपम् ॥

॥ भा० ॥ अथवैतदपि न ब्रूयात् । अच एव हि प्रगृह्या भवन्ति । अस्मिंस्तर्ह्यणग्रहणे सन्देहः । उरण् रपर इति । असन्दिग्धं पूर्वेण न परेण । कुत एतत् । पराभावात् । नह्युःस्थाने परेऽणः सन्ति । ननु चायमस्ति कर्त्तर्थं हर्त्तर्थमिति । किञ्च स्याद्यद्यत्र रपरत्वं स्यात् । द्वयोरेफयोः श्रवणं प्रसज्येत । हलो यमां यमि लोप इत्येवमेकस्यात्र लोपो भविष्यतीति । विभाषा स लोपः । विभाषा श्रवणं प्रसज्येत । अयं तर्हि नित्यो लोपः रो रीति । पदान्तस्येत्येवं सः । न शक्यः स पदान्तस्येत्येवं विज्ञातुम् । इह हि लोपो न स्यात् । जर्गृधेर्लङ् । अजर्घाः । पास्पर्धेरपास्पा इति । इह तर्हि मातॄणां पितॄणामिति रपरत्वं प्रसज्येत । आचार्यप्रवृत्तिर्ज्ञापयति नात्र रपरत्वं भवति यदयमृत इद्धातोरिति धातुग्रहणं करोति । कथं कृत्वा ज्ञापकम् । धातुग्रहणस्यैतत्प्रयोजनम् । इह माभूत् । मातॄणां पितॄणामिति । यदि चात्र रपरत्वं स्यात् । धातुग्रहणमनर्थकं स्यात् । रपरत्वे कृते अन्त्यत्वादित्वन्न भविष्यति ॥

१९५

॥ वि० ॥ भाष्ये इहापि तर्हीत्यस्य ऋत इत्त्वमिति शेषः । ननु धातुग्रहणेन ऋकारस्य दीर्घो न रपर इति ज्ञापनादजझनेति दीर्घस्याप्यरपरत्वात् कथमचेत्त्वप्राप्तिरत आह । धातुग्रहणेनेति । भाष्ये तस्मात्तत्रेति । नच इह किञ्चित्तृपो इति न्यायेन ज्ञापकत्वमप्यस्त्विति वाच्यम । गृइत्यादेरनुकरणे प्रकृतिवदनुकरणमित्यस्याभावे ग्रो यङीत्यादाविच्चाभावार्थमिहापि तदावश्यकत्वाद्गत्यन्तराभावे एव तन्न्यायेन ज्ञापकत्वाश्रयणाच्च तदाह । तस्मादिति । एवञ्च रपरत्वेऽपि मातॄणामित्यादौ उपधायाश्चेतीत्ववारणेन धातुग्रहणस्य चारितार्थ्येन रपरत्वनिवृत्तौ न ज्ञापकतेत्यर्थः ।

॥ कै० ॥ इहापि तर्हीति । धातुग्रहणेन हि लिङ्गेनाधातोरेव रपरत्वं निवर्तितं धातोस्तु रपरत्वे सत्यनन्त्य-

॥ भा० ॥ पश्यतित्वाचार्यः । नात्र रपरत्वं भवतीति ततो धातुग्रहणं करोति । इहापि तर्हि न प्राप्नोति चिकीर्षति जिहीर्षतीति । माभूदेवमुपधायाश्चेत्येवं भविष्यति । इहापि तर्हि प्राप्नोति मातॄणां पितॄणामिति तस्मात्तत्र धातुग्रहणं कर्त्तव्यम् । एवं तर्हि सामर्थ्यात्पूर्वेण न परेण । यदि परेण स्यात् । अणग्रहणमनर्थकं स्यात् । उरञ्परः इत्येव ब्रूयात् । अस्मिंस्तर्ह्यणग्रहणे सन्देहः अणुदित्सवर्णस्य चाप्रत्यय इति । असन्दिग्धं परेण न पूर्वेण । कुत एतत् ।

॥ कै० ॥ त्वान्न प्राप्नोतीति प्रश्नः । इहापीति । तस्माद्धातुग्रहणस्य सप्रयोजनत्वान्न ज्ञापकत्वमित्यर्थः ॥

॥ वि० ॥ भाष्ये सामर्थ्यात्पूर्वेणेति । नच गम्लृत्यादौ यणादेशे लपरत्वार्थमेव परेणाणग्रहणं स्यादिति सामर्थ्यं कथम् । ऋकारांशे हलरूपाऽणि रोरीति प्रवृत्त्या फलाभावेन तत्साहचर्याद् लृकारांशेऽपि हल्रूपाऽणि अप्रवृत्तिरित्याशयात् । रलयोः समानश्रुतित्वेन तत्रापि रोरीत्यस्य प्रवृत्तेरित्यन्ये । लृकारे यणघटितप्रयोगानभिधानमेवैतद्भाष्यप्रामाण्यादित्यन्ये ।

॥ वि॰ ॥ भाष्ये सवर्णेऽण् तपरमिति । यदुर्त्त्सूत्रे तपरं करोति तज्ज्ञापकं सवर्णेऽणग्रहणं परणाकारकमिति वार्त्तिकाचरार्थः । इत्येव-मर्थमिति । ह्रस्वो यथा स्यात् । दीर्घो माभूदित्येवमित्यर्थः । ऋकार इति । उद्देश्यसमर्थक इत्यर्थः ।

॥ कै॰ ॥ सवर्ण इति । अचीकृतदिति ऋकारस्य ऋकार एव यथा स्याद् ॠकारो माभूदित्येवमर्थं तपरत्वं क्रि-यते । यदि च पूर्वेण णकारेणाणग्रहणं स्याद् ऋकारोऽनणत्वाद्भिन्नकालस्य

॥ भा॰ ॥ सवर्णेऽण् तपरं ह्युर्त्त् । यदयमुर्त्तदित्यृकारस्य तपरकरणं करोति तज्ज्ञापयत्याचार्य्यः परेण न पूर्वेणेति । इणग्रहणेषु तर्हि सन्देहः । असन्दिग्धं परेण न पूर्वेणेति । कुत एतत् ॥

॥ कै॰ ॥ ग्राहक एव न भवतीति ॠकारो नैव स्थानी नाप्यादेशः प्रसजतीति किन्तपरत्वेन । कृतञ्च तज्ज्ञापकम् परेणाणग्रहणस्य ॥

॥ वि॰ ॥ नच भाव्यमानत्वेन सवर्णग्रहणाप्रसक्तेस्तद्वैयर्थ्यम् । तपरत्वाभावे आदेशान्तरनिवृत्त्यर्थत्वेन स्वरूपाभ्यनुज्ञानार्थत्वेनापूर्वबोध्यत्वाभावेनचाविधेयत्वात् । कृतेतु तपरत्वे भाव्यमानतापीत्यन्यत् ॥



॥ वि॰ ॥ भाष्ये संवृद्येति । आदेशेन तौ निवर्त्येत्यर्थः । अर्द्धचतुर्था इतिवक्तुमुचितमत आह । अर्द्धेनेति । भाष्ये तिस्रो मात्रा इति । इण इति पदच्छेदाभिप्रायेणेदम् । तदुक्तं विभक्तिनिर्देशे इति । संहितायां तु सार्द्धमात्राद्वयमेवेति बोध्यम् । अणादिग्रहणेपूक्तैर्महद्भिर्यत्नैः सन्देहपरिहारे प्रतिपत्तिगौरवमिति लाघवाय वर्णान्तरमेव किं नानवध्नत इत्याशयेनाह भाष्ये । किं पुनरिति ।

॥ कै॰ ॥ अर्द्धचतस्र इति । अर्द्धेन चतस्रः चतुर्थी हि मात्रा तवार्द्धमिति । किं पुनरिति । वर्णोत्पत्तिर्वर्णोच्छेदः ।

॥ भा॰ ॥ य्वोरन्यत्र परेणेण् स्यात् । यत्रेच्छति पूर्वेण संवृद्य ग्रहणं तत्र करोति य्वोरिति तत्र गुरु भवति । कथं कृत्वा ज्ञापकम् । तत्र विभक्तिनिर्देशे संवृद्य ग्रहणे च अर्द्धचतस्रो मात्राः प्रत्याहारग्रहणे पुनस्तिस्रो मात्राः सोऽयमेवं लघीयसा न्यासेन सिद्धे सति यद्गरीयांसं यत्नमारभते तज्ज्ञापयत्याचार्यः परेण न पूर्वेण । किं पुनर्वर्णोत्पत्त्याविवायं णकारो द्विरनुबध्यते । एतज्ज्ञापयत्याचार्यो भवत्येषा परिभाषा व्याख्यानतो विशेषप्रतिपत्तिर्न हि संदेहादलक्षणमिति । अणुदित्सवर्णं परिहाय पूर्वेणाणग्रहणं परेण-ग्रहणमिति व्याख्यास्यामः ॥

॥ कै॰ ॥ वर्णान्तरमनुबन्धः किं न क्रियत इत्यर्थः । व्याख्यानत इति । न्यायादागमाद्वा शब्दशक्तिरनुसरणीयेत्यर्थः ॥

॥ वि॰ ॥ एतत् । वक्ष्यमाणम् । आचार्यः शिवः । ननु ज्ञापितेऽपि प्रवर्तकतया निवर्तकतया वा नास्य चारितार्थ्यमत आह । न्यायादिति । उक्तो न्यायः । आगम उपदेशपरम्परा तत्सिद्ध एवायमर्थो णकारानुबन्धनरूपस्वव्यवहारेण बोध्यत इत्यर्थः । एवञ्च व्याख्यानेनैव पूर्वणकारेण केचित्परणकारेणेति निर्णये ज्ञापकानुसरणक्लेशो व्यर्थेति सूचितम् ॥

१९८

॥ वि० ॥ झभञ् । भाष्ये न झकारेत्यादि । अर्ज्जहितहल्मात्रानुकरणं सूत्रादन्यत्र नास्तीति हयवरट्सूत्रे प्रपञ्चितम् । झकारभकारयोरपि हि पदान्तयोरिति । पदान्तयोस्तयोः सतोस्ततः परस्याजादेः पदस्य झभौ स्यातामित्यर्थः ॥

॥ कै० ॥ झभञ् । न झकारेति । झकारस्य पदान्तस्य जश्त्वेन भाव्यमिति तस्याभावः । उज्झोर्झकारः संयोगान्तस्येति लुप्यत इति तस्याभावः ॥

॥ भा० ॥ जमङणनम् झभञ् । किमर्थमिमौ मुखनासिकावचनौ वर्णावुभावप्यनुबध्येते न ञकार एवानुबध्येत । कथं यानि मकारेण ग्रहणानि हलो यमां यमि लोप इति । सन्तु ञकारेण हलो यञां यञि लोप इति । नैवं शक्यम् । झकारभकारयोरपि झकारभकारयोर्लोपः प्रसज्येत । न झकारभकारौ झकारभकारपरौ स्तः । कथं पुमः खय्यम्पर इति । एतदप्यस्तु ञकारेण पुमः खय्यञ्पर इति । नैवं शक्यम् । झकारभकारपरेऽपि हि खयि रुः प्रसज्येत । न झकारभकारपरः खयस्ति । कथं ङमो ह्रस्वादचिङमुण् नित्यमिति । एतदप्यस्तु ञकारेण ङञो ह्रस्वादचि ङञुण् नित्यमिति । नैवं शक्यम् । झकारभकारयोरपि हि पदान्तयोर्झकारभकारावागमौ स्याताम् । न झकारभकारौ पदान्तौ स्तः ॥

१९९

॥ वि० ॥ एवमपि पञ्चागमा इति । लक्ष्यसंस्कारकालिकं संख्यासाम्यं यथासंख्यप्रवृत्तौ निमित्तमिति मन्यते । सिद्धान्तीतु प्रतिपत्तिकालिकमेव संख्यासाम्यं तत्प्रवृत्तौ निमित्तमित्याह । सन्त्विति । येषामागमानामागमिनः सन्ति तेषां भवन्तु इत्यर्थः ।

॥ कै० ॥ सन्तु तावदिति । उद्देशानुद्देशाभ्यां संख्यासाम्याद्यथासंख्ये लब्धे प्रयोगे यस्यागमस्यागमी विद्यते स प्रवर्त्तते नान्य इत्यर्थः । किमिदमिति । अक्षरसमाम्नाय इति व्यवहारात् यो वा इमां

॥ भा० ॥ एवमपि पञ्चागमास्त्रय आगमिनः वैषम्यात्संख्यातानुदेशो न प्राप्नोति । सन्तु तावद्येषामागमानामागमिनः सन्ति । झकारभकारौ पदान्तौ न स्त इति कृत्वा आगमावपि न भविष्यतः । अथ किमिदमक्षरमिति । अक्षरं नक्षरं विद्यात् ॥

॥ कै० ॥ स्वरशोऽक्षरश इतिचोक्तत्वात्प्रश्नः । अक्षरं नक्षरमिति । क्रियाशब्दोऽयं नित्यस्यार्थस्य वाचक इति दर्शयति ॥

॥ वि० ॥ अनुदेशः प्रतिनिर्देशः । भगवतातु स्पष्टप्रतिपत्तये ऽनुबन्धद्वयमदर्शि । इति व्यवहारादिति । अइउणसूत्रेऽयं व्यवहारो भाष्ये । प्रश्न इति । तद्घटकीभूताक्षरपदार्थावगमायेतिभावः । भाष्येऽक्षरमित्यस्य नक्षरमिति विग्रहप्रदर्शनम् ॥

॥ वि॰ ॥ तत्त्वेति । अक्षरञ्चेत्यर्थः । ब्रह्मतत्त्वस्यैव तत्त्वे हेतुगर्भं विशेषणमाह । परमार्थतो नित्यमिति । यतस्तत्प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वरूपनित्यत्ववदित्यर्थः । नन्वेवं प्रकृते किमायातमत आह । व्यवहारनित्यतयाचेति । सर्वेषां शब्दानामाकाशवत् सृष्ट्यादावुत्पत्तिः प्रलयेच नाश इत्यर्थः । एवञ्च व्यवहारनित्यतयाऽक्षरब्रह्मसादृश्यवतां तेषां पदादिरूपाणामयं वर्णसमाम्नायः ।

॥ कै॰ ॥ तत्र क्षियः क्षरतेर्वा विनाशार्थस्य नञ्पूर्वस्य रूपम् । तत्र ब्रह्मतत्त्वं परमार्थतो नित्यं व्यवहारनित्यतयातु वर्णपदवाक्यस्फोटानां नित्यत्वं

॥ भा॰ ॥ न क्षीयते न क्षरतीति वाक्षरमिति । अश्नोतेर्वा सरोऽक्षरम् ॥ अश्नोतेर्वा पुनरयमौणादिकः सरन्प्रत्ययः । अश्नुत इत्यक्षरम् ।

॥ कै॰ ॥ जातिस्फोटस्य वा । अश्नोतेर्वेति । सरन्प्रत्ययस्यानुबन्धलोपे कृतेऽनुकरणं सर इति तत्रार्थमश्नुते व्याप्नोतीत्यक्षरं पदं वाक्यं वा ।

॥ वि॰ ॥ शास्त्रप्रवृत्तिद्वारा बोधक इत्यक्षरसमाम्नाय इति चतुर्दशसूचीविषयव्यवहारोपपत्तिः । एवञ्च शब्दे औपचारिकोऽक्षरपदप्रयोग इतिभावः । न्यायादिनयेऽप्याह । जातिस्फोटस्य वेति । भाष्येऽश्नोतेर्वेति । तद्व्याचष्टेऽर्थमश्नुते इति । वर्णानामनर्थकत्वेन चिन्त्यमिदम् । नानादेशेषु युगपदेकस्यैव शब्दस्याभिव्यक्तिदर्शनेन स्फोटस्यापि व्यापकत्वमितिभाष्यार्थ इत्यन्ये ॥



॥ वि॰ ॥ ननु न्यायादिनयेऽव्याप्यवृत्तिषु विनाशिषु वर्णेषु कथं तद्व्यवहारोऽत आह । वर्णं वाऽऽहुरिति । क्षघटितः पाठोऽत्र प्रामादिकः । व्याख्यानभाष्येऽथवेत्युक्तेः । नन्वनन्तरोक्तयोगाभावात् कथं तेषु प्रयोगोऽत आह । रूढिरिति । तदुक्तं भाष्येऽक्षरमिति संज्ञेति । व्याकरणान्तरे इति । पूर्वसूत्रशब्दे षष्ठीतत्पुरुष इतिभावः ।

॥ कै॰ ॥ वर्णं वाऽऽहुरिति । रूढिरियं वर्णस्येत्यर्थः । पूर्वसूत्र इति । व्याकरणान्तरे वर्णा अक्षराणीति वचनात् । किमर्थमिति । वर्णानां साधुत्वस्याप्रतिपाद्यत्वात्

॥ भा॰ ॥ वर्णं वाऽऽहुः पूर्वसूत्रे । अथवा पूर्वसूत्रे वर्णस्याक्षरमिति संज्ञा क्रियते । किमर्थमुपदिश्यते । अथ किमर्थमुपदिश्यते वर्णज्ञानं वाग्विषयो

॥ कै॰ ॥ पदस्यैव साधुत्वान्वाख्यानात् प्रश्नः । वर्णज्ञानमिति । वर्णा येन शास्त्रेण ज्ञायन्ते तद्वाग्विषयः । शास्त्रेण हि वाग्विधीयते आवध्यते शास्त्रेण तस्याः परिज्ञानादित्यर्थः ॥

॥ वि॰ ॥ एवञ्चाक्षरसमाम्नाय इत्यस्य श्रुतिरूपो वर्णसंघात इत्यत्र तात्पर्यम् । भाष्ये उपदिश्यत इति । अक्षरसमाम्नायोपदेशः किमर्थ इत्यर्थः । पूर्वं कृतोऽप्ययं विचारः कञ्चिद्विशेषं वक्तुं पुनः क्रियते । येन शास्त्रेणेति । चतुर्दशसूत्र्यात्मकेन तन्मूलकपाणिनिव्याकरणेन वेत्यर्थः । तत् शास्त्रम् । वाचो विषयः । बन्धनम् । प्रतिपादकमित्यर्थः ॥

॥ वि॰ ॥ भाष्ये यच्चेत्यनेन वाक् परामृश्यते इत्याह । पदे वर्तत इत्यादिना । शास्त्रं विषय इति । प्रतिपादकमित्यर्थः । वर्णज्ञानं शास्त्रं वाचो विषयः । का सा वाक् यत्र ब्रह्म वर्तते । चातुराणादीति भाष्याक्षरार्थः । तदर्थमित्येतद्व्याचष्टे शास्त्रप्रवृत्त्यर्थमिति । कला-दीति । इदं प्रयोजनमप्यस्मच्छास्त्रे दूषितम् ।

॥ कै॰ ॥ यच्चेति । ब्रह्म वेदः पदे वर्तते तस्यच शास्त्रं विषयः । लौकिकानां वैदिकानाञ्च शास्त्रं विषय इत्यर्थः । तदर्थमिति । शास्त्रप्रवृत्त्यर्थमित्यर्थः । इष्टबुद्ध्यर्थमिति ।

॥ भा॰ ॥ यच्च ब्रह्म वर्तते तदर्थमिष्टबुद्ध्यर्थं लघ्वर्थञ्चोपदिश्यते । सोऽयमक्षरसमाम्नायो वाक्समाम्नायः पुष्पितः फलितः

॥ कै॰ ॥ कलादिदोषरहितवर्णज्ञानार्थमित्यर्थः । लघ्वर्थमिति । अनुबन्धकरणार्थमित्यर्थः । वाक्समाम्नाय इति । एतावद्भिरेव वर्णैर्वाग्व्यवहार इत्यर्थः । पुष्पितः फलित इति । दृष्टादृष्टफलाभ्यामभ्युदयनिःश्रेयसाभ्यां वा ॥

॥ वि॰ ॥ अनुबन्धकरणार्थमिति । लघ्वर्थमित्यक्षराणामचार्थे स्वारस्यं चिन्त्यम् । अनुबन्धकरणमूलकप्रत्याहारद्वारा लाघवेन शास्त्रप्रवृत्त्यर्थमित्यर्थो वा । वाक्समाम्नायः । वाक्संग्रहोपाय इत्यर्थः । तदाह । एतावद्भिरेवेति । दृष्टफलेनाभ्युदयेन वा पुष्पितः । अदृष्टफलेन निःश्रेयसेन वा फलितः ॥



॥ वि॰ ॥ वाग्व्यवहारस्येति । तत्संग्राहकस्य चतुर्दशसूत्रीरूपस्येत्यर्थः । यथाश्रुते हि भाष्ये अक्षरसमाम्नायोद्देशेन प्रवृत्तविशेषणानामन्य-परतया योजने भाष्यविरोधः । अत एवैतत्प्रतीकमुपादाय हरिणास्याक्षरसमाम्नायस्य वाग्व्यवहारजनकस्य न कश्चित्कर्त्तास्त्येवमेव वेदे पारम्प-

॥ कै॰ ॥ चन्द्रतारकवदिति । अनादित्वान्नित्यत्वं वाग्व्यवहारस्य सूचयति । ब्रह्मतत्त्वमेव शब्दरूपत-या प्रतिभातीत्यर्थः । सर्ववेदेति । सर्ववेदाध्ययनकृतस्य पुण्यस्य यत्फलं तत्प्राप्नोति । मातापितरा-

॥ भा॰ ॥ श्चन्द्रतारकवत् प्रतिमण्डितो वेदितव्यो ब्रह्मराशिः । सर्ववेदपुण्यफलावा-प्तिश्चास्य ज्ञाने भवति । मातापितरौचास्य स्वर्गे लोके महीयेते ॥

॥ कै॰ ॥ विति । माहात्म्यातिशयः शब्दशास्त्रप्रत्याहारमात्रफलाख्यानद्वारेण ख्याप्यते । महीयेते इति । पूजां प्राप्नुत इत्यर्थः । महीयशब्दः कण्ड्वादियगन्तः ॥

॥ वि॰ ॥ येण स्वर्यमाणमिति व्याख्यातम् । ब्रह्मतत्त्वमेवेति । तदुक्तं नन्दिकेश्वरेण । अकारः सर्ववर्णाग्र्यः प्रकाशः परमेश्वर इत्यादिना सर्ववर्णानां मायेश्वर-रूपता । वर्णेभ्य एवच महदादिसृष्टिरित्यर्थपरतया चतुर्दशसूत्रीं योजयता । तदाह सर्ववेदेत्यादि ॥

॥ वि० ॥ अन्येतु वर्णज्ञानं चतुर्दशसूत्र्यात्मकं शास्त्रं वाचो वेदशास्त्रपुराणरूपायाः सकलवाचः विषयो वन्धनं यच्च वर्णसमाम्नाये ब्रह्म बोध्यतया वर्तते व्याख्यातावैषा चतुर्दशसूत्री ब्रह्मपरतया नन्दिकेश्वरेण । तदर्थं सकलवाग्ज्ञानार्थं ब्रह्मबोधनार्थञ्च । अनेन सकलवेदाध्ययनेन यत् फलं तदक्षरसमाम्नायज्ञानेन सूचितं तद्वक्ष्यति । सर्ववेदेत्यादि । सोऽयमित्यादिभाष्यग्रन्थश्चैतत्श्लोकपूर्वार्द्धस्यैव व्याख्यानपरः । तत्र वर्णज्ञानमित्यस्य व्याख्या सोऽयमक्षरसमाम्नाय इति । वाग्विषय इत्यस्य व्याख्या वाक्समाम्नाय इति सर्ववाग्रूपत्वात् । तदध्ययनतन्मूलव्याकरणाध्ययनाभ्यां पुष्पितः । फलितः तद-

॥ कै० ॥ इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे प्रथमस्याध्यायस्य प्रथमे पादे द्वितीयमाह्निकं समाप्तम् ॥ ❀ ॥

॥ भा० ॥ इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये प्रथमस्याध्यायस्य
प्रथमे पादे द्वितीयमाह्निकम् ॥ ❀ ॥

॥ वि० ॥ र्थभावनया जनिततत्त्वज्ञानरूपफलः । चन्द्रतारकवत्प्रतिमण्डित इत्यनेनास्यानादित्वं सूचयति तादृशोऽयं ब्रह्मराशिर्वेदितव्यः बोध्यबोधकयोरभेदात् । सर्ववेदेति । सर्ववेदाध्ययनजन्यपुण्यरूपफलस्य चित्तशुद्धिरूपस्य प्राप्तिरस्य ज्ञाने ऽध्ययनमात्रे भवति । इदमेव पूर्वं पुष्पितत्वम् । तादृशपुत्रवत्त्वेनच मातापित्रोः स्वर्गे पूजा भवति यथा कृतराजसूययुधिष्ठिररूपपुत्रेण पाण्डोः स्वर्गे पूजेति । इष्टबुद्ध्यर्थमित्यादितु प्राग्व्याख्यातत्वाच्च व्याख्यातमित्याहुः । इति कालोपनामकशिवभट्टसुतसतीगर्भजनागोजिभट्टकृते भाष्यप्रदीपोद्योते प्रथमाध्यायस्य प्रथमे पादे द्वितीयमाह्निकम् ॥ ❀ ॥



॥ वि० ॥ वृद्धिरादैच् । द्विपदं सूत्रम् । कृतमनयोः साधुत्वमिति भाष्यदर्शनात् । अन्यथा उद्देश्यानेकत्वाद् वृद्धिशब्दस्यावृत्तिर्वाक्यार्थबोधाय कार्या स्यात् । द्वन्द्वेतु समाहारस्यैकस्योद्देश्यस्य शब्दतः संभवात् तां विनापि सिध्यति । नच समाहारे टच्प्रसङ्गः । समासान्तविधेरनित्यत्वात् । प्रतेरंश्वादय इति सूत्रेंऽश्वादिगणे राजन्शब्दपाठाल्लिङ्गात् ।

॥ कै० ॥ वृद्धिरादैच् । कुत्वं कस्मादिति । अनेकशक्तेः शब्दस्य शक्त्यवच्छेदेन सञ्ज्ञिनि विनियोगान्नित्यत्वाच्च

॥ भा० ॥ वृद्धिरादैच् । कुत्वं कस्मान्न भवति चोः कुः पदस्येति । भत्वात् ।
कथं भसञ्ज्ञा । अयस्मयादीनिच्छन्दसीति ।

॥ कै० ॥ सर्वसंज्ञानां लौकिकत्वादादैच्छब्दस्यानकरणशब्दत्वाज्जातिशब्दत्वाद्वा शास्त्रप्राप्तिरस्तीति प्रश्नः ॥

॥ वि० ॥ अन्यथा राजाह इति टचा सिद्धे किन्तेन । यद्वा पदत्रयम । पस्पशायां भाष्ये वृद्धिः आत् ऐजिति पदविभागदर्शनात् । वृद्धिशब्दस्यावृत्त्या योज्यः । अत्र पक्षेऽनयोरितिभाष्यं खण्डयोरित्यर्थकम् । असाधुशब्दोच्चारणे पाणिनिरश्रद्धेयतापत्त्या तदुक्तपदानां साधुत्वं विचारयति । भाष्ये कृतत्वमित्यादि ॥

२०६

॥ वि० ॥ ननु ऐचुक्छब्दस्यादिरन्त्येनेत्यनेन कृत्रिमतया लौकिकवैदिकबहिर्भूतत्वेन कथं सुबादिशास्त्रप्राप्तिर्लौकिकत्वञ्च लोकेऽर्थबोधनाय प्रयुक्तशब्दत्वमत आह । अनेकेति । नित्यत्वाच्चेति । चो हेतौ । यतः शब्दार्थसम्बन्धस्य नित्यत्वात्सर्वसञ्ज्ञानां नित्यत्वमतो लौकिकत्वाच्छास्त्रप्राप्तिरित्यन्वयः । लोकेऽर्थान्तरेऽप्रसिद्धानामपि संज्ञानां नित्यत्वमिति बोधयितुं सर्वशब्दः । नन्वेवं वृद्धिरादैजित्यादीनां वैयर्थ्यमत आह । शक्तीति । शक्त्यवच्छेदस्तत्सङ्कोचः । विनियोगोविशेषे नियमः । अभिमतातिरिक्तार्थान्तरव्युदासायच सः । परिसंख्यायाञ्चात्र शास्त्रे प्रायेण नियमव्यवहार इति बोध्यम् । यद्वा शक्त्यवच्छेदः शक्तिनिश्चयः । शब्दार्थस्यानवच्छेदे इत्यादावच्छेदशब्दस्य तदर्थकत्वदर्शनात् । फलरूपे हेतौ तृतीया । विनियोग उपदेशः । शक्तिनिश्चयफलकोपदेशादित्यर्थः । एवञ्च तत्सङ्केतकरणरूपप्रकरणादर्थान्तराप्रतीतिरिति बोध्यम् । इदमेव युक्तम् । सर्वार्थवाचकत्वेऽपि सङ्केतरूपत्वेनाज्ञातशक्तिबोधकतया विधित्वसम्भवेनैषां नियमार्थत्वासम्भवात् । नन्वेवं लौकिकार्थबोधो न स्यादत उक्तमनेकशक्तेरिति । स्वशास्त्रे एव प्रकरणादन्यार्थाबोध इतिभावः । अनेकास्मिन्ननेका वा शक्तिरस्येति विग्रहः । अन्त्ये सर्वनाम्नो वृत्तिमात्र इति पुंवत्त्वम् । कोपधप्रतिषेधे तद्धितवुग्रहणाद्वा स्त्रिया इति पुंवत्त्वम् । आश्रयभेदादेव शक्तिभेद इति मते आद्यम् । निरूपकभेदाद्भेदे द्वितीयः । नित्ये शब्दार्थसम्बन्धे पुरुषव्यापारात् प्रागवाचकस्य न पुरुषव्यापारेण वाचकता शक्या कर्त्तुमतः सर्वे सर्वार्थवाचका इत्यभ्युपगमादनेकशक्तित्वावसायः । तादात्म्यमेवच शब्दार्थयोः शक्तिः ।

२०७

॥ वि० ॥ अत्र पक्षे गौणमुख्यविभागः प्रसिद्ध्यप्रसिद्धिमूलः । अन्यायोऽनेकार्थत्वमितित्वश्रद्धेयमेवेति निरूपितं मञ्जूषायाम् । अत्र लौकिकशब्दत्वं साध्यम् । शास्त्रीयसंज्ञात्वसमानाधिकरणं नित्यत्वं हेतुरतो न वैदिकेषु व्यभिचारः । सर्वसंज्ञानामिति वदता सूचितमिदम् । अपूर्वाः संज्ञाः क्रियन्त इति पक्षेऽपि लौकिकत्वं साधयति । अनुकरणेति । अयमपि लौकिकत्वे हेतुः । आदिरन्त्येनेत्यनेन संज्ञात्वेन विनियुक्तस्यैव शब्दस्यानुकरणं सूत्रे लक्षणया तेनैवोपस्थापितयोरैकारौकारयोस्तात्पर्यवशाच्छाब्दबोधविषयतेति बोध्यम् । अनुकरणे च सर्वशब्दानां साधुत्वेन शास्त्रविषयतेति भावः । यत्त्वैजित्याद्यन्तावयवद्वारा समुदायानुकरणमिति तन्न । तथासत्यादिरन्त्येनेतिसूत्रवैयर्थ्यापत्तेः । वृद्धिशब्दादेः शास्त्रविषयताया एवमप्यनुपपादनाच्च । नन्वनुकरणत्वाननुभवः किञ्च त्रयी शब्दानां प्रवृत्तिरिति पक्षे उक्तहेतुद्वयस्याऽप्यभावोऽत आह । जातीति । वैयाकरणव्यवहाराच्च तत्सिद्धिरिति भावः । अत्र पक्षे जातिबोधार्थमेव संज्ञासूत्राणीति बोध्यम् । अत्रापि पक्षे लौकिकत्वं संज्ञापक्षवदेव बोध्यम् । हरदत्तस्तु वृद्धिशब्दो वृधेर्भावे क्तिन्नन्तः । अभेदोपचाराच्च वृद्धियुक्तादैचु वृत्तिः । लक्षणयैव सिद्धे सूत्रं नियमार्थं वृद्धियुक्तप्लुतदीर्घैकारादीनां बोधो माभूदिति त्रयीपक्षे सूत्रार्थमाह । तन्न । अदेङ् गुण इत्यादावसम्भवात् ॥

॥ वि० ॥ ननु कुत्वमित्यत्र संज्ञात्वपक्षे ककारादिपञ्चकगतप्रवृत्तिनिमित्ताभावाद्भावप्रत्ययोऽनुपपन्नः किञ्चात्र ककारस्य प्राप्तिर्नतु कुवृत्ति-धर्मस्येति कुत्वमित्यसङ्गतमत आह । तत्रेति । आसक्तस्वरूपः । सम्बद्धस्वरूपः । एवञ्च कुशब्दः कुशब्दवत्ककारादिषु शक्त इत्येवं शक्तिग्रहात्कुशब्दस्य प्रवृत्तिनिमित्तत्वम् । सम्बन्धश्चानादिव्यवहारसिद्धतादात्म्यम् । तादात्म्येन कुशब्दं प्रवृत्तिनिमित्तीकृत्य शक्तित्वेन तस्य ग्रहे बाधकाभावात् । केचित्तु शब्दस्य स्वरूपं कुशब्दत्वं सामान्यं तत्कादिष्वारोपितं प्रवृत्तिनिमित्तं तद्व्यक्तिश्च वाचिकेत्याहुः ।

॥ कै० ॥ तत्र कुशब्दः पञ्चसु वर्णेष्वासक्तस्वरूपो वाचकत्वेन नियुक्त इति शब्दस्वरूपे प्रवृत्तिनिमित्ते भावप्रत्ययः । छन्दोव-दिति । न वैशेषिकादिसूत्राणि अपित्वङ्गत्वाद्व्याकरणसूत्राण्येव । इष्टिश्चेयं छन्दोवदिति ॥

॥ भा० ॥ छन्दसीत्युच्यते नचेदं छन्दः । छन्दोवत्सूत्राणि भवन्ति ॥

॥ वि० ॥ तेनच कुत्वशब्देन स्वार्थाश्रयः ककारो लक्ष्यते इति ककारः कस्मान्नेति चोद्यपर्यवसानम् । वस्तुतः कुत्वकुपदयोर्भत्वभसंज्ञापदयोश्च पर्यायतेति ऋलृक्सूत्रे निरूपितमिति न कश्चिद्दोषः । अङ्गत्वात् । पदपदार्थकथनद्वारा वेदोपकारकत्वात् । मुखं व्याकरणमित्यादिनाङ्गत्वनिरूपणाच्च । प्रधानञ्च षट्स्वङ्गेषु व्याकरणमिति पस्पशायां भाष्योक्तेश्च । अस्यामिष्टौ नार्षत्वं प्रयोजकं नैषेष्टिरस्ति छन्दोवत्कवयः कुर्वन्तीति यूस्व्याख्याविति सूत्रे भाष्योक्तेः । तस्मादङ्गत्वमेव प्रयो-जकमिति भावः । ननुच्छन्दसि विहितस्य सूत्रे कथं प्रवृत्तिरत आह । इष्टिरिति । तथाच भाष्यकारीयातिदेशात्सूत्रेषु छन्दःकार्यप्रवृत्तिरिति भावः ॥



॥ वि० ॥ भाष्ये जश्त्वमपीति । संहितया पाठे इत्यर्थः । उभयसंज्ञान्यपीति । उभे संज्ञे येषामिति विग्रहः । संज्ञाद्वयहेतुककार्यदर्श-नेन तद्द्वयकल्पनेतिभावः । ननु सूत्रादादैज्मात्रग्रहणपक्ष एव प्रतीयत इति प्रश्नानुपपत्तिरत आह । उभयथेति । लुगादिसंज्ञासु तद्भा-

॥ कै० ॥ किं पुनरिति । उभयथा शास्त्रे दर्शनात् पक्षद्वयेच दोषदर्शनात्प्रश्नः ॥

॥ भा० ॥ यदि भसंज्ञा वृद्धिरादैजदेङ् गुण इति जश्त्वमपि न प्राप्नोति । उभयसंज्ञान्यपिच्छन्दांसि दृश्यन्ते । तद्यथा । स सुष्टु भास ऋक्वता गणेन । पदत्वात्कुत्वं भत्वाज्जश्त्वं न भवति । एवमिहापि पदत्वाज्जश्त्वं भत्वात्कुत्वं न भविष्यति । किं पुनरिदं तद्भावितग्रहणं वृद्धिरित्येवं ये आकारैकारौकारा भाव्यन्ते तेषां ग्रहणमाहोस्विदादै-ज्मात्रस्य । किञ्चातः । यदि तद्भावितग्रहणं शालीयो मालीय इति वृद्धलक्षणश्छो न प्राप्नोति ॥

॥ वि० ॥ वितपक्षस्य लोपसंज्ञायामदर्शनमात्रस्येतिभावः । ननु टिघुभादिसंज्ञास्वतद्भावितानामेव ग्रहणं दृश्यते इति सोऽपि पक्षः शङ्कितुमुचित इति चेन्न । तत्र हि तद्भावितासम्भवादतद्भावितानामेव ग्रहणं नच तथा प्रकृते इति उभयथेत्युक्तम् । वृद्धिशब्दे तन्त्राद्यङ्गीकारे तद्भावितग्रहणं वृद्धिशब्दैकत्वे द्वितीयः पक्ष इतिभावः ॥

॥ वि० ॥ भाष्ये वृद्धिलक्षणो मयडिति । नित्यं वृद्धशरादिभ्य इति । अस्य वृद्धसंज्ञाद्वारा वृद्धिलक्षणत्वं बोध्यम् । वृद्धलक्षण इतिपाठे एषां वृद्धित्वाभावेन समुदायानां वृद्धत्वाभावादित्यर्थः । फिञिति । उदीचां वृद्धादगोत्रादिति । नच प्राचामवृद्धादिति फिनाप्येतत्सिद्धम् पुंवद्भाव-निषेधोऽप्याम्रगुप्तायनीभार्य इत्यादौ जातेश्चेति सिद्ध इति वाच्यम् । आम्रगुप्तायनेरपत्यं युवेत्यर्थेऽणो ण्यक्षत्रियार्षञित इति लुकि आम्रगुप्तायनिरित्येव रूपं पितरि

॥ भा० ॥ आम्रमयं शालमयम् । वृद्धलक्षणो मयण् न प्राप्नोति । आम्रगुप्तायनिः शालगुप्तायनिः । वृद्ध-लक्षणः फिञ् न प्राप्नोति । अथादैज्मात्रस्य ग्रहणम् सर्वो भासः सर्वभास इत्युत्तरपदवृद्धौ सर्वञ्चेत्येष विधिः प्राप्नोति । इहच तावती भार्या यस्य तावद्भार्यः । यावद्भार्य्यः । वृद्धिनिमित्तस्येति पुंवद्भावप्रतिषेधः प्राप्नोति । अस्तु तर्हि आदैज्मात्रस्य ग्रहणम् । ननुचोक्तं सर्वो भासः सर्वभास इत्युत्तरपदवृद्धौ सर्वञ्चेत्येष विधिः प्राप्नो-तीति । नैष दोषः । नैवं विज्ञायते उत्तरपदस्य वृद्धिः । उत्तरपदवृद्धिः । उत्तरपदवृद्धाविति । कथं तर्हि ॥

॥ वि० ॥ पुत्रेचेष्यते फिनितु ञितः परत्वाभावान्न सिध्येत् । नचात्राह्मणगोत्रमात्राद्युवप्रत्ययस्योपसंख्यानमिति तत्सिद्धिः । ब्राह्मणगोत्रे तदप्रवृत्तेः । भाष्ये एष विधिरिति । पूर्वपदान्तोदात्तत्वमित्यर्थः । तावद्भार्ये आ सर्वनाम्न इत्यात्वस्य वतुर्निमित्तमिति पुंवत्त्वनिषेधप्राप्तिः । यदि प्रथमपक्षे दोषो दुरुद्धरोऽस्तु तर्हीत्यन्वयः ॥



॥ वि० ॥ भाष्ये तद्वत्युत्तरपद इति । समासाक्षिप्तोत्तरपदशब्देन सामानाधिकरण्यायोत्तरपदस्येत्येवं वृद्धिर्यस्मिन्निति बहुव्रीहिरिति भावः । तत्राधिकारलक्षणायां बीजमाह । तत्र हीति । नच आश्रवतीति औः सर्वस्य औः सर्वौरित्यादौ वृद्धिरूपोत्तरपदसम्भवः ।

॥ कै० ॥ उत्तरपदस्येत्येवमिति । तत्र हि वृद्धौ सर्वञ्चेत्यप्युच्यमाने वृद्धिमात्रस्योत्तरपदस्याभावात्सामर्थ्या-

॥ भा० ॥ उत्तरपदस्येत्येवं प्रकृत्य या वृद्धिस्तद्वत्युत्तरपद इत्येवमेतद्विज्ञायते । अवश्यञ्चै-तदेवं विज्ञेयम् । तद्भावितग्रहणे सत्यपीह प्रसज्येत सर्वः कारकः सर्वकारक इति । यद-प्युच्यते इह तावती भार्या यस्य तावद्भार्यः । यावद्भार्य इति वृद्धिनिमित्तस्येति पुंवद्भावप्रतिषेधः प्राप्नोतीति । नैष दोषः । नैवं विज्ञायते वृद्धेर्निमित्तं वृद्धिनिमित्तं वृद्धिनिमित्तस्येति । किंतर्हि ॥

॥ कै० ॥ वृद्धिमदुत्तरपदं ग्रहीष्यत इत्यतिरिच्यमानमुत्तरपदग्रहणं सामर्थ्यादुत्तरपदाधिकारं गमयति ॥

॥ वि० ॥ नचैकादेशे व्यपवर्गाभावः । नेन्द्रस्येति निषेधेन पूर्वोत्तरपदसम्बन्धिकार्यस्यैकादेशात्प्राक् प्रवृत्तिस्वीकारात् । तथाच सर्वशब्दान्तोदात्तत्वे शेषनिघा-तेन औकारस्यानुदात्तत्वे एकादेशस्य स्वरितो वानुदात्त इति पाक्षिकः स्वरितः स्यादिति वाच्यम् । तादृशानामभिधाने दृढतरमानाभावात् । स्वरितत्वाद्वाधिकारलाभ इति बोध्यम् ॥

२१२

॥ वि॰ ॥ अन्यथाऽवृद्धेरिति । वृद्ध्यात्मकतद्धिताभावाद्वृद्धिनिमित्तग्रहणमिति भावः । नन्वर्शःशब्दादर्शआद्यचि टाप्यर्शसेत्यादौ वृद्धिरूपसक्षव इत्यरुचेराह । अथवेति । अधिकरणबहुव्रीह्याश्रयणसामर्थ्यादेव व्यपदेशिवद्भावाप्रवृत्तिरिति भावः । तेषामेवेति । एवशब्दोऽप्यर्थे । विशिष्टस्य निमित्तत्वे विशेषणानामपि तत्त्वमिति भावः । ननु वृत्तावभेदैकत्वसंख्यावगतेर्बहुवचनान्तेन विग्रहोऽनुपपन्नोत आह । निमित्तेति । तत्र कार्त्स्न्य प्रति-

॥ कै॰ ॥ वृद्धेर्निमित्तं यस्मिन्निति । निमित्तशब्दोपादानसामर्थ्याद्व्यधिकरणपदो बहुव्रीहिराश्रीयते । अन्यथा वृद्धेस्तद्धितस्येत्येव ब्रूयात् । वृद्धिनिमित्तत्वाच्च तद्धितस्य तद्धित एव वृद्धिशब्देनाभिधायिष्यते । अथवा वृद्धेः सम्बन्धी यस्तद्धित इति वैयधिकरण्येन सम्बन्ध आश्रयिष्यते । योऽसौ ककार इति ।

॥ भा॰ ॥ वृद्धेर्निमित्तं यस्मिन् सोऽयं वृद्धिनिमित्तः । वृद्धिनिमित्तस्येति । किञ्च वृद्धेर्निमित्तम् । योऽसौ ककारो णकारो ञकारो वा । अथवा यः कृत्स्नाया वृद्धेर्निमित्तम् । कश्च कृत्स्नाया वृद्धेर्निमित्तम् । यस्त्रयाणामाकारैकारौकाराणाम् ॥

॥ कै॰ ॥ कञ्णेषु सत्सु वृद्धिर्भवतीति तेषामेव निमित्तत्वम् । अथवेति । निमित्तशब्दोपादानादेवाश्रितबहुत्वसंख्यो वृद्धिशब्दः समस्यते वृद्धीनां निमित्तं वृद्धिनिमित्तमिति ॥

॥ वि॰ ॥ पत्तिकालिकं न प्रयोगसमवायीति न पारिषद्याभार्ये दोषः । नच वैयाकरणभार्येऽपि निषेधापत्तिः । इष्टापत्तेः । अत एवादैज्मात्रस्येति पक्षेऽच दोषानुद्भावनम् । तद्भावितानामेवेति पक्षेऽपि न व्याप्यामिति सूत्रे ऐजंशेऽपि वृद्धिपदसम्बन्धेन निषेधप्रवृत्तिरत्र सूपपादा । अत एव देविकाशिंशपेतिसूत्रे भाष्यकृता तत्सम्बन्धो दर्शित इत्याहुः । आदैज्मात्रग्रहणादेव मालादीनाञ्चेति सार्थकम् । अन्यथाऽस्याहवत्वात्मस्थेऽवृद्धमित्येव सिद्धे किं तेन ॥

२१३

॥ वि॰ ॥ वार्त्तिकमिति । सूत्रेऽनुक्तदुरुक्तचिन्ताकरत्वं वार्त्तिकत्वम् । एतेन सूत्रव्याख्यानाय प्रवृत्तस्य कात्यायनस्यायुक्ता दुरुक्तचिन्तेत्यपास्तम् । प्रस्तावेति । वार्त्तिकेऽधिकारशब्दोक्तः स इति भावः ।

॥ कै॰ ॥ संज्ञाधिकार इति वार्त्तिकं तस्य व्याख्यानमथ संज्ञेत्येवमिति । अथशब्दः संज्ञायाः

॥ भा॰ ॥ संज्ञाधिकारः संज्ञासंप्रत्ययार्थः । अथ संज्ञेत्येवं प्रकृत्य वृद्ध्यादयः शब्दाः पठितव्याः । किं प्रयोजनम् । संज्ञासंप्रत्ययार्थः । वृद्ध्यादीनां शब्दानां संज्ञेत्येष संप्रत्ययो यथा स्यात् ॥

॥ कै॰ ॥ प्रस्तावद्योतनार्थः । वृद्ध्यादीनामिति । संप्रत्यय इत्येतदपेक्षया कर्मणि षष्ठी । वृद्ध्यादयः संज्ञात्वेन यथा प्रतीयेरन्नित्यर्थः ॥

॥ वि॰ ॥ वृद्ध्यादीनां संज्ञात्वाङ्गेदनिबन्धनषष्ठ्यनुपपन्नेत्यत आह । संप्रत्यय इति । भाष्ये संज्ञेत्येष इति । शब्दार्थज्ञानानामितरेतराध्यासादिदं नानुपपन्नम् ॥

२१४

॥ वि॰ ॥ भाष्यकारस्त्विति । अधिकारं विनाऽसम्प्रत्यये दृष्टान्तस्य लौकिकस्याभावादर्थापरिज्ञाने दृष्टान्तानुपयोगाच्चेति तद्भावः । वाक्याध्याहारेणेति । इदमिदानीमिति वाक्याध्याहारेणेत्यर्थः । ननु द्विगौ अकारान्तोत्तरपदत्वात् स्त्रीत्वे ङीप् स्यादत आह । बहुव्रीहिरिति । अन्यपदार्थस्याशब्दत्वाद्बहुव्रीहिर्दुर्ज्ञेयोऽत आह । समाहारेति । पाचान्तादित्वात्स्त्रीत्वाभावः । अत एव विसूचीत्यादि संगच्छते । बहुसूत्रशब्दस्यैव तत्र

॥ कै॰ ॥ यथा लोक इति । कात्यायनेनासंप्रत्यये लोको दृष्टान्तत्वेनोपात्तः । भाष्यकारस्तु वाक्याध्याहारेणानर्थकत्वे लोकं दृष्टान्तत्वेन योजयति । बहुसूत्रमिति । बहुव्रीहिः । प्रकरणांचान्यपदार्थः ।

॥ भा॰ ॥ इतरथा ह्यसम्प्रत्ययो यथा लोके । अक्रियमाणे हि संज्ञाधिकारे वृद्ध्यादीनां संज्ञात्वेष संप्रत्ययो न स्यात् । इदमिदानीं बहुसूत्रमनर्थकं स्यात् । अनर्थकमित्याह । कथम् । यथा लोके । लोके ह्यर्थवन्तिचानर्थकानिच वाक्यानि दृश्यन्ते ॥

॥ कै॰ ॥ समाहारे द्विगुर्वा । अर्थवन्तिचेति । यथा लोकेऽर्थवन्ति प्रयुङ्क्ते एवमनर्थकान्यपीत्यर्थः । यावदाप्तत्वमाचार्यस्य न साधितं तावदनर्थकत्वाशङ्का झटिति समन्वयानवगमाद्वा ॥

॥ वि॰ ॥ पाठादित्यभिमानः । नन्वनर्थकदृष्टान्तोऽर्थवन्तीत्यादि व्यर्थमत आह । यथेति । यद्यप्यन्वितार्थकपदसमूह एव वाक्यं तथापि भाष्ये पदसमूह एव वाक्यशब्दः प्रयुक्तोऽतोऽनर्थकानि वाक्यानीति न विरुद्धम् । झटिति । विनाचार्याचारादिज्ञानेन ॥

२१५

॥ वि॰ ॥ पदार्थानाम् । कुण्डमजाजिनमित्यादीनाम् । स्फ्यकृतोपत्यं स्फैयकृतः । उपचारो नाम गौणी वृत्तिरिति भ्रमं व्युदस्यति । व्यवहारादिति । अनेन व्यवहाराच्छक्तिग्रह उक्तः सच शक्तिग्राहकशिरोमणिः । भाष्ये वेदे याज्ञिका इति ।

॥ कै॰ ॥ दश दाडिमानीति । पदार्थानां समन्वयाभावाद्वानर्थक्यम् । आचार्याचारादिति । आचार्याणां व्यवहारादित्यर्थः ॥

॥ भा॰ ॥ अर्थवन्ति तावत् । देवदत्त गामभ्याज शुक्लां दण्डेन देवदत्त गामभ्याज कृष्णामिति । अनर्थकानि । दश दाडिमानि षडपूपाः कुण्डमजाजिनं पललपिण्डः । अधरोरुकमेतत्कुमार्याः स्फैयकृतस्य पिता प्रतिशीन इति । संज्ञासंज्ञ्यसन्देहश्च । क्रियमाणेऽपि संज्ञाधिकारे संज्ञासंज्ञिनोरसंदेहो वक्तव्यः । कुतो ह्येतत् वृद्धिशब्दः संज्ञा आदैचः संज्ञिन इति न पुनरादैचः संज्ञा वृद्धिशब्दः संज्ञीति । यत्तावदुच्यते संज्ञाधिकारः कर्त्तव्यः संज्ञासंप्रत्ययार्थ इति । न कर्त्तव्यः । आचार्याचारात्संज्ञासिद्धिः । आचार्याचारात्संज्ञासिद्धिर्भविष्यति । किमिदमाचार्याचारादिति । आचार्याणामुपचारात् । यथा लौकिकवैदिकेष । तद्यथा लौकिकेषु वैदिकेषु च कृतान्तेषु । लोके तावत् । मातापितरौ पुत्रस्य जातस्य संवृतेऽवकाशे नाम कुर्वाते देवदत्तो यज्ञदत्त इति । तयोरुपचारादन्येपि जानन्ति इयमस्य संज्ञेति । वेदे । याज्ञिकाः संज्ञां कुर्वन्ति स्फ्यो यूपश्चषाल इति । तत्रभवतामुपचारादन्येपि जानन्ति इयमस्य संज्ञेति । एवमिहापि । इहैव तावत्केचिद्व्याचक्षाणा आहुः ॥

॥ वि॰ ॥ यज्ञकाण्डद्रष्टार ऋषय इत्यर्थः । वेदकर्तृत्ववत्संज्ञाकर्तृत्वं तेषां द्रष्टव्यम् । भाष्ये इहैवेति । वृद्धि रादैच्सूत्रे एवेत्यर्थः ॥

॥ वि० ॥ असत्याः शक्तेर्व्याख्यानेनोत्पादयितुमशक्यत्वादाह । वृद्धिशब्दस्येति । प्रत्यायनशक्तिः । प्रत्यायने बोधजनने कारणीभूता श-
क्तिः । भाष्ये उदाहरन्तीति । वृद्धिरादैजिति सूत्रार्थकथनार्थं तत्प्रदेशत्वेन सिचि वृद्धिरित्युक्त्वा तदुदाहरणत्वेनाकार्षीद् अचैषीदित्युदाह-

॥ कै० ॥ वृद्धिशब्दः संज्ञेति । वृद्धिशब्दस्य प्रत्यायनशक्तिर्व्याख्यानेनैव प्रकाश्यते यथा आदैचां

॥ भा० ॥ वृद्धिशब्दः संज्ञा आदैचः संज्ञिन इति । अपरे पुनः सिचि वृद्धिरित्युक्त्वा आकारैका-
रौकारानुदाहरन्ति । तेन मन्यामहे यया प्रत्याय्यते सा संज्ञा ये प्रतीयन्ते ते संज्ञिन इति । यद-
प्युच्यते क्रियमाणेऽपि संज्ञाधिकारे संज्ञासंज्ञिनोरसंदेहो वक्तव्य इति । संज्ञासंज्ञ्यसंदेहश्च ।
संज्ञासंज्ञिनोश्चासंदेहः सिद्धः । कुतः । आचार्याचारादेव । उक्त आचार्याचारः ॥

॥ कै० ॥ वर्णानामिति वर्णत्वम् । अपर इति । प्रदेशाद्वा संज्ञासंज्ञ्यभिव्यक्तिः संज्ञासूत्रार्थाद्वा
प्रदेशार्थस्य व्यवस्थेत्यर्थः ॥

॥ वि० ॥ रन्तीत्यर्थः । एवंच वृद्धिशब्दस्य प्रत्यायकत्वमादैचां प्रत्याय्यत्वं निर्णीय वृद्धिरादैच्सूत्रस्य संज्ञाबोधकत्वं वृद्धिशब्दस्य संज्ञात्वञ्च निर्णयन्तीति
भावः । तेन । अपराचार्योक्तोदाहरणेन ॥



॥ वि० ॥ नन्वाकृतिर्जातिस्तद्भेद आदैच्स्वपि तदभावस्तु न वृद्धिशब्देऽपीत्यत आह । आकृत्येति । बहुव्रीहिरिति भावः । अनाकृतिरि-
त्येतन्न्यायसिद्धमित्याह । लाघवार्थमिति । नन्वेकस्यापि तथ्यादेरनेकाः कृत्कृत्यप्रत्ययसंज्ञाः क्रियन्तेऽत आह । प्रयोजनेति । सति हि

॥ कै० ॥ अनाकृतिरिति । आकृत्या साहचर्य्याद्भेदो लक्ष्यते तेनायमर्थः । वृद्धिशब्द एकत्वात् सञ्ज्ञा
आदैचां बहुत्वात् सञ्ज्ञित्वम् । लाघवार्थं हि संज्ञाकरणम् । यथा सर्वादीनि

॥ भा० ॥ अनाकृतिः । अथवानाकृतिः सञ्ज्ञा आकृतिमन्तः संज्ञिनः ।
लोकेऽपि ह्याकृतिमतो मांसपिण्डस्य देवदत्त इति संज्ञा क्रियते ॥

॥ कै० ॥ सर्वनामानीत्यनेकस्यैका संज्ञा क्रियते न त्वेकस्यानेका प्रयोजनाभावात् । आकृतिमत इति ।
अवस्थाभेदेष्वपि स एवायमिति प्रत्यभिज्ञानिमित्तकं देवदत्तत्वादिकं सामान्यमस्तीत्याकृतिमत इत्युक्तम् ॥

॥ वि० ॥ प्रयोजने तथा । प्रकृते तु न तथा । प्रयोजनाभावादिति भावः । प्रत्यभिज्ञानिमित्तकम् । प्रत्यभिज्ञाप्रमाणकमित्यर्थः । वस्तुतो भाष्ये आकृतिमत
इत्यस्य भेदवत इत्यर्थः । अवस्थाभेदेन च तत्रारोपितः सः । आरोपितभेदे च जातिसत्त्वे न मानम् । अत एव देवदत्तेत्यादौ न ङीषिति कश्चित् ॥

॥ वि॰ ॥ स कथं वृत्तिकारानिति । तस्यैवेति भाष्यस्य च तदीयस्यैवेत्यर्थ इति भावः । लिङ्गेन वेत्येतदिति । लिङ्गाऽऽसङ्गः । इत्थंलिङ्गा संज्ञेति च वक्तव्यमित्यर्थः । ङकारादिष्विति । आत्वादिपठितेष्वित्यर्थः ।

॥ कै॰ ॥ लिङ्गेन वेति । कलादिना वर्णादोषेणेत्यर्थः । तमेवोपालभ्येति । यो हि सूत्रकारमुपालभते न गमकन्ते सूत्रमिति स कथं वृत्तिकारान्प्रामाण्येनाश्रयतीत्यर्थः । अपरितुष्यन्निति । त्वयापि परिहारान्तरं ब्रुवता आचार्याचारो न प्रमाणत्वेनाश्रित इत्यर्थः ।

॥ भा॰ ॥ लिङ्गेन वा । अथवा किञ्चिल्लिङ्गमासज्य वक्ष्यामि इत्थंलिङ्गा संज्ञेति । वृद्धिशब्दे च तल्लिङ्गङ्करिष्यते नादैच्छब्दे । इदन्तावदयुक्तम् यदुच्यते आचार्याचारादिति । किमत्रायुक्तम् । तमेवोपालभ्यागमकं ते सूत्रमिति तस्यैव पुनः प्रमाणीकरणमित्येतदयुक्तम् । अपरितुष्यन् खल्वपि भवाननेन परिहारेणानाकृतिर्लिङ्गेन वेत्याह । तत्रापि वक्तव्यम् । यद्यप्येतदुच्यते अथवैतर्हि इत्संज्ञा न वक्तव्या लोपश्च न वक्तव्यः । संज्ञालिङ्गमनुबन्धेषु करिष्यते न च संज्ञाया निवृत्तिरुच्यते ॥

॥ कै॰ ॥ तत्रापीति । लिङ्गेन वेत्येतद्वक्तव्यमित्यर्थः । अनाकृतिः संज्ञेत्येतत्तु न्यायसिद्धत्वान्न वक्तव्यम् । अथवैतर्हीति । एवं सतीत्यर्थः । ङकारादिष्वनुबन्धेषु कलादिकमासङ्क्ष्यते । ततस्तेषां संज्ञात्वे सति ङगदात्मनेपदमिति करिष्यते । संज्ञाच संज्ञिनं प्रत्याय्य स्वयं निवर्त्तते इतीत्संज्ञा लोपश्च न वक्तव्यौ भवत इत्यर्थः ॥



॥ वि॰ ॥ ननु संज्ञालिङ्गे कृतेऽपीत्सञ्ज्ञाद्यभावे कथन्तेषान्निवृत्तिरत आह । भाष्ये स्वभावतः संज्ञेति । तद्व्याचष्टे । संज्ञा संज्ञिनमिति । भाष्ये अपाणिनीयन्त्विति । अनन्तस्थलेषु दोषविशिष्टपठने आनुनासिक्यादिवत् प्रतिज्ञाकरणेच दुर्ज्ञेयत्वादिति भावः । ननु भवतेर्जन्मार्थत्वेनाभूततद्भावप्रतीत्या च्वौ सति प्रमाणीभूत इति स्यात् तदविवक्षायान्तु प्रमाणमाचार्यः प्रकारान्तरेण भूत इत्यर्थः स्यादत आह ।

॥ कै॰ ॥ प्रमाणभूत इति । प्रामाण्यम्प्राप्त इत्यर्थः । भू प्राप्तावित्यस्याऽऽधृषाद्वेति णिजभावपक्षे रूपम् । वृत्तिविषये च प्रमाणशब्दः प्रामाण्ये वर्त्तते । दर्भपवित्रेति ।

॥ भा॰ ॥ स्वभावतः संज्ञा संज्ञिनम्प्रत्याय्य स्वयन्निवर्त्तते तेनानुबन्धानामपि निवृत्तिर्भविष्यति । सिध्यत्येवमपाणिनीयन्तु भवति । यथान्यासमेवास्तु । ननु चोक्तं संज्ञाधिकारः संज्ञासम्प्रत्ययार्थ इतरथा ह्यसम्प्रत्ययो यथा लोक इति । न यथा लोके तथा व्याकरणे । प्रमाणभूत आचार्यो दर्भपवित्रपाणिः शुचावकाशे प्राङ्मुख उपविश्य महता प्रयत्नेन सूत्राणि प्रणयति स्म तत्राशक्यं वर्णेनाप्यनर्थकेन भवितुङ्किम्पुनरियता सूत्रेण ॥

॥ कै॰ ॥ प्रमादाभावन्दर्शयति । प्राङ्मुखइति । प्राच्या अभ्युदयहेतुत्वात् । महतेति । मनःप्रणिधानन्दर्शयति । एतच्च सर्वमागमाद्बोद्धव्यम् ॥

॥ वि॰ ॥ प्रामाण्यमिति । वृत्तिविषये इति प्रकृताभिप्रायम । प्रमादः पिशाचादिसम्बन्धः । आगमः सम्प्रदायः । प्रकृतभाष्योक्तिर्वा । भाष्येऽनर्थकेनेति । बोध्यार्थरहितेनेत्यर्थः । तेन पारायणे सर्वेषामदृष्टार्थत्वेऽपि दृष्टप्रयोजनराहित्यरूपमनर्थकत्वं वर्णपदसूत्राणामस्त्येवेति न वक्ष्यमाणसूत्रादिप्रत्याख्यानासङ्गतिः ॥

२२०

॥ वि० ॥ संज्ञासम्प्रत्ययाय। संज्ञात्वनिश्चयाय। भाष्ये किमत इति। अतस्ताद्दृशकर्तृकत्वात्किङ्कथमर्थवत्त्वं यत् यतस्तद्दृशक्यनिरूपणमित्यक्षरार्थः। साध्वनुशासने इत्यनेन साधुत्वपक्षस्याकाण्डता वारिता। द्वन्द्वत्वादिति। अनयोरित्यस्य पदयोरिति विशेष्यम्। पदानामेव साधुत्वान्वाख्यानादिति भावः। भाष्येऽविशेषेणेति। प्रत्ययविशेषमनादायेत्यर्थः।

॥ कै० ॥ एवमानर्थक्ये परिहृते संज्ञासम्प्रत्ययाय पक्षान्तराणि प्रश्नमुखेन प्रतिक्षिपति। किमत इति। कृतमनयोरिति।

॥ भा० ॥ किमतो यदशक्यम्। अतः सञ्ज्ञासञ्ज्ञिनावेव। कुतो नु खल्वेतत् सञ्ज्ञासञ्ज्ञिनावेवेति न पुनः साध्वनुशासनेऽस्मिन् शास्त्रे साधुत्वमनेन क्रियते। कृतमनयोः साधुत्वम्। कथम्। इधिरस्थायविशेषेणोपदिष्टः प्रकृतिपाठे तस्मात् क्तिन्प्रत्ययः। आदैचोऽप्यक्षरसमाम्नाय उपदिष्टाः॥

॥ कै० ॥ आदैच्छब्दस्य द्वन्द्वत्वादनयोरिति द्विवचननिर्देशः। आदैच इति। तेषाञ्च द्वन्द्वनिर्देशोऽयमादैच्छब्द इत्यर्थः॥

॥ वि० ॥ ननु वर्णसमाम्नाये आकाराद्युपदेशेऽप्यादैच्छब्दस्य किमागतमत आह। तेषाञ्चेति। संज्ञाग्रहणद्वारेणेति शेषः। तपर इत्यादिरन्येनेतिच तेषाङ्कृतयोरादैच्संज्ञयोर्द्वन्द्वनिर्देशेन द्वन्द्वशास्त्रेण कृतं साधुत्वमित्यर्थः। ऐजित्यपि तन्मूलकादिरन्येनेत्यनेन बोधितमित्याशयेन भाष्येऽक्षरसमाम्नाय उपदिष्टा इत्युक्तम्॥

२२१

॥ वि० ॥ ननूपसर्जनम्पूर्वम्परश्चेत्यादिभिः प्रयोगनियम आरभ्यत एवेत्यत आह। प्रयुज्यत इति। स्वतन्त्रस्येति गत्युपसर्गनिरासः। तौ हि द्योतकत्वात्परतन्त्रौ। पदावयवस्येति। आदिना द्योतकाः। युक्त्यन्तरमाह। लोके चेति। शिष्टलोकाभिप्रायम्प्रयुक्तानाञ्चेदमनुशासन-

॥ कै० ॥ प्रयोगनियमार्थमिति। आदैज्वृद्धिरिति प्रयोगो माभूदित्यर्थः। नेहेति। प्रयुज्यत इति प्रयोगः। तत्र स्वतन्त्रस्य पदस्य प्रयुज्यमानस्य नियमो नारभ्यते। अपितु पदावयवस्य प्रकृतिप्रत्ययोपसर्ज-

॥ भा० ॥ प्रयोगनियमार्थन्तर्हीदं स्यात्। वृद्धिशब्दात्पर आदैचः प्रयोक्तव्या इति। नेह प्रयोगनियम आरभ्यते। किन्तर्हि। संस्कृत्य संस्कृत्य पदान्युत्सृज्यन्ते। तेषां यथेष्टमभिसंबन्धो भवति। तद्यथा। आहर पात्रं पात्रमाहरेति। आदेशास्तर्हीमे स्युः। वृद्धिशब्दस्यादैच आदेशाः॥

॥ कै० ॥ नागमादिरूपस्य। लोके च केवल एव वृद्धिशब्दः प्रयुज्यत इति न तस्यानेन नियमः क्रियते। लोके च प्रयुक्तानामिदमनुशासनम्॥

॥ वि० ॥ मिति भावः। केवलः। आदैच्पदासंबद्धः। भाष्ये संस्कृत्येति। साधुत्वेनान्वाख्यायेत्यर्थः। अभिसंबन्धः। पौर्वापर्यलक्षणः॥

२२२

॥ वि० ॥ षष्ठ्यभावेऽपि नाभि नभमित्यादावादेशदर्शनादाह । स्थानेति । षष्ठी स्थाने इति सूत्रगत इति शेषः । तत्र हि सूत्रे स्थानशब्दोऽधिकरणव्युत्पत्त्यार्थवाची भावव्युत्पत्त्या प्रसङ्गवाची च तन्त्रेणोपादीयते । अन्यथा केवलार्थशब्दम्प्राप्तिशब्दं वोपाददीत । एवंच याऽनियोगा षष्ठी सा प्रसङ्गनिरूपितसम्बन्धार्थिकैवेत्येकोऽर्थः । द्वितीये तु षष्ठीशब्दो लक्षणया स्थानिपरः स्थाने इति सप्तमी वाच्यस्यार्थस्याधिकरणत्वविवक्षया बोध्या । योगशब्दश्च युज्यत इति व्युत्पत्त्या आदेशवाची । ततोऽर्शआद्यच् । तेन स्थानी स्वार्थाभिधानसमर्थादेशवानित्यर्थ इति भावः ।

॥ कै० ॥ षष्ठीनिर्दिष्टस्येति । स्थानशब्दोऽर्थवाची । तिष्ठन्त्यस्मिन् शब्दा इति स्थानम् । नच वृद्धि-

॥ भा० ॥ षष्ठीनिर्दिष्टस्यादेशा उच्यन्ते । न चात्र षष्ठीम्पश्यामः । आगमास्तर्हीमे स्युः । वृद्धिशब्दस्यादैच आगमाः ॥

॥ कै० ॥ शब्दार्थमादैचो वक्तुं शक्ताः । तेनाच षष्ठ्यर्थाभावादिति तात्पर्यम् । तथाहि षष्ठ्यभावेऽपि तदर्थसद्भावाद्भवत्येव स्थान्यादेशभावः । यथा । नाभि नभञ्च परस्त्री परशुश्चेति ॥

॥ वि० ॥ भाष्यस्य तु षष्ठीनिर्दिष्टस्य स्थानिनो योऽर्थस्तस्य वाचका उच्यन्ते न चादैचु षष्ठीनिर्दिष्टस्थानिनोऽर्थमभिधेयत्वेन पश्याम इत्यर्थः । षष्ठ्यर्थाभावादिति । षष्ठीबोध्यस्थान्यर्थाभिधानसामर्थ्याभावादिति भावः । तदर्थसद्भावादिति । आदेशस्य स्थान्यर्थबोधनसामर्थ्यसद्भावादित्यर्थः । वस्तुतस्तु स्थानं प्रसङ्ग एव स चार्थवत एव । अर्थप्रत्यायनाय शब्दप्रयोगात् । एवंचार्थप्रयुक्त एव स्थान्यादेशयोः सम्बन्ध इति स्थान्यर्थाभिधानसमर्थस्यैवादेशतेति वदन्ति ॥

२२३

॥ वि० ॥ अत्रापीति । वस्तुतोऽवयवषष्ठ्यैवागमा उच्यन्ते इत्यर्थो भाष्यस्य । कलादिलिङ्गभ्रमव्यावृत्तये आह । देशेति । देशविशेषप्रतिपत्त्यर्थयत्नसाध्यागमप्रतीतिर्न यत्नं विनेत्यर्थः । इदं खल्वपीति भाष्यम्पूर्वोक्तपक्षाणामसम्भवं प्रतिपादयति तद्व्याचष्टे । विशेषणेति । अस्ति सामानाधिकरण्यमिति । नच तादृशे संज्ञासंज्ञित्वसम्भावनेति भावः । इत्युभयोरिति । विशेषणविशेष्यत्वरूपसंज्ञासंज्ञित्वसम्भावनास्थलप्रदर्शनायेत्यर्थः ।

॥ कै० ॥ आगमा अपीति । अत्राप्यर्थोऽपेक्ष्यते अनागमकानामर्थं सागमका इत्यर्थः । लिङ्गेन चेति । देशविशेषप्रतिपत्तये टकारादिलिङ्गन्तत्र क्रियत इत्यर्थः । इदं खल्वपीति । विशेषणविशेष्यभावनिराकरणेन संज्ञापक्षं स्थापयति । देवदत्तः पचतीत्यत्ति

॥ भा० ॥ आगमा अपि षष्ठीनिर्दिष्टस्यैवोच्यन्ते। लिङ्गेन च। नचात्र षष्ठीं न खल्वप्यागमलिङ्गम्पश्यामः । इदं खल्वपि भूयःसामानाधिकरण्यमेकविभक्तिकत्वञ्च द्वयोश्चैतद्भवति ॥

॥ कै० ॥ सामानाधिकरण्यन्त्वेकविभक्तित्वम् । गौरश्व इत्यस्त्येकविभक्तित्वन्न तु सामानाधिकरण्यमित्युभयोरुपादानम् । संज्ञासंज्ञिनोरप्यस्ति विशेषणविशेष्यत्वम्प्रसिद्ध्यप्रसिद्धिवशात्तु भेदेनोपादानम् ॥

॥ वि० ॥ संज्ञासंज्ञिनोरपीति । उद्भिदादिसंज्ञा हि स्वरूपेणैव संज्ञिनं सजातीयाद्यागान्तराद्विजातीयाच्च होमादेर्व्यवच्छिनत्तीति विशेषणम् । संज्ञी च व्यवच्छेद्यः सन्विशेष्यः । विषयताविशेषरूपमपि तत्तयोरस्त्येवेति भावः । प्रसिद्धीति । द्वयोर्हि प्रतीतेत्यादिना भाष्ये उक्तमेतत् । यद्वा सत्यपि व्यवच्छेद्यव्यवच्छेदकभावे संज्ञासंज्ञिनोर्विशेषणविशेष्यभावो लोके न प्रसिद्ध इत्यर्थः ॥

२२४

॥ वि॰ ॥ ननु सामानाधिकरण्यन्नाम द्वयोः शब्दयोरेकाभिधेयसम्बन्धस्तत्तु न युक्तम्। सामानाधिकरण्यस्य शब्दधर्मत्वेन विशेषणत्वादेः स्वार्थधर्मत्वेन विशेषणविशेष्ययोः सामानाधिकरण्यमिति भाष्यासङ्गतेः। संज्ञासंज्ञिनोरेकाभिधेयसम्बन्धाभावेन संज्ञासंज्ञिनोर्वा सामानाधिकरण्यमित्यस्याप्यसङ्गतिरत आह। तत्त्विति। भिन्नप्रवृत्तीत्यनेन पर्यायनिरासः। वस्तुत इदञ्चिन्त्यम्। अघ्न्ये देवि सरस्वति इडे काव्ये विहव्ये एतानि तेऽघ्न्ये नामानीत्यादौ नामन्त्रिते समानाधिकरणे इत्यस्य व्यावृत्तये

॥ कै॰ ॥ तत्तु सामानाधिकरण्यं शब्दयोरेव केचिदिच्छन्ति। द्वाभ्यामभिन्नप्रवृत्तिनिमित्ताभ्यां शब्दाभ्यामेक-

॥ भा॰ ॥ कयोः। विशेषणविशेष्ययोर्वा संज्ञासंज्ञिनोर्वा। तत्रैतत्स्याद्विशेषणविशेष्ये इति। तच्च न। द्वयोर्हि प्रतीतपदार्थकयोर्लोके विशेषणविशेष्यभावो भवति ॥

॥ कै॰ ॥ स्याधिकरणस्याभिधेयस्य प्रतिपादनाद् विशेषणविशेष्यार्थप्रतिपादनाच्च विशेषणविशेष्यत्वम् ॥

॥ वि॰ ॥ तत्र सामान्यवचनग्रहणमितितत्सूत्रस्थभाष्यविरोधापत्तेर्युगपदधिकरणवचनतापक्षे षष्ठीस्थद्याविल्यत्र समानाधिकरणलक्षणपुंवद्भावशङ्कापरभाष्यविरोधापत्तेश्च विशेषणत्वादिकञ्चोपपद्यत इत्याह। विशेषणेति। भाष्ये संज्ञासंज्ञिनोरित्यत्र संज्ञिपदेन संज्ञिसमर्पकः शब्दोऽभिप्रेतः। संज्ञाशब्दे च शब्दः प्रवृत्तिनिमित्तम्। संज्ञिनि तत्सम्बन्धात्। संज्ञिबोधकशब्दे च संज्ञिगततत्तद्धर्मः प्रवृत्तिनिमित्तम्। एवञ्च वृद्धिशब्दवदभिन्ना आदैच इति बोधः। वृद्धिशब्दवत्त्वञ्च लोकसिद्धतादात्म्येनेत्याशयः ॥

२२५

॥ वि॰ ॥ अन्ये त्विति। संज्ञासंज्ञिनोस्तूक्तप्रवृत्तिनिमित्तमिति सामानाधिकरण्यम्। एकविभक्तिकत्वं त्वत्र पक्षे शब्दद्वारा बोध्यम्। विभक्तिशब्देन शक्तिर्वा। भाष्ये संज्ञासंज्ञिनोरित्यस्य तत्प्रवृत्तिनिमित्तयोरित्यर्थः। अन्येत्वितिमतेऽरुचिबीजन्तु प्रतीतपदार्थकयोरिति बहुव्रीहिस्वरसभङ्गः। विशेषणविशेष्यभावो भवतीत्यस्य तदर्थप्रतिपादकत्वम्भवतीत्यर्थः। ननु वैयाकरणानामादैच्छब्दः प्रतीतपदार्थ एवेत्यत आह। नहीति।

॥ कै॰ ॥ अन्ये तु नीलमुत्पलमिति प्रवृत्तिनिमित्तयोर्जातिगुणयोरेकमधिकरणमाश्रय इति सामानाधिकरण्यं

॥ भा॰ ॥ नचादैच्छब्दः प्रतीतपदार्थकः। तस्मात्संज्ञासंज्ञिनावेव। तत्र त्वेतावान्सन्देहः। कः संज्ञी का संज्ञेति। सचापि क्व सन्देहः। यत्रोभे समानाक्षरे। यत्र त्वन्यतरल्लघु सा संज्ञा। कुत एतत्। लघ्वर्थं हि संज्ञाकरणम्। तत्राप्ययन्नावश्यं गुरुलघुतामेवोपलक्षयितुमर्हति। किन्तर्ह्यनाकृतितामपि। अनाकृतिः संज्ञा आकृतिमन्तः संज्ञिन इति। लोकेऽपि ह्याकृतिमतो मांसपिण्डस्य देवदत्त इति संज्ञा क्रियते।

॥ कै॰ ॥ विशेषणविशेष्यभावञ्चार्थयोरेव मन्यन्ते। नचादैच्छब्द इति। नह्येतस्य कश्चिल्लौकिकोऽर्थः प्रसिद्ध इत्यर्थः ॥

॥ वि॰ ॥ वृद्धिशब्दार्थान्वययोग्य इति शेषोऽत्र द्रष्टव्यः। केचित्तु वृद्ध्यादिशब्दाः शब्दपरा एव वृद्धिशब्दाभिन्ना आदैच इति बोधः। तदुक्तं हरिणा। वृद्ध्यादयो यथा शब्दाः स्वरूपोपनिबन्धनाः। आदैच्प्रत्यायितैः शब्दैः सम्बन्धं यान्ति संज्ञिभिरिति। सामानाधिकरण्यञ्चैकविशेष्यकप्रतीतिजनकत्वमित्याहुः। भाष्ये यत्रोभे इति। प्रत्ययः अनीयरित्यादौ। लघ्वर्थमित्यस्य लाघवार्थमित्यर्थः ॥

॥ वि० ॥ न मांसपिण्ड इति । दूरस्थस्यापि नामोच्चारणमात्रेण दानादिसम्भवादिति भावः । सतो हीत्यादिना न भावरूपं विवक्षितम् । अभावस्यापि लोपादिसंज्ञादर्शनात् । नापि विद्यमानत्वम्प्रत्ययविधौ संज्ञाविशिष्टस्यापि विधानादत आह । बुद्धीति । अत एव सावर्णिर्भविता मनुरित्यादौ न दोषः । एवञ्च सच्छब्देन पूर्वम्बुद्ध्या विषयीकृतत्वं विवक्षितमित्यर्थः । बुद्धिसत्तासमाविष्ट एवचार्थः शब्देन बोध्यत इति सिद्धान्तात् । तत्त्वं हि

॥ कै० ॥ आवर्त्तिन्य इति । देवदत्तादिशब्दो हि दानादिप्रतिपादनायावर्त्तते । अथवेति । सत्यसति वा संज्ञिनि बुद्ध्या

॥ भा० ॥ अथवा आवर्त्तिन्यः संज्ञा भवन्ति वृद्धिशब्दश्चावर्त्तते । नचादैच्छब्दः । तद्यथा । इतरत्रापि देवदत्तशब्द आवर्त्तते न मांसपिण्डः । अथवा पूर्वोच्चारितः संज्ञी परोच्चारिता संज्ञा । कुत एतत् । सतो हि कार्यिणः कार्य्येण भवितव्यम् । तद्यथा । इतरत्रापि सतो मांसपिण्डस्य देवदत्त इति संज्ञा क्रियते । कथं वृद्धिरादैजिति । एतदेकमाचार्यस्य मङ्गलार्थम्मृष्यताम् । माङ्गलिक आचार्यो महतः शास्त्रौघस्य मङ्गलार्थं वृद्धिशब्दमादितः प्रयुङ्क्ते । मङ्गलादीनि हि शास्त्राणि प्रथन्ते वीरपुरुषकाणि च भवन्त्यायुष्मत्पुरुषाणिच अध्येतारश्च वृद्धियुक्ता यथा स्युरिति ॥

॥ कै० ॥ विषयीकृते शब्देन पूर्वन्निर्दिष्टे संज्ञा प्रवर्त्तत इत्यर्थः । ततश्चादेङ्गुण इत्यादावदेङादयः संज्ञिनो गुणादयः संज्ञाः । इह तु मङ्गलार्थोऽन्यथा पाठक्रमः ॥

॥ वि ॥ पूर्वोच्चारितस्यैव भवतीत्याह । शब्देन पूर्वमिति । भाष्ये माङ्गलिको मङ्गलप्रयोजनः । महतोऽर्थतः । एकैकं सूत्रं शास्त्रमिति शास्त्रौघस्येत्युक्तम् । मङ्गलादीनीत्यादिना स्वप्रयोजनं श्रोतृप्रयोजनञ्चोक्तम् । प्रथन्ते । विस्तृतानि भवन्ति तेन समाप्तिरर्थाचिप्ता ।



॥ वि० ॥ आर्थस्त्वन्यथेति । आदैच् वृद्धिरित्याकारः । आनुपूर्वीज्ञानस्याऽऽसत्तिविधया हेतुत्वादिति भावः । कथं तर्हि वृद्धिशब्दस्य संज्ञात्वप्रतीतिरत आह । अन्ये त्विति । लाघवादयः । आदैचो वृद्धिपदाभिन्ना इत्यर्थः । एवञ्चानुपूर्वीव्यत्यासेन विलम्बेन बोधजनकशब्दोच्चारणम्मङ्गलार्थं चम्यतामिति बोध्यम् । अत्रैकशब्दः प्रथमार्थकः । प्रथमन्तथाकरणम्मङ्गलार्थमेव । एवञ्चान्यत्रापि तथाकरणमुद्देश्यविधेयभावेनान्वये तादृशस्यैव साधुत्वमितिभ्रमवारणार्थमित्याहुः । परिभाषेति । तदा हि यत्रापृक्तपदन्तत्रैकालित्याद्युपतिष्ठत इत्यर्थात्प्राथम्यं युक्तमेवेत्यर्थः ।

॥ कै० ॥ आर्थस्त्वन्यथाक्रमः । अन्ये तु सिद्धिहेतवो भविष्यन्ति । अपृक्त एकाल्प्रत्यय इति तु परिभाषा न संज्ञेति नास्ति

॥ भा० ॥ सर्वत्रैव हि व्याकरणे पूर्वोच्चारितः संज्ञी परोच्चारिता संज्ञेति । अदेङ्गुण इति यथा । दोषवान् खल्वपि संज्ञाधिकारः । ऋष्टमेऽपि हि संज्ञा क्रियते तस्य परमाम्रेडितमिति । तत्रापीदमनुवर्त्यं स्यात् ॥

॥ कै० ॥ व्यभिचारः । अपृक्तशब्देन ह्येकाकी कथ्यत इत्यनेनानियमेन ग्रहणे प्राप्ते नियमः क्रियते ॥

॥ वि० ॥ वस्तुत इदं वृद्धिसूत्रेऽपि सुवचम् । किञ्चैवमपृक्तसंज्ञायामित्यादिभाष्यवार्त्तिकव्यवहारानुपपत्तिः । केचित्तु परिभाषात्वेऽपि एकाल्प्रत्यय इत्येतदुद्देशेनापृक्तपदवद्देशस्थत्वं विधेयम् । पदपरत्वार्थन्तत्रापि लक्षणावश्यकत्वेन सामानाधिकरण्यान्वयार्थन्तावत्पर्यन्तलक्षणाया उचितत्वात् । पदत्वयाध्याहारे गौरवाच्च । एवञ्च परिभाषात्वेऽप्युद्देश्यत्वेन तस्यैव पूर्वम्पाठो युक्तः । आनुपूर्वीव्यत्यासाद्बोधस्तूभयोस्सम इति वदन्ति । भाष्येऽनुवर्त्यं स्यादिति । तच्चासम्भवबहुव्यवायादशक्यमिति भावः ॥

॥ वि० ॥ अस्थाने । अनवसरे । भिद्यते । विलक्षणम्भवतीत्यर्थः । अभिसम्बन्धः । संज्ञासंज्ञिभावः । ततो ज्ञातुं शक्य इति भावः ।

॥ कै० ॥ अस्थान इति । अन्तरेणापि संज्ञाशब्दप्रयोगं लोकव्यवहारवदत्र संज्ञासंज्ञिसम्बन्धः सिध्यतीत्यर्थः ॥

॥ भा० ॥ अथवा अस्थानेऽयं यत्नः क्रियते नहीदं लोकाद्भिद्यते । यदीदं लोकाद्भिद्येत ततो यत्नार्हं स्यात् । तद्यथा । अगोज्ञाय कश्चिद्गां सक्थनि कर्णे वा गृहीत्वोपदिशत्ययं गौरिति । नचास्मा-याचष्टे इयमस्य संज्ञेति । भवति चास्य सम्प्रत्ययः । तत्रैतत्स्यात् । कृतस्तत्र पूर्वैरभिसम्बन्ध इति । इहापि कृतः पूर्वैरभिसम्बन्धः । कैः । आचार्य्यैः । तत्रैतत्स्यात् । यस्मै तर्हि सम्प्रत्युपदिशति तस्याकृतः । लोकेऽपि यस्मै सम्प्रत्युपदिशति तस्याकृतः । अथ तत्र कृतः । इहापि कृतो द्रष्टव्यः ॥

॥ वि० ॥ तस्याकृत इत्यस्य तेनाज्ञात इत्यर्थः । तथाच तेन कथम्प्रतिपत्तुं शक्य इति भावः । अथ तत्रेति । अनुमानादिना ज्ञात इत्यर्थः ॥



॥ वि० ॥ सतो वृद्ध्यादिष्विति । सतो । निष्पन्नस्य । संज्ञाभावात् । संज्ञासम्बन्धात् । तदाश्रये । संज्ञाश्रये संज्ञया संज्ञिविधायके शास्त्रे

॥ कै० ॥ सतो वृद्ध्यादिष्विति । विधौ चायन्दोषो नानुवादे वृद्धिर्यस्येत्यादौ । तत्र च संज्ञाविधानस्य चरितार्थत्वा-न्मृजेर्वृद्धिरित्यादौ वृद्धिशब्द एवाऽऽदेशः प्राप्नोति ॥

॥ भा० ॥ सतो वृद्ध्यादिषु संज्ञाभावात् तदाश्रय इतरेतराश्रयत्वादप्रसिद्धिः । सतः संज्ञिनः संज्ञाभा-वात्तदाश्रये संज्ञाश्रये संज्ञिनि वृद्ध्यादिष्वितरेतराश्रयत्वादप्रसिद्धिः । का इतरेतराश्रयता । सतामादैचां संज्ञया भवितव्यम् । संज्ञया चादैचो भाव्यन्ते । तदेतदितरेतराश्रयम्भवति । इतरेतराश्रयाणि च कार्याणि न प्रकल्पन्ते । तद्यथा । नौर्नावि बद्धा नेतरत्राणाय भवति ॥

॥ वि० ॥ मृजेर्वृद्धिरित्यादौ वृद्ध्यादिपदेषु इतरेतराश्रयत्वादप्रसिद्धिर्वाक्यार्थाप्रसिद्धिरित्यर्थः । अविद्यमाने सम्बन्धस्य वक्तुमशक्यत्वादिति भावः ॥

॥ वि० ॥ वहनक्रियायामितरेतराश्रयत्वाभावेऽपि तत्फलतीत्याह । नौ इति । सामग्र्यन्तरेति । कारणान्तरेत्यर्थः । सूचकङ्गीलादि । नच सामान्यलक्षणया भूतभाविसकलविषयकशक्तिग्रहः सम्भवत्येव । अन्यथा तवापि तत्तद्वोद्बुद्धावसन्निहितसकलाकारविषयकशक्तिग्रहा-सम्भवेनानुवादेऽपि दोषः स्यात । सामान्यलक्षणानङ्गीकारेऽपि शक्तिग्रहबोधादीनां समानप्रकारकत्वेनैव कार्यकारणभावाभ्युपगमान्न दोष इति वाच्यम् ।

॥ कै० ॥ ननु च भो इति । नौशकटस्याभिमतदेशान्तरप्राप्तिरितरेतराश्रयेति चोद्यम् । सामग्र्यन्तरानुप्रवेशेनोत्तरम् ॥

॥ भा० ॥ ननु च भो इतरेतराश्रयाण्यपि कार्याणि दृश्यन्ते । तद्यथा । नौः शकटं वहति शकटं च नावं वहति । अन्यदपि तत्र किञ्चिद्भवति जलं स्थलं वा । स्थले शकटं नावं वहति जले नौः शकटं वहति । यथा तर्हि त्रिविष्टब्धकम्भवति । तत्राप्यन्ततः सूत्रकम्भवति । इदम्पुनरितरेतराश्रयमेव ॥

॥ वि० ॥ जातिप्रकारकशक्तिग्रहस्य स्वाश्रयीभूतसकलव्यक्तिबोधकत्वेऽप्यनुत्पन्ने जात्याश्रयत्वसम्बन्धस्य वक्तुमशक्यतया भाविव्यक्तेर्जात्याश्रयत्वाभावात् तद्बोधास-म्भवेन मृजेर्वृद्धिरित्यत्र तज्जन्योत्पत्तिज्ञप्त्योः परस्पराश्रय इति भावात् । वृद्धिरादैजित्यस्य विद्यमानेषु वृद्धिस्थेषु चारितार्थ्येन भाविनामुद्देश्यत्वासम्भवेन तत्र वृद्धि-पदस्य शक्तिग्रहासम्भवाच्च ॥



॥ वि० ॥ यद्यप्यस्य सूत्रस्य शाटकं वयेत्यादाविव भाविसंज्ञाविज्ञानेन सिध्यति । यथा च तत्रोत्पत्त्यनन्तरङ्गृहीतशक्तिकशाटकसादृश्याच्छा-टकपदशक्तिग्रहस्तथा प्रकृतेऽपि । स्पष्टञ्चेदमिग्यण इति सूत्रे भाष्ये ।

॥ कै० ॥ सिद्धन्त्विति । नहि मृजेरपूर्व आकारो भाव्यते । किन्तु मृजावुपदिष्टे मार्ष्टीत्यादीनामसाधुत्वबुद्धिः

॥ भा० ॥ सिद्धन्तु नित्यशब्दत्वात् । सिद्धमेतत् । कथम् । नित्यशब्दत्वात् । नित्याः शब्दाः । नित्येषु शब्देषु सतामादैचां संज्ञा क्रियते न संज्ञया आदैचो भाव्यन्ते । यदि तर्हि नित्याः शब्दाः किमर्थं शास्त्रम् । किमर्थं शास्त्रमिति चेन्निवर्त्तकत्वात्सिद्धम् । निवर्तकं शास्त्रम् । कथम् । मृजिरस्मायविशेषेणोपदिष्टस्तस्य सर्वत्र मृजिबुद्धिः प्रसक्ता तत्रानेन निवृत्तिः क्रियते । मृजेरङ्कित्सु प्रत्ययेषु मृजिप्रसङ्गे मार्ज्जिस्साधुर्भवतीति । प्रत्येकं वृद्धिगुणसंज्ञे भवत इति वक्तव्यम् । किम्प्रयोजनम् ॥

॥ कै० ॥ प्राप्नोतीति तेषां साधुत्वान्वाख्यानं क्रियते । प्रत्येकमिति । यद्यपि नित्यशब्दत्वेनैतदपि व्यव-तिष्ठते तथापि न्यायव्युत्पादनायोपन्यासः ॥

॥ वि० ॥ तथाप्यत्र वास्तवमेव परिहारमाह भाष्ये । सिद्धन्त्विति । एतच्च मञ्जूषायां विस्तरेण निरूपितम् । न्यायेति । वक्ष्यमाणन्यायेत्यर्थः ॥

॥ वि० ॥ ननु वृद्धिर्यस्येत्यादौ समुदायासम्भवात् प्रत्येकमेव संज्ञेत्यत आह । अन्यथेति । एवञ्च तमादाय तत्रापि सम्भवः । द्वन्द्वनिर्देशा-त्समुदायस्यैव स्यादिति भावः । समुदायेति । मातापित्रोर्मृतेऽहनीतिवद्बोधे साहित्यन्न तु क्रियानिष्पत्तौ इति भावः । उभयत्रेति । समु-

॥ कै० ॥ समुदाये माभूतामिति । अन्यथा मृजेर्वृद्धिरित्यादौ समुदाय आदेशः प्राप्नोति । समुदा-यावयवसन्निधौ क्व तात्पर्य्यं कस्य च नान्तरीयकत्वमिति विचार्य्यते । अन्यत्रेति । यत्नसाध्या समुदायप्र-तिपत्तिरिति यत्नाभावे न भवतीत्यर्थः । ननु सहग्रहणान्नियमार्थं स्यात् । समुदायस्यैव समाससंज्ञा

॥ भा० ॥ समुदाये माभूतामिति । अन्यत्र सहवचनात्समुदाये संज्ञाऽप्रसङ्गः । अन्यत्र सहवचनात्समुदाये वृद्धिगुणसंज्ञयोरप्रसङ्गः । यत्रेच्छति सहभूतानाङ्कार्य्यं करोति तत्र सह-ग्रहणम् । तद्यथा । सह सुपा उभे अभ्यस्तं सहेति ॥

॥ कै० ॥ यथा स्याद् नावयवानामिति । नैतदस्ति । उभयत्र तात्पर्य्याभावाद्युगपदुभयत्र प्रस-ङ्गाभावाल्लिङ्गत्वमेव सहग्रहणस्यान्यत्र समुदाये तात्पर्य्यन्नास्तीत्यस्यार्थस्य । उभे अभ्यस्तं सहेति । अत्र सहग्रहणं वार्तिककारस्य कर्तव्यत्वेन स्थितम् । भाष्यकारस्तु उभेग्रहणस्यैतत्प्रयोजनं स्थापयिष्यति ॥

॥ वि० ॥ दायेऽवयवेचेत्यर्थः । उभयत्र तात्पर्य्याभावे हेतुर्युगपदिति । फलाभावादिति भावः । यद्यपि पर्य्यायः प्राप्नोति तथापि समासविधिनियमोभयप-रत्वे गौरवमित्यतो लिङ्गत्वकल्पनमेवोचितमित्यत्र तात्पर्य्यम् । भाष्यकारस्त्विति । तदेकदेशीत्यर्थः । हे इत्यनुवृत्त्यैव सिद्धे उभेग्रहणं सहार्थकमिति भावः ॥



॥ वि० ॥ न ज्ञापकादेव किन्तु युक्तितोऽपि प्रत्येकं संज्ञेत्याह । प्रत्यवयवमिति । प्रत्येकं वाक्यपरिसमाप्तिमुपक्रम्य प्रत्येकम्भुजिसमाप्त्युक्तिरयुक्ता न हि भुज्यर्थोऽत्र वाक्यार्थः किन्तु ण्यन्तार्थोऽत आह । अत्रेति । वाक्यार्थस्त्वत्र प्रयोजकव्यापारस्तस्य समुदायविषयत्वसम्भवात्फलग्रहणं तत्र प्रयोज्यव्यापाररूपमित्याह । तच्चेति । ननु विशिष्टपरिमाणस्यादनीयस्य भोजनक्रिया समुदायपर्य्याप्तेत्यपि वक्तुं शक्यमत आह ।

॥ कै० ॥ प्रत्यवयवञ्चेति । अत्र वाक्यशब्देन वाक्यार्थः फलमुच्यते तच्च देवदत्तादीनाम्भोजनं तस्य चैतदेव रूपं यत्प्रत्येकपरिसमाप्त्या संपद्यते । अन्नादनादिरूपत्वात्तृप्तिफलत्वाच्च भोजनस्य । नाद्यक्रिया तु

॥ भा० ॥ प्रत्यवयवञ्च वाक्यपरिसमाप्तेः । प्रत्यवयवञ्च वाक्यपरिसमाप्तिर्दृश्यते । तद्यथा । देव-दत्तयज्ञदत्तविष्णुमित्रा भोज्यन्तामिति । न चोच्यते प्रत्येकमिति । प्रत्येकञ्च भुजिः परिसमाप्यते । ननु चायमप्यस्ति दृष्टान्तः । समुदाये वाक्यपरिसमाप्तिरिति ।

॥ कै० ॥ समुदाये समाप्यते । गीतादिक्रियासमुदायरूपत्वात्तस्याः । संयोगसंज्ञा तु अन्वर्थत्वात्समुदाये प्रवर्त्तते । वृद्धिसंज्ञा तु लक्ष्ये पृथगादैचान्दर्शनान्मालादीनाञ्चेतिलिङ्गाच्च प्रत्येकं व्यवतिष्ठते ॥

॥ वि० ॥ तृप्तिफलत्वाच्चेति । सर्वापि क्रिया प्रत्येकं समाप्यत इति भ्रमो न कार्य्य इत्याह । नाद्येति । गीतादीति । आदिना नृत्तवाद्यादि । अन्वर्थत्वं संयु-ज्यन्ते वर्णा अत्रेति । लक्ष्यानुसारात्तत्र समुदाये वाक्यपरिसमाप्तेराश्रयणमिति तत्त्वम् । प्रकृतेऽन्यतरन्यायाश्रयणे हेतुमाह । वृद्धिसंज्ञेति । लिङ्गादिति । प्रस्येऽ-वृद्धमितिनिषेधबाधनार्थं हि तदिति भावः । नच नामधेयरूपमालादीनामाद्युदात्तार्थन्तत् तस्य वा नामधेयस्येति पक्षे वृद्धत्वादिति वाच्यम् । अभिव्यक्तेति न्यायेन तत्राप्रवृत्तेः ॥

॥ वि० ॥ समुदाये समाप्तौ युक्तिमाह । अत्र शतस्येति । एवञ्चाकथितसूत्रे दण्डिरपि परिगणनीय इति भाव इत्येके । उद्देश्यत्वरूप-मार्थम्प्राधान्यं शतस्येत्यनुद्देश्यत्वेन गर्गा गुणकर्म्म । दण्डेश्च स्वसम्प्रदानकदानानुकूलव्यापारानुकूलव्यापारः शासनरूपोऽर्थः । शासनन्नियन्त्र-णम् । तत्र ण्यन्त इव कर्त्तुरित्युभयोः कर्मत्वम् ।

॥ कै० ॥ गर्गा इति । अत्र शतस्येप्सिततमत्वात्प्राधान्यम् । अपादानस्थानप्राप्ता गर्गा गुणकर्म । नच
गुणभेदेन प्रधानस्य भेद इति शतदण्डनं

॥ भा० ॥ तद्यथा । गर्गाश्शतन्दण्ड्यन्तामिति । अर्थिनश्च राजानो हिरण्येन भवन्ति न
प्रत्येकन्दण्डयन्ति । सत्येतस्मिन् दृष्टान्ते यदि तत्र सहग्रहणं क्रियत इहापि प्रत्येकमिति वक्तव्यम् ॥

॥ कै० ॥ समूहे समाप्यते । अर्थिनश्चेति । शतस्य प्राधान्यम्प्रतिपाद्यते । दण्डपरायां हि चोदनायां
शतस्य प्राधान्यमतो वाक्याद्वगम्यते ।

॥ वि० ॥ कर्तृप्रत्ययसमभिव्याहारे धात्वर्थप्रधानव्यापारविशेषणफलाश्रयत्वेन गर्गाणां शाब्दम्प्राधान्यन्तच्चैव प्रधाने कर्मणि लकारः । प्रधानकर्मण्याख्येये लादी-नाहुर्द्विकर्मणामित्युक्तेः । दुहादिष्वस्याप्रामाणिकः पाठ इति वक्ष्यते । अपादानस्थानप्राप्ता इत्यनेन चानुद्देश्यत्वमात्रमभिप्रेतमिति परे । शतस्य प्राधान्यमिति । शारीराभिहननलक्षणदण्डव्यावर्तनेनेति भावः ॥



॥ वि० ॥ नन्वन्तरेणापीति वाच्ये सार्वकालिकासत्त्वप्रतिपादकमपिशब्दरहितमयुक्तमत आह । न्यायादिति । शतदण्डनन्यायेत्यर्थः । योगविभागेति । तिङन्तसमासायेति भावः । भाष्ये किमर्थमिति । चतुर्थीतत्पुरुषः ।

॥ कै० ॥ अथ तत्रान्तरेणेति । न्यायादन्वर्थत्वाच्च समाससंज्ञायास्समुदाये परिसमाप्तौ सिद्धायां योगविभागार्थं
तत्र सहग्रहणं स्थितमिति तत्रान्तरेणेत्युक्तम् । अथ किमर्थमिति । किमाकृतिपक्षे भिन्नकालनिवृत्त्यर्थमथवा

॥ भा० ॥ अथ तत्रान्तरेण सहग्रहणं सहभूतानाङ्कार्य्यम्भवति । इहापि नार्थः प्रत्येकमिति वचनेन ।
अथ किमर्थमाकारस्तपरः क्रियते । आकारस्य तपरकरणं सवर्णार्थम् । आकारस्य तपरकरणं क्रियते ।
किम्प्रयोजनम् । सवर्णार्थम् । तपरस्तत्कालस्येति तत्कालानां सवर्णानाङ्ग्रहणं यथा स्यात् । केषाम् ।
उदात्तानुदात्तस्वरितानाम् ॥

॥ कै० ॥ व्यक्तिपक्षे गुणान्तरयुक्तानाङ्ग्रहणार्थमिति प्रश्नः । आकारस्येति । व्यक्तिः पदार्थो भेदकाश्च गुणा
इति दर्शने यद्गुणस्यैवोच्चारणन्तद्गुणस्यैव संज्ञाप्रसङ्गे गुणान्तरयुक्तानामपि संज्ञाप्रतिपत्त्यर्थन्तपरत्वमित्यर्थः ॥

॥ वि० ॥ तपरकरणं क्रियत इति पाकम्पचतीतिवत् सामान्यविशेषभावेन सहप्रयोगः । आत्वजातेर्भिन्नकालावर्णवृत्तित्वाभावाद्वितीयमाश्रयति । व्यक्तिरिति । यद्गुणस्येत्यादि बहुव्रीहिः ॥

॥ वि॰ ॥ भाष्ये किञ्च कारणमिति । निमित्तकारणहेतुष्विति हेतौ प्रथमा । अस्ति प्रयोजनमेतदितिकाका सूचितमनुशयं पृच्छति ।

॥ कै॰ ॥ किञ्च कारणमिति । अभेदका हि गुणाः । मुण्डेन हि कृते चौर्य्ये कुन्तलित्वावस्थायामपि चौरोऽयमिति व्यप-

॥ भा॰ ॥ किञ्च कारणं न स्यात् । भेदकत्वात्स्वरस्य । भेदका उदात्तादयः । कथम्पुनर्ज्ञायते भेदका उदात्तादय इति । एवं हि दृश्यते लोके । य उदात्ते कर्त्तव्येऽनुदात्तं करोति खण्डिकोपाध्यायस्तस्मै चपेटां ददाति अन्यत्त्वं करोषीति । अस्ति प्रयोजनमेतत् । किन्तर्हीति । भेदकत्वाद्गुणस्येति वक्तव्यम् । किम्प्रयोजनम् । आनुनासिक्यन्नाम गुणः । तद्भिन्नस्यापि यथा स्यात् । किञ्च कारणं न स्यात् । भेदकत्वाद्गुणस्य । भेदका गुणाः । कथम्पुनर्ज्ञायते भेदका गुणा इति । एवं हि दृश्यते लोके ॥

॥ कै॰ ॥ दिश्यत एवेति प्रश्नः । भेदकत्वादिति । सर्वगुणसङ्ग्रहार्थङ्गुणग्रहणङ्कर्त्तव्यमित्यर्थः ॥

॥ वि॰ ॥ किन्तर्हीति । किन्तर्हीति प्रश्ने । इति । इदं वक्तव्यमित्यर्थः । तदाह । भेदकत्वादित्यादि ।



॥ वि॰ ॥ जात्यात्मनैकत्वे व्यक्तिभेदादेवोपपत्तेर्न गुणभेदकृतभेदे इदमुदाहरणं स्यादत आह । उदकत्वेति । आत्मशब्दो द्रव्यवाची भाष्ये । बालो युवेति भाष्ये स्वामाख्यां न जहातीत्यनुकर्षः । एतेनाभेदकत्वे प्रत्यभिज्ञा प्रमाणं दर्शितम् । ननु गुणेषूभयाङ्गीकारे खण्डिकोपाध्याय-

॥ कै॰ ॥ एकोऽयमिति । उदकत्वजातियोगादैकत्वं न विवक्षितं किं तर्हि विशिष्टभाजनस्थमेकमुदकद्रव्यं तदेव च गुणान्तरयोगादन्यत्वेन लोके व्यपदिश्यते । उभयमिति । आम्नायशब्दा नियतस्वरा इति

॥ भा॰ ॥ एकोऽयमात्मा उदकं नाम तस्य गुणभेदादन्यत्वं भवति । अन्यदिदं शीतमन्यदिदमुष्णमिति । ननु च भो अभेदका अपि गुणा दृश्यन्ते । तद्यथा । देवदत्तो मुण्ड्यपि जट्यपि शिख्यपि स्वामाख्यां न जहाति । तथा बालो युवा वृद्धो वत्सो दम्यो बलीवर्द्द इति । उभयमिदं गुणेषूक्तम् । भेदका अभेदका इति । किम्पुनरत्र न्याय्यम् ॥

॥ कै॰ ॥ वेदे गुणानां भेदकत्वम् । लोके तूभयथा व्यवहारः । गोपिण्डोऽपि वत्साद्यवस्थाभेदात्क्रयविक्रयादिषु मूल्यादिभेदाद्भेदेन व्यवह्रियते स एवायमिति प्रत्यभिज्ञानादभेदेनापीति प्रश्नः । किं पुनरिति । अत्रेति । शास्त्रे ॥

॥ वि॰ ॥ चपेटादानं विरुध्येतेति चेन्न । यत उभयमिति लोकमात्रविषयमिति न विरोध इत्याह । आम्नायेति । ननूभयोरपि न्याय्यत्वप्रतिपादनेन किं पुनरत्र न्याय्यमिति प्रश्नोऽयुक्तोऽत आह । शास्त्रे इति । अत्रेति निर्द्धारणसप्तमी नेति भावः ॥

२३८

॥ वि॰ ॥ इत्येव न्याय्यमिति । विधेयाणभिन्नविषय इति शेषः । तद्देतत्कृतस्यापि अप्रत्यय इति निषेधात् । अतस्तथैव ज्ञापकमुपन्य-स्यति । यदयमिति । प्रयत्नम् । स्वशब्देनोपादानरूपम् । कथमिति । यथा वध्यादेशे उदात्तनिपातनेन एकाच इतिसूत्रस्थमेकाज्ग्रहणं

॥ कै॰ ॥ उदात्तमेवेति । तस्माद्गुणरहितस्योच्चारणाभावान्नान्तरीयकत्वादुच्चार्यमाणोऽपि गुणः प्र-यत्नमन्तरेण न विवक्षित इत्यर्थः । यद्येवं कथमन्यत्रोक्तमुदात्तनिपातनं करिष्यत इति । यावता तत्रा-

॥ भा॰ ॥ अभेदका गुणा इत्येव न्याय्यम् । कुत एतत् । यदयमस्थिदधिसक्थ्यक्ष्णा-मनङुदात्त इत्युदात्तग्रहणं करोति तज्ज्ञापयत्याचार्योऽभेदका गुणा इति । यदि हि भेदका गुणाः स्युः । उदात्तमेवोच्चारयेत् । यदि तर्ह्यभेदका गुणाः ॥

॥ कै॰ ॥ प्यविवक्षा प्राप्नोति । नैष दोषः । तत्रापि हि स्थानेऽन्तरतम इति वचनादादेशस्य यः स्वरः प्राप्तस्तस्मिन्नुच्चारयितव्ये उदात्तोच्चारणं प्रयत्नेन विवक्षार्थं विज्ञायते । एवमनुनासिकस्य प्रय-त्नाधिक्येनोच्चारणं विवक्षार्थमेव । उञ ऊँ इति विवक्षा यथा ॥

॥ वि॰ ॥ न कार्यमिति । यः स्वरः प्राप्त इति । हल्तेरनुदात्तत्वादनुदात्त इत्यर्थः । नचैवमस्थ्यादीनामाद्युदात्तत्वेनादेशानङः स्थान्यनुरूपेऽनुदात्त उच्चारणीये उदात्तोच्चारणं विवक्षार्थमिति ज्ञापितेऽपि व्यर्थमुदात्तग्रहणमिति वाच्यम् । परमास्थिशब्दादावन्तोदात्ते उदात्तगुणकस्यापि स्थानित्वेन विवक्षायां मानाभावादित्याशयात् ॥

२३९

॥ वि॰ ॥ नन्वेवमपि चतसर्याद्युदात्तनिपातनसामर्थ्याच्चतस्र इत्यत्र चतुरश्शसीत्यस्याप्रवृत्तिरिति भाष्योक्तमनुपपन्नं चतुश्शब्दस्य त्रः संख्याया इत्याद्युदात्ततया तत्स्थानिकचतसरि स्थानिस्वरेणाद्युदात्तोच्चारणोपपत्त्या चतुरश्शसीत्येतद्बाधकत्वायोगादत आह । अन्ये त्विति । एकश्रुतिश्च विभाषा छन्दसीति वैकल्पिकी । तत्पाठे क्वचिदुदात्तोच्चारणं विवक्षार्थम् । नैस्वर्येण पाठमभिप्रेत्य प्रकृतसूत्रस्थं ज्ञापकमित्यविरोधः ।

॥ कै॰ ॥ अन्ये त्वाहुः । एकश्रुत्या सूत्राणि पठ्यन्त इति क्वचिदुदात्तोच्चारणं तद्विवक्षार्थमिति ॥

॥ वि॰ ॥ अन्ये त्वित्यत्रचिवीजन्तु निपातनं नामान्यादृशे प्रयोगे प्राप्तेऽन्यादृशप्रयोगकरणम । तद्रूपाद्यत्वात् तत्रतत्रोदात्तादिविवक्षा । तिस्रचतस्र इत्य-त्रापि द्वन्द्वप्रयुक्तान्तोदात्ते उच्चारणीये आद्युदात्तोच्चारणं विवक्षार्थम् । सम्पूर्णाष्टाध्यायी आचार्येणैकश्रुत्या पठितेत्यत्र न मानम् । क्वचित्कस्यचित्पदस्यैकश्रुत्या पाठो यथा दाण्डिनायनादिसूत्रे ऐक्ष्वाकेति एतावदेव भाष्याल्लभ्यते । यद्यप्यध्येतार एकश्रुत्यैवाङ्गानि पठन्ति ब्राह्मणवत् तथापि व्याख्यानतोऽनुनासिकत्वादि-वदुदात्तनिपातनादिज्ञानमित्याहुः ॥

॥ वि० ॥ स्वरितादेरिति भाष्ये उपलक्षणम् । उदात्तादेरन्तानुदात्ताच्च प्राप्नोतीत्यपि बोध्यम् । आश्रीयमाण इति । शब्देन निपातनेन

॥ कै० ॥ अनुदात्तादेरिति । अजुपलक्षणार्थानुदात्तश्रुतिः स्यादिति प्रश्नः । उत्तरे त्वज्ग्रहणमेव कुर्यादित्यभिप्रायः ।

॥ भा० ॥ अनुदात्तादेरन्तोदात्ताच्च यदुच्यते तत् स्वरितादेः स्वरितान्ताच्च प्राप्नोति । नैष दोषः । आश्रीयमाणो गुणो भेदको भवति । तद्यथा । शुक्लमालभेत कृष्णमालभेत । तत्र यः शुक्ले कालव्ये कृष्णमालभते न हि तेन यथोक्तं कृतं भवति । असन्देहार्थस्तर्हि तकारः । ऐजित्युच्यमाने सन्देहः स्यात् । किमिमावैचावेव आहोस्विदाकारोऽप्यत्र निर्दिश्यत इति । सन्देहमात्रमेतद्भवति । सर्वसन्देहेषु चेदमुपतिष्ठते । व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणमिति । त्रयाणां ग्रहणमिति व्याख्यास्यामः । अन्यत्रापि ह्ययमेवंजातीयकेषु सन्देहे न कञ्चिद्यत्नं करोति । तद्यथा । औतोम्शसोरिति ॥

॥ कै० ॥ व्याख्यानत इति । प्रश्लेऽष्टद्वमित्याद्युदात्तत्वे सिद्धे मालादीनाञ्चेति मालाशब्दस्य दृष्टार्थत्वादुपादानस्याकारप्रश्लेषनिश्चय इत्यर्थः ॥

॥ वि० ॥ वाऽऽश्रीयमाण इत्यर्थः । नन्वेवमनुदात्तादिग्रहणं व्यर्थं स्यादत आह । अजिति ॥



॥ वि० ॥ ऐजर्थन्तपरत्वमित्याह । इदं तर्हीति भाष्ये । चतुर्मात्रोऽपि प्लुतः प्लुतावैच इति सूत्रे भाष्ये स्पष्टः ॥

॥ कै० ॥ इदं तर्हीति । ननु भाव्यमानत्वादैचो ग्राहका न भविष्यन्ति । नैतदस्ति । न ह्यत्र संज्ञा-

॥ भा० ॥ इदं तर्हि प्रयोजनम् । आन्तर्यतस्त्रिमात्रचतुर्मात्राणां स्थानिनां त्रिमात्रचतुर्मात्रा आदेशा माभूवन्निति । खट्वा इन्द्रः । खट्वेन्द्रः । खट्वा उदकम खट्वोदकम । खट्वा ईषा खट्वेषा । खट्वा ऊढा खट्वोढा । खट्वा एलका खट्वैलका । खट्वा ओदनः खट्वौदनः । खट्वा ऐतिकायनः खट्वैतिकायनः । खट्वा औपगवः खट्वौपगवः । अथ क्रियमाणेऽपि तकारे कस्मादेव त्रिमात्रचतुर्मात्राणां स्थानिनां त्रिमात्रचतुर्मात्रा आदेशा न भवन्ति । तपरस्तत्कालस्येतिनियमात् ॥

॥ कै० ॥ विधावादैचो भाव्यन्ते किन्त्वैज्भिरणत्वात् त्रिमात्रचतुर्मात्राणां ग्रहणात्संज्ञाप्रसङ्गाद्गुणविधौ तेषामपि प्रसङ्गात्तन्निषेधाय तपरत्वम्

२४२ ॥ वि० ॥ कार्यकालमाश्रित्य नोदयति । नन्विति । अयं भावः । तत्पचे मृजेर्वृद्धिरित्यादावुपस्थितं वृद्धिरादैजिति पदैकवाक्यतयान्वेति ।
एकं वृद्धिपदं तु प्रत्यभिज्ञामात्रफलकमनुवाद एव । एवञ्च भाव्यमानत्वं स्पष्टमेवेति । उत्तरस्य त्वयं भावः । अनुवादकल्पनापेचया तत्रोपस्थितं

॥ कै० ॥ एवं स्थिते चोदयन्ति यद्यैजर्थस्तकारस्तेनाकारस्य संवधाभावात् कथमादित्येतत्पदम् ।
उच्यते । तात्पर्येणैजर्थत्वं तकारस्योच्यते आनुषङ्गिकं त्वाकारार्थत्वं ज्ञापकद्वारेण ह्याकारप्रश्लेषे विज्ञा-

॥ भा० ॥ ननु तः परो यस्मात्सोऽयं तपरः । नेत्याह । तादपि परस्तपरः । यदि तादपि
परस्तपरः । ऋदोरबितीहैव स्यात् । यवः स्तवः । लवः पव इत्यत्र न स्यात् । नैष तकारः ।
कस्तर्हि । दकारः । किं दकारे प्रयोजनम् । अथ किं तकारे । यद्यसंदेहार्थस्तकारो दका-
रोऽपि । अथ मुखसुखार्थस्तकारो दकारोऽपि ॥ वृद्धिरादैच् ॥

॥ कै० ॥ यमाने प्रतिपत्तिगौरवं भवति सति तु तकारे आकारस्य स्वरूपप्रतीतिः स्पष्टा भवतीति
तकारसहितस्याकारस्यासंदिग्धानुकार्यप्रतिपादनेनार्थवत्त्वाद्विभक्त्युत्पत्तौ सत्यामादित्येतत्पदं सिद्धम् ॥

॥ वि० ॥ वृद्धिरादैजिति तत्रैव शक्तिग्रहं संपाद्य वाक्यभेदेन मृजेर्वृद्धिरित्यस्यार्थं बोधयति । ज्योतिष्टोमेन यजेतेत्यादौ तु शक्तिग्राहकशास्त्रान्तराभावादगत्या
विधावेव सामानाधिकरण्यान्नामधेयावगतिःकल्प्यते नतु विद्यमाने शक्तिग्राहके तथा कल्पनमुचितं पदस्यानुवादत्वकल्पनं चेति ॥

२४३ ॥ वि० ॥ यत्तु कार्यकालपक्षे वृद्धिरादैजित्यादेर्यत्र वृद्धिपदं तत्रादैजित्युपतिष्ठते इत्यर्थः । यथाच ज्योतिष्टोमादिपदानां यागविधावेव
सामानाधिकरण्यान्नामधेयत्वावगतिस्तथेहापि मृजेर्वृद्धिरित्यादौ सामानाधिकरण्यान्नामधेयत्वावगतिः । उपस्थापकेन वृद्ध्यादिपदेन उपस्था-
प्यस्य वृत्त्या बोधनात्परं संज्ञासूत्रत्वावगतिरिति । तन्न । कार्यकालं संज्ञापरिभाषं भस्येत्युपस्थितमिदं भवति । यचि भमितीति ष्यङः संप्रसारणमितिसूत्र-
स्थभाष्येण कार्यकालं संज्ञापरिभाषं प्रगृह्यः प्रकृत्येत्युपस्थितमिदं भवति । ईदूदेद्विवचनं प्रगृह्यमितीदूदेदितिसूत्रस्थभाष्येण च विरोधात् । त्वद्रीत्योपस्थि-
तमिदं भवति यचीतीत्येव वक्तव्यं स्यात् । अथ संज्ञेत्यादिप्रकृतसूत्रस्थवार्तिकविरोधश्च । प्रकारान्तरेणात्रत्यतत्प्रत्याख्यानपरभाष्यविरोधश्च । किञ्च । मृजेर्वृद्धिरित्यादि-
सूत्रस्थवृद्ध्यादिपदानां तदुपस्थितिसंपत्त्या चारितार्थ्येन स्वोपस्थापितपदार्थेऽन्वये मानाभावात्तत्रैकपरिभाषानुपस्थित्यापत्तिः । वृद्धिपदेनाविधानात् । मृजेर्वृद्धि-
रित्यादौ इकपदोपस्थापकस्यापि विधेयाकाङ्क्षासत्त्वाद्विधिविषये एव तत्प्रवृत्तेश्च भवत्येवान्वयः । एवञ्च ज्योतिष्टोमवाक्यादैलक्षण्येनात्र नामधेयता दुरुपपादा ।
किञ्चोपस्थाप्यार्थस्य वृत्त्या बोधनात्संज्ञासूत्रत्वं वा इकोगुणेत्यादिवदुपस्थापकत्वात्परिभाषात्वं वेत्यत्र विनिगमकाभावः । वृद्ध्यादिपदैर्वृत्त्या बोधनं च दुरुपपादम् ।
अनुवादेऽपि संज्ञासूत्रोपस्थितिरणोऽप्रगृह्यस्य वृद्धिर्यस्येत्यादिविषये भाष्ये स्पष्टेति दिक् । भाष्ये किं तकार इति । अस्य तादपि परस्तपर इत्यनङ्गीकुर्वत इति
शेषः । सम्बन्धाभावादिति । शेषशेषिभावाऽभावादित्यर्थः । तान्तस्य पदत्वाभावे जश्त्वं न स्यादिति भावः । आनुषङ्गिकम्फलं दर्शयति । ज्ञापकद्वारेणेति ॥

॥ वि॰ ॥ इको गुणवृद्धी । गुणवृद्धिग्रहणस्योत्तरत्र निर्देश्यसमर्पणायावश्यकत्वेऽपि इक्पदस्यैकः स्थान इत्यर्थार्थमावश्यकत्वेऽपि योग-विभागविषयकोऽयं प्रश्नो भाष्ये । इग्ग्रहणमिति । ननु इग्ग्रहणेनाकारादीनां निवृत्तिरशक्या कर्तुमत आह । स्थानित्वस्येति । ननु आकारस्य वृद्ध्युदाहरणादाने गुणांशे च अकारोदाहरणादाने किं बीजमत आह । आकारस्येति । वृद्धिविधौ । सिचि वृद्धिविधौ अयासीदित्यादौ ।

॥ कै॰ ॥ इको गुणवृद्धी । इग्ग्रहणमिति । वक्ष्यमाणज्ञापकवशादाकारादिनिरासादिक एव गुणवृद्धी भवि-ष्यत इति प्रश्नः । आत्संध्यक्षरेति । आकारादीनां स्थानित्वस्य निवृत्त्यर्थमित्यर्थः । आकारस्याङ्गान्त्यस्य वृद्धिवि-

॥ भा॰ ॥ इको गुणवृद्धी । इग्ग्रहणं किमर्थम् । इग्ग्रहणमात्संध्यक्षरव्यञ्जननिवृत्त्यर्थम् । इग्ग्रहणं क्रियते । आकारनिवृत्त्यर्थं संध्यक्षरनिवृत्त्यर्थं व्यञ्जननिवृत्त्यर्थं च । आकारनिवृत्त्यर्थं तावत् । याता वाता । आकारस्य गुणः प्राप्नोति । इग्ग्रहणान्न भवति । संध्यक्षरनिवृत्त्यर्थम् । ग्लायति म्लायति । संध्यक्षरस्य गुणः प्राप्नोति । इग्ग्रहणान्न भवति । व्यञ्जननिवृत्त्यर्थम् ।

॥ कै॰ ॥ धावभावाद्विशेषाभावाच्चाकारस्यातो लोपविधानादाकारस्य गुणप्रसङ्गमुदाहरति । यातेति । ग्लाय-तीति । एचां द्विमात्रत्वाविशेषात्प्रयत्नाधिक्याभावादैकारोपदेशेऽप्येकारो गुणः स्यात् ॥

॥ वि॰ ॥ अपवादत्वात्सगिड्भ्यां सा बाध्यते इति भावः । इतरवृद्धिविधौ संभवेऽप्याह । विशेषाभावादिति । अकारस्येति । णयल्लोपाविति पूर्वविप्रतिषेधेनातो लोपस्य वृद्धिगुणबाधकत्वादिति भावः । पुचीयतीत्यादौ त्वविशेष इति बोध्यम् । आकारस्य गुणः । सार्वधातुकार्द्धधातुकयोरित्यनेन । नन्वैकारोच्चारणसामर्थ्याद् गुणो नेत्यत आह । एचामिति । सर्वेषां विवृत एव प्रयत्न इत्यभिमानः ॥



॥ वि॰ ॥ आर्द्धधातुकोपदेश इति । गुणनिष्पन्नस्य तदुत्तरकालिक इति भावः । प्रतिपत्तिलाघवम् । प्रक्रियालाघवम । तेभ्योऽपि विव-

॥ कै॰ ॥ उब्भितेति । भकारस्यौत्वादोकारो गुणः स्यात् । पररूपेणेति । अतो लोपस्तु न

॥ भा॰ ॥ उब्भिता उब्भितुम् उब्भितव्यम् । व्यञ्जनस्य गुणः प्राप्नोति । इग्ग्रहणान्न भवति । आकारनिवृत्त्यर्थेन तावन्नार्थः । आचार्यप्रवृत्तिर्ज्ञापयति नाकारस्य गुणो भवतीति । यदयमा-तोऽनुपसर्गे क इति ककारमनुबन्धङ्करोति । कथं कृत्वा ज्ञापकम् । कित्करण एतत् प्रयोज-नम् । क्ङितीत्याकारलोपो यथा स्यात् । यदि चाकारस्य गुणः स्यात् कित्करणमनर्थकं स्यात् । गुणे कृते द्वयोरकारयोः पररूपेण सिद्धं रूपं स्याद् गोदः कम्बलद इति । पश्यति त्वाचार्यो नाकारस्य गुणो भवतीति ततः ककारमनुबन्धङ्करोति । सन्ध्यक्षरनिवृत्त्यर्थेनापि नार्थः । उपदेशसामर्थ्यात्सन्ध्यक्षरस्य गुणो न भविष्यति । व्यञ्जननिवृत्त्यर्थेनापि नार्थः । आचार्य-प्रवृत्तिर्ज्ञापयति न व्यञ्जनस्य गुणो भवतीति ॥

॥ कै॰ ॥ भवति । आर्द्धधातुकोपदेशे यदकारान्तं तस्य लोपविधानात् । उपदेशसामर्थ्यादिति । प्रतिपत्तिलाघवार्थमेकारमेवोपदिशेदित्यर्थः ॥

॥ वि॰ ॥ तावेङ्गौ ताभ्यामैचौ तथैवचेतिपाणिनीयशिक्षोक्तेः प्रयत्नलाघवमपि बोध्यम् ॥

॥ वि० ॥ इग्ग्रहणेति । ततश्च मिदेरिति नावयवषष्ठी किन्तु स्थानषष्ठीति सर्वादेशो गुणः स्यादित्यर्थः । भाष्ये नैतानि सन्ति ज्ञापका-
नीति । छत्त्रिन्यायेन । ननु नैतानि

॥ कै० ॥ यदयञ्जनेरिति । यद्येवं मिदेर्गुणो विधीयमानो ज्ञापकेन व्यञ्जनस्य निरस्तत्वादिग्ग्रहणा-
भावात्सर्वादेशः प्राप्नोति । मिद इर्मिदिरित्याश्रयणा-

॥ भा० ॥ यदयञ्जनेडं शास्ति । कथं कृत्वा ज्ञापकम् । ङित्करण एतत्प्रयोजनम् ।
ङितीति ठिलोपो यथा स्यात् । यदि च व्यञ्जनस्य गुणः स्याद् ङित्करणमनर्थकं स्यात् ।
गुणे कृते चयाणामकाराणां पररूपेण सिद्धं रूपं स्यादुपसरजो मन्दुरज इति । पश्यति
त्वाचार्यो न व्यञ्जनस्य गुणो भवतीति ततो जनेडं शास्ति । नैतानि सन्ति ज्ञापकानि ।
यत्तावदुच्यते । कित्करणं ज्ञापकमाकारस्य गुणो न भवतीति । उत्तरार्थमेतत् स्यात्
तुन्दशोकयोः परिमृजापनुदोरिति । यत्तर्हि गापोष्टगित्यनन्यार्थं ककारमनुबन्धं करोति ॥

॥ कै० ॥ दिकारस्यैव भविष्यतीत्यदोषः । यत्तावदिति । विशेषप्रतिपादनाय सकलज्ञापकाक्षेपः ॥

॥ वि० ॥ सन्ति ज्ञापकानीति प्रतिज्ञायाग्रे ज्ञापकसमर्थनमयुक्तमत आह । विशेषेति । टकः कित्त्वं ज्ञापकं यं विधिं प्रतीत्यादिविशेषप्रतिपादनायेत्यर्थः ॥



॥ वि० ॥ शङ्कते । केचिदिति । यदप्युच्यते इति समुच्चयार्थापिशब्देनेति शेषः । आर्थेन । सामर्थ्यप्राप्तेन । भङ्गस्य भङ्गसदृश इति
भावः । ग्लायत इत्यादीति । आदिना जग्लावित्यादि । नन्वेवमात्त्वमपि बाध्येत नहि तस्य ऐकारो निमित्तं ग्लै इति पाठेऽपि सुकरत्वादत
आह । न ध्याख्येति । ध्या इति कृतात्त्वनिर्देशेनैकारोच्चारणस्यात्त्वाबाधकत्वज्ञापनादिति भावः ।

॥ कै० ॥ केचिदाहुः । टकः कित्त्वेन ज्ञापकेनाकारनिवृत्त्यर्थत्वे निराकृते यदप्युच्यते इति ज्ञापकाक्षेपो ग्रन्थ-
च्छायां न पुष्णाति तस्मादार्थेन क्रमेण सर्वज्ञापकभङ्गोपन्यासं कृत्वा यथासंभवं ज्ञापकसमर्थनं कर्त्तव्यम् । आयाद-
योऽपीति । ऐकारोच्चारणस्य सामर्थ्यादविकृतरूपश्रवणार्थत्वादिति भावः ।

॥ भा० ॥ यदप्युच्यते । उपदेशसामर्थ्यात्संध्यक्षरस्य गुणो न भविष्यतीति । यदि यद्यत्
संध्यक्षरस्य प्राप्नोति तत्तदुपदेशसामर्थ्याद्बाध्यते आयादयोऽपि तर्हि न प्राप्नुवन्ति । नैष
दोषः । यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते यस्य तु विधेर्निमित्तमेव नासौ बाध्यते ।
गुणं च प्रत्युपदेशोऽनर्थकः । आयादीनां पुनर्निमित्तमेव ।

॥ कै० ॥ यं विधिमिति । आयादेशस्य ह्यैकार एव निमित्तमित्यायादेशो न बाध्यते । नहि ग्लाय इत्येवं पाठः
शक्यः कर्तुम् । त्वया ग्लायत इत्यादिरूपासिद्धिप्रसङ्गात् । न ध्याख्येति च निपातनादात्त्वं गुणवन्न बाधिष्यते ।

॥ वि० ॥ न चास्य सौत्वम् । बाधकत्वमङ्गीकृत्य सौत्वकल्पनापेक्षयाऽबाधकत्वज्ञापनस्य लघुत्वादित्याहुः । नच रैशब्दादिभ्य आचारक्विपि रायतीत्यादौ
संध्यक्षरस्य गुणः स्यादिति वाच्यम् । एजन्तेभ्य आचारक्विभाव एतद्भाष्यप्रामाण्यादित्यदोषात् । गुणवदिति । वैधर्म्ये दृष्टान्तः ।

॥ वि० ॥ ननु पररूपेऽपि गुणानामभेदकतया कदाचित्सानुनासिकोऽपि स्यादत आह । रूपग्रहणस्येति । परे तु अत्र पररूपशब्देन पर-शब्देन वा यदुपस्थितं रूपं प्रयोगस्थं तस्य ग्रहणम् । स्थाने जायमानः किंगुणक इत्याकाङ्क्षायामन्तरतमपरिभाषयोभयगणकः ।

॥ कै० ॥ पररूपेणेति । रूपग्रहणस्येदमेव प्रयोजनं यादृक् परस्य रूपं तादृगेव यथा स्यादिति ।

॥ भा० ॥ यदप्युच्यते । जनेर्डवचनं ज्ञापकं न व्यञ्जनस्य गुणो भवतीति ।
सिद्धे विधिरारभ्यमाणो ज्ञापकार्थो भवति नच जनेर्गुणेन सिद्ध्यति । कुतो ह्येतत् ।
जनेर्गुण उच्यमानोऽकारो भवति न पुनरेकारो वा स्यादोकारो वेति । आन्तर्यतोऽर्द्ध-
मात्रिकस्य व्यञ्जनस्य मात्रिकोऽकारो भवति । एवमप्यनुनासिकः प्राप्नोति । पर-
रूपेण शुद्धो भविष्यति ॥

॥ वि० ॥ प्रकृते चोभयान्तरतमासंभवात् परशब्देन यद्गुणकस्योपस्थितिस्तद्गुणक एव भविष्यतीति भाष्याशयाद्रूपग्रहणस्येत्यादि चिन्त्यम् । गुणानां शब्दत्वादि-वत् शब्दरूपत्वाभावेन व्यावृत्त्यसंभवश्च रूपग्रहणेनेत्याहुः ॥



॥ वि० ॥ ननु गमेरप्ययं ड इति भाष्यमनुपपन्नं गमो गमश्चान्तात्यन्ताध्वदूरपारेति सूत्रे पठितेनान्यत्रापि दृश्यत इति वार्त्तिकेन नगोऽग इत्यादौ डस्य सत्त्वादत आह । सप्तम्यामिति । सप्तम्यां जनेरित्युत्तरं पठितेऽन्येष्वपि दृश्यत इति सूत्रे दृशिग्रहणस्य सर्वोपाधिव्यभिचारार्थत्वेन तेनैव प्रकृत्यन्तरादपि डे सिद्धेऽन्तात्यन्तेतिप्रकरणस्थं वार्त्तिकं न कार्यमिति भावः । भाष्ये आन्तर्यत ओकार इति । स्थानत आन्तर्यादिति भावः । ननु तनोतेर्डउः तेनैव प्रकृत्यन्तरादपि डे सिद्धे... 

॥ कै० ॥ गमेरप्ययमिति । सप्तम्यां जनेर्ड इत्यतोऽन्येष्वपि दृश्यत इत्यत्र डोऽनुवर्त्तमानो

॥ भा० ॥ एवन्तर्हि गमेरप्ययं डो वक्तव्यः । गमेश्च गुण उच्यमान आ-
न्तर्यत ओकारः प्राप्नोति । तस्मादिग्ग्रहणं कर्त्तव्यम् । यदीग्ग्रहणं क्रियते । द्यौः
पन्थाः स इममिति एतेऽपीकः प्राप्नुवन्ति ॥

॥ कै० ॥ गमेरपि विधीयत इत्यज्ज्ञापकं डित्त्वमिति व्यञ्जननिवृत्त्यर्थं सूत्रं स्थितम् ॥

॥ वि० ॥ स्वाणि व्यञ्जने न प्रवर्त्तन्त इति वाच्यम् । ईशादौ शकारे तथाप्यतिप्रसङ्गात् । सूत्रमते स्थानप्रयत्नैक्यादिति भाष्याशयः । स्थानेऽन्तरतमे इति सप्त-म्यन्तपाठस्य भाष्ये प्रत्याख्यानेनास्या युक्तेरसंभवदुक्तिकत्वाच्च । भाष्ये एतेऽपीति । औकारादयः । एपूदाहरणेष्विकः प्राप्नुवन्तीत्यन्वयः । स इत्यत्र तु न स्यादेवेति भावः । त्यदादीनाम इत्यत्र त्यदादीनामिति तु तदोः सः सावित्युत्तरार्थं स्यात् संज्ञोपसर्जनव्यावृत्त्यर्थ च स्यादिति बोध्यम् ॥

२५०

॥ वि॰ ॥ आश्रितेति । आश्रितो गुणवृद्धिशब्दव्यापार उच्चारणं येषु आदेशेषु विधीयमानेषु तदर्थमित्यर्थः । तेनेति । इत्येवमित्यध्याहृत्य स्वरूपपदार्थकेनान्यतरेण विशेषणादीष्टशार्थलाभ इति भावः । अत एव संबन्धानुवृत्तिप्रदर्शनपरभाष्ये गुणवृद्धी इत्युच्चार्य गुणवृद्धिग्रह-

॥ कै॰ ॥ संज्ञयेति । गुणवृद्ध्यनुवृत्त्यैव गुणवृद्ध्योरिकः सिद्धत्वाद्द्वितीयं गुणवृद्धिग्रहणमाश्रितगुणवृद्धिशब्दव्यापारार्थं विज्ञायते । तेन गुण इत्येवं यो गुणो

॥ भा॰ ॥ संज्ञया विधाने नियमः । संज्ञया ये विधीयन्ते तेषु नियमः । किं वक्तव्यमेतत् । नहि । कथमनुच्यमानं गंस्यते । गुणवृद्धिग्रहणसामर्थ्यात् । कथं पुनरन्तरेण गुणवृद्धिग्रहणमिको गुणवृद्धी स्याताम् । प्रकृतं गुणवृद्धिग्रहणमनुवर्त्तते । क्व प्रकृतम् । वृद्धिरादैजदेङ् गुण इति ॥

॥ कै॰ ॥ वृद्धिरित्येवं या वृद्धिरिति विज्ञायते । अथवा गुणवृद्धिमात्रग्रहणे गुणवृद्ध्यधिकारादेव सिद्धे पुनर्गुणवृद्धिग्रहणं गुणवृद्धिशब्दव्यापाराश्रयणार्थं विज्ञायते ॥

॥ वि॰ ॥ णमनुवर्त्तत इत्युक्तम् । उपक्रमस्थगुणवृद्धिग्रहणसामर्थ्यादित्येतद्भाष्यस्वारस्यादाह । अथवेति । पुनरुपादानसामर्थ्यादित्यर्थः गुणवृद्धिग्रहणं गुणवृद्धिशब्दविहितगुणवृद्धिलाक्षणिकमिति भावः ॥

२५१

॥ वि॰ ॥ यादृश इति । स्वरूपपदार्थक इत्यर्थः । नन्वेवं सति उत्तरत्र निषेध्यसमर्पणार्थं गुणवृद्धिग्रहणस्य चारितार्थ्येन सामर्थ्यं दुरुपपादम् । अनुवर्त्तमानस्य स्वरूपपरत्वेन निषेध्यसमर्पकत्वाभावादिति चेन्न । आगन्तूनामन्ते निवेश इति न्यायेनादेङ्सूत्रे गुणपदोत्तरं वृद्धिपदोपस्थित्या तत्साहचर्येण तत्र सूत्रे स्वरूपपरत्वं तस्य । उत्तरत्र तु योग्यतयाऽर्थपरत्वम् । इक इति सूत्रेऽपि नधात्वित्यादिसाहचर्येणार्थपरत्वम् । इक इति षष्ठीनिर्देशात्रे-तिभाष्याशयात् । नपुंसकस्येति । घञजपः पुंसीति तु प्रायिकमिति भावः । यत्तु भावविषयमेवैतदिति । तन्न । मांसं भचोऽस्येति कर्मण्यणितिसूत्रस्थभा-

॥ कै॰ ॥ अदेङ्गमिति । पूर्वसूत्रे संज्ञासंज्ञिसंबन्धायोपात्तो यादृशो वृद्धिशब्दस्तादृश उत्तरत्रानुवर्त्तत इत्यदेङ्गमित्युक्तम् । तेनैतन्न चोदनीयं वृद्धिशब्दोऽनुवर्त्तमान आदैचः प्रत्याययतीत्यादैचां गुणसंज्ञा प्राप्नोतीति । संबन्धमिति । संबध्यत इति संबन्धम् ।

॥ भा॰ ॥ यदि तदनुवर्त्तते अदेङ्गुणो वृद्धिश्चेत्यदेङां वृद्धिसंज्ञा प्राप्नोति । संबन्धमनुवर्त्तिष्यते । वृद्धिरादैजदेङ् गुणः । वृद्धिरादैच् । तत इको गुणवृद्धी इति । गुणवृद्धिग्रहणमनुवर्त्तते । आदैजदेङ्ग्रहणं निवृत्तम् ।

॥ कै॰ ॥ कर्मणि घञ् । नपुंसकस्याभिधेयत्वान्नपुंसकनिर्देशः । आदैच्ग्रहणसंबद्धं वृद्धिग्रहणमदेङ गुण इत्यत्रानुवर्त्तते तेनादेङ्भिर्न संबध्यते । इह त्वनुवृत्तमादैचो जहाति कान्तारोत्तरणाय सार्थस्येव त्यागोपादाने ।

॥ वि॰ ॥ प्प्रयोगविरोधात । तेनेति । अचादैजित्यनुवृत्तिर्न स्वकार्याय किं तु वृद्धिशब्दस्यान्यसंबन्धनिवृत्तये इति भावः । भाष्ये वृद्धिरादैजदेङ् गुण इति सूत्रकर्मनिर्देशः । पुनर्वृद्धिरादैजित्यभिधानमदेङित्यत्र संबन्धानुवृत्तिं दर्शयितुम । इको गुणवृद्धी इत्यक्तिस्तु यथान्यासाभिप्रायेण । आदैजदेङ्ग्रहणमिति । स्वरितत्वाप्रतिज्ञानेनादेङ्ग्रहणवदादैजित्यपि निवृत्तमित्यर्थः । क्वचित्तु आदैज्ग्रहणं निवृत्तमित्येव पाठः ।

२५२

॥ वि० ॥ ननु मण्डूकस्य चेतनत्वात् तथा गतिसंभवेऽपि शब्दस्य कथं सेत्यत आह । वृद्धिशब्दस्येति । स्वरितत्वासङ्गादनुवर्त्तमानस्यापीति शेषः । इहेति । इक इति सूत्रे इत्यर्थः । अदेङित्यत्र तु न संबन्धः । गुणसंज्ञासंबन्धेनादेङां निराकाङ्क्षत्वादिति बोध्यम् । नन्वेकयोगत्वं नैकार्थत्वं भिन्नविषयसंज्ञाद्वयविधानात् । नापि निरन्तरपाठः । तस्येदानीमपि सत्त्वेन करिष्यत इत्यस्यासङ्गतेः । वेरणादित्यादौ एकयोगेऽप्यनुवृत्तिदर्शनाच्चात आह । एक इति । प्रतिपत्तिकाले । लक्ष्यसंस्कारकवाक्योपप्लवकाले । एककालेति । आदैज् वृद्धिसंज्ञोऽदेङ् गुणसंज्ञो भवतीति संग्राहकवाक्यार्थबोध एककाल इति भावः । समूहालम्बनात्मक एकवाक्यार्थबोध इति तात्पर्यम् । यद्वादैज् वृद्धिसंज्ञोऽदेङ् गुणसंज्ञश्च भवत इत्येको वाक्यार्थबोध इति तात्पर्यम् ।

॥ कै० ॥ अथवेति । वृद्धिशब्दस्येहाकाङ्क्षावशादुपस्थानं नत्वदेङ् गुण इत्यत्र । अथवैकयोग इति । एको भवतिर-
ध्याह्रियते वृद्धिरादैजदेङ् गुणो भवतीत्येवमेकवाक्यत्वं संपद्यते । यद्यपि प्रतिपत्तिकाले

॥ भा० ॥ अथवा मण्डूकगतयोऽधिकाराः । यथा मण्डूका उत्प्लुत्योत्प्लुत्य गच्छन्ति तद्वद-
धिकाराः । अथवैकयोगः करिष्यते । वृद्धिरादैजदेङ् गुणः । तत इको गुणवृद्धी इति । नचै-
कयोगेऽनुवृत्तिर्भवति ॥

॥ कै० ॥ भवतिक्रिया भिद्यते तथाप्येककाला प्रतिपत्तिरित्यादैच्संबद्धा वृद्धिसंज्ञा अदेङ्संबद्धा गुणसंज्ञेति
नास्ति वृद्धिसंज्ञाया अदेङ्भिः संबन्धः ॥

॥ वि० ॥ वेरणावित्यादौ अवान्तरवाक्यार्थभेदान्न दोषः । केचित्तु एककाला प्रतिपत्तिर्भवतु तावतापि स्वरितत्वगुणप्राप्तवृद्धिपदसंबन्धाभावः कुत इति चि-
न्त्यम् । नच स्वविषयवाक्यजबोधानन्तरं निराकाङ्क्षतयान्यत्रान्वयाप्राप्तौ हि तत्प्राप्तये स्वरितासङ्गो न त्वत्रैकयोग इति वाच्यम् । व्यवधाननिबन्धनायामनेक-
संबन्धाप्राप्तावनेकसम्बन्धाय स्वरितत्वासङ्ग इत्यस्यापि वक्तुं शक्यत्वात् । तस्मादयमत्र भाष्यार्थस्तदधीते तद्वेदेत्यत्र द्विस्तद्ग्रहणादेकयोगेऽनुवृत्त्यभाव इति । स्पष्टं
चेदं तदस्मिन्नस्तीतिसूत्रे भाष्ये । एकयोगत्वं च द्वयोः संहितापाठ एव । वस्तुत एकयोगेऽप्यनुवृत्तिर्भवति । तदस्यास्त्यस्मिन्निति सूत्रे द्विस्तद्ग्रहणाभावात् ।
तदधीत इति सूत्रे तु बालानां सुखबोधाय द्विस्तद्ग्रहणमित्युक्तं तन्नैवातोऽत्र भाष्येऽयं समाधिरेकदेशिन इत्याहुः ॥

२५३

॥ वि० ॥ ननु वृद्धिगुणसंज्ञयोः सामान्यविशेषत्वाभावात् कथमुत्सर्गापवादसाम्यमत आह । यथेति । आत इत्युपादानादेव तद्विषये कस्यासंदिग्धत्वम् । अत एव तदतिरिक्तावकाशविरहः । तदुद्देशेनैव प्रवृत्तिरूपं तात्पर्यं च । ननु गुणसंज्ञया वृद्धिसंज्ञावत् कृत्यादिसंज्ञयापि

॥ कै० ॥ अथवान्यवचनादिति । यथा कप्रत्ययेनाण् बाध्यते । असंदिग्धत्वादनवकाशत्वात्तात्पर्याच्च
कविधेः । अणस्तु विपर्ययात् । एवमदेङ् गुण इत्यत्र वृद्धिग्रहणमनुवृत्तं सत् संदिह्यते किमुत्तरार्थं वेहा-

॥ भा० ॥ अथवान्यवचनाच्चकाराकरणात्प्रकृतापवादो विज्ञायते । यथोत्सर्गेण प्रसक्त-
स्यापवादो बाधको भवति । अन्यस्याः संज्ञाया वचनाच्चकारस्य चानुकर्षणार्थस्याकरणात्प्र-
कृताया वृद्धिसंज्ञाया गुणसंज्ञा बाधिका भविष्यति । यथोत्सर्गेण प्रसक्तस्यापवादो बाधकः ॥

॥ कै० ॥ नुवृत्तिरथेहार्थापीति । सावकाशाच वृद्धिसंज्ञा तात्पर्यं च नास्ति । गुणसंज्ञा तु तात्प-
र्याद्संदेहान्निरवकाशत्वाच्च वृद्धिसंज्ञासंबन्धमदेङां बाधते । प्रत्ययसंज्ञा तु संज्ञिविशेषेणासंयुक्ताधिका-
रेणैव विधीयमाना कृत्यादिसंज्ञाविषयेऽपि प्रवर्त्तते ॥

॥ वि० ॥ प्रत्ययसंज्ञा बाध्येतेत्यत आह । प्रत्ययेति । न तथाद्याकाङ्क्षया प्रत्ययसंज्ञायाः संबन्धो येन सन्निहितकृत्यादिसंज्ञया निराकाङ्क्षत्वान्न प्रत्ययसंज्ञया संबन्धः स्यात् । किंतु संज्ञाकाङ्क्षया । सा हि स्वस्य बहुविषयत्वलाभाय कतिपयानन्तरविषयलाभेऽपि पुनः पुनर्विषयान्तरमाकाङ्क्षते । बहुविषयत्वं चास्याः संज्ञिविशेषासंबन्धेनाधिकारकरणादवसीयत इति भावः । प्रकृते तु न तथेति बोध्यम् ॥

२५४

॥ वि० ॥ खञोऽप्राप्ताविति । यता मुक्ते इति शेषः । मण्डूकगतयोऽधिकारा इत्यस्यैव स्वरितलिङ्गेनानुवर्त्तमानं यत्राकाङ्क्षा तत्रैव संबध्यते इति विशेषमभिधातुमयं पक्षः । स च संबन्धाय तत्र विभाषाग्रहणरूपं यत्नविशेषं कुर्वतः सूत्रकृतोऽप्यभिमतः । अस्य विशेषस्य प्रागकथनं तु एतद्विशेषद्वारा पुनरुक्तत्वपरामर्शेन तत्रैव परिहारे मुख्यताबोधनायेति बोध्यम् । इह त्विति । अकर्त्तव्यत्वविशिष्टं पुनर्गुणवृद्धिग्रहणं यत्न इत्यर्थः ।

॥ कै० ॥ अथवेति । विभाषा तिलमाषोमेत्यत्र हि उमाभङ्गयोरधान्यत्वात् खञोऽप्राप्तौ चोदितायां खञ्ग्रहणस्यानुवृत्तिराश्रिता अनुवर्तमानश्च खञ् यत्नाभावात् व्रीहिशाल्यादिभिर्न संबध्यते अपितु विभाषाश्रुत्या यत्नेन तिलादिभिरेव संबध्यते तथेहापि वृद्धिग्रहणमदेङ्गुण इत्यत्रानुवर्तमानमपि यत्नाभावादे-

॥ भा० ॥ अथवा वक्ष्यत्येतत् । अनुवर्त्तन्ते च नाम विधयो नचानुवर्तनादेव भवन्ति किं तर्हि यत्नाद्भवन्तीति । अथवा । उभयं निवृत्तं तदपेक्षिष्यामहे ॥

॥ कै० ॥ ङ्भिर्न संबध्यते । इह तु पुनर्गुणवृद्धिग्रहणं यत्नो भवति । अथवेति । अपेक्षालक्षणं लौकिकमधिकारमाश्रयति । समुदायस्य चापेक्षायां नास्त्येतदनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति गुणस्यैवापेक्षा युक्तेति । समुदायस्य भेदाभावात् ॥

॥ वि० ॥ अनुवृत्तौ हि तदकर्तव्यं भवतीत्याहुः । भाष्ये उभयं निवृत्तमिति । स्वरितलिङ्गानासङ्गेनाननुवृत्तिरेव निवृत्तिरित्यर्थः । अपेक्षेति । इक इत्येतावन्मात्रस्येतराकाङ्क्षत्वात् समुदायापेक्षायां च लक्ष्यानुसार एव बीजम् । अनन्तरस्येतिन्यायेन गुणस्यैवापेक्षा युक्तेत्येतन्मात्रस्येत्यन्वयः । समुदायत्वं च युगपद्बुद्धौ संनिधानात् क्रमेणासंनिधानाच्चेतिबोध्यम् ॥

२५५

॥ वि० ॥ षष्ठीति । स्थानषष्ठीत्यर्थः । षष्ठी स्थान इति परिभाषया तत्त्वनिर्णयः । अस्य च सूत्रस्य गुणवृद्धिशब्दाभ्यां विधीयमानौ वृद्धिगुणाविकः स्थाने इत्यर्थेऽवान्तरवाक्यार्थबोधोत्तरमेव प्रवृत्तेरुभयोरपि समकालप्रवृत्तिकता बोध्या । गुणश्रुत्येत्यस्य गुणशब्देन विधेयत्वबोधिकयेत्यर्थः । तत्र यद्वीति । बुद्धेः क्रमिकत्वाद्विशेषणविशेष्यभावे कामचाराच्चेति भावः । सोऽस्येति । इगन्तस्येतिषष्ठ्यास्तेनान्त्योऽल्यनुसंहारादेतद्विशेषणत्वमेत-

॥ कै० ॥ किं पुनरिति । उभयथा संभवाद्दोषदर्शनाच्च प्रश्नः । तत्राङ्गस्य गुण इति षष्ठीनिर्देशाल्लिङ्गादलोऽन्त्यस्येत्युपतिष्ठते गुणश्रुत्या त्विक इति । तत्र यदि पूर्वमिकाङ्गं विशेष्यते इगन्तस्याङ्गस्य गुणो भव-

॥ भा० ॥ किं पुनरयमलोऽन्त्यशेषः । आहोस्विदलोऽन्त्यापवादः । कथं चायं तच्छेषः स्यात् कथं वा तदपवादः ॥

॥ कै० ॥ तीति सच भवन्नलोऽन्त्यस्य भवति तदा सोऽस्य शेषो भवति । यदा त्वङ्गस्येति पूर्वमेवान्त्यमलं षष्ठी नीयते अङ्गान्त्यस्य गुण इति पश्चादिकान्त्योऽल् विशेष्यते तदा तस्यायं विशेषणत्वाच्छेषो भवति ॥

॥ वि० ॥ त्वपरिच्छेदकत्वं तस्येति भावः । तदा तस्यायं विशेषणत्वादिति । तच्छेषशब्दे तन्त्रेण बहुव्रीहिषष्ठीतत्पुरुषाविति भावः । भाष्ये इको गुणवृद्धीति पूर्वपरान्वयि तेनैतद्द्वयलाभ इति भावः । परिच्छेद्यपरिच्छेदकभावकृत एव च शेषशेषित्वव्यवहार इति बोध्यम् ॥

॥ वि० ॥ अथ त्विति । अत्रान्तरवाक्यार्थबोधकालेऽनिर्णीतार्थकत्वेन स्थानषष्ठीत्वसंभावनया तत्प्रवृत्तावपि पश्चादिक इत्यस्योपस्थितौ मिदेरित्यादौ योग्यत्वेन तत्साहचर्येणाचान्त्यस्याप्यवयवषष्ठीत्वनिर्णये तद्संबन्ध इति भावः । बाधायोगादिति । आत्यन्तिकबाधायोगादित्यर्थः ।

॥ कै० ॥ अथ त्वङ्गस्येति गुणवृद्धिविधौ न स्थानषष्ठी किं तर्ह्यंगपेक्षयाऽवयवषष्ठी तदा स्थानषष्ठ्यभावाद-लोऽन्त्यस्येत्येतस्यानुपस्थानमिति तदपवादपक्षो भवति । अप्राप्त्यनुमानमेव हि बाधः । वचनेन प्राप्तस्य बाधा-योगात् । ततश्चाङ्गावयवस्य यत्र तत्र स्थितस्येको गुणवृद्धी इत्यर्थः संपद्यते । समुच्चयस्त्वसंभवान्नोपन्यस्तः । नहि युगपद्द्वौ षष्ठ्यर्थौ संभवतः स्थानेयोगोऽवयवयोगश्चेति । विकल्पोऽपि न भवत्येकत्वात् षष्ठ्यर्थस्य । तस्मा-त्पक्षे एतदपवादपक्षावेवाशङ्कितौ ॥

॥ वि० ॥ पाक्षिकस्तु बाधः षोडशीग्रहणादौ भवत्येवेति बोध्यम् । समुच्चय इति । मिदेरन्त्यस्येकश्चेत्येवमाकारः । नहीति । प्रत्ययं शब्दनिवेशेनैकस्य नानेकाभिधायकत्वं तन्त्रे आवृत्तौ च न मानमिति भावः ॥



॥ वि० ॥ अनेकयोगेति । एवञ्चैकं वाक्यमिति भाष्यमयुक्तमिति भावः । उत्तरमेकस्मिन्नित्यादि । अङ्गाङ्गिभावश्च न गुणगुणिभाव इत्याह । विशेषणेति । इकः स्थानित्वादिति । सा च नालोऽन्त्यसूत्रप्रवृत्तौ निमित्तम् । अल्समुदायोत्तरस्थानषष्ठीत्वाभावात् । अङ्गस्येति च न स्थानषष्ठीति भावः । तद्विशेषणत्वादिति । अवयवित्वेन विशेषणत्वादित्यर्थः ।

॥ कै० ॥ यद्येकमिति । अनेकयोगव्यवहितयोरप्येकस्मिन् कार्यप्रदेशे स्वस्वनिमित्तसन्निधापितयोरङ्गाङ्गिभा-वाद्विशेषणविशेष्यभावादेकवाक्यतोपपत्तिः । अथ नानेति । अङ्गस्येतीगपेक्षयावयवषष्ठ्यामिकः स्थानित्वात्तद्वि-

॥ भा० ॥ यद्येकं वाक्यन्तच्चेदञ्च । अलोऽन्त्यस्य विधयो भवन्ति इको गुणवृद्धी अलोऽन्त्यस्येति । ततोऽयन्तच्छेषः । अथ नाना वाक्यम् । अलोऽन्त्यस्य विधयो भवन्ति इको गुणवृद्धी अन्त्यस्य चान-न्त्यस्य चेति । ततोऽयन्तदपवादः । कश्चात्र विशेषः । वृद्धिगुणावलोऽन्त्यस्येतिचेन्मिदिमृजिपुगन्तलघूपध-र्च्छिदृशिक्षिप्रक्षुद्रेष्विग्ग्रहणम् । वृद्धिगुणावलोऽन्त्यस्येतिचेद् मिदिमृजिपुगन्तलघूपधर्च्छिदृशिक्षिप्रक्षुद्रे-ष्विग्ग्रहणं कर्तव्यम् । मिदेर्गुणः । इक इति वक्तव्यम् । अनन्त्यत्वाद्धि न प्राप्नोति । मृजेर्वृद्धिः । इक इति वक्तव्यम् । अनन्त्यत्वाद्धि न प्राप्नोति । पुगन्तलघूपधस्य गुणः । इक इति वक्तव्यम् । अनन्त्य-त्वाद्धि न प्राप्नोति । ऋच्छेर्लिटि गुणः । इक इति वक्तव्यम् । अनन्त्यत्वाद्धि न प्राप्नोति । ऋदृशोऽङि गुणः । इक इति वक्तव्यम् । अनन्त्यत्वाद्धि न प्राप्नोति । क्षिप्रक्षुद्रयोर्गुणः । इक इति वक्तव्यम् । अनन्त्यत्वाद्धि न प्राप्नोति ।

॥ कै० ॥ शेषत्वादङ्गस्यानुपस्थानमलोऽन्त्यस्येत्येतस्य । ततश्चानयोर्भिन्नविषयत्वान्नानावाक्यत्वम् । वृद्धिगुणा-विति । मिदादीनामनिगन्तत्वादलोऽन्त्यस्येत्येतदङ्गमिग्ग्रहणञ्च सन्निपततीति तेषु प्रदेशेष्विग्ग्रहणङ्कर्त्तव्यम् ॥

॥ वि० ॥ नानावाक्यत्वमिति । अत्र पक्षे पुगन्तेत्यादि नियमार्थमिति बोध्यम् । मिदादीनामिति । गुणादिविधौ परिभाषाद्वयस्य परस्परसम्बन्धाप-रित्यागेनोपस्थानन्तच्छेषत्वं तत्रैकस्या असम्भवे द्वितीयापि न प्रवर्त्तते इति भावः । भाष्ये अनन्त्यत्वादिति । तच्छेषपक्षेऽनन्त्यत्वादिको गुणो न प्राप्नोतीत्यर्थः ।

॥ वि॰ ॥ अङ्गस्येति च स्थानषष्ठीति । अङ्गस्य स्थाने गुणो भवति सच यत्रान्त्य इक् तत्रान्त्यस्येक इत्यर्थ इत्यभिमानः । तदाह । भेदेनेति । शास्त्रस्य बहुविषयत्वायेत्यर्थः । तत्रेगन्तेष्वेवेति । तच्छेषत्वादिति भावः । अन्यत्र । अनिगन्तविषये गुणशास्त्रे । अन्त्यमल-

॥ कै॰ ॥ दोषान्तरमप्याह । सर्वादेशप्रसङ्गश्चेति । अङ्गस्येत्येतद्भेदेन सर्वाङ्गेषु व्याप्रियते । तत्रेगन्तेष्वेवालोऽन्त्य-स्येति विधिरन्यत्र तु षष्ठ्या अन्त्येऽल्यनुपसंहाराद्याता वातेति सर्वादेशो गुणः प्राप्नोति । यथैव हीति । अङ्गस्ये-

॥ भा॰ ॥ सर्वादेशप्रसङ्गश्चानिगन्तस्य । सर्वादेशश्च गुणोऽनिगन्तस्य प्राप्नोति । याता वाता । किङ्कारणम् । अलोऽन्त्यस्येति षष्ठी चैव ह्यन्त्यमिकमुपसंक्रान्ता अङ्गस्येति च स्थानषष्ठी तद्यदिदानी-मनिगन्तमङ्गं तस्य गुणः सर्वादेशः प्राप्नोति । नैष दोषः । यथैव ह्यलोऽन्त्यस्येति षष्ठी अन्त्यमिकमुपसं-क्रान्ता एवमङ्गस्येत्यपि स्थानषष्ठी तद्यदिदानीमनिगन्तमङ्गं तत्र षष्ठ्येव नास्ति कुतो गुणः कुतः सर्वा-देशः । एवन्तर्हि नायं दोषसमुच्चयः । पूर्वापेक्षोऽयं दोषः । ह्यर्थे चायञ्चः पठितः । मिदिक्स्जि-पुगन्तलघूपधर्च्छिदृशिक्षिप्रक्षुद्रेष्विग्ग्रहणं सर्वादेशप्रसङ्गो ह्यनिगन्तस्येति । मिदेर्गुणः । इक इति वच-नादन्त्यस्य न अलोऽन्त्यस्येति वचनादिको न उच्यते च गुणः सर्वादेशः प्राप्नोति । एवं सर्वत्र ॥

॥ कै॰ ॥ ति षष्ठ्युच्चारितैवान्त्यमलं नीतेति नास्या अपरं रूपमस्तीति नास्ति सर्वादेशगुणप्रसङ्गः । पूर्वापे-क्षोऽयमिति । मिदादिष्विग्ग्रहणङ्कर्त्तव्यमित्यत्रैवार्थे हेतुत्वेनेदमुपात्तमित्यर्थः । उच्यत इति । मिदेरिति चोदनया ।

॥ वि॰ ॥ मिति । इक्परिभाषाशेषभूतालोऽन्त्यपरिभाषयेत्यर्थः । अङ्गस्येत्यपि स्थानषष्ठीतिभाष्येऽन्त्यमिकमुपसंक्रान्तेत्यनुकर्षः । एवञ्च संग्राहकवाक्यस्येगन्त-मात्रविषयत्वादनिगन्तविषयकलक्षणाभाव एव । आवृत्तौ च न मानमिति भावः । अत एव गापोष्टकः किर्त्त्वं सार्थकम् । हिश्च हेत्वर्थ इत्याह । मिदादिष्विति ।



॥ वि॰ ॥ अनन्त्यस्य चेक इति । यद्यपि जुसि चेत्यादीनामप्रधानभूतेग्विशेषणत्वे तस्मिन्निति परिभाषया व्यवहितस्येको न भविष्यति तथा-पि प्रत्ययस्याङ्गांशे उत्थिताकाङ्क्षतया जुसि चेत्यादिभिरप्यङ्गमेव विशेष्यत इत्यभिप्रायः । समानन्यायेनेति । गुणप्रकरणाविरूप्याय सर्वत्रा-ङ्गस्येत्यवयवषष्ठ्येव स्यादिति भावः । निर्दिष्टेति । अनियमे नियमकारिणीत्वात्परिभाषाया इति भावः । अन्ये त्विति । अयम्भावः । नह्यनियम इति

॥ कै॰ ॥ इग्ध्रान्तस्येति । यद्यङ्गस्येतीगपेक्षयावयवषष्ठी तदालोऽन्त्यस्येत्यस्य निमित्ताभावादनुपस्थानं स्थानषष्ठी ह्यस्योपस्थाने निमित्तम् । ततश्चाङ्गावयवस्यान्त्यस्यानन्त्यस्य चेको गुणः प्राप्नोतीति दोषः । ह्रस्वस्य गुण इति । समानन्यायत्वादेतदुक्तम् । अङ्गस्यावयवो यो ह्रस्वस्तस्य गुण इति । नत्वत्रेक्परिभाषोपतिष्ठते ।

॥ भा॰ ॥ अस्तु तर्हि तदपवादः । इग्ध्रान्तस्येति चेज्जुसि सार्वधातुकार्द्धधातुकह्रस्वाद्योर्गुणेष्वनन्त्यप्रति-षेधः । इग्ध्रान्तस्येति चेज्जुसि सार्वधातुकार्द्धधातुकह्रस्वाद्योर्गुणेष्वनन्त्यस्य प्रतिषेधो वक्तव्यः । जुसि गुणः । स यथेह भवति अजुहवुरबिभयुरिति । एवमनेनिजुः पर्यवेविषुः । अत्रापि प्राप्नोति । सार्वधातु-कार्द्धधातुकयोर्गुणः । स यथेह भवति कर्ता हर्ता नयति तरति भवति । एवमीहिता ईहितुमित्यत्रापि प्राप्नोति । ह्रस्वस्य गुणः । स यथेह भवति हे अग्ने हे वायो इति । एवं हे अग्निचित् हे सोमसुद् इत्यत्रापि प्राप्नोति । जसि गुणः । स यथेह भवति । अग्नयो वायव इति । एवमग्निचितः सोमसुत इत्यत्रापि प्राप्नोति । ऋतो ङिसर्वनामस्थानयोर्गुणः । स यथेह भवति कर्त्तरि कर्त्तारौ कर्त्तार इति ॥

॥ कै॰ ॥ निर्दिष्टस्थानिकत्वात् । अन्ये त्वाहुः । अत्रापि परिभाषोपस्थाने सति ह्रस्वेनेग् विशेष्यते ह्रस्वस्य गुणो यथा स्याद्दीर्घस्य माभूदिति । ओर्गुण इत्यत्राप्यस्या उपस्थानमनन्त्यस्याप्युकारस्य गुणार्थम् । असति ह्यस्या उप-स्थानेऽङ्गस्येति स्थानषष्ठी स्यादङ्गञ्चोकारेण विशेष्यत इत्युकारान्तस्यैवाङ्गस्य गुणः स्यात् ॥

॥ वि॰ ॥ श्रुतिः स्मृतिर्वा किन्तु परिभाषा लिङ्गवती फलवती चेति नियमः फलञ्चेतरव्यावृत्तिवदितरसंग्रहोऽपीति ह्रस्वस्येत्यस्याङ्गविशेषणत्वव्यावर्त्तनेना-वयवषष्ठीत्वबोधनेनानन्त्यस्यापि गुणसम्पादनमेव फलं स्यात् । अकारे तु गुणागुणयोर्न विशेष इति । तदेतद्वक्ष्यति अनन्त्यस्याप्युकारस्येति । नन्वेवं ह्रस्वग्रहणं व्यर्थमत आह । दीर्घस्येति । घिसंज्ञा वर्णयोरेवेतिपक्षे ङिति गुणस्याग्निचिते इत्यादौ प्रसङ्गो बोध्यः ।

॥ वि० ॥ पुनः श्रुतिः । पुनर्गुणविधानम् । ननु चेति । बहुव्रीहिः समासः सामर्थ्यादिक्परिभाषानुपस्थितिश्चेति भावः । भिदो दकारोच्चारणात्तु भिन्नो भित्तमित्यादौ चरितार्थम् । क्नोः क्वित्त्वेनानिग्लक्षणत्वेऽपि निषेधप्रवृत्तेः । पुग्विधानमपि ज्ञापयतीत्यादौ यलोपार्थम् । श्रो-

॥ कै० ॥ पुगन्तेति । भेत्तेत्यादौ गुणे सिद्धे पुनः श्रुतिर्नियमार्थेति गुरूपधस्येहितेत्यादौ न भविष्यति नापिहेऽग्निचिदित्यादौ । उभयनियमाश्रयणादिति भावः । ननु च भेत्तेति दकारस्य ह्रेपयतीति पकारस्य च यथा

॥ भा० ॥ एवं सुकृति सकृतौ सुकृत इत्यत्रापि प्राप्नोति । घेर्ङितीति गुणः । स यथेह भवति । अग्नये वायव इति । एवमग्निचिते सोमसुते इत्यत्रापि प्राप्नोति । ओर्गुणः । स यथेह भवति बाभ्रव्यो माण्डव्य इति । एवं सुश्रुत् सौश्रुत इत्यत्रापि प्राप्नोति । नैष दोषः । पुगन्तलघूपधग्रहणमनन्त्यनियमार्थम् । पुगन्तलघूपधग्रहणमनन्त्यनियमार्थं भविष्यति । पुगन्तलघूपधस्यैवानन्त्यस्य नान्यस्यानन्त्यस्येति ॥

॥ कै० ॥ स्यादिति विध्यर्थमेतत्स्यात् । नैतदस्ति । पकि कृन्तः पुगन्तः । लघ्वी उपधा लघूपधा । ततः समाहारद्वन्द्वनिर्देश इत्यन्त्यस्य गुणेन न भाव्यम् ।

॥ वि० कारूपगुणार्थश्च चरितार्थमित्याशयः । पुकीति । लाघवात्तत्पुरुषे निर्णीते निषादस्थपतिन्यायेन नियमार्थत्वं न दोषावहमित्यर्थः । ननु पुगन्तग्रहणं दापयतीत्यादावनन्त्यस्यानिकोऽपि गुणार्थं स्यादिति कथन्नियमार्थत्वमिति चेन्न । गुणे उपधावृद्ध्या विशेषाभावात् ।



॥ वि० ॥ प्रकृतस्यैवेति । अनन्तरस्यैवेत्यर्थः । नन्वनन्तरस्येतिन्यायविरुद्धोऽयन्नियम इत्यत आह । अनन्तरस्येति ।

॥ कै० ॥ प्रकृतस्येति । एकेन नियमद्वयस्याभावात्प्रकृतस्यैव गुणस्य नियमः स्यात् पुगन्तलघूपधस्यैव

॥ भा० ॥ प्रकृतस्यैव नियमः स्यात् । किञ्च प्रकृतम् । सार्वधातुकार्द्धधातुकयोरिति । तेन भवेदिह नियमान्न स्यात् ईहिता ईहितुमीहितव्यमिति । ह्रस्वाद्योर्गुणस्त्वनियतः । सोऽनन्त्यस्यापि प्राप्नोति । अथाप्येवन्नियमः स्यात् पुगन्तलघूपधस्य सार्वधातुकार्द्धधातुकयोरेवेति । एवमपि सार्वधातुकार्द्धधातुकयोर्गुणोऽनियतः सोऽनन्त्यस्यापि प्राप्नोति । ईहिता ईहितुमीहितव्यमिति ॥

॥ कै० ॥ सार्वधातुकार्द्धधातुकयोः । न तु सार्वधातुकार्द्धधातुकयोरेव पुगन्तलघूपधस्येति । अथापीति । अनन्तरस्य विधिर्वेति परिभाषा यदि नाश्रीयेतेति भावः ॥

॥ वि० ॥ लक्ष्यानुसारव्याख्यानाश्रयणे बीजं बोध्यम् ॥

॥ वि० ॥ अभ्युपेत्यवादः क्लेशेनाङ्गीकार इत्याहुः । पिचव्येति । उगवादिभ्यो यत् । उवर्णान्तस्याङ्गस्येको गुण इति व्याख्यानमभिप्रेत्याच दोषोपन्यासः

॥ कै० ॥ अथापीति । अभ्युपगम्य वादेनोच्यते । आद्यन्त्यादिन्यायाश्रयणेन वा । एकस्मिंस्तु वाक्ये नियमद्वयं न लभ्यते । एवमपीति । अनेनिजुः पर्यवेविषुरित्यत्र लघूपधत्वाङ्गं सार्वधातुकत्वास्तीति

॥ भा० ॥ अथाप्युभयतो नियमः स्यात् पुगन्तलघूपधस्यैव सार्वधातुकार्द्धधातुकयोः सार्वधातुकार्द्धधातुकयोरेव पुगन्तलघूपधस्येति । एवमप्ययं जुसि गुणोऽनियतः सोऽनन्त्यस्यापि प्राप्नोति । अनेनिजुः पर्यवेविषुरिति ॥

॥ कै० ॥ जुसि चेति गुणः प्राप्नोति । हे पिचव्य हे वुद्दे हे वुद्दय इत्यादौ चालघूपधत्वादनन्त्यस्य गुणोऽपरिहृतः ॥

॥ वि० ॥ परन्तु सौश्रुत इत्यत्रापि प्राप्नोतीति भाष्याननुगुणा सा व्याख्येति चिन्त्योऽयङ्कैयट इत्याहुः । क्वचित्तु कैयटपुस्तके पिचव्य इति न दृश्यत एव ॥



॥ वि० ॥ तच्छेष इति शब्दोऽसम्भवदुक्तिकत्वग्रस्तोऽपीत्याह । परस्परेति । विशेषणविशेष्यभावमादेश शेषशेषिव्यवहारो न क्वापि दृष्टचर इति भावः । अत एवाग्रे एतत्प्रचोक्तदूषणोद्धारेऽपि नायन्तच्छेष इत्युक्तिः सङ्गच्छते । सन्निपात इति । जायमानोऽपि सन्निपातः सावकाशत्वेन

॥ कै० ॥ एवन्तर्हीति । परस्परानपेक्षयोः स्वस्वनिमित्तप्रयुक्तसन्निधानयोर्द्वयोः परिभाषयोः प्रदेशेषु स्वस्वकार्यप्रतिपादनं तत्र यदि कथञ्चिदेकविषये सन्निपातो भवति नैतावता परस्परापेक्षा भवतीत्यर्थः ।

॥ भा० ॥ एवन्तर्हि नायन्तच्छेषः । नापि तदपवादः । अन्यदेवेदम्परिभाषान्तरमसम्बद्धमनया परिभाषया । परिभाषान्तरमिति च मत्वा क्रोष्ट्रीयाः पठन्ति । नियमादिको गुणवृद्धी भवतो विप्रतिषेधेनेति । यदि चायन्तच्छेषः स्यात् तेनैव तस्यायुक्तो विप्रतिषेधः ॥

॥ कै० ॥ अन्यदेवेति । अन्तरशब्दो विशेषवाचीति अन्यान्तरशब्दयोरविरुद्धः प्रयोगोऽपर्यायत्वात् ।

॥ वि० ॥ विप्रतिषेधोपयोग्येव न तच्छेषत्वोपयोगी । अत एव नापवादत्वमप्युक्तदोषाच्चेति भावः । असम्बद्धमनयेति भाष्यस्य शेषशेषिभावानापन्नमुत्सर्गापवादभावानापन्नञ्चेत्यर्थः । नियमादिति । अन्योऽन्यपरिभाषायाः पूर्वाचार्यसंज्ञा नियम इति । तेनैव तस्यायुक्त इति । स्वाङ्गेन स्वस्येत्यर्थः । शेषशेषिणोरभेदं मत्वा तेनैवेत्याद्युक्तम् ॥

॥ वि॰ ॥ नन्वङ्गस्येतिस्थानषष्ठीदर्शनात्सार्वधातुकेत्यादावलोऽन्त्यपरिभाषाप्रवृत्त्या कथमिक्परिभाषायाश्चयनमित्यवकाशोऽत आह ।

॥ कै॰ ॥ चयनमिति । अलोऽन्त्यपरिभाषायाः प्रयोजनाभावाद्चानुपस्थानमित्याशयः । चायक इति । कथमचेक्परिभाषोपतिष्ठते यावताऽच इति स्थानी निर्दिष्टः ।

॥ भा॰ ॥ अथापि तदपवादः । उत्सर्गापवादयोरप्ययुक्तो विप्रतिषेधः । तत्र नियमस्यावकाशः राज्ञः क च राजकीयम् । इको गुणवृद्धी इत्यस्यावकाशः । चयनं चायकः । लवनं लावकः । इहोभयं प्राप्नोति मेद्यति मार्ष्टीति । इको गुणवृद्धी इत्येतद्भवति विप्रतिषेधेन ।

॥ कै॰ ॥ अचाहुः । अच इत्यस्याङ्गविशेषणतयोपयोगादचः स्थानित्वाभावाद्वृद्धिग्रहणेन लिङ्गेनेक्परिभाषाचाप्युपतिष्ठत एव । मेद्यतीति । इक इति वचनादिकारस्य प्राप्नोति अलोऽन्त्यस्येतिवचनादृकारस्य ।

॥ वि॰ ॥ अलोऽन्त्येति । अङ्गेनेको विशेषणेन पुगन्तेत्यादिनियमेन च तत्प्रयोजनसिद्धेरिति भावः । अचाहुरिति । अचा विशेषिताङ्गेनेको विशेषणासम्भवात् । प्रापयति गावावित्यादि त्वेष न जानातीति भावः ॥



॥ वि॰ ॥ इष्टेति । इष्टसिद्धिफलकत्वमेव हि तस्य युक्तत्वमिति भावः । न तु कार्य्येति । द्वयोरप्येकदेशस्थत्वेन परत्वासम्भवादिति भावः । वस्तुतः कार्य्यकालपक्षेऽपि पाणिन्युच्चारणरूपपाठकृतपरत्वमस्त्येव । अन्यथैकत्र प्रयोगरूपदेशे सर्वेषामेलनेन परत्वस्योच्छेद एव स्यात् । प्रयोगसाधनफलकान्येव शास्त्राणि । नचैवङ्कार्य्यकालपक्षमादाय त्रिपाद्यामेषाम्प्रवृत्तिः ।

॥ कै॰ ॥ नैष युक्त इति । इष्टसिद्धये इत्यर्थः । यथोद्देशपक्षे च परिभाषयोः पौर्वापर्य्यन्न तु कार्य्यकालतायाम् ॥

॥ भा॰ ॥ नैष युक्तो विप्रतिषेधः । विप्रतिषेधे परमित्युच्यते । पूर्वश्चायं योगः परो नियमः । इष्टवाची परशब्दः । विप्रतिषेधे परं यदिष्टन्तद्भवतीति । एवमप्ययुक्तो विप्रतिषेधः ॥

॥ वि॰ ॥ यथोद्देशे तु पूर्वत्रासिद्धेतानि प्रति त्रिपाद्या असिद्धत्वेनाप्रवृत्तिरेव स्यादिति भाष्यायुक्तं विरुध्येतेति वाच्यम् । परिभाषायाः सिद्धत्वेन तत्पक्षेऽसिद्धेनापि कार्य्येण स्वार्थन्तदाकर्षणसंभवादित्यष्टमे उपपादयिष्यमाणत्वात् । ध्वनितश्चेदन्तस्मिन्नितिनिर्दिष्टे इत्यत्र भाष्यकैयटयोरिति चिन्त्यमेतत् ॥

॥ वि० ॥ नन द्विकार्य्ययोग इत्यस्य द्वाभ्याङ्कार्य्याभ्यामन्यस्य योग इत्यर्थ उत द्वयोः परस्परेण योग इत्यर्थ उभयथापि त्रिपदतत्पुरुषो दुर्लभः कर्म्मधारयपूर्वपदकोऽपि न दिक्संख्ये इति नियमेन

॥ कै० ॥ द्विकार्ययोग इति । द्वाभ्याङ्कार्य्याभ्यां योगो यस्य स्थानिनः स विप्रतिषेधविषयत्वाद् विप्रतिषेधः ।

॥ भा० ॥ द्विकार्य्ययोगो हि विप्रतिषेधः । न चात्र एको द्विकार्ययुक्तः । नावश्यं
द्विकार्य्ययोग एव विप्रतिषेधः । किन्तर्ह्यसम्भवोऽपि । स चास्त्यत्रासम्भवः ॥

॥ कै० ॥ नावश्यमिति । द्विकार्य्ययोगत्वाभावे केवलोऽप्यसम्भवो विप्रतिषेध इत्यर्थः ॥

॥ वि० ॥ तस्य दुर्लभत्वादत आह । द्वाभ्यामित्यादि । अत्रापि पक्षे विप्रतिषेधशब्देन सामानाधिकरण्यानुपपत्तेराह । विप्रतिषेधेति । द्विकार्ययोगेऽप्य-सम्भवसत्त्वादाह । केवलोऽपीति ॥



॥ वि० ॥ ननु आ ए इति ए आ इति वादेशसम्भवोऽस्त्येवेत्यत आह । न चेति । द्वयोरिति । कार्ययोरित्यर्थः । अनन्तरे यत्रि दीर्घः साधुरनन्तरे झलि एत्वं साध्वित्यर्थ इति भावः ।

॥ कै० ॥ इह तावदिति । दीर्घत्वञ्च यञ्यनन्तरे विधीयते एत्वञ्च झल्यनन्तरे न च सम्भवोऽस्ति यद्
द्वयोः स्वेन स्वेन निमित्तेनानन्तर्यं स्यात् । इहेदानीमिति ।

॥ भा० ॥ कोऽसावसंभवः । इह तावद्वृक्षेभ्यः प्लक्षेभ्य इति । एकः स्थानी द्वावादेशौ ।
न चास्ति सम्भवः । यदेकस्य स्थानिनो द्वावादेशौ स्याताम् । इहेदानीं मेद्यति मेद्यतः
मेद्यन्तीति । द्वौ स्थानिनौ एक आदेशः । न चास्ति सम्भवः । द्वयोः स्थानिनोरेक आदेशः
स्यादित्येषोऽसम्भवः । सत्येतस्मिन्नसम्भवे युक्तो विप्रतिषेधः ॥

॥ कै० ॥ मिदेरित्येका षष्ठी सा यद्यवयवसम्बन्धे तदेकारस्य गुणेन भाव्यमथ स्थानषष्ठी तदालोऽन्त्य-
स्येति वचनाद् दकारस्य नचास्ति सम्भवो युगपदुभयोर्गुणस्येत्यर्थः ॥

॥ वि० ॥ आङ्गुण इत्यादौ द्वयोः स्थानिनोरेकादेशस्य सम्भवादाह । मिदेरिति । न चास्ति सम्भवो युगपदिति । युगपद्वाक्यार्थद्वयबोधाभावादिति भावः ॥

॥ वि० ॥ ननूक्तरीत्या प्रयोजनाभावादलोऽन्त्यस्याप्रवृत्तावत्रापि नियमः प्राप्नोतीत्यसंगतमत आह । यदीदमिति । एतदभावे सम्भवति सामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्वात् सर्वत्राङ्गस्येति स्थानषष्ठ्येव कृते त्वस्मिन्नवयवषष्ठी सेति भावः । अथापि कथञ्चिदिति भाष्यस्योक्त

॥ कै० ॥ एवमपीति । यदीदं नारभ्येत गुणवृद्धी कस्य स्याताम् । अलोऽन्त्यस्येति चेद् । येन

॥ भा० ॥ एवमप्ययुक्तः । द्वयोर्हि सावकाशयोस्समवस्थितयोर्विप्रतिषेधो भवति । अनवकाशश्चायं योगः । ननु चेदानीमेवास्यावकाशः प्रक्लृप्तः । चयनं चायको लवनं लावक इति । अत्रापि नियमः प्राप्नोति । नाप्राप्ते नियमेऽयं योग आरभ्यते । यावता च नाप्राप्ते नियमेऽयं योग आरभ्यते तदपवादोऽयं योगो भवति । उत्सर्गापवादयोश्चायुक्तो विप्रतिषेधः । अथापि कथञ्चिदिको गुणवृद्धी इत्यस्यावकाशस्स्यात् । एवमपि यथेह विप्रतिषेधादिको गुणो भवति मेद्यति मेद्यतः मेद्यन्ति । एवमिहापि स्याद् अनेनिजुः पर्यवेविषुरिति ॥

॥ कै० ॥ नाप्राप्तिन्यायेन तस्यास्यापवादत्वाद्विप्रतिषेधानुपपत्तिरित्यर्थः । एवञ्च क्रोष्ट्रीयमतमसंबद्धपरिभाषान्तरपक्षश्च नोपपद्यते ॥

॥ वि० ॥ एवाशयः । क्रोष्ट्रीयमतम् । विप्रतिषेधः । असंबद्धपरिभाषापक्षश्च तदुपजीव्यः । तत्र विप्रतिषेधरहितोऽन्त्यस्त्वयुक्त एव । क्व सन्निपातः क्वान्यतरत्यागः स च कस्येत्यत्र विनिगमकाभावेन सर्वेष्टासिद्धेस्तस्माद्वयमप्येकपक्षभूतमेव बोध्यम् ॥



॥ वि० ॥ प्रदेशार्थत्वादिति । परस्परेण सम्बन्धाभावादित्यन्तेन तच्छेषत्वासंभव उक्तः । पदोपस्थितिपक्षे च विधेयसमर्पकत्वेन गृहीतगुणादिपदश्रुतिरस्या लिङ्गमित्येषान्तरङ्गा । तत्त्वेन ग्रहश्च प्रथमाया विधेयविभक्तित्वेन तदन्तत्वेन पदज्ञानकाल एव । तदुक्तं भाष्ये गुणो भवतीति यत्रेत्यादि । नियमस्तु स्थानषष्ठीलिङ्गक इत्यवान्तरवाक्यार्थबोधोत्तरकालिकत्वेन बहिरङ्गः । एवञ्च मिदादावुपस्थितेक्परिभाषायास्सामानाधिकरण्यासंभवाद्वैयधिकरण्यान्वये वृत्ते निमित्ताभावादेवालोऽन्त्यस्येत्यस्यानुपस्थितिः । सार्वधातुकार्द्धधातुकयोरित्यादौ सामानाधिकरण्यान्वयेऽलोऽन्त्यस्येत्यनेनान्त्यस्यादेशव्यवस्था । एतेनैकस्या अप्रवृत्तौ अपरापि न प्रवर्ततेत्यपास्तम् । पर्यालोचनयेति । प्रदेशे सति संभवे परिभाषाद्वयैकवाक्यतया वाक्यार्थः । अन्यथा त्विक्परिभाषागर्भ एव ।

॥ कै० ॥ एवं तर्हीति । प्रदेशार्थत्वादनयोः परिभाषयोर्गुणत्वात्परस्परेण

॥ भा० ॥ एवं तर्हि वृद्धिर्भवति गुणो भवतीति यत्र ब्रूयादिक इत्येतत्तत्रोपस्थितं द्रष्टव्यम् ॥

॥ कै० ॥ सम्बन्धाभावात्प्रदेशवाक्यपर्यालोचनया वाक्यार्थस्यावस्थानमित्यर्थः ॥

॥ वि० ॥ अस्या अन्तरङ्गत्वादित्यर्थः । भाष्ये वृद्धिर्भवतीत्यादि । इतिशब्दो यत्रेत्यर्थकः । इक इत्येतदिति । इक इति सूत्रे इक इति षष्ठ्यन्तानुकरणमित्यर्थः । अनुवृत्तस्य स्वरूपपरत्वेन गुणशब्दो भवतीत्याद्यर्थः स्यात् । अतः पुनरत्र गुणवृद्धिग्रहणम् । अनुवृत्तस्यार्थपरत्वं तु न । शब्दाधिकारापत्तेः । उभाभ्यां च गुणशब्दवान् गुणो यत्रेत्यादिरर्थस्तदुक्तमिति यत्रेत्यादि । गुणपदं यत्र वर्तते इत्याद्यर्थस्तु न । अतो गुण इत्यादावप्यापत्तेः । भवतिक्रियाया अन्तरङ्गत्वाच्च । अस्मादेव गुणवृद्धिग्रहणादत्र विधीयमान इत्यस्य तदर्थकस्य भवतीत्यस्य वाध्याहार इति बोध्यम् । एतन्मूलकमेवानुवादे परिभाषा नोपतिष्ठत इति । अत एव तदेतद्विषयमेवात्रश्चेत्येतद्विषयमेव च । अचो ञ्णितीत्यादौ तु वाक्यार्थबोधकाले श्रौतात्पदेनैवाकाङ्क्षाशान्तौ लिङ्गोपस्थितस्य दुर्बलतया नान्वय इति दिक् ॥

॥ वि० ॥ पुकि अन्त इति । सुप्सुपेतिसमासः । भिनत्तीत्यत्र गुणापादनं क्ङितीत्यस्य निमित्तसप्तमीत्वात् । इकस्सार्वधातुकार्द्धधातुक-योरिति विशेषणमिति तु न युक्तम् । तस्याङ्गांशे उत्थिताकाङ्क्षत्वात् ।

॥ कै० ॥ अथवेति । तच्छेषपक्षे दोषपरिहारः ॥

॥ भा० ॥ किं कृतं भवति । द्वितीया षष्ठी प्रादुर्भाव्यते । तत्र कामचारः । गृह्यमाणेन वा इकं विशेषयितुम् इका वा गृह्यमाणम् । यावता कामचारः । इह तावन्मिदिक्ष्जिपुगन्तलघूपधर्च्छिदृशिक्षिप्रक्षुद्रेषु गृह्यमाणेनेकं विशेषयिष्यामः । एतेषां य इगिति । इहेदानीं जुसि सार्वधातुकार्द्धधातुकह्रस्वाद्योर्गुणे-ष्विका गृह्यमाणं विशेषयिष्यामः । एतेषां गुणो भवति इकः । इगन्तानामिति । अथवा सर्वत्रैवात्र स्थानी निर्दिश्यते । इह तावन्मिदेरित्यविभक्तिको निर्देशो मिद् एर्मिदेरिति । अथवा षष्ठीसमासो भविष्यति । मिद इर्मिदिर्मिदेरिति । पुगन्तलघूपधस्येति नैवं विज्ञायते पुगन्तस्याङ्गस्य लघूपधस्य चेति । कथं तर्हि । पुकि अन्तः पुगन्तः । लघ्वी उपधा लघूपधा । पुगन्तश्च लघूपधा च पुगन्तलघूपधम् । पुगन्तलघूपधस्येति । अवश्यं चैतदेवं विज्ञेयम् । अङ्गविशेषणे सतीह प्रसज्येत । भिनत्ति छिनत्तीति ॥

॥ वि० ॥ भाष्ये यणादिपरं गुण इति यणादिपरं लुप्यतेऽवशिष्टस्य गुण इत्यर्थेन क्षिप्रादेस्सर्वादेशो गुणस्सिद्धः स्थूलादौ त्वोर्गुण इत्येव सिद्धमिति भावः ॥



॥ वि० ॥ ननु पूर्वस्येत्युक्तावपि यणपेक्षादेः परमित्यर्थे पूर्वस्य गुण इत्यनेनापि तत एव पूर्वस्य गुणापत्तौ स्थूलादिषु यकारादेर्गुणः स्या-द्यणादिर्यस्य तद्रूपं परं लुप्यते ततः पूर्वस्य च गुण इत्यर्थे क्षिप्रक्षुद्रयोरन्त्यस्य व्यञ्जनस्य गुणः स्यादत आह । अत्र चेति । अनित्यत्वादिति । आस-न्नित्यत्र लोपनिवृत्त्यर्थात् श्नसोरल्लोप इति तपरकरणादित्यर्थः । तथाहि अस् अन्तीति स्थिते परत्वादल्लोपे तस्यासिद्धत्वात्पुनः प्रसङ्गेनाटि विकारान्यानुपूर्व्य-क्याभावेन लक्ष्ये लक्षणस्येति न्यायाप्राप्तौ प्राप्तलोपवारणार्थं तपरत्वमाटोऽसिद्धत्वे व्यर्थं सत्तदनित्यत्वे ज्ञापकम् । नचाटोऽप्यनापत्तिः । तत्रानित्यत्वे मानाभावात् ।

॥ कै० ॥ क्षिप्रक्षुद्रयोरिति । अत्र च योगविभागः क्रियते । स्थूलादीनां यणादिपरं लुप्यते । ततः पूर्वस्य च गुण इति । अत्र च स्वरितत्वात् क्षिप्रक्षुद्रावेवानुवर्तेते स्थूलादयो निवृत्ताः । तेषान्तु यणादिलोपे सत्योर्गुण इति गुणो भवति । असिद्धवद-त्राभादित्यसिद्धत्वमनित्यत्वान्न भवति । तत्र क्षिप्रक्षुद्रयोर्यण आदिः पकारो दकारश्च तस्माद्यणादेः परं लुप्यते तस्मादेव च यणादेः

॥ भा० ॥ ऋच्छेरपि प्रश्लिष्टनिर्देशोऽयम् । ऋच्छति ऋ ऋ ॠताम् ऋच्छत्यॄतामिति ।
दृशेरपि योगविभागः करिष्यते । उरङि गुणः । उः अङि गुणो भवति । ततो दृशः ।
दृशेश्चाङि गुणो भवति । उरित्येव । क्षिप्रक्षुद्रयोरपि यणादिपरं गुण इतीयता सिद्धम् ।
सोऽयमेवं सिद्धे सति यत्पूर्वग्रहणं करोति तस्यैतत्प्रयोजनम् इको यथा स्यादनिको माभूदिति ॥

॥ कै० ॥ पूर्वस्य च गुण इति सिद्धं चेपिष्ठः चोदिष्ठ इति । यणादिपरमिति । पञ्चमीसमासः । यदि तर्हि पुगन्तलघूपधस्येति स्था-नी निर्दिश्यते तच्छेषपक्षाश्रयणाज्ज्ञाचिक्परिभाषा नोपतिष्ठते तदास्य गुणस्यानिग्लक्षणत्वाङ्भिन्नमित्यादौ क्ङिति चेति प्रतिषेधो न प्रा-प्नोति । यथा लैगवायन इति । नैष दोषः । क्रुसनोः किस्वविधानाज्ज्ञापकादनिग्लक्षणत्वेऽपि लघूपधगुणस्य प्रतिषेधो भविष्यति ॥

॥ वि० ॥ तस्मादेव चेति । पूर्वत्वस्यावध्याकाङ्क्षायाम्परत्वेऽवधित्वेन क्लृप्तत्वादुपस्थितत्वाच्च तस्यैवावधित्वमिति भावः । तद् ध्वनयन् व्याचष्टे । पञ्चमीसमास इति । सुप्सुपेत्यनेन । अवयवभूते यणादीत्यत्र समुदिते चेत्यर्थः । नचैवं ह्रस्वशब्दे रस्वस्य शब्दस्यापि लोपापत्तिः । स्थूलादिसाहचर्य्येणोपान्त्ययणादेः परस्यैव लोपादित्याहुः । पक्षाश्रयणाच्चेति । परिभाषाणामनियमे नियमकारित्वाच्चेत्यपि बोध्यम् । एवं ज्ञापयतीत्यादौ पुगन्तेतिगुणे उपधावृद्धिरिति न दोषः । क्रुसनोरिति । एतत् क्ङिति चेति सूत्रे उपपादयिष्यते ॥

॥ वि० ॥ भाष्ये शङ्कते । अथ वृद्धिग्रहणमिति । न क्वचित् स्थानी निर्दिश्यत इत्युक्त्या सर्वत्रैव न निर्दिश्यते इति प्रतीयते क्वचिदादिपदवर्तिनञः क्वचिदादिपदबोध्याधिकरणादौ सर्वत्राभावप्रतीतेर्व्युत्पत्तिसिद्धत्वात् तच्चायुक्तमत आह । क्वचिदिति । भाष्ये सिद्धान्त्याह ।

॥ कै० ॥ गुणविधाविति । क्वचिन्न निर्दिश्यते इति नञो व्यवहितेन संबन्धः । क्वचिद्धि निर्दिश्यत एव

॥ भा० ॥ अथ वृद्धिग्रहणङ्किमर्थम् । किं विशेषेण वृद्धिग्रहणञ्चोद्यते न पुनर्गुणग्रहणमपि ।
यदि किञ्चिद्गुणग्रहणस्य प्रयोजनमस्ति वृद्धिग्रहणस्यापि तद्भवितुमर्हति । को वा विशेषः ।
अयमस्ति विशेषः । गुणविधौ न क्वचित् स्थानी निर्दिश्यते तत्रावश्यं स्थानिनिर्देशार्थं गुणग्रहणङ्कर्त्तव्यम् । वृद्धिविधौ पुनः सर्वत्रैव स्थानी निर्दिश्यते । अचो ञ्णिति । अत उपधायाः ।
तद्धितेष्वचामादेरिति । अत उत्तरम्पठति । वृद्धिग्रहणमुत्तरार्थम् । वृद्धिग्रहणं क्रियते ।
किमर्थम् । उत्तरार्थम् । क्ङितीति प्रतिषेधं वक्ष्यति स वृद्धेरपि यथा स्यात् । कश्चेदानीं
क्ङित्प्रत्ययेषु वृद्धेः प्रसङ्गः । यावता ञ्णितीत्युच्यते । तत्र मृज्यर्थम् । मृजेर्वृद्धिरविशेषेणोच्यते सा क्ङिति माभूत् । मृष्टो मृष्टवानिति । इहार्थञ्चापि मृज्यर्थं वृद्धिग्रहणं कर्त्तव्यम् ।
मृजेर्वृद्धिरविशेषेणोच्यते सेको यथा स्यादनिको माभूदिति ॥

॥ कै० ॥ ओर्गुण इत्यादौ । मृजेर्वृद्धिरिति । तत्र हि सूत्रेऽभिमतस्थान्यनुपादानादलोऽन्त्यपरिभाषयाऽन्त्यस्यैव स्यादित्यर्थः ॥

॥ वि० ॥ वृद्धिग्रहणमुत्तरार्थमिति । पूर्वपक्ष्याह । कश्चेत्यादि । अविशेषेणोच्यते सा क्ङितीति । प्रत्ययविशेषानाश्रयणमत्राविशेषः । उत्तरस्याविशेषेणेत्यस्य स्थानिविशेषानुच्चारणेनेत्यर्थस्तदाह । तत्र हि सूत्र इति ॥



॥ वि० ॥ अडागमात्पूर्वमिति । लादेशेषु कृतेष्वडितिपक्षे इदम् । अटि कृते इति । विकारान्त्यानुपूर्व्या भेदेन लक्ष्यभेदाच्चिन्त्यमिदम् । परत्वादित्यपि चिन्त्यम् । द्वयोर्यौगपद्यसम्भवात् । एवन्तर्हीति । लावस्थायामडिति पक्षे इति भावः । भाष्येऽनन्त्यविकार इति ।

॥ कै० ॥ अटोऽपीति । नन्वडागमात्पूर्वमेव परत्वाद्वृद्धिर्भविष्यतीति लक्षणस्य च प्रवृत्तत्वादटि

॥ भा० ॥ मृज्यर्थमिति चेद्योगविभागात्सिद्धम् । मृज्यर्थमिति चेद्योगविभागः करिष्यते ।
मृजेर्वृद्धिरचः । ततो ञ्णिति । ञिति णिति च वृद्धिर्भवति । अच इत्येव । यद्यचो वृद्धिरुच्यते
न्यमार्ट् अटोऽपि वृद्धिः प्राप्नोति । अटि चोक्तम् । किमुक्तम् । अनन्त्यविकारेऽन्त्यसदेशस्य
कार्य्यम्भवतीति । वृद्धिप्रतिषेधानुपपत्तिस्त्विक्प्रकरणात् । वृद्धेस्तु प्रतिषेधो नोपपद्यते ।
किङ्कारणम् । इक्प्रकरणात् । इग्लक्षणयोर्गुणवृद्ध्योः प्रतिषेधः । नचैवं सति मृजेरिग्लक्षणा
वृद्धिर्भवति । तस्मान्मृजेरिग्लक्षणा वृद्धिरेषितव्या ॥

॥ कै० ॥ कृते पुनर्लक्षणं न प्रवर्त्तिष्यते । एवन्तर्हि विप्रतिषेधानपेक्षयैवात्र चोद्यपरिहारावुक्तौ ॥

॥ वि० ॥ तथापि सिध्यतीत्यभिमानः । सिद्धान्ते त्वन्यार्थमिग्ग्रहणे कृते तेनैवाटो व्यावृत्तिसिद्धौ सा नैतदर्थेति घ्यङ इति सूत्रे वक्ष्यत इति न विरोधः । तस्मान्मृजेरिति । निषेधस्य सिद्धये योगविभागमकृत्वा स्थानिसमर्पणायास्या एवोपस्थितिरङ्गीकार्य्येति भावः ॥

२७४

॥ वि० ॥ संक्रम इति गुणवृद्धिप्रतिषेधविषयक्ङितः प्राचां संज्ञा । अचि इत्येव वचनम् । अजादाविति तु तदादिपरिभाषालभ्यार्थानुवादः । अत एवाग्रे वक्ष्यति ततोऽचि क्ङितीति । एवञ्च मम्रजे यूयममम्रजेत्यादौ विकल्पो भवत्येव । एतेनादिग्रहणसामर्थ्यान्मुख्याजादावेव प्रवृत्ति-

॥ भा० ॥ एवन्तर्हि इहान्ये वैयाकरणा मृजेरजादौ संक्रमे विभाषा वृद्धिमारभन्ते । परिमृजन्ति परिमार्जन्ति परिममृजतुः परिममार्जतुरित्याद्यर्थम् । तदिहापि साध्यम् । तस्मिन् साध्ये योगविभागः करिष्यते । मृजेर्वृद्धिरचो भवति । ततः । अचि क्ङिति । अजादौ च क्ङिति मृजेर्वृद्धिर्भवति । परिमार्जन्ति परिममार्जतुः । किमर्थमिदम् । नियमार्थम् । अजादावेव क्ङिति नान्यत्र । क्वान्यत्र माभूत् । मृष्टो मृष्टवान् इति । ततो वा । वाचि क्ङिति मृजेर्वृद्धिर्भवति । परिमृजन्ति परिमार्जन्ति परिममृजतुः परिममार्जतुरित्यादि । इहार्थमेव तर्हि सिजर्थं वृद्धिग्रहणं कर्त्तव्यम् । सिचि वृद्धिरविशेषेणोच्यते सेको यथा स्यादनिको माभूदिति । कस्य पुनरनिकः प्राप्नोति । ऋकारस्य ॥

॥ वि० ॥ एतेन पूर्वोदाहृतेषु न वृद्धिरिति हरदत्तोक्तमपास्तम् । तुन्दपरिमृज इत्यत्र यदि वृद्ध्यभाव इष्टस्तर्हि व्यवस्थितविभाषया नेति बोध्यम् । अजादावेवेति । विपरीतनियमस्तु न । इष्टानुरोधात् । सिचि वृद्धौ स्थानिविशेषानाश्रयणरूपोऽविशेषः । उत्तरार्थत्वे खण्डिते सिद्धान्त्याह । इहार्थमेवेति । तत् खण्डयति पूर्वपक्षी कस्य पुनरित्यादि ॥

२७५

॥ वि० ॥ पूर्वविप्रतिषेधेति । णयल्लोपावियङ्यिण्ङित्यादिः । चिकीर्षक इति । अन्यथा ह्यत्र परत्वाद्वृद्धौ युकि चिकीर्षायक इति स्यात् । परत्वादचेति । अपवादत्वादित्यर्थः । परशब्द

॥ कै० ॥ अचिकीर्षीदिति । पूर्वविप्रतिषेधादतो लोपो यथा चिकीर्षक इति । अयासीदिति । परत्वादच सगिटोः

॥ भा० ॥ अचिकीर्षीद् अजिहीर्षीत् । नैतदस्ति । अतो लोपोऽत्र बाधको भविष्यति । आकारस्य तर्हि प्राप्नोति । अयासीद् अवासीत् । नास्त्यत्र विशेषः । सत्यां वृद्धावसत्यां वा । सन्ध्यक्षरस्य तर्हि प्राप्नोति । नैव सन्ध्यक्षरमन्त्यमस्ति ॥

॥ कै० ॥ कृतयोरनन्त्यत्वादाकारस्य नास्ति वृद्धिप्रसङ्ग इति यद्यपि परिहारोऽस्ति तथापि विशेषाभावेन परिहृतत्वान्नायमाश्रितः ।

॥ वि० ॥ उत्कृष्टवाची । भाष्ये नैव सन्ध्यक्षरमिति । वृद्धियोग्यमिति शेषः । उपदेशे आत्त्वविधानादिति भावः । अन्त्यमिति । अङ्गस्य वृद्धिरित्यर्थेऽलोन्त्यपरिभाषाप्रवृत्तेरिति भावः ॥

॥ वि० ॥ ढलोपस्यासिद्दत्वादिति । पूर्वं हलन्तलक्षणाया वृद्धेर्जातत्वेनेदानीं सिचि वृद्धिः परस्मै इत्यस्य प्राप्त्या लक्ष्ये लक्षणस्येत्यस्याप्रवृत्तिरिति भावः । धातुग्रहणमिति । सिचा तदाक्षेपे सिद्ध इति भावः । एवञ्च कथ्यादिभ्य आचारक्विपि अकथायीदित्यादौ वृद्धिर्नेति लभ्यते ।

॥ कै० ॥ उदवोढामिति । ढलोपादीनामसिद्दत्वात्पूर्वं हलन्तलक्षणा वृद्धिस्ततो ढलोपादिषु कृतेषु ढलोपस्यासिद्धत्वादोकारस्य न भविष्यति । गोशब्दादाचारे क्विपि अगवीदिति

॥ भा० ॥ ननु चेदमस्ति । ढलोपे कृते उदवोढाम् उदवोढम् उदवोढेति । नैतदस्ति । असिद्धो ढलोपस्तस्यासिद्धत्वान्नैतदन्त्यं भवति । व्यञ्जनस्य तर्हि प्राप्नोति । अभैत्सीद् अच्छैत्सीत् । हलन्तलक्षणा वृद्धिर्बाधिका भविष्यति । यत्र तर्हि सा प्रतिषिध्यते नेटीति अकोषीद् अमोषीत् । सिचि वृद्धेरप्येष प्रतिषेधः । कथम् ॥

॥ कै० ॥ सन्ध्यक्षरमन्त्यमस्ति तस्य कस्माद्वृद्धिर्न भविष्यति । उच्यते । सिचि वृद्धिरित्यत्र धातुग्रहणमृत इद्धातोरित्यत औपदेशिकधातुपरिग्रहार्थमनुवर्त्तत इत्यदोषः ॥

॥ वि० ॥ माधवस्तु वृद्धिमनुते । बहुलं छन्दसीत्यतो बहुलग्रहणानुवृत्त्या सन्ध्यक्षरान्तनामधातोर्वृद्धिर्न अन्यत्र भवत्येवेति तदाशयः । तेन सेशब्दादिभ्य आचारक्विपि न वृद्धिरित्यलम् । वस्तुतस्तु नैव सन्ध्यक्षरमित्येवगर्भैतद्भाष्यप्रामाण्येन सन्ध्यक्षरान्तेभ्य आचारक्विबेव नेत्याहुः ॥



॥ वि० ॥ हलन्तलक्षणा वृद्धिर्बाधिकेति भाष्ये । इग्ग्रहणाभावे येन नाप्राप्तिन्यायेनेति भावः । इत्याहेति । इत्याशङ्कायामाहेत्यर्थः । नेकचेति । बाध्यसामान्यचिन्तेयम् । नेटीत्यत्र हलन्तस्येत्यनुवर्त्य हलन्तस्य या वृद्धिः प्राप्ता

॥ कै० ॥ लक्षणं हीति । नेटीति लक्षणमविशेषेण वृद्धिमात्रस्य निषेधङ्कथयतीति ध्वनतीत्युच्यते । यो ह्यव्यक्तङ्कथयति स ध्वनतीत्युच्यते एवमिहाप्यस्या एव वृद्धेर्निषेध इति नास्ति व्यक्तिः । स्यादेतत् । प्रतिषेधस्य एकनिषेधे चरितार्थत्वात्पुनः प्रतिषेध्यान्तरे प्रवृत्तिर्न स्यादित्यत आह । भ्रमतीति । सर्वत्र

॥ भा० ॥ लक्षणं हि नाम ध्वनति भ्रमति मुहूर्त्तमपि नावतिष्ठते । अथवा सिचि वृद्धिः परस्मैपदेष्विति सिचि वृद्धिः प्राप्नोति । तस्या हलन्तलक्षणा वृद्धिर्बाधिका । तस्या अपि नेटीति प्रतिषेधः ॥

॥ कै० ॥ व्याप्रियत इत्यर्थः । स्यादेतत् । यावदेकनिषेधेऽस्य व्यापारस्तावद्द्वितीयो विधिः प्रवृत्तः प्रवृत्तस्य च निषेधोऽशक्यः कर्त्तुमित्याह । मुहूर्त्तमिति । उभयत्रापि व्यापारान्नैकत्र विश्राम्यतीत्यर्थः । तस्या अपीति । अपिशब्दात्सिचि वृद्धेरपि ॥

॥ वि० ॥ सा सर्वापि नेत्यर्थः । तेनालावीदित्यादौ न दोष इति बोध्यम् । बाध्यविशेषचिन्तायामाह । भाष्येऽथवेति । तद् व्याचष्टे । अपिशब्दादिति ॥

॥ वि॰ ॥ स्वप्रतिषेध्यहलन्तलक्षणवृद्धिप्रतिषेधद्वारा भ्रष्टावसरन्यायेन सिचि वृद्धेरप्यभावः प्रतिपाद्यत इत्यर्थस्तद् ध्वनयन्नाह भाष्ये । अस्ति पुनः क्वचिदित्यादि । ननु तत्र प्रकृतिभावेन साक्षादेवोत्सर्गापवादयोर्निवृत्तिर्न त्वपवादेन बाधादुत्सर्गस्येत्यत आह । नान्त इति । भाष्ये न भवन्तीति । भ्रष्टावसरन्यायेनेति भावः । पूर्वसवर्णदीर्घवद् वृद्धेरपीति । अवर्णादिचि यद्यत्प्राप्तं तन्नेति बाध्यसामान्यचिन्तारूपाद्यपेक्षेयं शङ्का ज्ञापकाद्वाध्यविशे-

॥ कै॰ ॥ अस्तीति । नान्तः पादमव्यपर इति पाठमाश्रित्यैवमुक्तम् । यद्येवं वृक्षावित्यत्र नादिचीत्यनेन पूर्वसवर्ण-

॥ भा॰ ॥ अस्ति पुनः क्वचिदन्यत्रापि अपवादे प्रतिषिद्धे उत्सर्गोऽपि न भवति ।
अस्तीत्याह । सुजाते अश्वसूनृते । अध्वर्यो अद्रिभिः सुतम् । शुक्रं ते अन्यदिति ।
पूर्वरूपत्वे प्रतिषिद्धे अयादयोऽपि न भवन्ति ॥

॥ कै॰ ॥ दीर्घवद्वृद्धेरपि प्रतिषेधप्रसङ्गः । नैष दोषः । सङ्ख्योद्वावित्यादेर्ज्ञापकादनन्तरस्यैव नादिचीति प्रतिषेधात् ॥

॥ वि॰ ॥ षचिन्त्यैवाश्रीयत इत्युत्तरम् । पूर्वसवर्णदीर्घे निषिद्धे वृद्धेरपीति पाठे भ्रष्टावसरन्यायानित्यत्वेन क्वचिदपवादनिवृत्तावपि तद्विषये उत्सर्गप्रवृत्तिर्ज्ञाप्यत इति भावः । परे त्वथवेति भाष्यं पूर्वपक्ष्युक्तित्वात्प्रौढ्या भ्रष्टावसरन्यायस्तु नाख्येवोक्तनिर्देशात् । अत एव नान्तः पादमिति सूत्रे एङोऽतीत्यनुवर्त्य एङोऽति यद्यत्प्राप्नोति तस्य निषेध इत्यर्थमाश्रित्य सर्वनिषेधकत्वं तस्योक्तमिति वदन्ति ॥



॥ वि॰ ॥ इहार्थत्वे पूर्वपक्षिणा प्रौढ्यापि खण्डिते सिद्धान्ती तदभ्युपेत्याप्याह । उत्तरार्थमेवेति । नूधूधातू कुटादी । भाष्येऽनन्त्यत्वादिति । अचोऽनन्त्यत्वादित्यर्थः । नन्विकपरिभाषाभावेऽन्त्यात्स्थानस्य सा प्राप्नोतीत्यनन्त्यत्वादित्यसङ्गतमिति चेन्न । हलन्तेषु हलन्तलक्षणाया

॥ कै॰ ॥ अन्तरङ्गत्वादिति । उवङादेशः सिचमेवापेक्षते वृद्धिस्तु सिच्परस्मैपदे ॥

॥ भा॰ ॥ उत्तरार्थमेव तर्हि सिजर्थं वृद्धिग्रहणङ्कर्तव्यम् । सिचि वृद्धिरविशेषेणोच्यते सा क्ङिति मा-
भूत् । न्यनुवीद् न्यधुवीत् । नैतदस्ति प्रयोजनम् । अन्तरङ्गत्वादचोवङादेशे कृते अनन्त्यत्वाद्वृ-
द्धिर्न भविष्यति । यदि तर्हि सिच्यन्तरङ्गम्भवति । अकार्षीद् अहार्षीत् । गुणे कृते रपरत्वे चान-
न्त्यत्वाद् वृद्धिर्न प्राप्नोति । माभूदेवम् । हलन्तस्येत्येवं भविष्यति । इह तर्हि न्यस्तारीद् न्यदा-
रीत् । गुणे कृते रपरत्वे चानन्त्यत्वाद्वृद्धिर्न प्राप्नोति । हलन्तलक्षणायाश्च नेटीति प्रतिषेधः । माभूदेवं
ल्वान्तस्येत्येवम्भविष्यति । इह तर्हि । अलावीद् अयावीत् । गुणे कृतेऽवादेशे चानन्त्यत्वाद्वृद्धिर्न
प्राप्नोति । हलन्तलक्षणायाश्च नेटीति प्रतिषेधः । माभूदेवं ल्वान्तस्येत्येवम्भविष्यति । ल्वान्तस्येत्युच्यते ।
नचेदं ल्वान्तम् । ल्वान्तस्येत्यत्र वकारोऽपि निर्दिश्यते । किं वकारो न श्रूयते ॥

॥ वि॰ ॥ बाधेनास्या वृद्धेरजन्त एव व्यवस्थितेरित्याशयात् । सिद्धान्त्याह । यदि तर्हीति । अत्र यदीत्यनेनापवादत्वात्तद्विषयेऽन्तरङ्गप्रवृत्तिरेव वक्तुमश-क्येति ध्वनितम् । इत उत्तरग्रन्थस्तु सिद्धान्त्याशयानभिज्ञपूर्वपक्ष्येकदेशिसिद्धान्त्येकदेशिनोरिति बोध्यम् ॥

॥ वि० ॥ लुप्तनिर्दिष्ट इत्यत्र पूर्वन्निर्दिष्टः पश्चाल्लुप्त इत्यर्थे मयूरव्यंसकादित्वात्समासः । नच गुणे कृते वार्णादाङ्गमिति न्यायेनावं बाधित्वा वृद्ध्यावावादेशेऽलावीदित्यादेः सिद्धौ वप्रश्लेषो व्यर्थ इति वाच्यम् । सिचि वृद्धिरित्यस्यापवादत्वाज्ज्ञानेनेव एतत्परिभाषाऽज्ञानेनैवास्य प्रवृत्तेर-दोषात् । नच वकारप्रश्लेषेऽश्रवीदशावीदिति श्व्यातोर्नित्यवृद्ध्यापत्तिः । अस्या एकदेश्युक्तित्वेन तदज्ञानेनैवास्य भाष्यस्य प्रवृत्तेः । जिरिचिर्याद्यज्ञानवदित्याहुः ।

॥ कै० ॥ लुप्तनिर्दिष्ट इति । लोपो व्योरिति भावः । किमत्र प्रमाणमिति चेत । अभियुक्तस्मरणमेव । णिश्विभ्यामिति । णिश्वि-

॥ भा० ॥ लुप्तनिर्दिष्टो वकारः । यद्येवम्माभवानवीद् माभवान्मवीत् । अत्रापि प्राप्नो-ति । अविमव्योर्नेति वक्ष्यामि । तद्वक्तव्यम् । न वक्तव्यम् । णिश्विभ्यान्तौ निमातव्यौ ॥

॥ कै० ॥ ग्रहणमकृत्वा अविमवी प्रतिषेधार्थङ्कर्त्तव्यावेवं सति गौरवाभावः । निमातव्याविति मेङो रूपम् । परिवर्त्तनीयावित्यर्थः ॥

॥ वि० ॥ एतद्भाष्यप्रामाण्यात्स धातुः पवर्गीयान्तो ववयोः समानश्रुतित्वाल्लोके दन्त्योष्ठ्यश्रुतिरित्यन्ये । अवेराटि वृद्ध्यवृद्ध्योरविशेष इत्याणिनवृत्तये भाष्ये माङ् प्रयुक्तः । एकादेशे पुनरप्यविशेषस्तदवस्थ इति भवानित्युक्तं मवौ तु प्रयोजनान्तरासत्त्वेऽप्यैकरूप्याय तत्प्रयोगः । अविमव्योर्नेति निषेधश्च मध्येऽपवादन्यायेनातो ल्रान्तस्येत्यस्यैव तेनातो हलादेरिति विकल्पो भवत्येवेति बोध्यम् । सिचि वृद्धिरिति सूत्रन्तु अचैषीदित्यादौ गुणे कृते चरितार्थमेतन्मते इति बोध्यम् ॥



॥ वि० ॥ कृतेऽस्य चारितार्थ्येऽपि स्वप्राप्तिकाले प्राप्तस्य येन नाप्राप्तिन्यायेन बाध इत्येतदाह । न्यायादपीत्यादि । बाध्यसामान्यचिन्तया च सकलान्तरङ्गबाध इति बोध्यम् । एवञ्च न ज्ञापकोपयोगो नापि ज्ञापकसम्भवो नापि प्रयोजनं वार्णपरिभाषयाऽचिरायीदित्यादौ गुणे कृतेऽया-

॥ कै० ॥ न सिचीति । न्यायादप्येतत्सिद्ध्यति । येन नाप्राप्तिन्यायेनान्तरङ्गस्य वृद्ध्या बाधनात् । प्रयोजनं चास्ति । चिरिजि-र्य्योर्यङ्लुगन्तानाञ्च

॥ भा० ॥ यद्यप्येतदुच्यते अथवैतर्हि णिश्व्योः प्रतिषेधो न वक्तव्यो भवति । गुणे कृते-ऽयादेशे च यान्तानान्नेत्येव प्रतिषेधो भविष्यति । एवन्तर्ह्याचार्य्यप्रवृत्तिर्ज्ञापयति न सिच्य-न्तरङ्गम्भवतीति । यदयमतो हलादेर्लघोरित्यकारग्रहणङ्करोति । कथं कृत्वा ज्ञापकम् । अकारग्रहणस्यैतत्प्रयोजनम् । इह माभूत् । अकोषीद् अमोषीत् । यदि सिच्यन्तरङ्गं स्यादकारग्रहणमनर्थकं स्यात् । गुणे कृतेऽलघूपधत्वाद्वृद्धिर्न भविष्यति । पश्यति त्वाचार्यो न सिच्यन्तरङ्गम्भवतीति ततोऽकारग्रहणङ्करोति । नैतदस्ति ज्ञापकम् । अस्त्यन्यदेतस्य वचने प्रयोजनम् ॥

॥ कै० ॥ नयत्यादीनाम् अचिरायीदजिरायीदनेनायीदित्यादौ वृद्धिसिद्धिः । अन्यथा गुणायादेशयोः कृतयोर्य्यान्तत्वाद्वृद्धि-प्रतिषेधः स्यात् ॥

॥ वि० ॥ देशात्पूर्वं वृद्धिप्राप्तेर्न वा वकारप्रश्लेषस्य फलञ्चाप्यविमव्योः प्रतिषेधस्येति श्व्यातौ वृद्धिविकल्प एवेति बोध्यम् । नैतदस्ति ज्ञापकमितिभाष्ये । न्यकुटीदित्यादावन्तरङ्गतया वृद्धिबाधकगुणस्य निषेधेऽपि भ्रष्टावसरन्यायेन न वृद्ध्यभावः । सिद्धान्ते न्यायाभावादिति भावः ॥

॥ वि॰ ॥ यत्तर्हि णिश्र्योरिति । ननु णिश्विस्थानेऽविमवी इति वदन्तम्प्रति णिश्विप्रतिषेधस्य ज्ञापकत्वाभिधानमयुक्तमिति चेन्न । ज्ञापकत्वे सम्भवति निमानासम्भव इत्याशयात् । यच्च करोतीति । इग्गृहणाभावेऽकोषीदित्यादौ व्यञ्जनस्य वृद्धिवारणाय बाध्यविशेषचिन्तापक्षे त्वया सिचि वृद्ध्यपवादहलन्तलक्षणाया निषेधे तेन न्यायेन सिचि वृद्ध्यप्राप्तेः स्वीकारेण त्वद्रीत्या ज्ञापकमेवेति भावः । एतेन सिच्यन्तरङ्गाभावेऽपि परत्वाद्गुणस्य वृद्धिबाधकताया दुर्वारत्वेनाकोषीदित्यादौ लघुत्वाभावादेव वृद्ध्यभावेऽत इति व्यर्थमेवेत्यन्त्यं ज्ञापकमसङ्गतं तथा णिश्र्योर्गुणे वार्णपरिभाषयाऽयादेशं बाधित्वा प्राप्तवृद्धेर्निषेधाय णिश्विग्रहणमप्यावश्यकमित्याद्यमप्यसङ्गतमित्यपास्तम् ।

॥ कै॰ ॥ षष्ठ्या इति । स्वतन्त्रमिदङ्गुणवृद्ध्योर्विधायकमिति पूर्वपक्षः ॥

॥ भा॰ ॥ किम् । यत्र गुणः प्रतिषिध्यते तदर्थमेतत्स्यात् । न्यकुटीद् न्यपुटीदिति । यत्तर्हि णिश्र्योः प्रतिषेधं शास्ति तेन नेहान्तरङ्गमस्तीति दर्शयति । यच्च करोत्यकारस्य ग्रहणं लघोरिति कृतेऽपि । तस्मादिग्लक्षणा वृद्धिः । तस्मादिग्लक्षणा वृद्धिरास्थेया । षष्ठ्याः स्थानेयोगत्वादिङ्निवृत्तिः । षष्ठ्याः स्थानेयोगत्वात्सर्वेषामिकान्निवृत्तिः प्राप्नोति । अस्यापि प्राप्नोति । दधि मधु । पुनर्वचनमिदानीङ्किमर्थं स्यात् ॥

॥ वि॰ ॥ एकदेश्युक्तित्वेनादोषात् । एतदेव ध्वनयन् यदि तर्हीति सिद्धान्त्युक्तौ यद्यन्तर्भावसूचितम् । एवञ्च न्यनुवीदित्यादावुवङं बाधित्वा प्राप्ताया वृद्धेर्निषेधायेग्लक्षणा सिचि वृद्धिरास्थेयेत्युपसंहरति सिद्धान्ती तस्मादिति भाष्ये । इग्लक्षणत्वेन निषेधायाकोषीदित्यादावनिको गुणव्यावृत्तये चेति भावः । बाध्यसामान्यचिन्ता भ्रष्टावसरन्यायश्चैकदेश्युक्तिर्न तु सिद्धान्तः । अत एव न्यस्तारीदित्युपक्रम्य हलन्तलक्षणायाश्च नेटीति प्रतिषेध इत्युक्तमित्यलम् । विधायकमिति । इको यणचीत्यादि तु स्वविषयेऽस्य बाधकमिति न तद्वैयर्थ्यरूपो दोषः । भाष्ये इङ्निवृत्तिरित्यस्य गुणवृद्धिरूपादेशेनेत्यादिः । पुनर्वचनमदेङ्गुण इत्यादिरूपम् ॥



॥ वि॰ ॥ नियमाद्विधेरिति । प्राप्तबाधानुवादरूपदोषापत्त्या परिसंख्यारूपो नियमो गुरुरिति भावः । द्वितीयमिति । केवलविधायकत्वेऽनुवृत्त्यैव सिद्धे इहत्यगुणवृद्धिग्रहणमनर्थकं स्यादिति भावः । यातीत्यादिनिर्देशैर्गुरोरपि नियमस्याश्रयणमित्यन्ये । तुल्यन्यायेति । षष्ठीदर्शनरूपो न्यायः । वाक्यभेदेनेति । ष्यङः सम्प्रसारणमित्यादिनिर्वाहाय सामान्येन संज्ञाविधानार्थं वाक्यभेद आवश्यक इति भावः ।

॥ कै॰ ॥ अन्यतरार्थमिति । नन्वनिकोऽपि यथा स्यादिति विध्यर्थमेतत्स्यान्नतु नियमार्थम् । नियमाद्विधेर्बलीयस्त्वात् । एवं मन्यते । द्वितीयङ्गुणवृद्धिग्रहणमनुवर्त्तते । तेन गुणवृद्धिप्रदेशेषु इक इत्यस्योपस्थानान्नास्त्यनिकः प्रसङ्गः । प्रसारणे चेति । तुल्यन्यायत्वादुपन्यासः । इग्यण इत्यत्र यण इति स्थानषष्ठी । तेन यणः स्थाने इग्भवति

॥ भा॰ ॥ अन्यतरार्थं पुनर्वचनम् । अन्यतरार्थमेतत्स्यात् । सार्वधातुकार्द्धधातुकयोर्गुण एवेति । प्रसारणे च । प्रसारणेषु च सर्वेषां यणान्निवृत्तिः प्राप्नोति । अस्यापि प्राप्नोति । याता वाता । पुनर्वचनमिदानीं किमर्थं स्यात् । विषयार्थम्पुनर्वचनम् । विषयार्थमेतत्स्यात् । वचिस्वपियजादीनाङ्कित्येवेति । उरण् रपरे च । उरण् रपरे च सर्वेषामृकाराणान्निवृत्तिः प्राप्नोति । अस्यापि प्राप्नोति । कर्ता हर्ता । सिद्धन्तु षष्ठ्यधिकारे वचनात् । सिद्धमेतत् । कथम् । षष्ठ्यधिकारे इमे योगाः कर्त्तव्याः ॥

॥ कै॰ ॥ स च संप्रसारणसंज्ञ इति वाक्यार्थः स्यात् । वाक्यभेदेन च कार्यद्वयं विधीयते । कर्ता हर्ता इति । अन्तरतमस्याणोऽभावात् सर्वे अणः पर्यायेण प्राप्नुवन्ति । सिद्धमिति । स्वातन्त्र्यमेषान्निवर्तयति । तेन यत्र षष्ठी तत्रैषामुपस्थानम् । अङ्गस्य वच्यादीनामृत इद्धातोरित्यादौ ।

॥ वि॰ ॥ विषयार्थमित्यस्य निमित्तनियमार्थमित्यर्थः । गुणादिविधावधिकारलब्धा षष्ठीत्याह । अङ्गस्येति । तत्रोरण् रपर इत्यत्र षष्ठीत्यनुवर्त्य पूर्वोक्तार्थः सुलभः । एतयोरपि तत्रानुवृत्त्या षष्ठीतिसम्बन्धेन तदर्थलाभः । तत्रानुवर्त्तनं यदि लौकिकोऽधिकारस्तर्हि स आकाङ्क्षानिबन्धनः ॥

॥ वि० ॥ नच षष्ठी स्थान इत्यस्याकाङ्क्षेत्यत आह। स्वरितत्वादिति। लक्ष्यानुरोधाच्चेत्यपि बोध्यम्। षष्ठीति। योगविभागे च षष्ठीतिसूत्रं साकाङ्क्षमिति लौकिकोऽपेक्षालक्षणोऽधिकार इति भावः। योग्यत्वादिति। व्याख्यानाच्चेत्यपि बोध्यम्। उपतिष्ठत इति। अनुवर्त्तत इत्यर्थः। अन्यतरार्थमिति। केवलविधित्वे पुनर्गुणवृद्धिग्रहणवैयर्थ्यमुक्तमेव। नतु वाक्यभेदेनेति। एकवाक्यत्वे सम्भवति तस्यायुक्तत्वमिति भावः। एतेनेग्यण इत्यपि व्याख्यातम्। तत्रापि संज्ञाविधाने इगनुवाद्यः। अनुवाद्यत्वञ्च ष्यङः सम्प्रसारणमित्यादीनां सार्थक्यायावश्यकम्।

॥ कै० ॥ इमावपीति। स्वरितत्वादनयोरन्तरालवर्त्तिभिश्चायोग्यत्वात्सम्बन्धाभावः। अथवेति। षष्ठी स्थानेयोगेत्यत्र योगविभागः करिष्यते। षष्ठीति। यदेतदनुक्रान्तं तत्रत्र षष्ठी तत्रोपतिष्ठते इत्यर्थः। तत्र योग्यत्वादनयोरेवापेक्षा नान्येषाम्। ततः स्थानेयोगेति। षष्ठीत्येतदुपतिष्ठते। अथवेति। अन्यतरार्थम्पुनर्वचनमिति वदता अवश्यमेव सम्बन्धः कर्त्तव्यः। यत्र गुणवृद्धिशब्दोच्चारणेन गुणवृद्धी विधीयेते तत्रैक

॥ भा० ॥ एकस्तावत्क्रियते तत्रैव इमावपि योगौ षष्ठ्यधिकारमनुवर्त्तिष्येते। अथवा षष्ठ्यधिकारे इमौ योगावपेक्षिष्यामहे। अथवा इदन्तावदयम्प्रष्टव्यः। सार्वधातुकार्द्धधातुकयोर्गुणो भवतीति इह कस्मान्न भवति याता वाता। इदन्तत्रापेक्षिष्यते इको गुणवृद्धी इति। यथैव तर्हि इदन्तत्रापेक्षिष्यते एवमिहापि तदपेक्षिष्यामहे सार्वधातुकार्द्धधातुकयोरिको गुणवृद्धी इति। इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये प्रथमस्याध्यायस्य प्रथमे पादे तृतीयमाह्निकम् ॥ ❁ ॥

॥ कै० ॥ इत्युपतिष्ठत इति। अन्यथा याता वातेत्यादिषु विध्यर्थत्वे सम्भवति कथमन्यतरार्थम्पुनर्वचनं स्यादित्युच्यते। अवश्यकर्त्तव्यायाञ्चापेक्षायामेकवाक्यतयैवापेक्षास्तु तेनैकरूप एवास्यार्थो नतु वाक्यभेदेन स्वातन्त्र्यम्पारतन्त्र्यञ्च। तदपेक्षिष्यामह इति। अस्य स्वातन्त्र्यन्निरसितुमित्यर्थः। इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे प्रथमाध्यायस्य प्रथमे पादे तृतीयमाह्निकं समाप्तम् ॥ ❁ ॥

॥ वि० ॥ एवञ्चैकरूप्यायानुवाद्यत्वमेवास्तु नतु विधेयत्वं वचिस्वपीत्यादीनान्नियामकत्वापादकमिति बोध्यम्। तदपेक्षिष्यामह इति। एवञ्च यथा विधेः स्थान्याकाङ्क्षा तथास्यापि स्वसम्बन्धिविधेयबोधकशास्त्रापेक्षेति एकवाक्यतयैवेति भावः। एवञ्च स्वातन्त्र्यन्दूरापास्तमेव। तदाह। अस्येति। आवृत्तौ तु न मानमिति शिवम्। इति शिवभट्टसुतसतीगर्भजनागेशभट्टकृते महाभाष्यप्रदीपोद्द्योते प्रथमाध्यायस्य प्रथमे पादे तृतीयमाह्निकम् ॥ ❁ ॥



॥ वि० ॥ न धातु। प्राधान्यादिति। प्राधान्यञ्च संस्कार्यत्वरूपम्। असम्बद्धमिति। अलोऽन्त्यस्येत्यनेनापि इक एव प्रसक्त्या परिभाषानिषेधवैयर्थ्यम्। कृत्स्नस्येति।

॥ कै० ॥ न धातुलो। गुणवृद्ध्योः प्राधान्यादयन्निषेधो न तु तद्गुणभावादिक्परिभाषायाः। दीधीवेवीटामिति चासम्बद्धम्परिभाषाया निषेधे स्यात्। कृत्स्नस्य धातोर्ल्लोपे गुणवृद्धिप्रसङ्गाभावादनर्थको

॥ भा० ॥ न धातुलोप आर्द्धधातुके ॥

॥ कै० ॥ निषेधः स्यादिति सामर्थ्याद् धात्वेकदेशलोपोऽत्र धातुलोपोऽभिमतः। अवयवक्रियया‌पि समुदायस्य व्यपदेशदर्शनात्। यथा पटो दग्ध इति। अथवा समुदायशब्दोऽवयवे तदारोपाद्वर्त्तते ॥

॥ वि० ॥ दुरीणो लोपश्चेति इकान्नियोगेन कृत्स्नधातुलोपोऽस्तीति तदसम्भवो नोक्तः। अथवेति। आद्यपक्षे अवयवधर्मस्य समुदाय आरोपोऽन्त्ये समुदायधर्मस्य प्रवृत्तिनिमित्तस्य अवयवे आरोपितत्वमिति भेदः ॥

॥ वि० ॥ परामर्शः शब्देन पृथगुपादानम् । प्रतिपादितमिति । बुद्ध्या पृथक्प्रकर्षादिति भावः । लोपविशेषणमिति । सूत्र श्रुतत्वादिति भावः । सिद्धान्ते त्विति । निषेध्यत्वेन गुणवृद्धिशब्दप्राधान्याल्लोपस्य तद्विशेषणत्वादिति भावः । नच लोपशब्दोऽधिकरणघञन्तः । अदर्शनं लोप इत्यादौ भावसाधनस्यैव प्रसिद्धत्वात् ।

॥ कै० ॥ धातुग्रहणमिति । उपसर्ज्जनस्यापि यथा परामर्शस्तथा केषां शब्दानामित्यत्र प्रतिपादितम् । विनापि धातुग्रहणेन लोपविशेषणमार्द्धधातुकग्रहणं विज्ञास्यते । अनुबन्धलोपस्य चानैमित्तिकत्वाल्लविततेति गुणनिषेधो न भविष्यतीति प्रश्नः ।

॥ भा० ॥ धातुग्रहणं किमर्थम् । इह माभूत् । लूञ् लविता लवितुम् । पूञ् पविता पवितुम् ॥

॥ कै० ॥ सिद्धान्ते तु गुणवृद्धिविशेषणमार्द्धधातुकग्रहणमित्यभिप्रायः । अनुबन्धो न धात्वेकदेशः । यस्मादुपदेश एवेत्संज्ञा । प्रयोगे तु लूशब्द एव धातुसंज्ञः केवलमसौ ञित्कार्य्यं लभते लूशब्दस्यैव हि क्रियावाचित्वमिति तस्यैव धातुसंज्ञा युक्ता ॥

॥ वि ॥ गणे सानुबन्धस्य पाठाद् विशिष्टस्यैव धातुत्वं स्यादत आह । अनुबन्धवितिति । यस्मादिति । उपदेशपदाभावेऽपि अन्तरङ्गत्वात्सर्वतः पूर्वं सा । धातुसंज्ञा तु प्रत्ययविशेषे विधित्सित इति भावः । धातुसंज्ञेत्संज्ञयोः समकालत्वेऽपि न चतिरित्याह । लूशब्दस्यैवेति । अन्वयव्यतिरेकाभ्यां तस्यैव क्रियावाचित्वावगमात् । गणपठितक्रियावाचिनाञ्च धातुत्वविधानादिति भावः ॥



॥ वि० ॥ रोरवीतीति । यङ्लुगन्तस्य रूपम् । शब्दवत्त्वात् । शब्देनोपादानात् । नान्यथेति । अन्यथाऽन्तरङ्गत्वात् तत्पुरुष एव स्यादित्यर्थः । ननु पदप्रयोजनचिन्ता वृत्तिकारस्योचिता न भाष्यकारस्येत्यत आह । क्रमेणेति । तत्तत्पदप्रयोजनक्रमेणेत्यर्थः । क्रममेवाह । आर्द्धधातुकस्य चेति । लोपविशेषणं श्रुतत्वाद् गुणादिविशेषणं प्राधान्यात् । तत्र लोपविशेषणत्वे आर्द्धधातुके परे पूर्वस्य धात्वंशस्य लोप इति वाच्योऽर्थस्तत्फ-

॥ कै० ॥ रोरवीतीति । सत्यार्द्धधातुकग्रहणे शब्दवत्त्वादन्यपदार्थस्य बहुव्रीहिरसन्दिग्धो भवति नान्यथा । क्रमेण सूत्रप्रत्याख्यानायार्द्धधातुकस्य च लोपविशेषणत्वे धातुग्रहणानर्थक्यप्रतिपादनाय

॥ भा० ॥ आर्द्धधातुक इति किमर्थम् । त्रिधा बद्धो वृषभो रोरवीति । किम्पुनरिदमार्द्धधातुकग्रहणं लोपविशेषणमार्द्धधातुकनिमित्ते धातुलोपे सति ये गुणवृद्धी प्राप्नुतस्ते न भवत इति । आहोस्विद्गुणवृद्धिविशेषणमार्द्धधातुकग्रहणम् । धातुलोपे सति आर्द्धधातुकनिमित्ते ये गुणवृद्धी प्राप्नुतस्ते न भवत इति ॥

॥ कै० ॥ प्रत्युदाहरणोपन्यासः । किम्पुनरिति । आर्द्धधातुकग्रहणं लोपविशेषणं वा गुणवृद्धिविशेषणं वा बहुव्रीहिपक्षे तूभयविशेषणं वेति पक्षत्रयसम्भवात् प्रश्नः ॥

॥ वि० ॥ लितमुक्तं भाष्ये आर्द्धधातुकनिमित्ते लोप इति । एवं गुणवृद्धिविशेषणत्वे आर्द्धधातुके प्रत्यासत्त्या पूर्वस्य धातोर्ये गुणवृद्धी इति वाच्योऽर्थः । अनुवादेऽपि इको गुणवृद्धी अचश्चेतिपरिभाषातिरिक्तपरिभाषाणां प्रवृत्तिस्वीकारात् । तत्फलितमुक्तमार्द्धधातुकनिमित्ते ये इति । प्राप्नुत इत्यनेन प्रसक्तस्यैव निषेध इति सूचयति । बहुव्रीहीति । उभयानुग्रहायेति भावः । यद्यपि धातुलोप इति समस्तमार्द्धधातुकविशेषणं तथापि विशेषणशब्दः परिच्छेदकपर इति न दोषः ॥

॥ वि॰ ॥ नन्वाङ्गुण इति । नन्विक्स्यानिकत्वादयमपीग्लक्षणः । नचाचाप्यनुदात्तमिक इति स्वरूपपरम् । उत्तरसूत्रे इव स्वरूपप-
दार्थकत्वव्यवस्थापकशब्दाभावादिति चेन्न । इको गुणवृद्धी इति सम्पूर्णमनुवर्त्त्य यत्रेदन्तत्र न धात्वित्युपतिष्ठत इत्यर्थेनास्यापि परिभाषा-

॥ कै॰ ॥ प्रेद्ध इति । नन्वाङ्गुणोऽनिग्लक्षण इति तन्निषेधो न भविष्यति । परिहारान्तराभिधानादेतन्नाश्रितमित्यदोषः ॥

॥ भा॰ ॥ किञ्चातः । यदि लोपविशेषणम् । उपेद्धः प्रेद्धः । अत्रापि
प्राप्नोति । अथ गुणवृद्धिविशेषणम् । क्नोपयति । अत्रापि प्राप्नोति ।
यथेच्छसि तथास्तु । अस्तु लोपविशेषणम् । कथमुपेद्धः प्रेद्ध इति ॥

॥ वि॰ ॥ त्वाङ्गीकार इति भावात् । यद्वा । यत्रेदन्तदिहिते गुणवृद्धी नेत्यर्थः । तद्वक्ष्यति । यत्रेक्परिभाषा श्चाप्रियते तत्रायं निषेध इति ।
इक्प्रकरणादिति भाष्यप्रतीके अर्थाधिकारेण स्वरूपपरस्त्वेवेक इत्यस्यानुवर्त्तनाद्वा ॥



॥ वि॰ ॥ यदेति । पूर्वं धातुः साधनेनेति सिद्धान्तपक्ष इत्यर्थः । यदा त्विति । पूर्वं धातुरुपसर्गेणेति पक्षे पूर्वमेव जातस्य निषेधायोगा-
दिति भावः । बहिरङ्गस्यासिद्धत्वादिति । द्वितीये बहिरङ्गनिमित्तस्यासिद्धत्वाद् विधिप्रवृत्तिकालेऽनिष्पन्नत्वान्निषेधाप्राप्त्येष्टसिद्धिरित्यर्थः ।
एतेन जातस्य बहिरङ्गस्यान्तरङ्गे कर्त्तव्येऽनेनासिद्धत्वप्रतिपादनेऽपि जातेऽन्तरङ्गे पश्चात्प्राप्तबहिरङ्गस्यानेनासिद्धत्वप्रतिपादने मानाभावः फलाभावो ज्ञापकविरोधश्चेत्य-
पास्तम् । परं त्वयं पक्षः सुट् कात्पूर्व इत्यादिसूत्रेषु भाष्ये दूषित इति भाष्योक्तमेव सम्यक् । नन्विति । इयं च षत्वतुकोरितिसूत्रेण ज्ञापिता । अन्यथा

॥ कै॰ ॥ बहिरङ्ग इति । यदा पूर्वं प्रत्ययः पश्चादुपसर्गयोगस्तदा प्रतिषेधोऽन्तरङ्गो गुणो बहिरङ्गः । यदा तु पूर्वमुपसर्ग-
योगस्तदा गुणोऽन्तरङ्गः पश्चात्प्रत्ययोत्पत्तौ निषेधो बहिरङ्गः सर्वथा बहिरङ्गस्यासिद्धत्वादिष्टसिद्धिः । ननु नाजानन्तर्य इति

॥ भा॰ ॥ बहिरङ्गो गुणोऽन्तरङ्गः प्रतिषेधः । असिद्धं बहिरङ्गमन्तरङ्ग इति । यद्येवं नार्थो धातुग्रहणेन ॥

॥ कै॰ ॥ निषेधात् कथं परिभाषाप्रवृत्तिः । यत्र कार्य्यविधावानन्तर्य्येणाचोराश्रयणं तत्र निषेधादनुपस्थानं परिभाषायाः ।
यथाऽचयूरिति । तत्र ह्रीकोयणचीति वचनादिगचोराश्रयणम् । अस्मिंस्तु प्रतिषेधसूत्रे नास्त्यचोराश्रयणमित्यदोषः ॥

॥ वि॰ ॥ बहिरङ्गासिद्धत्वेनैव सिद्धे तद्वैयर्थ्यं स्पष्टमेव । अचोरिति द्वित्वमविवक्षितम् । धर्मिग्राहकमानस्य तथैव सत्त्वात् । अनुपस्थानमित्यस्याचे-
त्यादिः । तत्र हीति । ततश्च परोऽप्यूडसिद्धो नेत्यर्थः । तेनासिद्धपरिभाषाया अनित्यत्वं ज्ञाप्यते । अत एव भाष्ये विप्रतिषेधसूत्रभिन्नस्थले न क्वाप्येतदुल्लेखो
यथाऽसिद्धपरिभाषाज्ञापकं विप्रतिषेधसूत्र उक्तमपि पुनर्वाह ऊठ्सूत्रे उक्तमिति विवरणकृतः । अस्मिन्निति । निषेधस्य प्राप्तिपूर्वकत्वात् पश्चात् प्रवर्त्तमाने इत्यर्थः ॥

॥ वि॰ ॥ क्नूयधातोर्णिचि पुकि लोपो व्योरिति यलोपः । वाक्यकारः सूत्रेऽव्याप्त्यतिव्याप्तिपरिहाराय परिगणनमाह । परिगणनमिति ।

॥ कै॰ ॥ यङ्यक्क्यवलोप इति । व इत्यत्राकारोऽपि विवक्षितः । तेन धातुपाठे योऽकारान्तः पठितस्तस्य ग्रहणम् । अन्यथा स्त्रिविः कथं निवार्य्येत । वेभिदितेति । वेभिद्यशब्दात्तृच् इट् । यस्य हल इति यलोपः । मरीमृज इति ।

॥ भा॰ ॥ इह कस्मान्न भवति । लूञ् लविता लवितुम् पूञ् पविता पवितुमिति । आर्द्धधातुकनिमित्ते लोपे प्रतिषेधः । नचैष आर्द्धधातुकनिमित्तो लोपः । अथवा पुनरस्तु गुणवृद्धिविशेषणम् । ननु चोक्तं क्नोपयतीत्यत्रापि प्राप्नोतीति । नैष दोषः । निपातनात् सिद्धम् । किं निपातनम् । चेले क्नोपेरिति । परिगणनं कर्त्तव्यम् । यङ्यक्क्यवलोपे प्रतिषेधः । यङ्यक्क्यवलोपे प्रतिषेधो वक्तव्यः । यङ् । वेभिदिता मरीमृजः । यक् । कुषुभिता मगधकः । क्य । समिधिता दृषदकः । वलोपे जीरदानुः । किं प्रयोजनम् । नुम्लोपस्त्रिव्यनुबन्धलोपेऽप्रतिषेधार्थम् । नुम्लोपे स्त्रिव्यनुबन्धलोपे च प्रतिषेधो माभूदिति ॥

॥ कै॰ ॥ यङोऽचि चेति यङ्लुक् । कुषुभमगधशब्दौ कण्ड्वादिगणपठितौ धातू ताभ्यां यक् ण्वुल्तृचौ । यस्य हल इति यलोपः । समिदृषच्छब्दाभ्यां क्यजन्ताभ्यां ण्वुल्तृच्प्रत्ययौ । क्यस्य विभाषेति यलोपः ॥

॥ वि॰ ॥ भाष्ये अत्र यस्य हल इति लोपः समुदायलोप इति मत्वा यक्क्ययोः परिगणनं वेभिदितेत्युदाहरणं च बोध्यम् ॥



॥ वि॰ ॥ ननु भञ्जिरञ्ज्योरौपदेशिकनस्यैव भञ्जेश्च चिणि रञ्जेश्च घञि चेत्यादिना लोप इति नुम्लोप इत्यसङ्गतमत आह । नुमितीति । नन्वनिदिद्दृंहिणा इदं सिद्धमत आह । दृहि दृद्धाविति । स नाश्वेवेति पूर्वपक्षाशयः । ऊडादेश इति । ज्वरत्वरस्त्रिवीत्यनेन ।

॥ कै॰ ॥ नुम्लोप इति । नुमिति नकारस्य पूर्वाचार्य्यसंज्ञा । उपवर्हणमिति । दृहि दृद्धौ इदित्त्वान्नुम् दंहे-रच्यनिटीति वार्त्तिकेन नलोपः । आस्त्रेमाणमिति । अस्त्रेमाणमित्यपि वेदे पठ्यते ।

॥ भा॰ ॥ नुम्लोपे । अभाजि । रागः । उपवर्हणम् । स्त्रिवेः । आस्त्रेमाणम् । अनुवन्धलोपे । लूञ् लविता लवितुम् । यदि परिगणनं क्रियते । स्यदः । प्रश्रथः । हिमश्रथ इत्यत्रापि प्राप्नोति । वक्ष्यत्येतद् निपातनात् स्यदादिष्विति ॥

॥ कै॰ ॥ तत्र नञ्पूर्वात् स्त्रिवेर्मनिन् प्रत्ययः । वकारलोपः । ऊडादेशश्छान्दसत्वादकारस्य न भवति । परि-गणने सति धातुग्रहणं न कर्त्तव्यं भवतीत्यनुवन्धलोपः प्रयोजनत्वेन पठितः ॥

॥ वि॰ ॥ भाष्ये इत्यत्रापि प्राप्नोतीति । वृद्धिरिति शेषः । न प्राप्नोतीति पाठे निषेध इति शेषः । निपातनादिति । स्यदो जवे अवोदैधौद्मप्रश्र-थहिमश्रथा इति निपातनम् । अस्य नलोपमात्रफलकत्वे नलोपविधानेनैव सिद्धे निपातनवैयर्थ्यापत्तिरिति भावः ॥

२९२

॥ वि॰ ॥ तेनेति । अन्यथौर्गुण इत्यादावपि परिभाषाप्रवृत्तौ तस्यापीग्लक्षणत्वे लैगवायन इत्यादौ निषेधः स्यादिति भावः । यश्चेकपरिभाषेति । नचेक इत्यनुवर्त्त्यैको न ते इत्येव व्याख्यानमुचितमिति वाच्यम् । मरीमृजः सरीसृप इत्यादाविकः प्रत्ययाव्यवहितपूर्वत्वाभावा-

॥ कै॰ ॥ इक्प्रकरणादिति । तेन यश्चेक्परिभाषा स्थान्यन्तरनिवृत्तये व्याप्रियते तत्रायं निषेध इत्यर्थः ।

॥ भा॰ ॥ तत्तर्हि परिगणनं कर्त्तव्यम् । न कर्त्तव्यम् । नुम्लोपे कस्मान्न भवति ।
इक्प्रकरणान्नुम्लोपे वृद्धिः । इग्लक्षणयोर्गुणवृद्ध्योः प्रतिषेधः । नचैषेग्लक्षणा वृद्धिः ।
यदीग्लक्षणयोर्गुणवृद्ध्योः प्रतिषेधः । स्यदः प्रश्रथः । हिमश्रथ इत्यत्र न प्राप्नोति इह च
प्राप्नोति अवोदः । एधः । ओद्म इति । निपातनात् स्यदादिषु । निपातनात्तु स्यदादिषु
प्रतिषेधो भविष्यति । न च भविष्यति । यदीग्लक्षणयोर्गुणवृद्ध्योः प्रतिषेधः स्निव्यनुब-
न्धलोपे कथम् । प्रत्ययाश्रयत्वादन्यत्र सिद्धम् । आर्द्धधातुकनिमित्ते लोपे प्रतिषेधः ।
नचैष आर्द्धधातुकनिमित्तो लोपः ॥

॥ कै॰ ॥ प्रत्ययाश्रयत्वादिति । लोपविशेषणमार्द्धधातुकग्रहणमित्यर्थः ॥

॥ वि॰ ॥ न्निषेधानापत्तेः । तदाह । भाष्ये इग्लक्षणयोरिति । यथैतदर्थलाभस्तथोक्तम् । इक्परिभाषालक्षणयोरिति तदर्थः । लोपेति । प्रत्ययाश्रयत्वादिति भाष्यस्य लोपे आर्द्धधातुकप्रत्ययनिमित्तकत्वाश्रयणादित्यर्थ इति भावः ॥

२९३

॥ वि॰ ॥ न प्रत्ययेति । प्रत्ययस्याश्रुतत्वादनाचिप्तत्वाच्चेति भावः । अवश्यं जीरदानुशब्दस्यैवमेव व्युत्पत्तिः कार्येत्याह । एवञ्चेति । अवान्तरपदत्वे सत्येवावग्रह इत्युत्सर्गादिति भावः । ननु रदानुप्रत्यये रेफाकार उदात्तः समासे त्वन्तोदात्तः स्यादत आह । बह्विति । जीरस्य प्रत्ययस्वरेणान्तोदात्तस्य बहुव्रीहौ पूर्वपदप्रकृतिस्वरेणेत्यर्थः । जीवेर्विचि तु गुणनिषेधो भवत्येव ।

॥ कै॰ ॥ जीरदानुरिति । वर्णनिमित्तोऽत्र वकारलोपो न प्रत्ययनिमित्तः । रकि ज्य इति । एवञ्च जीरेत्यवग्रहः

॥ भा॰ ॥ यद्यार्द्धधातुकनिमित्ते लोपे प्रतिषेधः । जीरदानुः । अत्र न प्राप्नोति ।
रकि ज्यः संप्रसारणम् । नैतज्जीवे रूपम् । रक्येतज्ज्यः संप्रसारणं भवति । यावता
चेदानीं रकि जीवेरपि सिद्धं भवति । कथमुपबर्हणम् । वृहिः प्रकृत्यन्तरम् । कथं
ज्ञायते वृहिः प्रकृत्यन्तरमिति । अचीति लोप उच्यते । अनजादावपि दृश्यते ।
निवृह्यते । अनिटीति चोच्यते । इडादावपि दृश्यते । निवर्हिता निवर्हितु-
मिति । अजादावपि न दृश्यते । वृंहयति वृंहकः । तस्मान्नार्थः परिगणनेन ॥

॥ कै॰ ॥ सिद्ध्यति । बहुव्रीहित्वाच्च जीरदानुशब्दे रेफाकार उदात्तः । वृहिरिति । वृह वृहि वृद्धाविति पाठात् ॥

॥ वि॰ ॥ एतेनार्द्धधातुकत्वेन यत्र लोपे निमित्तता तत्रैव लोपे निषेध इत्यपास्तम् । वार्तिकविरोधात् । यङोऽचि चेत्यत्रापि तत्त्वेनानिमित्तत्वाल्लोलुव इत्याद्यसिद्ध्यापत्तेश्च । धिव्यादिभ्यस्तु विजभाव एव । भाष्ये यावता चेदानीमिति । किन्त्वेन गुणनिषेधादिति भावः । अत्र वलोपो लोपो व्योरित्यनेन । इदं च यथाश्रुतसूत्रमते । वलोपप्रत्याख्याने तु रकि ज्य इत्येव शरणम् ॥

२९४

॥ वि॰ ॥ पचद्वयेऽपीति । तन्त्रेणोभयविशेषणत्वपचेऽपीत्यपि बोध्यम् । गुणो गद्याश्रयो णिलोपो यगाश्रयः । अपवादेति । प्रकल्प्य चापवादविषयमिति परिभाषयेति भावः । एतेन गुणप्रतिषेधौ यत्र समानकालौ तत्र चरितार्थो निषेधो नान्तरङ्गं गुणं बाधितुं चमत

॥ कै॰ ॥ भेद्यत इति । गुणो णिलोपश्चार्द्धधातुकनिमित्त इति पचद्वयेऽपि दोषः । अपवादविषयपरिहारा-श्चान्तरङ्गोऽपि गुणोऽत्र न प्रवर्त्तत इत्युपन्यासः ।

॥ भा॰ ॥ यदि परिगणनं न क्रियते । भेद्यते छेद्यते । अत्रापि प्राप्नोति । नैष दोषः । धातुलोप इति नैवं विज्ञायते धातोर्लोपो धातुलोप इति । कथं तर्हि । धातोर्लोपो यस्मिंस्तदिदं धातुलोपं धातुलोप इति ॥

॥ कै॰ ॥ कथं तर्हीति । बहुव्रीहौ सत्येकार्द्धधातुकनिमित्तत्वं लोपस्य गुणवृद्ध्योश्चाश्रितमिति भेद्यत इत्यादौ भिन्ननिमित्तत्वाद् गुणो न निषिध्यते ॥

॥ वि॰ ॥ इत्यपास्तम् । नच भेद्यते इत्यत्राचः परस्मिन्निति णिलोपस्य स्थानिवत्त्वेन तत्राभावातिदेशस्य च सत्त्वेन स्थानिनि णिचि सति अभवतो निषेधस्य लोपेऽप्यभावातिदेशान्न दोष इति वाच्यम् । स्थानिवद्भावाश्रयणे सूत्रप्रत्याख्यानमेवेति तदनाश्रयणेन सूत्रवत् तदनाश्रयणेनैवायं दोष इत्याशयात् ॥

२९५

॥ वि॰ ॥ भाष्ये तस्मादिग्लक्षणा वृद्धिरिति । प्रतिषेध्येति शेषः । अत एवाभाजीत्यादिसिद्धिरिति भावः । अकारलोप इति । अतो लोप इत्यनेन । यङ्लुगन्ताण्ण्वुलि तु सूत्रमतेऽपि निषेधो न । आर्द्धधातुकनिमित्तलोपाभावात् । मरीमृज इति । अत्राल्लोपस्य स्थानिवत्त्वे क्ङित्यजादौ वेष्यत इति विकल्पो न । व्यवस्थितविभाषाश्रयणात् ।

॥ कै॰ ॥ यत्र हलचोरिति । लुका कृत्स्नो यङ् लुप्यत इत्याशयः । अत्रापीति । कृतेऽप्यकारलोप एकदेशविकृतमनन्यवद्भवतीति यकारः

॥ भा॰ ॥ तस्मादिग्लक्षणा वृद्धिः । तस्मादिग्लक्षणयोर्गुणवृद्ध्योः प्रतिषेधः । यदि तर्हीग्लक्षणयोर्गु-णवृद्ध्योः प्रतिषेधः । पापचकः । पापठकः । मगधकः । दृषदकः । अत्र न प्राप्नोति । अल्लोपस्य स्थानिवत्त्वात् । अकारलोपे कृते तस्य स्थानिवत्त्वाद्गुणवृद्धी न भविष्यतः । अनारम्भो वा । अनारम्भो वा पुनरस्य योगस्य न्याय्यः । कथं बेभिदिता मरीमृजकः कुषुभिता समिधिता इति । अत्राप्यकारलोपे कृते तस्य स्थानिवत्त्वाद् गुणवृद्धी न भविष्यतः । यत्र तर्हि स्थानिवद्भावो नास्ति तदर्थमयं योगो वक्तव्यः । क्व च स्थानिवद्भावो नास्ति । यत्र हलचोरादेशः । लोलुवः । पोपुवः । मरीमृजः । सरीसृप इति । अत्रा-प्यकारलोपे कृते तस्य स्थानिवद्भावाद्गुणवृद्धी न भविष्यतः । लुकि कृते न प्राप्नोति । इदमिह संप्रधा-र्यम् । लुक् क्रियतामल्लोपो वेति । किमत्र कर्त्तव्यम् । परत्वादल्लोपः । नित्यो लुक् । कृतेऽप्यल्लोपे प्राप्नोति अकृतेऽप्यल्लोपे प्राप्नोति । लुगप्यनित्यः । कथम् । अन्यस्य कृते लोपे प्राप्नोत्यन्यस्याकृते । शब्दान्तरस्य च प्राप्नुवन् विधिरनित्यो भवति । अनवकाशस्तर्हि लुक् ॥

॥ कै॰ ॥ प्रत्ययसंज्ञो भवत्येवेति भावः । नित्यो लुगिति । लुक्शास्त्रप्रवृत्तिर्नित्या । अनवकाश इति । नाप्राप्ते लोपे लुगारम्भात् ॥

॥ वि॰ ॥ नन्वेवं लुक्शास्त्रं व्यर्थं स्यादत आह । कृतेऽपीति । अवशिष्टे तच्चरितार्थमिति भावः । भाष्ये लुकि कृते इति । अनवकाशत्वादन्तरङ्गान-पीति न्यायाच्च लुकि कृतेऽतो लोपो न प्राप्नोतीत्यर्थः । इतर आशयानभिज्ञ आह । परत्वादिति । ननु यस्य लोपः कृतस्तस्य लुगप्राप्तेराह । लुक्शास्त्रेति ॥

ननु इत्यनन्वितमिति अन्यकर्त्तुरनवधानम् ।

॥ वि० ॥ गौणत्वादिति । अतिदेशविषये गौणत्वाङ्गीकारेऽतिदेशवैयर्थ्यापत्तेरिदं चिन्त्यम् । किञ्च भिन्नविषयेऽपि बाध्यबाधकभावो दृष्टः । यथा व्यधो लिटीति संप्रसारणस्य वकारे चारितार्थ्येऽपि हलादिः शेषबाधकता । भाष्यकारोऽपि मिदचोऽन्त्यादित्यस्य विषयभेदेऽपि प्रत्ययपरत्वबाधकतां वक्ष्यति । तस्मात् कृते चारितार्थ्येऽपि तत्प्राप्तिकालेऽवश्यं प्राप्त्यापवादत्वं भवत्येवेत्याशयः । असम्भव एव बाधकत्वमिति वार्त्तिकानुयायिना सावकाशो लुगित्युक्ते स एवाथापीत्याहेति तदुक्तिः कथञ्चिदिति । भाष्ये अत इत्येवेति । अलोऽन्त्यपरिभाषया अत इत्यनुवृत्तेर्वेति भावः । अयं च लुकोऽपवादः । एवञ्चार्थादवशिष्टस्य लुगिति बोध्यम् । अत्र भ्रस्जो रोपधेति सूत्रादन्यतरस्यांग्रहणस्य मण्डूकप्लुत्यानुवर्त्तनेन योगविभागस्येष्टसिद्ध्यर्थत्वेन च क्वचिदेव पृथगल्लोपो न सर्वत्रेति बोध्यम् । मरीसृज इत्यत्र विकल्पस्तु न । व्यवस्थितविभाषाश्रयणात् ।

॥ कै० ॥ सावकाश इति । भिन्नविषयौ लुगल्लोपौ । अकारस्य लोपो यकारस्य लुक् ततश्च नास्ति येन नाप्राप्तिन्यायः । अथापीति ।

॥ भा० ॥ सावकाशो लुक् । कोऽवकाशः । अवशिष्टः । अथापि कथ-
ञ्चिदनकाशो लुक् स्यात् । एवमपि न दोषः । अल्लोपे योगविभागः करि-
ष्यते । अतो लोपः । ततो यस्य । यस्य च लोपो भवति । अत इत्येव ॥

॥ कै० ॥ यङोऽचि चेत्यत्र यकाराकारसमुदायस्य यङ इति निर्दिष्टस्य विवक्षितत्वादवयवे च यङ्व्यपदेशस्य गौणत्वादिति भावः ॥

॥ वि० ॥ यद्वा तत्र विकल्प इष्ट एव । तदर्थं सूत्रकृतोऽप्येतत्कल्पनावश्यकत्वं मनसि निधायैव तामाश्रित्य सूत्रप्रत्याख्यानमेव वरमिति भाष्याशयः । लोलुवादावुवङि अनादिष्टादचः पूर्वस्य विधेरभावेन स्थानिवत्त्वाभावेऽपि नोपधागुणः । अचः पूर्वत्वेन दृष्टलोल्शब्दात् परस्य गुणे कर्त्तव्ये पञ्चमीसमासेनाल्लोपस्य स्थानिवद्भावसौलभ्यात् । निमित्तत्वेनाश्रितात् पूर्वस्मादित्यर्थे तु न मानम् । अतिप्रसङ्गस्य तदनित्यत्वेनैव परिहारात् । भाष्यानुक्तत्वात् तदनित्यत्वाभावेऽपि पूर्वस्मात् परस्याव्यवहितस्यैव ग्रहणेन हे गौरित्यत्रादोषः । अचः पूर्वत्वांशे स्वरग्रहणाद् भाष्यप्रामाण्याच्चाव्यवधानांशबाधेऽप्यत्र तद्बाधे मानाभावात् । अतिदेशप्रवृत्तिप्राक्कालिकं च तदंशेऽव्यवधानं निविष्टम् । किञ्चाशास्त्रीयस्यापि तस्य तत्स्थानापन्ने तद्धर्मलाभ इति लोकन्यायेनातिदेश इति स्थानिवत्सूत्रे वक्ष्यते । लोलू इत्यस्य लोलुवादेशस्तस्य च गुणघटितो लोलोवित्यादेश इत्याहुः ॥



॥ वि० ॥ दरीदृश इत्यत्राङ्निमित्तगुणस्तु न । अस्याङन्तैकगोचरत्वेन लाक्षणिकतया अङ्ग्रहणेनाग्रहणात् । अत एव दरीदृशक इत्यादौ यङन्ताद् ण्वुलि अङ्निमित्तगुणाभावः । जङ्गमक इत्यादौ यङन्ताद् ण्वुलि उपधालोपश्च । अनङीतिनिषेधाप्रवृत्तेः । जङ्गम इत्यादौ तूक्तयुक्त्या समुदायलुगेवेति न दोषः । निजेगिल इत्यादौ ग्रो यङीति नित्यं लत्वमिष्टमेव । सूत्रमतेऽपि न लुमतेति निषेधस्यानित्यत्वाद् यङ्परत्वमस्ति । नवेति विभाषेति सूत्रे भाष्ये चेदं ध्वनितमिति तत्रैव निरूपयिष्यामः । यदि जरीगृह्यादेः सार्स्यतेश्चाचि सम्प्रसारणगुणाविष्टौ तर्हि सूत्रमतेऽपि न लुमतेतिनिषेधानित्यत्वेन साधनीयौ भाष्यप्रामाण्यादिष्टाविति गम्यते । अत एव पृथगल्लोपे यङो विषयापहाराभावेन अजेर्व्यादेशे यणि वेव्य इति स्यादित्यपास्तम् । योगविभागस्य

॥ कै० ॥ समानाश्रय इति । तुल्यकालत्वादिति भावः । नोनावेत्यत्र तु बहुलग्रहणानुवृत्त्या अनैमित्तिकोऽन्तरङ्गो

॥ भा० ॥ किमर्थमिदम् । लुकं वक्ष्यति तद्बाधनार्थम् । ततो हलः । हल उत्तरस्य च यस्य
लोपो भवति । इहापि तर्हि परत्वाद्योगविभागाद्वा लोपो लुकं बाधेत । कृष्णो नोनाव वृषभो यदी-
दम् । नोनूयतेर्नोनाव । समानाश्रयो लुगल्लोपेन बाध्यते । कश्च समानाश्रयः । यः प्रत्ययाश्रयः ।
अत्र च प्रागेव प्रत्ययोत्पत्तेर्लुग्भवति ॥

॥ कै० ॥ लुक् प्रागेव प्रत्ययोत्पत्तेर्भवति ॥

॥ वि० ॥ क्वाचित्कत्वेन तत्र लुक एव प्रवृत्त्याऽऽहतेः । पुर्वादिभ्यो वान्तेभ्यो विज् नास्त्येव । अनभिधानात् । इदं च लोपो व्योरितिसूत्रे भाष्ये ध्वनितम् । एतद्भाष्यविरुद्धप्रयोगाणां भाष्यानुक्तानामनभिधानमित्यन्ये । नचैवं न धातुलुक्यचीत्येव सिद्धे आर्द्धधातुकग्रहणं व्यर्थमिति वाच्यम् । लोपार्द्धधातक इत्येव षष्ठीतत्पुरुषेण लोपनिमित्तार्द्धधातुक इत्यर्थेन लूञादेर्व्यावृत्तिसिद्धौ धातुग्रहणवत् तस्यापि सत्त्वात् । भाष्ये लुकं वक्ष्यतीति । लुगतो लोपापवादः । अपवादश्च प्रायेण पश्चाद्भावीति भविष्यन्निर्देशः । ननु भिन्नाश्रययोरपि दीर्घवृद्ध्योरियायेत्यादौ बाध्यबाधकभावो दृष्ट इत्यत आह । तुल्यकालेति । बहुलेति । यङोऽचि चेति चकारेण । अन्तरङ्ग इति । प्राक्प्रवृत्तिकत्वमन्तरङ्गत्वम् । न हि तदाऽपवादप्रवृत्तिरिति भावः ॥

॥ वि० ॥ अकित्त्वस्येति । उदुपधाङ्गावादिकर्म्मणोरिति विहितस्येत्यर्थः । एवञ्चाकित्त्वाभावे ङ्किति चेत्येव निषेधः सिद्धो निकुचित इति भावः । सन्निपातः सम्बन्धः । तद्विघात इति कर्म्मण्यण् । अजादौ प्रत्यये इति । यायायतेः क्विचि यातिरित्यादौ आलोपानापत्तेर्वरेग्रहणस्य वैयर्थ्याच्च चिन्त्यमेतत् । अस्य समाधानं त्वस्माभिरुक्तमेव । सम्भवेति । अत एव न पदान्तसूत्रे वरेग्रहणं चरितार्थम् । सत्यकारे यदि स्याद्यकारलोपस्तदा सम्भव उवङादेरिति भावः । ङ्किति च । तत्र यदीति । तस्मिन्नितिपरिभाषानुग्रहायेत्यर्थः । यदा त्विति । निषेध्यत्वेन तयोः प्राधान्यादिति भावः । न हीति । अन-

॥ कै० ॥ निकुचित इति । क्त्वसंयोगेन नलोपे सति उदुपधत्वमिति निमित्तमकित्त्वस्य न भवति । यदि तर्ह्यकार-लोपः क्रियते तदा जङ्गम इत्यत्र तस्य स्थानिवद्भावादुपधालोपः प्राप्नोति । नैष दोषः । अनङीति प्रतिषेधात् । अनर्थको-ऽयमङिति चेद् । लोपस्यापि तर्ह्यप्राप्तिः । अजादौ प्रत्यये तस्य विधानात् । ननु लोलुवादिषूवङादयः स्थानिवद्भावेन न सिध्यन्ति । तेषां स्थानिन्यदर्शनात् । सम्भवमात्रेणाप्यतिदेशो भवतीत्यदोषः । ङ्किति च । ङ्किति प्रतिषेध इति । इक

॥ भा० ॥ कथं स्यदः प्रश्रथः । हिमश्रथः । जीरदानुः । निकुचित इति । उक्तं शेषे । किमुक्तम् ।
निपातनात् स्यदादिषु । प्रत्ययाश्रयत्वादन्यत्र सिद्धम् । रकि ज्यः सम्प्रसारणम् । निकुचितेऽप्युक्तम् ।
किम् । सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति । ङ्किति च । ङ्किति प्रतिषेधे तन्निमित्तग्रहणम् ।
ङ्किति प्रतिषेधे तन्निमित्तग्रहणं कर्तव्यम् । ङ्किन्निमित्ते ये गुणवृद्धी प्राप्नुतस्ते न भवत इति वक्तव्यम् ॥

॥ कै० ॥ इत्यनुवर्त्तते गुणवृद्धी इति च । तत्र यदीक् ङ्कितीत्यनेन विशेष्यते ङ्किति परतो य इगिति तदा तस्मिन्निति निर्दिष्टे पूर्वस्येतिपरिभाषोपस्थानान्निर्दिष्टग्रहणस्य चानन्तर्यार्थत्वाच्चितं स्तुतमित्यादावेव निषेधः स्याद् नतु भिन्नो भिन्नवानि-त्यादाविति तन्निमित्तग्रहणं कर्त्तव्यम् । यदा तु ङ्कित्ग्रहणं गुणवृद्धिविशेषणं तदा परसप्तम्या अप्रसङ्ग एव । न हि विहितयोर्नि-षेधः । अपित्वनभिनिर्वृत्तयोरेवेति परिभाषानुपस्थानान्निमित्तसप्तम्येव ङ्कितीति भवति । ङ्किन्निमित्ता हि तयोः प्राप्तिः ॥

॥ वि० ॥ भिनिर्वृत्ते पूर्वपरव्यवहारस्य कर्त्तुमशक्यत्वात् तदनुपस्थानम् । निर्वृत्तनिषेधे तु देवदत्तहन्तृहतन्यायेन चितमित्यादाविकः श्रवणं न स्यादिति भावः । निमित्तेति । अत्र यस्य च भावेनेति सप्तमी । सा च ज्ञापकत्वार्थिका । ज्ञापकत्वं च सम्बन्धं विनानुपपन्नं सद् विधिशास्त्रक्लृप्तनिमित्तत्वमादाय पर्यवस्यति । एवञ्च निमित्ततया ङ्किन्प्राप्ये गुणवृद्धी नेत्यर्थः । तदाह । ङ्किन्निमित्ता हि तयोः प्रवृत्तिरिति ।



॥ वि० ॥ केचित्तु सिद्धसाध्यसमभिहारन्यायेन निमित्तत्वं फलतीत्याहुः । परेतु ङ्कितीत्येद् गुणवृद्धिविशेषणमेव भवनक्रियातदभावयोरम्-र्त्तत्वेन ङ्कित्परत्वासम्भवादिक इत्यस्याप्यनुवृत्त्यनुक्तेः । अनुवृत्तावपि तस्य शब्दपरत्वात् । तस्मान्निमित्तग्रहणाभावे ङ्कितीति सप्तम्या तस्मिन्निति निर्दिष्टे पूर्वस्येत्युपस्थित्या ङ्किति अव्यवहिते पूर्वस्य ये गुणवृद्धी प्राप्नुतस्ते नेत्यर्थः । अनुवादे परिभाषा नोपतिष्ठत इति त्विको गुणवृद्धी अचश्चेति सूत्रद्वयविषय-मेवेत्युक्तं भाष्ये । तस्य निषेधस्यानुपलम्भाच्च । तद्वक्ष्यति भाष्ये ङ्कित्यनन्तरो गुणभाव्यस्तीति । निमित्तग्रहणे तु तत्सामर्थ्यात् परिभाषानुपस्थानं तत्प्रत्याख्याने तु लिङ्गादिना तदनुपस्थानम् । सम्भवन्त्यां परसप्तम्यां यस्य चेति सप्तम्या असम्भवाच्च । उपपदविभक्तेरितिन्यायात् । सिद्धसाध्यसमभिहारन्यायस्यापि तस्मिन्नितिशास्त्रेण

॥ कै० ॥ उपधारोरवीत्यर्थमिति । उपधाया अपीकः प्रतिषेधार्थं रोरवीतेर्यङ्निमित्तप्रतिषेधनिवृत्त्यर्थम् । अत्र हि तिब्निमित्तो गुणो न यङ्निमित्तः । ननु चेति । आकाङ्क्षया पुगन्तलघूपधस्येति सन्निधानं मन्यते । तथाहि ।

॥ भा० ॥ किं प्रयोजनम् । उपधारोरवीत्यर्थम् । उपधार्थं रोरवीत्यर्थञ्च । उपधार्थं तावत् । भिन्नः । भिन्नवानिति ।
किं पुनः कारणं न सिध्यति । ङ्कितीत्युच्यते तेन यत्र ङ्कित्यनन्तरो गुणभाव्यस्ति तत्रैव स्यात् । चितं स्तुतम् । इह तु न स्याद्
भिन्नः । भिन्नवानिति । ननु च यस्य गुण उच्यते तत् ङ्कित्परत्वेन विशेषयिष्यामः ॥

॥ कै० ॥ ङ्किति गुणवृद्धी न भवत इत्युक्ते कस्येत्याकाङ्क्षायां यस्य प्राप्ते इत्यस्ति पुगन्तलघूपधस्यापेक्षा । अथवा ङ्कितीति प्रत्ययग्रह-णात् प्रत्ययेनाङ्गं सन्निधाप्यते ततश्च ङ्किति भिन्नमित्यादौ लघूपधस्यानन्तर्यात् सिद्धो निषेधः ॥

॥ वि० ॥ बाध एव । अत एव निमित्तग्रहणप्रयोजनावसरे हत इत्युदाहरिष्यति । कैयटोक्तरीत्या इक्पदानुवृत्तावेव निमित्तग्रहणमिति वार्त्तिकस्योक्तिसम्भवेन तत्प्रयोजनदानानुक्तिसम्भवः स्पष्ट एवेत्याहुः । उपधाया अपीति । उपधायां रोरवीतौ चार्थः प्रयोजनं प्रवृत्तिनिवृत्तिभ्यां प्रतिषेधो यस्य तत् तन्निमित्तग्रह-णमिति भाष्यार्थ इति भावः । उपधारोरवीतिभ्यामित्युपधारोरवीत्यर्थमित्यर्थेन नित्यसमास इत्यन्ये । नन्वसन्निहितं पुगन्ताङ्गादि कथं तत्परत्वेन विशेष्यमत आह । आकाङ्क्षयेति । ननु निषेध्ये गुणवृद्धी प्रति ङ्कित्प्रत्ययपरत्वरूपं निषेधविषयं प्रति चाकाङ्क्षा नाङ्गं प्रतीत्यत आह । अथवेति । निषेध्यगुणादेरप्रत्यये ङ्कित्यप्रसङ्गेन प्रत्ययग्रहणमिति भावः । एवञ्च प्रत्ययस्याङ्गांशे उत्थिताकाङ्क्षत्वात् तस्यैव तद्विशेषणमिति भावः ॥

॥ वि० ॥ आद्यव्याख्यायां परिहारभाष्यं योजयति । ततश्च समुदेति । द्वितीये त्विदं बोध्यम् । नाचित्तविशेषणत्वं न्याय्यमिति । भाष्येऽङ्ग-विशेषणे हीति । पुगन्तलघूपधस्येत्यस्य बहुव्रीहित्वाङ्गविशेषणत्वे इत्यर्थः । यदीत्यनेन न स्वपक्षस्योपादेयतोच्यते किन्तूभयोः साम्यमुच्यते इत्या-ह । तन्निमित्तपक्षस्यापीति । सार्वधातुकनिमित्तस्य लघूपधलक्षणस्य तिब्निमित्तस्य । भाष्येऽन्तरङ्गलक्षणत्वादिति । प्राधान्येनाच एव यत्रानन्तर्याश्रयणं तत्रैव

॥ कै० ॥ लघूपधेति । ततश्च समुदायस्यानिर्देशादवयवस्य चेको व्यवधानात् तदवस्थैवाप्राप्तिरित्यर्थः । तन्निमित्तपक्षस्यापि दुष्टतामाह ।

॥ भा० ॥ पुगन्तलघूपधस्य चाङ्गस्य गुण उच्यते तत्राच क्ङित्परम् । पुगन्तलघूपधस्येति नैवं विज्ञायते पुगन्तस्याङ्गस्य लघूपधस्य चेति । कथं तर्हि । पुकि अन्तः पुगन्तः । लघ्वी उपधा लघू-पधा । पुगन्तश्च लघूपधा च पुगन्तलघूपधम् पुगन्तलघूपधस्येति । अवश्यञ्चैतदेवं विज्ञेयम् । अङ्गवि-शेषणे हि सतीह प्रसज्येत । भिनत्ति छिनत्तीति । रोरवीत्यर्थश्च । त्रिधा बद्धो वृषभो रोरवीति । यदि तन्निमित्तग्रहणं क्रियते शचङन्ते दोषः । रियति पियति धियति प्रादुद्रुवत् प्रासुस्रुवत् । अत्र न प्राप्नोति । शचङन्तस्यान्तरङ्गलक्षणत्वात् सिद्धम् । अन्तरङ्गलक्षणत्वादियङुवङोः कृतयोरनुपधा-त्वाद्गुणो न भविष्यति । एवं क्रियते चेदं तन्निमित्तग्रहणं न कश्चिद्दोषो भवति ॥

॥ कै० ॥ शचङन्ते दोष इति । सार्वधातुकनिमित्तस्य गुणस्य निषेधेऽपि लघूपधलक्षणगुणनिषेधाप्रसङ्ग इत्यर्थः । रियति पियति धिय-तीति । रि पि गतौ धि धारण इति तुदादौ पाठः ॥

॥ वि० ॥ नाजानन्तर्य इति निषेधप्रवृत्तेस्तस्या अभावाच्चेति भावः । नन्वदुद्रुवदित्यत्र सार्वधातुकेति गुणात् पूर्वं नित्यत्वाच्चङि द्विर्वचनेऽचीति निषेधादुवङभावे द्वित्वात् परत्वाल्लघूपधगुणो दुर्वार इति चेन्न । अन्तरङ्गत्वाद् द्वित्वस्यैव प्रवृत्तेः । ओर्णोतेर्द्वित्वकरणेनोपधाकार्यस्य द्वित्वात् प्रावल्यबोधनेऽपि न क्षतिः । ज्ञापकस्य सजातीयापेक्षत्वेनोपधाकार्यस्य द्वित्वात् प्रावल्यबोधने यत्र द्वित्वसमाननिमित्तता द्वित्वनिमित्तार्वाग्निमित्तता वा तत्रैव तत्प्रावल्यबोधनादित्याहुः ॥



॥ वि० ॥ भूयः पुनरर्थे । एवमकारोऽपीति । क्ङित्परे गुणवृद्धी न प्रयोक्तव्ये इति सूत्रार्थः । तत्र यथा चितमित्यादावसतो गुणादेः प्रागभावः पाल्यते एवं सतोऽपि निवृत्तिः साध्येत । सतोऽपि निवृत्तेरदिप्रभृतिभ्य इत्यादौ दृष्टत्वादिति भावः । नन्विति । तथाचेक इत्यनुवृत्तिसामर्थ्याद-सत एवाप्रयोगः प्रतिपाद्यत इति भावः । नेनिक्ते इत्यत्र निजां त्रयाणां गुणः श्लावित्यभ्यासस्य गुणः । प्रसक्तत्वानभिनिर्वृत्तत्वयोर्विरोधमाशङ्क्याह । सामान्येति । निवृत्तिः । अनभिनिर्वृत्तिः क्रियते । विहितप्रतिषिद्धयोर्विकल्पस्तर्हि स्यादत आह । परमार्थेति । गुणविध्येकवाक्यतया क्ङिन्नसार्वधातुकादौ गुण इत्यर्थात् क्ङिति

॥ कै० ॥ हतो हथ इति । यथैवादिप्रभृतिभ्यः शप इत्यनेन शब् निवर्त्यते एवमकारोऽपि निषेधेन निवर्त्स्यतेत्याशयः । नन्विग्लक्षणो-ऽयं गुणो न भवतीति निषेधाप्रसङ्गः । सत्यम् । परिहारान्तरस्य संभवान्नैतदाश्रितम् । प्रसक्तस्येति । सामान्यलक्षणेन विशेषलक्षणाप-रामर्शेन यत्प्राप्तं पुनर्विशेषलक्षणपरामर्शात् स्वरूपेणानभिनिर्वृत्तं तस्य निवृत्तिः क्रियते । परमार्थतस्तूत्सर्गापवादयोरेकवाक्यतायाम-

॥ भा० ॥ इमानि च भूयस्तन्निमित्तग्रहणस्य प्रयोजनानि । हतो हथ उपोयते औयत लौयमानिः पौयमानिर्नेनिक्त इति । नैतानि सन्ति प्रयोजनानि । इह तावत् हतो हथ इति प्रसक्तस्यानभिनिर्वृत्तस्य प्रतिषेधेन निवृत्तिः शक्या कर्तुम् । अयं च धातूपदेशावस्थायामेवाकारः ॥

॥ कै० ॥ प्राप्त्यनुमानं बाध इति सिद्धान्तः । चितमित्यादौ च प्रसक्तानभिनिर्वृत्तगुणनिषेधे वचनस्य चरितार्थत्वाद्धतो हथ इति भूता-कारनिवृत्तावस्याव्यापारः । अदिप्रभृतिभ्य इत्यनेन तु गत्यन्तराभावात् सत्येव प्रक्रियायां शब् निवर्त्यते । यद्येवं भवत इत्यादौ प्रसक्तोऽन-भिनिर्वृत्त एव शबकारः कस्मादनेन न निवर्त्स्यते । नैष दोषः । शब् भवतीत्यस्यां चोदनायां गुणरूपेणाचोदनान्नायं गुणनिषेधविषयः ॥

॥ वि० ॥ तयोरप्राप्तिरेवेति भावः । सा च पर्युदासविधया । यद्वा प्रसज्य प्रतिषेधेन वाक्यार्थबोधे तदंशे सामान्यशास्त्रजज्ञानस्याप्रामाण्यं कल्प्यते । एकवा-क्यताफलसम्पत्तेस्त्वेकवाक्यतायामित्युक्तमिति द्रष्टव्यम् । भूताकारेति । सिद्धाभावपरिपालनेनैव सिद्धावसिद्धाभावविधाने गौरवादिति भावः । प्रक्रियायामिति । वस्तुतस्तु तत्रापि लुकानुत्पत्तिरेवान्वाख्यायते इति बोध्यम् । नैष इति । एकान्ता अनुबन्धा इति भावः । अयमेव न्याय्य इति तस्य लोप इति सूत्रे वक्ष्यति ॥

॥ वि० ॥ कार्यित्वादिति । अङ्गस्य गुणो भवति तत्संबन्ध्यभ्यासेक इत्यर्थ इत्यभिमानः । उत्तरस्त्विति । पक्ष इति शेषः । क्ङित्परस्य यस्य गुणः प्राप्तस्तस्य नेति सूत्रार्थ इति भावः । भाष्ये धातुं क्ङिदिति । परत्वेन निर्दिष्टं यत् क्ङिदिति तद्धातुं प्रति विहितमिति विशेषयिष्यामः । तथाच धातु-

॥ कै० ॥ उपोयत इति । वेञो यकि संप्रसारणे कृते उभयपदाश्रयत्वाद्बहिरङ्गो गुणः । औयतेत्यादौ बहिरङ्गाश्रयत्वाच्च वृद्धिर्बहिरङ्गा । नेनिक्त इति । क्ङित्परत्वेनाङ्गस्य विशेषणादङ्गस्य च कार्यित्वात् पूर्वपक्षः । उत्तरस्त्वभ्यासस्य कार्यित्वात् तस्य च परेण रूपेण व्यवधानादि-ति । धातुं क्ङित्परत्वेनेति । न धातुलोप इत्यत्रोपसर्जनेऽपि धातौ धातुशब्दमात्रस्य स्वरितत्वादिहानुवृत्तिरित्यर्थः । यदीति । क्ङित्यनन्तरस्य

॥ भा० ॥ इह चोपोयते औयत लौयमानिः पौयमानिरिति । बहिरङ्गे गुणवृद्धी अन्तरङ्गः प्रतिषेधः । असिद्धं बहिरङ्गमन्तरङ्गे । नेनिक्ते इति परेण रूपेण व्यवहितत्वान्न भविष्यति । उपधार्थेन तावन्नार्थः । धातोरिति वर्तते । धातुं क्ङित्परत्वेन विशेषयिष्यामः । यदि धातुर्विशेष्यते विकरणस्य न प्राप्नोति । चिनुतः । सुनुतः । लुनीतः पुनीत इति । नैष दोषः । विहितविशेषणं धातुग्रहणम् । धातोर्यो विहित इति । धातोरेव तर्हि न प्राप्नोति । नैवं विज्ञायते धातोर्विहितस्य क्ङितीति । कथं तर्हि । धातोर्विहिते क्ङितीति । अथवा कार्यकालं संज्ञापरिभाषम् । यत्र कार्यं तत्र द्रष्टव्यम् । पुगन्तलघूपधस्य गुणो भवतीत्युपस्थितमिदं भवति क्ङिति नेति ॥

॥ कै० ॥ धातोर्गुणवृद्धी न भवत इति वाक्यार्थं मत्वा प्रश्नः । धातोरेवेति । धातोर्विहितस्य क्ङित्यनन्तरे नेति मत्वा प्रश्नः । धातोर्विहित इति । धातोर्विहिते क्ङित्यनन्तरे यो धातुर्विकरणो वा तस्य प्रतिषेध इत्यर्थः । अथवेति । यत्र गुणवृद्धी विधीयेते तत्र क्ङिति नेत्युप-तिष्ठते इत्येवमियं परिभाषा भवति । तत्र पुगन्तलघूपधस्येत्यत्रास्या उपस्थाने सति येन नाव्यवधानमिति भिन्नमित्यादौ निषेधो भविष्यति ॥

॥ वि० ॥ विहितं क्ङिद् यतः कुतश्चित् परं तदवयवस्य गुणो नेति सूत्रार्थ इत्यर्थः । तद् ध्वनयन्नाह । मत्वा प्रश्न इति । धातुर्विकरणो वेति । धातुना विहित-विशेषणबललभ्यमेतदुभयम् । येन नेति । पुगन्तलघूपधस्येति तत्पुरुष इति भावः । श्रुतत्वात् सार्वधातुकादिकं क्ङितीति च पुगन्तादीनामेव विशेषणमित्यभिमानः ॥



॥ वि० ॥ प्रतिषेध्यापेक्षायामिति । गुणवृद्धिश्रुत्या तद्रूपप्रतिषेध्याकाङ्क्षायां यावद्गुणवृद्धिविधायकशास्त्रविषयकनिषेधवाक्यानां व्यक्तिपक्षे वि-निगमनाविरहादुपप्लव इत्यर्थः । प्रधानानीति । अनेन तद्विषयकनिषेधोपप्लवे बीजं दर्शितमित्याहुः । अङ्गविकलेति । पूर्वस्य परस्य वेति सन्देहेन तदुपस्थितेरिति भावः । नचैवं नेनिक्ते इत्यत्रापि निषेधः स्यात् । येन नेतिन्यायेनैकवर्णव्यवधाने एव निषेधप्रवृत्तेर्बोधनात् । न्यायव्युत्पादनार्थेति । न्यायव्युत्पतिस्तत्प्रतिपत्तिः । श्रोतॄणां तदुत्पादनायेत्यर्थः ।

॥ कै० ॥ अथवेति । माभूत् परिभाषा तथापि प्रतिषेधस्य प्रतिषेध्यापेक्षायां यावन्तो यादृशाः प्रतिषेद्धव्यास्तावन्ति प्रति-षेधसूत्राणीति पुगन्तलघूपधगुणे प्रतिषेध्येऽनवकाशः प्रतिषेधो व्यवहितेऽपि प्रवर्तते । अथवा यथोद्देशपक्षाश्रयेण भाष्यम् ।

॥ भा० ॥ अथवा यदेतस्मिन् योगे क्ङिद्ग्रहणं तदनवकाशं तस्यानवकाशत्वाद्गुणवृद्धी न भविष्यतः । अथवाऽऽचार्यप्रवृत्तिर्ज्ञापयति । भवत्युपधालक्षणस्य गुणस्य प्रतिषेध इति । यदयं त्रसिगृधिधृषिक्षिपेः क्नुः इको झल् हलन्ताच्चेति क्नुसनौ कितौ करोति । कथं कृत्वा ज्ञाप-कम् । कित्करणस्यैतत् प्रयोजनम् । गुणः कथं न स्यादिति । यदि चात्र गुणप्रतिषेधो न स्यात् । कित्करणमनर्थकं स्यात् । पश्यति त्वाचार्यो भवत्युपधालक्षणस्य गुणस्य प्रतिषेध इति । ततः क्नुसनौ कितौ करोति ॥

॥ कै० ॥ तथाहि । प्रधानान्यात्मसंस्काराय सन्निधीयमानानि गुणभेदं प्रयुञ्जत इति यदेतस्मिन्नित्युक्तम् । अथवेति । लिङ्गान्निर्दिष्टाऽङ्गविकला तस्मिन्निति परिभाषोपतिष्ठत इत्यर्थः । अनेकपरिहारोपन्यासो न्यायव्युत्पादनार्थः ॥

॥ वि० ॥ भाष्ये हलन्ताच्चेति । नन्वेतद्विहितकित्त्वस्य न ज्ञापकत्वम् । दिदृक्षतीत्यादावमागमनिषेधेन धिप्सतीत्यादौ नलोपेन च तच्चारितार्थ्यात् । इको झलित्यपि न । तद्विषये इकः क्ङित्परस्यैव सम्भवादिति चेन्न । रुजिदृशोर्झल्यमकित्सनि इको झल् दम्भेरिति लघुन्यासेन सिद्धे सामान्यतोऽतिदेशस्य गुणप्रति-षेधार्थत्वेन ज्ञापकसाम्राज्यात् । रुदविदमुषां क्त्वासनोर्ग्रहस्वपप्रच्छां सन्गुधकुषक्लिशां क्त्वा कित्त्वविधानं च ज्ञापकं बोध्यम् ॥

सर्वपुस्तके परस्मैपदविशिष्टः पाठस्तया नागेशलत्व पुस्तकेऽपीति ग्रन्थकर्तुरेव भ्रमः । ज्ञाश्रुस्मृदृशामित्यात्मनेपदस्य व्यवस्थापितत्वाद् दिदृक्षते इति पाठः ।

॥ वि० ॥ अङ्गाधिकार इति । स्वरितलिङ्गासङ्गेनेति भावः । कार्यकालमिति । तथाच तत्रोपस्थितत्वादिदमप्याङ्गमङ्गाधिकारस्यैकवाक्यतापन्नत्वादिति भावः । स्वरितत्वासङ्गवशात् तदधिकारपठितमिव तदधिकारस्यैकवाक्यतापन्नमपि गृह्यते इति तात्पर्यम् । निषेधेऽपि परिभाषासादृश्यात् परिभाषात्वमुक्तम् । सादृश्यं च निषेध्याकाङ्क्षतया तदेकवाक्यतामात्रेणेति बोध्यम् । छान्दसमिति । यङोऽचि चेति चेन बहुलं छन्दसीत्यनुकृष्य यङो लुग्विधानादित्यर्थः । नच हुश्नुवोरितिसूत्रस्थेन

॥ कै० ॥ वहिरङ्ग इति । ततश्चासिद्धत्वादसत्त्वान्निषेधानुपपत्तिरित्यर्थः ॥

॥ भा० ॥ रोरवीत्यर्थेनापि नार्थः । क्ङितीत्युच्यते । नचात्र क्ङितं पश्यामः । प्रत्ययलक्षणेन प्राप्नोति । न लुमता तस्मिन्निति प्रत्ययलक्षणप्रतिषेधः । अथापि न लुमताङ्गस्येत्युच्यते । एवमपि न दोषः । कथम् । न लुमता लुप्तेऽङ्गाधिकारः प्रतिनिर्दिश्यते । किं तर्हि । योऽसौ लुमता लुप्यते तस्मिन् यदङ्गं तस्य यत्कार्यं तन्न भवतीति । अथाप्यङ्गाधिकारः प्रतिनिर्दिश्यते । एवमपि न दोषः । कथम् । कार्यकालं संज्ञापरिभाषम् । यत्र कार्यं तत्र द्रष्टव्यम् । सार्वधातुकार्द्धधातुकयोर्गुणो भवतीत्युपस्थितमिदं भवति क्ङिति नेति । अथवा छान्दसमेतत् । दृष्टानुविधिश्छन्दसि भवति । अथवा वहिरङ्गो गुणोऽन्तरङ्गः प्रतिषेधः । असिद्धं वहिरङ्गमन्तरङ्गे ॥

॥ वि० ॥ हुश्नुवोरित्यस्य भाषायां यङ्लुक्सत्ताज्ञापकत्वपरभाष्येणावर्णान्तेभ्यो यङ्लुग् भाषायामप्यस्तीति लभ्यतेऽन्यथा ज्ञापितेऽप्यचारितार्थ्यं स्पष्टमेवेति वाच्यम् । तत्प्रामाण्येनाजादौ क्ङिति क्वचित् तत्सत्ताङ्गीकारेऽपि सर्वत्र भाषायां तत्सत्त्वे मानाभावात् । तत्रत्यभाष्यस्यैकदेश्युक्तित्वाच्च । गुणो वहिरङ्ग इति । गुणस्य वहिरङ्गता वहिर्भूतसार्वधातुकाश्रयत्वात् । नन्वसिद्धस्यानिष्पन्नस्यैव निषेधः क्रियते तत्राहासत्त्वादिति । शास्त्रासिद्धत्वादत्रासत्त्वबुद्ध्या प्रतियोगिज्ञानाभावान्निषेधानुपपत्तिरिति भावः ॥



॥ वि० ॥ उभयविशेषणाय बहुव्रीह्यर्थमित्यन्वयः । यथेति । प्रथमस्येत्येतत्तु कर्मधारयेऽपि विशेष्यं शक्यं कर्त्तुमिति न तद् बहुव्रीहिगमकमिति भावः । ननु सूत्रान्तरप्राप्तनिवृत्तिः कथं तत्राह । सामर्थ्यादिति । अयमाशयः । आर्द्धधातुक इति योगो विभज्यते धातुलोप इति वर्तते षष्ठीतत्पुरुषश्च । एवञ्च धात्वेकदेशलोपे सति प्रत्यासत्त्यान्तरङ्गतया च लुप्तधात्वेकदेशनिमित्तो गुणवृद्धिनिषेधश्चेदार्द्धधातुक एवेति नियमस्तत्सार्थक्यादिति तद् ध्वनयन्नाह । यङ्निमित्तश्चेति । भाषेति ।

॥ कै० ॥ अथवेति । ननु बहुव्रीह्यर्थमुभयविशेषणायार्द्धधातुकग्रहणं स्यादिति कथमनवकाशत्वम् । उच्यते । विनाप्यार्द्धधातुकग्रहणेन बहुव्रीहिर्लभ्यते यथैकाचो द्वे इत्यत्र । रोरवीतीत्यत्रानैमित्तिकत्वाल्लोपस्य गुणनिषेधः पूर्वेण न प्राप्नोतीत्यार्द्धधातुकग्रहणसामर्थ्यात् सूत्रान्तरप्राप्तोऽपि निषेधो वाध्यत इत्यर्थः । यङ्निमित्तश्च निषेधोऽन्तरङ्गत्वाद्बाध्यते न सार्वधातुकनिमित्त इति रोरुत इत्यादौ निषेधो भवत्येव । एतच्च छान्दसत्वमभ्युपेत्य यङ्लुको भाष्यकारेणोक्तम् ।

॥ भा० ॥ अथवा पूर्वस्मिन् योगे यदार्द्धधातुकग्रहणं तदनवकाशं तस्यानवकाशत्वाद्गुणो भविष्यति । इह कस्मान्न भवति । लैगवायनः । कामयते । तद्धितकाम्योरिक्प्रकरणात् ॥

॥ कै० ॥ भाषाविषयत्वे तु यङ्लुको बहूनि प्रयोजनानि आर्द्धधातुकग्रहणस्य सम्भवन्ति । तोतोर्ति दोदोर्ति दोधोर्ति जोहोर्ति मोमोर्ति इत्यादिषु तुर्वी दुर्वी धुर्वीत्यादिभ्यो यङ्लुकि तिपि वकारच्छकारयो राल्लोप इति लोपे कृते असत्यार्द्धधातुकग्रहणे बहुव्रीहावप्याश्रिते न धातुलोप इति गुणनिषेधः प्राप्नोति स माभूदित्येवमर्थमार्द्धधातुकग्रहणं स्यात् । अनेन चात्र व्यवधानान्नास्ति निषेध इति सति प्रयोजने कथमनवकाशं स्यात् ॥

॥ वि० ॥ हुश्नुवोः सार्वधातुक इत्यत्र हुश्नुग्रहणादिति भावः । इत्यादिभ्य इति । आदिना मूर्च्छामूर्छौ । राल्लोप इति । तत्र हि क्ङितीति नानुवर्त्तते तदनुवृत्तिपक्षे तोतोर्मीत्याद्युदाहरणम् । नन्वेवमपि क्ङिति चेति निषेधोऽत्र दुर्वार इति तद्वारणं विनाऽस्य चारितार्थ्यं कथमत आह । अनेनेति । वहिरङ्गराल्लोपस्यान्तरङ्गे यङाश्रयप्रतिषेधे कार्येऽसिद्धत्वाद् द्वाभ्यां व्यवधानादप्राप्तिः । सनः किल्त्वेन तु एकव्यवधानमेवाश्रितमिति भावः । वस्तुतस्तु भाष्यप्रामाण्यादेषां प्रयोगाणां लोकेऽभाव इत्येवाध्यवसेयम् ॥

॥ वि॰ ॥ नन्विग्लक्षणयोरित्युक्तावपि लैगवायने इक्स्थानिकत्वेनेग्लक्षणत्वात् स्यादेव गुणनिषेधोऽत आह । इक इतीति । अर्थाधिकारानुरोधेन पदपरमेवेक इति सम्बध्यत इति भावः । लोपादिति । उपदेशकाल एवान्तरङ्गत्वाल्लोपप्रवृत्तिरिति भावः । पिद् ङिद् नेति ।

॥ कै॰ ॥ इग्लक्षणयोरिति । इक इत्येवं ये गुणवृद्धी तयोर्निषेध इत्यर्थः । लकारस्येति । अनुबन्ध इत्संज्ञकत्वाल्लोपात् स्थानिनि न संधी-

॥ भा॰ ॥ इग्लक्षणयोर्गुणवृद्ध्योः प्रतिषेधः । नचैते इग्लक्षणे । लकारस्य ङित्त्वादादेशेषु स्थानिवद्भावप्रसङ्गः । लकारस्य ङित्त्वादादेशेषु स्थानिवद्भावः प्राप्नोति । अचिनवम् असुनवम् अकरवम् ।

॥ कै॰ ॥ यत इत्यनल्विधाविति प्रतिषेधो न प्रवर्तते । पिद् ङिद् न भवतीति भाष्यकारस्य कल्पना न वार्तिककारस्येति दोषोपन्यासः ।

॥ वि॰ ॥ सार्वधातुकमित्यचापिदिति योगविभागेन प्रसज्य प्रतिषेधेनायमर्थो लभ्यते । तत्र योगविभागसामर्थ्यात् स्थानिवत्त्वप्राप्तान्या वा ङित्त्वप्राप्तिः सर्वापि प्रतिषिध्यत इत्याशयः । भाष्ये स्थानिवद्भावः प्राप्नोतीति । तथाचाचिनवमित्यादौ गुणप्रतिषेधप्रसङ्ग इति भावः ।



॥ वि॰ ॥ ननु ङित इति । तथाच न स्थानिवत्त्वेन ङित्त्वं प्रार्थ्यमिति भावः । ङिद्व्यपदेश इति । स्थानिलसंबन्धिङस्येत्संज्ञाऽभाव एव ज्ञाप्यते । लस्येत्यस्य लघटितस्येति व्याख्या कार्येत्यर्थः । यत्कार्यं पूर्वस्येति । प्राप्तमिति शेषः । नत्विति । प्रथमोपस्थितेत्संज्ञाशास्त्रबाधापेक्षया स्थानिवत्त्वबाध एव युक्त इति भावः । युक्त्यन्तरमप्याह । अन्यथेति । लङ्लिङादेर्ङिद्व्यपदेशस्योच्छिन्नत्वादित्यर्थः । ङित आदेशस्येत्यर्थस्तु नेत्युक्तमेव । तदभावस्यैवेति ।

॥ कै॰ ॥ कथं नित्यं ङित इति । ननु ङितो लकारस्येति तत्रार्थः स्थितो नतु ङित आदेशस्येति । अन्यथा पचावः पचन्तीति लोपः स्यात् । एवं मन्यते । यासुटो ङित्त्वेन ज्ञापकेन स्थानिन एव लकारस्य ङिद्व्यपदेश उच्छिद्यते ङकारोच्चारणं तु लुङ्लङ्लृङ्क्ष्वित्यादौ विशेषणार्थं स्यात् । ङितो यदिति । स्थानिवद्भावेन लादेशे ङिति यत्कार्यं पूर्वस्य तन्न भवतीति

॥ भा॰ ॥ लकारस्य ङित्त्वादादेशेषु स्थानिवद्भावप्रसङ्ग इति चेद्यासुटो ङिद्वचनात् सिद्धम् । यदयं यासुटो ङिद्वचनं शास्ति तज्ज्ञापयत्याचार्यो न ङिदादेशा ङितो भवन्तीति । यद्येतज् ज्ञाप्यते कथं नित्यं ङित इतश्चेति । ङितो यत्कार्यं तद्भवति ङिति यत्कार्यं तन्न भवतीति । किं वक्तव्यमेतत् । नहि । कथमनुच्यमानं गंस्यते । यासुट एव ङिद्वचनात् ॥

॥ कै॰ ॥ ज्ञाप्यते । ननु स्थानिन एव ङिद्व्यपदेश उच्छिद्यते । अन्यथा नित्यं ङित इत्येतद् निर्विषयं स्यादित्यर्थः । यासुट एवेति । ङितो यत्कार्यं तद्यासुटो न किञ्चिदतिदेष्टव्यमस्ति । किन्तु ङिति यत्कार्यं विधीयते संप्रसारणादिकं तदतिदिश्यते तच्चेत् स्थानिवद्भावात् स्यादतिदेशोऽनर्थकः स्यादित्यतिदेशः क्रियमाणो ङिति यत् कार्यं तदभावस्यैव ज्ञापकः ॥

॥ वि॰ ॥ ज्ञापकस्य सजातीयापेक्षत्वादिति भावः । भाष्ये यासुट एवेत्यस्य न समुदायस्येत्यर्थः । एवस्यावधारणार्थत्वात् । यदि समुदायस्य ङित्त्वं स्यात् तदा ङितो यत्कार्यं तदपि तत्प्राप्तियोग्यमिति तदभावमपि ज्ञापयेत् । तथा नित्यं ङित इत्यादेर्ङित आदेशस्येत्येवार्थः । पचावः पचन्तीत्यादौ तु न दोषः । सार्वधातकमपिदित्यत्रानुवृत्तङिदित्यस्य लुप्तसप्तमीकतया ङितीव कार्यस्यैवातिदेशादिति भावः । नच यासुटि ङिति किं कार्यं प्राप्नोति तन्निमित्तग्रहणेन निषेधाप्राप्तेरिति वाच्यम् । संप्रसारणप्राप्तेः । न हि तत्र प्रत्यय इत्यस्तीत्याहुः ॥

॥ वि० ॥ नन्ववयवे कृतस्य लिङ्गस्य समुदायविशेषकत्वाद्यासुड् ङिदित्युक्तावपि समुदायस्य ङित्त्वं भवत्येव । अत एव तन्निमित्तग्रहणेऽपि निषेधः सिध्यति तच्च स्थानिवत्त्वेन सिद्धमिति व्यर्थं ङित्त्वं स्थानिनो ङिद्व्यपदेशोच्छेदेऽपि ज्ञापकं स्याद् ङितो यत्कार्यं तदभावस्यापि वा ज्ञापकं स्यादत आह । भाष्येऽपर्याप्तश्चेति । अस्य ङित्त्वस्य केवले आगमे संप्रसारणविधानेन चरितार्थत्वादवयवेऽचरितार्थस्यैव च समुदायविशेषकत्वमत एव पठिता विद्येत्यादौ ङीन्नेति भावः । ङितं चैनमित्यवयवमित्यर्थः । यासुट एव हीति । यासुड् ङिदिति सामानाधिकरण्याद् यासुट्पदस्य स्वविधानाय स्वरूपपरस्य ङित्त्वसंबन्धे तदादिलक्षणायां मानाभाव इति भावः । प्रत्याख्यातत्वादिति । स्वरितत्वप्रतिज्ञानात्समुदायगतनिमित्तत्वस्यावयवे आरोपादपि निषेधप्रवृत्तिरित्यन्ये । यदिच समुदाय इति । ननु स्थानिवत्त्वेन ङित्त्वे यासुटः कथं ङित्त्वमिति चेन्न । तद्ङित्त्वसाध्यफलस्य तावतापि सिद्धेरिति भावः । केषाञ्चिदिति । अत्र पाठे यासुट एवेत्येवकारः प्रसिद्धार्थकः । केवलयासुटो ङित्त्वं व्यर्थं गुणनिषेधे तन्निमित्तग्रहणात् । संप्रसारणमपि धात्वाश्रिते प्रत्यये एव । एवञ्च सामर्थ्यात् समुदा-

॥ कै० ॥ अपर्याप्तश्चेति । समुदायस्य ङिद्व्यपदेशे कर्तव्ये यासुडसमर्थो यासुट एव ह्यनेन ङित्त्वं क्रियते न समुदायस्य क्ङिति चेत्यत्र तन्निमि-त्तग्रहणस्य प्रत्याख्यातत्वादगुणनिमित्तेऽपि यासुटि ङिति गुणनिषेधः सिध्यति । यदिच समुदाये स्थानिवद्भावेन ङित्कार्यमभविष्यद् यासुटो

॥ भा० ॥ अपर्याप्तश्चैव हि यासुट् समुदायस्य ङित्त्वे ङितं चैनं करोति
तस्यैतत्प्रयोजनं ङितो यत्कार्यं तद्यथा स्याद् ङिति यत्कार्यं तन्माभूदिति ॥

॥ कै० ॥ ङित्त्वं न व्यधास्यद् विहितं तज्ज्ञापयति ङिति यत्कार्यं तल्लादेशे न भवतीति । केषाञ्चित्पाठः सुपर्याप्तश्चैव हीति । तत्रावयवङित्त्व-द्वारेण समुदायस्य ङित्त्वं विधीयत इति निमित्तसप्तमीपक्षेऽपि गुणनिषेधः सिध्यति । तस्मिन् पक्षे ङितं चैनं करोतीति समुदायः परामृश्यते ॥

॥ वि० ॥ यविशेषकं तदिति भावः । ङितञ्चैनमिति । स्थानिवत्त्वेन ङित्त्वे सिद्धेऽपीति शेषः । ङितो यत्कार्यमित्यादि ज्ञापकस्य सजातीयापेक्षत्वादिति भावः । नहि यासुड्विशिष्टस्य ङित्प्रयुक्तं किञ्चिदनेन ङित्त्वेन प्राप्नोति । नित्यं ङित इत्यस्य च ङितो लस्येत्येवार्थात् । आदेशस्य ङित इत्यर्थे तु दोष उक्त एव । सार्व-धातकमित्यादौ ङिदित्यस्य उपमेये प्रथमादर्शनेन सप्तम्यन्तताया अन्याय्यत्वादिति भावः । नन्विदं ङित्त्वं स्युयादित्यादावनिग्लक्षणगुणवृद्धिबाधनार्थं चिनुयुरित्यादौ जुसि चेतिनिषेधार्थं च चरितार्थमिति चेन्न । ङिच्च पिन्नेतिभाष्योक्तकल्पनयैव सिद्धेः । एतदर्थमेव हि भाष्ये तत्स्वीकारः । यत्तु संज्ञापूर्वकविधेरनित्यत्वेन वृद्धे-र्वारणम् । अत एवोत औदिति नास्तीति । तन्न । अस्यार्थस्य भाष्यास्पृष्टत्वात् । ज्ञाजनोर्जेत्यस्याङ्गवृत्तपरिभाषाज्ञापकत्वपरभाष्यासङ्गतेश्च । अनयैवान्यथा सिद्धेः । जुसि चेत्यत्र वसस्याचीत्यतोऽचीत्यनुवर्त्याजादौ जुसि गुणविधानाच्च चिनुयुरित्यत्र दोषः । एवञ्चानत्यपूर्वपक्षसिद्धान्त्येकदेशिन एवेति बोध्यम् ॥



॥ वि० ॥ दीधी । भाषायामिति । अनन्यभावो हि विषयशब्दार्थ इति भावः । दृष्टस्यैवेति । भाषायान्तु सम्प्रति प्रयोगेऽदृष्टस्यापि व्याकर-णान्तरानुसारेण शिष्टप्रयोगादिना वावगतसाधुत्वस्याप्यनुविधानमित्यर्थः । एवञ्च वेदे आदीध्यनमित्यादिलक्ष्याभावादसम्भवदुक्तिकं सूत्रमिति

॥ कै० ॥ दीधीवेवीटाम् । छन्दोविषयत्वादिति । भाषायामेतयोः प्रयोगाभावात् । दृष्टानुविधित्वाच्चेति । यद्यपि भाषायामपि दृष्टमेवानुविधीयते । सिद्धे शब्दार्थसम्बन्धे इति न्यायात् । तथाप्यादीध्यनमित्यादिप्रयोगश्छन्दसि नास्ति दृष्टस्यैवच्छन्दस्यनुवि-

॥ भा० ॥ दीधीवेवीटाम् । किमर्थमिदमुच्यते । गुणवृद्धी माभूतामिति । आदीध्यनम् आदीध्यकः । आवे-व्यनम् आवेव्यक इति । अयं योगः शक्योऽकर्त्तुम् । कथम् । दीधीवेव्योश्छन्दोविषयत्वाद् दृष्टानुविधित्वाच्च छ-न्दसः । अदीधेद् अदीधयुरिति च गुणस्य दर्शनादप्रतिषेधः । दीधीवेव्यौ छन्दसो विषयौ दृष्टानुविधिश्च च्छन्दसि भवति । अदीधेद् अदीधयुरिति च गुणस्य दर्शनादप्रतिषेधः । अनर्थकः प्रतिषेधोऽप्रतिषेधः । प्रजापतिर्वै यत्किञ्चिन्मनसाऽदीधेत् । शोषाय हृतः कृपयन्नदीधेत् । अदीधयुर्दाशराज्ञे हृतासः । भवेदिदं युक्तमुदाहरणम् । अदीधेदिति । इदं त्वयुक्तमदीधयुरिति । अयं जुसि गुणः प्रतिषेधविषय आरभ्यते स यथैव क्ङिति नेत्येनं निषेधं बाधते एवमिममपि बाधेत । नैष दोषः । जुसि गुणः प्रतिषेधविषये आरभ्यमाणस्तुल्यजातीयं प्रतिषेधं बाधते । कश्च तुल्यजातीयः प्रतिषेधः । यः प्रत्ययाश्रयः । प्रकृत्याश्रयश्चायम् ॥

॥ कै० ॥ धानमित्यर्थः । नतुच्छन्दस्येव दृष्टानुविधानमिति । अथवा दृष्टानुविधिरित्यस्यायमर्थः । गुणश्छन्दसि दृश्यते नतु सर्वत्र गुणनिषेध इति । अदीधेदिति । लङ् । व्यत्ययेन तिप् । अदीधयुरिति । जक्षित्यादयः षडित्यभ्यस्तत्वाज्जुसादेशः । प्रकृत्याश्रयश्चायमिति । ततश्चान्तरङ्गत्वादनेनैव भाव्यमित्यर्थः ॥

॥ वि० ॥ भावः । अथवेति । एवञ्च पक्षद्वयस्याप्याप्तिप्रतिपादकं भाष्यमिति भावः । व्यत्ययेनेति । दीधीङो ङित्त्वात् । परस्मैपदोपलक्षणं तिबिति । अन्तरङ्गत्वादिति । नन्वेवं बहिरङ्गस्य जुसि गुणस्य कथमनेन निषेध इति चेन्न । सर्वस्यापि गुणस्य प्रत्ययाश्रयत्वेन बहिरङ्गतयान्तरङ्गनिषेधाभावादिति भावः ॥

॥ वि० ॥ सर्वचैतन्न्यायानाश्रयणे हेतुमाह । कार्यविशेषेति । यच्छब्देन तत्तद्रूपेण कार्याणां परामर्शादिति भावः । केचित्तु सामान्यचिन्ता-विषयेऽप्येतं न्यायं योजयन्ति तदा येनेत्यस्य खेतरेणेत्यर्थः । भाष्येऽकाणिषमिति । सिजन्तस्याङ्गस्य मिपोऽमि लघूपधगुणः प्राप्नोति । श्वःप्रयोगे लुडर्थः । तत्र हि तिपो डादेशे टिलोपे च तास्प्रत्ययान्तमङ्गं भवति । टचि ह्यनङ्गत्वान्न गुणप्राप्तिरिति भावः । भाष्ये पुनरिड्ग्रहणस्येति । नच नेत्यस्यनिवृत्त्यर्थं

॥ कै० ॥ येन नाप्राप्त इति । कार्यविशेषचिन्तापेक्षायामयं न्यायो नतु कार्य्यसामान्यं बाध्यमित्यस्यापेक्षायामेतन्न्या-यावतारः । कथं दीध्यदिति । लेट् तिप् इतश्च लोपः परस्मैपदेष्वितीकारलोपः । लेटोऽडाटावित्यडागमः । श्यन्

॥ भा० ॥ अथवा येन नाप्राप्ते तस्य बाधनं भवति । नचाप्राप्ते क्ङिति नेत्येतस्मिन् प्रतिषेधे जुसि गुण आरभ्यते । अस्मिन् पुनः प्राप्ते चाप्राप्ते च । यदि तर्ह्ययं योगो नारभ्यते । कथं दीध्यदिति वेव्य-दिति च । दीध्यद्वेव्यदिति च श्यन् व्यत्ययेन । दीध्यदिति वेव्यदिति च श्यन् व्यत्ययेन भविष्यति । इट-श्चापि ग्रहणं शक्यमकर्त्तुम् । कथमकणिषमरणिषं कणिता श्वो रणिता श्व इति । आर्द्धधातुकस्येड्व-लादेरित्यत्रेडितिवर्त्तमाने पुनरिड्ग्रहणस्य प्रयोजनमिडेव यथा स्याद् यदन्यत्प्राप्नोति तन्माभूदिति ॥

॥ कै० ॥ व्यत्ययेनेति । श्यनो ङित्त्वाद्गुणाभावः । यीवर्णयोर्दीधीवेव्योरितीकारलोपः । क्वचित्तु शे व्यत्ययेनेतिपा-ठः । तत्र शस्य ङित्त्वाद्गुणाभावः । एरनेकाच इति यणादेशः । इडितिवर्तमाने इति । नेड् वशि कृतीत्यतः ।

॥ वि० ॥ तत् स्पष्टश्चेदं नेड्वशीत्यत्र भाष्ये इति वाच्यम् । क्वचिदेकदेशोऽप्यनुवर्तत इति न्यायेन नेड्वशीत्यत्र नञो निवृत्तिसिद्धेरिति भावः । वस्तुतस्तु अत्र-त्यमिदं भाष्यमेकदेश्युक्तिः । आर्द्धधातुकस्येतिसूत्रस्थेड्ग्रहणस्य च नेड्वशीतिसूत्रे भाष्ये प्रत्याख्यानात् । तत्करणेन नियमरूपगुरुतरयत्नमाश्रित्यैतत्प्रत्याख्यानस्यायु-क्तत्वात् । अङ्गस्येत्यनुवृत्तावपि अङ्गाधिकारविहितविकारस्यैव व्यावृत्तेः शब्दमर्यादयाऽलाभाच्च । अन्त्येऽपि सिद्धत्ववचनस्य ज्ञापकत्वाश्रयणे गौरवमिति बोध्यम् ॥



॥ वि० ॥ क्विविति । अप्रत्यय इत्यस्याश्रूयमाणः प्रत्यय इत्यर्थः । कृदन्तत्वात् प्रातिपदिकत्वे स्वादयः । झलन्तत्वाभावादिति । स्वविधौ स्था-निवत्त्वाभावादजन्तलक्षणोऽपि नेति द्रष्टव्यम् । ननु क्वौ लुप्तस्य स्थानिवत्त्वनिषेधादल्लोपस्य स्थानिवत्त्वं दुर्लभमत आह । क्वाविति । अलावीदित्य-त्रेति । नच समार्त्तेत्यत्र ह्रस्वादङ्गादिति सिज्लोपाय सिद्धत्ववचनं चरितार्थं सिद्धत्वे हि परत्वात् सिज्लोपे ततो वृद्धिरन्यथा पूर्वं वृद्धौ स न स्यादिति वाच्यम् । लाव-

॥ कै० ॥ पिपठीरिति । पिपठिषतेः क्विप् । अतो लोप इत्यकारलोपः । षत्वस्यासिद्धत्वात् ससजुषो रुरिति रुत्वम् । पूर्वत्रासिद्धे न स्थानिवदिति अल्लोपस्य रुत्वे स्थानिवद्भावाभावः । आङ्गमिति । अङ्गस्येत्यनुवर्तनादङ्गा-धिकारविहितं यद्रूपान्तरमिटस्तदेव निवार्यते इडेव यथा स्यादिति नियमेनेत्यर्थः । र्वोरुपधाया इति च दीर्घत्वं नाङ्गम् । यत्तु ग्रहोऽलिटि दीर्घत्वं तद्वचनाद्भवति । पिपठिषि ब्राह्मणकुलानीत्यत्र त्वकारलोपस्य स्थानिवद्भा-

॥ भा० ॥ किञ्चान्यत् प्राप्नोति । गुणः । यदि नियमः क्रियते । पिपठि-षतेरप्रत्यये पिपठीः । दीर्घत्वं न प्राप्नोति । नैष दोषः । आङ्गं यत्कार्य्यं तन्नि-यम्यते नचैतदाङ्गम् । अथवाऽसिद्धं दीर्घत्वं तस्यासिद्धत्वान्नियमो न भविष्यति ॥

॥ कै० ॥ वाज् झलन्तत्वाभावान्नुमभावः । तेन पिपठींषीति कथं सान्तमहतः संयोगस्येतिदीर्घत्वमिति न चोदनीयम् । क्वौ विधिं प्रति न स्थानिवदित्यर्थो व्यवस्थापयिष्यते नतु क्वौ लुप्तं न स्थानिवदिति । अथवेति । इडेवेत्यस्मिन्नियमे दीर्घत्वस्यासिद्धत्वान्नास्ति नियमेन व्यावृत्तिः । ततश्च शास्त्रदृष्ट्याऽविकृतरूप एवेट् । प्रयोग एव तु विकृतः । अलावीदित्यत्र तु सिज्लोप एकादेशे सिद्ध इत्यसिद्धत्वनिषेधवचनात् सवर्णदीर्घत्वं भवति ॥

॥ वि० ॥ स्थायामडिति पक्षे सर्वतो वृद्धेरन्तरङ्गत्वेन तत्पक्षे सिज्लोपाप्राप्त्या तदेकवाक्यत्वेन पक्षान्तरेऽपि सिजलोपाभावस्यैवौचित्येन समार्ष्टेत्येवरूपस्यौचित्यात् सत्यभिधाने । सिज्लोप एकादेश इति तु सिज्लोपोत्तरप्राप्तसवर्णदीर्घरूपैकादेशविषयमेवेति बोध्यम् । वस्तुतो नियमस्यैकदेश्युक्तित्वादिफलोऽयं विचार इति तत्त्वम् ॥

॥ वि० ॥ हलोऽनं । अन्तराशब्दो मध्ये इत्यर्थे । न त्वाधारस्येति । कालमात्रस्येत्यर्थः । अर्द्धेति । वर्णादवर्णोच्चारणोऽर्द्धमात्राकालस्य नियतत्वात् तदधिकोऽर्द्धमात्राकाल इत्यर्थः । अत एव मात्राकालोऽवग्रह इतिप्रातिशाख्यान्तरैरविरोधः । नैव दोष इत्यादेः संज्ञाभावे न दोषः संज्ञायां च न प्रयोजनमित्यर्थ इत्याह । दोषनिवृत्तये इत्यादि । अप्सव्यशब्दे इति ।

॥ कै० ॥ हलोऽनन्तराः संयोगः । कथमिदमिति । किमन्तरशब्दस्य नञा बहुव्रीहिरथान्तराशब्दस्येतिप्रश्नः । अन्तरं विवरं वर्णशून्यः काल इत्यर्थः । अविद्यमाना इति । मध्ये येषामन्ये वर्णा अविद्यमाना इत्याधेयस्य निषेधो न त्वाधारस्य । अवग्रह इति । अर्द्धमात्राकालोऽवग्रह इष्यते । अर्द्धमात्राकालं स्थित्वा वर्णान्तरमुच्चार्य्यते तत्र गुरोरन्तत इति प्लुतो न भवेत् । नैव दोष इति । दोषनिवृत्तये संज्ञा क्रियते प्रयोजनाभि-

॥ भा० ॥ हलोऽनन्तराः संयोगः । अनन्तरा इति कथमिदं विज्ञायते । अविद्यमानमन्तरमेषामिति आहोस्विदविद्यमाना अन्तरा येषामिति । किञ्चातः । यदि विज्ञायते अविद्यमानमन्तरमेषामिति । अवग्रहे संयोगसंज्ञा न प्राप्नोति । अप्सु इति अप् स्विति । विद्यते ह्यत्रान्तरम् । अथ विज्ञायते अविद्यमाना अन्तरा येषामिति । न दोषो भवति । यथा न दोषस्तथास्तु । अथवा पुनरस्त्वविद्यमानमन्तरमेषामिति । ननु चोक्तम् । अवग्रहे संयोगसंज्ञा न प्राप्नोति अप्सु इति अप् स्विति । विद्यते ह्यत्रान्तरमिति । नैव दोषो न प्रयोजनम् । संयोगसंज्ञायां सहवचनं यथाऽन्यत्र । संयोगसंज्ञायां सहग्रहणं कर्त्तव्यम् । हलोऽनन्तराः संयोगः सहेति वक्तव्यम् । किं प्रयोजनम् । सहभूतानां संयोगसंज्ञा यथा स्यात् । एकैकस्य माभूदिति । यथाऽन्यत्र । तद्यथा । अन्यत्रापि यत्रेच्छति सहभूतानां कार्य्यं करोति तत्र सहग्रहणम् । तद्यथा । सह सुपा उभे अभ्यस्तं सहेति ॥

॥ कै० ॥ निर्वृत्तये वा इह चोभयाभावः । अधिकरणवृत्तेर्दूराद्भूतसंबन्धाभावात् । विचार्य्यमाणानामित्यादौ तु वाक्यस्य टेरित्यनुवर्त्तते न तु गुरोरन्तत इति । अप्सव्यशब्दे दोष इति चेत् । नैवंविधे विषये प्रकृत्यवयवस्यावग्रहं पदकाराः कुर्वन्ति । अप्सुयोनिरित्यादावपि समासघटकपदानामन्तोऽवगृह्यत इति सुशब्दात् पूर्वस्य नास्त्यवग्रहः । संयोगसंज्ञायामिति । वृद्धिसंज्ञावदानन्तर्य्यव्यवस्थितानां हलां प्रत्येकं संयोगसंज्ञा प्राप्नोति ॥

॥ वि० ॥ अप्सुशब्दाद्दिगादियति अपो योनियन्मतुप्ष्वित्यलुक् । प्रकृत्यवयवस्य । तद्धितप्रकृत्यवयवस्य । अत्र च वैदिकसम्प्रदाय एव शरणम् । अन्त इति । समासे समस्यमानपदान्ते एवावग्रहः । अयमपि वैदिकसम्प्रदाय एव । नन्वनन्तरग्रहणादेकैकस्य संज्ञा दुर्लभेत्यत आह । आनन्तर्य्येति । एवञ्च तदुपलक्षणमिति भावः ॥



॥ वि० ॥ संज्ञाप्रतिबन्धेतिपाठे कर्मणि घञ् बोध्यः । संज्ञाप्रतिबद्धेतिपाठः सुगम एव । कस्मादिति । बहूनां सन्निधानेऽविशेषेण द्वयोर्बहूनां च संज्ञायाः सिद्धान्तयिष्यमाणत्वादिति भावः । परिहरति । एत्वे इति । पूर्वत्रासिद्धीयमद्विर्वचने इति तु द्विर्वचने कार्य्येऽन्यस्यासिद्धत्वं

॥ कै० ॥ किञ्च स्यादिति । द्वयोरानन्तर्य्ये एकैकस्यापि संयोगसंज्ञायां गुरुसंज्ञाप्रतिबद्धकार्य्यसिद्धिरिति प्रश्नः । निर्यायादिति । सति रेफे यकारः संयोग इत्येत्वप्रसङ्गः । ननु समुदायस्यापि संज्ञित्वेऽचो रहाभ्यां द्वे इति

॥ भा० ॥ किञ्च स्याद् यद्येकैकस्य संयोगसंज्ञा स्यात् । इह निर्यायाद् निर्वायात् । वाऽन्यस्य संयोगादेरित्येत्वं प्रसज्येत । इह च संह्रषीष्टेति । ऋतश्च संयोगादेरितीट् प्रसज्येत । इह च संह्रियते इति । गुणोर्त्तिसंयोगाद्योरिति गुणः प्रसज्येत । इह च दृषत्करोति समित्करोतीति । संयोगान्तस्य लोपः प्रसज्येत । इह च शक्ता वस्तेति । स्कोः संयोगाद्योरिति लोपः प्रसज्येत । इह च निर्यातो निर्वातः । संयोगादेरातो धातोर्यण्वत इति निष्ठानत्वं प्रसज्येत । नैष दोषः । यत्तावदुच्यते । इह तावन्निर्यायाद् निर्वायात् । वाऽन्यस्य संयोगादेरित्येत्वं प्रसज्येतेति । नैवं विज्ञायते । संयोग आदिर्यस्य सोऽयं संयोगादिः संयोगादेरिति ॥

॥ कै० ॥ यकारस्य द्विर्वचने कृते कस्मादेत्वं न भवति । यथा ग्लेयादिति । एत्वे कर्तव्ये पूर्वत्रासिद्धमिति द्विर्वचनस्यासिद्धत्वान्नायं दोषः । शक्तेति । वचि तकारे झलि परतः ककारः संयोगो भवत्यादिश्चेति लोपप्रसङ्गः ॥

॥ वि० ॥ नेत्यर्थकं नतु द्विर्वचनस्य तदभावप्रतिपादकमिति भावः । संयोगो भवत्यादिश्चेति । प्रत्येकं संज्ञापक्षे स्कोः संयोगावयवत्वासंभवेन षष्ठीसमासासम्भवाल्लाघवाच्च कर्मधारय एवेति भावः । आदिशब्दश्च पूर्वभूतसमीपवाची आदित्वञ्च प्रत्यासत्त्या संयोगत्वाक्रान्तवर्णान्तरापेक्षयैवेति पदान्तांशे संयोगादिग्रहणचारितार्थ्यं बोध्यम् । अन्यथा ह्यर्कयतेरप्रत्ययेऽर्क् इत्यादावन्त्यकस्यापि लोपः स्यात् ॥

३१४

॥ वि० ॥ कथं हलाविति । अयं पूर्वपक्षोऽयुक्तः । संयोगस्य द्वित्ववत्त्वेन प्रतीतेरेवाभावात् । संयोगत्वेनैवानेकसंयोगप्रतीतेः । नहि हलावनेकबोध उपसर्जनाचेति भाष्यसम्मतं सङ्ख्याविशेषानवगमस्यैव भाष्यकृतोक्तत्वात् । नत्वनेकानवगम इति तेनोक्तमिति विभाव्यताम् । संयोगात् पर इति । नचाङ्गाद्यवयवसंयोगग्रहणायादिग्रहणम् । तत्र यद्यपि दरिद्रातौ न फलम् । आर्द्धधातुकविवक्षायां तस्याऽऽल्लोपविधानात् । तथापि खट्वादिभ्य आचारक्विबन्तेभ्यो लिङि खट्वायादित्यादौ एत्ववारणं फलमिति वाच्यम् । स्वसिचसूत्रादुपदेशपदानुवृत्त्या घुमास्थाद्यन्यस्यौपदेशिकस्यैव ग्रहणेन नामधातुष्वेत्वाप्रवृत्तेरिति भावः । खट्वादिभ्य

॥ कै० ॥ संयोगाविति । कथं हलावुपसर्जनार्थस्य द्वित्वावगतिरिति चेत् । आदिग्रहणसामर्थ्यात् । अन्यथा संयोगादिति वक्तव्यं स्यात् । संयोगात् परो य आकारस्तदन्तस्याङ्गस्यैत्वमित्यर्थलाभात् । संयोगावन्ताविति । अत्रापि संयोगस्य लोप इत्येव संयोगेन पदस्य विशेषणात् तदन्तविधौ लब्धेऽन्तग्रहणमाश्रितसङ्ख्याभेदः संयोगो यथा गृह्येतेत्येवमर्थं विज्ञायते । संयोगयोरिति । षष्ठीसमास

॥ भा० ॥ कथन्तर्हि । संयोगावादी यस्य सोऽयं संयोगादिः संयोगादेरिति । एवं तावत् सर्वमाङ्गं कार्य्यं-परिहृतम् । यदप्युच्यते । इह च हषत्करोति समित्करोतीति । संयोगान्तस्य लोपः प्रसज्येतेति । नैवं विज्ञा-यते । संयोगोऽन्तो यस्य तदिदं संयोगान्तं संयोगान्तस्येति । कथन्तर्हि । संयोगावन्तावस्य तदिदं संयोगान्तं संयोगान्तस्येति । यदप्युच्यते । इह च शक्ता वस्तेति । स्कोः संयोगाद्योरन्ते चेति लोपः प्रसज्येतेति । नैवं विज्ञायते । संयोगावादी संयोगादी संयोगाद्योरिति । कथन्तर्हि । संयोगयोरादी संयोगादी संयोगाद्योरिति ॥

॥ कै० ॥ आश्रीयत इत्यर्थः । संयोगयोरिति तु द्विवचननिर्देशः स्कोर्द्वित्वात् समीपयोरपि हलोर्द्वित्वात् कृतः । तेनायमर्थः । झलि परतो यः संयोगः पदान्ते च यः संयोगस्तदादिः समीपो यः सकारः ककारश्च तयोर्लोप इति । नचैवं शक्ता वस्तेति प्राप्नोति । संयोगादेरात इत्यत्रापि संयोगादात इत्येव संयोगात् परो य आकारस्तदन्ताद्धातोर्नत्वमिति सिद्धे आदिग्रहणं द्वित्वसङ्ख्याश्रयणार्थम् ॥

॥ वि० ॥ आतो धातोरितिसूत्रस्थभाष्यप्रामाण्येनाचारक्विपोऽभावाच्च । सिद्धान्ते तु निर्यायादित्यादिवारणायाङ्गावयवसंयोगग्रहणाय तदिति बोध्यम् । भाष्ये आ-दी इति । यद्यपि मुख्यादित्वमुभयोर्व्याहतं तथाप्येक आदिशब्दो गौण इति भावः । पूर्ववद् द्विवचनान्तसमासेन दोषपरिहार इति न भाष्यार्थ उभयत्रापि द्विवचनो-पपादनादत आह । षष्ठीति । एवञ्च झलंशेऽपि संयोगादिविशेषणमर्थवद्भवतीति भावः । आदिशब्दश्च नाद्यवयववाची असम्भवादित्याह । समीप इति । झलादि-विशेष्यस्य संयोगस्योपसर्जनत्वेऽपि सौत्रत्वाद्वृत्तिः । नच शक्तेत्यत्र व्यपदेशिवद्भावेन स्वस्यापि स्वसमीपत्वेन दोषस्तदवस्थः । आदिग्रहणसामर्थ्याद्व्यपदेशिवद्भावाप्रवृत्तेः ॥

३१५

॥ वि० ॥ वस्तुतस्तु प्रत्येकं संज्ञेति पक्षो वाच्यवृत्त्या सूत्रान्न लभ्यत एवेति व्युत्पादयितुं गूढाशयः पृच्छति । भाष्ये कथं कृत्वेति । तमेवालाभं व्याचष्टे । संयोगेति । एवञ्चान्वर्थसंज्ञाविरोधात् प्रत्येकं वाक्यपरिसमाप्तिन्यायो नाश्रयितुं शक्यते इति व्यर्थं सहेतीति भावः । किञ्च श्रुतमानन्तर्यं प्रत्येकसंज्ञावादिनोपलक्षणमाश्रयितव्यं विशेषणत्वमेवोचितम् । तस्मिं सम्भवति उपलक्षणत्वस्यान्याय्यत्वात् । किञ्चाद्यन्तग्रहणसामर्थ्याद् द्विवचनान्तेनैव विग्रह इत्यर्थस्य नियमेनालाभः । बहुवचनान्तेनापि सम्भवादित्याहुः । वस्तुतोऽन्वर्थसंज्ञा चिन्त्या । तदाश्रयणे घटपटौ संयुज्येते यत्रेत्यादौ संयोगानुयोगिप्रतियोग्यतिरिक्तस्यैवान्यपदा-

॥ कै० ॥ कथं कृत्वेति । संयोगसंज्ञाया अन्वर्थत्वात् संयुज्यन्तेऽस्मिन् वर्णा इति समुदायः संयोग इत्यर्थाश्रयणात् सह-वचनं न कर्त्तव्यमित्यर्थः । आहोस्विदिति । द्वयोरित्यस्य विशेषस्यानाश्रयणाद्बहूनामेवेत्यर्थः । यथा पपाचेत्यत्र समुदायैकाचो

॥ भा० ॥ यदप्युच्यते । इह च निर्यातो निर्वात इति । संयोगादेरातो धातोर्यण्वत इति निष्ठानत्वं प्रसज्येते-ति । नैवं विज्ञायते । संयोग आदिर्यस्य सोऽयं संयोगादिः संयोगादेरिति । कथं तर्हि । संयोगावादी यस्य सोऽयं संयोगादिः संयोगादेरिति । कथं कृत्वैकैकस्य संयोगसंज्ञा प्राप्नोति । प्रत्येकं वाक्यपरिसमाप्तिर्दृष्टेति । तद्यथा । वृद्धिगुणसंज्ञे प्रत्येकं भवतः । ननु चायमप्यस्ति दृष्टान्तः समुदाये वाक्यपरिसमाप्तिरिति । तद्यथा । गर्गाः शतं द-ण्ड्यन्तामर्थिनश्च राजानो हिरण्येन भवन्ति । न च प्रत्येकं दण्डयन्ति । सत्येतस्मिन् दृष्टान्ते यदि तत्र प्रत्येकमित्यु-च्यते इहापि सहग्रहणं कर्त्तव्यम् । अथ तत्रान्तरेण प्रत्येकमितिवचनं प्रत्येकं गुणवृद्धिसंज्ञे भवतः । इहापि नार्थः सहग्रहणेन । अथ यत्र बहूनामानन्तर्यं किं तत्र द्वयोर्द्वयोः संयोगसंज्ञा भवति । आहोस्विदविशेषेण ॥

॥ कै० ॥ द्विर्वचनं नावयवैकाचः । यदा तु द्वयोरेव हलोरानन्तर्यं तदा द्वयोर्भवत्येव । हल इति जातौ बहुवचननिर्देशात् ॥

॥ वि० ॥ र्थतया प्रतीतेर्व्युत्पन्नत्वेन तद्व्यतिरिक्ततद्घटितपदवाक्यरूपसमुदायस्य संज्ञापत्तावनिष्टापत्तेः । तस्मान्महासंज्ञाकरणं प्राचामनुरोधेनेत्येव ज्यायः । अत एव भगवता गर्गदण्डनन्यायमाश्रित्य सहग्रहणं प्रत्याख्यातं नतु महासंज्ञयेत्यलम् । नन्वविशेषेणेत्यस्य द्वयोर्बहूनाञ्चेति नार्थोऽस्याविशेषस्याग्रे वक्ष्यमाणत्वान्मस्जौ दोषदाना-सङ्गतेश्चात आह । द्वयोरित्यस्येति । अत एव भाष्ये समुदाये संयोगादिलोप इति वक्ष्यति । तत्र युक्तिमाह । यथेति भाष्ये । पूर्वं धातुरुपसर्गेणेत्याश्रित्य क्वचित् क्वचिच्च वाक्यसंस्कारपक्षाश्रयेण दोषोपन्यासः । हल इति जाताविति । वस्तुतो हलौ च हलश्चेत्येकशेषः । स्वरितादिति सूत्रेऽनुदात्तानामित्यत्र भाष्ये तथैव वक्ष्यमाणत्वात् ॥

॥ वि॰ ॥ परे अनन्तरा इति । तस्मादित्युत्तरस्येत्युपस्थितेरिति भावः । चन्द्रीयतेः सनोऽभिधाने यथेष्टं नामधातुष्विति द्वितीयैकाचो

॥ कै॰ ॥ मङ्क्तेति । मस्जिनशोर्झलीति नुमि कृते नसजानां संयोगसंज्ञा नतु सजयोरिति सलोपाप्रसङ्गः । निर्ग्लेयादिति । यः संयोगो नासावङ्गादिः । यश्चाङ्गादिर्गकारलकारसमुदायो नासौ संयोग इति । इन्दिद्रीयिषतीति । अत्र द्वौ संयोगौ नदौ दरौ

॥ भा॰ ॥ कश्चात्र विशेषः । समुदाये संयोगादिलोपो मस्जेः । समुदाये संयोगादिलोपो मस्जेर्न सिध्यति । मङ्क्ता मङ्क्तुम् । इह च निर्ग्लेयात् निर्ग्लायात् । निर्म्लेयात् निर्म्लायात् । वाऽन्यस्य संयोगादेरित्येत्वं न प्राप्नोति । इह च संस्वरिषीष्टेति । ऋतश्च संयोगादेरितीण् न प्राप्नोति । इह च संस्वर्यत इति । गुणोऽर्त्तिसंयोगाद्योरिति गुणो न प्राप्नोति । इह च गोमान् करोति यवमान् करोतीति । संयोगान्तस्य लोप इति लोपो न प्राप्नोति । इह च निर्ग्लानो निर्म्लान इति । संयोगादेरातो धातोर्यण्वत इति निष्ठानत्वं न प्राप्नोति । अस्तु तर्हि द्वयोर्द्वयोः संयोगसंज्ञा । द्वयोर्हलोः संयोगसंज्ञेति चेद् द्विर्वचनम् । द्वयोर्हलोः संयोगसंज्ञेति चेद् द्विर्वचनं न सिध्यति । इन्द्रमिच्छति इन्द्रीयति इन्द्रीयतेः सन् इन्दिद्रीयिषति । न न्द्राः संयोगादय इति दकारस्य द्विर्वचनं न प्राप्नोति । नवाऽज्विधेः । नवा एष दोषः । किं कारणम् । अज्विधेः । नदराः संयोगादयो न द्विरुच्यन्ते । अजादेरिति वर्तते । अथ यद्येवं बहूनां संयोगसंज्ञा अथापि द्वयोर्द्वयोः किं गतमेतदियता सूत्रेण । आहोस्विदन्यतरस्मिन् पक्षे भूयः सूत्रं कर्त्तव्यम् । गतमित्याह । कथम् । यदा तावद्बहूनां संयोगसंज्ञा तदैवं विग्रहः करिष्यते ॥

॥ कै॰ ॥ च ततश्च दकारस्य संयोगादित्वाद् द्विर्वचननिषेधप्रसङ्गः । नवाऽज्विधेरिति । अजाश्रयः प्रतिषेधविधिरिति । अजादेरिति कर्मधारयस्तेन अच आदेः परे अनन्तरा न्द्रा न द्विरुच्यन्ते । इन्द्रशब्दे तु दकारो नकारेण व्यवहितत्वाद् द्विरुच्यत एव ॥

॥ वि॰ ॥ द्वित्वं नकारसहितस्यैव । आद्यवयवाचः परत्वाभावेनैतन्निषेधाप्रवृत्तेरिति बोध्यम् ॥



॥ वि॰ ॥ बहूनां चाविवरत्वे इति । बहूनां चानन्तरत्वे इति क्वचित् पाठः । नन्वत्र विग्रहे कमित्यादौ कमयोः संयोगसंज्ञा स्यात् तयोर्मध्ये वर्णशून्यच्छिद्राभावादिति चेन्न । वर्णशून्यकालव्यवायमात्रवारणे फलाभावात् सामर्थ्येन सवर्णकालव्यवायोऽपि व्यावर्त्त्यत इत्यदोषः । द्विर्वचनवदिति । एषामितिबहुवचनादिति न भ्रमितव्यम् । तस्य सूत्रे हल इतिवत् सत्त्वात् । अन्तराशब्देन विग्रहेऽपि तत्सत्त्वाच्च । अन्यथा द्वयोर्न स्यात् किन्त्वन्तरशब्देन विग्रहाद्बहूनां समवधाने तेषामप्यनन्तरत्वादिति भावः । संसर्गविप्रयोगाविव भाष्ये दर्शयति । द्वयोश्चैवेति । विद्यत इत्यन्तं दृष्टान्तार्थम् । अवत्सा धेनुरित्यादौ विप्रयोगोऽपि विशेषावगतिहेतुर्दृष्टः । अन्तरा विद्यत इति न विद्यत इति वा यत् तद् द्वयोरेवेत्यर्थः । नियतावधिरूपतेति । अवधित्वं हि अन्यासहितत्वे एव

॥ कै॰ ॥ अविद्यमानमिति । बहूनां चाविवरत्वे समुदायद्विर्वचनवद् बहूनामेव संयोगसंज्ञा न द्वयोर्द्वयोः । अविद्यमाना इति । मध्ये य आधेयः स द्वयोरेव मध्ये भवतीति संसर्गवद्विप्रयोगस्यापि विशेषावगतिहेतुत्वाद् बहुषु द्वयोर्द्वयोः संयोगसंज्ञा भवतीति पक्षः । द्वयोश्चैवान्तरेति । अन्तराऽन्तरेणयुक्त इति द्वितीया कस्मान्न भवति । उच्यते । यदा मध्यापेक्षया

॥ भा॰ ॥ अविद्यमानमन्तरमेषामिति । यदा द्वयोर्द्वयोस्तदैवं विग्रहः करिष्यते । अविद्यमाना अन्तरा येषामिति । द्वयोश्चैवान्तरा कश्चिद्विद्यते न वा । एवमपि बहूनामेव प्राप्नोति ॥

॥ कै॰ ॥ नियताऽवधिरूपता विवक्ष्यते त्वां च मां चान्तरा कमण्डलुः । अक्षी अन्तरा । धवखदिरौ अन्तरेति तदा द्वितीया । यदा तु नियतावधित्वं न विवक्ष्यते अपितु संबन्धमात्रं तदा षष्ठ्येव भवति । तदा हि न ज्ञायते किं तयोरेवावधित्वमुतान्यसहितयोरिति अवधिनियमाभावाद् द्वितीयाया युक्तग्रहणाद् नियतावधिविवक्षाविषयाया अभावः ॥

॥ वि॰ ॥ तयोर्नियमेन भवति । अन्यसाहित्ये तु न तथाऽवधित्वस्य नियमेन प्रतीतिरवधित्वविवक्षायामेव च द्वितीयेति भावः । यस्य च नियमेनावधित्वं तस्यैवावधित्वविवक्षा शब्देनेति तात्पर्यम् । नियतत्वमन्यासहितत्वं तद्वैशिष्ट्येन याऽवधिरूपता सा विवक्षिता यदा भवतीत्यक्षरार्थः । अन्यथा अवधित्वविवक्षायां द्वितीया तत्त्वाविवक्षायां षष्ठीत्यर्थस्यैव शब्दतो लाभेन नियतेतिकथनमधिकं स्यादिति बोध्यम् । युक्तग्रहणादिति । नच तदभावे अन्तरान्तरेणशब्दाभ्यां द्वितीयापत्तिः । तयोरव्ययत्वेन विशेषाभावात् । नच प्रथमाबाधनेन सपूर्वायाः प्रथमाया इत्यस्याप्रवृत्त्यर्थम् । व्यवस्थितविभाषया तस्य सुपरिहरत्वात् । तस्माद् युक्तग्रहणं सम्बन्धविशेषस्य प्रतिपादनाय अवधित्वस्य प्रतियोगित्वस्य वा । तेन प्रयोगमन्तरेणेत्यपि सिद्धम् । एवञ्च सम्बन्धमात्रविवक्षायां षष्ठ्येवेति भावः ॥

॥ वि० ॥ ननु भाष्ये द्वयोरिति षष्ठीद्विवचननिर्द्दिष्टस्य द्वित्वाद् यान् हीति बहुवचननिर्द्देशोऽनुपपन्न इतिचेन्न । प्रकृते द्वयोरित्यनेन न केवलौ वर्णौ निर्द्दिष्टौ तथा सति तयोरेवावधित्वे द्वितीयापत्तिः । किन्त्वन्यसहितावपि । अत एव षष्ठी । एवञ्च त्रयाणां समवधाने द्वयोः समुदाययोरवधित्वविवक्षणेन द्वयोः समुदाययोरनन्तरत्वे तत्समुदायवर्त्तिहलां बहुत्वात् तदुपपत्तिः । अनन्तरा इत्यनेन च न विद्यतेऽन्तरा यौ वर्णौ तौ यौ च समुदायावन्तरा न विद्येते तौच गृह्यन्ते एकशेषादिति न दोषस्तत् सर्वमभिप्रेत्याह । यदा द्वयोरिति । द्व्यवयवकसमुदाययोरित्यर्थः । यान् वर्णान् द्वयोः समुदाययोरित्यर्थकषष्ठ्या प्रतिनिर्द्दिशतीति भाष्यार्थ इति भावः । अनन्तरा इत्यस्यात्र पक्षे व्यावर्त्यं दर्शयन् पूर्वोक्तमेवार्थं दृष्टान्तेनोपपादयितुमाह । यदा हि बहूनामिति । नच स्त्वष्टेत्यादौ

॥ कै० ॥ यान् हीति । एषामिति बहुवचननिर्द्देशादिति न बोद्धव्यम् । बहुत्वस्याविवक्षणात् । अन्यथा शिक्षेत्यादौ द्वयोर्न स्यात् । तस्माद् योऽसावन्तरा स द्वयोर्भवति नवेति यदुक्तं तन्नोच्यते । यदा द्वयोर्द्वयोरन्तरा न भवति तदा बहवोऽनन्तरा इति तेषामेव प्राप्नोति यदा हि बहूनां मध्ये भिन्नजातीयोऽज् भवति तदा माभूत् तदभावे तु प्रवर्त्तितव्यमेव बहूनां संयोगसंज्ञया समुदाये द्विर्वचनवदित्यर्थः । अन्त्यात् पूर्व इति । तच्चा-

॥ भा० ॥ यान् हि भवांस्तत्र षष्ठ्या प्रतिनिर्द्दिशति एतेषामन्येन व्यवायेन भवितव्यम् । अस्तु तर्हि समुदाये संयोगसंज्ञा । ननु चोक्तं समुदाये संयोगादिलोपो मस्जेरिति । नैष दोषः । वक्ष्यत्येतत् । अन्त्यात् पूर्वो मस्जेर्मिदनुषङ्गसंयोगादिलोपार्थमिति । अथवाऽविशेषेण संयोगसंज्ञा विज्ञास्यते द्वयोरपि बहूनामपि । तत्र द्वयोर्या संयोगसंज्ञा तदाश्रयो लोपो भविष्यति ॥

॥ कै० ॥ नुषङ्गलोपार्थमवश्यं वक्तव्यम् । अन्त्यादचः परे नुमि सत्यनुपधात्वान्मस्न इत्यत्र नलोपो न स्यात् । कृतेऽपि संयोगादिलोपे तस्यासिद्धत्वादनुपधात्वमेव नकारस्य । अविशेषेणेति । बहुष्वनन्तरेषु द्वयोर्द्वयोरपि भवति बहूनामपीत्ययमिदानीमविशेषः । कार्यार्थत्वात् संयोगसंज्ञाया विरोधाभावादेकया संज्ञया सर्वेषामनुग्रहासिद्धा द्विर्वचनवैरूप्यादविशेषेणेत्युक्तम् । बहूनां सन्निधौ बहूनामेव संयोगसंज्ञेत्यस्मिन् पक्षे आश्रीयमाणे मस्जेर्दोषोऽन्त्यात् पूर्व इति परिहृतः ॥

॥ वि० ॥ रेफसकारयोर्वर्णयोरन्तरा कस्यचित् सत्त्वेऽपि सरौ रषौ चेतिसमुदायौ तयोश्चान्तरा न कश्चिदिति तेषां संयोगत्वं स्यादिति वाच्यम् । वर्णयोरन्तरा विद्यमानत्वेनानन्तरत्वाभावात् । सर्वविधानन्तरत्वस्यैव तन्निमित्तत्वादित्याहुः । अनुषङ्गो नकारस्तल्लोपोऽनिदितामित्यनेन । बहूनामपीति । न्यायतः सूत्रात् सम्भवमात्रेणेदमुक्तम् । नतु फलोदाहरणमस्य न्याय्यमस्ति । ध्वनितं चेदमङ्गेन संयोगादिमितिग्रन्थेन भाष्ये । ननु द्विर्वचनन्यायेन समुदायस्यैव संज्ञा स्यादिति कथमेतत्पक्षोत्थानमत आह । कार्येति । द्विर्वचनं हि श्रवणार्थमेव न शास्त्रीयकार्यार्थम् । एकस्याचो बह्ववयवत्वं युगपद्विरुद्धं च । एकेन द्वित्वेन सर्वानुग्रहश्चेति वैरूप्यम् ॥



॥ वि० ॥ ननु पक्षान्तरेण व्यवधानादासन्नभाव इत्यत आह । पाठेति । शब्दस्यार्थप्रत्यायनाङ्गत्वेन गुणत्वात् तदीयः क्रम आर्थक्रमविरोधे दुर्बल इति भावः । पदधात्ववयवेति । संयोगादेरित्यादावाद्यन्तशब्दयोरवयववाचितयेति भावः । अयमाशयः । अङ्गादेराद्यावन्ते वा व्यञ्जनत्रयाभावात् त्रयाणां फलाभावात् संज्ञाऽप्राप्तौ कथं द्वयोर्न स्यादिति । यद्यपि सामानाधिकरण्यान्वयेऽपि अङ्गाद्यवयवस्यैव संयोगस्याश्रयणं नान्यस्येति अङ्गेन संयोगादिं विशेषयिष्याम इत्यनुपपन्नं तथापि संयोगरूपमादिमङ्गेन परिच्छेत्स्यामः । अङ्गाद्यवयवसंयोगस्यैव बहुव्रीहिणाऽऽश्रयणमित्यर्थ इति न दोषः । एवञ्च बहू-

॥ कै० ॥ शेषान् दोषान् परिहर्त्तुमाह । यदप्युच्यत इति । पाठक्रमादार्थक्रमो बलीयानिति मस्जेरन्त्यात् पूर्व इत्यस्यानन्तरमिदं द्रष्टव्यम् । निर्ग्लेयादित्यादिषु यद्यपि त्रयो हलः सन्निहितास्तथापि कार्यार्थत्वात् संयोगसंज्ञायास्त्रिषु च

॥ भा० ॥ यदप्युच्यते इह च निर्ग्लायात् निर्ग्लेयात् निर्म्लायात् निर्म्लेयात् वाऽन्यस्य संयोगादेरित्येत्वं न प्राप्नोतीति । अङ्गेन संयोगादिं विशेषयिष्यामः । अङ्गस्य संयोगादेरिति । एवं तावत् सर्वमाङ्गं परिहृतम् । यदप्युच्यते इह च गोमान् करोति यवमान् करोतीति । संयोगान्तस्य लोप इति लोपो न प्राप्नोतीति । पदेन संयोगान्तं विशेषयिष्यामः । पदस्य संयोगान्तस्येति । यदप्युच्यते इह च निर्ग्लानो निर्म्लानः । संयोगादेरातो धातोर्यण्वत इति निष्ठानत्वं न प्राप्नोतीति । धातुना संयोगादिं विशेषयिष्यामः । धातोः संयोगादेरिति । स्वरानन्तर्हितवचनम् । स्वरैरनन्तर्हिता हलः संयोगसंज्ञा भवन्तीति वक्तव्यम् ॥

॥ कै० ॥ कार्याभावादङ्गपदधात्ववयवस्य संयोगस्य तेषु तेषु लक्षणेष्वाश्रितत्वात् समुदाये कार्याभावे चावयवानां स्वकार्यरक्षाद् द्वयोरेव संज्ञा प्रवर्त्तत इति भाष्यार्थः । व्याख्यानान्तरमत्र क्लिष्टत्वान्नोक्तम् ॥

॥ वि० ॥ नामपीत्याश्रयणे फलाभाव इति स्पष्टमेवोक्तम् । क्लिष्टकल्पनया तादृशसंयोगानयनन्तु न । अनभिधानादित्याशयः । अदादिषु षस स्वप्ने इत्येव पाठो नतु षस सस्ति स्वप्न इति । एतद्भाष्यप्रामाण्याज्जक्षित्यादिसूत्रस्थभाष्यप्रामाण्याच्चेति बोध्यम् । व्याख्यानान्तरमिति । पाठक्रमाबाधायैवं व्याचक्षते न प्राप्नोतीत्यत्रेति शब्दो यस्मादर्थ उत्तरान्वयी यस्मादङ्गेन संयोगादिर्विशेष्यतेऽङ्गावयवः संयोगो गृह्यते इत्यर्थः । एवञ्च बहूनामेव संयोगत्वे यः संयोगो नासावङ्गावयवो यश्चाङ्गावयवो नासौ संयोगस्तस्मादेत्वं न प्राप्नोतीति यदपि तदप्यसत् । यतोऽविशेषेण संज्ञोच्यते इति शेष इति तत् क्लिष्टं शेषपूरणात् । इतेः स्वरसतो वाक्यसमाप्त्यर्थतायाः प्रतीयमानत्वाच्च । एवं तावत् सर्वमाङ्गं परिहृतमित्यस्याख्यास्याच्च ॥

॥ वि० ॥ हल इतीति । तद्धि असावित्यादौ स्कोरिति सलोपवारणायावश्यकमिति भावः । नचेति । आनन्तर्यस्य सप्रतियोगिकत्वादिति भावः । प्रकृते चान्यस्य प्रतियोगिनोऽनुपादानादुपस्थितो हलेव प्रतियोगित्वेनाश्रीयत इति बोध्यम् । भाष्ये उवोषेति प्रसङ्गोच्चारितम् । तस्य विकल्पितामकत्वात् । उवोखेति कवर्गद्वितीयान्तो वा पाठः । इयायेति । इण् ल् इत्यस्यामवस्थायां व्यपदेशिवद्भावादिजादित्वमस्ति गुरुमत्त्वन्तु न । नचेयङि कृते

॥ कै० ॥ पचति पनसमिति । हल इति वचनादचा सह सकारमकारयोर्माभूत् संज्ञा तयोरेव तु प्राप्नोति ततश्च सलोपप्रसङ्गः । एकप्रतिषेधार्थमिति । अनन्तरा इत्यनेन संज्ञाया विषयो निर्दिश्यते । यचानन्तरव्यवहारस्तत्र संज्ञा नचैकाकिन्यनन्तरव्यवहार इति

॥ भा० ॥ किं प्रयोजनम् । व्यवहितानां माभूत् । पचति पनसम् । ननु चानन्तरा इत्युच्यते तेन व्यवहितानां न भविष्यति । दृष्टमानन्तर्यं व्यवहितेऽपि । व्यवहितेऽप्यनन्तरशब्दो दृश्यते । तद्यथा । अनन्तराविमौ ग्रामावित्युच्यते तयोश्चैवान्तरा नद्यश्च पर्वताश्च भवन्ति । यदि तर्हि व्यवहितेऽप्यनन्तरशब्दो भवति आनन्तर्यवचनमिदानीं किमर्थं स्यात् । आनन्तर्यवचनं किमर्थमिति चेदेकप्रतिषेधार्थम् । एकस्य हलः संयोगसंज्ञा माभूदिति । किञ्च स्याद् यद्येकस्य हलः संयोगसंज्ञा स्यात् । इयेष उवोष इजादेश्च गुरुमतोऽनृच्छ इत्याम् प्रसज्येत । नवाऽतज्जातीयव्यवायात् । नवा एष दोषः । किं कारणम् । अतज्जातीयस्य व्यवायात् । अतज्जातीयकं हि लोके व्यवधायकं भवति । कथं पुनर्ज्ञायते अतज्जातीयकं लोके व्यवधायकं भवतीति । एवं हि कश्चित् कञ्चित् पृच्छति । अनन्तरे एते ब्राह्मणकुले इति । स आह नानन्तरे वृषलकुलमनयोरन्तरेति । किं पुनः कारणं क्वचिदतज्जातीयकं व्यवधायकं भवति क्वचिन्न । सर्वत्रैव ह्यतज्जातीयकं व्यवधायकं भवति । कथमनन्तराविमौ ग्रामाविति ॥

॥ कै० ॥ भावः । एकप्रतिषेधस्य च प्रयोजनम् इयेषेत्यादौ इजादेरित्यामो निवृत्तिः । गुरुमद्वचनमियायेत्यादिनिवृत्त्यर्थं स्यात् । वृषलकुलमिति । यद्यपि ब्राह्मणकुलमपि तयोर्व्यवधायकं तथापि भिन्नजातीयमव्यवधायकमिति यदुक्तं तदनेन निवर्त्यते ॥

॥ वि० ॥ गुरुमदिजादित्वादाम् स्यादिति वाच्यम् । लिड्धातुसन्नियोगेन संपन्नस्य गुरुमदिजादित्वस्य तद्विघातकत्वाभावादिति भावः । कुलमत्र गृहम् । ब्राह्मणकुलमपीति । तत्तद्रूपेण ग्रहणे तस्यापि विजातीयत्वादिति भावः । भाष्येऽनयोरन्तरेतिषष्ठ्युपादानादन्यसहितयोरवधित्वसूचनात् तत्तद्रूपेणाग्रहणबोधनाद् ब्राह्मणकुलस्याव्यवधायकत्वमेवेत्यन्ये । भिन्नजातीयेति । तयोश्चान्तरा नद्यश्च पर्वताश्च भवन्तीति भाष्येणेत्यर्थः ॥



॥ वि० ॥ ग्रामशब्दोऽयमित्यस्य तद्यः सारण्यक इत्यस्य चाविरोधायाह । केचिदिति । अन्यायश्चानेकार्थत्वमिति तदाशयः । सामान्यञ्च ग्रामशब्दत्वादि । अन्ये त्विति । व्यक्तिभेदकल्पनायां गौरवमिति तदाशयः । तत्र चेति । निरूपकभेदाच्छक्तिभेद इति भावः । एकेति । समवायैकत्वनये रसो रूपवानित्यादिप्रयोगवदन्यार्थबोधकालेऽन्यार्थबोधो वारणीयः । तदर्थसंबन्धेन शक्यग्रहात् । तत्तदर्थविशिष्टशक्तिभेदेन च नानार्थत्वव्यव-

॥ कै० ॥ ग्रामशब्दोऽयमिति । केचिदर्थभेदेन शब्दभेदमिच्छन्ति । प्रत्यभिज्ञानन्तु सामान्यनिबन्धनम् । अन्ये त्वेकशब्दत्वम् । तत्र चानेकशक्तियोग एकशक्तित्वं वेति दर्शनविकल्पः । तत्र यदैकशब्दत्वपक्षस्तदा तद्यः सारण्यक इति भाष्यं शक्तिभेदादुपचरितभेदाश्रयम् । भेदपक्षे तु ग्रामशब्दोऽयं बह्वर्थ इति भाष्यमभिन्नसामान्यनिमित्तैकत्वाध्यवसायाश्रयम् । तद्यः

॥ भा० ॥ ग्रामशब्दोऽयं बह्वर्थः । अस्त्येव शालासमुदाये वर्त्तते । तद्यथा । ग्रामो दग्ध इति । अस्ति वाटपरिक्षेपे वर्त्तते । तद्यथा । ग्रामं प्रविष्ट इति । अस्ति मनुष्येषु वर्त्तते । तद्यथा । ग्रामो गतो ग्राम आगत इति । अस्ति सारण्यके ससीमके सस्थण्डिलके वर्त्तते । तद्यथा । ग्रामो लब्ध इति । तद्यः सारण्यके ससीमके सस्थण्डिलके वर्त्तते तमभिसमीक्ष्यैतत् प्रयुज्यते । अनन्तराविमौ ग्रामाविति । सर्वत्रैव ह्यतज्जातीयकं व्यवधायकं भवति ॥

॥ कै० ॥ सारण्यक इति । ततश्च ग्रामशब्दार्थे नदीनां पर्वतानाञ्चान्तर्भावाद्व्यवधायकत्वाभावादानन्तर्यं ग्रामयोरुच्यते । ग्रामे नाध्येयमित्यत्र तु ग्रामशब्दो वाटपरिक्षेपे वर्त्तते । शुचौ देशेऽध्ययनप्रतिपादनतात्पर्यात् । ततश्च सीमन्यप्यधीयत एव ॥

॥ वि० ॥ हार इति भावः । तत्र यदेति । एकशक्तित्वपक्षे त्वर्थभेदादुपचरितभेदाश्रयमिति बोध्यम् । ग्रामशब्दोऽयं बह्वर्थ इति तु मुख्यार्थमेव । अत्र सर्वार्थनिरूपितवृत्तीनां वर्तते इत्येकशब्दबोध्यत्वेनाभेदबोधनादेकशक्तित्वपक्षो भाष्यबोधितः । तत्र वर्त्तनक्रिया अस्तिक्रियायाः कर्त्री शालासमुदायादौ ग्रामशब्दस्य वृत्तिरस्तीत्यर्थः । वाटपरिक्षेपो नाम शालासमुदायरक्षणाय सर्वतो मार्गप्रतिरोधकं यत् परितः क्षिप्यते तदुच्यते । सारण्यकससीमकवृत्तिरत्र न गृह्यते इत्याह । शुचाविति । सीमनीति च ॥

॥ वि० ॥ मुखना । प्राग्यङ्गत्वादिति । एतेनेतरेतरयोगद्वन्द्वे रूपसिद्धिरित्यपास्तम् । अर्थ इति । अभिमतोऽर्थ इत्यर्थः । सौत्रत्वादिति कुतो नोक्तमित्यत आह । प्रसङ्गेनेति । अबाधकत्वेति । पक्षे त्वित्यनेनाबाधकत्वस्वीकर्त्तृवृत्तिमतमसङ्गतमित्युक्तम् । भाष्यकृदसम्मतरूपापत्तेः । बाधकान्येव निपातनानीति सर्वादिसूत्रे भाष्योक्तेः । अस्मिन् पक्ष इति । आङ्‌रहितस्येति शेषः । वस्तुत आद्यपक्षैकवाक्यतया आङ्‌रहितैतत्पदवचनपदाभ्यां

॥ कै० ॥ मुखनासिकावचनोऽनुनासिकः । प्राग्यङ्गत्वात् समाहारद्वन्द्वे ह्रस्वत्वेन भाव्यम् । अवचनमिति नञ्समासाश्रयणे अर्थो न सङ्गच्छत इति प्रश्नः । किमिदमिति । निपातनादिति । प्रसङ्गेनास्य लौकिकशब्दस्य साधुत्वं ज्ञाप्यते । निपातनानाञ्च बाधकत्वपक्षे मुखनासिकवचन इति न भाव्यमबाधकत्वपक्षे तु भाव्यमेव । ईषद्वचनमिति । भागस्य मुखे-

॥ भा० ॥ मुखनासिकावचनोऽनुनासिकः । किमिदं मुखनासिकावचन इति । मुखञ्च नासिका च मुखनासिकम् । मुखनासिकं वचनमस्य सोऽयं मुखनासिकावचनः । यद्येवं मुखनासिकवचन इति प्राप्नोति । निपातनाद्दीर्घत्वं भविष्यति । अथवा मुखनासिकमावचनमस्य सोऽयं मुखनासिकावचनः । अथ किमिदमावचनमिति । ईषद्वचनमावचनम् । किञ्चिन्मुखवचनं किञ्चिन्नासिकावचनम् । मुखद्वितीया वा नासिका वचनमस्य सोऽयं मुखनासिकावचनः ॥

॥ कै० ॥ नोच्चारणाद्भागस्य च नासिकया । अस्मिन् पक्षे मुखनासिकवचनमित्यपि भवति । यो ह्रीषदुच्यते स उच्यत एव । यथेषच्छुक्लोऽपि शुक्ल एव । मुखद्वितीयेति । मुखसहायेत्यर्थः । तत्र नासिका मुखसाहचर्यान्मुखशब्देनोच्यते मुखञ्च तन्नासिका च मुखनासिका सा वचनमस्येति ॥

॥ वि० ॥ समासस्यानभिधानमेवेत्याहुः । ननु भागस्य मुखाद्युच्चार्य्यत्वेन मुखनासिकं वचनमुच्चारणकरणं यस्य वर्णस्येत्यर्थको मुखनासिकवचन इति प्रयोगस्तत्रासङ्गतोऽत आह । यो हीति । सहायेति । अव्युत्पन्नो द्वितीयशब्दः सहायवाचीत्यर्थः । शाकपार्थिवादित्वादुत्तरपदलोपे शब्दानित्यत्वापत्तिरत आह । तत्रेति । परन्त्विदं चिन्त्यम् । भाष्यकृता एवं रीत्या तद्प्रत्याख्यानात् ॥



॥ वि० ॥ मुखस्य चेति । उपशब्दस्य सामर्थ्यादिति भावः । यद्यपि वचनशब्दे कर्म्मणि ल्युटि मुखनासिकेनावचनः । मुखनासिकया वचन इति वा तत्पुरुषोऽपि वक्तुं शक्यस्तथापि कर्म्मणि तस्य बाहुलकलभ्यत्वात् करणे ल्युटा बहुव्रीहिरेवाश्रितो भाष्ये । तत्राद्ययोर्नासिकाशब्दसामानाधिकरण्यात् स्त्रीत्वविशिष्टस्यैव करणत्वेन ल्युटि ङीपि नद्यृतश्चेति कबापत्तिरत आह । पदसंस्कारेति । भागस्य मुखेनोच्चारणाननुभवादाह । तत्रेति । तस्यादित इति सूत्रस्वरसाद्वर्णानां सखण्डत्वमित्याशयः । ये तु तत्तद्देशावच्छिन्नवाय्वाद्यभिघातस्य तत्तद्वर्णजनकत्वात् स्थानानां करणत्वमेव । स्थानव्यवहारस्तु वर्णजनक-

॥ कै० ॥ मुखोपसंहितेति । मुखस्य च नासिकायाश्चान्तरालं स्थानान्तरमेवानुनासिकस्येति दर्शयति । तत्र सामीप्यान्मुखञ्च तन्नासिका चेत्युभाभ्यामन्तरालं व्यपदिश्यते । पदसंस्कारपक्षे च मुखनासिकापदनिरपेक्षं वचनमित्येतत् पदं लिङ्गसर्वनामनपुंसकाश्रयेण संक्रियते पश्चात् स्त्रीत्वस्य पदान्तरसम्बन्धेन प्रतीयमानत्वाद् बहिरङ्गत्वाद् ङीप् प्रत्ययो न भवति । यदा तु स्त्रीत्वाश्रयेण वचनीतिपदं व्युत्पाद्यते तदा मुखनासिकावचनीक इति भवत्येव । अत्र चानेकं दर्शनम् । अनुनासिकस्य पूर्वः परो वा भागो मुखेनोच्चार्य्यते भागो नासिकया ।

॥ भा० ॥ मुखोपसंहिता वा नासिका वचनमस्य सोऽयं मुखनासिकावचनः ॥

॥ कै० ॥ तत्र नासिकावचनभागानुरागवशान्मुखवचनोऽपि भागो नासिकावचन इव लक्ष्यते । यथा सँय्यन्तेत्यत्रानुनासिकयकारानुरागवशादकारोऽनुनासिक इव प्रतिभाति । अत्र च प्रासादवासिन्यायो नास्ति भागस्यैव मुखेन नासिकया चोच्चारणान्न तु समग्रस्य । अन्येषान्तु दर्शनं मुखनासिकान्तरालं स्थानान्तरमेवानुनासिकस्येति । अत्रापि नास्ति प्रासादवासिन्यायः । यदा तु सर्व एव वर्णो मुखेनोच्चार्य्यते नासिकया च तदा प्रासादवासिन्यायेन भाष्यकारो मुखग्रहणं प्रत्याचष्टे । यथा भ्राष्ट्रेणोखया च पक्वः सूप उभाभ्यां व्यपदिश्यते ॥

॥ वि० ॥ वायुसंयोगाधारत्वाद्वर्णाधारत्वमारोप्य । अत एवोत्तरसूत्रे भाष्ये अस्यन्त्यनेन वर्णानित्यास्यमिति करणे व्युत्पत्तिर्दर्शितेति वदन्ति । तन्मते प्रासादवासिदृष्टान्तासङ्गतेराह । भ्राष्ट्रेण चेति । एतेन कण्ठादिकन्तु स्थानं नासिका तु करणमिति मन्दोक्तमपास्तम् । अत एवात्र सूत्रे हरिणा स हि वर्णो न मुखेनैव नापि नासिकयैव चात्मवृत्तिं लभते किन्तु वायुनाऽनुपरतशक्तिनाऽन्यतरकरणमभिहत्यान्यतरकरणेऽभिहन्यमाने आत्मव्यक्तिं लभते इत्युक्तम् । यमो नाम वर्गपञ्चमे परे वर्गाद्यचतुष्टयाऽन्यतमसदृशो वर्णः । आदितश्चत्वारो वर्णा इति विवरणेऽपि चतुःशब्दस्य चतुःसदृशे लक्षणा बोध्या । अत एवायोगवाहत्वप्रतिपादकहयवरट्सूत्रस्थभाष्याविरोधः ॥

॥ वि० ॥ न्यायानवतारेति । कचटतपानामेवेत्येवकारोऽप्यचैव पक्षे नासिकाया आस्यबाह्यत्वपक्षे च बोध्यः । अप्रतिपत्तिरिति । अत्र वि- ड्वनोर्ञम इति वक्तुं शक्यम् । यरोऽनुनासिक इत्यत्र त्वप्रतिपत्तिः । तत्र ञमि अम्वेत्युक्ते सकलेष्टासिद्धेः । चकारलोपेति । निष्ठावत्वकुत्वयो- रसिद्धत्वात् पचेरनुदात्तोपदेशवनतीत्यनेनेति भावः । ननु प्रासादवासिन्यायेन मुखग्रहणप्रत्याख्यानवत् सूत्रमेव कुतो न प्रत्याख्यायते इत्यत आह । अयमिति ।

॥ कै० ॥ यमानुस्वाराणामेवेति । प्रासादवासिन्यायानवतारपक्ष इति भावः । तत्र विधिप्रदेशेषु यमानुस्वारा एवादेशाः स्युः । विड्वनोरनुनासिकस्यादित्यादिषु त्वनुवादप्रदेशेषु यमानुस्वाराणामसम्भवादप्रतिपत्तिः

॥ भा० ॥ अथ मुखग्रहणं किमर्थम् । नासिकावचनोऽनुनासिक इतीयत्युच्यमाने यमानुस्वाराणामेव प्रसज्येत । मुख- ग्रहणे पुनः क्रियमाणे न दोषो भवति । अथ नासिकाग्रहणं किमर्थम् । मुखवचनोऽनुनासिक इतीयत्युच्यमाने कचट- तपानामेव प्रसज्येत । नासिकाग्रहणे पुनः क्रियमाणे न दोषो भवति । मुखग्रहणं शक्यमकर्त्तुम् । केनेदानीमुभयवच- नानां भविष्यति । प्रासादवासिन्यायेन । तद्यथा । केचित् प्रासादवासिनः । केचिद्भूमिवासिनः । केचिदुभयवासिनः । ये प्रासादवासिनो गृह्यन्ते ते प्रासादवासिग्रहणेन । ये भूमिवासिनो गृह्यन्ते ते भूमिवासिग्रहणेन । ये उभयवासिनो गृह्यन्ते ते प्रासादवासिग्रहणेन भूमिवासिग्रहणेन च । एवमिहापि केचिन्मुखवचनाः केचिन्नासिकावचनाः केचिदु- भयवचनाः । तत्र ये मुखवचना गृह्यन्ते ते मुखग्रहणेन ये नासिकावचना गृह्यन्ते ते नासिकाग्रहणेन ये उभयवचना गृह्यन्ते एव ते मुखग्रहणेन नासिकाग्रहणेन च । भवेदुभयवचनानां सिद्धम् । यमानुस्वाराणामपि प्राप्नोति ॥

॥ कै० ॥ स्यात् । कचटतपानामिति । पक्वमिति चकारलोपप्रसङ्गः । ओदनपगिति अनुनासिकस्य क्विझलोः क्ङितीति दीर्घ- प्रसङ्गः । प्रासादवासिन्यायेनेति । अयं न्यायः क्रियाशब्देष्वेव न रूढिशब्देषु ॥

॥ वि० ॥ योगेन ह्युभयग्रहणं स रूढिषु नास्तीत्यर्थः । अनुनासिकशब्दस्य च रूढिशब्दत्वम् । तस्य क्रियाशब्दत्वन्तु वक्तुमशक्यम् । अनु पश्चान्नासिका व्याप्रियते यस्मिन्निति योगस्य अमङ्गानेषु निरूपयितुमशक्यत्वाद् विनिगमनाविरहेण युगपदुभयोर्व्याप्तेः । एतेनानु पश्चान्नासिकां गत इत्यर्थको नासिकानुगत इति प्रयोगोऽपि परास्तः । यथाकथञ्चिद् योगोपादाने तु रूढिरेव फलितेति दिक् ॥



॥ वि० ॥ तुल्यास्यप्र । तत्पुरुष इति । तुल्यास्यशब्दयोर्मयूरव्यंसकादित्वात् पूर्वपदार्थप्रधानस्तत्पुरुषः । आस्यप्रयत्नशब्दयोश्च साधनं कृते- त्यनेन समासः । ननु स्थानादिकं न तुलया संमीयतेऽत आह । व्युत्पत्त्यर्थमेवेति । किं मुखमिति । अतद्धितान्ततद्धितान्तास्यशब्दविषयकसंदेह

॥ कै० ॥ नैव दोष इति । अनुवादे तावद् यमानुस्वाराणामसंभव एव विधावप्यान्तरतम्यान्मुखवचनस्योभयवचनो भविष्यति न केवल- नासिकावचनः । तुल्यास्यप्रयत्नं सवर्णम् । चत्वारोऽत्र पक्षाः संभवन्ति । द्वन्द्वगर्भो बहुव्रीहिः । त्रिपदो बहुव्रीहिः । तुल्यास्यशब्दयो- स्तत्पुरुषस्ततो बहुव्रीहिः । आस्यप्रयत्नशब्दयोस्तत्पुरुषस्ततो बहुव्रीहिरिति । तत्र द्वन्द्वगर्भो बहुव्रीहिरितिपक्षे वार्तिकस्यावतार इति तमेव पक्षं भाष्यकारः पूर्वं दर्शयति । तुलया सम्मितमिति । व्युत्पत्त्यर्थमेव तुलोपादीयते रूढशब्दस्त्वयं सदृशपर्यायः । यथा प्रवीणः

॥ भा० ॥ नैव दोषो न प्रयोजनम् । इतरेतराश्रयन्तु भवति । का इतरेतराश्रयता । सतोऽनुनासिकस्य संज्ञया भवितव्यं संज्ञया च नामानुनासिको भाव्यते । तदेतदितरेतराश्रयं भवति । इतरेतराश्रयाणि च कार्याणि न प्रकल्पन्ते । अनुनासिकसंज्ञायामितरेतराश्रये उक्तम् । किमुक्तम् । सिद्धन्तु नित्यशब्दत्वादिति । नित्याः श- ब्दाः । नित्येषु च शब्देषु सतोऽनुनासिकस्य संज्ञा क्रियते न संज्ञयाऽनुनासिको भाव्यते । यदि तर्हि नित्याः श- ब्दाः किमर्थं शास्त्रम् । किमर्थं शास्त्रमिति चेन्निवर्तकत्वात् सिद्धम् । निवर्तकं हि शास्त्रम् । कथम् । आङ्स्मा- यविशेषेणोपदिष्टोऽननुनासिकः । तस्य सर्वत्राननुनासिकबुद्धिः प्रसक्ता । तत्रानेन निवृत्तिः क्रियते । छन्दस्यचि परत आङोऽननुनासिकस्य प्रसङ्गे अनुनासिकः साधुर्भवतीति । तुल्यास्यप्रयत्नं सवर्णम् । तुलया सम्मितं तुल्यम् । आस्यञ्च प्रयत्नश्चास्यप्रयत्नं तुल्यास्यञ्च तुल्यप्रयत्नञ्च सवर्णसंज्ञं भवति । किं पुनरास्यम् । लौकिकमास्यम् ॥

॥ कै० ॥ कुशलः प्रतिलोमोऽनुलोम इत्यवयवार्थाभाव एवं तुल्यशब्देऽपि । किं पुनरास्यमिति । किं मुखमथ तत्र भवं ताल्वादि स्थानमिति प्रश्नः । लौकिकमिति । पशुरपत्यं देवतेत्यादिवत् प्रसिद्धमित्यर्थः । यद्यपि ताल्वादिकमपि लौकिकमास्यं तथापि तत्र योगवशा- दास्यशब्दो वर्तत इति झटिति न तत् प्रसिद्धमिति मुखमेव प्रसिद्धत्वाल्लौकिकमित्युक्तं तस्यैव च प्राथम्याद् ग्रहणं युक्तमित्यर्थः ॥

॥ वि० ॥ इत्याशयः । तद्धितान्तमपि लौकिकमेव न वैदिकमित्यत आह । पशुरिति । झटिति । पदस्यवणमात्रेणेत्यर्थः ॥

निमित्तवशात् । अवयवार्थवशात् । जातिस्फोटेति । वर्णानिति वर्णपदं बोधकपरं तत्र जातेर्बोधकत्वे तस्या नित्यत्वादभिव्यक्तिरसनम् । तदाश्रयव्यक्तीनां वाचकत्वे तूत्पत्तिरिति भावः । अत एव वर्णानिति बहुवचनं संगच्छते । एकैव व्यक्तिस्तत्तद्रूपेणाभिव्यक्ता वाचिकेति पक्षे तदसंगतिः स्पष्टैव । क्वचित्तु व्यक्तिस्फोटपक्षेऽभिव्यक्तिः । जातिस्फोटपक्षे तूत्पत्तिरिति पाठः । अयमेव साम्प्रदायिकः पाठः । एकैव व्यक्तिर्वाचिका कत्वादिकन्तु

॥ कै० ॥ ओष्ठादिति । काकलकं नाम ग्रीवायामुन्नतप्रदेशः । कथं पुनरिति । यदि निमित्तवशात् प्रवर्तते ततस्ता-ल्वादिष्वपि प्रवर्तिष्यत इति प्रश्नः । अस्यन्त्यनेनेति । सत्यपि निमित्ते रूढिवशान्मुख एव प्रवर्तते न ताल्वादिष्वित्यर्थः । कृत्यल्युट इति करणे ण्यत् । असनमत्र जातिस्फोटपक्षेऽभिव्यक्तिः । व्यक्तिस्फोटपक्षे तूत्पत्तिः । अन्नमेतदिति । आङ्-

॥ भा० ॥ ओष्ठात् प्रभृति प्राक् काकलकात् । कथं पुनरास्यम् । अ-स्यन्त्यनेन वर्णानित्यास्यम् । अन्नमेतदास्यन्दत इति वा आस्यम् । अथ कः पुनः प्रयत्नः । प्रयतनं प्रयत्नः । प्रपूर्वाद् यततेर्भावसाधनो नङ् प्रत्ययः ॥

॥ कै० ॥ पूर्वात् स्यन्दतेरन्येष्वपि दृश्यत इति डः । एतदास्यं कर्म अन्नं कर्तृ आस्यन्दते द्रवीकरोति अन्नप्रक्षेपेण मुखस्य द्रवत्वोत्पादनात् । अथ कः पुनः प्रयत्न इति । किं प्रयतनमथ प्रारम्भो यत्नस्येति प्रश्नः । भावसाधन इति । भावेऽभिधेये नङ् प्रत्ययः क्रियते । तेन नङ्शब्दस्येह भावः साधनं भवति ॥

॥ वि० ॥ ध्वनिनिष्ठं ध्वनिविशेषव्यङ्ग्यं वा सा च नित्येति व्यक्तिस्फोटवादस्तदाभिव्यक्तिः स्पष्टैव । बहुवचनं त्वेकस्यैव बहुरूपत्वादारोपितबहुत्वमादाय नेयम् । व्यक्तयोऽनन्ता जन्याश्च तत्र जातिरेव शक्तेति जातिस्फोटवादस्तदोत्पत्तिरित्यर्थः । अन्येष्वपीति । दृशिग्रहणाद्धात्वन्तरादपि स इति भावः । ननु साधनशब्देन कारकशक्तिरभिधीयते इति भावस्य साधनत्वमनुपपन्नमत आह । भावे इति । नङ् । यजयाचेत्यनेन ॥



॥ वि० ॥ ननु तुल्यावास्यप्रयत्नमात्रौ येषां जनकावित्यर्थे नासिकास्थानङञणादिनिवृत्त्यर्थमास्यपदोपादानं स्यादत आह । नासिकापीति । एवञ्चास्यग्रहणे कृतेऽपि तद्व्यावृत्तिर्दुरुपपादेति भावः । वस्तुतस्तु अवधारणगर्भसमासे ह्रस्वाकारादिभिर्दीर्घाकारादीनां सावर्ण्यानापत्तिः । तज्जनकवायुसंयोगादीनामपि तुल्यत्वात् । अनवधारणगर्भसमासे त्वनुनासिकव्यावृत्तिरपि दुरुपपादैवेति भाष्याशयः । एवञ्च नासिकाया बाह्यत्वेऽपि न क्षतिः । अत एव मुखनासिकेति सूत्रे मुखञ्च नासिका चेति मुखद्वितीया नासिकेति च विग्रहप्रदर्शनं भाष्ये । नह्यवयवावयविविषये एवं प्रयोगः सचेतसाम् । सहस्तो देवदत्त इत्यादौ विद्यमानवाची सहशब्दः । अत एव मुखवचनोऽनुनासिक इतीयत्युच्यमाने कचटतपानामेव प्रसज्येतेति भाष्ये एवशब्दः सङ्गच्छते । अन्यथा

॥ कै० ॥ किमास्योपादाने इति । आस्य एव सर्ववर्णानां निष्पादनादिति भावः । नासिकापि न बाह्या वर्णोत्पत्तिनिमित्तं किन्त्वाद्यास्यान्त-श्चर्म विततमस्ति पणवचर्मवत् तत्सम्बद्धा रेखा नासिका तस्यां वाय्वभिघाताद्वर्णोत्पत्तिः । विसर्जनीयस्यैकीयमतेनोरस्यत्वात् सावर्ण्याभावेऽपि न दोषः । वक्ष्यतीति । नास्य परीक्षावसर इत्यर्थः । सवर्णसंज्ञायामिति ।

॥ भा० ॥ यदि लौकिकमास्यं किमास्योपादाने प्रयोजनम् । सर्वेषां हि तत् तुल्यम् । वक्ष्यत्येतत् प्रयत्नविशे-षणमास्योपादानमिति । सवर्णसंज्ञायां भिन्नदेशेष्वतिप्रसङ्गः प्रयत्नसामान्यात् । सवर्णसंज्ञायां भिन्नदेशेष्वतिप्रसङ्गो भवति । जबगडदशाम् । किं कारणम् । प्रयत्नसामान्यात् । एतेषां हि समानः प्रयत्नः । सिद्धं त्वास्ये तुल्यदेशप्र-यत्नं सवर्णम् । सिद्धमेतत् । कथम् । आस्ये येषां तुल्यो देशः प्रयत्नश्च ते सवर्णसंज्ञा भवन्तीति वक्तव्यम् ॥

॥ कै० ॥ द्वन्द्वे प्रयत्नस्यास्येनाविशेषणाद् मुखप्रयत्नयोस्तुल्यत्वाद्भिन्नस्थानानामपि प्रसङ्गः । भाष्ये शकारः प्रत्याहारपाठवशात् पठितः । अत्र प्रत्याहारे जबगडदानां प्राप्नोतीत्यर्थः । शकारस्य तु विवृतत्वात् स्पर्शानां स्पृष्टत्वादप्रसङ्ग एव । तत ऊर्ग्ज इत्यादौ झरो झरीति लोपप्रसङ्गः ॥

॥ वि० ॥ यमादीनां ङणादीनाञ्च मुखवचनत्वात् तदसङ्गतिः स्पष्टैव । आस्यानन्तर्गतत्वे तु न दोषः । मुखमात्रवचनत्वाभावात् । प्रासादवासिन्यायप्रदर्शक-भाष्येणापि ध्वनितमेतत् । कैयटोक्तास्यान्तर्गतत्वपक्षे तु सूत्रे मुखपदं मुखावयवपरम् । ब्राह्मणवसिष्ठन्यायेन च नासिकातिरिक्तावयवग्रहणम् । एवकारस्याप्ययर्थः । दृष्टान्तोऽप्येकांशेन बोध्य इति । नन्वेवमपि विसर्जनीयव्यावृत्तये तत् स्यादत आह । विसर्जनीयस्येति । ततश्चान्येषां कण्ठादिस्थानमेवेति भावः । उरस्य-मतेऽप्याह । सावर्ण्याभावेऽपीति । ननु इदानीमेव किं नोच्यतेऽत आह । नास्येति । द्वन्द्वे प्रयत्नस्यास्येनाविशेषणादित्यस्योपयोगश्चिन्त्यः । अत्रेति । एतद्वर्ण-समूहसाध्यप्रत्याहारे इत्यर्थः । ऊर्क् अन्नं तस्माज्जात ऊर्ग्जः ॥

॥ वि० ॥ आस्ये इति । देशविशेषणवैयर्थ्याभिप्रायेण प्रश्न इति भावः । नच नासिकाया आस्यानन्तर्गतत्वपक्षे तद्व्यावृत्तये देशविशेषणमावश्यकमिति वाच्यम् । अनुनासिकाकारादिषु कण्ठादिषु वाय्वभिघातादभिव्यक्तेषु वर्णेषु नासिकाभिघातेनानुनासिक्यं धर्म उत्पद्यते इत्यनुभवेन वृद्धिरादैच्सूत्रस्थादभेदकत्वाद् गुणस्येति वाच्यम् आनुनासिक्यसंग्रहार्थं तद्यथैकोऽयमात्मेत्यादिभाष्यकैयटात् तथैव लाभेन च तेषु नासिकाया देशत्वाभावस्य कॢप्तत्वात् । आदिष्वपि तथैवेत्यभिमानात् । देशपदेन ताल्वादिस्थानमेवोच्यते इति जवगडादिषु न दोषः । भाष्ये प्रयत्नविशेषणमिति । देशप्रयत्नमितिद्वन्द्वस्तु

॥ कै० ॥ एवमपीति । आस्ये येषां तुल्यो देश इत्यास्येन देशो विशेष्यते । तत्र व्यभिचाराभावादास्येन देशस्य विशेषणमयुक्तमित्यर्थः । प्रयत्नविशेष-

॥ भा० ॥ एवमपि किमास्योपादाने प्रयोजनम् । सर्वेषां हि तत् तुल्यम् । प्रयत्नविशेषणमास्योपादानम् । सन्ति हि आस्याद्बाह्याः प्रयत्नाः । ते हापिता भवन्ति । तेषु सत्स्वसत्स्वपि सवर्णसंज्ञा सिद्धा भवति । के पुनस्ते । विवारसंवारौ श्वासनादौ घोषवदघोषता अल्पप्राणता महाप्राणतेति । तत्र वर्गाणां प्रथमद्वितीया विवृतकण्ठाः श्वासानुप्रदाना अघोषाः । एके अल्पप्राणा अपरे महाप्राणाः । तृतीयचतुर्थाः संवृतकण्ठा नादानुप्रदाना घोषवन्तः । एके अल्पप्राणा अपरे महाप्राणाः । यथा तृतीयास्तथा पञ्चमाः । आनुनासिक्यवर्जम् ॥

॥ कै० ॥ णमिति । तस्य सम्भवव्यभिचारसद्भावादित्यर्थः । बाह्यप्रयत्नव्युदासाच्चत्वार आभ्यन्तरा गृह्यन्ते स्पृष्टतेषत्स्पृष्टतासंवृततविवृतताऽऽख्याः ॥

॥ वि० ॥ सौत्रत्वात् साधुरिति भावः । स्पृष्टतेत्यादि । आस्यान्तर्गततत्तत्स्थानेषु जिह्वाग्रादीनां वर्णाभिव्यक्तिजनकस्पर्शेषत्स्पर्शदूरावस्थानसमीपावस्थानरूपाभ्यन्तरकार्यकारिप्रयत्नविशेषा एतैः पदैरुच्यन्ते । तेषाञ्चास्यान्तर्गतत्वमास्यान्तर्गततत्तत्स्थानेषु वायुसंयोगजनकत्वेनेति बोध्यम् । आस्ये इत्यस्य यत् कार्यं तज्जनक इति शेषो वा । भाष्ये ते हापिता इति । सवर्णसंज्ञा स्वनिमित्तत्वेन बाह्यान् प्रयत्नान जहातीति तया ते स्वनिमित्तत्वं हापिता इत्यर्थः । विवारसंवारौ कण्ठबिलस्य विकाससङ्कोचौ विवृतः कण्ठो यैः श्वासोऽनुप्रदीयते यैरित्यर्थः । एके । उक्तवाक्ययोः प्रथमोपात्ताः । नादो वर्णोत्पत्त्यनन्तरभावी अनुरणनरूपः शब्दः । यथा तृतीया इति । अनेन तेषामल्पप्राणत्वं बोधितम् ॥



॥ वि० ॥ देशविशेषणमप्यास्यग्रहणमावश्यकमिति गूढाशयेनाह । भाष्ये आनुनासिक्यमेषामधिको गुण इति । अयं भावः । अत्र देशपदेन ताल्वादि स्थानमुच्यते स्थानशब्देन च योगरूढ्या वर्णाभिव्यक्तिजनकवायुसंयोगानुयोगि ताल्वाद्युच्यते । तत्र यद्यपि ञकारादीनां ङणमाङ्जनिका नासिका स्वरूपस्य कण्ठादिभिरेवाभिव्यक्तिसिद्धेस्तथापि ञादीनां स्वरूपस्य न केवलताल्वादिना नापि केवलनासिकयाऽभिव्यक्तिरिति विनिगमनाविरहादुभयावच्छिन्नवायुसंयोगस्यैव तज्जनकत्वात् तेषां नासिकाऽपि स्थानम् । नचैवं त्वं करोपीत्यादौ चरितार्थं परसवर्णशास्त्रं संय्यन्तेत्यादौ न प्रवर्त्तेत । उक्तरीत्या यादीनां नासिकास्थानत्वाभावेन स्थानत आन्तर्याभावादिति वाच्यम् । स्थानेऽन्तरतमे इति सप्तम्यन्तपाठस्य दूषितत्वेनास्या युक्तेर्गर्भस्रावात् । अनुनासिकाकारादीनामपि सा स्थानमिति त्वयुक्तमेव । एवं हि उत्पादकसामग्रीभेदात् कङयोरिव स्वरूपभेदस्यैवापत्तौ अभेदकगुणपक्षेऽपि निरनुनासिकैः सानुनासिकग्रहणानापत्तिः । एवञ्च यावत्स्थानसाम्ये सवर्णसंज्ञेति सिद्धान्ते नासिकारूपदेशभेदात् कङादीनामप्राप्तसावर्ण्यसिद्धये आस्येन देशविशेषणमावश्यकम् । नासिकाया आस्यान्तर्गतत्वेऽपि मुखनासिकेतिसूत्रे नासिकातिरिक्तावयवकमुखस्यैव ग्रहणेन तत्साहचर्यादत्राप्यास्यपदेन तादृशस्यैव ग्रहणं बोध्यम् । अन्यथाऽत्र स्थाने एतत्कथनवैयर्थ्यापत्तिः ।

॥ भा० ॥ आनुनासिक्यमेषामधिको गुणः । एवमप्यवर्णस्य सवर्णसंज्ञा न प्राप्नोति ॥

॥ वि० ॥ आस्यग्रहणव्यावर्त्यानां सावर्ण्यानुपयुक्तानां प्रदर्शनमेव ह्यत्र प्रकान्तम् । नचेदं प्रयत्नविशेषणास्यग्रहणव्यावर्त्यमेवास्तु । अनुनासिकयकारादीनां आदिभिः सावर्ण्यं च व्यावर्त्यम् । तत्फलं च तन्नुङ्वे तन्नमतीत्यादौ अनुस्वारस्य ययीत्यनेन यकारलकारयोरनुनासिकयोरभाव इति वाच्यम् । अनुस्वारस्य नासिकास्थानत्वेन स्थानतोऽन्तरतमयोर्भिन्नयोरेव प्रवृत्तेः । अनुनासिकयादीनां तूक्तरीत्या न नासिका स्थानमित्यदोषात् । इदमेव ध्वनयितुं गुण इत्युक्तम् । गुणपदेन च सावर्ण्यानुपयोगिन आन्तरतम्यपरीक्षोपयोगिनो विवारादय उच्यन्ते । एवञ्च तत्सादृश्यादत्रापि गुणशब्दप्रयोगः । अत एव बाह्यप्रयत्नानुपक्रम्यामोऽनुनासिका न द्वाविति शिक्षायामुक्तम् । अत एवोदात्तादिभिः सहैकादश बाह्याः प्रयत्ना इति कैयटो वक्ष्यति । उदात्तादीनामपि वृद्धिसंज्ञासूत्रशेषे गुणत्वेन व्यवहारात् । अत एव एवमप्यवर्णस्य संज्ञा न प्राप्नोति बाह्यं ह्यास्यात् स्थानमवर्णस्य एवमपि व्यपदेशो न प्रकल्पते आस्ये येषां तुल्यो देश इति भाष्यं स्वरसतः सङ्गच्छते । अन्यथा प्रयत्नविशेषणमात्रस्योक्तेर्देशविशेषणत्वाभावेन तदसङ्गतिः स्पष्टैव । आस्येन देशविशेषणाभावात्र दोष इत्येव वक्तव्ये सर्वमुखेत्यादिसमाधानस्यापि निर्दलत्वापत्तिश्च ॥

॥ वि० ॥ एके इत्यनेन सर्वमतं तु कण्ठस्थानमिति ध्वनयति । व्यवहितस्येति । यद्यपि रूढिर्योगापहारिणी तथाप्यास्यपदोपादानसामर्थ्याद्व्यवहितस्यापि ग्रहणमिति भावः । ताल्वादीति । शिक्षायां तेन रूपेणैव वर्णस्थानत्वकथनादिति भावः । एतेन ताल्वादिषूर्ध्वाधोभागभेदादुदात्तादीनां सवर्णसंज्ञा न प्राप्नोतीत्यपास्तम् । आस्यभवशब्देन तद्रूपावच्छिन्नस्यैव ग्रहणेनादोषात् । ननु प्रयत्नपदेनैव तद्ग्रहणसिद्धिरत आह । जिह्वाया

॥ कै० ॥ बाह्यं त्वास्यादिति । काकलकस्याधस्तादुपजत्रु स्थानमवर्णस्यैक इच्छन्ति । सति च बाह्यदेशसम्भवे तद्व्यवच्छेदायास्येन देशो विशेष्यत इति प्रश्नः । सर्वमुखेति । अवर्णनिष्पत्तौ सर्वमेव मुखं व्याप्रियत इति नास्य बाह्यस्थानता । एवमपीति । अवर्णस्यास्यमेव देशो नत्वास्ये देशः । व्यपदेशिवद्भावेनेति । सर्वावस्थायुक्तमास्यमास्यशब्देनोच्यते । देशशब्देन तु विशिष्टैवावस्था

॥ भा० ॥ बाह्यं त्वास्यात् स्थानमवर्णस्य । सर्वमुखस्थानमवर्णमेक इच्छन्ति । एवमपि व्यपदेशो न प्रकल्पते । आस्ये येषां तुल्यो देश इति । व्यपदेशिवद्भावेन व्यपदेशो भविष्यति । सिध्यति । सूत्रं तर्हि भिद्यते । यथान्यासमेवास्तु । ननु चोक्तं सवर्णसंज्ञायां भिन्नदेशेष्वतिप्रसङ्गः प्रयत्नसामान्यादिति । नैष दोषः । नहि लौकिकमास्यम् । किं तर्हि । तद्धितान्तमास्यम् । आस्ये भवमास्यम् । शरीरावयवाद् यत् । किं पुनरास्ये भवम् । स्थानं करणं च । एवमपि प्रयत्नोऽविशेषितो भवति । प्रयत्नश्च विशेषितः ॥

॥ कै० ॥ वर्णोत्पादनहेतुः । तत्र बुद्धिकृतभेदाश्रयेण व्यपदेशः । नह्नीति । प्राथमकल्पिकमित्यर्थः । यौगिकस्य तु व्यवहितस्य ग्रहणम् । स्थानमिति । ताल्वादि । करणमिति । स्पृष्टतादि । जिह्वाया अग्रोपाग्रमध्यमूलानि वा । यद्येवं प्रयत्नग्रहणं न कर्त्तव्यम् । तस्याप्यास्यभवत्वादास्यग्रहणेन ग्रहणात् । सत्यमेतत । प्रत्येकन्तु व्यापारनिरासार्थमुभयोरुपादानम् । तेन द्वयोस्तुल्यत्वे सवर्णसंज्ञा भवति । अविशेषित इति । आस्येनेत्यर्थः । इन्द्वपच्च एवात्र स्थित इति प्रश्नः । ततश्च बाह्याः प्रयत्ना न त्यक्ताः स्युः ॥

॥ वि० ॥ अग्रेत्यादि । प्रत्येकं त्विति । प्रत्येकनिरूपितसादृश्यग्रहणनिरासार्थमित्यर्थः । यद्यपि त्रापकेनापि प्रत्येकव्यापारनिरासः सुकरस्तथापि यावदास्यभवैक्यविवक्षायां ह्रस्वदीर्घयोः सावर्ण्यानापत्तिः । तत्तज्जनकवायुसंयोगानामतुल्यत्वात् । अतः प्रयत्नपदमास्यपदेन स्थानमात्रग्रहणार्थं स्थानं करणं चेति भाष्ये करणपदेन वायुसंयोगोऽपि प्रयत्नग्रहणाच्च नातिप्रसङ्ग इति तात्पर्यम् । अत एव यावत्स्थानैक्यपरेण नैतौ तुल्यस्थानाविति भाष्येण न विरोध इति दिक् ॥



॥ वि० ॥ भाष्ये प्रारम्भो यत्नस्येति । अत्र यत्नस्येति निर्द्धारणे षष्ठी जातावेकवचनम् । आरम्भ इति कर्मणि घञ् । यत्नानां मध्ये प्रथमं वर्णोत्पत्तेः पूर्वमारभ्यमाण इत्यर्थः । अत्रापि नासिकाया अग्रहणमुपपादितरीत्यैवेति बोध्यम् । अत्रेदं बोध्यम् । शब्दप्रयोगेच्छयोत्पन्नयत्नान्नाभिप्रदेशात् प्रेरितो वायुर्वेगान्मूर्धपर्यन्तं गत्वा ततः प्रतिनिवृत्तो यत्नविशेषसहायेन तत्तत्स्थानेषु जिह्वाग्रादिस्पर्शपूर्वकं तत्तत्स्थानान्याहत्य वर्णानभिव्यनक्ति । ततो यत्नविशेषसहायेन परावृत्तिसमये गलविवरादीनां विकासादीन् करोति । तत्र ये तत्तत्स्थानानामभिघातका यत्नास्ते आस्यान्तर्गततत्तत्कार्यकारित्वादास्ये प्रयत्ना इत्युच्यन्ते आभ्यन्तरा इति प्रारम्भ इति च । गलविवरादिविकासादिकराश्चास्यबहिर्भूतदेशे कार्यकरत्वाद्बाह्याः । एवं मात्राकालिकत्वादिकमपि वाय्वल्पत्वमहत्त्वकृतमिति नाभिप्रदेशात् प्रेरकयत्न एव कश्चिद्विलक्षणोऽल्पवायुं प्रेरयति कश्चिदधिकमिति तस्य प्रयत्नस्य वायप्रेरणारूपकार्यमास्यबाह्यदेशमिति तस्यापि व्यावृत्तिरास्य-

॥ कै० ॥ प्रारम्भो यत्नस्येति । अत्र पूर्वं स्पृष्टतादयश्चत्वारः पश्चान्मूर्ध्नि प्रतिहते निवृत्ते प्राणाख्ये वायौ विवारादयो बाह्या एकादश प्रयत्ना उत्पद्यन्ते । एवमपीति । सन्ध्यक्षरेषु प्रथमभागस्याकारेण सादृश्यात् सवर्णसंज्ञाप्राप्तिरिति प्रश्नः । प्रश्लिष्टा-

॥ भा० ॥ कथम् । नहि प्रयतनं प्रयत्नः । किन्तर्हि । प्रारम्भो यत्नस्य प्रयत्नः । यदि प्रारम्भो यत्नस्य प्रयत्नः । एवमप्यवर्णस्यैङोश्च सवर्णसंज्ञा प्राप्नोति । प्रश्लिष्टावर्णावेतौ । अवर्णस्य तर्हि ऐचोश्च सवर्णसंज्ञा प्राप्नोति । विवृततरावर्णावेतौ । एतयोरेव तर्हि मिथः सवर्णसंज्ञा प्राप्नोति ॥

॥ कै० ॥ वर्णाविति । नात्र भागविवेकोऽस्ति पांसूदकवदित्यर्थः । अवर्णस्येति । विभागोऽत्र सुलक्ष्य इति प्रश्नः । ततश्च नाध्यमित्यत्र यस्येति लोपप्रसङ्गः । एतयोरिति । ततश्च एत ऐ इति औकारोऽपि स्यात् । भाष्यमानेनापि क्वचित् सवर्णग्रहणदर्शनात् ॥

॥ वि० ॥ पदेनोक्ता अइउणसूत्रे भाष्ये । मूर्ध्नि प्रतिहते वर्णोत्पत्तेः पूर्वं स्पृष्टतादयः पश्चान्निवृत्ते प्राणाख्ये इत्यन्वयः कैयटे । अत एव सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः । वर्णान् जनयत इति न शिक्षया विरोध इति दिक् । भाष्ये यदि प्रारम्भ इत्यत्र यदीत्यस्य यद्यपीत्यर्थः । अकारेणेति । ततश्च स्वसवर्णाकारस्य तत्र सत्त्वेन तद्द्वारा तुल्यस्थानत्वेनावर्णैङोः सावर्ण्ये गव्यमित्यत्र यस्येति लोपप्रसङ्ग इत्यभिमानः । पांसूदकेति । प्रश्लिष्टावित्यस्य प्रकर्षेण श्लिष्टौ मिलितावित्यर्थः । ततश्च तदननुभवेन केवलताल्वादिस्थानकत्वेन च न तयोः सावर्ण्यप्राप्तिरिति भावः । विभागोऽत्रेति । एवञ्च पूर्ववत् तयोः सावर्ण्यं प्राप्नोत्येवेत्यर्थः । भाष्ये एतदुत्तरं विवृततरावर्णाविति । एवञ्च तद्द्वारा एतयोरपि विवृततरत्वेन प्रयत्नभेदाद्दुखेन न सावर्ण्यमाकारस्य ततोऽपि विवृततरत्वात् तेनाप्यनयोर्न सावर्ण्यं फलाभावश्चेति भावः । एतयोरेवेति । यत्किञ्चित्स्थानसाम्ये सवर्णसंज्ञेत्यभिमानः । क्वचित् । अदसोऽसेर्दादु दो म इत्यादौ ॥

॥ वि० ॥ भाष्ये नैतौ तुल्यस्थानाविति । तोर्लीतिपरसवर्णरहिततद्दानासामितिनिर्देशाद् यावत्स्थानसाम्यमत्र विवक्षितमिति भावः । यत्त्वेषां समुदितं स्थानमिति । तन्न । दन्त्योष्ठ्यो वः स्मृतो बुधैः एऐ तु कण्ठ्यतालव्याविति शिक्षायां प्रत्येकं तत्र भव इत्यधिकारस्थयदनापत्तेः । दन्तोष्ठ इति पाठस्त्वसङ्गतः । शरीरावयवसमुदायस्य शरीरावयवत्वाभावात् । स्वाङ्गसमुदायस्य स्वाङ्गत्वाभाववत् । स्वजनकवायुसंयोगावच्छेदके कण्ठादौ स्वाधारत्वमारोप्य कण्ठे भव इत्याद्युपपत्तिः । शरीरे मे वेदनेत्यप्येवमेवेति दिक् । उदात्तादीनां तर्हीति । यावत्स्थानैक्यवद् यावत्प्रयत्नैक्यविवक्षणादिति भावः । स्वशब्दा उदात्तादिशब्दाः । एवञ्चात्र प्रयत्नशब्देनोदात्तादीनां न ग्रहणमिति भावः । भाष्ये उदात्तादीनां सवर्णसंज्ञा न प्राप्नोतीत्यस्य आस्येन प्रयत्नोऽविशेषित इत्यस्य च समाधानान्तरमाहैकदेशी । अथवा किं न एतेनेति । नोऽस्माकमेतेन प्रारम्भो यत्नस्येत्यर्थकप्रयत्नशब्दाश्रयणेन किमित्यर्थः । क्लिष्टत्वादिति भावः । बाह्यप्रयत्नभेदेऽपीति । एव-

॥ कै० ॥ अभेदका इति । लिङ्गेनैतत् प्रतिपादितं न शास्त्रे एते स्वशब्दोपादानमन्तरेण कार्येषु भिद्यन्ते इति । तेन प्रारम्भभेदेऽप्युदात्तादीनां मिथः सवर्णसंज्ञा भविष्यति । यत् समानमिति । स्पृष्टत्वस्य समानत्वाद्वर्ग्याणां बाह्यप्रयत्नभेदेऽपि सवर्णसंज्ञा भविष्यति । किं सतीति । स्पृष्टताद्यभेदाद्विवारादिभेदेऽपि यथा भवति तथा स्पृष्टतादिभेदेऽपि विवाराद्यभेदात् प्राप्नोतीति प्रश्नः ।

॥ भा० ॥ नैतौ तुल्यस्थानौ । उदात्तादीनां तर्हि सवर्णसंज्ञा न प्राप्नोति । अभेदका उदात्तादयः । अथवा किं न एतेन प्रारम्भो यत्नस्य प्रयत्न इति । प्रयतनमेव प्रयत्नः । तदेव च तद्धितान्तमास्यं यत् समानं तदाश्रयिष्यामः । किं सति भेदे । सतीत्याह । सत्येव हि भेदे सवर्णसंज्ञया भवितव्यम् । कुत एतत् । भेदाधिष्ठाना हि सवर्णसंज्ञा । यदि हि यत्र सर्वं समानं तत्र स्यात् सवर्णसंज्ञावचनमनर्थकं स्यात् ॥

॥ कै० ॥ सत्येवेति । झरो झरीत्येवान्यथा ब्रूयात् । यथासंख्यनिरासार्थं तत्र सवर्णग्रहणं कृतम् । शिण्ढीत्यत्र डकारस्य ढकारे परतो लोपार्थम् । यदि च यत्र सर्वं समानं तत्रैव सवर्णसंज्ञा स्याद् डकारढकारयोर्भेदात् सवर्णत्वं नास्तीति सवर्णग्रहणमनर्थकं स्यात् ॥

॥ वि० ॥ मुदात्तादिभेदेऽपि भविष्यतीत्यपि बोध्यम् । यद्यपि सवर्णसंज्ञाया न प्रयत्नभेदगर्भत्वं तथापि ज्ञापकादेतदर्थसिद्धिरित्याह । झरो झरीति । भाष्ये सत्येव हि भेदे इति । यत्किञ्चित्प्रयत्नभेदे सत्येवेत्यर्थः । कुत एतदिति । सूत्रकारैस्तल्लाभ इति प्रश्नः । समाधत्ते । भेदाधिष्ठाना हीति । यत्किञ्चित्प्रयत्नभेदेत्यर्थः । तत्र ज्ञापकमाह । यदि हीति । सवर्णसंज्ञावचनमित्यस्य सवर्णपदोच्चारणमित्यर्थः । संज्ञा त्वणुदित् सवर्णस्येत्याद्यर्थमावश्यकेति बोध्यम् । भेदादिति । बाह्यप्रयत्नभेदादित्यर्थः । नन्वेवं यत्किञ्चित्स्थानैक्यादेकारौकारयोः सावर्ण्यापत्तिरिति चेन्न । ज्ञापकात् प्रयत्नांशे यावत्प्रयत्नसमानत्वत्यागेऽपि स्थानांशे तत्त्यागे मानाभाव इत्याशयात् । यजुष्येकेषामित्यादिनिर्देशैः स्थानांशे यावत्स्थानतुल्यत्वविवक्षणाच्च । यत्तु तुल्यत्वस्य भेदघटितत्वात् सवर्णसंज्ञा भेदाधिष्ठानेत्यर्थ इति । तन्न । तेन सावर्ण्यनियामकप्रयत्नयोः स्थानयोश्च परस्परं भेदलाभेऽपि वर्णानां यत्किञ्चित्प्रयत्नभेदस्य ततोऽलाभात् । स्थानानामन्ततस्तत्तत्कालरूपोपाधिभेदेन भेदो बोध्यः ॥



॥ वि० ॥ भाष्ये यदि तर्हि सति भेदे इत्यादि सिद्धान्तिवचः । शकारच्छकारयोरिति । तस्मात् प्रारम्भो यत्नस्येति आवश्यकमिति भावः । ननु निश्छद्मेत्यत्र हलः परत्वाभावात् कथं लोपप्राप्तिरत आह । अनचि चेति । तत्रैकदेशी प्रौढ्या समाधानमाह । एवन्तर्हीत्यादि । स्वाङ्गवाच्येवेति । अमूर्द्धेत्यादिपर्युदासादेव स्वाङ्गे लब्धे स्वाङ्गादिति पुनः श्रुतिरवधारणार्थेति भावः । संज्ञायामित्यनुवृत्तेर्न दोष इत्यन्ये । नन्वेवं भिन्नस्थानानामपि

॥ कै० ॥ सर्वमिति । वर्गाणां प्रथमद्वितीया इत्यस्यां शिक्षायां पठितम् अघोषत्वादि । करणन्तु भिन्नं वर्ग्याणां स्पृष्टत्वादूष्मणां च विवृतत्वात् । सति च सवर्णत्वे निश्छद्म निष्ठुरं निस्स्थानं मधुलिट्स्थानमिति झरो झरीति लोपः प्राप्नोति । छद्मनो निष्क्रान्तमिति प्रादिसमासः । अनचि चेति शकारस्य द्विर्वचनम् । तुल्य आस्य इति । तद्धितान्त आस्यशब्दो न स्वाङ्गवाच्येवेति अमूर्द्धमस्तकादि-

॥ भा० ॥ यदि तर्हि सति भेदे किञ्चित् समानमिति कृत्वा सवर्णसंज्ञा भविष्यति । शकारच्छकारयोः षकारठकारयोः सकारथकारयोः सवर्णसंज्ञा प्राप्नोति । एतेषां सर्वमन्यत् समानं करणवर्जम् । एवन्तर्हि प्रयतनमेव प्रयत्नः । तदेव हि तद्धितान्तमास्यं नत्वयं द्वन्द्वः । आस्यं च प्रयत्नश्च आस्यप्रयत्नमिति । किन्तर्हि । त्रिपदोऽयं बहुव्रीहिः । तुल्य आस्ये प्रयत्न एषामिति । अथवा पूर्वस्तत्पुरुषस्ततो बहुव्रीहिः । तुल्य आस्ये तुल्यास्यः । तुल्यास्यः प्रयत्न एषामिति । अथवा परस्तत्पुरुषस्ततो बहुव्रीहिः । आस्ये प्रयत्न आस्यप्रयत्नः । तुल्य आस्यप्रयत्न एषामिति । तस्य । तस्येति तु वक्तव्यम् । किं प्रयोजनम् । यो यस्य तुल्यास्यप्रयत्नः स तस्य सवर्णसंज्ञो यथा स्यादिति । अन्यस्य तुल्यास्यप्रयत्नोऽन्यस्य सवर्णसंज्ञो माभूदिति ॥

॥ कै० ॥ त्यलुग् न भवति । तद्धितान्तास्यशब्दाश्रयणसामर्थ्यादेवास्य इत्येकत्वं विवक्ष्यते तेनैकस्मिन्नेव स्थाने ययोस्तुल्यप्रयत्न इत्याश्रीयते । अथवेति । मयूरव्यंसकादित्वात् सप्तम्यन्तोत्तरपदस्तत्पुरुषः । तस्येति । यत्तदोर्नित्याभिसम्बन्धादाह । यो यस्येति । अन्यथा वर्णान्तरापेक्षया तुल्यास्यप्रयत्नत्वेन सवर्णत्वे लब्धे तदाश्रयमन्यस्यापि कार्यं प्राप्नोति । सूत्रारम्भस्तु रेफोष्मणां व्यावृत्त्यर्थः स्यात् ।

॥ वि० ॥ स्यादत आह । तद्धितान्तास्येति । आस्यपदोपादानसामर्थ्याच्च तन्न्याय इति भावः । एकत्वं विवक्ष्यत इति । तद्विवक्षां विनापि प्रत्यासत्त्या प्रयत्नयोरेकास्यभवत्त्वलाभ इत्यन्ये । त्रिपदबहुव्रीहौ सप्तम्यन्तस्य पूर्वनिपातापत्तेः पूर्वपदार्थप्रधानतत्पुरुषस्याप्यगतिकगतित्वाद् भाष्ये तृतीय आश्रितः । रेफोष्मेति । रेफोष्मणां सवर्णा न सन्तीत्युक्तेरिति भावः ॥

३३४

॥ वि० ॥ तस्यावचनमिति वार्तिके तच्छब्देन कस्य परामर्शोऽत आह । तस्येत्ययमिति । तस्यावचनमित्यत्र षष्ठीतत्पुरुष इति भावः । एवञ्च स्यो न विभक्तिरिति लुगभावः । वस्तुतस्तच्छब्देन पूर्वोक्तस्य तस्यशब्दस्य परामर्श इति वक्तुं युक्तम् । रेफस्यापीति रेफोष्मणामित्येतद्विजातीयसवर्णाभावप्रतिपादनपरमित्यर्थः । तत्र रेफांशे तुल्यास्यप्रयत्नासम्भव एव ऊष्मसु तु नाज्झलाविति निषेधादिति बोध्यम् । एवञ्च व्यावर्त्याभावेन सवर्णसंज्ञावचनसामर्थ्याद् यस्य तस्येति लभ्यत इति भावः । ननु सवर्ण इति संज्ञाशब्दस्य कथं सम्बन्धिशब्दत्वमत आह ।

॥ कै० ॥ तस्यावचनमिति । तस्येत्ययमनुकरणशब्दः । तस्येत्यस्यावचनमित्यर्थः । सवर्णसंज्ञावचनमिति । नच रेफोष्मव्यावृत्त्यर्थं वचनम् । रेफस्यापि रेफः सवर्णो भवत्येव । एवमूष्मसु द्रष्टव्यम् । एवं वचनसामर्थ्याद्दोषं परिहृत्य शाब्दन्यायेन परिहर्तुमाह । सम्बन्धिशब्दैरिति । सम्बन्धिशब्दाविति । तुल्यास्यप्रयत्नशब्दस्य सम्बन्धिशब्दत्वात् तत्समानार्थोऽपि प्रदेशवाक्येषूपात्तः सवर्णशब्दः

॥ भा० ॥ तस्यावचनं वचनप्रामाण्यात् । तस्येति न वक्तव्यम् । अन्यस्य तुल्यास्यप्रयत्नोऽन्यस्य सवर्णसंज्ञः कस्मान्न भवति । वचनप्रामाण्यात् । सवर्णसंज्ञावचनसामर्थ्यात् । यदि ह्यन्यस्य तुल्यास्यप्रयत्नोऽन्यस्य सवर्णसंज्ञः स्यात् सवर्णसंज्ञावचनमनर्थकं स्यात् । सम्बन्धिशब्दैर्वा तुल्यम् । सम्बन्धिशब्दैर्वा पुनस्तुल्यमेतत् । तद्यथा । सम्बन्धिशब्दाः । मातरि वर्तितव्यं पितरि शुश्रूषितव्यमिति । न चोच्यते स्वस्यां मातरि स्वस्मिन् पितरीति । सम्बन्धाच्चैतद्गम्यते या यस्य माता यश्च यस्य पितेति । एवमिहापि तुल्यास्यप्रयत्नं सवर्णमित्यत्र सम्बन्धिशब्दावेतौ । तत्र सम्बन्धादेतदवगन्तव्यम् । यत् प्रति यत् तुल्यास्यप्रयत्नं तत् प्रति तत् सवर्णसंज्ञं भवतीति । ऋकारऌकारयोः सवर्णविधिः । ऋकारऌकारयोः सवर्णसंज्ञा विधेया ॥

॥ कै० ॥ सम्बन्धिशब्दः । यथा तुल्याय कन्या दातव्येत्युक्ते न शूद्रेण तुल्याय ब्राह्मणः कन्यां ददाति अपितु आत्मना तथेहापीत्यर्थः । ऋकारऌकारयोरिति । स्थानभेदान्न प्राप्नोतीत्यारम्भः । अत्र चानयोरेव श्रुतत्वान्मिथः सवर्णसंज्ञा विज्ञायते न त्वेतयोरन्येन सहेति बोद्धव्यम् ॥

॥ वि०॥ तुल्यास्येत्यादि । स्वार्थभिन्नप्रतियोगिकसम्बन्धनिमित्तः शब्दः सम्बन्धिशब्द इति भावः । परेतु अत्र सूत्रे द्वन्द्वनिर्देशलभ्यौ तुल्यास्यतुल्यप्रयत्नशब्दावित्यर्थो भाष्यस्य सवर्णशब्दो हि प्रदेशेऽपि सवर्णपदवत्परो नतु तुल्यास्यप्रयत्नत्वप्रवृत्तिनिमित्तक इति तस्य सम्बन्धिशब्दत्वं दुरुपपादमुपक्रमोपसंहाराभ्यां चैवमेवोचितम् । उपक्रमे हि तुल्यास्यं च तुल्यप्रयत्नं च सवर्णसंज्ञं भवतीत्युक्तमित्याहुः । ऋकारऌकारयोरिति । अत्र ऋत्यक इति प्रकृतिभावः । वार्तिकेऽप्येवमेव पाठ इति प्रामाणिकाः । सावर्ण्यप्रतियोग्यनिर्देशादाह । अत्र चेति ॥

३३५

॥ वि० ॥ भाष्ये होतृऌकारो होतॄकार इति । ऌकारशब्दो देवतावाचीत्येके । विवृतस्य ऌकारस्य दीर्घस्याभावादॄकारो दीर्घ उदाहृत इति बोध्यम् । नैतदस्तीति । सवर्णसंज्ञाया इति शेषः । नन्वीषत्स्पृष्टेन मुक्तेऽपि विवृतदीर्घः सवर्णसंज्ञां विना दुर्लभोऽत आह । तत्रेति । भाष्ये तद्वचनद्वयारम्भेऽपि सवर्णसंज्ञावश्यिकीत्याह । तत् सवर्णे इति । अज्मात्रस्येति । अनज्व्यावृत्त्यर्थमक इति वर्त्तते । सवर्णसंज्ञाभावात् सवर्ण इति नानुवर्त्तत इति भावः । खण्डयति । यदेतदिति भाष्ये । सवर्ण इतीति । आद्यवार्त्तिके सवर्णग्रहणमनुवर्त्तत इति भावः । तेन ऌतीति । सिद्धान्तेऽपि

॥ कै० ॥ वक्ष्यत्येतदिति । तत्र ॡवावचनमित्यत्र दीर्घ इत्यनुवर्त्तते तत्र ऌति ॡशब्दे विकल्पितेऽप्राप्त एव पक्षे दीर्घो भविष्यति स च भवन् ऌवर्णस्य दीर्घाभावादृवर्णस्यान्तरतमो दीर्घ ॠकारो भविष्यति । तत् सवर्ण इति । यद्यविधाय सवर्णसंज्ञां तदुच्येत अज्मात्रस्य ऌति तत्कार्यं स्यात् । यथा दध्ॡकार इति । तस्मात् सवर्णसंज्ञा विधेया । ऋत इति वक्ष्यामीति । ऋकारस्य ऋकार एव सवर्ण इति

॥ भा० ॥ होतृऌकारः । होतॄकारः । किं प्रयोजनम् । अकः सवर्णे दीर्घ इति दीर्घत्वं यथा स्यात् । नैतदस्ति प्रयोजनम् । वक्ष्यत्येतत् । सवर्णदीर्घत्वे ऋति ॠ वा वचनम् ऌति ॡ वा वचनमिति । तत् सवर्णे यथा स्यात् । इह माभूत् दध्ॡकारो मध्ॡकार इति । यदेतत् सवर्णदीर्घत्वे ऋतीति एतदृत इति वक्ष्यामि । ततः । ऌति । ऌकारे परत ॡकारो वा भवति । ऋत इत्येव ॥

॥ कै० ॥ ऋत्येव भविष्यति । ततश्च ऌति ऋत इत्येव । इदं चासवर्णार्थम् । तेन ऌति रूपद्वयं सिद्धम् । तत्रासंहितायाम् ऋकारे होतृ ऋकार इतिरूपम् । संहितायामपि ऋत्यक इति शाकलप्रकृतिभावे एतदेव रूपम् । शाकलाभावे होतॄकारो होतॄकार इति रूपद्वयम् । ऌकारेऽसंहितायां संहितायां च शाकले होतृ ऌकार इति रूपम् । शाकलाभावे तु होतॄकारो होतॄकार इति रूपद्वयम् ॥

॥ वि० ॥ व्यवस्थितविभाषयाऽनभिधानेन वा होतृऌकारे पूर्ववार्त्तिकं गम्ऌ्ऌकारे चोत्तरवार्त्तिकं न प्रवर्त्तते । एवं कॄ इति दीर्घस्य ऋकारे परे पूर्वस्य तस्यैव ऌकारे उत्तरस्य चाप्रवृत्तिस्तत एवेति भावः । रूपद्वयमिति । ईषत्स्पृष्टघटितं विवृतदीर्घघटितं चेति भावः । तत्रासंहितायामिति । समासे संहिता नित्या । असमासे त्वीदृशं रूपं दुर्लभम् । होतृशब्दे विभक्तिश्रवणापत्तेः । होतृशब्दस्य नपुंसके सम्बुद्धौ रूपमित्यप्यतिक्लिष्टमिति चिन्त्यम् । भाष्ये तु होतृऌकार इति दीर्घप्रवृत्तियोग्यैतद्रूपोच्चारणम् । इति स्थिते इति शेषः । एवं शाकले होतृऌकार इत्यपि चिन्त्यम् । सवर्णत्वविधायकवचनाभावे एतद्विचारसत्त्वेन तत्र ऋत्यक इत्यस्याप्राप्तेः । इकोऽसवर्ण इत्यपि न समास इति निषिद्धम् । नित्यग्रहणं तु तत्र भाष्ये प्रत्याख्यातमित्याहुः ॥

॥ वि० ॥ सवर्णसंज्ञावचनेनैकेनैव सिद्धे तद्द्वयं न कार्यमित्याह । भाष्ये तत्र वक्तव्यमिति । इतर आह । अवश्यमिति । अर्द्धतृतीयेति । तावतापि स्थानप्रयत्नसाम्येन ताभ्यां ग्रहणं स्यादित्यरुचेराह । ईषत्स्पृष्टेति । विवृतत्वाभावे उपस्थितरेफीयप्रयत्नत्यागे मानाभावादिति भावः ।

॥ कै० ॥ तत्र वक्तव्यमिति । द्वावप्येतौ दीर्घौ ॠॡ इति तत्र ऋकारे कदाचिद् ॠ इति दीर्घः कदाचिद् ॠ इति । ऌकारेऽपि ॡॡ इत्येतौ भविष्यतः सत्यां सवर्णसंज्ञायामिति भावः । नचेति । अर्द्धतृतीयमात्रत्वादिति केचिदाहुः । अन्ये त्वीषत्स्पृष्टकरणत्वादनयो-

॥ भा० ॥ तत्र वक्तव्यं भवति । अवश्यं तद्वक्तव्यम् । ऊकालोऽज्झ्रस्वदीर्घप्लुतसंज्ञो भवतीत्युच्यते । नच ॠकार ॡकारो वाजस्ति । ॠकारस्य, ॡकारस्य चाच्त्वं वक्ष्यामि ॥

॥ कै० ॥ ॠकारॡकारयोश्च विवृतत्वात् ताभ्यां तयोरग्रहणादनच्त्वमाहुः । अच्त्वं वक्ष्यामीति । सत्यच्त्वे दीर्घसंज्ञा तयोर्भविष्यति । येषां तु मतमर्द्धतृतीयमात्रावेताविति तेषां मते सत्यप्यच्त्वे द्विमात्रत्वाभावादेतयोर्दीर्घसंज्ञा न प्राप्नोति । तस्माद्द्विमात्रावेतावभ्युपगन्तव्यौ ॥

॥ वि० ॥ ताभ्यामिति । असावर्ण्यादिति भावः । भाष्ये वचनद्वयप्रत्याख्यानवाद्याह । ॠकारस्येत्यादि । सत्यच्त्वे इति । अयोगवाहेषु पाठादिति भावः ॥



॥ वि० ॥ नाच्कार्यमिति । तस्य प्लुतसंज्ञा । तत्स्थाने प्लुतश्चेति भावः । अत्र पक्षेऽपि उक्तयुक्त्या ह्रस्वऋकारद्वयस्थानिकदीर्घैकादेशातिरिक्तविषये आद्यस्य ह्रस्वऋकारऌकारद्वयस्थानिकदीर्घैकादेशातिरिक्तविषये द्वितीयस्य न साधुत्वमिति नातिप्रसङ्गः । पक्षयोस्तुल्यफलता चेति

॥ कै० ॥ तत्रावश्यमिति । त्वयापि ॠवा वचनम् ॡवा वचनमिति ब्रुवताऽच्त्वमनयोर्वक्तव्यम् । अन्यथा विधानमात्रमेवानयोः स्याद् नाच्कार्यं प्लुतः । सति त्वच्त्वे ताभ्यां त्रिमात्रयोरपि सावर्ण्याद्ग्रहणे सति प्लुतसंज्ञा भवतीति प्लुतसिद्धिः । किं पुनरिति । एकैकस्मिन् संहितायां शाकलाभावपक्षे रूपद्वयं साध्यम् । तत्रोभयथापि सिध्यति । तत्र सवर्णसंज्ञायाम-

॥ भा० ॥ तत्रावश्यं वक्तव्यम् । प्लुतो यथा स्यात् । होतृॠकारः । होतॄकारः । होतॄ३कारः । होतृऌकारः । होतॢकारः । होतॢ३कारः । किं पुनरत्र ज्यायः । सवर्णसंज्ञावचनमेव ज्यायः । दीर्घत्वं चैव हि सिद्धं भवति । अपि च । ऋकारग्रहणे ऌकारग्रहणं सन्निहितं भवति । यथेह भवति । ऋत्यकः । खट्वऋश्यः । मालऋश्यः । इदमपि सिद्धं भवति । खट्वऌकारो मालऌकार इति । वा सुप्यापिशलेः । उपर्कारीयति उपार्कारीयति । इदमपि सिद्धं भवति । उपल्कारीयति उपाल्कारीयतीति ।

॥ कै० ॥ सत्यां यथा सिध्यति तथा पूर्वमेवोक्तम् । सत्यां तु यथा सिध्यति तथोच्यते । इह द्वयोर्ऋकारयो रेफद्वययुक्तत्वाद्विवृतत्वाच्च कदाचिद्रेफद्वययुक्त ॠकारो भवति कदाचिद्विवृत ॠकारः । ऌकारेऽपि कदाचिदृकारान्तरतम ॠकारः कदाचिद् ऌकारान्तरतम ॡकार इति साम्यमुभयोः पक्षयोः ।

॥ वि० ॥ बोध्यम् । तदेव ध्वनयन् पृच्छति । भाष्ये किं पुनरत्रेति । ॠकार इति । विवृत इत्यर्थः । ॡकार इति । ईषत्स्पृष्ट इत्यर्थः । भाष्ये दीर्घत्वं चैव हीति । ईषत्स्पृष्टविवृतरूपो दीर्घो वर्ण इत्यर्थः । तद्व्याचष्टे । अपिचेत्यादिना । खट्वऌकार इति । होतृऌकार इत्यस्याप्युपलक्षणम् ॥

॥ वि० ॥ वचनस्य क्वाप्यदर्शनादाह । व्याख्यास्यामीति । अन्ये तु लण्सूत्रस्थाकारस्यानुनासिकत्वेऽतो ऌन्तस्येत्यत्र भगवान् पाणिनिर्लकारं नोच्चारयेत् । प्रत्याहारेणैव निर्वाहात् । तस्मादपूर्वं वचनं कार्यमित्येव भाष्याशय उचित इत्याहुः । आन्तरेति । रश्रुते रपरो लश्रु-

॥ कै० ॥ लपरत्वमिति । व्याख्यास्यामीत्यर्थः । रपर इत्यत्र र इति लणिति लकाराकारेण प्रत्याहार आश्रीयते । तत्रान्तरतम्याद् ऋकारस्याण् रपरो भवति ऌकारस्याण् लपर इति । असत्यामिति । असत्यां सवर्णसंज्ञायाम् उरण् रपर

॥ भा० ॥ यदि तर्ह्यृकारग्रहणे ऌकारग्रहणं सन्निहितं भवति उरण् रपरः । ऌकारस्यापि रपरत्वं प्राप्नोति । ऌकारस्य लपरत्वं वक्ष्यामि । तच्चावश्यं वक्तव्यम् । असत्यां सवर्णसंज्ञायां विध्यर्थम् । तदेव सत्यां रेफबाधनार्थं भविष्यति । इह तर्हि रषाभ्यां नो णः समानपदे इत्यत्र ऋकारग्रहणं चोदितम् । मातॄणां पितॄणामित्येवमर्थम् । तदिहापि प्राप्नोति । कॢप्यमानं पश्येति । अथासत्यामपि सवर्णसंज्ञा-यामिह कस्मान्न भवति प्रकॢप्यमानं पश्येति । चुटुतुलशर्व्यवाये नेति वक्ष्यामि । अपर आह । चिभिश्च मध्यमैर्वर्गैर्लशसैश्च व्यवाये नेति वक्ष्यामीति ॥

॥ कै० ॥ इत्यत्र ऌकारग्रहणं कर्तव्यं भवति । प्रकॢप्यमानमिति । कॢप्यत्र इति णत्वप्रसङ्गः । चिभिश्चेति । पूर्वस्मादयं विशेषः । पूर्वत्र शरन्तर्भूतोऽपि षकारः साक्षाण्णत्वनिमित्तत्वाद्व्यवधायकत्वेन नाश्रीयते इह तु तस्यानुपादानमेव ॥

॥ वि० ॥ तेर्लपर इत्यर्थः । सवर्णसंज्ञावादी तदभाववादिनं प्रति तत्राप्यावश्यकं तदित्याह । तच्चावश्यमिति । ऌकारस्याण् लपर इत्येतत् । साक्षादिति । रषाभ्यामिति वचनादित्यर्थः ॥



॥ वि० ॥ नन्वत्र लकाराभाव इत्यत आह । भाष्ये वर्णैकदेशा इत्यादि । अग्रहणपक्षे त्विति । प्रकॢप्यमानमित्यत्र कॢप्यमानमित्यत्र चेति भावः । आद्ये कॢप्यत्र इति द्वितीये ऋवर्णान्नस्येति प्राप्तिः । भेदेनेति । ओखृ गम्लृ इति भेदेनानुबन्धनिर्देशः । नाम्लोपिशास्वृदितां पुषादिद्युताद्लृदित इति च भेदेनोपादानमित्यर्थः । नाज्झलौ । अकारेत्यादि । एवञ्च हरिरित्यादौ दीर्घः शयनमित्यादौ यणापत्तिरिति भावः ।

॥ कै० ॥ वर्णैकदेशा इति । अवयवस्य स्वव्यापारानिवर्तनात् । अग्रहणपक्षे तु चुभ्नादेराकृतिगणत्वासत्त्वाभावः । ऋदिताम् ऌदितां च भेदेनानुबन्धनिर्देशाद्भेदेन चोपादानादनुबन्धकार्येषु परस्परग्रहणाभावाद्व्यतिकराभावः । नाज्झलौ । अकारहकारयोरिकारशकारयोश्च तुल्यस्थानप्रयत्नत्वात् सवर्णसंज्ञा प्राप्ता निषिध्यते । अत एव च निर्देशादचाम्

॥ भा० ॥ वर्णैकदेशाश्च वर्णग्रहणेन गृह्यन्त इति योऽसौ ऌकारे लकारस्तदाश्रयः प्रतिषेधो भवि-ष्यति । यद्येवं नार्थो रषाभ्यां नो णत्वे ऋकारग्रहणेन । वर्णैकदेशाश्च वर्णग्रहणेन गृह्यन्त इति योऽसा-वृकारे रेफस्तदाश्रयं णत्वं भविष्यति । नाज्झलौ । अज्झलोः प्रतिषेधे शकारप्रतिषेधोऽज्झल्त्वात् । अज्झलोः प्रतिषेधे शकारस्य शकारेण सवर्णसंज्ञायाः प्रतिषेधः प्राप्नोति । किं कारणम् । अज्झल्त्वात् । अच्चैव हि शकारो हल् च । कथं तावदच्त्वम् । इकारः सवर्णग्रहणेन शकारमपि गृह्णातीत्येवमच्त्वम् । हल्षु चोपदेशाद्धल्त्वम् । तत्र को दोषः । तत्र सवर्णलोपे दोषः । तत्र सवर्णलोपे दोषो भवति ॥

॥ कै० ॥ अज्भिर्हलां हल्भिः सवर्णत्वानिषेधः । अज्झलोरिति । प्रकृतत्वात् सवर्णसंज्ञाया इति बोद्धव्यम् । शकारप्रतिषेध इति । द्विवचनान्तस्य समासः । भेदाधिष्ठानत्वात् सवर्णसंज्ञायाः । इकार इति । अत्र हि सूत्रेऽजिति इकारो गृह्यमाणः सवर्णं गृह्णातीति शकारस्यापि ग्रहणमस्ति ॥

॥ वि० ॥ अत एवेति । पूर्वसवर्णदीर्घनिर्देशादित्यर्थः । किञ्चैवं सति अकः सवर्णे झरो झरि सवर्णे इत्यस्यासङ्गतिरित्यपि बोध्यम् । भेदाधिष्ठा-नत्वादिति । व्यक्त्यैक्ये हि तुल्यास्यप्रयत्नत्वासम्भव इति भावः । सवर्णग्रहणेनेति भाष्ये । सवर्णग्राहकेणाणुदित्सूत्रेणेत्यर्थः । अत्र हि सूत्रे इति । उच्चारितस्यैव प्रत्यायकतामत्यपूर्वपक्षी न जानाति प्रत्याहारेषु जातिग्रहणमिति च न जानाति ॥

॥ वि० ॥ ननु सति सवर्णत्वे इकारः शकारं गृह्णीयात् तदेवच न नाज्झलाविति निषेधादत आह । स्वात्मनीति । यद्यपि स्वाध्यायोऽध्येतव्य इत्यात्मानमपि विषयीकरोतीति एकस्य विषयत्वविषयित्वयोर्न विरोधस्तथाप्येतद्वाक्यार्थबोधोत्तरमन्यत्र निषेधेऽपि स्ववाक्यार्थबोधात् प्राक् स्वघटकपदार्थोपस्थितिवेलायां स्ववाक्यार्थरूपसावर्ण्याभावज्ञानाभावान्नाचेकारशकारयोस्तदभावबोधनमिति भावः । अपवादस्यैवासम्पत्त्येति । अपवादस्य नाज्झलावित्यस्यासंपत्त्या प्राग्बोधाभावेन स्वविषयेऽप्राप्तौ तद्घटकपदोपस्थितयोरिकारशकारयोर्नापवादविषयत्वमित्यर्थः । बहुलेति । मयूरव्यंसकादित्वात् सुप्सुपेति

॥ कै० ॥ स्वात्मनि क्रियाविरोधाद्चैव सूत्रे इदं न व्याप्रियत इति सवर्णत्वनिषेध इकारशकारयोर्नास्ति । यस्येतिचेत्यादौ तु शकार इकारेण न गृह्यते । अनेन सवर्णत्वनिषेधात् । इह तु स्वात्मनि व्यापारो नास्ति । अस्ति च पूर्वेण सवर्णत्वमिकारशकारयोरिति भावः । प्रकल्प्य चापवादविषयमिति न्यायोऽत्र नास्ति । अपवादत्वस्यैवासम्पत्त्या । परश्शतानीति । शतात् पराणि

॥ भा० ॥ परश्शतानि कार्याणि । झरो झरि सवर्ण इति लोपो न प्राप्नोति । सिद्धमनच्त्वात् ।
सिद्धमेतत् । कथम् । अनच्त्वात् । कथमनच्त्वम् । स्पृष्टं करणं स्पर्शानाम् । ईषत्स्पृष्टमन्तःस्थानाम् । विवृतमूष्मणाम् । ईषदित्येवानुवर्तते । स्वराणां च विवृतम् । ईषदिति निवृत्तम् ॥

॥ कै० ॥ शताद्धिकानीत्यर्थः । कर्तृकरणे कृता बहुलमिति बहुलवचनात् समासः । पारस्करादित्वात् सुडागमः । सकारस्य श्चुत्वम् । अनचि चेति द्विर्वचनम् । झरो झरीतिलोपाप्रसङ्गात् त्रिशकारश्रवणप्रसङ्गः । शरोऽचि अनचि चेत्यत्र च इकारेण शकारो न गृह्यते । अनेन सवर्णत्वस्य निषेधादित्यस्ति शकारस्य द्विर्वचनम् । सिद्धमनच्त्वादिति । सूत्रप्रत्याख्यानसाधारणमुक्तम् । प्रयत्नभेदादज्झलोः सवर्णसंज्ञायाः प्राप्तिरेव नास्तीत्यर्थः ॥

॥ वि० ॥ वा समास इत्युचितम् । ननु कथं शस्य द्वित्वमनचि चेति शरोऽचीति वा निषेधापत्तेरत आह । शरोऽचीति । ननु प्रयत्नभेदेनानच्त्वे सूत्रमेव व्यर्थं स्यादत आह । सूत्रेति । भाष्ये ईषदित्येवेति । एङैचोः परस्परसावर्ण्याभावाय विवृतत्वव्याख्यानामपि सवर्णसंज्ञानियामकत्वस्य सूत्रमतेऽप्यावश्यकत्वेन तदाश्रित्य सूत्रानारम्भ एवं ज्यायान् । किञ्च दीर्घप्लुताकारऌकारयोः सावर्ण्यव्यावृत्तये इदमपि तस्यावश्यकमिति भावः ।



॥ वि० ॥ वाक्यापरिसमाप्तेर्वेति । अन्यथा नाज्झलावित्यस्य निषेधस्य स्वस्मिन्नपि प्रवृत्तौ तव पूर्वपक्षस्यैवानुत्थानं स्यादिति भावः । अनिष्पादमुपपादयति । अस्मिन् हीति । सूत्रे निष्पन्ने इति । जनितवाक्यार्थबोधे इत्यर्थः । प्रवर्तते इति । एते परस्परं सवर्णसंज्ञा इति

॥ कै० ॥ वाक्यापरिसमाप्तेरिति । भवतु वा तुल्यास्यप्रयत्नत्वं तथापीहेकारेण शकारो न गृह्यते ।
सवर्णसंज्ञाया अस्मिन् सूत्रेऽनिष्पादात् । अस्मिन् हि सूत्रे निष्पन्ने सति अपवादविषयपरिहारेणेष्टविषये

॥ भा० ॥ वाक्यापरिसमाप्तेर्वा । वाक्यापरिसमाप्तेर्वा पुनः सिद्धमेतत् । किमिदं वाक्यापरिसमाप्तेरिति । वर्णानामुपदेशस्तावत् ।
उपदेशोत्तरकाला इत्संज्ञा । इत्संज्ञोत्तरकाल आदिरन्त्येन सहेतेति
प्रत्याहारः । प्रत्याहारोत्तरकाला सवर्णसंज्ञा । सवर्णसंज्ञोत्तरकालमणुदित् सवर्णस्य चाप्रत्यय इति सवर्णग्रहणम् । एतेन सर्वेण समुदितेन
वाक्येनान्यत्र सवर्णानां ग्रहणं भवति । नचात्रेकारः शकारं गृह्णाति ॥

॥ कै० ॥ सवर्णसंज्ञा प्रवर्तते । नत्वेतत्सूत्रनिष्पत्त्यवस्थायाम् । ततश्चाङ्गेषूपदेशेत्संज्ञाप्रत्याहारसवर्णत्वेषु
निष्पन्नेषु अणुदित् सवर्णस्य चेत्येतद् अस्य च्वावित्यादिषु प्रवर्त्तते नत्वङ्गेषूपदेशादिषु । नापि स्वात्मनि ॥

॥ वि० ॥ प्रमारूपं निश्चयज्ञानं निष्पद्यत इत्यर्थः । तदेव च लक्ष्यसंस्कारकमिति भावः । निष्पन्त्यवस्थायाम् । वाक्यार्थबोधावस्थायाम् । सवर्णत्वेषु निष्पन्नेषु । तत्र सवर्णत्वनिष्पत्तिरिष्टविषये सवर्णपदवाच्यत्वग्रहः । नापि स्वात्मनीति । अनिष्पत्तेरिति भावः ॥

॥ वि॰ ॥ अङ्गानिष्पत्त्या । अङ्गस्येष्टविषयसवर्णपदवाच्यत्वज्ञानस्यानिष्पत्त्या । भाष्ये तावत् । प्रथमम् । उपदेशोत्तरकालेति । ज्ञातस्य संज्ञाविधानादिति भावः । प्रत्याहारोत्तरकाला सवर्णसंज्ञेत्यादेरिष्टविषये सवर्णसंज्ञासंज्ञित्वग्रहणं तदुत्तरकालमणुदिदित्येतदकारादिभिः स्वसवर्णत्वेन ज्ञातानां ग्रहणं बोधयतीत्यर्थः । अपरिसमाप्तिश्च सवर्णनिर्णयं विना तद्ग्रहणबोधनासामर्थ्यमित्यर्थः । तज्जन्ये शक्तिग्रहे बाधकसम्भावनोहिताऽप्रामाण्यसम्भावनासत्त्वादिति तात्पर्यम् । यत्तु नाज्झलावित्यतः प्राक् तुल्यास्येत्यस्य बोधाभावेन सवर्णपदार्थज्ञानाभावाद् अणुदिदित्यस्य वाक्यार्थाबोध इत्यर्थ इति । तन्न । अभावज्ञाने प्रतियोगिज्ञानस्य कारणतया तुल्यास्येत्यतः प्राग् निषेधवाक्यार्थाभावो न तु विपरीतमित्यदोषादिति दिक् । सिद्धमिति । अचत्वाच्पदार्थोपस्थितिकाले वाक्यार्थबोधरूपसावर्ण्याभावज्ञानाभावादिकारशकारयोः सवर्णत्वज्ञानेऽप्यणुदित्सूत्रजस्येष्टविषये वाक्यार्थबोधरूपशक्तिग्रहस्याभावान्नेकारेणाच शकारग्रहण-

॥ कै॰ ॥ ततश्चात्र सूत्रेऽङ्गानिष्पत्त्या अणुदिदित्यस्याप्रवर्तनादिकारेण शकारस्याग्रहणात् सवर्णत्वं शकारयोः सिद्धम् । एवमीकारोऽप्यचेकारेण न गृह्यत इतीकारशकारयोः सवर्णत्वमस्तीति कुमारी शेते इत्यत्र सवर्णदीर्घत्वं प्राप्तमचीत्यनुवृत्त्या निवार्य्यते ॥

॥ वि॰ ॥ मिति भावः । ननु वाक्यापरिसमाप्तिन्यायस्यास्मदादीन् प्रति प्रवृत्तत्वेऽपि पाणिनेस्तत्तच्छास्त्रप्रणयनान्यथानुपपत्त्या तत्तद्विषयज्ञानस्य प्रागपि सत्त्वावश्यकत्वेन तज्ज्ञानस्यैतच्छास्त्रासाध्यत्वेन च नाज्झलावित्यादौ सवर्णाभिप्रायेण प्रयोगः स्यात् । अस्मदादीनां बोधस्तु तत्तात्पर्य्यज्ञव्याख्यातृपरम्परया लक्षणया भविष्यतीति शकारयोः प्रतिषेधः प्राप्नोति एवमकारयोरपीति चेन्न । ज्ञानसत्त्वेऽपि तदभिप्रायेण प्रयोगे तात्पर्य्यग्राहकाभावात् । करिष्यमाणसंज्ञाद्यभिप्रायेण पाणिनिव्यवहाराभावस्यैव प्रतिपादनाच्च । अत एव हलन्त्यसूत्रे इतरेतराश्रयमाशङ्क्य एकशेषेण समाहितं भाष्ये । अन्यथा पाणिनिना हल्पदार्थस्य ज्ञातत्वेन तस्यान्योन्याश्रयाभावात् तेन तदभिप्रायेण प्रयोगे बोद्धृबोधस्य लक्षणयैवोपपत्तौ तत्पर्यन्तानुधावनमनर्थकं स्यात् । मम तु पाणिनेस्तथा व्यवहाराभावान्न दोषः । उक्तार्थे ज्ञापकमप्युपन्यस्यति । एवमीकारोऽपीति । अत्र पक्षे दीर्घप्लुताकाराभ्यां हकारे सावर्ण्यवारणं तु प्रश्लेषाद्बोध्यम् । तत्र तात्पर्य्यग्राहका वेलास्वित्यादिनिर्देशाः प्रागुक्तं भाष्यं चेति बोध्यम् ॥



॥ वि॰ ॥ प्रदर्शनाय । बोधनाय । भाष्ये यदेतदिति । तद्बोधवेलायां वाक्यपरिसमाप्तेरिति भावः । एकत्रेति । तुल्यार्थानां विकल्प

॥ कै॰ ॥ तत्र क्व ग्रहणकशास्त्रं प्रवर्त्तते क्व नेति विषयविभागप्रदर्शनाय चोद्यं करोति । यथैव तर्हीति । इकारस्य ह्यचाग्राहकत्वं दृष्टमित्यकः सवर्णे दीर्घ इत्यत्रापि प्राप्तमिति प्रश्नः । अनच्त्वमेव वाक्यापरिसमाप्त्या साध्यते न तु प्रयत्नभेदेनेत्याह । अपर आहेति ।

॥ भा॰ ॥ यथैव तर्हीकारः शकारं न गृह्णाति एवमीकारमपि न गृह्णीयात् । तत्र को दोषः । कुमारी ईहते कुमारीहते अकः सवर्णे दीर्घ इति दीर्घत्वं न प्राप्नोति । नैष दोषः । यदेतदकः सवर्णे दीर्घ इत्यत्र प्रत्याहारग्रहणम् । तत्र इकार ईकारं गृह्णाति शकारं न गृह्णाति । अपर आह । अज्झलोः प्रतिषेधे शकारप्रतिषेधोऽज्झल्त्वात । अज्झलोः प्रतिषेधे शकारस्य शकारेण सवर्णसंज्ञायाः प्रतिषेधः प्राप्नोति । किं कारणम् । अज्झल्त्वात् । अच्चैव हि शकारो हल् च । कथं तावदच्त्वम् । इकारः सवर्णग्रहणेन शकारमपि गृह्णातीत्येवमच्त्वम् । हल्षु चोपदेशाद्धल्त्वम् । तत्र को दोषः । तत्र सवर्णलोपे दोषः । तत्र सवर्णलोपे दोषो भवति । परशतानि कार्य्याणि । झरो झरि सवर्णे इति लोपो न प्राप्नोति । सिद्धमनच्त्वात् । सिद्धमेतत् । कथम् । अनच्त्वात् । कथमनच्त्वम् । वाक्यापरिसमाप्तेर्वा । उक्ता वाक्यापरिसमाप्तिः । अस्मिन् पक्षे वेत्येतदसमर्थितं भवति । एतच्च समर्थितम् । कथम् । अस्तु वा शकारस्य शकारेण सवर्णसंज्ञा मा वा भूत् ॥

॥ कै॰ ॥ अस्मिन् पक्ष इति । एकत्र हि साध्ये हेतुविकल्पो भवति इह तु साध्यभेदः । सिद्धेरनच्त्वं हेतुः । अनच्त्वस्य वाक्यापरिसमाप्तिः । एतच्चेति । अस्तु वा ग्रहणमिकारेण शकारस्येति वाक्यशेषाध्याहारात् प्रतिज्ञाविकल्पार्थो वाशब्द इत्यर्थः ॥

॥ वि॰ ॥ इति न्यायादित्यर्थः । मावाभूदित्येतत्सूचितप्रतिज्ञाया आशयमाह । अस्तु वेति ॥

॥ वि० ॥ ननु व्यञ्जनपरस्यैकस्यानेकस्य वा नोच्चारणे विशेष इति न्यायात् कथं भेद इत्यत आह । श्रुतिकृतमिति । भाष्येऽसतिलोपे त्रिय-कारमिति वदन् प्रष्टव्यः किं द्वियकारकं न स्यादिति तवाशय उत त्रियकारं स्यादिति । आद्ये आह । असत्यपीति । द्वियकारं भवत्येवेत्यर्थः ।

॥ कै० ॥ ननु चेति । श्रुतिकृतं भेदमभ्युपगम्योच्यते । स एष कथं भेदो नेत्यवैवच्छेदः । भेद एवेत्यर्थः । अपर आह स्याद्भेदः । यदि नित्यो लोपः स्याद् विभाषा तु स लोप इति । ततो नास्ति भेद इत्यर्थः । द्विर्वचनमपि विभाषा । यरोऽनुना-

॥ भा० ॥ ननु चोक्तं परस्त्रतानि कार्याणि । झरो झरि सवर्णे इति लोपो न प्राप्नोतीति । माभूल्लोपः । ननु च भेदो भवति । सति लोपे द्वियकारम् । असति लोपे त्रियकारम् । नास्ति भेदः । असत्यपि लोपे द्वियकार-मेव । कथम् । विभाषा द्विर्वचनम् । एवमपि भेदः । असति लोपे कदाचिद् द्वियकारं कदाचित् त्रियकारं सति लोपे द्वियकारमेव । स एष कथं भेदो न । स्याद् यदि नित्यो लोपः स्याद् विभाषा तु स लोपः । यथाऽभेदस्तथाऽस्तु । इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये प्रथमाध्यायस्य प्रथमे पादे चतुर्थमाह्निकम् ॥ ॥ * ॥

॥ कै० ॥ सिकोऽनुनासिको वेत्यतो वेत्यनुवर्त्तनाद् । लोपोऽपि विभाषा । झयो होऽन्यतरस्यामित्यतोऽन्यतरस्यामित्यनुवर्त्तना-दित्यर्थः । इति श्रीमदुपाध्यायजैयटपुत्रकैयटविरचिते महाभाष्यप्रदीपे प्रथमाध्यायस्य प्रथमे पादे चतुर्थमाह्निकम् ॥ * ॥

॥ वि० ॥ द्वितीये आह । एवमपीति । विभाषा द्विर्वचनेऽपीत्यर्थः । एवमपीत्यर्थेन भेद एवेत्युक्त्वा तदुपपादनावसरे यदि लोपो न स्यादिति वाच्यं किमुच्यते नित्यो लोपः स्यादिति अतश्छित्त्वा भिन्नकर्त्तृकत्वेन योजयति । स एष इति । त्रियकारमिष्टमेवेति तात्पर्य्यम् । झयो ह इति । इदं वृत्तिरीत्या । भाष्यरीत्या तु वावसान इत्यत इति बोध्यम् । इति कालोपनामकशिवभट्टसुतसतीगर्भजनागोजिभट्टकृते महाभाष्यप्रदीपोद्द्योते प्रथमाध्यायस्य प्रथमे पादे चतुर्थमाह्निकम् ॥ * ॥



* ॥ वि० ॥ ईदूदेद् । व्यक्तिपक्षे ईदूतोस्तपरयोरुपादानं भिन्नकालनिवृत्तये वा गुणान्तरयुक्तग्रहणाय वा स्यात् । तत्र नाद्य इत्याह । ईदूतोरिति । एवञ्चाणुदिदित्यस्य प्राप्त्यभावाद् न तद्बाधकतपरसूत्रप्रवृत्तये तपरत्वमित्यर्थः । तपरसूत्रेऽणग्रहणाननुवृत्त्या तस्य प्राप्तावपि फलाभावान्न द्वितीय इत्याह । उदात्तादीनामिति ।

॥ कै० ॥ ईदूदेद् द्विवचनं प्रगृह्यम् । किमर्थमिति । ईदूतोरनण्त्वाद्भिन्नकालनिवृत्त्यर्थं नोपपद्यते तपरत्वम् । उदात्तादीनामभेदकत्वाद्गुणान्तरयुक्तानां ग्रहणार्थमपि नोपपद्यते । जातिप-

॥ भा० ॥ ईदूदेद द्विवचनं प्रगृह्यम् । किमर्थमीदादीनां तपराणां प्रगृह्यसंज्ञोच्यते । तपरस्तत्कालस्येति तत्कालानां सवर्णानां ग्रहणं यथा स्यात् ॥

॥ कै० ॥ चेऽपि दीर्घोच्चारणात् प्रयत्नाधिक्याद्ध्रस्वानां न भविष्यति प्लुतानां चेष्यत एवेति इष्टव्याघातं प्रत्युत तपरत्वं करोतीति प्रश्नः । तपर इति । व्यक्तिपक्षो भेदकाश्च गुणा इति भावः ॥

॥ वि० ॥ ननु जातिपक्षे भिन्नकालनिवृत्त्यर्थं स्यात् तत्पक्षे हि तपरसूत्रं नियमार्थमेवेत्यत आह । जातीति । प्लुतानां चेष्यत एवेति । एतच्चाग्रे भाष्ये एव स्फुटम् । इष्टव्याघातमिति । जातिपक्षे ईदूदंशेऽपि तपरत्वेनैव प्लुतव्यावृत्तिरित्यभिमानः । भेदकाश्च गुणा इति । भेदकत्वात् स्वरस्येति वार्तिकोक्तेर-त्रिविषये भेदकपक्षोऽप्यस्तीत्यभिमानः । इदं प्रयोजनमीदूतोरेव नत्वेदंशे अणुदित्सूत्रेणैव सिद्धेः ॥

३४६

॥ वि॰ ॥ ननु तत्कालसवर्णसंग्रहार्थं तपरत्वमुक्तं नातत्कालव्यावृत्त्यर्थं तत् कुतः प्लुतानां न प्राप्नोतीत्यत आह । व्यक्तिपक्षेति । ईदूदंशे इदम् । एदंशे तु तपरत्वादेव दोष इति बोध्यम् । ननु इतिशब्दादिसमभिहारे कार्यार्थं प्रगृह्यसंज्ञाप्रवृत्तेरन्तरङ्गत्वात् पूर्वं प्लुते तेन स्थानिनो निवृत्तत्वेन प्लुतासिद्धत्वेऽपि कथं स्थान्याश्रया प्रगृह्यसंज्ञेत्यत आह । शास्त्रेति । प्रवृत्तेऽपि शास्त्रेऽसिद्धवचनेन तत्प्रवृत्तिबुद्ध्यभावन प्लुतबुद्ध्यभावाद् द्विमात्रविषयाया

॥ कै॰ ॥ केषामिति । प्लुतानामग्रहणप्रसङ्गात् प्रश्नः । उदात्तेति । क्वचिदनुनासिकग्रहणमप्यस्ति तद्ग्रहणप्रसङ्गेनोच्चारितम् । नहि प्रगृह्योऽनुनासिकः सम्भवति । अणोऽप्रगृह्यस्येत्यनुनासिकनिषेधात् । प्लुतानां त्विति । व्यक्तिपक्षाश्रयणादयं दोषो न

॥ भा॰ ॥ केषाम् । उदात्तानुदात्तस्वरितानाम् । अस्ति प्रयोजनमेतत् ।
किं तर्हीति । प्लुतानां तु प्रगृह्यसंज्ञा न प्राप्नोति । किं कारणम् । अतत्कालत्वात् ।
नहि प्लुतास्तत्कालाः । असिद्धः प्लुतः । तस्यासिद्धत्वात् तत्काला एव भवन्ति ॥

॥ कै॰ ॥ तु तपरत्वात् । असिद्ध इति । शास्त्रासिद्धत्वाश्रयणाच्च प्लुतवृद्धावसत्यां प्रगृह्यत्वे विधीयमाने द्विमात्रविषया बुद्धिः प्रवर्तते । तथाहि वक्ष्यति असिद्धत्ववचनमुत्सर्गलक्षणभावार्थमादेशलक्षणप्रतिषेधार्थं चेति ॥

॥ वि॰ ॥ वृद्धेस्त्रिमात्रे सत्त्वाद् द्विमात्रबुद्ध्या त्रिमात्रस्य संज्ञेत्यर्थः । एतेन शास्त्रासिद्धत्वाच्छास्त्राप्रवृत्तौ स्थानिनः प्रगृह्यत्वेऽपि पुनः प्लुते तस्य तत्र स्यात् । नच स्थानिवत्त्वम् । अनल्विधाविति निषेधात् । प्लुतस्यान्यत्वृत्तिधर्मत्वात् । एवञ्चागच्छतमश्री इत्यादावणोऽप्रगृह्यस्येत्यनुनासिकः स्यादित्यपास्तम् । ननु प्राधान्यात् कार्यासिद्धत्वमेव स्यादित आह । तथाहीति । उत्सर्गः स्थानी ॥

३४७

॥ वि॰ ॥ सामान्येनेति । तदुत्सर्गेऽपीत्यर्थः । ननु प्रकृतिभावो न स्वरसंधिप्रकरणस्थस्तत्राह । सोत्सर्गमिति । तदुत्सर्गनिरूपितापवादत्वस्यात्रापि सत्त्वेनेदमपि तत्प्रकरणस्थमेवेति भावः ।

॥ कै॰ ॥ यदयमिति । असिद्धत्वे हि प्लुतः प्रकृत्येत्येवमाश्रयणायोगात् कार्यित्वेनाश्रयणादसिद्धत्वाभावोऽनुमीयते । सामान्येन च स्वरसंधिप्रकरणविषयं सिद्धत्वं ज्ञाप्यते न तु प्रकृतिभाव एव यथा रोरुत्वे एवं सोत्सर्गं सापवादं च प्रकरणमिति

॥ भा॰ ॥ सिद्धः प्लुतः स्वरसंधिषु । कथं ज्ञायते सिद्धः प्लुतः स्वरसंधिष्विति । यदयं प्लुतः प्रकृत्येति प्लुतस्य प्रकृतिभावं शास्ति । कथं कृत्वा ज्ञापकम् । सतो हि कार्यिणः कार्येण भवितव्यम् । किमेतस्य ज्ञापने प्रयोजनम् । अप्लुतादप्लुत इत्येतन्न वक्तव्यं भवति । किमतो यत् सिद्धः प्लुतः स्वरसंधिषु । संज्ञाविधावसिद्धः । तस्यासिद्धत्वात् तत्काला एव भवन्ति । संज्ञाविधौ च सिद्धः ॥

॥ कै॰ ॥ प्रकृतिभावेऽपि प्रगृह्यत्वहेतुके सिद्धत्वमुच्यते । किमेतस्येति । प्रकृतिभाव एवाश्रयात् सिद्धत्वमस्त्विति प्रश्नः । इतरो लाघवं दर्शयति । अप्लुतादिति । सिद्धे हि प्लुते तन्न वक्तव्यं भवति । अतोऽस्तीति तपरत्वादेवोत्वाप्रसङ्गः । किमत इति । यथोद्देशे संज्ञापरिभाषे प्रगृह्यसंज्ञा स्वरसन्धिप्रकरणमध्यपतिता न भवतीति प्रश्नः ॥

॥ वि ॥ प्रगृह्यत्वहेतुके प्रकृतिभावेऽपीत्यन्वयः । प्रकृतिभाव एवेति । प्लुतप्रकृतिभाव इत्यर्थः । भाष्ये एतस्येत्यस्य स्वरसंधिप्रकरणविषयत्वेन ज्ञापनस्येत्यर्थः ॥

॥ वि० ॥ कार्यार्थत्वादिति । तदेकवाक्यतापन्नं संज्ञासूत्रं तत्प्रकरणस्थमिति भावः । प्रतिषिद्धे इति । अप्लुतवद्भावेन बाधिते इत्यर्थः । भाष्ये प्रगृह्यप्लुतप्रतिषेधेति । प्रगृह्याश्रये प्रकृतिभावे प्लुतप्रतिषेधप्रसङ्ग इत्यर्थः ।

॥ कै० ॥ कार्यकालमिति । कार्यार्थत्वाद्गुणानां कार्यस्य च प्राधान्यात् प्रधानदेशत्वस्य न्याय्यत्वादित्यर्थः । उपस्थिते हीति । उपस्थितः अनार्ष इतिकरणः । अग्नी इतीत्यत्र प्लुताश्रये प्रकृतिभावे प्रतिषिद्धे

॥ भा० ॥ कथम् । कार्यकालं संज्ञापरिभाषम् । यत्र कार्यं तत्रोपस्थितं द्रष्टव्यम् । प्रगृह्यः प्रकृत्येत्युपस्थितमिदं भवति । ईदूदेद् द्विवचनं प्रगृह्यमिति । किं पुनः प्लुतस्य प्रगृह्यसंज्ञावचने प्रयोजनम् । प्रगृह्याश्रयः प्रकृतिभावो यथा स्यात् । माभूदेवं प्लुतः प्रकृत्येत्येवं भविष्यति । नैवं शक्यम् । उपस्थिते हि दोषः स्यात् । अप्लुतवदुपस्थित इत्यत्र पठिष्यति ह्याचार्यः । वद्वचनं प्लुतकार्यप्रतिषेधार्थं प्लुतप्रतिषेधे हि प्रगृह्यप्लुतप्रतिषेधप्रसङ्गोऽन्येन विहितत्वादिति । तस्मात् प्लुतस्य प्रगृह्यसंज्ञैषितव्या । प्रगृह्याश्रयः प्रकृतिभावो यथा स्यात् ॥

॥ कै० ॥ प्रगृह्याश्रयः प्रकृतिभाव इष्यते तदाह । पठिष्यतीति । यत्र प्रगृह्यसंज्ञा नास्ति स प्लुताश्रयप्रकृतिभावप्रतिषेधविषयः । देवदत्ता इति देवदत्तेति ॥

॥ वि० ॥ प्रगृह्याश्रयस्यापि कुतो न निवृत्तिरित्यत आह । अन्येनेति । प्रगृह्यः प्रकृत्येत्यनेनेत्यर्थः । नन्वीदृशेऽपि विषये प्रगृह्याश्रयप्रकृतिभावे सति प्लुताश्रयप्रकृतिभावप्रतिषेधोऽप्लुतवदिति बोधितो व्यर्थ इत्यत आह । यथेति ॥



॥ वि० ॥ न पुनस्तपरत्वादिति । तद्वक्ष्यति भाष्ये दीर्घाणां चोच्यमाना प्लुतानां न प्राप्नोतीति । प्लुतानां त्विति । तपरत्वाभावे इत्यर्थः । तपरत्वे तु तपरसूत्रस्य जातिपक्षेऽनण्यपि नियमार्थत्वान्न स्यादिति भावः । ईत्वादि इत्वाद्यनतिरिक्तं मन्यते । आकृतिरिति । विना व्यक्त्युच्चारणं जातिनिर्देशाभावादवश्यं व्यक्तावुच्चारणीयायां लाघवाय ह्रस्व एव प्रयोक्तव्ये गुरुदीर्घोच्चारणेन तद्व्यक्तेरुपलक्षणत्वं विहाय विशेषणत्वस्यैवाश्रयणाद्विशिष्टव्यक्तिस्थैव जातिर्गृह्यत इति न्यूनकालव्यक्तिगताया इवाधिककालव्यक्तिगाया अपि न ग्रहणमिति भावः । भिन्नभिन्नव्याप्यजातिस्वीकारे

॥ कै० ॥ यदि पुनरिति । ननु व्यक्तिपक्षाश्रयणात् प्लुतानां न सिद्ध्यति न पुनस्तपरत्वात् । अयमत्राशयः । आकृतिपक्ष आश्रयिष्यते । दीर्घोच्चारणाच्च प्रयत्नाधिक्याद्ध्रस्वानां न भविष्यति प्लुतानां तु प्रवर्तिष्यते इति । एवमपीति । अयं भावः । आकृतिपक्षे यथा ह्रस्वानां प्रयत्नाधिक्यान्न भवति तथा दीर्घोच्चारणसामर्थ्याद्विशिष्टव्यक्तिस्थैवाकृतिर्गृह्यत इति प्लुतानां

॥ भा० ॥ यदि पुनर्दीर्घाणामतपराणां प्रगृह्यसंज्ञोच्येत एवमप्येकार एवैकः सवर्णान् गृह्णीयात् । ईकारोकारौ न गृह्णीयाताम् । किं कारणम् । अनण्त्वात् । यदि पुनर्ह्रस्वानामतपराणां प्रगृह्यसंज्ञोच्यते ॥

॥ कै० ॥ न स्यात् । यथा स्थूलं गामानयेत्युक्ते न कृशस्यानयनं भवतीत्याकृतिपक्षेऽपि विशिष्टैव दीर्घा व्यक्तिर्गृह्यत इति । तथाचानण्त्वादीदूतौ ग्राहकौ न स्याताम् । यदि पुनरिति । ह्रस्वसाहचर्यादेकारोऽपि ह्रस्वशब्देनाभिधीयत इति ह्रस्वानामिति बहुवचनम् । तत्र ह्रस्वनिर्देशेऽणत्वादाकृतिपक्षे यत्नाधिक्याभावाद्भिन्नकालानां ग्रहणं सिध्यतीत्यर्थः ॥

॥ वि० ॥ तु निर्दिष्टव्याप्यजातेः प्लुतेऽभाव एवेत्यपि बोध्यम् । एत्वजातेस्तु प्लुते सत्त्वात् तेन प्लुतग्रहणं भवत्येव । ततो लघुव्यक्तेरभावाच्च । नन्वेवं भाष्येऽनण्त्वादिति हेतुरसङ्गतोऽत आह । आकृतिपक्षेऽपीति । ईदृशे विषये तत्तदित्वादिजातिविशिष्टा व्यक्तिरेव गृह्यत इत्यर्थः । जातिप्राधान्ये फलाभावाद् व्यक्तिद्वारा कार्यसम्बन्धाश्रयणे गौरवाच्च तस्या युक्तत्वाच्च तद्विशिष्टव्यक्तिग्रहणेऽप्यण्त्वाभावाच्च तौ ग्राहकाविति भावः ॥

॥ वि० ॥ भाष्ये तस्माद्दीर्घाणामेव तपराणामिति । गुणान्तरयुक्तसंग्रहायासन्देहाय चेत्यर्थः । कर्मधारयभ्रमं व्युदस्यति । प्लुतो भावीति । यद्यप्याश्रयात् सिद्धत्वेनापि सिध्यति तथापि शास्त्रबाधापेक्षया लक्षणाश्रयणमुचितमिति भाष्याभिप्रायः ।

॥ कै० ॥ प्लुतभावीति । प्लुतो भावी यस्य स प्लुतभावी स्थानी प्रकृतः । तस्यैव प्रकृतिभावः । ननु प्लुतस्यासिद्धत्वात् स्थान्यपि प्लुतभावित्वात् प्लुतव्यपदेशं कथं लभते । नैष

॥ भा० ॥ नैवं शक्यम् । इहापि प्रसज्येत । अकुर्वह्नि अत्र अकुर्वह्यत्रेति । तस्माद्दीर्घाणामेव तपराणां प्रगृह्यसंज्ञा वक्तव्या । दीर्घाणां चोच्यमाना प्लुतानां न प्राप्नोति । एवं तर्हि किन्न एतेन यत्नेन यत् सिद्धः प्लुतः स्वरसन्धिषु इति । असिद्धः प्लुतः । तस्यासिद्धत्वात् तत्काला एव भवन्तीति । कथं यत् तज्ज्ञापकमुक्तम् । प्लुतप्रगृह्या अचीति । प्लुतभावी प्रकृत्येत्येवमेतद्विज्ञायते । कथं यत् तत्प्रयोजनमुक्तम् । क्रियते तन्न्यास एव । अप्लुतादप्लुत इति ॥

॥ कै० ॥ दोषः । प्लुतोऽस्य भावीति बुद्ध्या प्रकल्पनमेतत् । नच प्लुतस्यासिद्धत्वम् । अन्यथा प्लुतोऽसिद्ध इत्ययमपि व्यवहारो न स्यात् ॥

॥ वि० ॥ प्रकृत इति । प्लुतशब्देन बोधित इत्यर्थः । बुद्ध्येति । शास्त्रीये कार्येऽसिद्धत्वं नचायं व्यवहारः शास्त्रीयं कार्यमिति भावः ॥



॥ वि० ॥ कार्यकालपक्षमाश्रित्येति । अयं भावः । तत्र पक्षे संज्ञाशास्त्राणां न पृथग्बोधकत्वम् । पूर्वत्रासिद्धमिति चातिदेशः कार्यार्थः । कार्यज्ञानं च वाक्यार्थबोधोत्तरमिति यद्देशे वाक्यार्थबोधस्तद्देशस्थत्वमेव तस्य । किञ्च । पूर्वत्रासिद्धमित्यस्याधिकारत्वेन पूर्वत्रेदमसिद्धमिति तदर्थः । तत्र कार्यकालपक्षे तत्तद्देशोपस्थितसंज्ञापरिभाषाणामप्यसिद्धत्वबोधनम् । एवञ्च प्लुतदृष्ट्याऽनुनासिकविधेरसिद्धत्वेन तदेकवाक्यतापन्नस्यापि तद्दृष्ट्याऽसि-

॥ कै० ॥ कार्यकालपक्षमाश्रित्याह । एवमपीति । ततश्च अग्नी इत्यत्राप्रगृह्यस्ये-

॥ भा० ॥ एवमपि यत् सिद्धे प्रगृह्यकार्यं तत् प्लुतस्य न प्राप्नोति । अणोऽप्रगृह्यस्यानुनासिक इति । एवन्तर्हि किं न एतेन यत्नेन कार्यकालं संज्ञापरिभाषमिति । यथोद्देशमेव संज्ञापरिभाषम् । अत्र चासावसिद्धः । तस्यासिद्धत्वात् तत्काला एव भवन्ति ॥

॥ कै० ॥ त्यनुनासिकप्रतिषेधे क्रियमाणे प्लुतस्य सिद्धत्वात् प्रगृह्यत्वाभावादनुनासिकः स्यात् ॥

॥ वि० ॥ द्धत्वेन प्लुतशास्त्रेऽनुवृत्तपूर्वत्रासिद्धमिति अत्र पूर्वग्रहणेन ईदूदेदद्सो मादित्यस्य ग्रहीतुमशक्यत्वमिति । यथोद्देशे तु स्वातन्त्र्येण संज्ञादीनां कार्यबोधकत्वात् तत् प्रति प्लुतासिद्धत्वबोधनं शक्यमेव । एतेन कार्यकालपक्षेऽपि पाठकृतपूर्वत्वाक्षतिरित्यपास्तम् । भाष्ये यत्सिद्धे प्रगृह्येति । श्रुते सिद्धकाण्डस्थे यत्प्रगृह्यकार्यमित्यर्थः । यत्प्रगृह्यकार्यदृष्ट्या प्लुतः सिद्धस्तदिति यावत् ॥

॥ वि० ॥ यथोद्देशेति । नन्वत्र पचेऽग्नी इत्यादौ प्लुतस्यासिद्धत्वेन ततः प्रागेव प्लुताभावपक्षेऽननुनासिकप्रतिबन्धेन फलवत्यां संज्ञायां ततः प्लुते तं द्विमात्रत्वेन पश्यन्त्या अपि संज्ञायाः पुनः प्रवृत्तौ बीजाभावाद् अल्विधित्वेन स्थानिवत्त्वाभावाच्चाप्रगृह्यत्वेनाननुनासिकः स्यादिति चेन्न ।

॥ कै० ॥ यथोद्देशपक्षाश्रयेण तु परिहारः । कथं पुनरयं पक्षः । यावता कार्यार्थत्वात् संज्ञापरिभाषस्य कार्यकालतैव न्याय्या । नैष दोषः । यदाऽनुद्दिश्य प्रयोजनविशेषं प्रयोजनमात्रमभिसन्धाय भविष्यति किञ्चिदनेन प्रयोजनमिति संज्ञापरिभाषं प्रणीयते तदा सम्भवत्येवायं पक्षो यथाश्रुतग्राहिप्रतिपत्त्रपेक्षः । महावाक्यार्थपर्यालोचनप्रवृत्तप्रतिपत्त्रपेक्षस्तु कार्यकालपक्षः ॥

॥ वि० ॥ संज्ञायाः कार्यार्थतया पुनः प्रवृत्तौ कार्यसिद्धिरूपबीजस्य सत्त्वेन पुनस्तस्याः सुलभत्वात् । एतदेव ध्वनयता प्लुतस्यासिद्धत्वात् तत्काला एव भवन्तीत्येवकारः प्रयुक्तः । प्लुतात् प्राक् संज्ञायां च तत्काला एवेति तदर्थ इत्यलम् । प्रणीयते । बोध्यते ॥



॥ वि० ॥ ईदादय इति । प्राथम्याददसो मादित्यनेनैकरूप्याच्चेति भावः । तदेति । अन्तशब्दोऽवयववचनस्तदन्तस्येति बहुव्रीहिश्चेत्यर्थः । अथेति । संज्ञाया आनन्तर्याद्येन विधिरित्यस्यानुग्रहाच्चेति भावः ।

॥ कै० ॥ कथं पुनरिति । ईदादयो यदि संज्ञिनस्तद्विशेषणं तु द्विवचनं तदा द्विवचनान्तत्वमीदादीनां न सम्भवतीति द्विवचनानामेवेदादीनां संज्ञया भाव्यम् । अथ द्विवचनं संज्ञि तद्विशेषणमीदादयस्तदा तदन्तविधिरप्रधानेन प्रधानस्येतीदाद्यन्तं द्विवचनमिति पक्षः । तत्रोभयोरपि पक्षयोर्दोषदर्शनात् प्रश्नः । पचेते इतीति ।

॥ भा० ॥ कथं पुनरिदं विज्ञायते ईदादयो यद्विवचनमिति । आहोस्विदीदाद्यन्तं यद्विवचनमिति । कश्चात्र विशेषः । ईदादयो द्विवचनं प्रगृह्या इति चेदन्त्यस्य विधिः । ईदादयो द्विवचनं प्रगृह्या इति चेदन्त्यस्य प्रगृह्यसंज्ञा विधेया । पचेते इति पचेथे इति । वचनाद्भविष्यति । अस्ति वचने प्रयोजनम् । किम् । खट्वे इति । माले इति । अस्तु तर्हीदाद्यन्तं यद्विवचनमिति ॥

॥ कै ॥ एकारोऽत्र द्विवचनं न भवति अपि तु तस्यान्तः । वचनादिति । द्विवचनावयवे द्विवचनशब्दो वर्त्तिष्यत इत्यर्थः । अस्तीति । मुख्ये सम्भवति गौणस्य ग्रहणमन्याय्यमित्यर्थः । खट्वे इतीति । अन्तादिवच्चेत्यादिवद्भावादेकारो द्विवचनम् ॥

॥ वि० ॥ भाष्येऽन्त्यस्येति । द्विवचनान्तस्य वर्णस्येत्यर्थः । गौणस्येति । जघन्यत्वसामान्यात् लाक्षणिकमपि गौणपदेन गृह्यत इति भावः ॥

॥ वि० ॥ प्रथमोपस्थितेदूत्परित्यागेन एकारान्तोदाहरणदाने बीजमाह । ईदूतोरिति । नाश्रितमिति । वार्तिककृतेति शेषः । तदन्त-

॥ कै० ॥ एकस्येति । असहायस्येत्यर्थः । ईदूतोः केवलयोरेव सम्भव इति वचनसामर्थ्यात् तयोरेव सिध्यति एकारान्तस्य तु द्विवचनस्य पचेते इत्यादौ सम्भवात् खट्वे इत्यत्र न सिध्यतीति दोषः । येन विधिस्तदन्तस्येत्यत्र स्वस्य च रूपस्येति नाश्रितमिति दोषोपन्यासः । अथवेति । प्रत्ययग्रहणे यस्मादिति

॥ भा० ॥ ईदाद्यन्तं द्विवचनमिति चेदेकस्य विधिः । ईदाद्यन्तं द्विवचनमिति चेदेकस्य प्रगृह्यसंज्ञा विधेया । खट्वे इति । माले इति । नवाऽऽद्यन्तवत्त्वात् । नवा एष दोषः । किं कारणम् । आद्यन्तवत्त्वात् । आद्यन्तवदेकस्मिन् कार्यं भवतीत्येवमेकस्यापि भविष्यति । अथवा एवं वक्ष्यामि ईदाद्यन्तं यद्द्विवचनान्तमिति ॥

॥ कै० ॥ द्विवचनेन तदन्तविधिः । पश्चाद् द्विवचनान्तमीदादिभिर्विशेष्यत इत्ययं तृतीयः पक्षो भवति । ईदाद्यन्तं यद्द्विवचनान्तमिति । ननु संज्ञाविधौ प्रत्ययग्रहणे तदन्तविध्यभावः सुप्तिङन्तं पदमित्यन्तग्रहणेन ज्ञापित इति कथमेतत्पक्षोपपत्तिः । चतुर्थपक्षप्रतिक्षेपाय वक्ष्यत्येवैतद्भाष्यकार इति नेदमपूर्वं चोद्यम् ॥

॥ वि० ॥ विधिरिति । अस्मादेव वचनाच्छब्दस्वरूपं विशेष्यमादायेति भावः । इत्ययं तृतीयः पक्ष इति । व्यपदेशिवद्भावानाश्रयणमस्य बीजम् ॥



॥ वि० ॥ तदन्तविध्यभावोऽत्र नोक्त इति । ईदादिभिः श्रूयमाणत्वेन द्विवचनविशेषणमेव न्याय्यमित्येतत्पक्षासम्भवरूपो दोषो नोक्त इत्यपि बोध्यम् । आदेशेनेति । एकार्थयुष्मदादेर्विहितेन तवकाद्यादेशेनेत्यर्थः । प्रकृतिभावेनेति । अन्यथाऽनुपपद्यमानेनेत्यर्थः । एवं हि सिद्धान्ते

॥ कै० ॥ दोषान्तरेणेमं पक्षं निराकर्त्तुमाह । लुकि प्रतिषेध इति । दोषसद्भावेनैवास्य पक्षस्य निराकरणात् तदन्तविध्यभावोऽत्र नोक्तः । कुमार्य्यगारमिति । कथं पुनरत्र द्विवचनान्तस्य समासः । यावता वृत्तौ संख्याविशेषो न गम्यते । नैष दोषः ।

॥ भा० ॥ ईदाद्यन्तं यद्द्विवचनान्तमिति चेल्लुकि प्रतिषेधः । ईदाद्यन्तं द्विवचनान्तमिति चेल्लुकि प्रतिषेधो वक्तव्यः । कुमार्य्योरगारं कुमार्य्यगारम् । वध्वोरगारं वध्वगारम् । एतद्धीदाद्यन्तं श्रूयते द्विवचनान्तं च भवति प्रत्ययलक्षणेन । सप्तम्यामर्थग्रहणं ज्ञापकं प्रत्ययलक्षणप्रतिषेधस्य । यदयमीदूतौ च सप्तम्यर्थ इत्यर्थग्रहणं करोति तज्ज्ञापयत्याचार्य्यो न प्रगृह्यसंज्ञायां प्रत्ययलक्षणं भवतीति ॥

॥ कै० ॥ यथा तावकीन इत्यादावादेशेन संख्याविशेषो व्यज्यते तथेहापि सत्यां प्रगृह्यसंज्ञायां प्रकृतिभावेन द्वित्वमभिव्यज्येतेति दोषोपन्यासः । सप्तम्यामिति । ईदूतौ सप्तमीत्येव तदन्तविधौ सति प्रत्ययलक्षणेन सोमो गौरी अधिश्रित इत्यादौ सिद्धायां प्रगृह्यसंज्ञायामर्थग्रहणं ज्ञापयति । प्रगृह्यसंज्ञाप्रकरणे प्रत्ययलक्षणं न भवतीति ॥

॥ वि० ॥ प्रगृह्यत्वाभावेन द्वित्वव्यञ्जकाभावादस्य प्रयोगस्यासाधुत्वापत्तिरसाधुप्रयोगे च भगवतोऽश्रद्धेयतापत्तिरतः पूर्वपदार्थतावच्छेदकरूपेणैव बोधो नतु संख्यावत्त्वेनेत्येव भाष्यसम्मतम् । अतो वृत्तौ संख्यानवगमेऽप्यनेकार्थप्रतीत्या तथा विग्रहे बाधकाभाव इति बोध्यम् ॥

॥ वि० ॥ सुतरामिति । अकरणात् करणं गुरु तस्य च ज्ञापकत्वेनाश्रयणमिति सुतरां गौरवमित्यर्थः । ईदादिभिरिति भाष्ये । श्रुतस्य श्रुतेन सम्बन्धो न्याय्य इति भावः । साक्षाद् । द्विवचनमनपेक्ष्य ।

॥ कै० ॥ तत्तर्हीति । आद्यन्तवद्भावानाश्रयणाय तृतीयः पक्षः परिगृहीतः । तत्र च दोषप्रतिविधानार्थमधिकमर्थग्रहणं ज्ञापकार्थं कर्त्तव्यं भवतीति सुतरां गौरवं भवतीत्यर्थः । ईदादिभिरिति । अत्र पक्षे कुमार्यगारमित्यत्राप्रसङ्गः ।

॥ भा० ॥ तत्तर्हि ज्ञापकार्थमर्थग्रहणं कर्त्तव्यम् । न कर्त्तव्यम् । ईदादिभिर्द्विवचनं विशेषयिष्यामः ।
ईदादिविशिष्टेन च द्विवचनेन तदन्तविधिर्भविष्यति । ईदाद्यन्तं यद् द्विवचनं तदन्तमीदाद्यन्तमिति ॥

॥ कै० ॥ नह्यत्र ईदूदेदन्तं द्विवचनं किं तर्हि औसिति सकारान्तम् । तदन्तमिति । द्विवचनान्तमित्यर्थः । ईदाद्यन्तमिति । ईदादिभिः साक्षात् समुदायस्य सम्बन्धाभावादीदादिशब्देनेदाद्यन्तमुच्यते तेनेदाद्यन्तान्तमित्यर्थः ॥

॥ वि० ॥ समुदायस्य । प्रत्ययान्तस्य । नन्वत्र पक्षे न द्विवचनेनेदादि विशेष्यत इति कथमीदादि च द्विवचनमितीत्यत आह । ईदादीति । तदन्तत्वं चास्य व्यपदेशिवद्भावेन बोध्यम् ॥



॥ वि० ॥ श्रूयते सूत्र इति । यत् श्रूयते सूत्रे द्विवचनं तदीदाद्यन्तमिति भाष्ये योजनेत्याशयः । अनित्यत्वेऽपि लुकः शीभावो नित्यश्चेद् अतु-

॥ कै० ॥ शुक्लास्तामिति । शुक्लशब्दाद् द्विवचनमौः । तस्य नपुंसकाच्चेति शीभावः । ततश्च्विप्रत्ययः । शीशब्दस्य सुप इति लुक् । अस्य च्वाविती त्वं तद्धितान्तत्वात्सुः । तस्याव्ययत्वाल्लुक् । अत्र हि शीशब्द ईकारान्तं द्विवचनं तदन्तश्च समुदायः प्रत्ययलक्षणेनेति प्रगृह्यसंज्ञा प्राप्नोति । अत्र हीदादि च द्विवचनमिति ।

॥ भा० ॥ एवमप्यशुक्ले वस्त्रे शुक्ले समपद्येतां । शुक्लास्तां वस्त्रे । अत्र प्राप्नोति ।
अत्र हीदादि च द्विवचनं तदन्तं च भवति प्रत्ययलक्षणेन । अत्राप्यकृते शीभावे लुग्भविष्यति ।
इदमिह संप्रधार्यम् । लुक् क्रियतां शीभाव इति किमत्र कर्त्तव्यम् । परत्वाच्छीभावः ।
नित्यो लुक् । कृते शीभावे प्राप्नोत्यकृतेऽपि । अनित्यो लुक् । अन्यस्य कृते शीभावे
प्राप्नोत्यन्यस्याकृते । शब्दान्तरस्य च प्राप्नुवन् विधिरनित्यो भवति । शीभावोऽप्यनित्यः ।
न हि कृते लुकि प्राप्नोति । उभयोरनित्ययोः परत्वाच्छीभावः । शीभावे कृते लुक् ॥

॥ कै० ॥ ईदादिशब्देनेदाद्यन्तमुच्यते । क्वचित्तु पाठः । ईदाद्यन्तं च श्रूयते इति तत्रैवं व्याख्येयम् । ईदाद्यन्तं च श्रूयते सूत्रे तदन्तविधिरीदादिभिर्द्विवचनस्याश्रीयत इत्यर्थः । यस्त्वयमस्य च्वावितीकारः स द्विवचनस्य न कश्चिदिति न तदभिप्रायेण भाष्यं व्याख्येयम् ॥

॥ वि० ॥ ल्यवलत्वात् परत्वादिति पूर्वोक्तमनुपपन्नमतो भाष्ये शीभावोऽप्यनित्य इत्युक्तम् । कृते लुकि तदप्राप्तिस्तु प्रसङ्गरूपषष्ठ्यर्थस्याभावादिति भावः ॥

॥ वि० ॥ अमी इतीति । खट्वे इत्यस्याप्युपलक्षणमेतत् । द्वितीय इति । प्रत्ययांशे तदन्तविधिसत्त्वेन पक्षद्वयस्यैकत्वबुद्ध्या तस्य मध्यमत्वोक्तिरिति बोध्यम् । एतदिति । वृत्तिकारोक्तमित्यर्थः ॥ ❁ ॥

॥ कै० ॥ अथापि कथञ्चिदिति । स्थानिविशेषानपेक्षायां कृताकृतप्रसङ्गित्वेन लुक्शास्त्रस्य प्रवर्त्तनादित्यर्थः । अथवा नित्यत्वेन बाधकत्वं लक्ष्यते तेनान्तरङ्गानपीति शीभावस्य लुग्बाधक इत्यर्थः । एवमपि दोष इति । पक्षस्योत्थानमेव नास्तीत्येतत्पक्षासम्भव एव दोषः । अवश्यमिति । यदाश्रयणभयादयं पक्षोऽङ्गीकृतस्तस्याद्यन्तवद्भावस्यास्मिन्नपि पक्षे अवश्यमाश्रयणमङ्गीकृतम् । अमी इत्यत्र

॥ भा० ॥ अथापि कथञ्चिन्नित्यो लुक् स्यात् । एवमपि दोषः । वक्ष्यत्येतत् पदसंज्ञायामन्तवचनमन्यत्र संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिप्रतिषेधार्थमिति । इदं चापि प्रत्ययग्रहणमयं चापि संज्ञाविधिः । अवश्यं खल्वस्मिन्नपि पक्षे आद्यन्तवद्भाव एषितव्यः । तस्मादस्तु स एव मध्यमः पक्षः ॥ ❁ ॥

अदसो मात् । मात् प्रगृह्यसंज्ञायां तस्यासिद्धत्वादयावेकादेशप्रतिषेधः ॥

॥ कै० ॥ हीकार एव द्विवचनं नत्वीकारान्तम् । तस्मादिति । द्वितीय एव पक्षोऽस्त्वित्यर्थः । मणीवादीनां प्रतिषेधो वक्तव्य इति भाष्यकारवार्त्तिककाराभ्यामपठितत्वादप्रमाणमेतत् । मणीवोष्ट्रस्येति तु प्रयोगो वाशब्दस्योपमानार्थस्य । रोदसीवेत्यादिस्तु छान्दसः प्रयोगः । छन्दसि तु सर्वे विधयो विकल्पन्त इति ॥ ❁ ॥ अदसो मात् । मात् प्रगृह्येति । कश्चित् सूत्रन्यास इत्यर्थः ॥

॥ वि० ॥ अदसो मात् । अस्मिन्निति । मात्पदघटिते इत्यर्थः । यदि तु अदसो दादित्युच्यते दात् परस्य पूर्वोत्तरसाहचर्यादवर्णाभिन्नोऽच् औकारैकाररूप एव तदा न स्याद् दोष इति भावः । इदमेव ध्वनयितुमदसः प्रगृह्यसंज्ञायामिति नोक्तम् ॥



॥ वि० ॥ नन्वीत्त्वोत्त्वयोरसिद्धत्वेऽपि अदसो मादित्यवेदूदिति निवर्त्त्य मात्परौकारैकारयोरपि प्रगृह्यत्वान्नायादिप्रसङ्गोऽत आह । चशब्दान्मत्वस्येति । एवञ्चैदौतोर्मात्परत्वाभावादेवमपि न प्रगृह्यत्वप्राप्तिरिति भावः । नन्वीत्त्वादीनामसिद्धत्वेऽपि तन्निवर्त्तितौकाराद्यभावेन कथमयादिप्राप्तिः किञ्चायादीन् प्रत्यसिद्धत्वेऽपि प्रगृह्यसंज्ञायामाश्रयात् सिद्धत्वेन तत्संज्ञायां तत्सामर्थ्यान्नायादयोऽत आह । शास्त्रेति । नादेशलक्षणमिति । प्रकृतिभाव इत्यर्थः । प्रगृह्यत्वं त्वनुनासिकपर्युदासेन चरितार्थमिति भावः । एकादेशः । एङः पदान्तादतीति । नाजानन्तर्य्ये इति । उत्तरकालप्रवृत्तिके अयादाव-

॥ कै० ॥ ऊत्त्वस्य चेति । चशब्दान्मत्वस्यापि । शास्त्रस्यासिद्धत्वाच्च स्थानिलक्षणमेव कार्यं प्राप्नोति नादेशलक्षणमित्ययादिप्रसङ्गः । अमी आसत इत्ययादेशः । अमू आसाते इत्यावादेशः । अमी अत्रेत्यत्रैकादेशः । ननु च द्विपदाश्रयत्वाद्बहिरङ्गा अयादयोऽन्तरङ्गेष्वीत्त्वादिष्वसिद्धा इति पूर्वाभावे कथं पूर्वत्रासिद्धमिति ईत्त्वादीनामसिद्धत्वं स्यात् । नैष दोषः ।

॥ भा० ॥ मात् प्रगृह्यसंज्ञायां तस्य ईत्त्वस्य ऊत्त्वस्य चासिद्धत्वादयावेकादेशाः प्राप्नुवन्ति । तेषां प्रतिषेधो वक्तव्यः । अमी अत्र । अमी आसते । अमू अत्र । अमू आसाते । ननु च प्रगृह्यसंज्ञावचनसामर्थ्यादयादयो न भविष्यन्ति । वचनार्थो हि सिद्धे । नेदं वचनाल्लभ्यम् । अस्ति ह्यन्यदेतस्य वचने प्रयोजनम् । किम् । यत् सिद्धे प्रगृह्यसंज्ञाकार्य्यं तदर्थमेतत् स्यात् । अणोऽप्रगृह्यस्यानुनासिक इति ॥

॥ कै० ॥ नाजानन्तर्य इति बहिरङ्गपरिभाषानिषेधात् । ननु चेति । यथोद्देशं संज्ञापरिभाषमितिपक्षे आश्रयात् सिद्धत्वं भविष्यतीत्यर्थः । कार्य्यकालपक्षमाश्रित्याह । वचनार्थो हीति । वचनस्य प्रयोजनमित्यर्थः ॥

॥ वि० ॥ जानन्तर्यादिति भावः । त्रैपादिकेऽन्तरङ्गे बहिरङ्गपरिभाषाया अप्रवृत्तेर्विसर्जनीयसूत्रे भाष्ये वक्ष्यमाणत्वान्न दोष इति परे । यथोद्देशेति । नन्वाश्रयात् सिद्धत्वेन प्रगृह्यत्वेऽपि मुत्वादेरसिद्धत्वादयादिकं स्यादेवेति चेन्न । एवमपि संज्ञाशास्त्रवैयर्थ्यादवत्याश्रयणेनायादिकं प्रत्यपि सिद्धत्वं ज्ञाप्यत इत्याशयात । भाष्ये यत सिद्धे इति । नच तत्र पूर्वसूत्रेणैव सिद्धिः । अद्विवचने तदप्रवृत्तेः । पूर्वसूत्रविषये यथोद्देशस्यैव भाष्यकृताऽङ्गीकाराच्च ॥

॥ वि० ॥ नन्वीदाद्युपजीवनायाव करणमित्यत आह । नचेति । हे असुक असुका इत्यादौ तु अदस इत्यावर्त्त्यं न विद्यते इस्य स्थाने सो यस्य तादृशादस इत्यर्थेनानुनासिकः स्वमतेऽपि भवत्येवेति भाष्याशयमाहुः । तादृशानामनभिधानमेवेत्यन्ये । प्रकरणोत्कर्षेणेति ।

॥ कै० ॥ नैकमिति । अनेककार्य्यसिद्ध्यर्थं संज्ञासूत्रं नैकेन प्रयुज्यत इत्यर्थः । अन्यत्तु सूत्रमेकेनापि प्रयुज्यते मुन्नाद-णित्यादि । तत्रैवायमिति । नच तत्रेदूदेद्ग्रहणं कर्त्तव्यं मादिति वा । यस्मादणोऽवसानेऽनुनासिको विधीयते पूर्वेण च णकारेणाण्ग्रहणमिति असौ अमुके अमुकाभ्यामित्यादावनुनासिकस्याप्रसङ्ग एव । तदेवं कार्य्यकालेऽपि संज्ञापरिभाषे

॥ भा० ॥ नैकं प्रयोजनं योगारम्भं प्रयोजयति । यद्येतावत् प्रयोजनं स्यात्
तत्रैवायं ब्रूयात् । अणोऽप्रगृह्यस्यानुनासिकोऽदसो नेति । विप्रतिषेधाद्वा ।
अथवा प्रगृह्यसंज्ञा क्रियताम् अयादयो वेति प्रगृह्यसंज्ञा भविष्यति विप्रतिषेधेन ॥

॥ कै० ॥ प्रकरणोत्कर्षेण विधीयमाना प्रगृह्यसंज्ञा सर्वप्रगृह्यकार्य्यार्था सत्यसिद्धत्वं बाधिष्यत इत्यर्थः । विप्रतिषेधा-द्वेति । अयाऽऽवेकादेशप्रतिषेधो वक्तव्यो विप्रतिषेधाद्वा प्रगृह्यसंज्ञेति विकल्पार्थो वाशब्दः । नैकं प्रयोजनमित्यादिस्तु परिहारो भाष्यकारेणोक्तो न वार्त्तिककारेणेति न तदपेक्षो विकल्पः ॥

॥ वि० ॥ संज्ञाप्रकरणे उत्कर्षेण गुरुभूतन्यासेनेत्यर्थः । सर्वेति । प्रकृतिभावानुनासिकप्रतिषेधेत्यर्थः । भाष्ये विप्रतिषेधाद्वेति । अन्तरङ्गत्वान्मुत्वादौ कृते पदान्तरसमभिव्याहारेऽयादिभ्यः परत्वात् संज्ञासिद्धौ तत्सामर्थ्यान्मुत्वादिकं प्रकृतिभावं प्रत्यपि नासिद्धमाश्रयाच्च संज्ञां प्रत्यपि नासिद्धमिति भावः ॥



॥ वि० ॥ ननु प्रगृह्यसंज्ञाऽभिनिर्वर्त्तमानेत्यादिवक्ष्यमाणप्रकारेण घटत एव विरोध इत्ययुक्तमेतदित्यत आह । इष्टेति । भाष्ये परैवेति । पूर्वं पाठेऽपि तत्र वाक्यार्थबोधाभावेनेति भावः । कथमिति । पाठकृतं स्वगतं पूर्वत्वमनपगतमिति प्रश्नः । उत्तरयति । कार्य्यकालमिति । तत्पक्षे संज्ञाशास्त्रस्य प्रदेशदेश एवार्थबोधस्तदुत्तरं च विरोधोपस्थितिस्तत्कार्यज्ञानं चेति तत्रत्यपरत्वमेव विप्रतिषेधसूत्रप्रवृत्तौ बीजमिति भावः । परैवेत्येवकारेण पाठकृतं पूर्वत्वं विद्यमानमपि विप्रतिषेधसूत्रप्रवृत्तौ न नियामकमिति सूचितम् । परिभाषाणां तु तत्पक्षेऽपि तत्तद्देशेऽर्थबोधोऽस्त्येवेति तद्विषये विप्रतिषेधसूत्रप्रवृत्तौ

॥ कै० ॥ नैष युक्त इति । इष्टसिद्धय इति भावः । करिष्यत इति । आश्रयिष्यत इत्यर्थः । इत-

॥ भा० ॥ नैष युक्तो विप्रतिषेधः । विप्रतिषेधे परमित्युच्यते । पूर्वा च
प्रगृह्यसंज्ञा परेऽयादयः । परा प्रगृह्यसंज्ञा करिष्यते । सूत्रविपर्य्यासः कृतो
भवति । एवं तर्हि परैव प्रगृह्यसंज्ञा । कथम् । कार्यकालं संज्ञापरिभाषम् ॥

॥ कै० ॥ एकदेशिगृहीताभिप्राय आह । सूत्रविपर्य्यास इति । अभिप्रायं प्रकाशयितुमाह । एवं तर्हीति ॥

॥ वि० ॥ पाठकृतमेव तन्नियामकमिति तात्पर्यम् । आकडारस्थभपदसंज्ञादिविषये तु यथोद्देशपक्ष एवेति तत्र परया पूर्वबाधसिद्धिः । ष्यङः सम्प्रसा-रणमितिसूत्रस्थं भसंज्ञायाः कार्यकालत्वपरं भाष्यं त्वेकदेश्युक्तिरिति तत्रैव निरूपयिष्यामः । परेतु परैवेत्यस्य संज्ञापदेन तत्कार्यं प्रकृतिभाव उच्यते इति भावः । आशयानभिज्ञस्य प्रश्नः । कथमिति । एकदेशिन उत्तरं कार्यकालमित्यादीत्याहुः । एतेन कार्यकालपक्षेऽपि पाठकृतपरत्वमयादीनामेव । अन्यथा ङमो ह्रस्वा-दचीत्यादौ विपादीस्थे कार्यकालपक्षे एव परिभाषाप्रवृत्त्या परत्वात् तत्र तस्मादित्युत्तरस्येत्येवेति सिद्धान्तासङ्गतिरुभयोरप्येकदेशस्थत्वेन परत्वाभावादित्यपास्तम् ॥

॥ वि॰ ॥ द्वाभ्यामिति । योग इति कर्म्मणि घञ् । द्विकार्यशब्दस्य पावाद्यन्तत्वादस्त्रीलिङ्गस्य योगशब्देन कर्तृकरणे कृतेति समासः । ईदूतोः प्रगृह्यसंज्ञेत्यस्य तत्कार्य्यं प्रकृतिभाव इत्यर्थः ।

॥ कै॰ ॥ द्विकार्ययोगो हीति । द्वाभ्यां कार्याभ्यां यो युज्यते स विप्रतिषेधविषयत्वाद्विप्रतिषेधः । ऽसम्भवोऽपीति । असम्भव एव विप्रतिषेधः स तु कदाचिद् द्विकार्ययोगो भवति कदाचित् केवलोऽपि । तथाहि । सति सम्भवे द्विकार्य्ययोगो न विप्रति-

॥ भा॰ ॥ यत्र कार्यं तत्रोपस्थितं द्रष्टव्यम् । प्रगृह्यः प्रकृत्येत्युप-
स्थितमिदं भवति । अदसो मादिति । एवमप्ययुक्तो विप्रतिषेधः ।
कथम् । द्विकार्य्ययोगो हि विप्रतिषेधः । नचात्रैको द्विकार्य्ययुक्तः ।
एचामयादयः । ईदूतोः प्रगृह्यसंज्ञा । नावश्यं द्विकार्ययोग एव
विप्रतिषेधः । किन्तर्हि । असम्भवोऽपि । स चात्रास्त्यसम्भवः ।
कोऽसावत्रासम्भवः । प्रगृह्यसंज्ञाऽभिनिर्वर्त्तमानाऽयादीन् बाधते ॥

॥ कै॰ ॥ षेधः । यथा एकस्य दधातेरडागमद्विर्वचने भवतः । अदधादिति । क्वचिदेकस्य द्विकार्य्ययोगाभावेऽपि असम्भवो भवति । यथा त्रपूणामित्यत्र नुम्नुटोः प्रकृतिप्रत्ययभक्तयोः परस्परनिमित्तव्याघातात् । अयादीन् बाधत इति । प्रकृतिभावविधानात् ॥

॥ वि॰ ॥ कदाचिदिति । एवञ्च प्रकृते केवलासम्भवरूपः स इत्यर्थः । केवलद्विकार्य्ययोगो न सर्वथा विप्रतिषेध इत्याह । तथाहीति ॥



॥ वि॰ ॥ ईत्त्वमूत्त्वं चेति । तद्विघातेन संज्ञाभावे तत्कार्यप्रकृतिभावविघातः स्पष्ट एवेति भावः । केचित्तु संज्ञाकार्य्यस्य अयादिभिर्विप्रतिषेधोऽयुक्तः । वाक्यसंस्कारपक्षे मूत्वादितः पूर्वमेवायादिप्राप्त्या मूत्वाद्युत्तरञ्च संज्ञायां तत्प्राप्त्या युगपत् प्राप्त्यभावात् । तस्मात् प्रगृह्यसंज्ञाशब्देन तज्जनकमूत्वादिकं लक्षयित्वा तस्यायादिभिर्विप्रतिषेध इति वार्त्तिकार्थस्तमपि दूषयति भाष्ये । एवमपीति । कार्य्यित्वेनाश्र-

॥ कै॰ ॥ निमित्तमिति । ईत्त्वमूत्त्वं च । आश्रयात् सिद्धत्वमिति । प्रगृह्यसंज्ञायां कार्यि-

॥ भा॰ ॥ अयादयोऽभिनिर्वर्त्तमानाः प्रगृह्यसंज्ञाया निमित्तं विघ्नन्ति । ए-
षोऽसम्भवः । सत्यसम्भवे युक्तो विप्रतिषेधः । एवमप्ययुक्तो विप्रतिषेधः । सतोर्हि
विप्रतिषेधो भवति । नचात्रेत्त्वोत्त्वे स्तः । नापि मकारः । उभयमप्यसिद्धम् ।
आश्रयात् सिद्धत्वं च यथा रोरुत्वे । आश्रयात् सिद्धत्वं भविष्यति । तद्यथा ।
रुरुत्वे आश्रयात् सिद्धो भवति । किं पुनः कारणं रुरुत्वे आश्रयात् सिद्धो भवति ॥

॥ कै॰ ॥ त्वेनाश्रयणादसिद्धत्वाभावादीत्त्वादीनां तेषामयादीनां च विप्रतिषेधो निरूप्यते ॥

॥ वि॰ ॥ यणादिति । तत्सामर्थ्यादयादीन् प्रत्यपि सिद्धत्वमित्यर्थः । यथोद्देशे इदम् । कथं कार्यकालमिति तु प्रकृतिभावायादिविप्रतिषेधविषयमिदानीं तु स नेति स्पष्टमेव । असिद्धत्वाभावादिति । ईत्त्वादीनामसिद्धत्वाभावादित्यन्वयः । सामान्यत एवासिद्धत्वाभावबोधनमित्यर्थः । तेषाम् । ईत्त्वादीनाम् ॥

॥ वि० ॥ परत्वादिति । ईत्त्वादिषु जातेषु तेषामसिद्धत्वाभावादयादीनामप्रसङ्ग एवेति भावः । व्याख्यानान्तरमिति । प्रगृह्यत्वकार्यप्रकृति-भावेनायादीनां विप्रतिषेधपरमेव भाष्यम् । सतोरित्यस्य युगपत्प्राप्तयोरित्यर्थः । वाक्यसंस्कारपक्षे ईत्त्वादीनामसिद्धत्वेन ततः प्रागेव तत्प्राप्तिः कृते त्वीत्त्वादावस्थेति न तयोर्युगपत् प्राप्तिरिति भावस्तदाह । नचात्वेत्यादि । अत्र । अयादिप्राप्तिकाले । असत्त्वे हेतुः । उभयमप्यसिद्धमिति । पूर्वत्रासिद्धेनेति

॥ कै० ॥ तथाहि । सतोर्हि विप्रतिषेधो भवतीति पूर्वपक्षे ईदादीनामेव विप्रतिषेध आक्षिप्तः । तत्रायादीनां चयनं लावकः । अग्नेऽत्रेत्यत्रावकाशः । ईत्त्वादीनां तु यत्रायादीनामप्रसङ्गः सोऽव-काशः । अमी स्थिताः । अमू स्थितौ । अमीभ्य इति । अमी अत्रेत्यादावुभयप्रसङ्गे परत्वादी-त्त्वादय एव भवन्ति । अत्र व्याख्यानान्तरं क्लिष्टत्वान्नोपन्यस्तम् ॥

॥ वि० ॥ शेषः । परिहरति । आश्रयादिति । पदसंस्कारपक्ष एवात्राश्रीयत इति भावः । एवञ्चोभयोर्युगपत् प्राप्तिः । प्रगृह्यसंज्ञायां तत्कार्ये च तयोः सिद्धत्वादयादीन् प्रति चासिद्धत्वादित्युपपन्नो विप्रतिषेध इति वाक्यसंस्कारपक्षे कृतस्य पूर्वपक्षस्य पदसंस्कारपक्षाश्रयेण परिहार इति क्लेशः । परे त्वनुक्तेदादिविप्र-तिषेधखण्डनतत्समर्थनपरत्वेन व्याख्यापेक्षयेदमेव युक्तम् । पक्षान्तरैरपि परिहारकरणादित्याहुः ॥



॥ वि० ॥ रोः सुपीत्यस्यानन्तरमिति । नचैवं हशि चेत्यस्यैतदुत्तरत्वाद्रोरीति ढ्लोपाऽसिद्धत्वाऽऽपत्तौ मनोरथासिद्धिः । ढो ढे लोपो रो रीत्यनयोर्यरोऽनुनासिक इत्यतः पूर्वं पाठः कार्य इत्याशयात् ।

॥ कै० ॥ न पुनर्यत्रैवेति । रोः सुपीत्यस्यानन्तरम् अत उरतीति वक्तव्यम् । एवञ्चासिद्धत्वं न बाधितं

॥ भा० ॥ न पुनर्यत्रैव रुः सिद्धस्तत्रैवोत्वमप्युच्यते । नैवं शक्यम् ।
असिद्धे ह्युत्वे आद्गुणाप्रसिद्धिः । असिद्धे ह्युत्वे आद्गुणस्याप्रसिद्धिः स्या-
त् । वृक्षोऽत्र प्लक्षोऽत्र । तस्मात् तत्राऽऽश्रयात् सिद्धत्वमेषित-
व्यम् । यथा तत्राश्रयात् सिद्धत्वं भवति एवमिहाप्याश्रयात् सिद्धत्वं
भविष्यति । अथवा प्रगृह्यसंज्ञावचनसामर्थ्यादयादयो न भविष्यन्ति ॥

॥ कै० ॥ भवति । अत्र पाठक्रमेऽसिद्धत्वस्य प्राप्त्यभावात् प्लुतस्य चोत्वे सिद्धत्वात् तत्कालत्वाभावादप्लु-तादप्लुत इति न वक्तव्यं भवति । अथवेति । यथोद्देशपक्षाश्रयेणैतदुच्यते ॥

॥ वि० ॥ अनुनासिकपर्युदासेन चारितार्थ्यमाशङ्क्याह । यथोद्देशेति । एतद् । वचनसामर्थ्यादितिवार्त्तिकं तद्व्याख्यानभाष्यं चेत्यर्थः ॥

॥ वि० ॥ पूर्वभाष्यस्य व्याख्यान्तरवादिनस्तु वाक्यसंस्कारपक्षेऽप्याह । अथवेति । वस्तुतस्तु प्रकृतिभावोपस्थितसंज्ञायां तयोर्निमित्तत्वेनाश्रयणारूपवचनसामर्थ्याद्यादीन् प्रत्यपि सिद्धत्वं ज्ञाप्यते इति कार्य्यकालेऽपि न दोषः । किञ्च यथोद्देशेऽपि संज्ञां प्रति निमित्तत्वेनाश्रयणात् तद्दृष्ट्या मीत्वस्य सिद्धत्वेन संज्ञाया अनुनासिकप्रतिबन्धेन चारितार्थ्यमस्त्येव । प्रकृतिभावविषयकसंज्ञोपप्लवसामर्थ्याश्रयणे तु किं विशिष्य यथोद्देशा-

॥ कै० ॥ कार्यकालतायामप्याह । अथवेति । अदस इति सम्बन्धसामान्ये षष्ठी । अदसः सम्बन्धिन ईदूदेत इति । इहापीति । अदस् टा अदस् ओस् अत्वं टाप् सवर्णदीर्घत्वम् आङि

॥ भा० ॥ अथवा योगविभागः करिष्यते । अदसः । अदसः परे ईदादयः प्रगृह्यसंज्ञा भवन्तीति । ततो मात् । माच्च परे ईदादयः प्रगृह्यसंज्ञा भवन्तीति । अदस इत्येव । किमर्थो योगविभागः । एको यत् तत्सिद्धे प्रगृह्यकार्यं तदर्थः । अपरो यदसिद्धे । इहापि तर्हि प्राप्नोति । अमुया अमुयोरिति ॥

॥ कै० ॥ चाप इत्येत्वम् । अदे आ अदे ओस् इति स्थिते अदस इत्यत्र मादितिविशेषणाभावात् प्रगृह्यसंज्ञायां सत्यामयादेशाऽप्रसङ्गः ॥

॥ वि० ॥ श्रयणेन । एवमुपक्रमस्थभाष्येऽपि बोध्यमित्याहुः । भाष्ये योगविभागादेतिवार्त्तिकं व्याचष्टे । अथवेति । अदस इत्यस्य पञ्चम्यन्तत्वे उत्तरत्र मादित्यस्य विशेषणानापत्तिरत आह । सम्बन्धेति । यत् तत्सिद्ध इति । मूत्वे इति शेषः । यत्र कार्ये मूत्वं सिद्धं तत् प्रगृह्यकार्यमित्यर्थः । अपरो यदसिद्ध इति । यत्र मूत्वमसिद्धं तदित्यर्थः ॥



॥ वि० ॥ ननु समस्तत्वात् समुदायाऽनुवृत्तिः स्यात् तत्कथमेतो निवृत्तिरत आह । ईदूतोरेवेति । नान्यथेति । सिद्धान्ते तु व्यर्थमेव माद्ग्रहणमिति भावः । भाष्ये मार्थादीदाद्यर्थानां वेति वार्त्तिकं व्याचष्टे । अथवाहेति ।

॥ कै० ॥ अमुकेऽत्रेति । अदस इत्यनेन प्राप्नोति । एदन्तमिति । ईदूतोरेव स्वरितत्वप्रतिज्ञानादिति भावः । अननुवृत्तिरेव च निवृत्तिः । यद्येवं माद्ग्रहणं न कर्त्तव्यम् एद्ग्रहणनिवृत्त्यैवामुकेऽत्रेत्यत्राप्रसङ्गात् । नैतदस्ति । सति माद्ग्रहणे योग-

॥ भा० ॥ किञ्च स्यात् यद्यत्र प्रगृह्यसंज्ञा स्यात । प्रगृह्याश्रयः प्रकृतिभावः प्रसज्येत । नैष दोषः । पदान्तप्रकरणे प्रकृतिभावः । नचैष पदान्तः । एवमप्यमुकेऽत्र अत्रापि प्राप्नोति । द्विवचनमिति वर्त्तते । यदि द्विवचनमिति वर्त्तते । अमी अत्र । अत्र न प्राप्नोति । एवन्तर्ह्येदन्तमिति निवृत्तम् । अथवाहायमदसो मादिति नच ईत्त्वोत्त्वे स्तः । नापि मकारः । तत एवं विज्ञास्यामः । मार्थादीदाद्यर्थानामिति ॥

॥ कै० ॥ विभागो भवति नान्यथा । एकयोगे परिहारान्तरमाह । अथवेति । मार्थादिति । मार्थ एव स्थानी मशब्देनोक्तः । ईदूदर्थश्चेदूदिति । नचास्यां कल्पनायामसिद्धं भवति । बुद्धिपरिकल्पनायामसिद्धत्वाभावस्योक्तत्वात् ॥

॥ वि० ॥ नन्वेवं सति अदे अदौ इत्यस्यामवस्थायां प्रगृह्यत्वेऽपि मीत्वमूत्वयोः कृतयोरीकारादीनामप्रगृह्यत्वादेतदैयर्थ्यम् अल्विधित्वेन प्रगृह्यत्वाभावादिति चेन्न । प्रदेशे प्रगृह्यस्थानिकस्यापि लक्षणया ग्रहणेनादोषात् ॥

॥ वि० ॥ द्वितीयेति । द्वितीयपदस्थेऽचि यत्किञ्चित्कार्य्यं तत्रासिद्धत्वं नेत्यर्थः । अन्ये तु अथवा वचनसामर्थ्यादित्यादिभाष्ये भाष्यकृत एवोक्तिरत एव साम्प्रतपुस्तकेषु वार्त्तिकापाठ इत्याहुः । अन्ये तु अन्त्ये उक्तं वेत्यस्य वार्त्तिकत्वं मत्वा कोशे वार्त्तिकपाठो भ्रष्ट इत्याहुः ।

॥ कै० ॥ उक्तं वेति । असिद्धत्वमेवात्र प्रतिषिद्धमित्यर्थः । स्वर इति । अचीत्यर्थः । बहिष्पदलक्षण इति । द्वितीयपदव्यवस्थित इत्यर्थः । तेनैकपदव्यवस्थितेऽचि असिद्धे ईत्त्वोत्त्वे । तेनामुयाऽमुयोरित्यत्रायादेशो भवत्येव । प्रगृह्यसंज्ञायां चेति । प्रगृह्यसंज्ञायामेव सिद्धत्वेन सिद्धे लक्ष्ये प्रपञ्चार्थः पूर्ववाक्योपन्यासः । तत्र सकि दोष इति । मात्परं

॥ भा० ॥ उक्तं वा । किमुक्तम् । अदस ईत्त्वोत्त्वे स्वरे बहिष्पदलक्षणे सिद्धे वक्तव्ये प्रगृह्यसंज्ञायां चेति । तत्र सकि दोषः । तत्र सककारे दोषो भवति । अमुकेऽत्र । नवा ग्रहणविशेषणत्वात् । नवा एष दोषः । किं कारणम् । ग्रहणविशेषणत्वात् । न माद्ग्रहणेन ईदाद्यन्तं विशेष्यते किन्तर्हि ईदादयो विशेष्यन्ते । मात्परे ये ईदादय इति ॥ ❀ ॥

॥ कै० ॥ यदीदाद्यन्तमिति दोषोपन्यासः । पूर्वसूत्रे हि तदन्तं गृहीतमितीहापि तदन्तस्यैवानुवृत्तिरिति भावः । स्वरितत्वेन शब्दमात्रमनुमीयते इत्युत्तरेऽभिप्रायः । तत्र माद्ग्रहणेन गृह्यमाणमीदूदेद्विशेष्यते तेनामुकेऽत्रेत्यत्र व्यवधानाद्दोषाभाव एव । योगविभागे दोषप्रसङ्गादेदन्तमिति निवृत्तमित्युक्तम् । एकयोगे तु तन्निवृत्त्या न किञ्चित्प्रयोजनमिति नवा ग्रहणविशेषणत्वादित्युत्तरमुक्तम् ॥ ❀ ॥

॥ वि० ॥ सिद्धे इति । प्रगृह्यत्वे सिद्धत्वमयादीन् प्रति सिद्धत्वं विना सप्रयोजनं नेति सामर्थ्यात् तान् प्रत्यपि तौ सिद्धाविति भावः । विशेष्याऽसन्निधाने कथं तदन्तविधिरत आह । पूर्वसूत्र इति । अर्थाधिकारादिति भावः । शब्दमात्रमिति । एवञ्च विशेष्याभावान्न तदन्तविधिरिति भावः ॥ ❀ ॥



॥ वि० ॥ शे ॥ प्रत्यक्षमेवेति । एवञ्चेहेति भाष्यस्य इहैवेत्यर्थः । युष्मे इति । सुपां सुलुगिति विभक्त्यादेशः शेशब्द इत्यर्थः । शेश्चासावर्थवांश्च तस्य ग्रहणादित्यर्थः । शक्तिग्रहनिरपेक्षप्रतीतिकत्वेनान्तरङ्गत्वम् ।

॥ कै० ॥ शे ॥ इह कस्मादिति । अत्र हि प्रत्यक्षमेव शे इति रूपं युष्मे अस्मे इत्यत्र तु शकारस्यानुबन्धस्य स्मरणादनुमेयमिति प्रश्नः । शेऽर्थवद्ग्रहणादिति । स्वं शब्दस्येत्येवान्तरङ्गत्वादहेयत्वादसाधारणत्वाच्च रूपपरिग्रहे सिद्धे रूपवदर्थस्याप्यङ्गीकरणार्थं रूपग्रहणं कृतम् । अत्र च शेशब्दोऽनर्थकः सप्तम्येकवचनं त्वर्थवत् । तयोः समुदायोऽर्थान्तराप्रादुर्भावादनर्थकः । एवमपीति । अत्र हि मत्वर्थीयसप्तम्येकवचनयोरर्थवतोः समुदायोऽर्थवानेव अवयवधर्मानुविधानात

॥ भा० ॥ शे ॥ इह कस्मान्न भवति । काशे कुशे वंशे इति । शेऽर्थवद्ग्रहणात् । अर्थवतः शेशब्दस्य ग्रहणं नचैषोऽर्थवान् । एवमपि हरिशे बभ्रुशे इत्यत्र प्राप्नोति । एवं तर्हि लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेत्येवं न भविष्यति । अथवा पुनरस्त्वर्थवद्ग्रहणे नानर्थकस्येति । कथं हरिशे बभ्रुशे इति । एकोऽत्र विभक्त्यर्थेनार्थवान अपरस्तद्धितार्थेन । समुदायोऽनर्थकः ॥ ❀ ॥

॥ कै० ॥ समुदायस्येति प्रश्नः । लक्षणेति । प्रतिपदोक्ते हि झटिति प्रतिपत्तिर्भवति लाक्षणिके तु लक्षणानुसन्धानद्वारेण बहिरङ्गेति न तस्य ग्रहणम् । अथवेति । अर्थवत्समुदायस्यापि कस्यचिदानर्थक्यम् । यथा दश दाडिमादिवाक्यस्य पदार्थानां परस्परसमन्वयाभावात् । इहापि हरिशशब्दवाच्यार्थगतसंख्याधिकरणशक्तिप्रतिपादनाय प्रवृत्ता सप्तमी न शप्रत्ययमात्रप्रतिपाद्येनार्थेनान्वेतीति शेशब्दस्यानर्थक्यम् ॥ ❀ ॥

॥ वि० ॥ अर्थप्रतीतावपि प्रतीयमानत्वमहेयत्वम् । शब्दान्तरैरप्रत्यायनादसाधारणत्वम् । अप्रादुर्भावोऽप्रतीतिः । मत्वर्थीयो लोमादिशः । आनर्थक्यमिति । प्रत्यक्षानुमानिकन्यायापेक्षया रूपग्रहणानुगतार्थवत्परिभाषा प्रबलेति भावः ॥ ❀ ॥

॥ वि० ॥ निपात । आनर्थक्यादिति । अर्थवत्त्वानिश्चयादित्यर्थः । तत्र हेतुः । कल्पितरूपत्वादिति । ततः किं तत्राह । कल्पनाया इति । अत एव केचिच्छतिपमन्ये शप्तिपौ वदन्ति तत्रैयतोऽर्थवत्त्वमिति न निश्चेतं शक्यत इत्यर्थः । ननु निपातग्रहणाभावे एकाजितिवर्णग्रहणादर्थवत्परिभाषाया अप्रवृत्तावर्थवद्ग्रहणे मानाभाव इति चेन्न । बहुव्रीहिरित्याशयात् । गौणमुख्यन्यायस्य तु नेह प्रवृत्तिः । पर्युदासेनैवाज्रूपत्वे लब्धे एकाज्ग्रहणस्य गौणमुख्यसंग्रहार्थत्वात् । न्यायानित्यत्वाच्च । एतेन सत्यभिधानेऽनिरिरभवद् ईश्रभवदित्यादौ प्रगृह्यत्वं न स्याद् गौणमुख्यन्यायादितिपरास्तम् ।

॥ कै० ॥ निपात एकाजनाङ् । निपात इति किमर्थमिति । निपातस्यैवैकाचोऽर्थवत्त्वात् प्रत्ययस्य केवलस्य प्रयोगाभावादानर्थक्यात् कल्पितरूपत्वात् कल्पनायाश्च नियमाभावात् प्रश्नः । चकारात्रेति ।

॥ भा० ॥ निपात एकाजनाङ् । निपात इति किमर्थम् । चकारात्र जहारात्र ॥

॥ कै० ॥ अन्वयव्यतिरेकाभ्यां प्रत्ययस्याप्यर्थवत्त्वमिति भावः । निपातोऽपि केवलो न प्रयुज्यते द्योतकत्वादिति साम्यमेव निपातप्रत्यययोः । अततेर्डः । अ आगच्छ आगच्छेत्यपि प्रत्युदाहरणम् ॥

॥ वि० ॥ अत एवौद् इत्यत्रैव च्व्यन्तप्रतिषेध आरब्धः । अन्वयेति । व्याकरणानुसन्धानानुगृहीताभ्यामित्यर्थः । तस्यैव चास्मच्छास्त्रप्रवृत्त्युपयोगित्वादिति भावः । वस्तुतोऽनर्थकनिपातेऽप्यस्य प्रवृत्तेरोत्सूत्रे भाष्ये वक्ष्यमाणत्वाद्वार्थवत एव ग्रहणमिति न नियमः । प्रश्नाशयस्त्वनाङितिपर्युदासादप्रत्ययस्य ग्रहणमिति । उत्तराशयस्तु पर्युदासेन तथाश्रयणे न मानम् । निपातग्रहणादेव तेन प्रत्ययानुकरणे एतत्प्रवृत्तिरिति । अ आगच्छेत्यत्रापि प्लुते प्रकृतिभावो दुर्वार इति प्लुताभावे कथञ्चिदुदाहरणत्वं यदि सवर्णदीर्घे तथा बोधः ॥



॥ वि० ॥ एकग्रहणेति । स्वाङ्गसमुदाये स्वाङ्गत्वाभाववदच्समुदायेऽच्त्वाभावेनैकग्रहणं विनापि कर्मधारयार्थलाभादिति भावः । अन्तरङ्गत्वे हेतुमाह । वर्त्तीति । भाष्ये इह कस्मादिति । अजन्तो निपात इत्यर्थ इति प्रश्नः । अजेव य इति । निपातेनाज्विशेषणादित्यर्थः ।

॥ कै० ॥ एकाजिति किमर्थमिति । एकग्रहणसामर्थ्याद्बहुव्रीहिं मन्यते । ततश्च प्रेदं ब्रह्मेत्यनिष्टनिवृत्तिर्न कृतेति प्रश्नः । तत्पुरुषोऽयमिति । अन्तरङ्गत्वाद्वर्त्तिपदार्थप्राधान्यादिति भावः । नैव दोष इति । ननु पुरोऽहिरिति

॥ भा० ॥ एकाजिति किमर्थम् । प्रेदं ब्रह्म प्रेदं चत्रम् । एकाजित्यप्युच्यमानेऽत्रापि प्राप्नोति । एषोऽपि ह्येकाच् । एकाजिति नायं बहुव्रीहिः । एकोऽज् यस्मिन् सोऽयमेकाच् एकाजिति । किं तर्हि । तत्पुरुषोऽयं समानाधिकरणः । एकः । अच् । एकाच् । एकाजिति । यदि तत्पुरुषोऽयं समानाधिकरणो नार्थ एकग्रहणेन । इह कस्मान्न भवति । प्रेदं ब्रह्म । प्रेदं चत्रम् । अजेव यो निपात इत्येवं विज्ञायते । किं वक्तव्यमेतत् । नहि । कथमनुच्यमानं गंस्यते । अज्ग्रहणसामर्थ्यात् । यदि ह्यत्रान्यच्च तत्र स्यात् अज्ग्रहणमनर्थकं स्यात् । अस्ति ह्यन्यदज्ग्रहणस्य प्रयोजनम् । किम् । अजन्तस्य यथा स्याद्धलन्तस्य माभूत् । नैव दोषो न प्रयोजनम् ॥

॥ कै० ॥ हलन्तस्य प्रकृतिभावाद्रोरुत्वं न स्यात् । नैष दोषः । प्रगृह्यसंज्ञायां रुत्वस्यासिद्धत्वात् । सकारस्य च कार्यान्तराप्रसङ्गात् । उत्वे तु रुत्वमाश्रयात्सिद्धम् ॥

॥ वि० ॥ किं वक्तव्यमिति । निपातस्य न्यायप्राप्तविशेष्यत्वाभावायेत्यर्थः । यदि हीति । अजन्तग्रहणेऽज्ग्रहणवैफल्यमिति भावः । प्रगृह्यसंज्ञायामिति । ननु सान्तस्य प्रगृह्यत्वे एकदेशविकृतन्यायेन रान्तस्यापि तत्त्वात्प्रकृतिभावः स्यादिति चेन्न । प्रकृतिभावेऽप्यसिद्धत्वात् ॥

३७२

॥ वि० ॥ अथ निपातस्य विशेष्यतयाऽजन्त इति व्याख्यानेऽप्यज्ग्रहणसामर्थ्यान्मुख्याजन्तपरिग्रहेण केवलाज्रूपव्यावृत्तिरज्ग्रहणस्य फलं स्यादिति मनसि निधाय पृच्छति । एवमपीति भाष्ये । अन्यतरनिवृत्त्येति । निपातस्य विशेषणत्वे तदन्तपरिभाषाऽप्रसक्तिरेव निवृत्तिः । विशेष्यत्वे त्वजितिविशेषणसामर्थ्यात् तदन्तस्यैव ग्रहणे मुख्याजन्तपरिग्रहादाद्यन्तवदित्यस्य निवृत्तिरिति भावः । विपर्ययः । निपातस्य विशेष्यत्वेनाजन्तपरिग्रहः

॥ कै० ॥ एवमपीति । अन्यतरनिवृत्त्याऽज्ग्रहणस्यार्थवत्त्वादज्मात्रं गृह्यते तदन्तं निरस्यते विपर्ययस्तु न भवतीति विशेषाभावात् प्रश्नः । पारार्थ्यसाम्यात् संज्ञातिदेशौ परिभाषाशब्देनोक्तौ । सावकाशयोरिति । निरवकाशस्य बाधकत्वादेवमुक्तम् । तत्र तदन्तविधेरवकाशः । ओरावश्यके लाव्यं पाव्यम् । आद्यन्तवद्भावस्यावकाशः । मिदचोऽन्त्यात्परः । तानि यानीति । अत्र हि साक्षादन्त्यग्रहणमस्तीति तदन्तविध्यभावः । समवस्थितयोरिति । इह प्राप्तयोः । आचार्यप्रवृत्ति-

॥ भा० ॥ एवमपि कुत एतत् । द्वयोः परिभाषयोः सावकाशयोः समवस्थितयोराद्यन्तवदेकस्मिन् येन विधिस्तदन्तस्येति च । इयमिह परिभाषा भविष्यति आद्यन्तवदेकस्मिन्निति । इयं च न भविष्यति येन विधिस्तदन्तस्येति । आचार्यप्रवृत्तिर्ज्ञापयति । इयमिह परिभाषा भवति आद्यन्तवदेकस्मिन्निति । इयं च न भवति येन विधिस्तदन्तस्येति । यदयमनाङिति प्रतिषेधं शास्ति ॥

॥ कै० ॥ रिति । यदि तर्हि लिङ्गेन तदन्तविधिर्निराक्रियते तदा तन्मूलाद्यन्तवत्परिभाषा कथं प्रवर्त्तेत । नैष दोषः । आद्यन्तवदित्यस्योपस्थानाय तदन्तविधिः प्रथमं सन्निधीयते पश्चात्तु लिङ्गात् परित्यज्यते । अथवा लिङ्गादज्ग्रहणं निपातेन विशेष्यते इति विशेष्येण च तदन्तविधेरभावादतिदेशस्यापि माभूत् प्रवृत्तिस्तत्फलसंपत्त्या तूक्तं परिभाषा भविष्यतीति ॥

॥ वि० ॥ केवलाचो निवृत्तिरिति । इति विशेषाभावादिति । अत्र कारणाभावादित्यर्थः । संज्ञा येन विधिरिति । अतिदेश आद्यन्तवदिति । लाव्यमिति । उङ् शब्दे इत्यत आवश्यके णयदनभिधानान्नेति भावः । यदि तर्हीति । एवञ्च इयमिह भवतीति भाष्यमनुपपन्नमिति भावः । ननु पूर्वं प्रवर्त्त्य पश्चात्परित्यागापेक्षयाऽप्रवृत्तौ लाघवमित्यभिप्रेत्याह । अथवेति ॥

३७३

॥ वि० ॥ ननु एकग्रहणाभावेऽच्समुदायस्य स्यादिति तन्निवृत्त्यर्थमेकग्रहणं तत्राह । संज्ञाया इति । गुणत्वादिति । संज्ञोपकारकत्वादित्यर्थः । पशोरपि यागोपकारकत्वाद् गुणत्वम् । नहि यागः पश्वर्थोऽपितु यागार्थः पशुः । ग्रहं संमार्ष्टीत्यादौ तु ग्रहार्थत्वात् संमार्गस्य ग्रहस्य प्राधान्यमिति न तद्गतसंख्या विवक्षितेति भावः । परे तु संज्ञा स्वकार्यद्वारा संज्ञ्युपकारिका नतु संज्ञी संज्ञोपकारकः । अन्यथा ग्रहोऽपि कर्मत्वेन संमार्गार्थः स्यादिति विधेयविशेषणं विवक्षितमनुवाद्यविशेषणमविवक्षितमिति मीमांसकमर्यादैव ज्यायसी भाष्यसंमता चेतीदं चिन्त्यम् । तस्मात् स्वाङ्गसमुदाये स्वाङ्गत्वाभाववदच्स-

॥ कै० ॥ एवं तर्हीति । संज्ञाया विधीयमानत्वात् प्राधान्यात् संज्ञिनो गुणत्वात् पशुना यजेतेतिवत् संख्याविवक्षायां सिद्धायामेकग्रहणमन्यत्र जातिसंप्रत्ययार्थम् । अच्समुदायग्रहणशङ्कानिरासार्थं ह्येकग्रहणं ज्ञापनफलं संपद्यते । किं पुनः स्याद् यद्यवाच्समुदायस्य ग्रहणं स्यात् । उच्यते ।

॥ भा० ॥ एवं तर्हि सिद्धे सति यदज्ग्रहणे क्रियमाणे एकग्रहणं करोति तज्ज्ञापयत्याचार्यः । अन्यत्र वर्णग्रहणे जातिग्रहणं भवतीति ॥

॥ कै० ॥ इह अ इ उ अपेहीति समुदायस्यैका संज्ञा स्याद् नावयवानां समुदायैकाज्द्विर्वचनवदित्यन्त्यस्यैव प्रकृतिभावाद्यणादेशो न स्यात् । पूर्वयोस्तु स्वरसंधिः स्यात् । अच्समुदायपरिग्रहानुरोधित्वाच्च निपातसमुदायो गृह्येत । एकनिपातस्याच्समुदायस्याभावात् ॥

॥ वि० ॥ मुदायेऽच्त्वाभावान्न तद्ग्रहणप्रसक्तिरित्येकग्रहणं विनापि सिद्धिरिति तज्ज्ञापकमिति भाष्याशय इत्याहुः । जातिग्रहणमित्यस्य तज्जात्याश्रयानेकव्यक्तिग्रहणमित्यर्थः । अन्यथा जातिग्रहणेऽपि जातेरेकैकव्यक्तिव्यङ्ग्यतयाऽसंगतिरेव प्रवृत्तिनिमित्ततया जातिग्रहणस्य सर्वत्र सत्त्वेन तस्यावक्तव्यत्वाच्च । इहेत्यादि । अत्रेदं चिन्त्यम् । समुदायसंज्ञयाऽवयवानामननुग्रहाच्चात्र द्विर्वचनन्यायः । नापि निपातसमुदायस्य निपातग्रहणेन ग्रहणं स्वाङ्गसमुदायस्य स्वाङ्गग्रहणेनेव एकैकत्र सूत्रचारितार्थ्यादिति । तस्मात् तितउशब्दैकदेशे अउशब्दानुकरणे उक्तसमुदायानुकरणे वाऽनितिपरे निपातसंज्ञकोऽउ अकरोदित्यादौ प्रगृह्यत्वं स्यात् । तद्वारणायैकग्रहणमिति तत्त्वम् ॥

॥ वि॰ ॥ भाष्ये दम्भेरिति । दम्भेः सनि दम्भ इच्चेतीत्त्वे सनीवन्तेतीडभावपक्षे इक्समीपो नकारो न ततो झलादिः सन्परः यतश्च भात्परः सन् न स इक्समीप इति हलन्ताच्चेति किच्चाभावेऽनिदितामिति नलोपो न स्यादिति चोद्ये जात्याश्रयानेकस्येक्समीपत्वं सनश्च तस्मात्परत्वमिति किच्चे धिप्सतीतिसिद्धिरित्यर्थः । अनेन सामीप्यमव्यवहिते एवेति सूचितम ।

॥ कै॰ ॥ अनाङिति किमर्थमिति । ङिदङितोराकारयोर्विषयविभागप्रदर्शनाय प्रश्नः । इह कस्मादिति । अनुबन्धनिवृत्तौ विशेषापरिज्ञानात् प्रश्नः । अर्थवशाद् विशेषावसाय इत्युत्तरम् । ईषदर्थे । आ उष्णमोष्णमिति । अङीषदर्थे इति चोक्तम् । क्रियायोगे । आ इतः । एतः । प्रादिषु हि ङित् पठ्यते । आङ् मर्यादाभिविध्योरिति समासविधौ ङिन्निर्दिष्टः ।

॥ भा॰ ॥ किमेतस्य ज्ञापने प्रयोजनम् । दम्भेर्हल्ग्रहणस्य जातिवाचकत्वात् सिद्धमिति यदुक्तं तदुपपन्नं भवति । अनाङिति किमर्थम् । आ उदकान्तात् । ओदकान्तात् । इह कस्मान्न भवति । आ एवं नु मन्यसे आ एवं किल तदिति । सानुबन्धकस्येदमाकारस्य ग्रहणम् । अननुबन्धकश्चात्राऽऽकारः । क पुनरयं सानुबन्धकः क निरनुबन्धकः । ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः । एतमातं ङितं विद्याद् वाक्यस्मरणयोरङित् ॥ ❁

॥ कै॰ ॥ आ उदकान्तात् ओदकान्तात् आ अहिच्छत्रात् आहिच्छत्रादिति । विना तेनेति मर्यादा । सह तेनेत्यभिविधिः । पूर्वप्रक्रान्तस्य वाक्यार्थस्यान्यथात्वद्योतनायाऽऽकारः प्रयुज्यते । आ एवं नु मन्यसे । नैवं पूर्वममंस्थाः सम्प्रति मन्यसे इति वाक्यारम्भसूचनायाऽऽकार इत्यपरे । तथा स्मृतेः सूचक आकारः प्रयुज्यते । ततः स्मृतोऽर्थो निर्दिश्यते । आ एवं किल तदिति ॥ ❁

॥ वि॰ ॥ प्रदर्शनाय । प्रदर्शनं कारयितुमित्यर्थः । किञ्चिद्विधानायोपात्तस्यान्यविधानाय पुनरुपादानमन्वादेशः प्रकृते च विधानद्वयाभावाद् एतमित्येनादेशो न कृत इत्याहुः । विना तेनेत्यादि । यथा आ काश्याँ वृष्टो देव इत्यादौ काशीमभिव्याप्य काश्यां वर्जयित्वेति वार्थः ॥ ❁ ॥





॥ वि॰ ॥ ओत् । दर्शनादिति । वेदे चादीनां पादपूरणार्थानां च लोकेऽपीत्यादिः । अर्थभेदाभावेऽपि । तन्नानात्वाभावेऽपि । अवयवा अनर्थका निपातसमुदाय एवार्थवानिति भावः । उशब्दोऽत्र निरनुबन्धकः । तेन उञ इत्यनेन सिद्धिरिति न भ्रमितव्यम् । पर्युदासे त्विति । वस्तुतः पर्युदासेऽपि दोषः । आङ्भिन्नत्वस्याशास्त्रीयत्वात् । नच स्वाश्रयमाङ्भिन्नत्वम् । आङ्त्वस्य पूर्वान्तवत्त्वेनातिदेशेऽतिदिश्यमानविरुद्धस्या-

॥ कै॰ ॥ ओत् । निपातसमाहारोऽयमिति । अनर्थकानामपि निपातानां कमीमिदु इत्यादीनां दर्शनादर्थभेदाभावेऽपि निपातसमाहारत्वमुक्तम् । एवं तर्हीति । चादिषु तथा पाठादिति भावः । ओ षु यातमिति । आउओ इत्यत्रान्तवद्भावाङ्गवत्यसमा-

॥ भा॰ ॥ ओत् । किमुदाहरणम् । आहो इति उताहो इति । नैतदस्ति प्रयोजनम् । निपातसमाहारोऽयम् । आह उ आहो इति । उत आह उ उताहो इति । तत्र निपात एकाजनाङित्येव सिद्धम् । एवं तर्ह्येकनिपाता इमे । अथवा प्रतिषिद्धार्थोऽयमारम्भः । ओ षु यातं मरुतः । ओ षु यातं बृहती शक्करी च । ओ चित्सखायं सख्यावदृत्याम् ॥

॥ कै॰ ॥ ङिति अनाङिति प्रतिषेधः प्राप्नोति । पर्युदासे तु सति न दोषः । तत्र ह्याङ्सदृशस्योकारस्याङा सहैकादेश आदिवद्भावादुकारग्रहणेन गृह्यत इति सिध्यत्येव प्रगृह्यसंज्ञा । तस्याश्च प्रयोजनं क्वचिच्छाखायामो अयातमिति पाठे प्रकृतिभावः ॥

॥ वि॰ ॥ अयधर्मप्रयुक्तकार्यस्य निवृत्तेरतिदेशस्वभावसिद्धत्वात् । नचान्तवत्त्वमेव दुर्लभं शास्त्रीयकार्याभावादिति वाच्यम् । तत्रापि प्रतिषेधस्य गम्यतया शास्त्रतात्पर्यविषयत्वेन प्रगृह्यत्वाभावस्य शास्त्रीयतयाऽन्तवत्त्वप्रवृत्तेरिति बोध्यम् । तस्याश्चेति । प्रगृह्येषु पदपाठे इतिशब्दप्रयोगनियमादपि फले विशेषो बोध्यः ॥

॥ वि॰ ॥ भाष्ये ओतश्च्वीति । पूर्वंसूत्रवदत्राप्यर्थाधिकाराद्गौणमुख्यन्यायस्याप्रवृत्तिरित्याशयः । प्रतिषिद्धार्थत्वादिति । प्रतिषिद्धसंज्ञाकं पदं प्रतिषिद्धपदेनोच्यते । परत्वादिति । निषेधाच्च बलीयांस इत्यस्य तु नायं विषयः । तस्य पूर्वेण सह पाठात् तन्निषेधकत्वादिति भावः ।

॥ कै॰ ॥ अदोऽभवदिति । च्व्यन्तत्वेनात्र निपातत्वम् । उर्यादिच्वीत्यत्र निपाताधिकारात् । प्रतिषिद्धार्थत्वादस्य कथमत्र प्राप्तिरिति चेद् । उभयार्थत्वाददोषः । तथाह्योदन्तस्य निपातस्य प्रगृह्यसंज्ञा विधीयमाना प्रतिबन्धाभावाददोऽभवदित्यत्रापि

॥ भा॰ ॥ ओतश्च्विप्रतिषेधः । ओदन्तो निपात इत्यत्र च्व्यन्तस्य प्रतिषेधो वक्तव्यः ।
अनदः । अदः । अभवत् । अदोऽभवत् । तिरोऽभवत् । न वक्तव्यः । लक्षणप्रतिपदोक्तयोः
प्रतिपदोक्तस्येत्येवं न भविष्यति । एवमपि अगौः । गौः समपद्यत । गोऽभवत् । अत्र प्राप्नोति ॥

॥ कै॰ ॥ भवति ओ षु यातमित्यत्रापि परत्वादनाङितिप्रतिषेधं बाधते इति प्रतिषिद्धार्थमपि स्यादिति को विरोधः । ओकारस्य प्रतिपदोक्तस्य ग्रहणमित्युत्तरम् । एवमपीति । ओकारस्यात्र प्रतिपदोक्तत्वमस्ति । गमेर्डो इति साक्षादुच्चारणात् । यस्य हि साक्षादुच्चारणं नास्ति आद्गुण इत्यादिसामान्यलक्षणेन यद्रूपं निष्पाद्यते तल्लाक्षणिकमुच्यते ॥

॥ वि॰ ॥ प्रतिपदोक्तस्येति । नच प्रतिषिद्धार्थोऽयमारम्भ इति पूर्वभाष्यासंगत्याऽवैतत्परिभाषाया अप्रवृत्तिरेवानित्यत्वादुचितेति वाच्यम् । अस्यैकदेशयुक्तित्वात् । तद्ध्वनयन् भाष्ये आह । एवमपीति । ननु लक्षणेन प्रतिपादितत्वादिदमपि लाक्षणिकमत आह । यस्य हीति ॥



॥ वि॰ ॥ प्रधानत्वात् । अर्थान्तरप्रतीतिनिरपेक्षतया प्रतीयमानत्वात् । तादृशार्थबोधकत्वाच्छब्दस्यापि गौणत्वं मुख्यत्वञ्च बोध्यम् । गौणमुख्यन्यायबीजं दर्शयितुमाह । तत्र स्वं रूपमिति । प्राथम्यमेवोपपादयति । गौणे हीति । आरोपाय हि पूर्वं तदुपस्थितिरावश्यकीति भावः । मुख्यार्थारोपेणेति । आरोपितसिंहत्ववान् माणवकादिसमभिव्याहारे सिंहशब्दार्थ इति भावः । मुख्यस्यैव ग्रहणे युक्त्यन्तरमाह । अनियतश्चेति । सिंह-

॥ कै॰ ॥ एवन्तर्हीति । गुणादागतो गौणः । यथा गोशब्दस्य जाड्यादिगुणनिमित्तोऽर्थो वाहीकः । मुखमिव प्रधानत्वान्मुख्यम् । तत्र स्वं रूपमित्यत्र रूपग्रहणेनार्थपरिग्रहस्य ज्ञापितत्वादर्थवतः कार्येण भवितव्यम् । स चार्थः प्राथम्यान्मु-

॥ भा॰ ॥ एवन्तर्हि गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्यय इति । तद्यथा । गौरनुबन्ध्योऽजोऽग्नीषोमीय इति । न वाहीकोऽनुबध्यते । कथन्तर्हि वाहीके वृद्ध्यात्वे भवतः । गौस्तिष्ठति गामानयेति । अर्थाश्रय एतदेवं भवति । यद्धि शब्दाश्रयं शब्दमात्रे तद्भवति ॥

॥ कै॰ ॥ स्व एव गृह्यते । गौणे ह्यर्थे शब्दः प्रवर्त्तमानो मुख्यार्थारोपेणैव प्रवर्त्तते । अनियतश्च गौणोऽर्थः ॥

॥ वि॰ ॥ शब्दस्य माणवकबलीवर्दादिषु प्रयोगादिति भावः । एतेन वर्णग्रहणे लक्षणप्रतिपदोक्तपरिभाषाऽप्रवृत्तेरोकारस्य लाक्षणिकत्वमित्यादि चिन्त्यमित्यपास्तम् । अनयैव तस्यापि वारणात् । ह्वावामश्चेत्यादेस्तज्ज्ञापकस्य लक्षणप्रतिपदोक्तपरिभाषाऽनित्यत्वमात्रज्ञापकतया वर्णग्रहणे सर्वत्र तदप्रवृत्तौ मानाभावाच्च ॥

॥ वि॰ ॥ नचेयमपि अर्थवत्परिभाषामूलकत्वात् तद्वदेव विशिष्टरूपोपादानविषयेति कथमत्र वर्णग्रहणे प्रवर्त्ततां तत्रैवार्थोपस्थितेः सत्त्वादिति वाच्यम् । निपात इतिविशिष्टरूपोपादानसत्त्वात् । निपातसंज्ञा हि चादिपदोपस्थितचादीनां सति सम्भवेऽर्थवतामेवेति ये सार्थकास्तेषां निपातपदेनापि तत्तदर्थविशिष्टानामेवोपस्थितिरिति प्रकृतसूत्रस्थनिपातपदेन मुख्यार्थकनिपातानामेव ग्रहणं न तु गौणार्थकानामिति भावः । एवञ्च कार्यकालपक्षेऽपि च्यन्ता निपाता इत्यस्यावानुपस्थितिरेतत्परिभाषावशात् । विशिष्टरूपपदेन चार्थवद्रूपमेवोच्यते । प्रकृते गौणत्वमुपपादयति । जाड्यादिनेति । आरोपे

॥ कै॰ ॥ तस्माल्लौकिकोऽयं न्यायो गौणमुख्ययोरिति । गोऽभवदित्यत्र च जाड्यादिना धर्म्मेण गोत्वमारोपितमिति गौणत्वमर्थस्य । गोऽभवदित्यत्र वृत्तौ प्रकृतेः कर्तृत्वं संघीभवन्ति ब्राह्मणा इति बहुवचनदर्शनात् । प्रकृतौ च गोत्वमारोपितं नतु मुख्यमिति प्रगृह्यत्वाभावः ॥

॥ वि॰ ॥ बीजमाह । प्रकृतेः कर्तृत्वमिति । एवञ्च गोऽभवदित्यस्य गोभिन्नकर्तृकं गोसदृशरूपेण भवनमर्थः । यत्र च योगीश्वरशापादिना मुख्यगोरूपप्राप्तिस्तत्र च्विर्नेष्यते इति गोसदृशरूपेण भवनप्रतीतेस्तस्य गौणत्वमिति भावः । ननु सुवर्णपिण्डः खदिराङ्गारसदृशे कुण्डले भवत इति भाष्ये विकृतेरपि कर्तृत्वदर्शनादुक्तम् । वृत्ताविति । एवञ्च च्यन्ते प्रकृतेरेव कर्तृत्वमिति भावः । प्रकृतेरेव कर्तृत्वे हेतुमाह । संघीभवन्तीति ॥



॥ वि॰ ॥ ननु शब्दाश्रये चेति भाष्यस्यार्थरहितवर्णमात्राश्रये इत्यर्थः प्रतीयते स चायुक्तः सर्वनामस्थानाम्शसाच्चिप्प्रातिपदिकस्यैत इत्यनेन विशेषणादनयोरपि विशिष्टशब्दाश्रयत्वादत आह । स्वार्थ इति । स्वार्थादिप्रयुक्तकार्येण पूर्णस्य पदस्यार्थप्रतिपादनाय प्रयोगार्हस्य पदार्थान्तरान्वये बाधप्रतिसन्धाने गौणार्थप्रतीतेरिति भावः । आक्षेपे आक्षिप्तस्य वा शाब्देऽन्वये मानाभावाच्च । गौणापेक्षयेति । मुख्यशब्दस्य गौणापेक्षया सम्बन्धिशब्दत्वाद् गौणाभावे गौणस्य बुद्ध्यसन्निधाने मुख्यव्यपदेशस्य मुख्यपदस्याभावादित्यन्वयः । एवञ्च शब्दाश्रये चेति भाष्यस्य मुख्यव्यपदेशरहितस्वार्थबोधकप्रातिपदिकरूपशब्दाश्रये इत्यर्थः । पदव्यपदेशरहितस्य कार्यित्वेनाऽऽश्रयणमिति फलितमिति तात्पर्यम् ।

॥ कै॰ ॥ शब्दाश्रये चेति । स्वार्थे वृत्तात् प्रातिपदिकाद्विभक्तावुत्पन्नायां कार्येषु कृतेषु शब्दान्तरसन्निधानाद्गौणत्वं प्रतीयते । तस्य च स्वार्थस्य मुख्यव्यपदेशो नास्ति गौणापेक्षया सम्बन्धिशब्दत्वान्मुख्य-

॥ भा॰ ॥ शब्दाश्रये च वृद्ध्यात्वे ॥ ❋ ॥

॥ कै॰ ॥ पदेशस्य गौणाभावेऽभावाच्छब्दाश्रये चेत्युक्तं नत्वत्रार्थो नापेक्ष्यते । तत्र यथा श्वेतं छागमालभेतेति गुणद्रव्ययोः श्रौतः क्रियासम्बन्धः । वाक्यीयात्तु न्यायात् पश्चात् परस्परेण ॥

॥ वि॰ ॥ ननु द्वितीयादेः कर्मत्वाद्यर्थकस्य कारकत्वज्ञानसापेक्षतया गां वाहीकमानयेत्यादौ विशिष्टस्य क्रियासम्बन्धेन कर्मत्वेऽपि तदभिधानाय जायमाना द्वितीया समुदायस्याप्रातिपदिकत्वात प्रत्येकं प्रवर्त्तते ततश्च पूर्वमेव गौणत्वादात्वं न स्यादत आह । तत्रेति । श्रौतः क्रियासम्बन्ध इति । द्वितीयाश्रुत्यनुपपत्त्या कल्पित इत्यर्थः । विभक्त्यन्तेन हि उपस्थितार्थस्य क्रियान्वय इति ततः प्राग्गुणे साक्षात्परम्परासाधारण्येन द्रव्ये च साक्षात्सामान्यतः क्रियाजन्यफलाश्रयत्वादिविवक्षयोभयत्र विभक्तिरिति भावः । वाक्यीयान्न्यायात् । आकाङ्क्षादिमूलकशक्त्या । पश्चात् । विभक्त्युत्पत्त्यनन्तरम् ॥

॥ वि॰ ॥ एवमिति । द्वितीयादेः सामान्यतः क्रियासम्बन्धज्ञानापेक्षत्वात् तज्ज्ञानमूलकद्वितीयाद्युत्पत्तौ गोपदार्थस्य वाहीकान्वयः पश्चादेव । एवञ्च कर्मणोरेव विशेष्यविशेषणभावो नतु विशिष्टस्य कर्मत्वमिति भावः । यत्तु विभक्त्यर्थस्य क्रियाकारकसम्बन्धरूपत्वेन तयोः सम्बन्धबोधः श्रुतिकृत इति श्रुतेर्वाक्यापेक्षया शीघ्रं प्रवृत्त्या प्रथमं तयोरन्वयबोधः पश्चाद्गुणद्रव्ययोः परस्परान्वयबोध एवं गां वाहीकमानयेत्यादावपीति कैयटार्थं व्याख्याय दूषयन्ति । गां वाहीकं पाठयेत्यादौ यत्र गौणार्थप्रादुर्भावं विना क्रियासम्बन्ध एवासम्भवी तत्र पूर्वमेव गौणत्वावगतेरात्वाद्यनापत्तिरिति तदेतेन परास्तम् । विभक्त्यन्तस्यैव प्रयोगेण तत उपस्थितानामर्थानामितरान्वयेन प्रातिपदिकमात्रार्थेन पूर्वमन्वय इत्यस्य वक्तुमप्यशक्यत्वाच्च । तादृशबोधद्वयस्य कल्पने गौरवाच्च ।

॥ कै॰ ॥ एवं गां वाहीकमानयेति पूर्वं क्रियाभिसम्बन्धापेक्षया विभक्तावुत्पन्नायां वाक्यीयात्तु न्यायात् सामानाधिकरण्याद्गौणार्थप्रादुर्भावो भवतीति पदकार्येष्वेवायं न्यायो न प्रातिपदिककार्येष्वित्युक्तं शब्दाश्रये चेति ॥ ❀ ॥

॥ वि॰ ॥ अनुभवाभावाच्च । किञ्चापदस्याप्रयोगेण बोद्धृभिः सर्वत्र पदस्यैव गौणार्थत्वग्रहेण अत्वं त्वं सम्पद्यते अमहान् महान् भूतः त्वद्भवतीत्यादौ भाष्यप्रयोगे त्वाद्यादेशदीर्घादीनां करणेन चास्य न्यायस्य पदकार्यमात्रविषयत्वमुपात्तविशिष्टरूपविषयत्वं चेत्यपि बोध्यम् । अत एवात इञित्यादेः श्वशुरसदृशस्यापत्यमित्यर्थेऽपि प्रवृत्तिः । किञ्च । गामित्युक्ते सर्वा क्रिया प्रसक्तेत्याद्यर्थवत्सूत्रस्थभाष्यबलात् संस्कृत्य संस्कृत्य पदान्युत्सृज्यन्ते तेषां यथेष्टमभिसम्बन्धो भवतीति वृद्धिसूत्रस्थभाष्याच्च सामान्यतः क्रियाजन्यफलाश्रयत्वादेरेव द्वितीयादिनियामकत्वेन मदुक्तव्याख्यैव तस्योचिता । प्रयोक्ताऽपि पदान्येवार्थे मुख्ये गौणे वा प्रयुयुक्षति* नतु प्रातिपदिकादिक्रमेणेति सुष्ठूच्यते पदकार्येष्विति । सामानाधिकरण्यादितीदमुपलक्षणं पठनादिक्रियान्वयादित्यपि बोध्यम् ॥ ❀ ॥

---

* अत्र ग्रन्थकर्तुरेव प्रमादो यत् परस्मैपदम् ।



॥ वि॰ ॥ उञ ऊँ । प्रश्न इति । एवञ्चात्र ऊँआदेशः प्राप्नोतीति भावः । संज्ञासिद्धिरिति । निपात एकाजित्यनेनेत्यर्थः । स्थानिवद्भावेन तु नैतल्लभ्यम् । एकादेशस्यान्यवृत्तिधर्मत्वात् ।

॥ कै॰ ॥ उञ ऊँ । इह कस्मादिति । निपातसमाहारं मत्वा प्रश्नः । यदयमिति । एकादेशे कृते आदिव-

॥ भा॰ ॥ उञ ऊँ । इह कस्मान्न भवति । आहो इति उताहो इति । उञ इत्युच्यते नचावोञं पश्यामः । उञोऽयमन्येन सहैकादेश उञ्ग्रहणेन गृह्यते । आचार्यप्रवृत्तिर्ज्ञापयति नोञ एकादेश उञ्ग्रहणेन गृह्यते इति । यदयमोदित्योदन्तस्य निपातस्य प्रगृह्यसंज्ञां शास्ति । नैतदस्ति ज्ञापकम् । उक्तमेतत् । प्रतिषिद्धार्थोऽयमारम्भ इति । दोषः खल्वपि स्याद् यद्युञेकादेश उञ्ग्रहणेन न गृह्येत । जानु उ अस्य रुजति । जानू अस्य रुजति । जान्वस्य रुजति । मय उञो वो वेति वत्वं न स्यात् । एवन्तर्ह्येकनिपाता इमे । अथवा द्वावुकाराविमौ । एकोऽननुबन्धकः । अपरः सानुबन्धकः । तयोऽननुबन्धकस्तस्यैष एकादेशः ॥

॥ कै॰ ॥ द्भावात् संज्ञासिद्धिः ॥

॥ वि॰ ॥ एकादेशस्यान्यत्वावृत्तिधर्मस्तु नायम् । उञितिसमुदायेऽपि सत्त्वात् । तेनान्तादिवद्भावेन तादृरूप्यानतिदेशेऽपि न दोषः । भाष्ये यद्युञ इति । सामान्येन ज्ञापकमिति भावः । वत्वाभावपक्षे ऊँआदेशो न स्यादित्यपि दोषो बोध्यः ॥

॥ वि० ॥ नित्यैवेति । आदेशाभावपच इत्यर्थः । न तु वितीति । नच उ इतीत्यस्य निरनुबन्धकोकारमादाय सिद्धत्वेन शाकल्यानुवृत्तिसामर्थ्यात् पचे वितीति भविष्यतीति वाच्यम् । मयः परत्वे किम्वितीत्यादौ मकारसहितनिरनुनासिकवकारघटितरूपासिद्धिप्रसङ्गात् । शाकल्यानुवृत्तिसामर्थ्यान्निपातेति प्रगृह्यत्वाभावे मय इति वत्वस्यासिद्धत्वेनेको यणचीति वत्वेऽनुस्वारापत्तेः । उ इतीत्यतः सानुबन्धकवोधस्यापीष्टत्वेन तदनापत्तेश्चेति भावः । अन्ये तु अनेन प्रकरणात् प्रगृह्यत्वस्य ऊँआदेशस्य च विधानेन तस्य निपात इति प्रगृह्यसंज्ञापवादत्वादेतदादेशविकल्पे

॥ कै० ॥ इह रूपत्रयं साध्यम् । उ इति । विति । ऊँ इति । तच्चैकयोगे न सिध्यति । एकयोगे ह्युञ इति श्रुतिरादेशेन श्रुतत्वात् सम्बध्यते न प्रगृह्यसंज्ञया सा तु निपात एकाजनाङिति नित्यैवास्य भवति शाकल्यश्रुत्यनुवृत्त्या चादेशे

॥ भा० ॥ उञ इति योगविभागः । उञ इतियोगविभागः कर्त्तव्यः ।
उञः शाकल्यस्याऽऽचार्यस्य मतेन प्रगृह्यसंज्ञा भवति । उ इति विति ॥

॥ कै० ॥ विकल्पिते रूपद्वयं स्यात् । उ इति । ऊँ इति । न तु वितीति । तदर्थमाह । उञ इति योगविभाग इति । उञ इत्यत्र शाकल्यस्येतौ प्रगृह्यमिति चानुवर्त्तते तत्र प्रगृह्यसंज्ञैव शाकल्यस्य मतेन विधीयते नान्येषामिति स्मृत्यन्तरानुसन्धानद्वारेण विभाषा सम्पद्यते । उ इति वितीति ॥

॥ वि० ॥ ऊँ इति वितीति सिध्यति नतु उ इति । अतो योगविभागः । नचापवादे विशिष्टे ऊँआदेशे हि असति निपातेति प्रगृह्यत्वं स्यात् । अप्रवर्त्तमानापवादस्योत्सर्गबाधकत्वाभावात् । अत एव पारे मध्ये इत्यव्ययीभावाभावे उत्सर्गः षष्ठीसमासो भवतीति वाच्यम् । प्रगृह्यपदस्य सर्वत्र साक्षादुद्देश्यसम्बन्धस्य क्लृप्तत्वेनात्र विधेयविशेषणत्वे मानाभावात् सह विधानेन वाक्यभेदस्याप्यभावात् स्थानिवद्भावेन च ऊँ इत्यस्य प्रगृह्यकार्यं बोध्यम् । एवञ्च पचे प्रगृह्यत्वाभावेऽप्यस्य तात्पर्याच्चैतदभावे निपात इत्यस्य प्रवृत्तेरित्याहुः ॥



॥ वि० ॥ प्रगृह्यस्येति । अनुवर्त्तमानप्रगृह्यपदस्यादेशेन सम्बन्धे उञ्मात्रस्य नित्यं प्रगृह्यसंज्ञकस्य ऊँभावस्य विधानापत्तौ योगविभागेन प्रगृह्यसंज्ञाविधानस्य वैयर्थ्यापत्तेरनुवर्त्तमानं प्रगृह्यपदं षष्ठ्यन्ततया विपरिणमय्य स्थानिना सम्बध्यत इति भावः । द्वे एवेति । नच उ इतीति रूपमपि निरनुबन्धकोकारमादाय सिद्धम् । सानुबन्धकप्रतीत्यनापत्तेः । मयः परत्वे किम्वितीत्यादौ मकारसहितनिरनुनासिकवकारघटितरूपासिद्धिप्रसङ्गाच्च ।

॥ कै० ॥ ऊँ इत्यत्र यदि शाकल्यस्येति नापेक्ष्यते तदा प्रगृह्यस्योञो नित्यमादेशः स्यात् । ततश्च विति ऊँ इति एते

॥ भा० ॥ तत ऊँ । उञ ऊँ इत्ययमादेशो भवति शाकल्यस्याऽऽचार्यस्य
मतेन । दीर्घोऽनुनासिकः प्रगृह्यसंज्ञकश्च ऊँ इति । किमर्थो योगविभागः ॥

॥ कै० ॥ द्वे एव रूपे स्याताम् । तस्माच्छाकल्यग्रहणानुवृत्त्या आदेशविकल्पे सति त्रीणि रूपाणि सिध्यन्ति ॥

॥ वि० ॥ वस्तुतस्तु उञ इत्यस्यात्रानुवृत्तस्यार्थाधिकारादप्रगृह्यपरतैव । प्रगृह्यमितिचादेशविशेषणमेव तथैव भाष्यस्वरसादिति ऊँ इति उ इति च रूपे स्यातां नतु वितीति तदर्थं विकल्पानुवृत्तिः । ऊँ इति दीर्घोच्चारणात् प्रगृह्यपदस्यात्र सम्बन्ध इति सर्वमवदातम् । किमर्थो योगविभाग इति । प्रगृह्यत्वादेशयोः शाकल्यमते एव प्राप्त्या एकप्रयोग एव प्रवृत्तिः स्याद् एवञ्च ऊँ इति वितीति च रूपे ते चैकयोगेऽपि सिध्यत इति प्रश्नः । एवञ्चैकयोगे वितीति न सिध्यतीति प्रागुक्तकैयटग्रन्थ एवेति बोध्यम् ॥

॥ वि॰ ॥ शाकल्येति । एवञ्च योगविभागसामर्थ्याच्छाकल्यानुवृत्तिसामर्थ्याच्च तन्न यथाश्रुतं किन्तु विकल्पमात्रतात्पर्यकमिति विकल्पद्वयेन सकलेष्टसिद्धिरिति भावः । एवञ्च शाकल्यमत एव विकल्पः फलितस्तदाह । भाष्ये शाकल्यस्य विभाषेति । शाकल्यमते ऊँआदेशविकल्पे यत् फलति तद्दर्शयति । प्रगृह्यसंज्ञाऽऽदेशश्चेति । तन्मते पर्य्यायेणोभयं सिध्यतीत्यर्थः । ननु प्रगृह्यमित्यस्य प्रथमान्तस्य कथमुञ इत्यनेन षष्ठ्यन्तेनान्वय इत्यत आह । यद्यपीति । फलरूपतयेति । फलं संज्ञाया बोध्यतया संज्ञिनः । तेन च तद्बोधकं पदं लक्ष्यते । तद्रूपतया । तत्समानविभक्तिकतयेत्यर्थः । द्विव-

॥ कै॰ ॥ ऊँ वा शाकल्यस्येति । शाकल्यस्य श्रुतेरेव फलं वाग्रहणेन प्रतिपादयति । एतदेव व्याचष्टे । शाकल्यस्य विभाषा यथा स्यादिति । प्रगृह्यसंज्ञाऽऽदेशश्च । तत्र यद्यपि पूर्वसूत्रे फलरूपतया निर्द्देशात् प्रदेशेष्विव प्रगृह्यशब्दो

॥ भा॰ ॥ ऊँ वा शाकल्यस्य । शाकल्यस्याऽऽचार्यस्य मतेन ऊँ विभाषा यथा स्यात् । ऊँ इति उ इति । अन्येषामाचार्य्याणां मतेन विति ॥ ❁ ॥

॥ कै॰ ॥ द्विवचनाद्यभिधेयः । तथापीहोञ इति षष्ठीनिर्द्देशात् स्वरूपपदार्थकः सम्पद्यते ॥ ❁ ॥

॥ वि॰ ॥ चनाद्यभिधेय इति बहुव्रीहिः । प्रगृह्यशब्दवदभिन्नं द्विवचनादीति बोधः । प्रगृह्यशब्दवत्त्वेन च द्विवचनादि प्रगृह्यपदाभिधेयमिति बोध्यम् । स्वरूपपदार्थक इति । उञो वाचकं प्रगृह्यपदमित्यर्थादिति भावः । वस्तुतः पूर्वत्रापि शब्दपर एव शब्दार्थयोरभेदात् सामानाधिकरण्यं पटः शुक्ल इतिवत् । प्रकृते तु पटस्य शुक्ल इत्यत्रेवोक्तरीत्या वैयधिकरण्येनान्वय इति न कश्चिद्दोषः । केचित्तु प्रदेशे वृद्धिपदाभिन्ना आदैच इति उपस्थितिः । संज्ञावाक्ये तु तथा शाब्दबोधः । द्विवचनाद्यभिधेय इत्यस्य द्विवचनादिविशेष्यकबोधजनक इत्यर्थः । षष्ठीसमभिव्याहारे तु विशेष्यतया स्वरूपपदार्थक इति कैयटं योजयन्ति ॥ ❁ ॥



॥ वि॰ ॥ ईदूतौ च । ईकारोकारात्मकसप्तम्या असम्भवं मत्वाह । सप्तमीसहेत्यादि । तात्पर्यानुपपत्त्या च लक्षणेति भावः । सप्तम्यां वेति । सप्तमीति पदं लुप्तसप्तमीकं व्याख्यास्यत इति भावः । जघन्यवृत्तिकल्पनापेक्षयेदं न्याय्यमिति तात्पर्य्यम् । लुप्तायामपीति । न लुमतेतिनिषेधस्तु अनित्यत्वान्न सप्तम्यां परत इत्यर्थेऽपीति भावः । ननु प्रत्ययग्रहणेन तदन्तविधौ ईकाराद्यन्तं यत्सप्तम्यन्तमित्यर्थे प्रत्ययलक्षणेन सिद्धं सोमो गौरीति

॥ कै॰ ॥ ईदूतौ च सप्तम्यर्थे । ईदूतौ सप्तमीत्येवेति । सप्तमीसहचरितं यदीदूदन्तं सप्तम्यां वा परतस्तत् प्रगृह्यसंज्ञं भवतीत्येवं प्रत्ययलक्षणेन लुप्तायामपि सप्तम्यां सोमो गौरी अधिश्रित इत्यादौ भविष्यति प्रगृह्यसंज्ञेति प्रश्नः । लुप्त इति । संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिप्रतिषेधादसत्यर्थग्रहणे सप्तम्या एव संज्ञिनीत्वादसत्याश्च कार्याभावात् प्रत्यय-

॥ भा॰ ॥ ईदूतौ च सप्तम्यर्थे । इदूतौ सप्तमीत्येव । ईदूतौ सप्तमीत्येव सिद्धं नार्थोऽर्थग्रहणेन । लुप्तेऽर्थग्रहणाद्भवेत् । लुप्तायां सप्तम्यां प्रगृह्यसंज्ञा न प्राप्नोति । क्व । सोमो गौरी अधिश्रितः । इष्यते चात्रापि स्यादिति तच्चान्तरेण यत्नं न सिध्यतीत्येवमर्थमर्थग्रहणम् ॥

॥ कै॰ ॥ निमित्तं यत्रान्यस्य कार्य्यं विधीयते तत्रैव प्रत्ययलक्षणसद्भावाद् गौरी इत्यत्राप्रसङ्गादर्थग्रहणं कृतम् । अर्थग्रहणे सति अर्थनिमित्ता संज्ञेयं भवति न प्रत्ययश्रवणनिमित्तेति लोपेऽपि सिध्यति ॥

॥ वि॰ ॥ तत्राह । संज्ञेति । सप्तम्या एवेति । सप्तमीपदस्य लुप्तसप्तम्यन्तत्वे सप्तमीसहचरितलाक्षणिकत्वे च न मानमिति भावः । यद्यपीकारोकारसप्तम्योरसम्भव एव तत्र मानं तथापि वचनादित्यादिना तद्वक्ष्यतीत्यत्र तात्पर्यम् । असत्याश्च कार्य्याभावादिति । प्रगृह्यसंज्ञाकार्य्यं हि सन्धिकार्य्याभावफलकप्रकृतिभावः । लुप्ते षष्ठ्यर्थप्रसङ्गस्य निरूपयितुमशक्यत्वेन सन्धिकार्य्याप्राप्त्या प्रकृतिभावानुपयोगात् तत्कार्य्याभाव इत्यर्थः । तदेवाह । प्रत्ययनिमित्तमित्यादिना ॥

॥ वि० ॥ पूर्वसवर्ण इति । स च सुपां सुलुगित्यनेन । एकादेशमिति । परत्वादार्णादाङ्गस्य बलीयस्त्वाच्चेति भावः । एवञ्च ङ्यन्ते गौरीत्यादौ लुक आवश्यकत्वेन तदर्थमर्थग्रहणमिति तात्पर्यम् । सर्वत्रैवेति । ननु यथोत्यादिभ्यो ङौ दीर्घे तनू इत्यादौ ओःसुपोः पूर्वसवर्णादेशे च ईदूदन्तसप्तमीसम्भवात् कथमेतदिति चेन्न । ईदूत्सप्तमी प्रगृह्यम् । अदसः । एत्र द्विवचनमित्येव सिद्धे स्थलान्तरे ईदूतौ सप्तमीति गुरुवचनसामर्थ्येन सप्तमी-

॥ कै० ॥ पूर्वसवर्ण इति । सति च पूर्वसवर्णे एकादेशे चादिवद्भावाद्भवतीकारः सप्तमीति सिद्धा संज्ञा । आडामभाव इति । एकादेशं बाधित्वाऽऽडामौ स्याताम् । वचनादिति । सर्वत्रैव सप्तमी लुप्यत इति वचनसामर्थ्यात् सप्तमीशब्देन सप्तमीसहचरितस्य ग्रहणान्मुख्यकल्पनाऽसम्भवे गौणी कल्पना गृह्यते इत्याश्रयणात् सिध्यतीति भावः । मुख्यकल्पना

॥ भा० ॥ नात्र सप्तमी लुप्यते। किन्तर्हि। पूर्वसवर्णोऽत्र भवति। पूर्वस्य चेत् सवर्णोऽसावाडाम्भावः प्रसज्यते । यदि पूर्वसवर्ण आट् आम्भावश्च प्राप्नोति । एवन्तर्हि आहायमीदूतौ सप्तमीति । नचास्ति सप्तमी ईदूतौ । तत्र वचनाद्भविष्यति । वचनाद्यत्र दीर्घत्वम् । नेदं वचनाल्लभ्यम् । अस्ति ह्यन्यदेतस्य वचने प्रयोजनम् । किम् । यत्र सप्तम्या दीर्घत्वमुच्यते । दृतिं न शुष्कं सरसी शयानमिति ॥

॥ कै० ॥ सम्भवत्येवेत्याह । यत्रेति । सरसीत्यत्र सरःशब्दात् परस्य ङिशब्दस्येयाडियाजीकाराणामुपसंख्यानमितीकारे कृते भवतीकारः सप्तमीति तत्रैव स्यान्न तु गौरीत्यत्रेति भावः ॥

॥ वि० ॥ सहचरितग्रहणमिति भाष्याशयान्न दोष इति केचित् । तन्न । न चास्ति सप्तमी इदूताविति भाष्यासङ्गतेः । तस्मादेतद्भाष्यप्रामाण्यात् तेषामनभिधानमिति तत्त्वम् । सरःशब्दादिति । सरस्शब्दस्यासुन्नन्तत्वेनाद्युदात्तत्वेऽपि स्वरव्यत्ययाद्दृतिञ्च शुष्कं सरसी शयानमित्यत्र सरसीत्यस्यान्तोदात्तत्वं बोध्यम् ॥



॥ वि० ॥ निराकर्तुः संशयार्थो यदिशब्दोऽनुपपन्न इत्यत आह । सम्भावनायामिति । शास्त्राणि चेत् प्रमाणं स्युरितिवदसन्दिग्धे सन्दिग्धवद् वचनमिति भावः । सरसीशब्दो यदि ङीषन्तस्तदाऽन्तोदात्तत्वं न्यायसिद्धम् । असुन उगन्तत्वाद् ङीबन्तत्वे तु स्वरव्यत्ययादेव

॥ कै० ॥ सरसी यदीति । यदीति सम्भावनायाम् । तस्मात् स्थितमेतद्वचनात् सर्वत्र लुप्तायामपि सप्तम्यां भविष्यतीति नार्थोऽर्थग्रहणेन । ज्ञापकमिति । ईदूदेदित्यत्र तृतीयचतुर्थपञ्चयोरित्यर्थः । इह प्रगृह्यसंज्ञाप्रकरणे यदि प्रत्यय-

॥ भा० ॥ सति प्रयोजने इह न प्राप्नोति । सोमो गौरी अधिश्रित इति । तत्रापि सरसी यदि । तत्रापि सिद्धम् । कथम् । यदि सरसीशब्दस्य प्रवृत्तिरस्ति । अस्ति च लोके सरसीशब्दस्य प्रवृत्तिः । कथम् । दक्षिणापथे हि महान्ति सरांसि सरस्य इत्युच्यते । ज्ञापकं स्यात् तदन्तत्वे । एवन्तर्हि ज्ञापयत्याचार्यो न प्रगृह्यसंज्ञायां प्रत्ययलक्षणं भवतीति । किमेतस्य ज्ञापने प्रयोजनम् । कुमार्योरगारं कुमार्यगारम् । वध्वोरगारं वध्वगारम् । प्रत्ययलक्षणेन प्रगृह्यसंज्ञा न भवति ॥

॥ कै० ॥ लक्षणं स्यात् तदेदूतौ च सप्तमीत्येव सप्तमीसहचरितं सप्तम्यां वा परतो यदीदूदन्तं तत् प्रगृह्यसंज्ञमिति प्रत्ययलक्षणेन लुप्तायामपि सप्तम्यां संज्ञा भविष्यतीति किमर्थग्रहणेन तत् क्रियमाणं प्रत्ययलक्षणाभावं सूचयति ॥

॥ वि० ॥ तत्त्वम् । एवञ्च ततो लुकैवोक्तप्रयोगसिद्धे इयाडिति वार्तिके ईकारादेशो न विधेय इति भाष्याशयः । तस्मात् पूर्वोक्तरीत्या वचनसामर्थ्याल्लुप्तेऽपि सिद्धिः । सप्तमीसहचरितत्वञ्च प्रत्ययलक्षणेन बोध्यम् ॥

॥ वि० ॥ संज्ञायामितीति । अत एवाग्रे भाष्ये जहत्स्वार्था वृत्तिरिति संगच्छते । नच वाक्येन संज्ञाऽनवगमादस्य नित्यसमासत्वे वाप्या-मश्व इति विग्रहो नोचित इति वाच्यम् । वाक्यात् संज्ञिनोऽनवगमेन नित्यसमासत्वेऽपि न तद्विधायके वाग्रहणासम्बन्ध इति समासा-घटकीभूतानां तद्विषये विग्रहाभावे मानाभावात् । ध्वनितं चेदं द्वितीयतृतीयेतिसूत्रे भाष्ये इति तत्रैव निरूपयिष्यते । सप्तमीसहचरितमिति । प्रत्ययल-

॥ कै० ॥ संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधेरभावात् तदन्तपक्षस्तत्र नैव स्थित इति ज्ञापनफलाभावादाह । मा वेति । वाप्यश्वो नद्यातिरिति । संज्ञायामिति समासे कृते सप्तमीसहचरितमीकारान्तं पूर्वपदमिति स्यात् प्रगृह्यसंज्ञेति तदर्थम-

॥ भा० ॥ मा वा पूर्वपदस्य भूत् । अथवा पूर्वपदस्य माभूदित्येवमर्थमर्थग्रहणम् ।
वाप्यामश्वो वाप्यश्वः । नद्यामातिर्नद्यातिः । अथ क्रियमाणेऽप्यर्थग्रहणे कस्मादेवात्र न
भवति । जहत्स्वार्था वृत्तिरिति । अथाजहत्स्वार्थायां वृत्तौ दोष एव ॥

॥ कै० ॥ र्थग्रहणम् । अथेति । अस्त्येवात्र सप्तम्यर्थ इति प्रश्नः । जहत्स्वार्थेति । समासस्यैवार्थवत्त्वात् पूर्वोत्तर-पदयोर्वर्णवदानर्थक्यात् सप्तम्यर्थो नास्तीत्यर्थः ॥

॥ वि० ॥ चणेनेति भावः । वर्णव इानर्थक्यादिति । संज्ञायामिति समासेऽस्य रूढिशब्दत्वादवयवार्थाप्रतीतेरिति भावः । वाप्यामश्व इति विग्रहप्रदर्शनं तु रथन्तरादिपदानां रथेन तरतीत्यादिविग्रहप्रदर्शनवद्बोध्यम् । अत एव जहत्स्वार्था तु तत्रैव यत्र रूढिर्विरोधिनीति हृद्युक्तम् । भाष्येऽथाजहत्स्वार्थायामिति । सुप्सुपेति समासेन केवलयौगिके इत्यर्थः ॥



॥ वि० ॥ प्रधानार्थमपीति । अवयवपदशक्तिसमुदायशक्तिसहकारेण गृहीतशक्तिकादपीपदात् स्वार्थविशिष्टप्रधानार्थस्यैवोपस्थितेरित्यर्थः । तत्र समुदायशक्तिः संसर्गांश एव । तदाह । स्वार्थसंसृष्टस्येत्यादि । विवेकानवगमात् । पृथगनुपस्थितेरित्यर्थः । पांसूदकं मिलितं यथा संसृ-ष्टमेव ज्ञानविषयो नतु पृथक् तथा समासात् संसृष्ट एवोपस्थितिविषयो नतु पृथगित्यर्थः । यावानित्यस्य विवरणं केवल इति । कैवल्यं विवृणोति । असंसृष्ट उद्भूत इति । असंसृष्टत्वं विशेषणाविशिष्टत्वम् । उद्भूतत्वमितराविशेषणत्वमिति बोध्यम् । समुदायरूपोऽर्थः पूर्वपदार्थविशिष्ट उत्तरपदार्थोऽभिधीयतेऽभि-

॥ कै० ॥ समुदायार्थ इति । वृत्तौ हि पूर्वपदं स्वार्थमप्यभिधत्ते प्रधानार्थमपीति स्वार्थसंसृष्टस्य प्रधानार्थस्याभिधा-नात् पांसूदकवत् स्वार्थस्य विवेकानवगमात् समुदायार्थो वृत्तौ संसृष्टरूपेणैवाभिधीयते । सप्तम्यर्थग्रहणेन यावानर्थो

॥ भा० ॥ अजहत्स्वार्थायां च न दोषः । समुदायार्थोऽभिधीयते । इदूतौ सप्तमीत्येव
लुप्तेऽर्थग्रहणाद्भवेत् । पूर्वस्य चेत् सवर्णोऽसावाडाम्भावः प्रसज्यते ॥ १ ॥ वचनाद्यत्र
दीर्घत्वं तत्रापि सरसी यदि । ज्ञापकं स्यात् तदन्तत्वे मा वा पूर्वपदस्य भूत् ॥ २ ॥ ❁ ॥

॥ कै० ॥ वाक्ये सप्तम्यन्तेनाभिधीयते केवलोऽसंसृष्ट उद्भूतस्तस्यैवेह ग्रहणमिति समासे न भवति प्रगृह्यसंज्ञा ॥ ❁ ॥

॥ वि० ॥ धाभिः परस्परसहकारेणोपस्थाप्यत इति भाष्यार्थः । अर्थग्रहणसामर्थ्यात् सप्तम्यर्थमात्रपर्यवसन्नार्थग्रहणमिति भावः । गौरीत्यादौ त्वस्त्येव गौर्यादिपदानां सप्तम्यर्थपर्यवसन्नत्वम् । समभिव्याहृतपदान्तरार्थानन्वयित्वेनोपस्थितिविषयत्वस्यैव सप्तम्यर्थपर्यवसन्नत्वरूपत्वात् । नचार्थग्रहणेऽपि गौरीत्या-द्यसिद्धिः सप्तम्यर्थे ईकाराद्यभावात् ईदाद्यन्तमित्यर्थस्तु दुर्लभो विशेष्याभावादिति वाच्यम् । सामर्थ्याच्छब्दरूपं विशेष्यमादाय तदन्तविधिरिति भावात् ॥ ❁ ॥

॥ वि० ॥ दाधा घ्व । दाधाशब्दयोरिति । प्रयोगस्थदाधारूपाणामेव सूत्रेऽनुकरणादिति भावः । दोदेङ्धेटामेजन्तानामिति । एषां चात्र प्रकृतिवदनुकरणं भवतीतिन्यायादर्शितीति प्रसज्यप्रतिषेधाश्रयणाच्चाऽऽत्त्वमिति भावः । अत्र च पक्षे लक्षणप्रतिपदोक्तपरिभाषा निरनु-

॥ कै० ॥ दाधा घ्वदाप् । दाधाशब्दयोर्घुसंज्ञा विधीयमाना रूपान्तरयुक्तानां दोदेङ्धेटां न प्राप्नोतीत्याह । घुसंज्ञा-
यामिति । किं प्रयोजनमिति । दोदेङ्धेटामेजन्तानामनुकरणानि

॥ भा० ॥ दाधा घ्वदाप् । घुसंज्ञायां प्रकृतिग्रहणं शिदर्थम् । घुसंज्ञायां प्रकृति-
ग्रहणं कर्त्तव्यम् । दाधाप्रकृतयो घुसंज्ञा भवन्तीति वक्तव्यम् । किं प्रयोजनम् ॥

॥ कै० ॥ व्यवस्थाप्याऽऽत्त्वे कृते ददातिदधातियच्छत्यनुकरणानां चैकशेषे कृते द्वन्द्वनिर्देशात् सिद्धा दोदेङ्धेटामपि
घुसंज्ञा कृतात्त्वानां चैषां स्थानिवद्भावेन सिद्धेति प्रश्नः ॥

॥ वि० ॥ बन्धकपरिभाषादीनां न प्रवृत्तिः । सर्वेषां स्वरूपेणैवानुकृतत्वात् । दारयतिधारयत्योश्च नातिप्रसङ्गः । तयोरनुकरणे आत्त्वासम्भवेनेह ह घृङ्त्यन-
योरनुपात्तत्वात् । दीङोऽपि नेह ग्रहणम् । एज्विषयाभावेन तदनुकरणे आत्त्वासम्भवादिति बोध्यम् ॥



॥ वि० ॥ नन्वात्त्वभूतानामित्यस्य जातात्त्वानामित्यर्थे दाणादीनां संज्ञा न स्याद् निष्ठायाः पूर्वनिपातश्च स्यादत आह । भवतेरिति ।
प्राप्तात्त्वानामित्यर्थः । प्रमाणाभावादिति । प्रयोगार्थत्वाच्छास्त्रस्योपस्थितप्रयोगस्यानुकरणे सम्भवति अनुपस्थितैजन्तानुकरणे प्रमाणाभाव
इत्यर्थः । गौरवाच्चेति । दीङ्स्तृजादावात्त्वे कृते प्रणिदातेत्यत्र नेर्गदनेति णत्वानापत्तेश्चेत्यपि बोध्यम् ।

॥ कै० ॥ आत्त्वभूतानामिति । भवतेः प्राप्त्यर्थादाधृषाद्वेति विभाषितणिचः कर्त्तरि कर्म्मणि वा क्तप्रत्ययः । तत्र आत्त्वं
भूता आत्त्वेन वा भूता आकारान्ता इत्यर्थः । न लक्षणेन कृतात्त्वा इति विज्ञेयम् । अस्याप्ययमभिप्रायः । एजन्तानुकरणत्वे

॥ भा० ॥ आत्त्वभूतानामियं संज्ञा क्रियते । सा आत्त्वभूतानामेव स्यात् । अनात्त्वभूतानां
न स्यात् । ननु च भूयिष्ठानि घुसंज्ञाकार्य्याणि आर्द्धधातुके तत्र चैत आत्त्वभूता दृश्यन्ते ॥

॥ कै० ॥ प्रमाणाभावात् प्रक्रियागौरवाच्च प्रयोग एव ये आकारान्ताः प्रयुज्यन्ते तदनुकरणानामयमेकशेषनिर्देशः ।
सामान्यानुकरणं वा दा इति धा इति पृथक्पदं निर्द्दिष्टमिति ॥

॥ वि० ॥ एकशेषस्य सर्वदाधारूपाणामानन्त्येन ज्ञानासम्भवाद्दुर्ज्ञेयत्वेऽप्याह । सामान्येति । ननु समाहारद्वन्द्वे दाधमिति स्यादन्यत्र दाधाविति स्यादत
आह । पृथक्पदमिति । सो हत्वे यत्वे लोपे च निर्विसर्गं साधु । विकृतानां दो दद् घोरिति सूत्रे घेत्त्विदन्त्यर्थदाग्रहणपर्यालोचनया घुत्वं सुलभमिति मत्वा
वार्तिके शिदर्थमित्युक्तम् । भारद्वाजीयैस्तु तावद्विवेकासमर्थान् प्रति विकृतार्थमित्यप्युक्तम् ॥

॥ वि० ॥ प्रणिदातेत्यादौ लाक्षणिकत्वं स्फुटयति । द्यतेर्दीङो वेति । प्रकृतय इत्यस्य सापेक्षत्वादाह । ईत्त्वादेरिति ॥

॥ कै० ॥ प्रणिदयत इति । घुसंज्ञायां सत्यां नेर्गदेतिणत्वं भवति । प्रणिदातेति द्यतेर्दीङो वा रूपं प्रणिधातेतिधेटः । लक्षणेति । लाक्षणिके हि लक्षणानुसन्धानद्वारेण प्रतिपत्तिर्बहिरङ्गा प्रतिपदोक्ते त्वन्तरङ्गा । कथमिति । दाधाप्रकृतय इति

॥ भा० ॥ शिदर्थम् । शिदर्थं प्रकृतिग्रहणं कर्त्तव्यम् । शित्याद्त्वं प्रतिषिध्यते तदर्थम् ! प्रणिदयते प्रणिद्यति प्रणिधयतीति । भारद्वाजीयाः पठन्ति । घुसंज्ञायां प्रकृतिग्रहणं शिद्विकृतार्थम् । घुसंज्ञायां प्रकृतिग्रहणं कर्त्तव्यम् । किं प्रयोजनम् । शिदर्थं विकृतार्थं च । शित्युदाहृतम् । विकृतार्थं खल्वपि । प्रणिदाता प्रणिधाता । किं पुनः कारणं न सिध्यति । लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति प्रतिपदं ये आत्त्वभूतास्तेषामेव स्यात् । लक्षणेन ये आत्त्वभूतास्तेषां न स्यात् । अथ क्रियमाणेऽपि प्रकृतिग्रहणे कथमिदं विज्ञायते दाधाः प्रकृतय इति आहोस्विद्दाधां प्रकृतय इति ॥

॥ कै० ॥ षष्ठीसमासः कर्म्मधारयो वा उभयथाप्यव्याप्तिरिति प्रश्नः । दाधाः प्रकृतय इति । दीयत इत्यादावीत्त्वादेः ॥



॥ वि० ॥ दाणिति । आत्त्वभूता इत्यनेन उपदेशे आकारान्ता एवोच्यन्ते । तद्भिलक्षणास्त्वनात्त्वभूता इति भावः । प्रत्यासत्त्येति । एवञ्चैषामिति नापूर्वमिति भावः । एतत्सामर्थ्यादेव लाक्षणिकानामप्यनुकरणमनुमास्यते इति तात्पर्य्यम् । नन्वेकवाक्यत्वे दारयत्याद्येकदेशानर्थ-

॥ कै० ॥ आत्त्वभूतानामिति । दाण्दाञ्धाञाम् । प्रकृतयश्चैषामिति । प्रत्यासत्त्यैषामिति लभ्यते । अर्थ इतीति ।

॥ भा० ॥ किञ्चातः । यदि विज्ञायते दाधाः प्रकृतय इति स एव दोषः । आत्त्वभूतानामेव स्यात् । अनात्त्वभूतानां न स्यात् । अथ विज्ञायते दाधां प्रकृतय इति । अनात्त्वभूतानामेव स्यादात्त्वभूतानां न स्यात् । एवं तर्हि नैवं विज्ञायते दाधाः प्रकृतय इति नापि दाधां प्रकृतय इति । कथं तर्हि । दाधा घुसंज्ञा भवन्ति प्रकृतयश्चैषामिति । तत्तर्हि प्रकृतिग्रहणं कर्त्तव्यम् । न कर्त्तव्यम् । इदं प्रकृतमर्थग्रहणमनुवर्त्तते । क्व प्रकृतम् । ईदूतौ च सप्तम्यर्थे इति । ततो वक्ष्यामि दाधाघ्वदाप् । अर्थ इति । नैवं शक्यम् । ददातिना समानार्थान् रातिरासतिदासतिमंहतिप्रीणातिप्रभृतीनाहुः । तेषामपि घुसंज्ञा प्राप्नोति ॥

॥ कै० ॥ एतद्द्वितीयं वाक्यम् । सन्निधानाच्च दाधामर्थे यो वर्त्तते स घुसंज्ञ इति प्रकृतीनामपि सिध्यति ॥

॥ वि० ॥ कथ्याद्यन्त्यर्थमेव तत् स्यान्न त्वन्यरूपप्रापकमत आह । एतद्द्वितीयमिति । अर्थवत्परिभाषयैवानर्थकव्यावृत्तौ सिद्धायामर्थग्रहणानुवृत्तिर्वाक्यभेदार्थैवेति भावः । भाष्ये प्रीणातीति । यथा पितृभ्यः प्रीणातीत्यादौ ॥

॥ वि० ॥ ननु तत्रोभयान्वयाय प्रकृतिग्रहणादये कर्तव्येऽत्रैव करणं युक्तमत आह । तदुभाभ्यामिति । घुप्रकृतिमाशब्दानां द्वन्द्वे सन्निधानाविशेषादुभयप्रकृतिर्गृह्यत इति ।

॥ कै० ॥ तत्पुरस्तादिति । नेर्गदेति सूत्रे घुमाशब्दयोर्मध्ये प्रकृतिग्रहणं कर्त्तव्यं तदुभाभ्यामभिसम्भन्त्स्यते । प्रनि-

॥ भा० ॥ तस्मान्नैवं शक्यम् । नचेदेवं प्रकृतिग्रहणं कर्त्तव्यमेव । न कर्त्तव्यम । णिदर्थेन तावन्नार्थः प्रकृतिग्रहणेन । अवश्यं तत्र मार्थं प्रकृतिग्रहणं कर्त्तव्यम् । प्रणिमयते प्रणयमयतेत्येवमर्थम् । तत् पुरस्तादपकृष्यते घुप्रकृतौ माप्रकृतौ चेति । यदि प्रकृतिग्रहणं क्रियते प्रनिमिनोति प्रनिमीनाति । अत्रापि प्राप्नोति । अथाक्रियमाणेऽपि प्रकृतिग्रहणे इह कस्मान्न भवति । प्रनिमाता प्रनिमातुं प्रनिमातव्यमिति । आकारान्तस्य ङितो ग्रहणं विज्ञायते । यथैव तर्हि अक्रियमाणे प्रकृतिग्रहणे आकारान्तस्य ङितो ग्रहणं विज्ञायते ॥

॥ कै० ॥ मिनोतीति । मीनातिमिनोतिदीङां ल्यपि चेत्यात्त्वविधानाद्भवति माप्रकृतित्वमनयोः ॥

॥ वि० ॥ प्रणिदयते प्रणिमयत इति उभयत्रापि णत्वं सिध्यतीत्यर्थः । आत्त्वविधानादिति । एज्विषये इकारान्तानामात्त्वविधानादिति भावः ॥



॥ वि० ॥ भाष्ये एवं क्रियमाणेऽपीति । णत्वविधौ माङ्स्यतीति निर्देष्टव्यमिति भावः । यद्यपि लक्षणप्रतिपदोक्तपरिभाषया मीनातिमिनोत्यादेशानां ग्रहणाभावो वक्तुं शक्यस्तथापि मेङोऽग्रहणवारणाय गामादाग्रहणेष्वविशेष इत्युक्तेर्माग्रहणे तदप्रवृत्तिर्मा माने इत्यस्य योगे णत्ववारणाय च ङित्पाठ आवश्यक इति तात्पर्यम् । सामान्येति । एतत्सूत्रगृहीतदाधापेक्षया परिभाषागृहीतगाद्यपेक्षया परिभाषाद्वयापेक्षया चेत्यर्थः ।

॥ कै० ॥ गामादाग्रहणेष्विति । अस्यचार्थस्य दैपः पित्त्वमदाविति पित्प्रतिषेधे सामान्यग्रहणार्थं लिङ्गम् । अन्यथाऽस्य लाक्षणिकत्वादेव ग्रहणं न भविष्यतीति किं प्रतिषेधार्थेन पित्त्वेन । सामान्यापेक्षया च निरनुबन्धकग्रहण इति लक्षणप्रतिपदोक्तयोरिति च परिभाषाद्वयानुपस्थानमिह ज्ञापयतीति धेटोऽपि सिध्यति । दो दद् घोरित्यत्र

॥ भा० ॥ एवं क्रियमाणेऽपि प्रकृतिग्रहणे आकारान्तस्य ङितो ग्रहणं विज्ञास्यते । विकृतार्थेन चापि नार्थः । दोष एवैतस्याः परिभाषायाः । लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति । गामादाग्रहणेष्वविशेष इति ॥

॥ कै० ॥ या द इत्येव धेटो निवृत्त्यर्थं सद् धेटो घुसंज्ञां ज्ञापयति न हि दधाति निवृत्त्यर्थं द इत्येतत् । तस्य दधातेर्हिरिति ह्यादेशविधानाद्ङ्गावाऽप्रसङ्गात् ॥

॥ वि० ॥ निरनुबन्धकेति । स च दोऽवखण्डन इत्ययम् । धेटोऽपीति । अन्यथाऽस्य लाक्षणिकत्वाद् ग्रहणाऽप्रसक्तिः । यच्च सानुबन्धकत्वादिति । तन्न । निरनुबन्धकस्य धा इत्यस्याप्रसिद्धत्वात् । ये तु दाविषयमेव तज्ज्ञापकं मन्यन्ते तन्मते धेडंशे ज्ञापकान्तरमाह । दो ददिति ॥

॥ वि० ॥ समानत्वं नार्थत इत्याह । श्रुतीनामिति । तौ चेति । एतेनानर्थकत्वात् तयोर्घुत्वं नेत्यपास्तम् । पश्चादिति । प्रणिदाप-

॥ कै० ॥ समानशब्दानामिति । समानश्रुतीनामित्यर्थः । प्रनिदारयति प्रनिधारयतीति । दृङ्धृङो-र्णिचि दृद्धावाकारे कृते दाधाशब्दौ सम्पद्येते तौ चार्थवन्तौ पश्चात्तु रपरत्वं क्रियमाणमागमभूतत्वादन्यत्वं न करोतीति प्राप्तिः । अर्थवद्ग्रहणादिति । अर्थवद्ग्रहणे नानर्थकस्येत्यस्य स्वं रूपमित्यनेन ज्ञापितत्वात् । उरण्

॥ भा० ॥ समानशब्दप्रतिषेधः । समानशब्दानां प्रतिषेधो वक्तव्यः । प्रनिदारयति । प्रनिधारयति । दाधा घुसंज्ञा भवन्तीति घुसंज्ञा प्राप्नोति । समानशब्दाप्रतिषेधोऽर्थवद्ग्रहणात् । समानशब्दानामप्रतिषेधः । अनर्थकः प्रतिषेधोऽप्रतिषेधः । घुसंज्ञा कस्मान्न भवति । अर्थवद्ग्रहणात् । अर्थवतोर्दाधोर्ग्रहणात् । नचैतावर्थवन्तौ ॥

॥ कै० ॥ रपर इति चाणिधीयमान एव रपरो भवतीति दृद्धिः क्रियमाणा रपरा भवतीति दार्धा-रोरेवार्थवत्त्वं न तु तदवयवयोरिति नास्ति घुसंज्ञा ॥

॥ वि० ॥ यतीत्यव पुगिवेतिभावः । आगमभूतत्वात् । आगमस्वरूपत्वात् ॥



॥ वि० ॥ अभ्युपगम्येति । अदाविति प्रतिषेधार्थेन दैपः पित्त्वेन दो ददित्यनेन च परिभाषामाचानुपस्थानज्ञापनसम्भवादिति भावः ।

॥ कै० ॥ अनपसर्गादेति । अभ्युपगम्य घुसंज्ञां दोषं परिहरति । घुसंज्ञापेक्षया यस्योपसर्गत्वं तस्मात् परस्य नेर्घौ परतो णत्वं विधीयते । अत्र दाधापेक्षया नास्ति प्रशब्दस्योपसर्गत्वं किन्तु दार्धारोरपेक्षयेत्यदोषः । इहापि तर्हीति । अत्रापि पुकि

॥ भा० ॥ अनुपसर्गाद्वा । अथवा यत्क्रियायुक्ताः प्रादयस्तं प्रति गत्युपसर्गसंज्ञा भवन्ति । नचैतौ दाधौ प्रति क्रियायोगः । यद्येवम् । इहापि तर्हि न प्राप्नोति । प्रणिदापयति प्रणिधापयतीति । अत्रापि नैतौ दाधावर्थवन्तौ नाप्येतौ दाधौ प्रति क्रियायोगः ॥

॥ कै० ॥ कृते पकारान्तोऽर्थवान् न केवलो दाशब्दः पुगन्तमेव च प्रत्युपसर्गत्वं न दाशब्दं प्रतीति प्रश्नः ॥

॥ वि० ॥ किन्त्विति । तयोरेव क्रियावाचित्वादिति भावः ॥

॥ वि० ॥ भाष्ये तद्गुणीभूत इति । यमुद्दिश्याऽऽगमो विहितः स तद्गुणीभूतः शास्त्रेण तदवयवत्वेन बोधितोऽतस्तद्ग्रहणेन तद्ग्राहकेण तद्बोधकेन गृह्यते बोध्यते आगमविशिष्ट इति परिभाषार्थस्तदाह । लब्धात्मकस्येति । तेन दाधारोर्व्याप्तिः सूचिता । अपचय इति दृष्टान्तार्थम् । अन्तरङ्गत्वादिति । इदं यथोद्देशे । कार्यकाले तु णत्वदेशा संज्ञाऽसिद्धा स्यादिति बोध्यम् । वस्तुतः कार्यकालपक्षे पूर्वं पुक्प्रवृत्तावपि दापो दाशब्देन

॥ कै० ॥ नवाऽर्थवत इति । लब्धात्मकस्य भावस्य निमित्तवशादुपचयापचयौ व्यपदेशहानिं न कुरुतः । यथा देवदत्तस्याङ्गाधिक्याङ्गच्छेदौ । इहाप्यन्तरङ्गत्वात् कृतायां दाधोर्घुसंज्ञायां पश्चादुत्पन्नः पुगागमो घुव्यपदेशं न निवर्तयति नाप्यर्थवत्त्वमित्यदोषः । अनर्थकस्याप्यागमो व्यपदेशहानिं न करोति यथा सत्यपि रेफे अकाराकारयोर्गुणवृद्धिव्यपदेशाहानिः । इह

॥ भा० ॥ नवाऽर्थवतो ह्यागमस्तद्गुणीभूतस्तद्ग्रहणेन गृह्यते यथाऽन्यच । नवा एष दोषः । किं कारणम् । अर्थवत आगमस्तद्गुणीभूतोऽर्थवद्ग्रहणेन गृह्यते । यथाऽन्यच ॥

॥ कै० ॥ त्वर्थवतो ग्रहणादर्थवत इत्युक्तम् । यदा च प्रकृत्यर्थः प्रेण विशेष्यते तदाऽयं परिहारः । गत्यर्थविशेषणत्वे तु प्रस्य दाधौ प्रत्यनुपसर्गत्वाणत्वं न भवत्येव । तद्गुणीभूत इति । प्रयोगसम्पादन उपकारक इत्यर्थः ॥

॥ वि० ॥ ग्रहणाद् घुत्वं सुलभमेवेति चिन्त्यम् । घुव्यपदेशं न निवर्तयति नाप्यर्थवत्त्वमितीति । स्वविशिष्टे तयोरानयनादिति भावः । अकाराकारयोरिति । रेफविशिष्टयोरित्यर्थः । इह त्विति । घुसंज्ञासूत्रे इत्यर्थः । अत्रेदं बोध्यम् । अङ्गावयवाकारस्य मुग्विधायकाने मुगितिसूत्रारम्भसामर्थ्येन क्वचिद्वर्णग्रहणे नास्याः प्रवृत्तिः । तेन दिदीये इत्यादौ यणादिकं न । अयमेवार्थो भाष्येऽर्थवद्ग्रहणेन ध्वन्यत इत्याहुः । प्रयोगेति । इदं चिन्त्यम् । आगमवत् प्रत्ययादेरपि प्रयोगसम्पादन उपकारकत्वेन तेषामपि प्रकृतिग्रहणेन ग्रहणापत्तिः । मूलयुक्तेस्तुल्यत्वात् । अस्य मूलयुक्तित्वाभावे तु कथनवैयर्थ्यापत्तिः । तस्माद् मदुक्तव्याख्यैव ज्यायसी ॥



॥ वि० ॥ भाष्ये यन्नित्येष्विति । वियदादिवद्वर्णप्रकृतिप्रत्ययपदवाक्यादिरूपाः सर्गाद्यकालिकोत्पत्तिमन्तः प्रलयकालिकनाशवन्तश्चेति पक्षे इति भावः । दाप्शब्द एवाऽर्थवान्न दाशब्द इति । स तु न दाशब्द इत्यर्थः । एवञ्च घुत्वाभावे तदवस्थो दोष इति भावः । श्रौतस्थानषष्ठ्यभावात् स्थानिवत्त्वस्य नैतद्विषये प्रवृत्तिरिति तात्पर्यम् ।

॥ कै० ॥ युक्तं पुनरिति । ततश्च नित्येष्वागमविरोधात् तद्द्वारेणाऽऽदेशविधानाद्दाप्शब्द एवार्थवान्न दाशब्द इति तदवस्थो दोष इति भावः । अथ युक्तमिति । तत्रापि स्थानिनमपनीयाऽऽदेशः क्रियत इत्यनित्यत्वप्रसङ्गः । यश्चोभयोर्दोषो

॥ भा० ॥ तद्यथा । अन्यत्रापि अर्थवत आगमोऽर्थवद्ग्रहणेन गृह्यते । क्वाऽन्यत्र । लविता चिकीर्षितेति । युक्तं पुनर्यन्नित्येषु नाम शब्देष्वागमशासनं स्यात् । न । नित्येषु नाम शब्देषु कूटस्थैरविचालिभिर्वर्णैर्भवितव्यमनपायोपजनविकारिभिः । आगमश्च नामाऽपूर्वः शब्दोपजनः । अथ युक्तं यन्नित्येषु शब्देष्वादेशाः स्युः । बाढं युक्तम् । शब्दान्तरैरिह भवितव्यम् । तत्र शब्दान्तराच्छब्दान्तरस्य प्रतिपत्तिर्युक्ता ॥

॥ कै० ॥ न तमेकश्चोद्यः । बाढमिति । प्रसङ्गवाची स्थानशब्दो न निवृत्तिवाची ततश्च सन्त एव प्रयोगे नित्याः शब्दा बुद्ध्युन्मज्जननिमज्जनद्वारेण प्रतिपाद्यन्ते । आगमस्त्ववस्थितस्याऽपूर्वः क्रियमाणो नित्यत्वं विरुणद्धि ॥

॥ वि० ॥ कूटस्थत्वं व्याचष्टे भाष्येऽविचालिभिरिति । तद्विवरणमनपायेत्यादि । द्वन्द्वान्मत्वर्थीये पश्चान्नञ्समासः । नन्वेतावताऽपि स्वपक्षास्थापनाद्वैतखण्डकत्वमस्य स्यादत आह । यश्चेति । प्रसङ्गवाचीति । षष्ठीस्थान इत्यत्रत्यः । प्रसङ्गश्च बुद्धेरिति भावः । सन्त एव प्रयोगे नित्या इति । आदेशरूपा इत्यर्थः । बुद्ध्युन्मज्जननिमज्जने यथाक्रममादेशस्य स्थानिनश्च । भाष्ये शब्दान्तरैरिति । तद्बुद्धौ प्राप्तायामित्यर्थः ॥

॥ वि० ॥ आदेशास्त्वर्हीमे इति । इमे आगमत्वेन व्यवह्रियमाणा अपि तथा विधीयमाना अपि आदेशास्तत्सदृशा भविष्यन्तीत्यर्थः । आद्यन्तावित्याद्येकवाक्यतयाऽऽर्द्धधातुकस्याऽऽद्यावयव इडित्यर्थे हत्ते नित्यत्वानुपपत्तिमूलकवाक्यान्तरकल्पनेन केवलतव्यबुद्धौ प्रसक्तायाम् इकारादिः साधुरिति बोधः । तेनात्रापि बुद्धिविपरिणाममात्रस्यैव सत्त्वेन न नित्यत्वहानिरिति भावः । यदागमा इति न्यायस्य चात्रापि पक्षे सत्त्वात् प्रणिदापयतीत्यादौ न दोषः । ये त्वत्र पक्षे आगमत्वं नास्त्येवेति वदन्ति ते मान्याः । अनागमकानामित्यादिव्यवहारासङ्गतेः । निरवयवकबुद्धिनिमज्जनसावयवकबुद्ध्युन्मज्जनेनाऽऽगमत्वव्यवहारस्यापि निर्बाधत्वात् । तत् कथमिति प्रश्ने तुल्यन्यायत्वादाह । सर्वे सर्वपदेति । यथा एङरित्यादौ अवयवयोः श्रौतस्थान्यादेशभावेऽपि नित्यत्वानु-

॥ कै० ॥ आदेशास्त्वर्हीमे इति । इड् भवतीत्येतद्द्वारेण तव्यस्येतव्यादेशः क्रियते ॥

॥ भा० ॥ आदेशास्त्वर्हीमे भविष्यन्ति । अनागमकानां सागमकाः ॥

॥ वि० ॥ पपत्तिमूलकः समुदाययोरपि स कल्प्यते एवम् अवयवत्वेन विधानेऽपि अर्थापत्तिमूलकवाक्यान्तरकल्पनेन निरवयवसावयवबुद्ध्योर्विपरिणाममात्रेणाऽऽदेशत्वव्यवहारो गौणो नित्यत्वरक्षणाय कल्प्यत इति । यथा च तत्र कल्प्यमानस्थान्यादेशभावेन श्रौतावयवस्थान्यादेशभावस्य न त्यागोऽत एवाचः परस्मिन्नित्यादीनामुक्तिसम्भवः । तथाऽत्रापि श्रौताऽवयवावयविभावस्य न त्याग इति यदागमा इत्येतत्प्रवृत्तिरव्याहतैवेति । ईदृशस्थान्यादेशभावे स्थानिवत्त्वस्य न प्रवृत्तिः । स्थानिवदितिसूत्रेः श्रौतस्थान्यादेशभावानुपपत्तिमूलकतया कल्प्यमानस्थान्यादेशभावके एङरित्यादाविव तत्प्रवृत्तेः । नत्वत्र केवलानुमानिके । अत एव लावस्थायामडिति पक्षेऽडादिविशिष्टस्याऽपिबदित्यादौ न पिबाद्यादेशा इति दिक् । तदेतदाह । इड् भवतीत्येतद्द्वारेणेति ॥



॥ वि० ॥ आगमा अपीत्यर्थ इत्यस्य तथेत्यादिः । अत एवाग्रे वक्ष्यति बुद्धिविपरिणाममात्रं स्थान्यादेशाऽऽगमाऽऽगमिभावद्वारेण क्रियत इति । एतेनाऽऽगमा अपीत्येवं सर्वपदव्याख्यायामेकदेशविकारे हीति वाक्यशेषविरोध आदेशत्वोपपादिकाया विकारव्यापकीभूताभावप्रतियोगित्वरूपनित्यत्वानुपपत्तेः सकलपक्षाद्वृत्तित्वादित्यपास्तम् । पद्यमानमिति । कार्यवत्तया प्रतीयमानं प्रकृत्यादीत्यर्थः । सर्वपदेत्यत्र घञर्थे कः । सर्वशब्दश्चात्रावयवका-

॥ कै० ॥ सर्व इति । आगमा अपीत्यर्थः । सर्वपदादेशा इति । पदशब्देन न सुप्तिङन्तं गृह्यतेऽपि तु कार्यं प्रति पद्यमानं प्रकृतिप्रत्ययादि तत् सर्वं पदम् । एकदेशविकारे हीति । यद्यपि सर्वविकारेऽप्यनित्यत्वं यथा पिठरस्थस्य पयसः पाकादिषु । तथापि विकाराभावप्रतिपादनपरमेतत् । बुद्धिविपरि-

॥ भा० ॥ तत् कथम् । सर्वे सर्वपदादेशा दाक्षीपुत्रस्य पाणिनेः । एकदेशविकारे हि नित्यत्वं नोपपद्यते ॥

॥ कै० ॥ णाममात्रं स्थान्यादेशाऽऽगमाऽऽगमिभावद्वारेण क्रियत इत्यर्थः । यद्येवं दाशब्दस्य दाप्शब्द आदेशः क्रियत इति दाशब्दस्याऽऽनर्थक्यप्रसङ्गः । नैष दोषः । नित्यतासमर्थनायाऽऽदेशपक्ष आश्रितः । प्रक्रियायां तु कल्पितायामागमाऽऽगमिभाव एव । अन्यथाऽऽगमादेशयोर्भेदेन व्यवहारो न स्यात् ॥

॥ वि० ॥ तन्र्थवाची । यद्येवमिति । एवञ्चैतदवयवस्यानर्थक्यान्न संज्ञा । पुकः पूर्वं दा इत्यस्य तु न संज्ञा कार्यकालपक्षे संज्ञाया णत्वदेशस्थत्वेन पुग्वृद्ध्याऽसिद्धत्वात् पूर्वमप्रवृत्तेः । नच पुग्विशिष्टस्य दाग्रहणेन ग्रहणम् । यदागमा इत्यस्याभावात् । पूर्वोक्तरीत्या स्थानिवत्त्वाप्रवृत्तेश्चेतिभावः । आदेशपक्ष इति । बुद्धिविपरिणामपक्ष इत्यर्थः । कल्पितप्रक्रियादशायां तु न कल्पिताऽऽगमत्वादिव्यवहारत्याग इति यदागमा इत्यादेः सत्त्वेनात्रापि पक्षे न दोष इति भावः ॥

॥ वि० ॥ सन्निपातपरिभाषया दीङ आत्वे दारूपाश्रयघुत्वं न प्रकृतिग्रहणस्य प्रत्याख्यातत्वाच्च तन्निबन्धनमपीतिगूढाशयः ऋच्छति भाष्ये कुतः पुनरिति । आशयमविदुष उत्तरं रूपग्रहणादिति । इह खलु प्रकृतिग्रहणादिति । घुसंज्ञासूत्रे प्रकृतिग्रहणेऽयं दोषो जायतेऽतस्तत्र प्रकृतिग्रहणं दुष्टमिति भावः । अथैकदेशी एनं दोषं परिहर्तुमाह । नचेयमिति । तद्व्याचष्टे । एच एवेति । मीनातीत्यस्योपदेशकाले प्रवृत्तिमसौ न जानाति । एवञ्च साक्षाद्दाप्रकृतिसम्भवे व्यवहितप्रकृतेर्न ग्रहणमिति भावः । अतिफल्गुत्वाच्चैतन्मते दूषणानभिनिवेशो भाष्यकृत इति द्रष्टव्यम् । यच्चिदं वार्त्तिकमतं नचैतत्प-

॥ कै० ॥ दीङ इति । उपादी स् त इति स्थिते मीनातिमिनोतीत्यात्वे कृते दारूपत्वादर्थवत्त्वाच्च घुसंज्ञाप्रसङ्गः । इह खल्विति ।

॥ भा० ॥ दीङः प्रतिषेधः स्थाघ्वोरित्त्वे । दीङः प्रतिषेधः स्थाघ्वोरित्त्वे वक्तव्यः । उपादास्ताऽस्य स्वरः शिक्षकस्येति । मीनातिमिनोतीत्यात्वे कृते स्थाघ्वोरिच्चेतीत्त्वं प्राप्नोति । कुतः पुनरयं दोषो जायते । किं प्रकृतिग्रहणादाहोस्विद्रूपग्रहणात् । रूपग्रहणादित्याह । इह खलु प्रकृतिग्रहणाद्दोषो जायते उपदिदीषते । सनि मीमाघुरभलभेति । नैष दोषः । दाप्रकृतिरित्युच्यते । नचेयं दाप्रकृतिः । आकारान्तानामेजन्ताः प्रकृतयः । एजन्तानामपीकारान्ताः । नच प्रकृतेः प्रकृतिः प्रकृतिग्रहणेन गृह्यते ॥

॥ कै० ॥ एचो विषये आत्वविधानाद्दीशब्द एव दाप्रकृतिरिति दोषः । नचेयमिति । एच एव स्थाने आत्वविधानादित्यर्थः ॥

॥ वि० ॥ चेऽवदानमित्यादावादन्तत्वनिबन्धनयुजाद्यसिद्धिः । तत्राकारान्तलक्षणप्रत्ययविधिरितिवचनेनैव तत्सिद्धेः । भाष्ये त्वेतद्वचनप्रत्याख्यानायैज्विषये आत्वं सिद्धान्तितमित्यन्यदिति । तन्न । तादृशवार्त्तिकस्याऽनुपलम्भाद् विपरीतं मीनातीतिसूत्रे उपदेशवचनं कर्त्तव्यं णघञ्युच्सिद्ध्यर्थमितिवार्तिकं तत्रोपदेशे एच इति विरुद्धमित्याशङ्क्य एज्विषय इति भाष्यकृता व्याख्यातं न तु भवदुक्तं वार्त्तिकं तत्प्रत्याख्यानं वा भाष्ये दृश्यते । एवञ्च प्रकृतिग्रहणं घुसंज्ञायां वार्त्तिककारोक्तं दुष्टमेव न तु तदनुरोधेन गुरुभूतवचनान्तरकल्पनाभिनिवेशः कार्यः । नह्येकदेश्युक्तमतपरिष्कारे गुरुप्रकारेण क्रियमाणे किञ्चित्फलमित्याहुः ॥



॥ वि० ॥ अकित्त्वेति । एचोविषयस्याऽन्यथासम्भवादिति भावः । कित्त्वमिति । तदभावे सन्नियोगशिष्टत्वादित्त्वमपि नेति कार्याभावाद् घुत्वस्याऽप्रवृत्तिरिति भावः । प्रणिदातेति । ननु प्रणिदीयते इत्यत्र नित्यणत्वप्रसङ्गः णत्वविधौ प्रकृतिग्रहणादिति चेन्न । इष्टापत्तेः । अन्येत्वाहुरिति । अत्रारुचिबीजं तु वार्त्तिकभाष्यविरोधाद् न तथा सूत्रतात्पर्यमिति । अगुणेति । गुणनिमित्तप्रत्ययप्रसङ्गाभावादित्यर्थः । इत्यस्यैवेति ।

॥ कै० ॥ सन्निपातेति । अकित्त्वसन्निपातेनात्वं क्रियते यदि चात्र घुसंज्ञा स्यात् स्थाघ्वोरिच्चेति कित्त्वं स्यादित्यकित्त्वस्य व्याघातः स्यादिति घुसंज्ञां प्रति नैवाकार आत्मानं दर्शयतीति घुसंज्ञा न प्रवर्तते । अत्र केचिदाहुः । दीङस्तृजादावात्वे घुसंज्ञा भवत्येवेति प्रणिदातेति णत्वं भवति अत एव वार्त्तिक कारेण स्थाघ्वोरित्त्व इति विशे-

॥ भा० ॥ स तर्हि प्रतिषेधो वक्तव्यः । न वक्तव्यः । घुसंज्ञा कस्मान्न भवति । सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येत्येवं न भविष्यति । दाप्प्रतिषेधे न दैप्यऽनेजन्तत्वात् । दाप्प्रतिषेधे दैपि प्रतिषेधो न प्राप्नोति ॥

॥ कै० ॥ पोनिर्दिष्टः । अन्येत्वाहुः । निर्देश एवैजन्तानामनुकरणानामात्वे कृते दाणदाञ्धाञां चैकशेषे द्वन्द्वे च दाधा इति निर्देशाद्दीङो नास्ति प्राप्तिः । न हि तदनुकरणस्याऽऽत्वमस्ति अगुण विषयत्वात् । दाप्प्रतिषेध इति । दाप् लवने इत्यस्यैव निषेधः स्यादित्यर्थः ॥

॥ वि० ॥ नतु दैपइत्यर्थः । तस्य पकारेऽश्रूयमाणे आत्वायोगादिति भावः । ननु पकारे लुप्तेऽपि कथमात्वम् उपदेशकाले एजन्तत्वाभावात् । नानुबन्धकृतमित्याद्याश्रयणे तु प्रकृतेऽपि न दोष इति चेन्न । उपदेश इतिषष्ठ्यर्थे सप्तम्यासत्त्वेनोपदिश्यमानस्यैजन्तस्येत्यर्थेन लुप्ते आत्वप्रवृत्तेः । सति तु तस्मिन्नात्वम् एजन्तत्वाभावात् । यस्मात्परो नास्ति तत्रैवान्तशब्दप्रवृत्तेरिति दिक् ॥

॥ वि० ॥ तत्वमिति । अच उपसर्गात्त इत्यनेनेत्यर्थः । भाष्येऽनेकान्ता इति । एवञ्च पकारसत्त्वेऽपि एजन्तत्वानपायादात्त्वप्रवृत्तिरिति भावः । तच्चाऽवश्यमित्यादि विघटयितुं भाष्ये शक्यन्तावदिति । लक्षणप्रतिपदोक्तपरिभाषया तु पुगन्तेऽदाविति निषेधो न शक्यो वारयितं गामा-

॥ कै० ॥ अवदातमिति । तत्वमत्र प्राप्नोति । शक्यन्तावदिति । दाप्दैपौ धातुषु वान्तौ पठितव्यौ । तावत्येवेति । इत्संज्ञायां

॥ भा० ॥ अवदातं मुखम् । ननु चाऽऽत्त्वे कृते भविष्यति । तद्धात्त्वं न प्राप्नोति । किङ्कारणम् । अनेजन्तत्वात् । सिद्धमनुबन्धस्याऽनेकान्तत्वात् । सिद्धमेतत् । कथम् । अनुबन्धस्याऽनेकान्तत्वात् । अनेकान्ता अनुबन्धाः । पित्प्रतिषेधाद्वा । अथवा दाधाघ्वपिदिति वक्ष्यामि । तच्चाऽवश्यं वक्तव्यम् । अदाविति ह्युच्यमाने इहाऽपि प्रसज्येत । प्रणिदापयतीति । शक्यन्तावदनेनादाविति ब्रुवता वान्तस्य प्रति-षेधो विज्ञातुम् । सूत्रन्तर्हि भिद्यते । यथान्यासमेवास्तु । ननुचोक्तं दाप्प्रतिषेधे न दैपीति । परि-हृतमेतत् । सिद्धमनुबन्धस्यानेकान्तत्वादिति । अथैकान्तेषु दोष एव । एकान्तेष्वपि न दोषः । आत्त्वेकृते भविष्यति । ननुचोक्तं तद्धात्त्वं न प्राप्नोति किङ्कारणम् अनेजन्तत्वादिति । पकारलोपे कृते भविष्यति । नह्ययं तदा दाव् भवति । भूतपूर्वगत्या भविष्यति । एतच्चात्र युक्तम् । यत्सर्वेष्वेव सानुबन्धकग्रहणेष भूतपूर्वगतिर्विज्ञायते । अनैमित्तिको ह्यनुबन्धलोपस्तावत्येव भवति ॥

॥ कै० ॥ सत्यामेव प्रयोगे दाशब्दएवायं पित्कार्यन्तु लभते इत्यर्थः ॥

॥ वि० ॥ दाग्रहणेऽविशेषात् । दावित्यपि पकारोपलक्षितदाग्रहणमेवेति भावः । वान्तपक्षेऽपि चर्त्वेन पस्य सिद्धत्वान्नास्ति सूत्रभेदः । सूत्रन्तर्हीति । अपिदिति-न्यासे इत्यर्थः । शङ्कते नह्ययमिति । उत्तरयति भूतपूर्वेति । दात्वं श्रुत्वा पकारवैशिष्ट्यं तु अनयेतिभावः । इत्संज्ञायामिति । उपदेशोत्तरकालं जातायामेवेत्यर्थः ॥



॥ वि० ॥ मेङ इति । अन्तरङ्गत्वाद्व्यतीहारनित्यसम्बद्ध एवगृह्यते न तु पदान्तरसन्निधानेन बहिरङ्गव्यतीहारवृत्तिरिति भावः । केचित्त माङोऽनभिधानात् क्त्वाप्रत्ययानुत्पत्तिरिति न तस्य ग्रहणमित्याहुः । उदीचां मेङ इति । उदीचां म इत्यस्याप्युपलक्षणमिदम् । नचाऽनुबन्धसत्त्वे मे इत्यस्य धातुत्वाभावात् कथमात्त्वम् अनुबन्धलोपे एव धातुत्वमित्यर्थस्य न धातुलोपसूत्रे भाष्यकैयटयोः स्पष्टत्वादितिवाच्यम् । आत्त्वविधायके धातोरित्यस्यासम्बन्धात् ।

॥ कै० ॥ अथवेति । अनुबन्धानामेकान्तत्वपक्षे उपदेश एजन्तानामात्त्वमुच्यमानं दैपो न प्राप्नोतीति ज्ञाप-कोपन्यासः । माङ इति । मेङो ग्रहणं न माङः । मेङो व्यतिहारेण नित्ययोगात् । माङस्तु विवक्षा-वशाद् व्यतिमिमीत इति कादाचित्कत्वाद् व्यतिहारयोगस्य । प्रणिदानं व्यतिहार इत्येकोऽर्थः । उदीचां मेङ

॥ भा० ॥ अथवा आचार्यप्रवृत्तिर्ज्ञापयति नानुबन्धकृतमनेजन्तत्वमिति । यदयमुदीचां माङो व्यतीहार इति मेङः सानुबन्धकस्याऽऽत्त्वभूतस्य ग्रहणं करोति । अथवा दावेवायं न दैवस्ति । कथमवदायतीति । श्यन्विकरणो भविष्यति ॥

॥ कै० ॥ इति तु न कृतम् । एवं हि नाऽनुबन्धकृतमनेजन्तत्वमिति न ज्ञापितं स्यात् । अथवेति । दिवादिषु दाप् शोधने इति पठिष्यत इत्यर्थः ॥

॥ वि० ॥ गवादिशब्दानामुपदेशाभावान्नात्त्वम् । इरेप्रभृतीनामुपदेशेऽपि तेषामशित्परत्वाभावाद् नात्त्वम् । प्रसज्य प्रतिषेधेऽपिप्रत्यासत्त्या शित्प्रत्ययप-रत्वयोग्यानामेजन्तानामेव ग्रहणान्न दोष इति दिक् । दिवादिष्विति । ननु ताच्छीलिके चानशि दायमान इत्यत्र स्वरभेदः । श्यनि धातोरुदात्तत्वं शपि चानशोऽन्तोदात्तत्वमिति चेन्न । सति शिष्टादपि विकरणस्वरात् सार्वधातुकस्वरस्य बलीयस्त्वोक्तेरुभयथाऽप्यन्तोदात्तत्वानपायादिति दिक् ॥

॥ वि० ॥ आद्यन्तव । बहुष्वपीति । यद्यप्युत्तरा संख्या पूर्वसंख्याबाधिका । तथापीतरेषां बुद्धिविषयत्वाऽभावे बहुमध्यस्थेऽप्येकत्वाङ्गीकारान्न दोषः । यथा शते पञ्चाशदितीति भावः । किमेकस्मिन्नित्यनेनेति । तद्धि सभासंनयने भव इत्यर्थे भाकारस्याऽऽदित्वे तस्य वृद्धत्वेन प्राप्तच्छाऽभावार्थम् । दरिद्रातेरिवर्णान्तलक्षणाचोऽभावार्थञ्च अत्र च स्वरे विशेषः । उपमेये सप्तमीसत्त्वे सप्तम्यन्तादृतौ मानमाह द्वयोरिति । प्राकारपदवाच्येनेति शेषः । आधाराऽऽधेयसंबन्धेति । आधारत्वाऽऽधेयत्वरूपसम्बन्धप्रतिपादनायेत्यर्थः । न गम्येतेति । उपमानप्रकारकोपमेयविशेष्यकबोधे समानविभक्ति-

॥ कै० ॥ आद्यन्तवदेकस्मिन् । एकशब्दोऽसहायवाची न संख्यावाची । बहुष्वपि व्यवस्थितस्यैकत्वसंख्याऽस्तीति किमेकस्मिन्नित्यनेन कृतं स्यात् । एकस्मिन्नित्युपमेयेसप्तमीनिर्देशादाद्यन्तवदित्युपमानात् सप्तम्यन्तादृतिर्विज्ञायते यथा मथुरावत् पाटलिपुत्रे प्राकार इति । द्वयोर्ह्युपमानोपमेययोराधाराऽऽधेयसम्बन्धप्रतिपादनाय वाक्यं प्रयुज्यते यदि च तयोर्भिन्नविभ-

॥ भा० ॥ आद्यन्तवदेकस्मिन् । किमर्थमिदमुच्यते । सत्यन्यस्मिन्नाद्यन्तवद्भावादेकस्मिन्नाद्यन्तवद्वचनम् । सत्यन्यस्मिन् यस्मात् पूर्वं नास्ति परमस्ति स आदिरित्युच्यते । सत्यन्यस्मिन् यस्मात् परं नास्ति पूर्वमस्ति सोऽन्त इत्युच्यते । सत्यन्यस्मिन्नाद्यन्तवद्भावादेतस्मात् कारणाद् एकस्मिन्नाद्यन्तापदिष्टानि कार्याणि न सिध्यन्ति ॥

॥ कै० ॥ क्तिकत्वं स्याद् उपमानोपमेयभाव एव न गम्येत । सर्वाऽतिदेशानां कार्य्याऽतिदेशस्य प्राधान्यात्तस्यैवेहाऽऽश्रयणम् । किमर्थमिति । व्यपदेशिवद्भावेनैवसिद्धत्वान्नकर्त्तव्यमित्यर्थः । इतरो मुख्ये संभवति गौणे न स्यादित्याह । सत्यन्यस्मिन्निति । आद्यन्तौ विद्येते यस्मिन् शास्त्रे तदाद्यन्तवत् तस्यभावात् प्रवर्त्तनादित्यर्थः । क चिदाद्यन्तभावादिति पाठः ॥

॥ वि० ॥ कत्वस्य तन्त्रत्वादिति भावः । सर्वातिदेशानामिति । रूपनिमित्ततादात्म्यशास्त्रव्यपदेशकार्यातिदेशानां मध्ये इत्यर्थः । प्राधान्यादिति । सर्वेषां कार्यार्थत्वादिति भावः । मुख्ये । व्यपदेशिनि । गौणे । व्यपदेशिसदृशे । नन्वाद्यन्तवद्भावादिति न वतिः सत्यन्यस्मिन्मुख्याद्यन्तत्वात् । नापि मतुप् । आद्यन्तशब्दवच्छास्त्रसद्भावस्य परपूर्वसत्त्वाऽनपेक्षत्वेन सत्यन्यस्मिन्नित्यस्यायोगादत आह । आद्यन्ताविति । आद्यन्तशब्दावित्यर्थः । एवञ्चाद्यन्तवद्भावादित्यस्याऽऽद्यन्तवच्छास्त्रप्रवृत्तेरित्यर्थः । क्वचिदिति । आद्यन्तव्यवहारादिति तदर्थः ॥



॥ वि० ॥ सर्वकार्येति । आद्यन्तापदिष्टाद्यन्तानपदिष्टसर्वकार्य्यसिद्ध्यर्थं गुर्वपि व्यपदेशिवदिति आद्यन्तवदित्यस्य स्थाने कार्य्यमिति भावः । स तेनेति । तेन तुल्यमिति तृतीयायां सर्वविभक्त्यर्थान्तर्भावात्तृतीयान्ताद्वतिरुक्त इति बोध्यम् । भाष्ये तस्मिन् क्रियमाण इति । तस्मिन्नाश्रीयमाण इत्यर्थः । पपाचेति । नन्वत्र धातुरेव प्रथम एकाज् न तु धातोः प्रथम एकाजिति कथमत्र व्यपदेशिवद्भावं विना प्राप्तिरिति चेन्न ।

॥ कै० ॥ तत्रव्यपदेशिवद्वचनमिति । सर्वकार्यसिद्ध्यर्थं व्यापकं कर्त्तव्यमित्यर्थः । तत्र निमित्तसद्भावान्मुख्यो व्यपदेशो यस्याऽस्ति

॥ भा० ॥ इष्यन्ते च स्युरिति । तान्यन्तरेण यत्नं न सिध्यन्ति इत्येकस्मिन्नाद्यन्तवद्वचनम् । एवमर्थमिदमुच्यते । अस्ति प्रयोजनमेतत् । किन्तर्हीति । तत्रव्यपदेशिवद्वचनम् । तत्रव्यपदेशिवद्भावो वक्तव्यः । व्यपदेशिवदेकस्मिन् कार्यं भवतीतिवक्तव्यम् । किंप्रयोजनम् । एकाचो द्वे प्रथमार्थम् । वक्ष्यत्येकाचो द्वे प्रथमस्येति बहुव्रीहिनिर्देश इति । तस्मिन् क्रियमाणे इहैव स्यात् पपाच पपाठ । इयाय आर इत्यत्र न स्यात् । व्यपदेशिवदेकस्मिन् कार्यं भवतीत्यत्रापि सिद्धं भवति । षत्वेचाऽऽदेशसम्प्रत्ययार्थम् । वक्ष्यति आदेशप्रत्यययोरित्यवयवषष्ठ्येति । एतस्मिन् क्रियमाणे इहैव स्यात् करिष्यति हरिष्यति ॥

॥ कै० ॥ स व्यपदेशी यस्तु व्यपदेशहेत्वभावादविद्यमानव्यपदेशः स तेन तुल्यं वर्तते कार्य्यं प्रतीति व्यपदेशिवद्भवतीत्युच्यते ॥

॥ वि० ॥ आदिपर्यायप्रथमत्वस्य सूत्रेणैवातिदेशसिद्धा तद् न व्यपदेशिवद्भावारम्भस्य मुख्यं प्रयोजनमित्याशयात् । इयायेत्यादौ तु द्विर्वचनेऽचीति रूपस्थानिवत्त्वादज्व्यतिरिक्ताभावेन नैकाच्त्वमिति बोध्यम् । अवयवषष्ठ्येति । प्रत्ययांशे इति भावः । एतस्मिन् क्रियमाण इति । अवयवषष्ठीत्वे आश्रीयमाण इत्यर्थः ॥

॥ वि० ॥ विज्ञानशब्दो व्यवहारवाचीत्याह । व्यवहारादिति । तत्फलितव्याख्यानं भाष्येऽन्तरेणैवेति । यथा लोके व्यवहारो वचनं विनैव सिध्यति तथा शास्त्रेऽपि वचनं विना सिध्यतीत्यर्थः । अगादित्यादि । इणो गा लुङि णौ गमिरबोधन इत्यादेशौ । एकोऽच् । असहा-

॥ कै० ॥ वचदिति । वच् लेट् तिप् इतश्चलोपइतीकारलोपो लेटोडाटावित्यडागमः सिप् कुत्वम् । अत्र सकारमात्रं प्रत्ययो न तु प्रत्ययस्यावयवः सकार इति षत्वं न स्यात् । अवचनादिति । अवचनं वचनरहितं यल्लोकविज्ञानं तस्माल्लोकव्य-वहारादित्यर्थः । इहतावदियायेति । इण्धातुः प्रयोगभेदाद्बहुरूपः । एति । इतः । यन्ति । अयनम् । आयकः । अगात् । गमयतीति । तस्यायमेकोऽजवयवइव लक्ष्यते । अथवाऽर्थवतो धातोरयं वर्णरूप एकोऽजित्यर्थस्य त्यागोपादानाभ्यां

॥ भा० ॥ इह न स्याद् इन्द्रो मा वचत् सदेवान्यचदिति । व्यपदेशिवदेकस्मिन् कार्य्यं भवतीत्यत्रापि सिद्धं भवति । स तर्हि व्यपदेशिवद्भावो वक्तव्यः । न वक्तव्यः । अवच-नाल्लोकविज्ञानात् सिद्धम् । अन्तरेणैव वचनं लोकविज्ञानात् सिद्धमेतत् । तद्यथा लोके शालासमुदायो ग्राम इत्युच्यते । भवति चैतदेकस्मिन्नप्येकशालो ग्राम इति ॥

॥ कै० ॥ भवति व्यपदेश एकाजिति । एवं शिलापुत्रकस्य शरीरमिति अनेकक्रियाविषयस्याऽवस्थातुरिदमेकावस्थायुक्तं शरीरमित्यस्ति व्यपदेशः । एवं सिप्प्रत्यय इट् सहितोऽपि दृष्टो जोषिषदित्यादौ वचदित्यादौ केवलोऽपीति तस्यायं सकार इति व्यपदिश्यते । लोकनिरूढश्चायं व्यवहार इति लोकवच्छास्त्रेऽपि व्यवहाराद्गौणमुख्यन्यायोऽत्र नावतरति ॥

॥ वि० ॥ योऽजित्यर्थः । नन्वेकाचोऽवयविनो द्विर्वचनमिति यस्याऽयमवयवस्तस्य बहुरूपस्य भवितव्यं द्वित्वेनेत्यत आह । अथवेति । काल्पनिकभेदेन व्यवहारे दृष्टान्तमाह । एवमिति । व्यपदेशः । भेदनिबन्धनसंबन्धव्यवहारः । शास्त्रेऽपीति । लोकाप्रसिद्धत्वमेव तत्त्यागे बीजं तच्च न प्रकृते इति भावः ॥



॥ वि० ॥ पादपर्याय इति । वर्णसमुदायः पदमित्यत्र तु पदशब्दो यथाश्रुत एव । पदादीनामिति । एकवर्णं पदमित्यादौ । ननु अर्थस्य

॥ कै० ॥ पदसमुदाय इति । पादपर्यायः पदशब्दः । तथाचैकपदा ऋगिति पाद एव विवक्षितः । न तु ऋचः कस्याश्चिदप्येक-मेव पदं भवति । अत्राऽप्यर्थेनेति । पदादीनां योऽर्थः सोऽन्यपदार्थइत्यर्थः । अभेदोपचाराच्चार्थ एव पदादिभिरभिधीते । अय-

॥ भा० ॥ विषम उपन्यासः । ग्रामशब्दोऽयं बह्वर्थः । अस्त्येव शालासमुदाये वर्त्तते । तद्यथा । ग्रामो दग्ध इति । अस्ति वाटपरिक्षेपे वर्तते । तद्यथा । ग्रामं प्रविष्ट इति । अस्ति च मनुष्येषु वर्तते । तद्यथा । ग्रामोगतो-ग्राम आगत इति । अस्ति सारण्यके ससीमके सस्थण्डिलके वर्तते । तद्यथा । ग्रामो लब्ध इति । तद्यः सारण्यके ससीमके सस्थण्डिलके वर्तते तमभिसमीक्ष्यैतत्प्रयुज्यते एकशालो ग्राम इति । यथा तर्हि वर्णसमुदायः पदं पदसमुदाय ऋक् ऋक् समुदायः सूक्तमित्युच्यते । भवतिचैतदेकस्मिन्नप्येकवर्णं पदम् एकपदा ऋक् एकर्चं सूक्तमिति । अत्राप्यर्थेन युक्तो व्यपदेशः । पदं नामार्थः ऋङ्नामार्थः सूक्तं नामार्थ इति । यथा तर्हि । बहुषु पुत्रेष्वेतदुपपन्नं भवति । अयं मे ज्येष्ठो ऽयं मे मध्यमो ऽयं मे कनीयानिति । भवति चैतदेकस्मिन्नपि अयमेव मे ज्येष्ठो ऽयमेव मे मध्यमो ऽयमेव मे कनीयानिति ॥

॥ कै० ॥ मेव मे ज्येष्ठ इति । प्रथमरूपतयाध्यवसायान्मध्यमकार्यकरणाच्च मध्यम इति व्यपदिश्यते । अन्यो न जनितेति बुद्ध्या कनीयानिति व्यपदिश्यते ॥

॥ वि० ॥ पदत्वं कथमत आह । अभेदेति । तदुपचारश्च शब्दार्थयोरनादिरितिबोध्यम् । पदादिभिः । पदशब्दादिभिः । प्रथमेति । तस्मात्पूर्व-स्याभावादितिभावः । मध्यमकार्यं तत्सम्बन्धजसुखादिकम् ॥

॥ वि० ॥ बहुकृत्वोऽपीति । यथा परशुरामेण रेणुका । तथा येति । संप्रति गर्भिणीत्यर्थः । गर्भस्थमादाय तत्राऽपि प्रथमव्यवहार इत्यर्थः । ननु या सूता सा न गर्भेण हता भवति किं त्वपत्येनेति गर्भेण हतायां तद्व्यतिरेकप्रदर्शनमयुक्तमत आह । अपत्यपर्याय इति ।

॥ कै० ॥ असूतायामिति बहुकृत्वोऽपि प्रसूता प्रथमपुत्रेण काचिद्धन्यते तथा या प्रसोष्यते साऽपि काचित्पूर्वोत्पन्नेन पुत्रेण हन्यत इत्युभयोरुपादानम् । नाऽपि प्रसूता नाऽपि प्रसोष्यते कुक्षिस्थेनैव गर्भेण हता प्रथमगर्भेण हतेत्युच्यते । अपत्यपर्यायो गर्भशब्दः । तत्र तस्या एव योग्यताध्यवसायेन भाविगर्भविवक्षया प्रथमगर्भेण हतेत्युच्यते स्त्र्यन्तरेषु बहुपुत्रत्वे सति आद्यगर्भस्य प्रथमव्यवहारदर्शनात् तथाविधस्य प्रथमगर्भव्यवहारः । अनेत्येति । बहुकृत्वोऽप्यागतः पूर्वमागमनं स्मृत्वा प्रथमव्यपदेशं

॥ भा० ॥ तथाऽसूतायामसोष्यमाणायाञ्च भवति प्रथमगर्भेण हते-
ति । तथाऽनेत्याऽनाजिगमिषुराहेदं मे प्रथममागमनमिति ॥

॥ कै० ॥ तत्र मुख्यं करोत्येव आजिगमिषुश्च भावीन्यागमनानि बुद्ध्या व्यवस्थाप्य कुर्यादेव प्रथमव्यवहारं यस्तु सकृदेवागतः सोपि करोति प्रथमव्यवहारमिति प्रतिपादनार्थमनेत्यानाजिगमिषुरित्युपात्तम् । तत्रान्यसम्बन्धिषु बहुष्वप्यागमनेषु आद्यस्य प्रथमव्यवहारदर्शनात् तथाविधत्वात् स्यादेकस्मिन्नप्यागमने प्रथमव्यवहारः ॥

॥ वि० ॥ तच्चोदरस्थं बहिर्भूतं वेत्यन्यत् । तत्र प्रथमव्यवहारे बीजमाह । तस्या एवेति । स्त्र्यन्तरेषु । बहुप्रसववतीषु । तथाविधस्येति । अविद्यमानपूर्वगर्भस्येत्यर्थः । नन्वागमनं विनेदं मे प्रथममागमनमिति व्यवहारासम्भवाद् अनेत्येदं मे प्रथममागमनमित्यसङ्गतमत आह । बहुकृत्व इति । अनेत्येत्यस्येतः पूर्व्वमितिशेष इति भावः । तथाविधत्वादिति । अविद्यमानपूर्व्वागमनत्वादित्यर्थः ॥



॥ वि० ॥ परे तु पदऋगादिपदानि अर्थशब्दसमुदायवृत्तीनि तस्य शब्दमात्ररूपवर्णापाद ऋगाद्यवयव इत्येव भाष्यार्थः । न तु शुद्धोऽर्थोऽन्यपदार्थ इति तथाऽप्रतीतेः एकर्चं सूक्तं पठेत्यादिव्यवहारानापत्तेश्च । एवञ्चार्थवतो धातोरयमेकोऽज् वर्णरूप इत्यर्थस्य त्यागोपादानाभ्यां भवति व्यपदेश एकाजितीति कैयटोक्तं चिन्त्यम् । एतद्भाष्यरीत्या तस्य मुख्यव्यवहारत्वेन व्यपदेशिवद्भावाऽविषयत्वात् । कैयटरीत्या शुद्धार्थस्याऽन्यपदार्थत्वेऽत्रापि तथैवाऽस्तु । शब्दार्थयोरभेदाच्च शब्देऽपि तत्त्वमिति अत्राऽपि न व्यपदेशिवद्भावप्रयोजनम् । किञ्चैकाजितिबहुव्रीहिणा प्रथमस्येत्युपस्थितावयवस्य विशेषणं तस्य चानर्थकत्वमिति अर्थस्योपादानत्यागावत्यसम्बद्धौ । एतदेवध्वनयता पदं नामार्थ इति भाष्ये उक्तम् । धात्ववयवत्वन्तु कैयटोक्तरीत्या वक्तुं शक्यम् । अत एव

॥ कै० ॥ इदानीं योगं प्रत्याख्यातुमाह । अपूर्व्वेति । यद्यपि बहुष्ववस्थितेष्वाद्यन्तशब्दौ प्रयुज्येते तथाप्यपूर्व्वानुत्तरत्व-

॥ भा० ॥ आद्यन्तवद्भावश्च शक्योऽवक्तुम् । कथम् । अपूर्व्वानुत्तरलक्षणत्वादाद्यन्तयोः सिद्धमेकस्मिन् । अपूर्व्वलक्षण आदिरनुत्तरलक्षणोऽन्त एतच्चैकस्मिन्नपि भवति । अपूर्वानुत्तरलक्षणत्वादेतस्मात् कारणाद् एकस्मिन्नप्याद्यन्तापदिष्टानि कार्याणि भविष्यन्तीति नार्थ आद्यन्तवद्भावेन ॥

॥ कै० ॥ मात्रमेतयोः प्रवृत्तिनिमित्तं तच्चैकस्मिन्नप्यस्तीति नार्थः सूत्रेण ॥

॥ वि० ॥ बहुव्रीहिनिर्द्देशानुपपत्तिरेवव्यपदेशिवदित्याश्रयणेबीजमुक्तम् । अत्राप्यर्थेनेति भाष्यस्य पदादिशब्दार्थस्यार्थेन युक्तत्वादित्यर्थः । अर्थशब्दोभयवृत्तिपदत्वऋक्त्वादीत्याशयः पदन्नामार्थइत्यादेरर्थोपीत्यर्थः । यथातर्हीति । यथैकस्मिंस्तत्तद्धर्मारोपेण युगपज्ज्येष्ठत्वादिव्यवहारस्तथैकस्मिन्नारोपितानेकाऽवस्थाभिः समुदायरूपत्वस्याप्यारोपेणैकाच्त्वादिव्यवहारोपपत्तिर्द्वितीये तृतीये च दृष्टान्ते प्रथमेत्युपलक्षणं चरमस्याऽपि तृतीये कदाचिच्चरममागमनमित्यपि व्यवहारात् । आद्यन्तवद्भावश्च शक्योऽवक्तुमित्यस्य प्रकारान्तरेणापीतिशेष इत्याहुः । वस्तुतस्तु ईदृशेषु पातञ्जलोक्तं विकल्पात्मकं वस्तुशून्यमेवज्ञानमित्यारोपानुपयोग एव लोकव्यवहारवत् तेनापि शास्त्रीयो व्यवहार इति तत्त्वम् ॥

॥ वि० ॥ गोनर्दीयपदं व्याचष्टे । भाष्यकारइति । अनपेक्षितप्रतियोगिनोः । अनपेक्षितपरपूर्वयोः । आद्यन्तयोः । आद्यन्तरूपार्थयोः । प्रवृत्तिः । आद्यन्तशब्दप्रवृत्तिरित्यर्थः । तथाऽपीति । वस्तुतो लोकनिरूढत्वाद् गौणत्वमेवात्रनास्तीत्यर्थः । कथमिति ।

॥ कै० ॥ भाष्यकारस्त्वाह । सतित्वन्यस्मिन्निति । नह्यनपेक्षितप्रतियोगिनोराद्यन्तयोः प्रवृत्तिरित्यर्थः । तस्मादेकस्मिन्मुख्य आद्यन्तव्यपदेशो नास्तीति कर्त्तव्योऽयं योगः । यद्यपि लौकिकेन व्यपदेशिवद्भावेनाद्यन्तव्यपदेश एकस्मिन्नपि सिध्यति । तथापि गौणत्वात्कार्येण न भवितव्यमिति यस्य भ्रान्तिः स्यात्तं प्रति योगोऽयमारब्धः । प्रत्ययञ्निदाद्युदात्तत्वे इति । प्रत्ययस्याद्युदात्तत्वं ञ्निति चाद्युदात्तत्वमित्यर्थः । कथं पुनर्भिन्नविभक्त्योर्द्वन्द्वः । उच्यते । प्रत्ययस्य यदाद्युदात्तत्वं तस्य प्रत्ययोऽपिवि-

॥ भा० ॥ गोनर्दीयस्त्वाह सत्यमेतत् सति त्वन्यस्मिन्निति । कानि पुनरस्य योगस्य प्रयोजनानि । आदिवत्त्वे प्रयोजनं प्रत्ययञ्निदाद्युदात्तत्त्वे । प्रत्ययस्यादिरुदात्तो भवतीति । इहैव स्यात् कर्त्तव्यं तैत्तिरीयः । औपगवः कापटव इत्यत्र न स्यात् । ञ्नित्यादिर्नित्यमिति । इहैव स्याद् अहिचुम्बकायनिः । आग्निवेश्यः ॥

॥ कै० ॥ घय इति प्रत्ययेऽपि तदुच्यते । यद्वा । ञ्निति यदाद्युदात्तत्वं तज्ञ्नितोऽपि सम्बन्धि भवतीति नाऽस्ति भिन्नविभक्तित्वम् । चङ्गदोरवित्याद्युदात्तत्वनिवृत्त्यर्थात्पित्त्वाल्लिङ्गादेकाचोऽपि प्रत्ययस्याद्युदात्तत्वं भविष्यतीति चेदकारविषयमेव लिङ्गं स्यादितीकारोकारयोः प्रत्यययोराद्युदात्तत्वं न स्यात् । विशेषणार्थं वा पित्करणं स्यात् याथादिसूत्रे इत्यज्ञापकं स्यात् ॥

॥ वि० ॥ भिन्नविभक्त्यन्तयोरसमप्रधानत्वेन साहित्याप्रतीतिरित्यर्थः । इकारोकारयोरिति । उपाधिश्चिकीर्षुरित्यादौ । सामान्यापेक्षज्ञापकत्वेऽप्याह । विशेषणार्थं वेति । अहिचुम्बकात्याचामष्टहादितिफिन् । अग्निवेशाद्गर्गादियञ् ॥



॥ वि० ॥ स्वरविधाविति । नन्वस्य स्वरोद्देश्यके विधावित्यर्थो वा हलः स्वरप्राप्तावित्यर्थो वा उभयथाऽपि नेह प्राप्तिरिति चेत् । सत्यम् । अत्र सूत्रेऽजन्तरापेक्षमेवाऽऽदित्वं गृह्यते । अन्त्यस्याच एव तद्यावर्त्यत्वेनोपस्थितत्वादिति भाष्याशयात् । किञ्च स्त्रैणमित्यादावाद्युदात्तत्वन्न स्यादिति दोषः । ञित्त्वन्तु वृद्ध्यर्थतया सावकाशं बोध्यम् । क्तिन इति । अनेकाज्भ्यस्तु चिरिजिर्यादिभ्योऽनभिधानात् क्तिन्नभाव इति भावः । ननु तदन्तस-

॥ कै० ॥ गार्ग्य इति । अत्र परत्वाद्यस्येति लोपे कृते आदित्वाभावात्प्रकृतेराद्युदात्तत्वं न प्राप्नोति । स्वरविधौ स्थानिवद्भावप्रतिषेधाच्च नास्ति द्व्यच्त्वम् । स्वरविधौ व्यञ्जनस्याऽविद्यमानत्वान्नास्ति हलपेक्षमप्यादित्वम् । कृतिरिति । क्तिनो नित्त्वं तादौ च निति कृत्यतावित्येवमर्थं स्यात् । सौवर्यः सप्तम्यस्तदन्तसप्तम्य इत्येतदनाश्रित्यैतदुक्तम् । जोषि-

॥ भा० ॥ गार्ग्यः कृतिरित्यत्र न स्यात् । वलादेरार्द्धधातुकस्येट् प्रयोजनम् । आर्द्धधातुकस्येड्वलादेरितीहैव स्यात् करिष्यति हरिष्यति । जोषिषद् मन्दिषदित्यत्र न स्यात् । यस्मिन्विधिस्तदादित्वे प्रयोजनम् । वक्ष्यति यस्मिन्विधिस्तदादावल्ग्रहण इति । तस्मिन् क्रियमाणे अचि श्नुधातुभ्रुवां य्वोरियंङुवङौ इहैव स्यात् श्रियः भ्रुवः । श्रियौ भ्रुवौ इत्यत्र न स्यात् । अजाद्याट्त्वे प्रयोजनम् । आडजादीनाम् इहैव स्याद् । ऐहिष्ट ऐचिष्ट । ऐष्ट अध्यैष्टेत्यत्र न स्यात् ॥

॥ कै० ॥ षदिति । लिङर्थे लेट् । इट ईटीति च ज्ञापकं सिब्विषयमेव स्यादिति सिप इरान स्यात् । यस्मिन्विधिरिति । स्वस्य च रूपस्येति नानुवर्त्तते इति प्रयोजनत्वेनोपन्यासः । अजाद्याट्त्वे इति । सूत्रकाराऽपेक्षया प्रयोजनोपन्यासः । वार्त्तिककारस्तु अजादीनामटा सिद्धमित्याह ॥

॥ वि० ॥ समीत्वे गार्ग्यादौ समुदाये मुख्य एवादिः सम्भवतीति न दोष इत्यत आह । सौवर्य इति । लेडिति । सिब्बहुलं लेटीति सिप् । इट ईटीति । नच दमरमनमातामित्यत्र वलादेरित्यस्य सम्बन्धे फलाभावात् कथमेतज्ज्ञापकम् । रुदादिभ्य इति सूत्रे वलादेरित्यस्य सम्बन्धसत्त्वेन मध्येऽपि सम्बन्धस्यैव न्याय्यत्वात् । अत एव सप्तमे भाष्ये एकाचस्तौ वलीति चेत्युक्तम् ॥

॥ वि॰ ॥ येन विधिरिति । तेनैव ईदूदेद् द्विवचनमित्यत्र तदन्तविधिरिति भावः । अर्थवतेति । तत्र ह्यर्थस्य त्यागोपादानाभ्यां भेदः सुकर इति भावः । इदं चिन्त्यम् । यद्यपि व्यपदेशिवद्भावेन सिध्यति तथापि गौणत्वान्नेति यस्य भ्रान्तिस्तं प्रति सूत्रारम्भ इति पूर्वग्रन्थविरोधात् सूत्रकारेण तदज्ञानात्तदुदाहरणासम्भवाच्चार्थवतेति चासहायत्वस्यैवोपलक्षणं ससहायस्य प्रायेणानर्थकत्वात् तच्छब्दाकारश्चाऽसहाय एव । येन सहा-

॥ कै॰ ॥ अन्तवदिति । येन विधिस्तदन्तस्येत्यनेनैव गतार्थे प्रपञ्चार्थोऽयमुपन्यासः । कुरुत इति । अर्थवता व्यपदेशिवद्भावात् तच्छब्दाऽकारस्यानर्थकत्वादिह प्रयोजनत्वेनोपन्यासः । आभ्यामिति । अत्र द्वे अन्तवत्त्वे उपयुज्येते । अका-

॥ भा॰ ॥ अथान्तवत्त्वे कानि प्रयोजनानि । अन्तवद् द्विवचनान्तप्रगृह्यत्वे प्रयोजनम् । ईदूदेद् द्विवचनं प्रगृह्यमितीहैव स्यात् पचेते इति पचेथे इति । खट्वे इति माले इतीत्यत्र न स्यात् । मिदचोऽन्त्यात्परः प्रयोजनम् । इहैव स्यात् कुण्डानि वनानि । तानि यानीत्यत्र न स्यात् । अचोऽन्त्यादि टि प्रयोजनम् । टित आत्मनेपदानां टेरे इतीहैव स्यात् कुर्वाते कुर्वाथे । कुरुते कुर्वे इत्यत्र न स्यात् । अलोऽन्त्यस्य प्रयोजनम् । अतो दीर्घो यञि सुपि च इहैव स्यात् पटाभ्याम् घटाभ्यामिति । आभ्यामित्यत्र न स्यात् । येन विधिस्तदन्तस्य प्रयोजनम् । अचो यद् इहैव स्यात् चेयम् जेयम् । एयम् अध्येयम् इत्यत्र न स्यात् । आद्यन्तवदेकस्मिन् कार्यम्भवतीत्यत्रापि सिद्धम्भवति ॥

॥ कै॰ ॥ रान्तस्याङ्गस्य अलोऽन्त्यस्य दीर्घो भवतीति पृथक् प्रयोजनत्वेनोपन्यासः । एयमिति । ईङो रूपम् । इणस्तु इत्यमिति भवति ॥

॥ वि॰ ॥ येनाचामन्तत्वस्य बहुव्रीह्यर्थस्य चोपपत्तिस्तादृशसहायाभावात् । अन्यथाऽऽद्यन्तवद्भावोऽपि न स्यात् । विजातीयकन्यादिसहायसत्त्वेऽप्येकपुत्रस्यायमेव ज्येष्ठ इत्यादिव्यवहाराद् ईदृशस्थलेऽपि लोकसिद्धत्वमित्याहुः । इत्यमिति । एतिस्तुशास्विति क्यपो विधानादित्यर्थः ॥



॥ वि॰ ॥ तरप्तम । प्रकरणोत्कर्षेणेति । प्रकरणे संज्ञाप्रकरणे उत्कर्षेण गुरुभूतन्यासेनेत्यर्थः । स्वार्थे इति । अनातिशायनिकस्याऽपि संज्ञाविधानार्थमत्र सूत्रं । सचानिर्दिष्टार्थत्वात्स्वार्थे तस्य संज्ञाफलं चोच्चैरेवोच्चैस्तरामित्यादौ किमेत्तिङव्ययघादित्याम्सिद्धिरितिभावः ।

॥ कै॰ ॥ तरप्तमपौघः । आतिशायनिकप्रत्ययप्रकरण एव तादी घः पितौ घ इति वा कर्त्तव्ये प्रकरणोत्कर्षेण संज्ञाकरणं स्वार्थेऽपि तरवस्तीति सूचनार्थम् । तेनाल्याच्तरमिति सिद्धम्भवतीत्याहुः । नदीतर इति । तरतेर्ऋदोरवित्यप् । सर्वत्र चाऽनुबन्धाः स्मर्यमाणा एव कार्यम्प्रति हेतुत्वं लभन्त इति घसंज्ञाप्राप्तिः । साहचर्यञ्चेह व्यवस्थाहेतुः

॥ भा॰ ॥ तरप्तमपौघः । घसंज्ञायां नदीतरे प्रतिषेधः ।
घसंज्ञायां नदीतरे प्रतिषेधो वक्तव्यः । नद्यास्तरो नदीतरः ॥

॥ कै॰ ॥ सर्वत्र नाश्रीयते । तथाहि । द्वित्रिश्चतुरिति कृत्वोर्थे इति कृत्वोर्थग्रहणं चतुश्शब्दविशेषणार्थं कृतम् अन्यथा द्वित्रिशब्दसाहचर्याच्चतुश्शब्दोऽपि कृत्वोर्थे एव ग्रहीष्यत इति किं कृत्वोर्थग्रहणेन ॥

॥ वि॰ ॥ इत्याहुरिति । अत्रारुचिबीजन्तु भाष्यानुक्तिः । ननु नायन्तरबित्यत आह । सर्वत्रचेति । ननुतमप्साहचर्यात्तद्धित एव तरो ग्रहीष्यत इति नास्त्यबन्ते तरे प्रसक्तिरत आह । साहचर्यमिति । प्रत्ययाऽप्रत्यययोरिति परिभाषाऽपि नाश्रितेति बोध्यम् । इह । शास्त्रे ॥

॥ वि० ॥ वस्त्वर्थमिति । तात्पर्यार्थमित्यर्थः । असन्देहइतिवत् प्रतिषेधस्याऽभाव इत्यर्थको नञ्समासः । एवञ्चानर्थक इति भाष्योक्तेर्मध्यमपदलोपी समास इति न भ्रमितव्यमितिभावः । तरब्ग्रहणम् । तरप्शब्दः । औपदेशिकम् । उपदेशप्रयोजककइत्यर्थो भाष्यस्य ।

॥ कै० ॥ अप्रतिषेध इति । न प्रतिषेध इति प्रतिषेधनक्रिया नञा निषिध्यते । भाष्यकारस्तु वस्त्वर्थं व्याचष्टे

॥ भा० ॥ घसंज्ञायां नदीतरेऽप्रतिषेधः । अनर्थकः प्रतिषेधोऽप्रतिषेधः । घसंज्ञा कस्मान्नभवति । तरब्ग्रहणं ह्यौपदेशिकम् । औपदेशिकस्य तरपोग्रहणम् । नचैष उपदेशे तरप् शब्दः । किं वक्तव्यमेतत् । नहि । कथमनुच्यमानङ्गंस्यते । इह हि व्याकरणे सर्वेष्वेव सानुबन्धकग्रहणेषु रूपमाश्रीयते ॥

॥ कै० ॥ अनर्थकः प्रतिषेध इति । औपदेशिकमिति । उपदेशः प्रयोजनमस्य तत्र वा भवमौपदेशिकम् ॥

॥ वि० ॥ तदाह उपदेशः प्रयोजनमिति । प्रयोजक इत्यर्थः । नचैष उपदेशे तरप् शब्द इति माष्यस्वरसादाह । तत्र वा भवमिति । उपदेशे इति भाष्ये भव इति शेषः । सर्वेष्वेव सानुबन्धकग्रहणेष्विति भाष्यं प्रकृताभिप्रायं शब्दमात्रग्रहणेपि स्वं रूपमित्यनेन रूपाश्रयणादिति बोध्यम् ॥



॥ वि० ॥ यवास्येति । यवास्यैतद्रूपं तत्र घसंज्ञेत्यर्थः । एवञ्चोपदेश एव घसंज्ञा प्रयोगे तु स्थानिवद्भावेन सेति बोध्यम् । काल्पनिकमिति । ऋदोरबिति सूत्रपर्यालोचनावगतत्वेनानुमानिकमित्यर्थः । स्वार्थिकत्वात् । प्रकृत्यभिहितद्योतकत्वात् । समानाधिकरणः ।

॥ कै० ॥ यवास्येति । अनुबन्धयुक्तमित्यर्थः । नचैष इति । काल्पनिकमस्य तरप्त्वं न तु साक्षान्निर्दिष्टम् । समानाधिकरणेष्विति । आतिशायनिकस्य स्वार्थिकत्वात् समानाधिकरणः । यदा तर्हीति । ननु तीर्णिरिति भवित-

॥ भा० ॥ यवास्यैतद्रूपमिति । रूपनिर्ग्रहश्च शब्दस्य नान्तरेण लौकिकं प्रयोगम् । तस्मिंश्च लौकिके प्रयोगे सानुबन्धकानाम्प्रयोगो नास्तीति कृत्वा द्वितीयः प्रयोग उपास्यते । कोऽसौ । उपदेशो नाम । नचैष उपदेशे तरप्शब्दः । अथवाऽस्त्वस्य घसंज्ञा को दोषः । घादिषु नद्या ह्रस्वो भवतीति ह्रस्वत्वम्प्रसज्येत । समानाधिकरणेषु घादिष्वित्येवन्तत् । यदा तर्हि सैव नदी स एव तरस्तदा प्राप्नोति ॥

॥ कै० ॥ व्यम् । एवन्तर्हि तीर्यत इति तर इति सामान्येन पदं संस्क्रियते पश्चान्नद्या विशेष्यते इति न दोषः ॥

॥ वि० ॥ प्रकृत्या समानविषय इत्यर्थः । सामानाधिकरण्यञ्चैकविशेष्यकबोधजनकत्वमिति बोध्यम् । ननु तीर्णिरिति । ऋतः परस्य क्तिनो निष्ठावद्वचनान्नत्वम् । सामान्येनेति । अनिर्द्धारितकर्मविशेषेणेत्यर्थः । अत एव पुंस्त्वं घञजपः पुंसीत्युक्तेः ॥

॥ वि॰ ॥ महिषीरूपमिवेति । नन्विदमसमस्तं समस्तं वा । नाद्यः । उत्तरपदाधिकाराद्रूपशब्दस्य चाऽतथात्वादप्राप्तेः । किञ्च रूपशब्देनाकृत्यभिधानात् कस्याकृतिरिव महिषीतिसाकाङ्क्षं स्यात् । नान्त्यः । षष्ठीतत्पुरुषे वैयधिकरण्याद्ङ्स्याप्राप्तेः । विशेषणसमासे तु पूर्वनिपातवैपरीत्यापत्तिः । तस्मादुपमागर्भसमासस्य विग्रहवाक्यमिदं स च समासो न उपमानानि सामान्यवचनैरित्यनेन रूपशब्दस्योपमेयवाचकत्वेऽपि साधारणधर्मावा-

॥ कै॰ ॥ स्त्रीलिङ्गेष्विति । स्वार्थिकस्य प्रकृतिलिङ्गानुविधानात् स्त्रीलिङ्गः । महिषीरूपमिवेति । इवशब्दो

॥ भा॰ ॥ स्त्रीलिङ्गेषु घादिष्वित्येवं तत् । अवश्यं चैतदेवं विज्ञेयम् । समानाधिकरणेषु घादिष्वित्युच्यमाने इह प्रसज्येत । महिषी रूपमिव ब्राह्मणी रूपमिवेति ॥

॥ कै॰ ॥ भिन्नक्रमः । तेनाऽयमर्थः । महिषी इवेयमाकृतिरिति । तत्र सुप्सुपेति समासे कृते ह्रस्वत्वं स्यात् ॥

॥ वि॰ ॥ चकत्वात् । साधारणधर्मो ह्यत्र विसंष्ठुलत्वादिः । नाऽप्युपमितं व्याघ्रादिभिरिति । रूपशब्दस्योपमेयवाचित्वेन पूर्वनिपातवैपरीत्यापत्तेः । तस्योपमानवाचित्वे तु कस्य रूपमिति विशेषणस्य सापेक्षत्वाद्वृत्तिर्न स्यादत आह । इवशब्द इति । सुप्सुपेति च । ह्रस्वत्वं स्यादिति । अप्रत्यययोरपि घत्वे तत्साहचर्याद्रूपादेरप्रत्ययस्यापि ग्रहणं स्यादिति भावः । यद्यपि रूपमित्युक्ते कस्य रूपमित्यस्याकाङ्क्षा तथापि प्रधानस्य साकाङ्क्षत्वान्न दोषः ॥



॥ वि॰ ॥ बहुगण । संख्यात्वेन प्रत्ययस्य लोकत एव सिद्धेराह । एकादिकाया इति । संख्यासंप्रत्ययेति वार्त्तिके संख्येति संप्रत्यय इत्यर्थः । एकादिकायाः संख्यायाः संख्याप्रदेशेष्वितिशेषपूरणं बोध्यम् । संख्येत्येष इति भाष्यस्य संख्येत्येतच्छब्दाभिन्न इत्यर्थः । शब्दार्थप्रत्ययाना-

॥ कै॰ ॥ बहुगणवतुडति संख्या । संख्यासंप्रत्ययार्थमिति । संख्याया एकादियाः संख्याप्रदेशेषु संप्रत्ययार्थमित्यर्थः । ननु

॥ भा॰ ॥ बहुगणवतुडति संख्या । संख्यासंज्ञायां संख्याग्रहणम् । संख्यासंज्ञायां संख्याग्रहणं कर्त्तव्यम् । बहुगणवतुडतयः संख्यासंज्ञा भवन्ति । संख्या च संख्यासंज्ञा भवतीति वक्तव्यम् । किं प्रयोजनम् । संख्यासंप्रत्ययार्थम् । एकादिकायाः संख्यायाः संख्याप्रदेशेषु संख्येत्येष संप्रत्ययो यथा स्यात् । ननु चैकादिका संख्या लोके संख्येति प्रतीता तेनास्याः संख्यासंप्रत्ययो भविष्यति । एवमपि कर्त्तव्यम् ॥

॥ कै॰ ॥ चेति । यथा पशुरपत्यं देवतेति लौकिकोऽर्थो गृह्यते तथैकादिकाऽपि संख्या ग्रहीष्यत इत्यर्थः ॥

॥ वि॰ ॥ मितरेतराध्यासात्सङ्कर इति पातञ्जलसूत्रात् । एतच्च पातञ्जलसूत्रवृत्तावुपपादितमस्माभिः । नारद इत्यबोधि इत्यादावप्येवमेव । एवञ्च कर्मत्वाऽप्रसक्तिरेव । संख्याशब्दजन्य इत्यर्थे संख्येत्याकारक इत्यर्थे च एषशब्दान्वयाऽनुपपत्तिस्तदुपादानवैयर्थ्यं चेति बोध्यम् । संख्या ग्रहीष्यत इति । सूत्रं त्वधिकसंग्रहार्थमिति भावः ॥

॥ वि॰ ॥ न्यायोऽयमिति । अभ्यासाम्रेडितादिसंज्ञाविषये चैतन्न्यायोपयोगो द्रष्टव्यः । नियम्यते इति । सर्वार्थबोधकत्वेऽपि लोके

॥ कै॰ ॥ कृत्रिमाऽकृत्रिमयोरिति । न्यायोऽयम् । तथाहि । सर्वार्थाऽभिधानशक्तियुक्तः शब्दो यदा विशिष्टेऽर्थे संव्यवहाराय नियम्यते तदा तत्रैव प्रतीतिं जनयति नान्यत्र । नदीपौर्णमासीति । यू स्त्र्याख्यौ नदीति संज्ञा-

॥ भा॰ ॥ किं प्रयोजनम् । इतरथा ह्यसम्प्रत्ययोऽकृत्रिमत्वाद्यथा लोके । अक्रियमाणे हि संख्याग्रहणे एकादिकायाः संख्यायाः संख्येत्येष संप्रत्ययो न स्यात् । किं कारणम् । अकृत्रिमत्वात् । बह्वादीनां कृत्रिमा संज्ञा । कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसंप्रत्ययो भवति । यथा लोके । तद्यथा लोके गोपालकमानय कटजकमानयेति । यस्यैषा संज्ञा भवति स आनीयते न यो गाः पालयति यो वा कटे जातः । यदि तर्हि कृत्रिमाऽकृत्रिमयोः कृत्रिमे कार्यसंप्रत्ययो भवति । नदीपौर्णमास्याग्रहायणीभ्य इति अत्रापि प्रसज्येत ॥

॥ कै॰ ॥ विधानात् संज्ञिनो ग्रहणं प्राप्तं न तु स्वरूपस्य । अशब्दसंज्ञेति निषेधात् ॥

॥ वि॰ ॥ तत्रैव गृहीतशक्तिकतयाऽन्यत्र शक्त्यग्रहेणा चाधिकसंग्रहार्थत्वादगृहीतशक्तिग्राहकत्वाच्चाऽस्य नियमत्वं चिन्त्यम् । न्यायबीजन्तु प्रकरणमिति भाष्ये एव स्फुटीभविष्यति ॥



॥ वि॰ ॥ नियमार्थमिति । नियमश्च सामान्यविषय एव न कालवाचिविषयो व्याख्यानादतो गौर्याद्यन्तेऽपि न दोषः । नन्वनदीसंज्ञकेभ्योऽपि खलप्वादिभ्य ऊकारान्तेभ्यः स्यादत आह । ऊकारग्रहणेनेति । वस्तुतस्तु दोषग्रस्तनियमाऽपेक्षया नदीशब्दे कृत्रिमाकृत्रिमन्यायबाधज्ञापनमेव ज्यायः । भाष्ये तद्विशेषेभ्यस्तर्हीति प्रासङ्गिकी शङ्का तां व्याचष्टे । गङ्गादिभ्य इति । अपगङ्गं परियमुनमित्युदाहरणे । अत्र हि टचि अन्तोदात्तत्वं

॥ कै॰ ॥ पौर्णमासीति । नियमार्थं पौर्णमास्याग्रहायणीग्रहणमीकारान्तानां न स्यादितिचेत् । एवमप्यपौर्णमास्याग्रहायणीभ्य इति वक्तव्यं स्याद् ऊकारग्रहणेन च नदीसंज्ञकमेवोकारान्तं पौर्णमास्याग्रहायणीशब्दसाहच-

॥ भा॰ ॥ पौर्णमास्याग्रहायणीग्रहणसामर्थ्यान्न भविष्यति । तद्विशेषेभ्यस्तर्हि प्राप्नोति गङ्गायमुने इति । एवं तर्हि आचार्यप्रवृत्तिर्ज्ञापयति न तद्विशेषेभ्यो भवतीति । यदयं विपाट्शब्दं शरत्प्रभृतिषु पठति । इहतर्हि प्राप्नोति । नदीभिश्चेति ॥

॥ कै॰ ॥ यद्ग्रहीष्यते । तद्विशेषेभ्य इति । गङ्गादिभ्यः । यदयमिति । नित्यार्थः पाठः स्यादिति चेत् । व्यवस्थितविभाषया विपाट्शब्दस्य नित्यष्टज् भविष्यतीत्यदोषः ॥

॥ वि॰ ॥ तदभावे परिप्रत्युपापा वर्ज्यमानाहोरात्रावयवेष्विति पूर्वपदप्रकृतिस्वरत्वमित्याहुः । नित्यार्थ इति । नदीपौर्णमासीत्यत्राऽन्यतरस्यांग्रहणानुवृत्तेरिति भावः । व्यवस्थितेति । अत्र च ज्ञापकपरमिदमेव भाष्यं मानम् । केचिदव्ययीभावात्नदीतिसूत्रेऽन्यतरस्यां ग्रहणं निवर्त्तयन्ति ॥

॥ वि॰ ॥ बहुवचननिर्द्देशादेवेति । तस्मादपीत्यर्थः । अशब्दसंज्ञेति निषेधादित्यपि बोध्यम् । तत्प्रत्याख्याने त्वयमेव हेतुः । अतोऽस्मान्निषेधान्नदीपौर्णमासीत्यादौ स्वरूपग्रहणमपि दुर्लभमित्यपास्तम् । लक्ष्यानुसारेण तत्प्रत्याख्यानसामर्थ्येन तस्याऽत्वाप्रवृत्तेः । नदीभि-

॥ कै॰ ॥ बहुवचनेति । अन्यथाऽऽरवन्द्या इत्यादौ यथैकवचनेन निर्द्देशस्तथेहाऽपि कर्त्तव्यः स्यात् । नचेदमकृतमिति । अनाश्रि-

॥ भा॰ ॥ बहुवचननिर्द्देशान्न भविष्यति । स्वरूपविधिस्तर्हि प्राप्नोति । बहुवचननिर्द्दे-
शादेव न भविष्यति । एवञ्च नचेदमकृतं भवति कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसंप्रत्यय इति ।
न च कश्चिद्दोषो भवति । उत्तरार्थं च । उत्तरार्थं च संख्याग्रहणं कर्तव्यम् । ष्णान्ता षट् ।
षकारनकारान्तायाः संख्यायाः षट्संज्ञा यथा स्यात् । इह माभूत् । पामानो विप्रुष इति ॥

॥ कै॰ ॥ तमित्यर्थः । उत्तरार्थं चेति । अयं हि सूत्रोपात्तः संख्याशब्दः स्वरूपपदार्थकः । उत्तरत्र संज्ञिनिर्द्देशेन प्रयोजनम् ॥

॥ वि॰ ॥ स्वेत्यादौ तु लक्ष्याऽनुसारादेवाऽर्थग्रहणेन तद्वाचकानां ग्रहणमिति दिक् । अस्य न्यायत्वादकृतमित्ययुक्तमत आह । अनाश्रितमिति । स्वरू-
पेति । नचैवं बह्वादिसामानाधिकरण्याऽनुपपत्तिः । शब्दार्थयोरभेदारोपेण तदुपपत्तेरिति भावः । संज्ञिनिर्द्देशेनेति । संख्याशब्दबोध्यपञ्चादिशब्दपरेण
संख्याशब्दनिर्द्देशेनेत्यर्थः ॥



॥ वि॰ ॥ सामान्येति । अर्थशब्दोक्तसामान्यं प्रति इहार्थो यस्येत्यस्य विशेषत्वादित्यर्थः । भाष्येऽर्थादित्यादि । लोके कृत्रिमग्रहणे न कृत्रिमत्वं कारणं किंत्वन्यदेवेति भावः । अर्थः सामर्थ्यं तदेव दर्शयति । अर्थो वास्येति । अस्य वाक्यस्यार्थोऽध्यापनादिरूपं प्रयोजनमेवंसंज्ञकेन भवति तत्रास्यैव सामर्थ्यमित्यर्थः । प्रकृतं वेति । इदमेवंसंज्ञकेन कर्त्तव्यमिति तत्र प्रयोजनं प्रकृतं बुद्धिस्थं भवति संज्ञाया बुद्धिस्थत्वादित्यर्थः । इदमन्येषामपि

॥ कै॰ ॥ इहार्थेनेति । इहार्थो यस्येति सामान्यविशेषभावान्न पौनरुक्त्यम् । आतश्चेति । इतश्चेत्यर्थः ।
अर्थः सामर्थ्यम् । यथा गोपालकमानय माणवकमध्यापयिष्यतीति यष्टिहस्तस्याध्यापनाऽसंभवात्संज्ञिनो ग्रहणम् ।

॥ भा॰ ॥ इहार्थेन तावन्नार्थः संख्याग्रहणेन । ननु चोक्तम् । इतरथा ह्यसंप्रत्ययो-
ऽकृत्रिमत्वाद्यथा लोक इति । नैष दोषः । अर्थात्प्रकरणाद्वा लोके कृत्रिमाकृत्रिमयोः
कृत्रिमे कार्यसंप्रत्ययो भवति । अर्थो वाऽस्यैवंसंज्ञकेन भवति प्रकृतं वा तत्र भवति ।
इदमेवंसंज्ञकेन कर्त्तव्यमिति । आतश्चार्थात प्रकरणाद्वा ॥

॥ कै॰ ॥ प्रकरणं प्रस्तावो यथा भोजनप्रकरणे सैन्धवमानयेति लवणे प्रतीतिर्गमनप्रकरणे त्वश्वे ॥

॥ वि॰ ॥ पदार्थनियामकानामुपलक्षणम् । यद्यपि रूढिर्योगापहारिणीत्यप्यत्र संभवति तथापि प्रकरणादिसहकृतो योगोऽपि बलवानित्यभिप्रेत्येदमे-
वोक्तम् । अन्वयमुक्त्वा व्यतिरेकेणाऽप्यर्थादेर्हेतुत्वं प्रतिपादयितुं भाष्ये आतश्चेति ॥

॥ वि० ॥ उभयगतिरुभयविषयकं ज्ञानं तात्पर्यसन्देहरूपमित्याशयेनाह । किं संज्ञेयमिति । वक्तृतात्पर्यविषयसन्देहवानित्यर्थः । ननु रूढेर्योगापहारकत्वेन कथं सन्देह इति चेन्न । तत्तत्पुरुषं प्रति प्रसिद्धरूढ्यर्थस्यैव योगापहारकत्वं नान्यस्येतिभावात् । तदेव ध्वनयन्नाह । साधीय इति । क्रियाविशेषणमव्ययं वा सम्यगर्थकम् । यष्टिहस्तं गमिष्यति । तद्विषयमेव तात्पर्यं ग्रहीष्यतीत्यर्थः । ननु संज्ञाकरणस्य नियमार्थत्वाद्योगार्थ-

॥ कै० ॥ ग्राम्यमिति । ऊहितुमसमर्थम् । पांशुलपादमिति । अचिरोषितम् । अत एवाऽप्रकरणज्ञम् । उभयगतिरिति । किं संज्ञेयं यस्यकस्यचिन्निर्दिष्टा स्यादुत यष्टिहस्तोऽस्य विवक्षितः स्यादिति सन्देहवान् भवतीत्यर्थः । साधीयो वेति । यो मम प्रसिद्धः सोऽनेन चोदितो न च ममैवंसंज्ञकः प्रसिद्ध इत्येवं मन्यते । लोके च गोपालकशब्दः संज्ञिनि नियम्यमानः संज्ञ्यन्तरं निवर्तयति क्रिया-

॥ भा० ॥ अङ्ग हि भवान् ग्राम्यं पांशुलपादमप्रकरणज्ञमागतं ब्रवीतु गोपालकमानय कटजकमानयेति । उभयगतिस्तस्य भवति साधीयो वा यष्टिहस्तं गमिष्यति । यथैव तर्ह्यर्थात्प्रकरणाद्वा लोके कृत्रिमाऽकृत्रिमयोः कृत्रिमे कार्यसंप्रत्ययो भवति । एवमिहापि प्राप्नोति । जानाति ह्यसौ बह्वादीनामियं संज्ञा कृतेति । न यथा लोके तथा व्याकरणे । उभयगतिः पुनरिह भवति । अन्यत्राऽपि नावश्यमिहैव ॥

॥ कै० ॥ निमित्तं त्वर्थं न निरस्यति तुल्यजातीयविषय एव हि नियमो भवति । एवमिहापीति । बह्वादय एवाऽत्र संख्यात्वेन प्रकृता इति भावः । न यथा लोक इति । संख्याशब्दो हि बह्वादिप्रतिपादनाय संज्ञात्वेन विनियुक्तो नत्वेकादिसंख्यानिरासाय । अधि-कार्थप्रतिपत्त्यर्थत्वादिह संज्ञाकरणस्य ॥

॥ वि० ॥ प्रतीतिः श्रोतुर्भ्रम इत्यत आह । लोके चेति । इदमपि स्वरीत्या । अत्र । शास्त्रे । प्रकृताः । बुद्धौ सन्निहिताः । अनेनाऽत्रापि प्रकरणमस्तीत्युक्तं भवति । बुद्धिसन्निधिरेव प्रकरणम् । संज्ञात्वेन विनियुक्त इति । ज्ञापिताऽज्ञातशक्तिक इत्यर्थः । अत एव न नियमार्थतेत्याह । नत्विति । तुल्यन्यायेन संज्ञासूत्रमात्रस्य नियमार्थत्वाऽभावः सूचितः । इह । संख्याप्रदेशे । अधिकार्थेत्यादिनाऽन्वेति । भाष्ये न यथेत्यादि व्याख्यातृपरम्परावगतवक्तृ-तात्पर्याऽनुपपत्त्या प्रकरणाद्यनादरेणोभयगतिरिति भाष्यार्थं इत्यन्ये ॥



॥ वि० ॥ कर्मणि संख्यायामिति । कर्मगतसंख्यायामित्यर्थः । नचेति । तस्या अद्रव्यत्वेन द्रव्यधर्मलिङ्गाद्ययोगादिति भावः । यद्यपि रूपवादिसूत्रस्थभाष्यादेकत्वं क्रियायामस्ति तथापि द्वित्वाद्यभाव इति तात्पर्यम् । कारकं शक्तिमद्द्रव्यम् । साक्षात् क्रियायामित्यस्य क्रिया-

॥ कै० ॥ कर्मणि द्वितीयेति । ङ्याप्प्रातिपदिकादनभिहिते कर्मणि संख्यायां द्वितीया विधीयते । नच क्रियायाः संख्या सम्भवतीति सामर्थ्यात्कारकस्य ग्रहणम् । कर्तरि कर्मव्यतिहार इत्यत्र तु धातोः साक्षात् क्रियायां वृत्त्या क्रियाया एव ग्रह-णम् । कत्त्वमेभ्यः करण इति । तव्यादिप्रत्ययोत्पत्त्यर्थं धातुसंज्ञा क्रियते क्रियावाचिनश्च तव्यादयः साधने उत्पद्यन्त इति

॥ भा० ॥ तद्यथा । कर्तुरीप्सिततमं कर्मेति कृत्रिमा कर्मसंज्ञा । कर्मप्रदेशेषु चोभयगतिर्भवति । कर्मणि द्वितीयेति कृत्रिमस्य ग्रहणम् । कर्तरि कर्मव्यतिहार इत्यत्राऽकृत्रिमस्य । तथा साधकतमं करणमिति कृत्रिमा करणसंज्ञा । करणप्रदेशेषु चोभयगतिर्भवति । कर्तृकरणयोस्तृतीयेति कृत्रिमस्य ग्रहणम । शब्दवैरकलहाभ्रकत्वमेघेभ्यः करणे इत्यत्राऽकृत्रिमस्य । तथा आधारोऽधिकरणमिति कृत्रिमा अधिकरणसंज्ञा । अधिकरणप्रदेशेषु चोभयगतिर्भवति । सप्तम्यधिकरणे चेति कृत्रिमस्य ग्रहणम् । विप्रतिषिद्धं चानधिकरणवाचीत्यत्राऽकृत्रिमस्य । अथवा नेदं संज्ञाकरणं तद्वदतिदेशोऽयम् । बहुगणवतुडतयः संख्यावद्भवन्तीति । स तर्हि वतिनिर्देशः कर्त्तव्यः । न कर्त्तव्यः । नह्यन्तरेण वतिमतिदेशो गम्यते । अन्तरेणापि वतिमतिदेशो गम्यते ॥

॥ कै० ॥ सामर्थ्यात् क्रियाग्रहणम् । विप्रतिषिद्धमिति । द्वन्द्वावयवानां शक्त्यनभिधायित्वादधिकरणं द्रव्यं गृह्यते । तद्वदतिदेशोऽयमिति । संख्याकार्यातिदेशोऽयमित्यर्थः । यदि हि संज्ञा स्याद्घिघुभादिसंज्ञावदेकाक्षरा क्रियेत तस्माल्लौ-किकार्थाभिधायी संख्याशब्द उपादीयमानोऽतिदेशार्थत्वमस्य बोधयति ॥

॥ वि० ॥ यामेव न तु कर्मकारके इत्यर्थः । अन्यथा साक्षात्पदप्रयोजनं चिन्त्यं स्याद् न हि धातोः परम्परयाऽपि कारके वृत्तिरस्ति येन तद्व्यावृत्त्या चारितार्थ्यं स्यादित्याहुः । धातुसंज्ञा क्यङन्तस्य सनाद्यन्ता इत्यनेन । साधने । कारके । तव्यादयोऽन्तःकारकापेक्षितक्रियावाचिन एवोत्पद्यन्त इत्यन्वयः ॥

॥ वि० ॥ एवं सर्वसंज्ञाविषये समाधाय प्रकृतविषये समाधानान्तरमाहाऽथवेति । ब्रह्मदत्त इत्युक्तिविषयस्याऽब्रह्मदत्तत्वं स्फोटयितुं ब्रह्मदत्तव्यक्तिं निर्दिशति । एष ब्रह्मदत्त इति । असंख्यां संख्येत्याहेति । नियतविषयपरिच्छेदहेतुर्हि संख्या । एवञ्च बहुत्वादेरसंख्यात्वमिति भावः । बहुत्वं हि च्यादिसंख्याव्यापकमखण्डोपाधिरूपम् । गुर्विति । नन्वतिशदन्ताया इति लिङ्गात्कन्विधौ कृत्रिमा न गृह्येतेति चेन्न । शास्त्रबा-

॥ कै० ॥ अथवेति । गुरुसंज्ञाकरणादेकादयः संख्याशब्देन प्रदेशेषु न त्यज्यन्त इति लिङ्गेनाप्यनुमीयत इत्यर्थः । अर्थवत इति । ननूभयसम्भवे इयं परिभाषोपतिष्ठते । डत्यन्ता च कृत्रिमास्ति । डतेश्च तिशब्दोऽनर्थक एवेति तस्यैव निषेधः स्या-

॥ भा० ॥ तद्यथा । एष ब्रह्मदत्तः । अब्रह्मदत्तं ब्रह्मदत्त इत्याह । तेन मन्यामहे ब्रह्मदत्तवदयं भवतीति । एवमिहाप्यसंख्यां संख्येत्याह । संख्यावदिति गम्यते । अथवाऽऽचार्यप्रवृत्तिर्ज्ञापयति । भवत्येकादिकायाः संख्यायाः संख्याप्रदेशेषु संप्रत्यय इति । यदयं संख्याया अतिशदन्तायाः कन्निति तिशदन्तायाः प्रतिषेधं शास्ति । कथं कृत्वा ज्ञापकम् । नहि कृत्रिमा त्यन्ता शदन्ता वा संख्याऽस्ति । ननु चेयमस्ति डतिः । यत्तर्हि शदन्तायाः प्रतिषेधं शास्ति । यच्चाऽपि त्यन्तायाः प्रतिषेधं शास्ति । ननु चोक्तं डत्यर्थमेतत् स्यात् । अर्थवद्ग्रहणे नानर्थकस्येति । अर्थवतस्तिशब्दस्य ग्रहणं नच डतेस्तिशब्दोऽर्थवान् ॥

॥ कै० ॥ दित्यज्ञापकस्त्यन्तायाः प्रतिषेधः । नैव दोषः । अतिशदन्ताया इत्युच्चारणकाल एवार्थवतस्तिशब्दस्य ग्रहणमिति प्रतीतिरिति ज्ञापकत्वमेव प्रतिषेधस्य ॥

॥ वि० ॥ धापेचयोभयग्रहणज्ञापकत्वस्यैवौचित्यादिति भावः । नैष इति । अतिशदन्ताया इत्यस्य बहुव्रीहिगर्भतत्पुरुषत्वेन संख्याविशेषणतया विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वाच्च तत्पदजन्योपस्थितिकालेऽर्थवदनर्थकयोस्सम्भवेन पूर्वमर्थवत एव ग्रहणे निर्णीते पश्चात् संख्यापदार्थान्वयवेलायां जायमानाऽनुपपत्तिज्ञानेन ज्ञापकत्वमेव कल्प्यत इति भावः । एतत्पचद्वये महासंज्ञाया अनुग्राहकत्वं वक्तुमयुक्तम् । तन्मूलकपचान्तरस्याऽग्रे वक्ष्यमाणत्वादित्यन्ये ॥



॥ वि० ॥ भाष्ये संज्ञा च नामेति । नाम प्रसिद्धमेतत् । यतोऽन्यल्लघीयो न भवति सा संज्ञेति । तदर्थानुगतानामिति । संख्यानकरणत्वसमानाधिकरणसंख्याशब्दवदभिन्ना बह्वादय इत्यर्थादिति भावः । कथं स्यादिति । महासंज्ञाकरणस्य चरितार्थतया कृत्रिमन्यायबाधे

॥ कै० ॥ अथवेति । ननु महत्याः संज्ञायाः करणात्तदर्थानुगतानामुपात्तानामेव संज्ञिनां भवतु संज्ञा यथा सर्वादीनामेव सर्वनामसंज्ञा न त्वधिकानाम् । तेन बहुगणशब्दयोः संघवैपुल्यवाचिनोस्संज्ञा माभूदेकादीनां तु कथं स्यात् । नैष दोषः ।

॥ भा० ॥ अथवा महतीयं संज्ञा क्रियते । संज्ञा च नाम यतो न लघीयः । कुत एतत् । लघ्वर्थं हि संज्ञाकरणम् । तत्र महत्याः संज्ञायाः करण एतत्प्रयोजनम् । अन्वर्थसंज्ञा यथा विज्ञायेत । संख्यायते अनयेति संख्या । एकादिकया चापि संख्यायते । उत्तरार्थेन चापि नार्थः संख्याग्रहणेन । इदं प्रकृतमुत्तरत्राऽनुवर्त्तिष्यते ॥

॥ कै० ॥ इहाऽन्वर्थसंज्ञाकरणेन तावदनुरूपः संज्ञी सर्व आक्षिप्यते ॥

॥ वि० ॥ मानाभावादिति भावः । सर्व इति । नियतानियतसंख्यावाचीत्यर्थः । आक्षिप्यत इति । संख्येति विभक्तसूत्रे इति शेषः । एवञ्च संख्यानकरणीभूताः संख्यासंज्ञका इत्यर्थः । संज्ञायास्संख्याकाङ्क्षतया तद्वाचकं पदमुपस्थितान्वर्थवाचकमेव कल्प्यत इत्ययमेवाऽत्राऽऽक्षेप इति भावः ॥

॥ वि॰ ॥ नियमार्थमिति । बहुगणेतिद्वितीयसूत्रे संख्येतिवर्तते । अनियतसंख्यावाचिनां चेद्बह्वादीनामेवेति भावः । अत एवेति । अन्वर्थत्वाश्रयणादेवेत्यर्थः । संज्ञा न भवतीति । प्राप्तेरेवाभावादिति भावः । संख्यावाचिनोरेवेति । बहुगणयोरित्यर्थः । नियमायेति । नियमफलक इत्यर्थः । परे तु परस्परसाहचर्यात् संख्याव्यापकार्थवाचिनोरेव बहुगणयोर्ग्रहणम् । ननु संघवैपुल्यवचनयोरिति व्यर्थाऽन्वर्थसंज्ञा । तस्मात्प्रदेशेषु लोकप्रसिद्धकेवलयोगार्थस्याऽपि ग्रहणार्थं महती संज्ञेति भाष्याशयः । असंख्यां संख्येत्याहेति भाष्येण बह्वादिषु संख्यापदयोगार्थाभावबोधनाच्चेति योगविभागो

॥ कै॰ ॥ तेनैकादीनां तावद्ग्रहणं भवति पश्चाद्बहुगणवतुडतीति भूर्यादिनिवृत्त्यर्थं नियमार्थं व्याख्यायते । अत एव संघवैपुल्यवृत्त्योर्बहुगणशब्दयोस्संज्ञा न भवति । तद्वदतिदेशपक्षेऽपि परस्परसाहचर्यात् संख्यावाचिनोरेव भूर्यादिनिवृत्तये नियमायाऽतिदेशः क्रियत इति अतिप्रसङ्गो न भवति ॥

॥ वि॰ ॥ व्यर्थः । एकादिकया चापि संख्यायते इत्यस्य एकादिकया संख्यायते सापि संख्याप्रदेशेषु यथा गृह्येतेति महासंज्ञाकरणमित्यर्थः । चस्तु वाक्यालङ्कारे उभावपि वाक्यालङ्कार एव । यद्वा । बह्वादिकयाऽपि संख्यायते स्वव्याप्यत्वादिद्वारेत्यर्थः । वत्वन्तडत्यन्तयोर्यावदादिशब्दकतिशब्दयोर्यद्यपि साक्षात्संख्यानकरणीभूतार्थप्रतिपादकत्वमुपपादयितुमशक्यं तथापि कतीत्यत्र संख्यानकरणीभूतार्थविषयप्रश्नार्थकत्वेन तत्त्वम् । एवं वत्वन्तेऽप्यूह्यमित्याहुः ॥



॥ वि॰ ॥ भाष्ये संज्ञार्थमिति । संज्ञा शब्दस्वरूपं तदर्थकमित्यर्थः । संज्ञिनिरूपितसंख्याशब्दनिष्ठशक्त्यवगमार्थं स्वरूपपरमिति भावः । ननु ष्णान्तेत्यनेन संख्या विशेष्यत इति संज्ञिविशेषणं संख्याग्रहणमित्ययुक्तमत आह । ष्णान्तेति । भाष्ये संज्ञी षट्संज्ञासंज्ञी विशेष्यते स्वेतरव्यावृत्ततया प्रतिपाद्यते येनेत्यर्थः । ननु स्वरितत्वबलेनानुमीयमानस्य शब्दान्तरत्वाच्छब्दभेदेनाऽर्थभेदस्य सत्त्वेन नचान्यार्थमित्ययुक्तमत आह । एकेति । यस्य स्वरितत्वं प्रतिज्ञातं तदेवानुवर्त्तते न तु तज्जातीयं शब्दान्तरमिति भावः । अर्थाधिकार एव चाभ्यर्हितस्तदर्थस्य चायोग्यत्वादिहाऽसम्बन्ध इति भावः । इत्या-

॥ कै॰ ॥ संज्ञिविशेषणेनार्थ इति । ष्णान्तेत्यनेन विशिष्टं संज्ञिनं प्रतिपादयितुमुपयोग इत्यर्थः । नचान्यार्थमिति । एकशब्दत्वदर्शन इति भावः । भवतु तर्हि प्रतियोगं शब्दभेद इत्याह । न खल्वपीति । यथा गोधा देशा-

॥ भा॰ ॥ इदं वै संज्ञार्थमुत्तरत्र च संज्ञिविशेषणेनार्थः । नचान्यार्थं प्रकृतमन्यार्थं भवति । न खल्वप्यन्यत्प्रकृतमनुवर्त्तनादन्यद्भवति न हि गोधा सर्प्पन्ती सर्प्पणादहिर्भवति । यत्तावदुच्यते नचाऽन्यार्थं प्रकृतमन्यार्थं भवतीति । अन्यार्थमपि प्रकृतमन्यार्थं भवति । तद्यथा । शाल्यर्थं कुल्याः प्रणीयन्ते ताभ्यश्च पानीयं पीयते उपस्पृश्यते च शालयश्च भाव्यन्ते ॥

॥ कै॰ ॥ न्तरगमनमात्रेण गोधात्वं न जहाति एवं शब्दोऽपि रूपान्तरं न गृह्णात्येवेत्यर्थः । अन्यार्थमपीति । पदार्थानां शक्तिवैचित्र्यात् ॥

॥ वि॰ ॥ हेति । इत्याशङ्क्याहेत्यर्थः । भाष्ये न खल्वपीति । प्रकृतमनुवर्त्तनाद्देशान्तरगमनादन्यद्भवतीति न खल्वित्यन्वयः । यथेति । सर्पणस्योभयत्र तुल्यत्वेन प्रसक्तमहित्वं गोधायां वार्यत इति नार्थः । सर्पणस्याऽहिशब्दप्रवृत्तिनिमित्तत्वाभावात् । किन्तु देशान्तरगमनं नान्यत्वापादकमित्यर्थ इति भावः । रूपान्तरम् । अर्थभेदम् । पदार्थानामिति द्वन्द्वः । शक्तिवैचित्र्यात् । अनेकशक्तित्वादित्यर्थः । एवञ्च पूर्वत्र तया शक्त्या स्वरूपपरस्यापि उत्तरत्राऽन्यया शक्त्या योग्यतावशादर्थपरत्वे बाधकाभावः । शब्दाधिकारोऽत्र लक्ष्यानुरोधादाश्रीयत इति भावः ॥

॥ वि॰ ॥ भवेद् द्रव्येष्वेतदेवं स्यादिति । स्यादिति संभावनायां लिङ् भवेदिति प्रार्थनायां द्रव्ये विषये पूर्वोक्तार्थकर्तृका संभाविता सत्ता भवत्वित्यर्थः । शब्दभेदनयेऽपि न चतिरित्याह । शब्दस्त्विति । येन येन विशेषेणेति । विशेष्यत इति विशेषः परिच्छेद्यः । तस्य तस्य

॥ कै॰ ॥ शब्दस्त्विति । स्वरितत्वाद्वाक्यान्तरे शब्दान्तरं वाक्यार्थाऽनुग्राहिवस्तुप्रतिपादनयोग्यमनुमीयते । साहृश्यात्तु तत्वाऽध्यवसाय इत्यर्थः । सापेक्षोऽयमिति । स्त्रीलिङ्गेन निर्देशः कृतः । तत्र प्रकृतत्वादन्यपदार्थत्वेन संख्या स्वरितत्वेन विनाऽप्यपेक्ष्यत इत्यर्थः । अध्यर्द्धग्रहणाच्चेति । वार्त्तिके संख्याग्रहणं कर्त्तव्यत्वेन स्थितं तदपेक्षया समुच्चयार्थश्चशब्दः । विध्यर्थञ्चेदं ग्रहणम् । अध्यर्द्धशब्दस्य त्रि-

॥ भा॰ ॥ यदप्युच्यते न खल्वप्यन्यत् प्रकृतमनुवर्त्तनादन्यद्भवति नहि गोधा सर्पन्ती सर्पणादहिर्भवतीति । भवेद् द्रव्येष्वेतदेवं स्यात् । शब्दस्तु खलु येन येन विशेषेणाभिसम्बध्यते तस्य तस्य विशेषको भवति । अथवा सापेक्षोऽयं पणान्तेति निर्देशः क्रियते । नचाऽन्यत्किञ्चिदपेक्ष्यमस्ति तेन संख्यामेवापेक्षिष्यामहे । अध्यर्द्धग्रहणञ्च समासकन्विध्यर्थम् । अध्यर्द्धग्रहणञ्च कर्त्तव्यम् । किं प्रयोजनम् । समासकन्विध्यर्थम् । समासविध्यर्थम् । कन्विध्यर्थञ्च । समासविध्यर्थं तावत् । अध्यर्द्धशूर्पम् । कन्विध्यर्थम् । अध्यर्द्धकम् । लुकि चाऽग्रहणम् । लुकि चाऽध्यर्द्धग्रहणन्न कर्त्तव्यं भवति ॥

॥ कै॰ ॥ भागचतुर्भागादिशब्दवदसंख्यावाचित्वात् । अर्द्धशब्दश्चैकदेशवाची न संख्यावाची । एकदेशादिशब्दवत् । तस्याऽधिशब्देन समासे कृते यौगिकोऽर्थः प्रतीयते न संख्या । अध्यर्द्धशूर्पमिति । अध्यर्द्धेन शूर्पेण क्रीतमिति दिक्संख्ये इत्यनुवर्तमाने तद्धितार्थेतिसमासः । ततः शूर्पादञन्यतरस्यामिति अञष्ठञो वा अध्यर्द्धपूर्वेति लुक् । अध्यर्द्धकमिति । संख्याया अतिशदन्तायाः कन्निति कन् ॥

॥ वि॰ ॥ विशेषकः परिच्छेदकः । तत्परिच्छेदकार्यवानन्य एव शब्दो भवतीत्यर्थः । तदुपपादयति । स्वरितत्वेनेति । अध्यर्द्धस्यासंख्यावाचित्वमुक्तमुपपादयत्यर्द्धशब्दश्चेति ॥



॥ वि॰ ॥ ननु समासकन्सिद्धये विधीयमाना संज्ञा कथं लुको निमित्तमत आह । समासेति । समासपदेन द्विगुसमास एव । तस्यैव संख्याकार्य्यत्वात् । तन्निमित्तकमपि द्विगुनिमित्तकमेवेत्याह । तेन द्विग्विति । भाष्ये अधिकग्रहणञ्चेति । लुग्भिन्नसंख्याकार्य्यसिद्ध्यर्थम-

॥ कै॰ ॥ द्विगोरित्येव सिद्धमिति । समासविध्यर्थमितिसम्बन्धसामान्ये षष्ठी । तेन समासे विधीयमाने समासनिमित्ते चान्यस्मिन् कार्य्ये विधीयमान इत्यर्थः । तेन द्विगुनिमित्तो लुगपि लभ्यते । अन्ये त्वाहुः । अध्यर्द्धशब्दः संख्यावाच्येव । तथाहि गण्यते । एकोऽध्यर्द्धो द्वौ अध्यर्द्धौ अर्द्धतृतीय इति । तन्मते नियमार्थमध्यर्द्धशब्दस्यैव संख्यात्वेन ग्रहणं यथा स्यात् सार्द्धादीनां माभूदिति । वाक्यभेदेन च द्वितीयो नियमस्तस्य च समासकन्विध्यर्थं संख्यात्वन्न कार्य्यान्तरार्थमित्यर्थः । अधि-

॥ भा॰ ॥ अध्यर्द्धपूर्वद्विगोर्लुगसंज्ञायामिति । द्विगोरित्येव सिद्धम् । अर्द्धपूर्वपदश्च पूरणप्रत्ययान्तः । अर्द्धपूर्वपदश्च पूरणप्रत्ययान्तः संख्यासंज्ञो भवतीति वक्तव्यम् । किं प्रयोजनम् । समासकन्विध्यर्थमेव । समासविध्यर्थं कन्विध्यर्थञ्च । समासविध्यर्थन्तावत् । अर्द्धपञ्चमशूर्प्पम् । कन्विध्यर्थम् । अर्द्धपञ्चमकम् । अधिकग्रहणञ्चालुकि समासोत्तरपदवृद्ध्यर्थम् । अधिकग्रहणञ्चालुकि कर्त्तव्यम् । किं प्रयोजनम् । समासोत्तरपदवृद्ध्यर्थम् । समासविध्यर्थमुत्तरपदवृद्ध्यर्थञ्च । समासविध्यर्थं तावत् । अधिकषाष्टिकः । अधिकसाप्ततिकः । उत्तरपदवृद्ध्यर्थम् । अधिकषाष्टिकः । अधिकसाप्ततिकः । अलुकीति किमर्थम् । अधिकषाष्टिकः । अधिकसाप्ततिकः ॥

॥ कै॰ ॥ कषाष्टिक इति । अधिकया षष्ट्या क्रीत इति संख्याविशेषणमधिकशब्दो न संख्येति वचनम् । तद्धितार्थेतिसमासः । प्राग्वतेष्ठञ् । अलुकीति वचनाल्लुकि कर्त्तव्ये संख्यासंज्ञा नास्तीत्यध्यर्द्धपूर्वेतिलुङ् न भवति । ततः संख्यायाः संवत्सरसंख्यस्य चेति उत्तरपदवृद्धिः । ननूत्तरपदवृद्ध्यर्थमितिवचनाल्लुङ् न भविष्यति किमलुकीत्यनेन । नैतदस्ति । अर्हत्यर्थात् परेष्वर्थेषु यः प्रत्ययस्तस्य लुगभावात्तत्रैवोत्तरपदवृद्धिः स्यात् ॥

॥ वि॰ ॥ धिकग्रहणं संख्यासंज्ञायां कर्त्तव्यमित्यर्थः । नन्विति । क्रियादादिषु तद्विधानादिति भावः । परेष्वर्थेष्विति । तमधीष्ट इत्यादिष्वित्यर्थः ॥

॥ वि॰ ॥ नियतसंख्यावाचित्वमिति । नियतविषयपरिच्छेदहेतुत्वरूपसंख्यावाचित्वमित्यर्थः । भाष्ये यदयमिति । नच वैपुल्यादिवाचिनामपि संख्याकार्यापत्तिः । संख्यापदार्थसम्बन्धिबह्वादिग्रहणज्ञापनेन चरितार्थस्य सर्वथा तदसम्बन्धिवैपुल्यादिवाचकग्रहणज्ञापने सामर्थ्याभावात् पूगादिभ्यो डडर्थं बहुगणेति सूत्रे कृतेऽपि ज्ञापकावश्यकत्वमिति भावः । केचित्तु वतोरिड्वेत्यनेन संख्यानकरणत्वाभाववतामप्यन्येषां प्रयोगेषु दृश्यमानसंख्याकार्याणां संख्याकार्यं ज्ञाप्यते । तेनाधिकादीनामपि सिद्धं तदाह । योगापेक्षमिति । प्रयोगापेक्षमित्यर्थः । एतेन पूगादिभ्यः शसादिप्रसङ्गोऽपि वारित

॥ कै॰ ॥ ज्ञापकात्सिद्धमिति । एकादिवन्नियतसंख्यावाचित्वं बह्वादीनां नास्तीति ज्ञापकाश्रयः । योगापेक्षमिति । अस्य योगस्य प्रत्याख्यानादेतद्योगापेक्षमिति न बोद्धव्यम् । किन्तु योगानपेक्षत इति योगापेक्षम् । यदयं बहुपूगगणसङ्घस्य तिथुक्षड्कतीति डटि

॥ भा॰ ॥ बहुव्रीहौ चाग्रहणम् । बहुव्रीहौ चाधिकशब्दस्य ग्रहणं न कर्त्तव्यं भवति । संख्ययाऽव्ययासन्नादूराधिकसंख्याः संख्येय इति । संख्येत्येव सिद्धम् । बह्वादीनामग्रहणम् । बह्वादीनां ग्रहणं शक्यमकर्तुम् । केनेदानीं संख्याप्रदेशेषु संख्यासम्प्रत्ययो भविष्यति । ज्ञापकात्सिद्धम् । ज्ञापकं किम् । यदयं वतोरिड्वेति संख्याया विहितस्य कनो वत्वन्तादिटं शास्ति । वतोरेव तज्ज्ञापकं स्यात् । नेत्याह । योगापेक्षं ज्ञापकम् । ❀ । ष्णान्ता षट् । षट्संज्ञायामुपदेशवचनम् । षट्संज्ञायामुपदेशग्रहणं कर्त्तव्यम् । उपदेशे षकारनकारान्ता संख्या षट्संज्ञा भवतीति वक्तव्यम् ॥

॥ कै॰ ॥ परत आगमं शास्ति तज्ज्ञापयति भवति संख्याकार्यमिति । ❀ । ष्णान्ता । षट्संज्ञायामिति । प्रकृतिप्रत्ययादिविभागेन प्रतिपादनं गुणैः प्रापणमुपदेशः । तेन प्रकृतिप्रत्ययाद्युपदेशे या षकारनकारान्ता संख्या सा षट्संज्ञेत्यर्थः ॥

॥ वि॰ ॥ इत्याहुः । ❀ । ष्णान्ता षट् । स्वरूपप्रतिपत्त्यर्थाऽऽद्योच्चारणस्याऽन्यत्रोपदेशत्वप्रसिद्धेरुपदेशग्रहणे पञ्चादिषु न स्यादत आह । प्रकृतीति । प्रकृतिप्रत्ययविभागेन प्रतिपादनरूपं यद्गुणैः प्रापणं तदुपदेशपदेनात्र गृह्यत इत्यर्थः । एतदभिप्रायेणैवोपदेशेऽजिति सूत्रे वक्ष्यति सङ्कीर्णावुद्देशोपदेशाविति । प्रत्ययाद्युपदेश इति । आदिनाऽऽगमः । यथा सप्तनादौ सप्यशूभ्यां तुट् चेति । प्रकृत्यादिभिरुपदेशे प्रातिपदिकस्वरूपबोधने या ष्णान्ता संख्या निष्पन्ना भवति सेत्यर्थः । यद्यपि शतानीत्यादावपि नुमागमोपदेशेन नान्तसख्यानिष्पत्तिरस्ति तथापि विभक्त्युत्पत्त्यवधिभूतप्रातिपदिकस्वरूपनिष्पादकानामेव तेषां ग्रहणं न तु विभक्तिनिमित्तकानामपि बहिरङ्गत्वादिति भावः ॥



॥ वि॰ ॥ तत्रेति । नुम्नुटोरर्थः प्रयोजनं यस्येति बहुव्रीहिरिति भावः । नन्वन्तरङ्गत्वात्पूर्वमेव षट्त्वं प्रवृत्तमात्वेऽपि बहिरङ्गतया आत्वस्याऽसिद्धत्वान्न निवर्त्स्यतीत्यत आह । कार्यकालेति । सुप उदात्तत्वेति । अष्टन इति प्राप्तेत्यर्थः । आद्युदात्तत्वेति क्वाचित्कोऽपपाठः । यद्वा दीर्घग्रहणं षट्त्वे यथोद्देशपक्षाऽऽश्रयणस्यैव ज्ञापकं तद्द्वारैव च षट्संज्ञाज्ञापकत्वं तत्पक्षे आत्वस्य बहिरङ्गतयाऽसिद्धत्वेन नान्तत्वबुद्ध्या षट्त्वमस्त्येव । स्पष्टं चेदमष्टनो दीर्घादित्यत्र कैयटे । किञ्च यथोद्देशपक्षे षट्त्वं स्थानिवद्भावेनापि सुलभं नकारान्तसंख्यावाचकत्वसमानाधिकरणधर्मविशेषरूपस्य षट्त्वस्य समुदायधर्मत्वेन तन्निमित्तकनुडादेरल्विधित्वाभावादिति बोध्यम् । नचाऽऽत्वस्य नित्यत्वाद् अष्टस्विति प्रयोग एवासङ्गत इति वाच्यम् । तद्वैकल्पिकत्वस्याऽपि ज्ञापनात् ।

॥ कै॰ ॥ नुम्नुडर्थमिति । अर्थशब्दः प्रयोजनवाची तत्र नुमि शतानीत्यादौ षट्संज्ञानिवृत्तिः प्रयोजनम् । नुटि तु विधीयमाने षट्संज्ञाप्रवृत्तिः प्रयोजनम् । अष्टानामिति । परत्वान्नित्यत्वाच्चाऽऽत्वे कृते नुटोऽप्राप्तिः कार्यकालत्वात्संज्ञायाः प्रवृत्तेर्नास्त्यन्तरङ्गत्वम् । अष्टनो दीर्घेति । तत्र हि दीर्घग्रहणमष्टस्विति सुप उदात्तत्वनिवृत्त्यर्थं क्रियते । यदि च कृतात्वस्य षट्संज्ञा न स्यात्तदाऽष्टस्विति परत्वात्

॥ भा॰ ॥ किं प्रयोजनम् । शताद्यष्टनोर्नुम्नुडर्थम् । शतानि सहस्राणि । नुमि कृते ष्णान्ता षडिति षट्संज्ञा प्राप्नोति । उपदेशग्रहणान्न भवति । अष्टानामित्यत्राऽऽत्वे कृते षट्संज्ञा न प्राप्नोति । उपदेशग्रहणाद्भवति । उक्तं वा । किमुक्तम् । इह तावच्छतानि सहस्राणीति सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति । अष्टनोऽप्युक्तम् । किमुक्तम् । अष्टनो दीर्घग्रहणं षट्संज्ञाज्ञापकमाकारान्तस्य नुडर्थमिति ॥

॥ कै॰ ॥ षट्स्वरो झल्युपोत्तममिति भविष्यतीति किं दीर्घग्रहणेन । कृतश्च तत् कृतात्वस्याऽपि षट्संज्ञां ज्ञापयति ततश्चाऽपवादत्वात् षट्स्वरोऽनेन बाध्यत इति दीर्घपक्ष इवादीर्घपक्षेऽपि विभक्तेः स्वरः स्यादिति कर्त्तव्यं दीर्घग्रहणम् ॥

॥ वि॰ ॥ यावता विनाऽनुपपन्नं तत्सर्वं ज्ञाप्यत इति सिद्धान्तात् । परत्वादिति । अष्टन्स्वर आत्वपक्षे चरितार्थः । नच तत्प्रवृत्त्युत्तरमष्टस्वित्यादौ अष्टन्स्वरः स्यादेवेति वाच्यम् । सकृद्गतिन्यायाश्रयणात् । अपवादत्वादिति । नच स्वरप्रवृत्तेः पूर्वमन्तरङ्गस्याऽप्येकादेशस्याऽप्रवृत्तेर्यद्धितुपरमित्यादिसूत्रस्थभाष्यसम्मतत्वेनाऽष्टावित्यादावष्टन्स्वरश्चरितार्थ इति वाच्यम् । अष्टनो घृतादित्वादन्तोदात्तत्वेनैकादेश उदात्तेनेत्येव तत्रान्तोदात्तत्वसिद्धेः । घृतादावस्य पाठे चेदमेव भाष्यं मानम् । गौणे प्रियाष्टाभिरित्यादौ षट्स्वराऽष्टन्स्वरयोः प्रवृत्तिरस्त्येव । तेषामनभिधानाच्च । एतेन कदष्टन्शब्दोऽव्ययपूर्वपदप्रकृतिस्वरेणाऽऽद्युदात्त इति कदष्टावित्यस्यैकादेशस्वरेणाऽसिद्धेस्तत्राऽष्टन्स्वरः सावकाश इति परास्तम् । तस्याप्यनभिधानात् ॥

॥ वि॰ ॥ ननु संख्यावाचित्वे एका इति बहुवचनमनुपपन्नमन्यत्र तु षट्संज्ञायाः प्राप्तिरेव नेत्यत आह । संख्येति । षट्स्वर इति । षट्त्रिचतुर्भ्यो हलादिरित्यनेन । नच षान्तनान्तसाहचार्य्यादाकारान्तो बहुवचनान्त एव गृह्यते इति नायं दोषः । साहचर्यस्य न सर्वत्र

॥ कै॰ ॥ एकास्ता इति । संख्यावाचित्वाऽभ्युपगमवादी व्यत्ययेन बहुवचनं मन्यते । अन्यवाचित्वाश्रयं तूत्तरम् । इह तर्हीति ।

॥ भा॰ ॥ अथवा आकारोऽप्यत्र निर्दिश्यते षकारान्ता नकारान्ता आकारान्ता च संख्या षट्संज्ञा भवतीति । इहापि तर्हि प्राप्नोति । सधमादो द्युम्न एकास्ताः । एका इति । नैष दोषः । एकशब्दोऽयं बह्वर्थः । अस्त्येव संख्यापदम् । तद्यथा । एको द्वौ बहव इति । अस्त्यसहायवाची । तद्यथा । एकाग्नयः । एकहलानि । एकाकिभिः क्षुद्रकैर्जितमिति । असहायैरित्यर्थः । अस्त्यन्यार्थे वर्त्तते । तद्यथा । प्रजामेका रक्षत्यूर्जमेकेति । अन्येत्यर्थः । सधमादो द्युम्न एकास्ताः । अन्या इत्यर्थः । तद्योऽन्यार्थे वर्त्तते तस्यैष प्रयोगः । इह तर्हि प्राप्नोति । द्वाभ्यामिष्टये विंशत्या चेति । एवं तर्हि सप्तमे योगविभागः करिष्यते । अष्टाभ्य औश् । ततः षड्भ्यः । षड्भ्यश्च यदुक्तम् अष्टाभ्योऽपि तद्भवति । ततो लुक् । लुक् च भवति । षड्भ्य इति । अथवा उपरिष्टाद् योगविभागः करिष्यते । अष्टन आ विभक्तौ । ततो रायः । रायश्च विभक्तावाकारादेशो भवति ॥

॥ कै॰ ॥ द्वाभ्यामिति । षट्स्वरः स्यात् । सप्तम इति । अष्टाभ्य इति । कृतात्वानुकरणादौश्त्वविधानसामर्थ्याच्च लुङ् विधीयते ॥

॥ वि॰ ॥ व्यवस्थापकत्वमित्याशयात् । कृतात्वेति । ततश्च कृतात्वस्य कार्यकालपक्षेऽसत्यपि षट्त्वेऽतिदेशान्नुट्सिद्धिरित्यर्थः । औश्त्वेति । अत एव विभक्ते जश्शसोरनुवृत्तिर्न । तथा हि सति लुगेवातिदिश्येतेति तद्वैयर्थ्यं स्पष्टमेव विपरीतन्तु न व्याख्यानात् ॥



॥ वि॰ ॥ ततश्चेति । नच सन्निपातपरिभाषयाऽऽत्वं न स्यात् । अष्टानामितिरूपं तु नुटि नोपधाया इति दीर्घे नलोपे च सिद्धमिति वाच्यम् असिद्धस्यापि तद्विघातकविधेरनयाऽप्रवृत्तिबोधनेन लोपस्याप्यनापत्तेः । अत एव पुग्ह्रस्वत्वस्याऽनिमित्तं स्यात् अदीदपदिति भाष्ये क्रुन्मेजन्तसूत्रे उक्तम् । जानातेर्मित्त्वेन ज्ञापकेन ह्रस्वविषये तदप्रवृत्तिरिति च कैयटो वक्ष्यति । अन्यथा पुगपेक्षया ह्रस्वस्य बहिरङ्गासिद्धतया तस्या अप्राप्तौ भाष्यासङ्गतिः स्पष्टैव । किच्त्वातिदेशिकनिमित्तविघाताभावमादाय नास्या अप्रवृत्तिः । एवं हि लक्ष्मीत्यादौ सम्बुद्धिह्रस्वे कृते संम्बुद्धिलोपे कृतेऽपि प्रत्ययलक्षणेन निमि-

॥ कै॰ ॥ हलीति । ततश्चाष्टानामिति नुटि कृते आत्वं भवति । जश्शसोस्त्वष्टाभ्य इतिकृतात्वनिर्देशाज्ज्ञापकादात्वं भवति । कृतात्वस्य

॥ भा॰ ॥ हलीत्युभयोः शेषः ॥

॥ कै॰ ॥ हि निर्देशस्य प्रयोजनं यत्रात्वं तत्रौश्त्वं यथा स्यादिति । यदि ह्येतत्कृतात्वनिर्देशस्य प्रयोजनं न स्याल्लाघवार्थमष्टभ्य औशिति ब्रूयात् ॥

॥ वि॰ ॥ त्तविघाताभावात् तत्राऽस्या अतिव्याप्तिपरतत्सूत्रस्थभाष्यविरोधः । किञ्च गव्यितेत्यादौ सन्निपातपरिभाषया लोपो नेति सिद्धान्तभङ्गः । यलोपस्य बहिर्भूततज्जनिमित्तकत्वेन बहिरङ्गतयाऽसिद्धत्वात् । वस्तुतस्तु षट्त्वसन्निपातनिमित्तको नुट् नच तस्य सन्निपातस्याऽऽत्वं विघातकं नापि नलोपः स्थानिवद्भावेन तयोः कृतयोरपि षट्त्वसत्त्वात् । अत्र पक्षे दीर्घग्रहणं पुनःप्रसङ्गपक्षे अष्टभिरित्यत्र षट्स्वरे कृतेऽष्टनस्स्वरव्यावृत्त्यर्थं सदात्वविकल्पज्ञापनार्थमिति बोध्यम् । अतिदेशविषयेऽपि तत्प्रवृत्तौ तु सिद्धं न इष्टम् । अजाद्योर्जश्शसोस्तद्योर्आत्वं न स्यादत आह । जश्शसोरिति ॥

॥ वि॰ ॥ भाष्ये प्रियाष्टान इति प्राप्नोतीति । इत्येव प्राप्नोतीत्यर्थः । अन्यथाऽपकर्षाऽभावेऽपि आत्वस्य वैकल्पिकतया तस्य दुर्वारत्वेन भाष्यासङ्गतेः । ननु जसि ज्ञापकसिद्धाऽऽत्वप्राप्तेरौश्‍श्च प्राप्तेराह । यद्येति । बहुवचननिर्देशादिति भावः । षड्भ्य इत्येतत्साहचर्यादस्य प्रधान्ये एव प्रवृत्तिरिति भावः । तस्य च यथा प्रकारान्तरेण गौणेऽप्रवृत्तिस्तथा सर्वादिसूत्रे उपपादयिष्यते । गुडलक्षणैकचक्षुष्कस्याऽत्र पूर्वपक्षित्वमिति

॥ कै॰ ॥ यद्येवमिति । हलादावुच्यमानमात्वमौजसोर्न प्राप्नोति यत्राऽष्टार्थस्य प्राधान्यं तत्रौश्त्वेन भवितव्यम् । तत्रैव चौश्त्वेनात्वमनुमीयत इति जस्यप्यात्वमत्र ज्ञापकान्न प्राप्नोति । विभक्तिमात्रे त्वात्वं

॥ भा॰ ॥ यद्येवं प्रियाष्टौ प्रियाष्टा इति न
सिध्यति । प्रियाष्टानौ प्रियाष्टान इति प्राप्नोति ॥

॥ कै॰ ॥ विधीयमानमौजसोः सिध्यति अष्टन आ विभक्तावित्यत्र पदाङ्गाधिकारे तस्य च तदुत्तरपदस्य चेतितदन्तविधिसद्भावाद्बहुवचननिर्देशाभावाद्गुणभूतेऽप्यष्टार्थे आत्वेन भाव्यमित्यत्राऽपि सिध्यतीतिप्रश्नः ॥

॥ वि॰ ॥ तात्पर्यम् । औश्त्वेनेति । औशेत्यर्थः । त्वप्रत्ययप्रयोगस्तु अनुकरणादनुकार्यरूपे भावे इति बोध्यम् । आत्वेत्यादिभाष्यप्रयोगात् । औश्त्वेनेति । तद्विधायकसूत्रस्थात्वनिर्देनेत्यर्थः । अत्र । गौणे । ज्ञापकादिति । अस्य प्राप्तियोग्यमपीति शेषः । क्वचित्तु ज्ञापकादिति न दृश्यते । नन्वपकर्षपक्षेऽपि अष्टनो विहितमात्वं कथं तदन्ते स्यादत आह । पदाङ्गेति । बहुवचननिर्देशाभावादिति । साहचर्याभावादित्यपि बोध्यम् ॥



॥ वि॰ ॥ लक्षणैकचक्षुष्कस्यैवोत्तरमिति मत्वा व्याचष्टे । तत्र माभूदात्वमिति । पक्षान्तरेऽपि अनभिधानादात्वाऽभाव एव बोध्यः । यत्तु भवत्येवात्रात्वमित्यर्थ इति । तन्न । अपकर्षपक्षे आत्वसाधकोपायाभावेन फलभेदापत्तेः । नन्वयं भाष्यार्थो न युक्तस्तथा हि सतीष्यत एवैतदित्येव ब्रूयात् किञ्चाऽप्रयुक्ते इति वाक्यशेषोऽसङ्गतः प्रयुक्तेऽपि लक्षणानतिक्रमसत्त्वात् प्रयुक्तानां हीदमन्वाख्यानमितिभाष्योक्तेश्चेत्यरुचेराह । नैव वेति । लक्षणस्याभावः । अलक्षणं तस्य योग्यता यथालक्षणमित्यव्ययीभावः । अप्रयुक्ते लक्षणाभावस्य योग्यता नतु लक्षणस्येत्यर्थः । एवञ्च तादृशप्रयोगोऽसाधुरिति भावः । किञ्च भाष्यकारस्य लक्ष्यैकचक्षुष्कतया इयमेव व्याख्या ज्यायसी । एवञ्च हरदत्तादीनां प्रियाष्टन्शब्दादिषु आत्वादिप्रवृत्तिविचारोऽन्यश्च

॥ कै॰ ॥ यथालक्षणमिति । यस्य विशिष्टः प्रयोगो न स्मर्य्यते नाऽपि प्रयोगनिषेधस्मृतिः । तद्यथालक्षणमनुगन्तव्यम् । तदत्र माभूदात्वमित्यर्थः । नैव वा लक्षणमप्रयुक्ते प्रवर्तते । प्रयु-

॥ भा॰ ॥ यथालक्षणमप्रयुक्ते ॥ ❀ ॥ डति च । इदं डति-
ग्रहणं द्विः क्रियते संख्यासंज्ञायां षट्संज्ञायां च । एकं शक्यमकर्त्तुम् ।
कथम् । यदि तावत् संख्यासंज्ञायां क्रियते षट्संज्ञायां न करिष्यते ॥

॥ कै॰ ॥ क्तानामेव लक्षणेनाऽन्वाख्यानात् ॥ ❀ ॥ डति च । यदि तावदिति । तत्र वतुना साहचर्यात्तद्धित एव डतिर्गृह्यते न तु पातेर्डतिः कृत् ॥

॥ वि॰ ॥ तत्प्रयोगविचारः प्रामादिक एवेत्यवधेयम् । एतेन पूर्वव्याख्यानेऽस्य साधुत्वमुत्तरव्याख्यानेऽसाधुत्वमितिविरुद्धार्थव्याख्यानद्वयमयुक्तम् । किञ्च अष्टाभ्य इति निर्देशात् कृताकारादेवाष्टनो जश्शसोरौशितितद्विषयेऽप्यात्वम् । अन्यथा अष्टन इत्येव ब्रूयादितिसाप्तमिकभाष्ये एकवचननिर्देशात् प्रधान एवौशात्वे इति प्रश्नाशयोऽपि चिन्त्य इत्यपास्तम् । गौणे प्रियाष्टादीनामनभिधानमित्यवत्यसिद्धान्तानुसारेण तद्भाष्यसत्त्वात् । अरुच्यैव व्याख्यानान्तरप्रवृत्तेश्च ॥ ❀ ॥ डति च । भाष्ये यदि तावदिति । ष्णान्ता च षडिति सूत्रं पाठ्यं तत्र चकारात्स्वरितलिङ्गादनुवर्त्तमानं डतिग्रहणं सम्बध्यत इति भावः । न तु पातेरिति । एवञ्चार्थाधिकारादिहाऽपि तद्धितस्यैव ग्रहणमिति भावः । संख्येतिमहासंज्ञासामर्थ्यात्तत्र संख्याप्रश्नविषयडतेरेव ग्रहणमित्यपि बोध्यम् ॥

॥ वि० ॥ भाष्ये डति चेत्यत्रेति । चकारात्षट्संज्ञानन्तरं करणाज्ज्ञाऽनेन संज्ञाद्वयस्यापि विधानमित्यर्थः । अन्वर्थत्वाच्चेति । संख्यायतेऽ-
नयेति हि सः । नच तस्यार्थस्य डत्यन्ते सम्भवः संख्याप्रश्नविषयत्वं तु न तदर्थ इति चिन्त्यमेतत् । तस्मादुणादीनामव्युत्पन्नत्वान्न तत्र डतिरिति
तस्याऽग्रहणमित्युचितम् । व्युत्पत्तावपि पातेः कतिनापि सिध्यतीति न तत्र डतिनियम इति बोध्यम् । संख्याप्रश्नेति । सन्नियोगशिष्टन्यायाच्च षट्संज्ञाऽपि तस्ये-

॥ कै० ॥ अथेति । तत्र संख्याया अनुवर्त्तनादन्वर्थत्वाच्च संज्ञायाः संख्याप्रश्नविषय एव डतिर्गृह्यते न त्वौणादिको
डतिः ॥ ❁ ॥ क्तक्तवतू निष्ठा । इहाऽनुबन्धाः कार्यार्थमुपादीयन्ते । प्रयोगस्त्वेषां लुप्तत्वान्नास्ति । यत्र च
सारूप्यं तत्र सन्देहः । कथमस्याऽनुबन्धकार्यं कृतम् अस्य तु न कृतमिति पूर्वपक्षाऽभिप्रायः । सिद्धान्तवादी तु मन्यते ।

॥ भा० ॥ कथम् । ष्णान्ता षडित्यत्र डतीत्यनुवर्तिष्यते । अथ षट्संज्ञायां क्रियते संख्यासंज्ञायां न
करिष्यते । डति चेत्यत्र संख्यासंज्ञाऽप्यनुवर्तिष्यते ॥ ❁ ॥ क्तक्तवतू निष्ठा । निष्ठासंज्ञायां
समानशब्दप्रतिषेधः । निष्ठासंज्ञायां समानशब्दानां प्रतिषेधो वक्तव्यः । लोतो गर्त्त इति । निष्ठासं-
ज्ञायां समानशब्दाप्रतिषेधः । निष्ठासंज्ञायां समानशब्दानामप्रतिषेधः । अनर्थकः प्रतिषेधोऽप्रतिषेधः ॥

॥ कै० ॥ अभुवेणानुबन्धेन नियतसन्निधाना अर्थाः कारककालादयो लक्ष्यन्ते । तद्दर्शनादनुबन्धस्मृतौ च तल्लक्षितानां
कार्याणां साधुत्वं विज्ञायते । तत्र यदा देवदत्तेन लूनः शालिरिति कश्चित्प्रयुङ्क्ते तदा लक्षणज्ञः कर्मभूतकालाऽवग-
मात् क्तप्रत्ययं मन्यते । यदा तु लोतमालभेतेतिप्रयोगस्तदा मेषवाची लोतशब्दस्तन्प्रत्ययान्तः प्रयुक्त इति मन्यते ॥

॥ वि० ॥ वेति भावः ॥ ❁ ॥ क्तक्तवतू । अनुबन्धानां नित्यलुप्ततया विशेषणत्वासंभवादुपलक्षणत्वेन तशब्दमात्रस्योपलक्ष्यत्वं मन्वानो वार्त्तिकमार-
भत इत्याह । इहेति । सारूप्यम् । प्रयोगे इति शेषः । मन्यत इति । निश्चिनोतीत्यर्थः । नियतं सन्निधानं येषामिति विग्रहः । कारकेति । न तशब्दमात्रं
लक्ष्यं किन्त्वर्थविशेषाद्यवच्छिन्नमितिभावः । तद्दर्शनादिति । कालादिज्ञानादित्यर्थः । तन्प्रत्ययान्त इति । ककाराऽनुपलक्षितः प्रयुक्त इति निश्चिनोतीत्यर्थः ॥



॥ वि० ॥ भाष्ये नष्टं गृहमिति । अज्ञातमित्यर्थः । नष्टः प्रत्यय इति । अज्ञातानुबन्धः प्रत्ययो भवतीत्यर्थः । सानुबन्धकस्येति ।
पूर्वं यः ककारवांस्तस्येत्यर्थः । उद्देशम् । ऊर्द्धदेशम् । सिद्धविपर्यासश्चेति । चस्त्वर्थे सिद्धस्तु विपर्यास इत्यर्थः । यद्यपि विपर्यासो

॥ कै० ॥ सिद्धविपर्य्यास इति । सिद्धो विपर्य्यासः संशय इत्यर्थः । इदं तद्गृहमिति । बुद्धेरनवस्थितत्वमनेन प्रति-

॥ भा० ॥ निष्ठासंज्ञा कस्मान्न भवति । अनुबन्धोऽन्यत्वकरः । अनुबन्धः क्रियते । सोऽन्यत्वं
करिष्यति । अनुबन्धोऽन्यत्वकर इति चेन्न लोपात् । अनुबन्धोऽन्यत्वकर इति चेत्तन्न । किं कार-
णम् । लोपात् । लुप्यतेऽत्रानुबन्धः । लुप्तेऽत्रानुबन्धे नान्यत्वं भवति । तद्यथा । कतरद्देवदत्तस्य
गृहम् । अदो यत्राऽसौ काक इति । उत्पतिते काके नष्टं तद्गृहं भवति । एवमिहापि लुप्तेऽनुबन्धे नष्टः
प्रत्ययो भवति । यद्यपि लुप्यते जानाति त्वसौ सानुबन्धकस्येयं संज्ञा कृतेति । तद्यथा । इतरत्रापि
कतरद्देवदत्तस्य गृहम् । अदो यत्रासौ काक इति । उत्पतिते काके यद्यपि नष्टं तद्गृहं भवति ।
अन्ततस्तमुद्देशं जानातीति । सिद्धविपर्यासश्च । सिद्धश्च विपर्यासः । यद्यपि जानाति सन्देहस्तु तस्य
भवति अयं स तशब्दो लोतो गर्त्त इति अयं स तशब्दो लूनो गीर्ण इति । तद्यथा । इतरत्रापि
कतरद्देवदत्तस्य गृहम् अदो यत्रासौ काक इति । उत्पतिते काके यद्यपि तमुद्देशं जानाति सन्देहस्तस्य
भवति इदं तद्गृहमिदं तद्गृहमिति । एवन्तर्हि कारककालविशेषात् सिद्धम् । कारककालविशेषावु-
पादेयौ । भूते यस्तशब्दः कर्मणि कर्त्तरि भावे चेति ॥

॥ कै० ॥ पाद्यते । नत्वेतद् द्विर्वचनं वीप्साद्यर्थाभावात् ॥

॥ वि० ॥ भ्रमात्मकनिश्चयस्तथाप्ययथार्थत्वसाम्यादिह संशयोऽभिप्रेत इत्याह । संशय इति । बुद्धेरनवस्थितत्वमिति । सन्देहाभिनय इत्यर्थः । वीप्सा-
दीति । पदार्थविषयव्याप्तीच्छा प्रयोक्तृधर्मो हि वीप्सेति भावः । भाष्ये कारकेति कालातिरिक्तप्रत्ययार्थपरम् ॥

॥ वि० ॥ वेदिकां पुण्डरीकं वेति भाष्ये । एवञ्च साक्षादितरव्यावर्त्तकं विशेषणं स्वोपस्थाप्यार्थद्वारा इतरव्यावर्त्तकमुपलक्षणमिति भावः । प्राकीर्ष्टेति । यद्यप्यत्र निघातप्रवृत्तेर्न निष्ठात्वकृतो विशेषस्तथापि यत्प्राकीर्ष्टेत्यस्योपलक्षणमिदम् । अत्र हि निपातैर्यद्यदीति निघाते निषिद्धे निष्ठा च द्व्यजनादिति नित्यमाद्युदात्तत्वं स्यात् । असंज्ञायामपि तत्प्रवृत्तिं मन्यते आदिः सिच इति विकल्पस्त्विष्यत इति भावः । सिचोऽत्र लुप्तत्वेना-

॥ कै० ॥ प्राकीर्ष्टेति । अत्र भूतकालोऽस्तीति भावः । दृश्यन्तेऽत्रेति । सिजादीत्यादिशब्दः प्रकारे तत्र प्राभित्त घटं देवदत्त इति प्रयोगे कर्तृकत्वाद्यवगमाल्लुङन्तस्यायं प्रयोगो न निष्ठान्तस्येति प्रतिपद्यते । ञिक्ष्विदिधृषिभ्यः क्त इत्यस्य निष्ठा-

॥ भा० ॥ तद्यथा । इतरत्रापि य एष मनुष्यः प्रेक्षापूर्वकारी भवति सोऽध्रुवेण निमित्तेन ध्रुवं निमित्तमुपादत्ते वेदिकां पुण्डरीकं वा । एवमपि प्राकीर्ष्टेत्यत्रापि प्राप्नोति । लुङि सिजादिदर्शनात् । लुङि सिजादिदर्शनान्न भविष्यति । यत्र तर्हि सिजादयो न दृश्यन्ते । प्राभित्तेति । दृश्यन्तेऽत्रापि सिजादयः । किं वक्तव्यमेतत् । नहि । कथमनुच्यमानं गंस्यते । यथैवायमनुपदिष्टान् कारककालविशेषानवगच्छति । एवमेतदप्यवगन्तुमर्हति । यत्र सिजादयो नेति ॥ इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये प्रथमाध्यायस्य प्रथमे पादे पञ्चममाह्निकम ॥ ❀ ॥

॥ कै० ॥ संज्ञा न भवति । उणादीनामव्युत्पन्नत्वाद्बाहुलकाद्वा अन्यथा निष्ठा च द्व्यजनादित्याद्युदात्तत्वं स्यात् ॥ इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे प्रथमाध्यायस्य प्रथमे पादे पञ्चममाह्निकम् ॥ ❀ ॥

॥ वि० ॥ दर्शनादाह । आदिशब्द इति । ञिक्ष्विदधृषीति । यद्यप्यत्रोपलक्ष्यकालकारकाद्यभावस्तथापि गुणाभावदर्शनात् क्तोऽयमित्यवगतिः । एवञ्च सनादिविधावित्संज्ञकनकारोपलक्षितः प्रकृत्यर्थानुवादी इच्छार्थो वा सकारो भवतीत्यर्थः । ऋनुवादे रुन्यत इत्यादौ तादृशनकारोपलक्षिते सकारे इत्यर्थः । अत एवाऽऽटश्चेत्यादेः सार्थकम् । अन्यथा यत्र सूत्रे आट् न तत्र वृद्धिरिष्यते । यत्र चेष्यते प्रयोगे न तत्राडिति तद्वैयर्थ्यं स्पष्टमेवेतिसर्वमवदातम् ॥ इति शिवभट्टसुतसतीगर्भजनागोजिभट्टविरचिते महाभाष्यप्रदीपोद्द्योते प्रथमाध्यायस्य प्रथमे पादे पञ्चममाह्निकम् ॥ ❀ ॥



॥ वि० ॥ सर्वादीनि स । नन्विति । आदिशब्दस्य नित्यपुंस्त्वेन एकवचनान्तत्वेन च समासान्तरे नपुंसकत्वबहुत्वाऽनुपपत्तेरिति भावः । प्रकृते तत्पुरुषः कर्मधारयः । दृष्टान्ते षष्ठीतत्पुरुषः । नत्वस्येति । कर्मधारयघटकस्येत्यर्थः । बहुव्रीहेरेव शेषे युक्तिमाह । तत्र नपुंसकमिति । तत्पुरुषस्तु पुंल्लिङ्ग इति भावः । स्वरभिन्नानामिति । स्वरेण विलक्षणानां सरूपाणां मध्ये उत्तरसूत्रेण यस्य स्वरविधिरित्यर्थः । कर्मधारयः

॥ कै० ॥ सर्वादीनि सर्वनामानि । कोऽयमिति । ननु नपुंसकबहुवचननिर्देशादेव बहुव्रीहिनिश्चयात्समासान्तराशङ्कैव नास्तीति प्रश्नाऽनुपपत्तिः । एवं तर्हि किमयं बहुव्रीहिरेवाऽऽहोस्विद्बहुव्रीहितत्पुरुषयोरेकशेषः । यथा कतन्तेभ्यः कखादिभ्य इति चेति प्रश्नः । तत्र सारूप्यार्थं सर्वश्चासावादिश्च सर्वादिरित्यत्राऽऽदिशब्द उपादीयते नत्वस्य प्रयोजनान्तरमस्तीति तत्र

॥ भा० ॥ सर्वादीनि सर्वनामानि । सर्वादोनीति कोऽयं समासः । बहुव्रीहिरित्याह । कोऽस्य विग्रहः ॥

॥ कै० ॥ नपुंसकमनपुंसकेनेति वा स्वरभिन्नानां यस्योत्तरस्वरविधिः स शिष्यत इति वा बहुव्रीहेश्शेषः । वक्ष्यमाणेन न्यायेन विनाऽप्येकशेषेण सर्वशब्दस्य संज्ञा सिध्यतीति मत्वाह । बहुव्रीहिरिति । एवमपि सन्देहः किं प्राथमकल्पिको बहुव्रीहिः । अथ बहुव्रीहितत्पुरुषयोरेकशेषेण बहुव्रीहिरिति पृच्छति । कोऽस्य विग्रह इति ॥

॥ वि० ॥ समासस्येत्यन्तोदात्तः । परस्तु बहुव्रीहौ प्रकृत्येति । परशास्त्रेणाऽन्तोदात्तपूर्वपद इति बोध्यम् । तत्राद्ये सर्वशब्दस्य संज्ञा न प्राप्नोति । अन्त्ये तु सिध्यतीति विशेषः । वक्ष्यमाणेन । तद्गुणसंविज्ञानेन । प्राथमकल्पिकः । एकशेषनिरपेक्षत्वेन प्रथमप्रतीतः । वक्ष्यमाणन्यायानभिज्ञस्य प्रश्न इति भावः ॥

॥ वि॰ ॥ विग्रहप्रश्नोत्तरे तानीत्याद्यधिककथनमयुक्तमत आह । अन्यपदार्थस्येति । नेष्यत इति । प्रथमान्तानामन्यपदार्थप्राधान्ये बहुव्रीहिविधानादिति भावः । नन्वेवमपि तानीत्येव सिद्धे इमानीति व्यर्थमत आह । सर्वनामद्वयेति । सर्वनामद्वयोपादानेन तद्गुणसंविज्ञानं सूचयतीत्यन्वयः । प्रत्यक्षेति । उद्भूतावयवभेदस्य गणपठितस्य समुदायस्येदमा परामर्शात्तत्र च सर्वशब्दस्यान्तर्भावादिति भावः । गुणत्वं दर्शयति ।

॥ कै॰ ॥ तानीमानीति । अन्यपदार्थस्य प्राधान्यं प्रदर्श्यते । अन्यथा यथा चित्रा गावोऽस्येति गवां विशेष्यत्वं तद्वतश्च विशेषणत्वमवगम्यते तथेहाऽप्यवगम्येत । अत्र चार्थे बहुव्रीहिर्नेष्यते । यदा तु स्वामिनः प्राधान्यं गवां विशेषणभावस्तदा तु बहुव्रीहिः । अत एव चित्रा गावो यस्य स चित्रगुरिति स्वामिनः प्राधान्यं प्रदर्श्यते । तानीमानीति सर्वनामद्वयोपादानेन

॥ भा॰ ॥ सर्वशब्द आदिर्येषां तानीमानीति । यद्येवं सर्वशब्दस्य सर्वनामसंज्ञा न प्राप्नोति । किं कारणम् । अन्यपदार्थत्वाद्बहुव्रीहेः । बहुव्रीहिरयमन्यपदार्थे वर्त्तते । तेन यदन्यत्सर्वशब्दात्तस्य सर्वनामसंज्ञा प्राप्नोति । तद्यथा । चित्रगुरानीयतामित्युक्ते यस्य ता गावो भवन्ति स एवानीयते न गावः । नैष दोषः । भवति हि बहुव्रीहौ तद्गुणसंविज्ञानमपि । तद्यथा । चित्रवाससमानय लोहितोष्णीषा ऋत्विजः प्रचरन्तीति । तद्गुण आनीयते तद्गुणाश्च प्रचरन्ति ॥

॥ कै॰ ॥ प्रत्यक्षविषयत्वादिदंशब्दस्य गणपठितेषु सर्वशब्दस्यान्तर्भावात्तद्गुणसंविज्ञानं सूचयति । तस्याऽन्यपदार्थस्य गुणा उपलक्षणानि तेषामपि कार्ये संविज्ञानं तद्गुणसंविज्ञानम् ॥

॥ वि॰ ॥ उपलक्षणानीति । प्रकारतयाऽन्वयीनीत्यर्थः । कार्ये संविज्ञानमिति । तच्च द्वेधा क्वचिद्विशिष्टस्य क्रियायां सन्निधानमात्रेण । यथा क्रियायोगाभावेऽपि शुक्लवाससं भोजयेति । क्वचित्तु विशेषणस्याऽपि क्रियायोगेन शुक्लवाससं पश्येति । कार्यं यत्र तद्भावभावि तत्र तद्गुणत्वमित्यर्थः फलितः । एवं तद्गुणसंविज्ञाने तद्विशिष्टस्येतरान्वयः । अन्यच्च तदुपलक्षितस्येत्यपि भेदः । अयं शब्दशक्तिस्वभावगम्यः ॥



॥ वि॰ ॥ अन्तर्भावः कार्यित्वं कार्यसन्निहितत्वं वा । एवञ्च यत्र संयोगसमवायान्यतरसम्बन्धेन सम्बन्ध्यन्यपदार्थस्तत्र तद्गुणः । अन्यथाऽतद्गुण इत्युत्सर्ग इति गोलार्थः । ननु प्रकृते न संयोगो नाऽपि समवाय इत्यत आह । इहापीति । एवञ्च समवायेन सम्बन्धिनोऽन्यपदार्थत्वेन तद्गुणत्वमेवोचितमित्यर्थः । बहुवचनोपपत्तये आहोद्भूतावयवभेद इति । अवयवगतसंख्याऽऽरोपेण बहुवचनमितिभावः । नन्वेवं समुदायस्यैव संज्ञा स्यादत आह । तस्य चेति । युगपत्प्रयोगाभावात् पृथक्प्रयोगसत्त्वाच्च कार्यार्थिया संज्ञया तदन्तर्भूतानामेव प्रवर्तितव्यमित्यन्वयः । पृथक्प्रयोगत्वादिति

॥ कै॰ ॥ तत्र चित्रगुरानीयतामिति स्वस्वामिसम्बन्धः षष्ठ्यर्थ इति स्वविशेषोपलक्षितस्य स्वामिन एवानयनं न तु गवाम् । दण्डी विषाणी चानीयतामित्यत्र तु संयोगसमवायलक्षणेन सम्बन्धेन सम्बन्धिनि कार्ये विज्ञायमाने उपलक्षणस्याऽप्यन्तर्भावो भवति । इहाप्यादिशब्दस्याऽवयववाचित्वाद् उद्भूताऽवयवभेदस्समुदायस्समासार्थः । तस्य च समुदायस्य युगपल्लक्ष्ये प्रयोगाभावात्तदन्तर्भूतानामेव पृथक्प्रयोगत्वात्कार्यार्थिया संज्ञया भवितव्यमिति सर्वशब्दस्यापि सा सिध्यति । यथा देवदत्तशालायां ब्राह्मणा आनीयन्तामित्युक्ते देवदत्तोऽपि यदि ब्राह्मणो भवति स्वशालास्थश्च तदा सोऽप्यानीयत एव ॥

॥ वि॰ ॥ पाठे बहुव्रीहिस्त्वो बोध्यः । सिध्यतीति । विनिगमनाविरहादिति भावः । नन्वेवं सर्वशब्दस्य सम्बन्धिविशेष्यत्वाभावात्कथं तस्य सर्वनामत्वमत आह । यथेति । स्वरूपेणोपलक्षणमपि सर्वशब्दः समुदायान्तर्भूततया सम्बन्धिविशेष्योऽपि । यथा देवदत्तत्वेन विशेषणमपि देवदत्तो ब्राह्मणत्वेन विशेष्य इति भावः । अन्यपदार्थत्वादिति भाष्यस्यान्यः पदार्थो यस्य तत्त्वादित्यर्थः ॥

॥ वि॰ ॥ ननु सर्वनामशब्दो यदि व्युत्पन्नस्तदा संज्ञोपसर्जनप्रतिषेधवार्तिकारम्भानुपपत्तिर्नो चेत्पूर्वोत्तरपदविभागाभावात् पूर्वपदादिति णत्वाऽप्राप्तिरत आह । राजेति । सत्त्वमन्वर्थसंज्ञायाम् । असत्त्वं गुडरूढे रथन्तरादौ । आश्रित्येति । द्वितीयविषये आरोप्येत्यर्थकम् । सामविशेषे रथकरणकतरणकर्तृत्वमारोप्य साधुत्वान्वाख्यानं यथा तथा सर्वार्थवाचकत्वरूपार्थमारोप्य प्रकृतेऽपीति न वार्तिकाऽनुपपत्तिर्नापि णत्वाप्राप्तिरिति भावः । ननु शब्दनित्यताविरोधात् कथमसतो णत्वस्याऽऽपादनमत आह । प्रयोगे चेति । ननु संज्ञा चेत् कृत्रिमा तदा शब्दार्थसम्बन्धनित्यताहानिरसंज्ञा चेन्न णत्वप्राप्तिरत आह । सर्वार्थेति । शक्तिनियमनं शक्तिसम्बन्धबोधनमेवेत्याहुः । नच भ्वोऽसंज्ञायामितिसूत्रे भाष्ये यदेतत्संज्ञायां

॥ कै॰ ॥ णत्वं प्राप्नोतीति । राजपुरुषादिवत्संज्ञाशब्दा अपि शास्त्रप्रक्रियायां सन्तमसन्तं वाऽवयवार्थमाश्रित्य व्युत्पाद्यन्त इति णत्वप्रसङ्गः । प्रयोगे च सणत्वा अणत्वाश्च नित्या एव शब्दाः । तत्र संज्ञायां सणत्वा एव

॥ भा॰ ॥ इह सर्वनामानीतिपूर्वपदात्संज्ञायामग इति णत्वं प्राप्नोति तस्य प्रतिषेधो वक्तव्यः ॥

॥ कै॰ ॥ साधवोऽसंज्ञायाम् अणत्वा एवेति शास्त्रव्यापारासत्त्वं प्राप्नोत्येव । सर्वार्थाभिधानयोग्यशब्दस्य शक्तिनियममात्रं संज्ञाकरणमितिशब्दार्थसम्बन्धनित्यत्वस्याऽपि न विरोधः ॥

॥ वि॰ ॥ विधीयते । तत्र न संज्ञायामभिधेयायामित्यर्थः किन्तर्हि तत्तत्कार्यविशिष्टेन चेत्संज्ञा गम्यते इत्यर्थ इति वक्ष्यते ततश्चात्र कथं णत्वप्राप्तिः । न हि कृतणत्वेन संज्ञावगतिरत एव रघुनाथादिशब्दे न णत्वमिति वाच्यम् । आधुनिकविनियोगस्थले शास्त्रानुगतस्यैव विनियोग उचित इत्याशयात् । अत एव महत्याः संज्ञायाः करणे एतत्प्रयोजनमिति वक्ष्यमाणं सङ्गच्छते । अनादिविनियुक्तसंज्ञास्थले तु यथाविनियुक्तानामेव साधुत्वमिति रघुनाथादौ णत्वाभावोऽध्वपरिमाणसंज्ञाभूतगव्यूतिशब्दे च न वलोपः संज्ञात्वभङ्गापत्तेरिति दिक् ॥



॥ वि॰ ॥ सौचत्वादित्येव कुतो नोक्तमत आह । लोकेति । साम्यं दर्शयति । सर्वत्रैवेति । निपातनं चेति । भावाभावयोरेकत्र

॥ कै॰ ॥ निपातनादिति । लोकेऽप्ययं णत्वरहित एव प्रयुज्यते तस्याऽत्र प्रसङ्गेन साधुत्वं प्रतिपाद्यते । किमेतदिति । भवत्वस्य साधुत्वं णत्वप्रतिषेधे त्वस्य तात्पर्याभावाद्विकल्पः प्राप्नोतीति भावः । इतरः प्रतिषेधेन साम्यं प्रतिपादयितुं

॥ भा॰ ॥ सर्वनामसंज्ञायां निपातनाणत्वाभावः । सर्वनामसंज्ञायां निपातनाणत्वं न भविष्यति । किमेतन्निपातनं नाम । अथ कः प्रतिषेधो नाम । अविशेषेण किञ्चिदुक्त्वा विशेषेण नेत्युच्यते । तत्र व्यक्तमाचार्यस्याभिप्रायो गम्यते इदं न भवतीति । निपातनमप्येवंजातीयकमेव । अविशेषेण णत्वमुक्त्वा विशेषेण निपातनं क्रियते । तत्र व्यक्तमाचार्यस्याऽभिप्रायो गम्यते इदं न भवतीति । ननु च निपातनाच्चाऽणत्वं स्यात् यथाप्राप्तं च णत्वम् ॥

॥ कै॰ ॥ पर्यनुयुङ्क्ते । अथ क इति । सर्वत्रैव ह्यप्राप्त्यनुमानं बाधः । निपातनं चाऽपि णत्वाप्राप्त्यनुमानमिति भावः । ननु चेति । प्रतिषेधस्य निवृत्तावेव तात्पर्यम् । निपातनस्य तु तद्रूपसाधुत्वप्रतिपादने न तु रूपान्तरनिवृत्ताविति भावः ॥

॥ वि॰ ॥ विरोधादिति भावः । नन्विति । प्रयोगभेदेन च भावाभावविरोधपरिहार इति भावः ॥

॥ वि० ॥ भाष्ये किमन्येऽपीति । अन्ये विधयः किमेवम् एवं जातीया इति वक्ष्यमाणाऽभिप्रायेण प्रश्नः । आशयानभिज्ञ उत्तरयति । भवन्तीति । यथा स्थानिवदादेश इत्येतद्विषये स्थानिप्रयुक्तं भवति यथाप्राप्तस्याऽऽदेशप्रयुक्तस्य न निवृत्तिरिति भावः । शङ्कते । इको यणिति । अस्य यदि भवन्तीत्यादिः । ततश्च संहितेति । स्थानिनो निवृत्तिर्नाम तत्साधुत्वबुद्धेर्निवृत्तिः । सा च संहितायां शाकल्याभावे इति भावः । प्रस्तीर्यन्त इति ।

॥ कै० ॥ इको यणचीति । यणो हि साधुत्वं प्रतिपाद्यते नत्विग्निवृत्तिरित्यर्थः । षष्ठ्याऽचेति । ततश्च संहिताविषये स्वाभाविकोऽप्रयोग इकः षष्ठीनिर्देशेन प्रतिपाद्यते । यथा दर्भाणां स्थाने शरैः प्रस्तरितव्यमिति न तत्र दर्भाः प्रस्तीर्यन्ते ।

॥ भा० ॥ किमन्येऽप्येवं विधयो भवन्ति । इको यणचीति वचनाद् यण् स्यात् । यथाप्राप्तश्चेक् श्रूयेत । नैष दोषः । अस्त्यत्र विशेषः । षष्ठ्याऽत्र निर्देशः क्रियते । षष्ठी च पुनः स्थानिनं निवर्तयति । इह तर्हि कर्तरि शप् दिवादिभ्यः श्यन्निति वचनाच्च श्यन् स्यात् । यथाप्राप्तश्च शप् श्रूयेत । नैष दोषः ॥

॥ कै० ॥ इह तर्हीति । विकल्पः प्राप्नोतीति भावः । समुच्चयस्तु न भवति एकेन परदेशस्याऽवष्टब्धत्वाद्धातुसार्व-धातुकयोश्चाऽर्थाभिधाने एकेनैव साहायकस्य सम्पादनात् ॥

॥ वि० ॥ किन्तु तत्प्रसङ्गे शराः प्रस्तीर्यन्त इति शेषः । तथाच स्थानषष्ठीनिर्देशे उभयत्रापि तात्पर्यमिति भावः । विकल्प इति । स्थानषष्ठ्यभावेनोभयत्र तात्पर्याभावादिति भावः । परदेशस्येति । विकरणविधौ धातोः परश्चेत्यधिकारेण धातोः परो विकरणः प्रयोक्तव्य इत्यर्थादिति भावः । ननु धातोः परो विधातव्य इत्यर्थे पूर्वं श्यनि विहिते पश्चात् शबपि स्यात् तिङ्विकरणवत् सार्वधातुक इति विषयसप्तमी स्यादत आह । धात्विति । साहायकम् । सहायकार्य्यम् ॥



॥ वि० ॥ ननु श्यन्नादीनामादेशत्वे स्थानिवद्भावात्पित्त्वे करोतीत्यादौ विकरणस्याऽनुदात्तत्वं स्याद् नच सतिशिष्टस्वरबलीयस्त्वस्य विक-रणान्यविषयत्वेनोप्रत्ययस्य कथमुदात्तत्वं सिद्धान्तेऽपीतिवाच्यं सार्वधातुकस्वरापेक्षयैव विकरणस्वरस्य तेन दुर्बलत्वकथनादत आह । श्यनश्च शित्करणमिति । नच शित्त्वं नियमार्थं स्यात् शिदेव न पिदिति । शित्त्वस्य नियमार्थत्वकल्पनापेक्षयाऽतिदेशबाधस्यैवौचित्यात् । अतिदेशबाधश्च तत्राप्यावश्यक एव । क्वचित्तु नित्करणमिति पाठः । तद्धि प्रत्ययाद्युदात्तत्वबाधेन ञ्नितीत्यनेन निदन्तस्याद्युदात्तत्वाय स्थानिवत्त्वात्पित्त्वेनानुदात्तत्वे तु लसार्वधातुकस्याऽपि

॥ कै० ॥ शबादेशा इति । श्यनश्च शित्करणं ज्ञापकं स्थानिवद्भावाभावस्य । तेन करोतीत्युप्रत्ययस्याऽपित्त्वादनुदात्तत्वं न भवति कुर्वतीत्यत्र शप्श्यनोर्नित्यमिति नुमागमो न भवति । आदित्यधिकाराद्वा । रुधादिभ्यः श्नमित्यत्र रुधादीनां

॥ भा० ॥ शबादेशाः श्यन्नादयः करिष्यन्ते । तत् तर्हि शपो ग्रहणं कर्त्तव्यम् । न कर्तव्यम् । प्रकृ-तमनुवर्तते । क्व प्रकृतम् । कर्तरि शबिति । तद्वै प्रथमानिर्दिष्टम् । षष्ठीनिर्दिष्टेन चेहार्थः । दिवा-दिभ्य इत्येषा पञ्चमी शबितिप्रथमायाः षष्ठीं प्रकल्पयिष्यति । तस्मादित्युत्तरस्येति । प्रत्ययविधिरयम् । न च प्रत्ययविधौ पञ्चम्यः प्रकल्पिका भवन्ति । नायं प्रत्ययविधिः । विहितः प्रत्ययः प्रकृतश्चानुवर्त्तते ॥

॥ कै० ॥ श्रुतत्वात्तेषामेवान्त्यादचः परः श्नम् भवति न तु शपः परः । यथा च भ्रस्जो रोपधयोरमन्यतरस्यामिति रमागमो रोपधयोर्निवर्त्तकः एवं शपः श्नम् ॥

॥ वि० ॥ अदुपदेशादित्यनुदात्तत्वे धातोरुदात्तत्वं सिद्धमेवेति तद् व्यर्थं सत् तज्ज्ञापकमितिभावः । परन्त्वयं पाठः स्थानिवत्सूत्रस्थकैयटविरुद्धः । आदि-त्यधिकाराद्वेति । तुदतीत्यादौ नित्यनुम्व्यावृत्तये पूर्वोक्तसमाधिरेवावश्यकः । शप्श्यनोरिति सूत्रस्थं श्यन्ग्रहणमप्युक्तार्थे ज्ञापकमितिबोध्यम् । नन्वेवं शपः परः श्नम् स्यादत आह । रुधादिभ्य इति । सार्वधातुक इति सप्तम्या रुधादिभ्य इति पञ्चम्याः षष्ठीकल्पनात्तेषामेवान्त्यादचः परः श्नमितिभावः । तृणह इति निर्देशाच्च रुधादीनामागमित्वे लिङ्गम् । नन्वेवं शपः श्रवणं स्यादत आह । यथा चेति । शप इत्यस्य षष्ठीकल्पनसामर्थ्यादितिभावः । भाष्ये विहितः प्रत्यय इति । शब्रूपः प्रत्यय इत्यर्थः ॥

॥ वि० ॥ तत्र मानाभावमूलकं शङ्कते । इमान्यपि । अष्टाध्यायीपठितान्यपि । पूर्वादीनि । पूर्वकालाश्रयाणीत्यर्थः । अत्राऽपिरेवा-र्थेऽन्यथोभयोः परस्परापेक्षया पूर्वकालत्वासम्भवेनाऽपिरनर्थक एव स्यात् । सर्व्वादीनीत्यादौ सर्वत्रादिशब्दः प्रकार एव तत्तत्कार्यवत्त्वेन च सादृश्यम् । अतिप्रसङ्गस्त्वनभिधानान्नेत्याशयः । ध्वनितं चेदं कस्येदितिसूत्रे भाष्ये इति । नवैवेति भाष्ये । अष्टाध्याय्यां पूर्व्वेत्यादित्रिसूत्रीपठितानीत्यर्थः ।

॥ कै० ॥ हेत्वभिधानमन्तरेणाऽशक्योऽयमर्थः प्रतिपत्तुमित्याह । इमान्यपीति । नवग्रहणमिति । तत्र हि नवग्र-हणं त्यदादीनां निरासार्थं क्रियते । यदि च नियतसन्निवेशो गणपाठः पूर्व्वस्ततोऽधिकव्यवच्छेदाय नवग्रहणं कर्त्तव्यम् ।

॥ भा० ॥ इमान्यपि पूर्वादीनि । एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति स पूर्वः पाठः । अयं पुनः पाठ इति । यदयं पूर्व्वादिभ्यो नवभ्यो वेति नवग्रहणं करोति । नवैव हि पूर्व्वादीनि । इदं तर्हि प्रयोजनम् । व्यवस्थायामसंज्ञायामिति वक्ष्यामीति । एतदपि नास्ति प्रयोजनम् । एवंविशिष्टान्येवैतानि गणे पठ्यन्ते ॥

॥ कै० ॥ इदं तर्हीति । प्रतिनियतविशेषणाभिधानाय प्रतिपदपाठ इत्यर्थः । एवंविशिष्टान्येवेति । पाठविशेषणं गणेऽर्थनिर्द्देश इत्यर्थः ॥

॥ वि० ॥ अष्टाध्याय्याः पूर्वकालत्वे पूर्वादीतिसूत्रेऽष्टाध्यायीसूत्रपठितानामेव तेषां ग्रहणं स्यादिति भावः । प्रतिनियतेति । पूर्वादिसप्तकस्यैव व्यवस्थाया-मित्यादि स्वशब्दस्यैवाज्ञातीत्यादि अन्तरशब्दस्यैव बहिर्योगेत्यादि विशेषणाभिधानायेत्यर्थः ॥



॥ वि० ॥ अष्टाध्यायीपाठेन यथा द्व्यादिपर्युदासाभावस्तथा दर्शयति । तत्र पुनरिति । पुनः संज्ञाविधानेन पुनः कार्यविधानद्वारा द्व्यादिपर्युदासो बाध्यत इत्यर्थः । इति पुनर्विधानेनेति । एतत्संज्ञाकल्पितेन द्वितीयापुनर्विधानेनेत्यर्थः । नन्वेवं जसि विकल्पो न स्यादत आह । वाक्यभेदेन चेति । विभाषा जसीत्यनुवृत्त्येत्यर्थः । जश्भावादिति चेदुत्तरत्रेति । ढो ढे लोप इति सूत्रे वार्त्तिकमिदम् । एभिश्च सूत्रवार्त्तिकप्रयो-

॥ कै० ॥ द्व्यादिपर्युदासेनेति । त्यदादीनि पठित्वा गणे कैश्चित् पूर्व्वादीनि पठितानि । तत्राऽद्व्यादिभ्य इति तसिलादीनां प्रतिषेधः प्राप्नोति । तत्र पुनः सर्वनामसंज्ञा तसिलादिविधानार्थं विधीयते तेन द्व्यादिपर्युदासो बाध्यते । यथा अनुर्लक्षण इति पुनर्विधानेन हेतुतृतीया बाध्यते । वाक्यभेदेन च विभाषा जसि विधीयते । यथाऽमि पूर्व्वः संप्रसारणाच्चेत्यत्र वाक्यभेदेन

॥ भा० ॥ इदं तर्हि प्रयोजनम् । द्व्यादिपर्युदासेन पर्युदासो माभूदिति । एतदपि नास्ति प्रयोजनम् । आचार्यप्रवृत्तिर्ज्ञापयति । नैषां द्व्यादिपर्युदासेन पर्युदासो भवतीति । यदयं पूर्व्वत्रासिद्धमिति निपातनं करोति । वार्त्तिककारश्च पठति जश्भावादिति चेदुत्त-रत्राभावादपवादप्रसङ्ग इति । इदं तर्हि प्रयोजनम् ॥

॥ कै० ॥ वाच्छन्दसीतिसम्बन्धाच्छन्दसि विकल्पः क्रियते इति भावः । इदं तर्हीति । यदि पूर्वादीनि नवेत्युच्येत तदा गणपाठेऽर्थनिर्द्देशस्य नित्यसंज्ञाविधान एवोपयुक्तत्वात् पाठविशेषणे प्रमाणाभावादप्राप्तविभाषेयमर्थान्तरे पूर्व्वादीनां जसि विज्ञायेत । प्राप्तविभाषायामुक्तानुवाददोषप्रसङ्गादप्राप्तविभाषायामपूर्व्वविधानात् ॥

॥ वि० ॥ गैस्त्यदादितः पूर्वमेव गणे पूर्व्वादिपाठ इति बोध्यते इति भावः । पाठविशेषणे प्रमाणाभावादिति । व्याख्यानातिरिक्तप्रमाणाभावादिति भावः । तथा व्याख्याने बाधकमाह । उक्तानुवादेति । भावांश इत्यर्थः । अभावतात्पर्यकत्वेन गौरवं दोष इत्यपि बोध्यम् ॥

॥ वि० ॥ नन्वप्राप्तविभाषात्ववारणायाऽर्थमात्रनिर्देशः क्रियतां किं प्रतिपदपाठेनेत्यत आह । प्रतिपदेति । असङ्करेणेति । सप्तस्वेव व्यवस्थासम्बन्धः स्वेऽज्ञातिधनयोरन्तरे बहिर्योगादेरित्येवंरूप इत्यर्थः । एवमप्याद्यसूत्रे पूर्वादीनि व्यवस्थायामसंज्ञायामित्येव कुतो न

॥ कै० ॥ विभाषामिति । प्राप्तविभाषामित्यर्थः । प्रतिपदपाठं चान्तरेणाऽसङ्करेणाऽर्थनिर्देशोऽशक्यः कर्त्तुमिति भाष्यकारेण प्रतिपदपाठः समर्थितः ॥ ❁ ॥ स्वमज्ञा । आत्माऽऽत्मीयज्ञातिधनवचनः स्वशब्दः । आमिनिज्विषयस्त्वैश्वर्य्यवाची । अख्याग्रहणमिति । स्वे पुत्राः स्वे गाव इत्यत्र स्वशब्द आत्मीयत्वमेवाह पुत्रादिशब्दस्तु ज्ञातिधनयोर्वर्त्तते न स्वशब्द इति प्रतिषेधो

॥ भा० ॥ जसि विभाषां वक्ष्यामीति ॥ ❁ ॥ स्वमज्ञातिधनाख्यायाम् । आख्याग्रहणं किमर्थम् । ज्ञातिधनपर्यायवाची यः स्वशब्दस्तस्य यथा स्याद् इह माभूत् । स्वे पुत्राः स्वाः पुत्राः । स्वे गावः स्वा गावः ॥ ❁ ॥

॥ कै० ॥ न भविष्यतीति प्रश्नः । तस्य यथा स्यादिति । प्रतिषेध इतिशेषः । इह माभूदिति । असत्याख्याग्रहणे स्वे पुत्रा इत्यादौ स्यादेव प्रतिषेधः । अत्राप्यात्मीयत्वं प्रवृत्तिनिमित्तमुपादाय स्वशब्दो ज्ञातिधनयोर्वर्त्तते पुत्रादिभिः सामानाधिकरण्याद् आख्याग्रहणे तु सति न दोषः । स्वशब्दो ह्यत्रात्मीयस्याऽऽख्या न तु ज्ञातिधनयोरितिविधिः सिद्धः ॥ ❁ ॥

॥ वि० ॥ सूचितम् । सप्तानामेव व्यवस्थायां वृत्तेरिति चिन्त्यम् ॥ ❁ ॥ स्वमज्ञाति । आत्मीयत्वमेवाहेति । आत्मीयत्वेनैव ततः प्रतीतिर्न तु धनत्वादिनेत्यर्थः । ईदृशविशेषलाभार्थमेवाख्याग्रहणम् । तदभावे आत्मीयत्वादिना ज्ञातिधनवाचकेऽपि निषेधः स्यादित्युत्तरम् । प्रतिषेध इति । अज्ञातीत्यादिप्रतिषेध इत्यर्थः । न तु ज्ञातिधनयोरिति । ज्ञातित्वधनत्वयोरित्यर्थः ॥ ❁ ॥



॥ वि० ॥ अन्तरं । भिन्नार्थ इति । नानार्थ इत्यर्थः । ततः सर्वथेति । कर्मणि द्वितीयव्याख्यानेन करणे आद्यव्याख्यानेनेतिबोध्यम् । नन्वल्पमहत्परिमाणाभ्यामन्तरीयोत्तरीयत्वनिर्णयो

॥ कै० ॥ अन्तरं । बहिरित्यनावृतदेश उच्यते । तेन योगो बहिर्योगः । स च बाह्यस्य भवतीत्यन्तरे गृहा इति नगरबाह्याश्चाण्डालादिगृहा उच्यन्ते । यदा तु बहिश्शब्देन बाह्य उच्यते बाह्येन योगो बहिर्योग इति तदा नगराभ्यन्तरे ये गृहास्त उच्यन्ते ।

॥ भा० ॥ अन्तरं बहिर्योगोपसंव्यानयोः । उपसंव्यानग्रहणमनर्थकं बहिर्योगेण कृतत्वात् । उपसंव्यानग्रहणमनर्थकम् । किं कारणम् । बहिर्योगेण कृतत्वात् । बहिर्योग इत्येव सिद्धम् । नवा शाटकयुगाद्यर्थम् । नवाऽनर्थकम् । किं कारणम् । शाटकयुगाद्यर्थम् । शाटकयुगाद्यर्थं तर्हीदं वक्तव्यम् । यत्रैतन्न ज्ञायते किमन्तरीयं किमुत्तरीयमिति ॥

॥ कै० ॥ उभयथाऽपि स्वर्यते । उपसंव्यानशब्दोऽपि कर्मकरणार्थभेदाद्भिन्नार्थः । ततः सर्वथा बहिर्योगात् सिद्धिं मत्वाह । उपसंव्यानेति । नवेति । समानप्रमाणे शाटकयुगे अपरिच्छिते इदं न ज्ञायते किमुत्तरीयं किमन्तरीयमेतदित्यर्थः ॥

॥ वि० ॥ भविष्यतीत्यत आह । समाने इति । पदत्रयमपि सप्तम्यन्तम् । भाष्ये किमुत्तरीयं किमन्तरीयमित्येतन्न ज्ञायते इत्यन्वयः ॥

॥ वि॰ ॥ तृतीयचतुर्थयोरिति । शरीरसंयुक्तयोरित्यर्थः । भाष्यस्य त्वयं भावः । बहिर्योग इति स्वर्यते । तेन परम्परया बाह्यसम्बद्ध-
स्याऽपि सिद्धिरिति । ननु जसि विकल्पविधाय-

॥ कै॰ ॥ अत्रापीति । यथोपसंख्यानत्वं भाविबुद्ध्या व्यवस्थाप्यते तथा बहिर्योगोऽपीत्यर्थः । अन्ये त्वाहुः । आदिशब्दो वार्त्तिके शाटक-
युगाद्यर्थमित्यत्रोपात्तस्तत्र शाटकानां त्रये चतुष्टये वा तृतीयचतुर्थयोर्बहिर्योगाभावादुपसंख्यानग्रहणं कर्तव्यम् । अपुरीति । गणसूत्र

॥ भा॰ ॥ अत्रापि य एष मनुष्यः प्रेक्षापूर्वकारी भवति निर्ज्ञातं तस्य भवति इदमन्तरीयमिदमुत्त-
रीयमिति । अपुरीति वक्तव्यम् । इह माभूत् । अन्तरायां पुरि वसति । वाप्रकरणे तीयस्य ङित्सूपसं
ख्यानम् । वाप्रकरणे तीयस्य ङित्सूपसंख्यानं कर्त्तव्यम् । द्वितीयायै द्वितीयस्यै । तृतीयायै तृतीयस्यै ।
विभाषा द्वितीयातृतीयाभ्यामित्येतन्न वक्तव्यं भवति । किं पुनरत्र ज्यायः । उपसंख्यानमेवाऽत्र ज्यायः ।
इदमपि सिद्धं भवति । द्वितीयाय द्वितीयस्मै । तृतीयाय तृतीयस्मै ॥ ❁ ॥

॥ कै॰ ॥ एतत्कर्त्तव्यम् । लिङ्गविशिष्टपरिभाषया ग्रहणप्रसङ्गात् । इह त्वनेन नार्थः । अत इति जसः शीविधानादावन्तात्प्राप्त्य-
भावात् । पूः कस्मिंश्चिद्देशे प्राकाराभ्यन्तरे क्रियते क्वचित्प्राकाराद्बहिरिति अस्ति पुरो बहिर्योगः ॥ ❁ ॥

॥ वि॰ ॥ कसूत्रस्थवार्त्तिकोदाहरणं सप्तम्यन्तमयुक्तमत आह । गणेति । पूःशब्दस्य विशेष्यत्वे इत्यर्थः । तत्र स्त्रियामेव तदाह इह त्विति ॥ ❁ ॥



॥ वि॰ ॥ स्वरादि । क्रियाप्रधानमिति । क्रियायामेव विशेषणमित्यर्थः । यथा हिरुगादि । एतच्चोत्तरसूत्रे कैयटे स्पष्टम् । किञ्चिदिति ।
यथोच्चैरादि । अनेकशक्तीति । स्वस्तिष्ठति स्वरागत इत्यादावित्यर्थः । अनेककारकशक्तियोग एव च सत्त्वमिति भावः । भाष्ये सत्त्व-
चनानामसत्त्ववचनानां चेत्यस्याऽव्ययसंज्ञेष्यत इति शेषः । लोहितेति । अव्ययीभावश्चेति स्वरादिषु पठ्यत इतिमते इदम् । नन्वसत्त्ववाचित्वाभावाच्चादिषु

॥ कै॰ ॥ स्वरादिनिपातमव्ययम् । किमर्थमिति । स्वरादिषु किञ्चित्क्रियाप्रधानं किञ्चित्साधनप्रधानमिति असत्त्ववचनत्वाच्चादिष्वेव
स्वरादीनि पठितव्यानीति मत्वा प्रश्नः । स्वरादीनां पुनरिति । स्वस्ति वाचयति स्वः पश्येति क्रियासम्बन्धेऽनेकशक्तिदर्शनात्सत्त्ववाचि-
त्वनिश्चयः । लोहितगङ्गमित्यादीनामव्ययानां सत्त्वधर्मनपुंसकत्वदर्शनाद्व्यक्तमेव सत्त्ववाचित्वम् । न निपातसंज्ञैवेति । प्राग्रीश्वरान्नि-

॥ भा॰ ॥ स्वरादिनिपातमव्ययम् । किमर्थं पृथग् ग्रहणं स्वरादीनां क्रियते न चादिष्वेव पठ्येरन् ।
चादीनां वै असत्त्ववचनानां निपातसंज्ञा स्वरादीनां पुनः सत्त्ववचनानामसत्त्ववचनानां च । अथ किमर्थ-
मुभे संज्ञे क्रियेते न निपातसंज्ञैव स्यात् । नैवं शक्यम् । निपात एकाजनाङिति प्रगृह्यसंज्ञोक्ता सा
स्वरादीनामप्येकाचां प्रसज्येत । क्व इव क्वेव । एवं तर्ह्यव्ययसंज्ञैवास्तु तच्चाऽशक्यम् ॥

॥ कै॰ ॥ पाताः स्वरादीनि चादयोऽसत्त्वे इति सूत्रन्यासः कार्य इत्यर्थः । स्वरादीनामिति । किमोऽदिति अत्प्रत्ययो दक्षिणादाजित्याच्
केन्प्रभृतयस्तु कृत एकाचः सन्तीति भावः । तच्चाऽशक्यमिति । अव्ययसंज्ञायामेव सत्याम् अव्ययमेकाजनाङिति सूत्रं कर्त्तव्यं ततश्चात्प्र-
भृतीनामपि प्रगृह्यसंज्ञाप्रसङ्गः प्राप्नोति । अथ चादय एकाजनाङिति क्रियते तदा चादीनामसत्त्ववचनत्वविशेषणमलभ्यम् ॥ ❁ ॥

॥ वि॰ ॥ पाठाभावाच्च कथं निपातत्वमत आह । प्राग्रीति । किमोऽदिति । तद्धितश्चेतिसूत्रमपि तत्संज्ञाविधायकमेव भवति । एतत्प्रयोजनसत्त्वादेव केवला-
नामपि तेषां संज्ञा स्यादिति भावः । भाष्ये एवं तर्ह्यव्ययेति । प्राग्रीश्वरादव्ययं स्वरादीनि चादयोऽसत्त्वे इतिपाठ्यमित्यर्थः । तदा चादीनामिति । यदि तु चा-
दयः । असत्त्वे इति योगविभागेनासत्त्वे इति पाठविशेषणं क्रियते तदा नायं दोषः । तस्माद्भाष्योक्त एव दोषः । नच तत्र प्रादीनामिति वाच्यम् । ऊर्यादी-
नामसंग्रहापत्तेः । एवं निपाता आद्युदात्ता इत्यादावपि दोषो बोध्यः ॥ ❁ ॥

॥ वि० ॥ तद्धितश्च । यद्यपि केवलस्येति । एवञ्च केवलतद्धितात्मकस्या अपि विभक्तेरभावेनासर्वविभक्तिरिति विशेषणमव्यावर्तकमितिभावः । वाचनिक इति । शब्दरूपं विशेष्यमादाय तदन्तविधिरितिभावः । किञ्च केवलानां संज्ञायां प्रयोजनाभावः प्रयोजकाभावश्च । अन्वर्थसंज्ञाल-भ्योऽर्थो हि तत्प्रयोजक इति बोध्यम् । वार्तिकोत्थानाय सूत्रार्थं दर्शयति । तत्र वृत्तिकारेणेति । सर्वा विभक्तिरिति । सर्वावयविकेत्यर्थः । प्रतिनियतेति ।

॥ कै० ॥ तद्धितश्चाऽसर्वविभक्तिः । इह संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिप्रतिषेधाद् यद्यपि केवलस्य प्रत्ययस्य ग्रहणं तथापि प्रयोजनं सर्वनामाव्ययसंज्ञायामितिवाचनिकस्तदन्तविधिरस्तीति तदन्तस्याव्ययसंज्ञा विज्ञायते । तत्र वृत्तिकारेण व्याख्या-तम् । असर्वा विभक्तिर्यस्य सोऽसर्वविभक्तिरिति । तत्र यदाऽयमर्थः । यस्य तद्धितस्याऽसर्वा विभक्तिः कार्या यस्मान्न सर्वा विभक्तिरुत्पद्यते इति तदा न दोषः । यदा तु यस्य तद्धितस्योत्पत्तौ निमित्तत्वेनाऽसर्वा विभक्तिराश्रिता सोऽसर्वविभक्तिः ।

त्यर्थस्त

॥ भा० ॥ वक्ष्यत्येतत् । अव्यये नञ्कुनिपातानामिति । तद्गरीयसा न्यासेन परिगणनं कर्तव्यं स्यात् । तस्मात् पृथग् ग्रहणं कर्तव्यम् । उभे च संज्ञे कर्तव्ये ॥ ❀ ॥ तद्धितश्चासर्वविभक्तिः । असर्व-विभक्तावविभक्तिनिमित्तस्योपसंख्यानम् । असर्वविभक्तावविभक्तिनिमित्तस्योपसंख्यानं कर्तव्यम् ॥

॥ कै० ॥ यथा सर्वैकान्येति दाप्रत्ययस्य सप्तम्येवोत्पत्तिनिमित्तमित्यस्मिन् सूत्रार्थे विनानानेत्यस्याव्ययसंज्ञा न सिध्यति नहि विनञ्भ्यामित्यत्र प्रतिनियता काचिद्विभक्तिराश्रितेत्याह । असर्वविभक्काविति । अतिव्याप्तिश्चाऽस्मिन् सूत्रार्थे दाचिरितीञः षष्ठ्येव निमित्तमिति संज्ञाप्रसङ्गात् । अविभक्तिनिमित्तस्येति । अश्रूयमाणविभक्तिकमव्ययमविभक्तीत्युच्यते तन्निमित्तस्य यस्येष्यते नच प्राप्नोति तस्योपसंख्यानं कर्तव्यम् । न तु सामान्येनाऽविभक्तिनिमित्तस्य संज्ञा विधेया विशालविशङ्कटादीनामपि प्रसङ्गात् ॥

॥ वि० ॥ एवञ्च विशेषतः कस्या अपि निमित्तत्वेनाऽनाश्रयणात्सर्वविभक्तिनिमित्तकोऽयमिति भावः । ननु सुबन्तात्तद्धितोत्पत्तेरविभक्तिनिमित्तस्तद्धितोऽप्रसि-द्धोऽत आह । अश्रूयमाणेति । तन्निमित्तस्येति बहुव्रीहिः ॥



॥ वि० ॥ ननूत्सर्गत एकवचनमपि सर्वासां स्यादिति बहुवचनान्तविग्रहे सर्वविभक्तेर्निमित्तत्वमव्याहतमत आह । क्रमव्यतिक्रम इति । प्रथमाऽतिक्रमे कारणाभावेन प्रथमाया एवैकवचनमिति न दोष इत्यर्थः । अविशेषेणेति । द्व्येकयोरित्याद्येकवाक्यतामनपेक्ष्येत्यर्थः । उत्प-न्नानां नियम इति । उत्पन्नानां शास्त्रबलान्नियमेन लोपेनैव निवृत्तिः क्रियत इत्यर्थः । इदमप्यर्थनियमे सजातीयापेक्षप्रत्ययनियमे च बोध्यम् । विशेषस्येति ।

॥ कै० ॥ किं पुनरिति । एकवचनमुत्सर्ग इतिवचनात् क्रमव्यतिक्रमे कारणाभावाद् विना नानेत्यत्रापि असर्वा विभ-क्तिरुत्पत्तौ निमित्तमिति प्रश्नः । सर्वविभक्तिरिति । अविशेषेणोत्पद्यन्ते उत्पन्नानां नियमः क्रियत इत्यव्ययात् सर्वा विभ-क्तय उत्पद्यन्त इत्यर्थः । अविशेषादिति । विशेषस्याऽनाश्रयणादित्यर्थः । त्रलादीनां चेति । आदिशब्दस्य प्रकार-

॥ भा० ॥ विना नाना । किं पुनः कारणं न सिध्यति । सर्वविभक्तिर्ह्यविशेषात् । सर्वविभक्तिर्ह्येष भवति । किं कारणम् । अविशेषेण विहितत्वात् । त्रलादीनां चोपसंख्यानम् । त्रलादीनां चोपसंख्यानं कर्तव्यम् । तत्र । यत्र । ततः । यतः । ननु च विशेषेण एते विधीयन्ते । पञ्चम्यास्तसिल् सप्तम्या-स्त्रलिति । वक्ष्यत्येतद् इतराभ्योऽपि दृश्यन्त इति । यदि पुनरविभक्तिशब्दोऽव्ययसंज्ञो भवतीत्युच्यते ॥

॥ कै० ॥ वाचित्वात्तसिलपि गृह्यते । वक्ष्यत्येतदिति । भवदादिप्रयोग एवाऽप्राप्तिश्चोद्यत इत्यर्थः । यदि पुनरिति । प्रयोगे योऽश्रूयमाणविभक्तिः सोऽव्ययमित्यर्थः । नच दधि मध्वित्यत्रातिप्रसङ्गो दध्नीत्यादौ विभक्तिश्रवणात् ॥

॥ वि० ॥ द्व्येकयोरित्याद्येकवाक्यतारूपस्येत्यर्थः । ज्ञापकाद्विभक्तिरितिपक्षे इयमेवेतिविशेषस्येत्यर्थः । ननु त्रलादीनामित्युक्ता त्रलः प्राक् पठितस्य तसिलः कथमु-दाहरणदानमत आह । आदिशब्दस्येति । ननु विनेत्यादावपि पदत्वाय विभक्त्युत्पत्तिरावश्यिकेत्यत आह । प्रयोग इति । दध्नीत्यादाविति । प्रयोगमात्रे विभक्त्यभावो विवक्षित इतिभावः ॥

॥ वि० ॥ अव्ययत्वादिति । अविभक्तिकत्वस्य स्वाभाविकत्वेऽव्ययादाप्सुप इत्यस्य वैयर्थ्यप्रसङ्गादितिभावः । ननु पूर्वलक्षणस्य दूषितत्वाद्वाश-ब्दोऽसङ्गतोऽत आह । अविभक्तिरिति । वाशब्द इति । प्रयुक्त इति शेषः ।

॥ कै० ॥ अविभक्ताविति । अव्ययत्वादविभक्तित्वमविभक्तित्वादव्ययत्वमिति दोषः । अलिङ्गमसंख्यमिति । अविभक्ति-

॥ भा० ॥ अविभक्ताावितरेतराऽऽश्रयत्वादप्रसिद्धिः । अविभक्तावितरेतराश्रयत्वादप्रसिद्धिः संज्ञायाः । का इतरेतराश्रयता । सत्यविभक्तित्वे संज्ञया भवितव्यम् । संज्ञया चाऽविभक्तित्वं भाव्यते । तदेतदितरे-तराश्रयं भवति । इतरेतराश्रयाणि च कार्याणि न प्रकल्पन्ते । अलिङ्गमसंख्यमिति वा । अथवाऽलिङ्ग-मसंख्यमव्ययसंज्ञं भवतीति वक्तव्यम् । एवमपीतरेतराश्रयमेव भवति । का इतरेतराश्रयता । सत्यलि-ङ्गासंख्यत्वे संज्ञया भवितव्यम् । संज्ञया चाऽलिङ्गासंख्यत्वं भाव्यते । तदेतदितरेतराश्रयं भवति । इतरे-तराश्रयाणि च कार्याणि न प्रकल्पन्ते । नेदं वाचनिकमलिङ्गता असंख्यता च । किं तर्हि । स्वाभावि-कमेतत् । तद्यथा । समानमीहमानानां चाधीयानानां च केचिदर्थैर्युज्यन्ते अपरे न । तत्र किमस्माभिः कर्त्तुं शक्यम् । स्वाभाविकमेतत् । तत्तर्हि वक्तव्यमलिङ्गमसंख्यमिति । न वक्तव्यम् ॥

॥ कै० ॥ एव्ययमित्यस्य लक्षणस्य दूषितत्वाद् अत्राऽपि तदेव दूषणमिति प्रदर्शनार्थो वाशब्दः । अलिङ्गासंख्यत्वस्य लौकिकत्वान्नावेतरेतराश्रयत्वमिति पूर्वपक्षः । एवमपीति । अर्थमपि कश्चित् क्वचित् शास्त्रादेव प्रतिपद्यत इति भावः ॥

॥ वि० ॥ एवञ्चाप्यर्थो वाशब्द इत्यर्थः । अलिङ्गमित्यपि यदुच्यते एवमप्यन्योन्याश्रय इत्यर्थः । शास्त्रादेवेति । तद्द्योतकविभक्तिलुक् शास्त्रादेवेति भावः ॥



॥ वि० ॥ वाशब्दार्थ इति । वाशब्दस्यार्थ इवार्थो यस्येतिबहुव्रीहिः । अयञ्च पाठः स्वरादिषु कार्य इति बोध्यम् । स च पचतिक-ल्पादिव्यावृत्तये तद्धितश्चेति सूत्रारम्भेऽप्यावश्यक इति भावः । प्रत्नेत्यादिस्थाल् न परिगणितमध्यवर्त्तीत्यत आह । स एवेति । प्रकारवचन इत्यत्र प्रकारः सादृश्यं विशेषश्च । तत्र शब्दशक्तिमाहात्म्यात्प्रत्नादिभ्य उत्पन्नेन सादृश्यमुच्यते । किमादिभ्यस्थाला तु विशेषः । एवञ्च प्रत्नपूर्वेतिसूत्रं व्यर्थमेव । लोकेऽप्रयोगस्त्वनभिधानादितिभावः । अमु चच्छन्दसीत्यम् । किमेत्तिङ इत्याम् । प्रतियोग इति तसिः शसप्रभृतिष्वस्तीति तद्ग्रहणं चिन्त्यम् । दृष्टान्ता-

॥ कै० ॥ सिद्धं त्विति । वार्त्तिककारस्येतरेतराश्रयदोषः स्थित एवेति तुशब्दो विशेषप्रदर्शनार्थः । भाष्यकारेण त्वितरेतराश्रयदोषः परिहृत इति वाशब्दार्थस्तुशब्दो व्याख्यातः । य एव प्रकारवचने थाल् स एव प्रत्नादिभ्यो विधीयते इतिनाऽव्याप्तिः । मान्त इति ।

॥ भा० ॥ सिद्धन्तु पाठात् । पाठाद्वा सिद्धमेतत् । कथं पाठः कर्त्तव्यः । तसि-लादयः प्राक् पाशपः । शसप्रभृतयः प्राक् समासान्तेभ्यः । मान्तः । तसिवती । कृत्वोऽर्थः । नानाञाविति । अथवा पुनरस्त्वविभक्तिशब्दोऽव्ययसंज्ञो भवतीत्येव । ननु चोक्तमविभक्तावितरेतराश्रयत्वादप्रसिद्धिरिति ॥

॥ कै० ॥ आम् अम् । तसिः प्रतियोगे पञ्चम्यास्तसिः तेनैकदिक्तसिश्चेति । कृत्वोऽर्थाः कृत्वसुच्सुच्धाः । अथवेति । दृष्टव्य-वहारादेव शब्दार्थसम्बन्धाऽवगमादेकत्वादिव्यवहारवदलिङ्गाऽसंख्यत्वमप्यव्ययार्थस्य प्रसिद्धमित्यर्थः ॥

॥ वि० ॥ थमित्यन्ये । भाष्ये वतिस्तेन तुल्यमिति विहितो नतूपसर्गाच्छन्दसीति विहितः । उद्वतो निवत इत्यादौ तस्य लिङ्गसंख्याद्यन्वयदर्शनादि-त्याहुः । एकत्वादिव्यवहारवदिति । पटादिपदानामिति शेषः । अलिङ्गाऽसंख्यत्वमिति । तथाच संख्याऽभावादेव विभक्त्यनुत्पत्तिरिति अविभक्तिरिति न्यासो-ऽप्यदुष्ट इति भावः । अव्ययादाप्सुप इति सूत्रन्तु न्यायसिद्धाया अनुत्पत्तेरेवान्वाख्यापकं प्रत्ययलक्षणप्रतिपत्तिद्वारा पदत्वादिसम्पादनार्थमिति तात्पर्यम् ॥

॥ वि० ॥ नन्ववैयाकरणैः संख्याया अज्ञानादेव तद्वाचकविभक्तिर्न प्रयुज्यत इत्यत आह । भाष्येऽभिज्ञाश्चेति । पट इत्यादौ तैरपि एकवचनादिप्रयोगकरणादिति भावः । युक्त्यन्तरमप्याह । आतश्चाऽभिज्ञा इति । वस्त्रो मूल्यम् । अत्रैवेति । अलिङ्गाऽसंख्यत्व एवेत्यर्थः । उपपत्तिर्युक्तिः क्रियाप्रधानत्वादिरूपा । एवमनुगम्यमानमित्यस्योपपद्यमानमित्यर्थः । नापि साधनप्रधानमिति । किन्तु द्रव्यप्रधानमिति शेषः । तस्मादाहुरव्ययेति ।

॥ कै० ॥ अत्रैवोपपत्तिमाह । तत्रापीति । किञ्चिदिति । अव्ययानां द्वैविध्यमेवेतिप्रतिपाद्यते अलिङ्गासंख्यत्वप्रतिपादनाय । अन्ये त्वाहुः । किञ्चिदव्ययं क्रियाप्रधानं किञ्चित्साधनप्रधानम् । अन्यत्तु नापि क्रियाप्रधानं नापि साधनप्रधानम् । यथा स्वः पश्य । लोहितग-

॥ भा० ॥ नैष दोषः । इदं तावदयं प्रष्टव्यः । यद्यपि तावद्वैयाकरणा विभक्तिलोपमारभमाणा अविभक्तिकाञ्छब्दान्प्रयुञ्जते । ये त्वेते वैयाकरणेभ्योऽन्ये मनुष्याः कथं तेऽविभक्तिकाञ्छब्दान्प्रयुञ्जत इति । अभिज्ञाश्च पुनर्लौकिका एकत्वादीनामर्थानाम् । आतश्चाभिज्ञाः । अन्येन हि वस्त्रेनैकं गां क्रीणन्ति । अन्येन द्वावन्येन त्रीन् । अभिज्ञाश्च न च प्रयुञ्जते । तदेवं संदृश्यताम् । अर्थरूपमेवैतदेवञ्जातीयकं येनाऽत्र विभक्तिर्न भवतीति । तत्राप्येतदेवमनुगम्यमानं दृश्यताम् । किञ्चिदव्ययं विभक्त्यर्थप्रधानं किञ्चित् क्रियाप्रधानम् । उच्चैर्नीचैरिति विभक्त्यर्थप्रधानम् ॥

॥ कै० ॥ ङ्गम् उन्मत्तगङ्गं देश इति । तथाचाऽत्र नपुंसकत्वम् अव्ययीभावश्चेत्यन्वाख्यायते पूर्वञ्च भाष्यकारेणोक्तं स्वरादीनां पुनः सत्त्ववचनानामसत्त्ववचनानां चेति । तस्मादाहुरव्याभिप्रायेणाऽलिङ्गमसंख्यमव्ययमित्युच्यते । उच्चैर्नीचैरिति । सप्तम्यर्थे वर्त्तते इति साधनप्रधानता ॥

॥ वि० ॥ एवञ्च तादृशबहुमध्यपाठेन स्वरादीनामप्यलिङ्गासंख्यत्वमनुमीयते । अनेककारकशक्तियोगमात्रेण तु सत्त्ववचनत्वमिति भावः । उन्मत्तगङ्गादीनां वाचनिकमव्ययत्वमव्ययीभाव इति महासंज्ञयाऽपि सूच्यते । सत्त्वप्रधानता तु इदं स्वरिति सर्वनाम्ना परामर्शात् । ग्लान्याद्यर्थकप्रतामित्याद्यपि सत्त्ववचनमित्यन्ये ॥



॥ वि० ॥ ननु तदर्थे कारकान्वयाभावान्न तस्य क्रियात्वमत आह । क्रियाविशेषणत्वादिति । क्रियायामेव विशेषणत्वादित्यर्थः । क्त्वान्ततुमुन्नन्तादिवदिति भावः । स्वरादीनां घटादीनां च स्वःपतिर्घटोदकमित्यादौ नामार्थेऽप्यन्वयः । एतेन तेषामपि क्रियाविशेषणत्वात् क्रियाप्राधान्यं दुर्वारमित्यपास्तम् । अत एवैतदर्थे न कारकाणामन्वयः । तदन्वययोग्यस्य साध्यत्वरूपक्रियात्वस्य तत्राऽभावात् । क्रियाऽऽक्षेपादिति । स्थित्वा-

॥ कै० ॥ हिरुक् पृथगिति । क्रियाविशेषणत्वादेषां क्रियाप्राधान्यम् । क्रियापदप्रयोगमन्तरेणापि पृथग् देवदत्त इत्यादिप्रयोगः क्रियाऽऽक्षेपादुपपद्यते । शब्दशक्तिस्वाभाव्यान्नैकस्मिन्नर्थे विधीयमानयोस्तेनैकदिक् तसिश्चेत्य-

॥ भा० ॥ हिरुक् पृथगिति क्रियाप्रधानम् । तद्वितश्चाऽपि कश्चित् विभक्त्यर्थप्रधानः । कश्चित् क्रियाप्रधानः । तत्र यत्रेति विभक्त्यर्थप्रधानः । विना नानेति क्रियाप्रधानः ॥

॥ कै० ॥ णतसोर्भिन्नधर्मत्वम् । तत्र पैलुमूलमिति द्रव्यं प्राधान्येनाभिधीयते । पीलुमूलत इति तु द्रव्योपसर्जनस्तृतीयार्थ इति तस्य साधनप्रधानता ॥

॥ वि० ॥ दिक्रियाक्षेपादित्यर्थः । द्रव्यं प्राधान्येनेति । पीलुमूलसमानदिक्स्थमिति हि तत्र बोधः । द्रव्योपसर्जन इति । तसप्रत्ययाभिधेयद्रव्योपसर्जनः प्रकृत्यभिधेयस्तृतीयार्थ इत्यर्थः । तृतीयार्थश्च तत्र साहित्यम् । पीलुमूलेनैकदिक् पीलुमूलतः । एकदिक्स्थपीलुमूलसाहित्यमित्यर्थः । अन्ये तु पीलुमूलेन समानदिशीत्यर्थकम् अधिकरणशक्तिप्रधानं पीलुमूलत इतीत्याहुः ॥

॥ वि० ॥ भाष्ये नचैतयोरव्ययोरिति । यद्यपि क्रियायामेकत्वसंख्या रूपप्सूत्रे भाष्ये उक्ता पचतिरूपमित्यादिवाच्यायाश्च नपुंसकत्वयोग उक्तस्तथापि अव्ययवाच्ययोरेतयोर्लिङ्गसंख्याभ्यामयोग इत्यर्थान्न दोष इति दिक् । सूत्रारम्भकाले इति । यद्यपि न्यासान्तरेऽपि एकस्मिन्निति वह्वेव तथापि एकग्रहणे सति ज्ञापकादितः सर्वविभक्त्युत्पत्तावस्य सूत्रस्याप्यानर्थक्यमित्येतत्सूत्रपाठकाले एतत्सूत्रसहितं एकस्मिन्नित्यति बहु व्यर्थं क्रियत इति एकग्रहणं

॥ कै० ॥ अद्यत्व इति । सूत्रारम्भकाल इत्यर्थः । पूर्वं हि न्यासान्तराऽऽश्रयेण सूत्रं प्रत्याख्यातम् । अति-बह्विति । एकस्मिन्नित्यपनीय एकवचनमिति सूत्रं कर्त्तव्यम् । ततो द्विवह्वोर्द्विवचनबहुवचने इत्येवं कर्त्त-

॥ भा० ॥ नचैतयोरर्थयोर्लिङ्गसंख्याभ्यां योगोऽस्ति । अथाऽप्यसर्व्वविभक्तिरित्युच्यते । एव-मपि न दोषः । कथम् । इदं चाऽप्यद्यत्वे अतिबहु क्रियते । एकस्मिन्नेकवचनम् । द्वयोर्द्वि-वचनम् । बहुषु बहुवचनमिति । कथं तर्हि । एकवचनमुत्सर्गः करिष्यते । तस्य द्विवह्वो-रर्थयोर्द्विवचनबहुवचने बाधके भविष्यतः ॥

॥ कै० ॥ व्यम् । तेन द्वित्वबहुत्वयोर्द्विवचनबहुवचने भविष्यतः । एकवचनं त्वेकस्मिन्नपि भविष्यति अलि-ङ्गासंख्येभ्योऽव्ययेभ्यश्च ॥

॥ वि० ॥ त्यक्ताऽस्य सार्थक्यं वक्तुं योग्यमित्यर्थ इति भावः । न्यासान्तरेति । पाठाश्रयेणाऽलिङ्गासंख्यमित्यनेन वेत्यर्थः । भाष्येऽतिबह्विति । बहुशब्दो वैपुल्यवाची अतिबहु शास्त्रं व्यर्थं क्रियत इत्यर्थः । अलिङ्गासंख्येभ्य इति । द्विवचनबहुवचनविधायकयोर्द्विबहुग्रहणसामर्थ्यान्महासंज्ञाबोध्यैकत्वाभावेऽपि एकवचनप्रवृत्तिरिति भावः ॥



॥ वि० ॥ कथमेकवचनमिति । प्रथमाऽपि मात्रग्रहणाद् यत्प्रातिपदिकार्थस्य कर्मत्वाद्याधिक्यसम्भावना तत्रैवेति भावः । अप्राप्तेति । द्वित्वबहुत्वयोर्द्विवचनबहुवचनविधाने एकवचनस्यार्थात्तदभावे कर्मादौ सिद्धत्वेन सामर्थ्यादिति भावः । अप्राप्तिश्च कर्मत्वाद्यभावप्रयुक्तैव नतु प्रातिपदिकत्वाभावप्रयुक्ताऽपि । सुब्विध्येकवाक्यत्वात् । तेन तिङन्तादिभ्यो नापत्तिरिति बोध्यम् । किञ्च सर्वथाऽप्राप्तावेवाऽस्य विधायकत्वमिति पचतिकल्पमित्यादौ न सर्वैकवचनापत्तिरिति बोध्यम् । यद्यप्यनिर्दिष्टार्थत्वात् स्वार्थे विधीयमानस्याऽस्य न द्वित्वादौ प्राप्तिस्तथापि पञ्चकप्रातिपदिकार्थपक्षे

॥ कै० ॥ ननु कर्मणि द्वितीयेत्यादीनां कर्मादिषु द्वितीयादीनां नियतत्वात्कथमेकवचनमव्ययेभ्यः स्यात् । नैष दोषः । एतदर्थमेवैकवचनमित्येतत् क्रियते अप्राप्तप्रापणार्थम् । तेन कर्माद्यभावेऽपि भवति । द्वित्वबहुत्वयोस्तु प्राप्तं द्विवचनबहुवचनाभ्यां बाध्यते ॥

॥ वि० ॥ एकत्व इव द्वित्वादावपि प्राप्तिरित्याशयेनाह । बाध्यत इति । अत्र पक्षे द्व्येकयोरितिसूत्रमपि विध्यर्थमेवेति भावः । यद्यपि अव्ययात्स-र्वविभक्त्युत्पत्त्याऽयं न्यासो दूषितस्तथापि सामान्यापेक्षप्रत्ययनियमे एकवाक्यतया विधाने वा कस्या अप्यप्राप्त्येदं विधायकमिति तत्पक्षे सूत्रसार्थक्योपपाद-नमिदम् । एवञ्चैतदेव तयोरन्यतरपक्षाश्रयणस्यैकपदे वाक्यार्थाऽनन्वयित्वस्य च ज्ञापकमिति बोध्यम् । एतत्सर्वमुत्सर्गपदेन भाष्ये सूचितम् ॥

॥ वि० ॥ तन्मतमिति । दाक्षिरित्यादावतिव्याप्तेरितराभ्योऽपि इष्यन्त इत्येतद्विहितचलादिविषयेऽव्याप्तेश्चेति भावः । वृत्तिकारान्तरेति । तद्विग्रहे यस्येति अपादानस्यैव सम्बन्धत्वविवक्षया षष्ठीति ध्वनयितुं भाष्ये यस्मादित्युक्तम् । विशेषेति । एकवचनान्तविग्रहकरणरूपो विशेषः । नन्वेवं सर्वविभक्त्येकवचनोत्पत्तौ बहुवचनान्तविग्रहासंगतिरतो भाष्ये नचापीति । तद्व्याचष्टे प्रकारेति । सर्वा विभक्तय इत्यस्य सर्व-

॥ कै० ॥ न सर्वा विभक्तय उत्पत्तौ निमित्तमस्येति येन वृत्तिकारेण व्याख्यातं तन्मतं दूषितम् । इदानीं वृत्तिकारान्तरमतं विशेषप्रदर्शनेन संक्रियते । नचाप्येवमिति । एवं विग्रहे सर्वशब्दस्य प्रकारकार्त्स्न्येऽपि वर्त्त-

॥ भा० ॥ नचाप्येवं विग्रहः करिष्यते । न सर्वाः ।
असर्वाः । असर्वा विभक्तयो यस्मादिति ॥

॥ कै० ॥ नादेकवचनमात्रोत्पत्तावपि सर्वा विभक्तयः सम्भाव्ययेभ्य उत्पद्यन्ते इति न स्यादसर्वविभक्तित्वम् ॥

॥ वि० ॥ प्रकारा इत्यर्थः । अवयवकार्त्स्न्ये तु बहुवचनं व्यर्थमितिभावः । एकवचनान्तविग्रहे तु अवयवकार्त्स्न्ये एव सर्वशब्द इति नानेत्यादौ नाव्याप्तिर्नापि दाक्षिरित्यादावतिव्याप्तिरितिभावः । भावे पचतिकल्पमित्यादौ च क्रियायाः स्वत एवैकत्वादेकवचनमेव तत्र भावे प्रथमपुरुषस्यैव लान्तसमानाधिकरणयुष्मदाद्यभावादिति रूपपसूत्रे भाष्ये स्पष्टम् ॥



॥ वि० ॥ अव्ययेभ्योऽपि प्रथमैकवचनमेवास्तु इत्याह । यद्वा त्विति । प्रथमेति । अनेकनियमबाधे गौरवाच्चेत्यपि बोध्यम । ननु भष्योक्तपक्षेऽव्ययेभ्यो युगपत्सर्वविभक्त्येकवचनानां कर्त्तुमशक्यत्वं परस्त्रेत्युक्तेः किन्तु यत्किञ्चिदेव तस्य लुकि तावतैव पदत्वसम्पादनाद्विभक्त्यन्तरोत्पत्तौ मानाभावेन बहुवचनान्तविग्रहेऽपि न दोषोऽत आह । खले कपोतीति । वाचः क्रमवृत्तित्वाद्युगपदुच्चारणासंभवेऽपि बुद्ध्या युगपत्सर्वोत्पत्तिर्वक्तुं शक्येति भावः । विनिगमनाविरहोऽत्र बीजम् । प्रक्रियादशायां च बुद्धिरेव मुख्या । असाधूच्चारणाऽयोगात् । यद्वा । प्रधानानुरोधेन गुणावृत्तेस्तावत्यः प्रकृतयः स्युरिति भावः ।

॥ कै० ॥ कथं तर्हीति । द्रव्यकार्त्स्न्यवृत्तिः सर्वशब्दः । एकवचनमात्रोत्पत्तौ निरवशेषा विभक्तिर्नोत्पन्ना भवतीति भवत्येवाऽसर्वविभक्तित्वम् । यद्वा त्वयं न्यायः प्रथमाऽतिक्रमे कारणाभावात्प्रथमाया एवैकवचनमव्ययेभ्य उत्पद्यत इति तदा असर्वा विभक्तयो यस्मादित्यपि विग्रह आश्रिते न दोषः । यदा तु खले कपोतिकान्यायेन सर्वैकवचनोत्पत्तिपक्षस्तदैतदुक्तम् । अव्ययीभावादप्येकवचनमात्रमेवोत्पद्यते । तावतैव तृतीयासप्तम्योर्बहुलमित्यस्योपपादनात् । एवं गत

॥ भा० ॥ कथं तर्हि । न सर्वा असर्वा असर्वा विभक्तिरस्मादिति । त्रिकं पुनर्विभक्तिसंज्ञम् । एवं गते कृत्यपि तुल्यमेतन्मान्तस्य कार्यं ग्रहणं न तत्र । ततः परे चाभिमता न कार्यास्त्रयः कृदर्था ग्रहणेन योगाः ॥ १ ॥

॥ कै० ॥ इति । यदा असर्वा विभक्तिरस्मादितिविग्रह आश्रीयते । तदैवं विज्ञाते सत्येतावल्लक्षणमस्त्वसर्वविभक्त्यव्ययमिति । पञ्चसूत्री न कर्तव्या । एतदसर्वविभक्तित्वं कृत्यपि तुल्यम् । यस्य कृन्मेजन्त इत्यनेनाऽव्ययसंज्ञेष्यते । मान्तस्येति । सूत्रोपलक्षणम् । ततः पर इति । कृन्मेजन्त इत्यस्मात् सूत्रात्परे कृदर्थाः कृत्संज्ञाविषयाः क्त्वातोसुन्कसुन इत्यर्थः । ग्रहणेनोच्चारणेन प्रतिपदमित्यर्थः । योगाश्च न कर्तव्याः स्वरादिनिपातमव्ययमित्येवमादयः पञ्चेत्युपसंहारः ॥

॥ वि० ॥ परे तु प्राथम्यं स्वादिसूत्रे प्रथमाया नियमशास्त्रपर्यालोचनया द्वितीयाया इति न तन्नियामकमिति प्रथमातिक्रम इत्याद्यसंगतं तच्छायाश्रयणे निर्जावयाणामित्यत्र वयाणामित्यस्याऽऽद्युदात्तश्चेत्यादावादिग्रहणस्य वैयर्थ्यं चेत्याहुः । तावतैवेति । टाङ्योरितिवक्तव्ये तृतीयादिग्रहणं तु वैचित्र्यार्थमितिभावः । इदमेव ध्वनयितुं पञ्च योगान् प्रत्याचष्टे । एवं गते इति भाष्ये । प्रतिपदमितीति । असर्वविभक्तीतिन्यासेनैव सिद्धत्वादित्यर्थः । भाष्ये श्लोके तत्रेति । अव्ययसंज्ञाविधावित्यर्थः । पञ्चेति । स्वरादीत्यादिरव्ययीभावश्चेत्यन्तः ॥

॥ वि० ॥ ये इति यच्छब्दस्य तच्छब्दसाकाङ्क्षत्वादाह । तन्निरुक्त्यर्थमिति । तदेवं सूत्रं स्थापितमितिवार्त्तिकोक्तं सिद्धन्तु पाठादित्यपनाश्रितं स्यात् । एवञ्चोभयशब्दादौ दोष इति शङ्कोत्तरत्वेनोत्तरभाष्यमवतारयति । ननूभयेति । अत एवोभयोऽन्यत्रेत्यस्योदाहरणम् उभये उभया इति भाष्ये सर्वादिसूत्रे दत्तम् । गोदावित्यादौ वरणादिभ्यश्चेति चातुरर्थिकलुपि युक्तवद्भावात् प्रत्ययार्थस्य द्वित्वादीति बोध्यम् । इत्याहेति ।

॥ कै० ॥ इदानीमतिव्याप्तिपरिहारार्थं तद्धितग्रहणं कर्तव्यं तस्मिन् कृते कृन्मेजन्त इत्याद्यपि कर्तव्यमिति दर्शयति । कृत्तद्धितानामिति । संख्याविशेषमिति । तन्निरुक्त्यर्थमित्यर्थः । तेषामिति । असति तद्धितग्रहणे एकादीनामतद्धितान्तानामप्यसर्वविभक्तित्वात् प्रतिषेधो वक्तव्यः स्यादिति तद्धितग्रहणं कर्त्तव्यम् । तस्मिन् कृते स्वरादिग्रहणं कर्त्तव्यम् । स्वरादीनामतद्धि-

॥ भा० ॥ कृत्तद्धितानां ग्रहणं तु कार्यं संख्याविशेषं ह्यभिनिश्रिता ये । तेषां प्रतिषेधो भवतीति वक्तव्यम् । इह माभूत् । एको द्वौ बहव इति । तस्मात् स्वरादिग्रहणं च कार्यं कृत्तद्धितानां ग्रहणं च पाठे ॥ २ ॥ पाठेनेयमव्ययसंज्ञा क्रियते सेह न प्राप्नोति । परमोच्चैः परमनीचैरिति ॥

॥ कै० ॥ तान्तत्वात् । ननूभयशब्दस्य द्विवचनानुत्पादादसर्वविभक्तित्वं तथा गोदौ वरणा इति तत एषामपि तद्धितश्चाऽसर्वविभक्तिरित्यव्ययसंज्ञाप्रसङ्ग इत्याह । कृत्तद्धितानामिति । प्रतिपदं तद्धिताः पठितव्या येषामव्ययसंज्ञेष्यत इत्यर्थः । तस्माद्गणपाठ एवाश्रयितव्यः प्रपञ्चार्थस्तु सूत्रारम्भः ।

॥ वि० ॥ इत्याशङ्कायामाहेत्यर्थः । भाष्ये चस्त्वर्थे कृत्तद्धितानामित्यत्र कृद्ग्रहणेन कृतामव्ययसंज्ञाविधायके सूत्रे अपि गणे पाठ्ये इति सूचितम् । कृदित्युपलक्षणमव्ययीभावश्चेत्यस्याऽपि तदाह तस्मादिति । तदेवं गणपाठमाश्रित्य तद्धितश्चाऽसर्वविभक्तिरित्यष्टाध्यायीपाठः प्रत्याख्यातस्तदाह । प्रपञ्चार्थस्त्विति । शङ्कते भाष्ये पाठेनेयमिति । स्वरादिनिपातमव्ययमितीत्यर्थः ॥



वि० ॥ नन्वत्यादयो द्वितीययेत्युक्ते कथमुच्चैश्शब्देनाऽधिकरणशक्तिप्रधानेनाऽद्वितीयान्तेन समास इत्यत आह । शक्तीति । द्वितीयान्तस्येति । अतिक्रान्तार्थान्वययोग्यकर्मद्वितीयान्तस्येत्यर्थः । दोषामन्यमित्यत्र कर्मणीत्यधिकारे आत्ममाने खश् । दिनं रात्रिं मन्यत इत्यर्थः । प्रश्नेऽपीति ।

॥ कै० ॥ तदन्तविधिनेति । प्रयोजनं सर्वनामाव्ययसंज्ञायामिति वचनेनेति भावः । अत्युच्चैसाविति । शक्तिप्रधानान्यप्यव्ययानि वृत्तिविषये शक्तिमत्प्रधानानि भवन्ति । यथा दोषामन्यमहः । दोषाभूतमहरिति । तत उच्चैश्शब्दस्य

॥ भा० ॥ तदन्तविधिना भविष्यति । इहापि तर्हि प्राप्नोति । अत्युच्चैः । अत्युच्चैसौ । अत्युच्चैस इति । उपसर्जनस्य नेति प्रतिषेधो भविष्यति । स तर्हि प्रतिषेधो वक्तव्यः । न वक्तव्यः । सर्वनामसंज्ञायां प्रकृतः प्रतिषेध इहानुवर्तिष्यते । स वै तत्र प्रत्याख्यायते । यथा स तत्र प्रत्याख्यायते इहापि तथा शक्यः प्रत्याख्यातुम् । कथं च स तत्र प्रत्याख्यायते । महतीयं संज्ञा क्रियत इति । इहापि च महती संज्ञा क्रियते । संज्ञा च नाम यतो न लघीयः । कुत एतत् । लघ्वर्थं हि संज्ञाकरणम् । तत्र महत्याः संज्ञायाः करण एतत्प्रयोजनम् । अन्वर्था संज्ञा यथा विज्ञायेत । न व्येतीत्यव्ययमिति । क्व पुनर्न व्येति । स्त्रीपुन्नपुंसकानि सत्त्वगुणाः । एकत्वद्वित्वबहुत्वानि च । एतानर्थान् केचिद्वियन्ति केचिन्न वियन्ति । ये न वियन्ति तदव्ययम् ॥

॥ कै० ॥ प्रक्रियायां द्वितीयान्तस्य समासः । क्व पुनरिति । श्लोके सप्तमीनिर्देशात् प्रश्नेऽपि सप्तमी निर्दिष्टा ॥

॥ वि० ॥ व्येतीत्यस्य विविधं प्रकारं गच्छतीत्यर्थः । क्वेत्यस्य किंविषये इत्यर्थं इतिभावः । अन्यथोत्तरानुसारेण कानीति प्रश्न उचितः । अत एवाऽग्रे उक्तम् । एतानर्थान् केचिद्वियन्तीत्यादि । विपूर्वस्येणो रूपम् । ये न वियन्ति । एतानर्थान् ये न वियन्ति विविधप्रकारप्रापकान्न प्राप्नुवन्ति । तत् । तद्वाचकमव्ययमित्यर्थः । द्वित्वादेरर्थधर्मत्वादितिबोध्यम् ॥

॥ वि० ॥ ननु विभक्तिवचनशब्दयोः प्रत्ययपरत्वेऽन्यतरवैयर्थ्यमत आह । कारकेष्विति । विषयसप्तम्य एताः । सादृश्यं तत्तल्लिङ्गा-द्यभावानुयोगित्वेन । नन्वेवं स्वरादिवाच्यानां कर्म्मत्वादियोग्यत्वेन सकलकारकविषये न कारकाभावाऽनुयोगित्वरूपं सादृश्यमत आह । तत्र यानीति । साधनम । शक्तिः । तादृशान्युच्चैरादीनि । तेषु च कारकशक्त्यन्तरायोगात्सर्व्वकारकविषयकाभावानुयोगित्वमस्त्येवेत्यर्थः । शक्तिः । कर्मत्वादिः । वचनादिति । अव्ययीभावश्चेति वचनादित्यर्थः । संख्याभावादिति वार्थः । मशकार्थ इत्यादौ अभावस्य फलत्ववदत्र तदभावस्य कारणत्वमिति बोध्यम् । यथेति ।

॥ कै० ॥ सदृशमिति । लिङ्गविशेषप्रतिपादने सामर्थ्याभावात् । विभक्तिष्विति । कारकेषु । तत्र यानि साधनप्रधानानि अव्ययानि तेषां शक्त्यन्तरानावेशात् क्रियाप्रधानानाञ्च शक्तिसम्बन्धाभावात् सर्वासु च विभक्तिष्वित्युक्तम् । वचनेष्विति । एकत्वा-दिषु । अव्ययीभावस्य शक्तिलिङ्गविशेषयोगेऽपि वचनादव्ययत्वम् । यथा स्वत्यादीनां कर्म्मप्रवचनीयसंज्ञा । तत्र यान्यसत्त्वभूता-

॥ भा० ॥ सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु । वचनेषु च सर्व्वेषु यन्न व्येति तदव्ययम् ॥ ❀ ॥

॥ कै० ॥ र्थाऽभिधायीन्यव्ययानि तेषां लिङ्गादिभिरयोगः । तेषां द्रव्यधर्मत्वात् । सत्त्ववाचिनामपि शब्दशक्तिस्वाभाव्यात्त-दयोगो यथा युष्मदस्मदोर्लिङ्गाऽयोगः । केचित्तु लिङ्गादिविशेषेणाऽयोगात् तत्सामान्येन तु योगमव्ययानामाहुः । तदयुक्तम् । लिङ्गादिसामान्यसद्भावे प्रमाणाभावात् । यन्न व्येतीति । नानात्वं न गच्छतीति सत्त्वधर्म्मान्न गृह्णातीत्यर्थः ॥ ❀ ॥

॥ वि० ॥ क्रियाहेतुकसम्बन्धविशेषद्योतका हि अन्वर्थबलात् कर्मप्रवचनीयाः । स्वत्योस्तत्त्वाभावेऽपि क्रियापदसन्निधौ क्रियागतविशेषद्योतकयोरपि यथा संज्ञा तथा प्रकृतेऽव्ययीभावादीनामित्यर्थः । सत्त्ववचनानामपीति । स्वरादीनामितिशेषः । तदयोगः । लिङ्गसंख्याऽयोग इत्यर्थः । सदृशमित्यत्रोक्तं सादृश्यं निरूपयितुं यन्न व्येतीत्यादि । अत्राऽपि लिङ्गेष्वित्यायावृत्त्या सम्बध्यते । नानात्वमिति । एतेषु यन्न व्येति । एतद्विषये यन्नानात्वं न प्राप्नोति तदव्ययमित्यर्थः । क्वचित्तु नाना न गच्छतीति पाठस्तदा एतद्विषयमनेकप्रकारं न प्राप्नोतीत्यर्थः ॥ ❀ ॥



॥ वि० ॥ कृन्मेजन्तः । किं मेजन्तेति । कृतो मेजन्तस्य प्रत्ययमात्रस्य संज्ञा उत कृदन्तस्येति न शङ्कार्थः प्रयोजनं सर्वनामाव्ययसंज्ञा-यामिति तदन्तविधेरित्याशयः । पश्चात् त्विति । मेजन्तो यः कृत् तदन्तमव्ययमित्यर्थ इति भावः । संज्ञाविधौ प्रत्ययग्रहणे तदन्तवि-धिनिषेधादाह । प्रयोजनमिति । ननु तद्वचनमप्रत्ययांशे चरितार्थमत आह । अथवाऽन्वर्थेति । एवञ्चाऽव्ययत्वप्रयोजकस्य महासंज्ञालभ्यार्थस्य केवलप्रत्यये-

॥ कै० ॥ कृन्मेजन्तः । कथमिति । किं मेजन्तग्रहणेन कृद्विशेष्यते पूर्वं पश्चात्तु कृता तदन्तविधिः । आहोस्वित्पूर्वं कृता तदन्तविधिः पश्चात्तु कृदन्तं मेजन्तग्रहणेन विशेष्यत इति प्रश्नः । प्रयोजनं सर्वनामाव्ययसंज्ञायामिति वचनात् तदन्तविधिः ।

॥ भा० ॥ कृन्मेजन्तः । कथमिदं विज्ञायते । कृद्यो
मान्त इति आहोस्वित् कृदन्तं यद् मान्तमिति ॥

॥ कै० ॥ अथवा अन्वर्थसंज्ञाऽऽश्रयणात्प्रत्ययग्रहणे संज्ञाविधावप्यत्र तदन्तविधिर्भवति । न हि केवलस्य प्रत्ययस्याऽप्रयो-गार्हस्य नानागमनमनानागमनं वा सम्भवति ॥

॥ वि० ॥ ष्वभावात् तदन्तविधिरिति भावः । अनयैव रीत्या सर्वादिगणे डतरडतमाभ्यां तदन्तविधिर्बोध्यः । नानागमनमिवाऽनानागमनमपि न सम्भ-वति । सम्भावितप्रतियोगिदेश एव तदभाववुद्धेः शब्देन जननात् सम्भावितप्रतियोगितावच्छेदक एवाऽब्राह्मण इत्यादिना भेदबुद्धिवदित्याशयः ॥

॥ वि० ॥ लिडच कृदिति । तिङ्भावित्वाऽभावेनाऽतिङिति न कृत्त्वप्रतिषेध इति भावः । प्रतामाविति । तमेः क्विप् । अनुनासिकस्येति दीर्घः । श्रुत्वा चेति । तथाचाऽव्ययत्वाल्लुक् स्यादिति भावः । द्विवचनेत्यादि । ननु संख्याया अनुप्रयुज्यमानोत्तरतिङैवाऽभिव्यक्तत्वात् कथं द्विवचनादिप्रसङ्ग इति चेद् । उपलक्षणमिदं सर्वकवचनोत्पत्तिपक्षेऽमादिलुगर्थमिदमावश्यकमिति न दोषः । अव्ययात् सुपो लुगितिज्ञापकात्स-

॥ कै० ॥ कारयाञ्चकारेति । लिडन्त कृत् स च मान्तो न भवति । प्रतामाविति । क्विपि लुप्ते प्रत्ययलक्षणेन कृदन्तमेतद्भवति श्रुत्वा च मान्तम् । अव्ययादिति लुगिति । ननु हल्ङ्यादिलोपेन सिद्धत्वात्किं लुका प्रयोजनम् । यदा तर्ह्यनुप्रयो-

॥ भा० ॥ किञ्चाऽतः । यदि विज्ञायते कृद्यो मान्त इति । कारयाञ्चकार हारयाञ्चकारेत्यत्र न प्राप्नोति । अथ विज्ञायते कृदन्तं यन्मान्तमिति । प्रतामौ प्रतामः । अत्रापि प्राप्नोति । यथेच्छसि तथास्तु । अस्तु तावत् कृद्यो मान्त इति । कथं कारयाञ्चकार हारयाञ्चकारेति । किं पुनरत्राऽव्ययसंज्ञया प्रार्थ्यते । अव्ययादिति लुग् यथा स्यादिति ॥

॥ कै० ॥ गवशाह्वित्वबहुत्वाऽवगतिस्तदाऽस्ति द्विवचनबहुवचनोत्पत्तिरिति लुगेषितव्यः । अकच् तु न भवत्यपरिसमाप्तार्थत्वादज्ञातादिभिर्योगाभावाच्च ॥

॥ वि० ॥ र्वविभक्तिरिति पक्षे च । अकजर्थन्तर्ह्यामन्तस्याऽव्ययत्वमेष्टव्यमत आह । अकच् त्विति । अपरिसमाप्तार्थत्वञ्च संख्याकारकादिविषयकोत्थिताऽऽकाङ्क्षत्वम् । अत एवाऽनुप्रयोगः प्रार्थ्यते स्वार्थे परिपूर्णस्यैव चार्थान्तरेण सम्बन्ध इति भावः ॥



॥ वि० ॥ ननु तरबाद्यनुत्पत्तावामन्तार्थे प्रकर्षादिप्रतीतिः कथमत आह । अनुप्रयोग एवेति । तदुत्पन्नतरपैवैतदन्तप्रकर्षप्रतीतिः । कारकादिवदित्यर्थः । भाष्ये लुक्पदमदर्शनमात्रपरमिति भावः । धातुत्वेन तुल्यजातीयतेत्याह । धातोरिति । तस्य क्विबन्तस्येति । अत्र चेदमेव भाष्यं मानम् । प्रशामाविति तु शान्तिमद्वाचकस्य शान्त्यर्थकस्यैव च गणे पाठस्तस्यैव स्वभावेन लिङ्गाद्यभावात् । वस्तुतो गणे मान्तपाठः प्रयोगे

॥ कै० ॥ इष्यते चेति । पूर्वोक्ताद्धेतोस्तरबाद्यनुत्पादादनुप्रयोग एव तरबाद्युत्पत्तिः । समाप्तार्थस्य प्रकर्षादियोगादित्यर्थः । तत्रैवार्थे ज्ञापकमाह । आतश्चेति । तत्र ह्युक्तं व्यवहितनिवृत्त्यर्थश्चेति । प्रशान्शब्दमिति । तस्य मो नो धातोरिति नत्वस्याऽसिद्ध-

॥ भा० ॥ माभूदेवम् । आम इत्येवं भविष्यति । न सिध्यति । लिङ्ग्रहणं तत्राऽनुवर्त्तते । लिङ्ग्रहणं तत्र निवर्त्तिष्यते । यदि निवर्त्तते प्रत्ययमात्रस्य लुक् प्राप्नोति । इष्यते च प्रत्ययमात्रस्य । आतश्चेष्यते । एवं ह्याह । कृञ्चाऽनुप्रयुज्यते लिटीति । यदि च प्रत्ययमात्रस्य लुग्भवति तत एतदुपपन्नं भवति । अथवा पुनरस्तु कृदन्तं यन्मान्तमिति । कथं प्रतामौ प्रताम इति । आचार्य्यप्रवृत्तिर्ज्ञापयति न प्रत्ययलक्षणेनाव्ययसंज्ञा भवतीति । यदयं प्रशान्शब्दं स्वरादिषु पठति ॥

॥ कै० ॥ त्वात्सिद्धमव्ययत्वमिति भावः । तुल्यजातीयस्य धातोर्नियमेन व्यावृत्तिः क्रियते इति कारयाञ्चकारेति भवत्येव मान्तस्याव्ययसंज्ञा । शान् तेजन इत्यस्य तु प्रशानितिरूपं न भवति । तस्य क्विबन्तस्य प्रयोगादर्शनात् । लावयतेर्लौरित्यस्याऽपि न भवति । अस्मादेव ज्ञापकाल्लाक्षणिकत्वादौकारस्य ॥

॥ वि० ॥ एव तु नत्वं यथा स्वरादीनां गणे रेफान्तपाठः प्रयोगे तु विसर्गादीति भाष्याशयः । अस्मादेवेति । धातुमात्राऽपेक्षं ज्ञापकमिति भावः । लाक्षणिकत्वादेति । वर्णग्रहणेऽपि तत्प्रवृत्तेरिति तात्पर्यम् ॥

॥ वि० ॥ भाष्येऽनिकारोकारेति । यत्त्वन्तग्रहणान्नित्ययोगबहुव्रीहिणोपदेशे एजन्तमित्यर्थाद्त्र न दोष इति । तन्न । परिभाषयैव सिद्धेऽन्तग्रहणं न कार्य्यमिति तदाशयात् । गुणे कृत इति । तत्र कृते सुबनपेक्षत्वेनाऽन्तरङ्गाऽव्ययसंज्ञा सुप्सम्बन्धजपेक्षत्वादयादयो बहिरङ्गाः । अन्तरङ्गत्वादेवेति । ननु वर्णमात्राऽपेक्षयाऽयाद्य एवान्तरङ्गाः । एवं तर्हि अन्तरङ्गत्वेन बाधकत्वं लक्ष्यते । तेनाऽन्तरङ्गानपीति न्यायेन लुगिति बोध्यम् । तेन च लुक इव तत्प्रयोजकानामपि प्राबल्यबोधनेनानेनैव गुणोऽयादीन् बाधित्वाऽव्ययत्वं बोध्यम् । तद्विघातस्येति कर्मण्यणित्याह । तमिति । नचाऽनया लुको

॥ कै० ॥ अनिकारोकारेति । एच एतद्विशेषणं न मकारस्य व्यवच्छेद्याऽसम्भवात् । आधय इति । गुणे कृते अन्तरङ्गबहिरङ्गयोरि-तिन्यायादव्ययसंज्ञा स्यान्न त्वयादयः । अन्तरङ्गत्वादेव च सुब्लुक् स्यात् । परिभाषान्तरप्रयोजनकथनार्थं लक्षणप्रतिपदोक्तयोरित्येतद-

॥ भा० ॥ कृन्मेजन्तश्चानिकारोकारप्रकृतिः । कृन्मेजन्तश्चानिकारोकारप्रकृतिरिति वक्तव्यम् । इह माभूत् ! आधये आधेः । चिकीर्षवे चिकीर्षोरिति । अनन्यप्रकृतिरिति वा । अथवा अनन्यप्रकृतिः कृदव्ययसंज्ञो भवतीति वक्तव्यम् । किं पुनरत्र ज्यायः । अनन्यप्रकृतिरितिवच-नमेव ज्यायः । इदमपि सिद्धं भवति कुम्भकारेभ्यो नगरकारेभ्य इति । तत्तर्हि वक्तव्यम् । नवा सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति ॥

॥ कै० ॥ नाश्रितम् । लाक्षणिकं ह्यनुमेयं प्रतिपदोक्तं तु प्रत्यक्षमिति तस्यैव ग्रहणं न्याय्यम् । सन्निपातलक्षण इति । सन्निपातः संश्लेषः । तन्निमित्तो यो विधिः स तद्विघातस्याऽनिमित्तं तं सन्निपातं यो विहन्ति तस्येत्यर्थः ॥

॥ वि० ॥ बाधेऽपि संज्ञाबाधे मानाभावः । साक्षात् परम्परया वा तद्विघातकमात्रस्याऽनया प्रतिबन्धात् । अत एवोपादास्तेत्यत्र कित्त्वं न । अन्यथाऽनया साक्षादेज्विषयसन्निपातविघातकक्ङितिचेतिनिषेधाऽप्रवृत्तिः स्यात् । कित्त्वं तु स्यादेव । तत्फलं तु सन्नियोगशिष्टेत्त्वसिद्धिरेव । एवञ्चोपादेस्तेतिरूपं स्यात् । अत्र हि किदिति न कार्यातिदेशः । इत्त्वकाले तत्कार्याऽसम्भवात् । तस्माद्व्यपदेशातिदेश एव । तस्मात् सन्निपातविघातकशास्त्रप्रवृत्तिनिमित्तातिदेशवत्सं-ज्ञाया अप्यनेनाऽप्रवृत्तिः । अकजाद्यर्थसंज्ञा तु न । अन्तरङ्गायां तस्यां बहिरङ्गगुणादेरसिद्धत्वात् ॥



॥ वि० ॥ पूर्वोत्तरेति । अधिकृतेनोत्तरपदेन पूर्वपदस्याक्षेपादितिभावः । अवयवेति । तथा प्रतीतेरित्यभिमानः । वस्तुतस्तु इगन्तपूर्वप-दस्योत्तरपदसन्निपातविघातः पूर्वपदस्येगन्तत्वसन्निपातविघातश्चेति भाष्याशयः । एवं दृषद्भिरित्यत्र नान्तस्य स्वादिसन्निपातविघातः । नान्त-स्वादिसन्निपातनिमित्तकपदत्वनिमित्तको हि नलोप इति । लोके पाण्याद्यवयवाङ्गुल्यादेर्भुजपुरुषाद्यवयवत्वव्यवहारात्कैयटोक्तं चिन्त्यम् । किञ्च । भवितेत्यादौ

॥ कै० ॥ ग्रामणिकुलमिति । इको ह्रस्व इति पूर्वोत्तरपदसन्निपातनिमित्तं ह्रस्वत्वं तुको न निमित्तम् । तुकि हि सति पूर्वोत्तरपदयोरा-

॥ भा० ॥ नवा वक्तव्यम् । किं कारणम् । सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येत्येषा परिभाषा कर्तव्या । कः पुनरत्र विशेषः । एषा वा परिभाषा क्रियेत । अनन्यप्रकृतिरिति वोच्येत । अवश्यमेषा परिभाषा कर्तव्या । बहून्येतस्याः परिभाषायाः प्रयोजनानि । कानि पुनस्तानि । प्रयोजनं ह्रस्वत्वं तुग्विधेर्ग्रामणिकुलम् । ग्रामणिकुलं सेनानिकुलमित्यत्र ह्रस्वत्वे कृते ह्रस्वस्य पिति कृति तुगिति तुक् प्राप्नोति । सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति न दोषो भवति ॥

॥ कै० ॥ नन्तर्यविघातः । यदा तु ह्रस्वमात्रस्य तुगागमो न तदन्तस्य अवयवावयवश्च समुदायावयवो न भवति तदैतत्प्रयोजनं न त्वन्यथा ॥

॥ वि० ॥ तासवयवेटो लघूपधाङ्गावयवेक्त्वेन प्राप्तस्य गुणस्य दीधीवेवीटामिति निषेधो व्यर्थः स्यात् । नच ह्रस्वावयवत्वे तुको यदागमा इति न्यायेने-ग्रहणेन तुग्विशिष्टस्य ग्रहणान्न सन्निपातविघातः । आने मुगितिज्ञापकेन तदनङ्गीकारात् । एतेनावयवावयवस्य समुदायावयवत्वे अवयवावयवेऽपि अवयविना समवेतत्वापत्तौ घटस्यापि परमाणुषु समवेतत्वेनाऽप्रत्यक्षसमवेततया वायुवृत्तसंयोगवदप्रत्यक्षत्वं स्यादिति परास्तम् । भूयोऽवयवसन्निकर्षस्यैव फलबलात्कारणत्वे-नाऽक्षतेः । संयोगप्रत्यक्षे तु यावदाश्रयप्रत्यक्षमेव हेतुः फलबलादिति दिक् ॥

॥ वि॰ ॥ असिद्धत्वेन समाधानं चावश्यकमित्याह । यद्यपीति । अर्थाश्रयत्वादिति । इदं वयादेशे स्वन्तस्य प्रतिषेधो वक्तव्य इति स्थानिवत्सूत्रस्थेन वार्तिकेन तत्प्रत्याख्यानपरेण भाष्येण च विरुद्धं प्रातिपदिकरूपसमुदायाश्रयत्वादिति वक्तुं युक्तं तदेवाह । वर्णाश्रयत्वादिति । इयं च बहिरङ्गत्वेन सिद्धिर्नाजानन्तर्य इतिनिषेधमनाश्रित्य । कुलं ग्रामणि इत्यत्र नपुंसकह्रस्वत्वे सन्निपातपरिभाषयैव न तुक् । प्रातिपदिकस्याजन्तत्वसन्निपातेन जातह्रस्वस्य तद्विघातक-

॥ कै॰ ॥ बहिरङ्गमिति । द्विपदाश्रयत्वात् । यदपि ह्रस्वो नपुंसके प्रातिपदिकस्येति ह्रस्वत्वं तदपि अर्थाश्रय-त्वाद्बहिरङ्गम् । तुक् तु वर्णाश्रयत्वादन्तरङ्गः । यदि तु सन्निपातलक्षण इत्याश्रीयते तदा ग्रामणिच्छत्रमित्यत्रापि

॥ भा॰ ॥ नैतदस्ति प्रयोजनम् । बहिरङ्गं ह्रस्वत्वम् अन्तरङ्गस्तुक् । असिद्धं बहिरङ्गम-न्तरङ्गे । नलोपो वृत्रहभिः । वृत्रहभिर्भ्रूणहभिरित्यत्र नलोपे कृते ह्रस्वस्य पिति कृति तुगिति तुक् प्राप्नोति । सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति न दोषो भवति । एतदपि नास्ति प्रयोजनम् । असिद्धो नलोपः । तस्यासिद्धत्वान्न भविष्यति । उदुपधत्वमकित्त्वस्य निकुचिते ॥

॥ कै॰ ॥ तुग्न स्यात् । ह्रस्वत्वतुगागमयोस्तत्र साम्यादन्तरङ्गत्वं बहिरङ्गत्वं नास्तीतिच्छलक्षणस्तुक् सिद्धो भवति । असिद्धो नलोप इति । नलोपः सुप्स्वरेत्यसिद्धं बहिरङ्गमिति वा ॥

॥ वि॰ ॥ त्वात् । एतेन परनिमित्तकत्वेन कृत्त्वपित्त्वज्ञानसापेक्षत्वेन च तुगपि ह्रस्वसमान इति नपुंसकह्रस्वत्वे तुग् दुर्वार इत्यपास्तमित्यनुपदमेव वक्ष्यामः । तुकि सन्निपातपरिभाषाश्रयणे दोषमप्याह । यदि त्विति । अत्रापि वर्णमात्राश्रयत्वेन तुगन्तरङ्गः पूर्वपदोत्तरपदाश्रयो ह्रस्वो बहिरङ्गस्तद्दोषेष्वस्याऽगणनाच्च तस्मादत्र तुग्न भवत्येवेत्यन्ये । वृत्रहभिरित्यादौ पदसंज्ञाद्वारा नलोपस्य सन्निपातलक्षणत्वम् । असिद्धमिति । सुब्निरपेक्षतुगपेक्षया पदत्वद्वारा तदपेक्षनलोपो बहिरङ्ग इति भावः ॥



॥ वि॰ ॥ यद्दीर्घत्वं प्राप्नोतीत्यस्य तत्रापि मुभावः सिद्ध इत्यर्थ इति शेषः । तत्रेत्यस्य च एवञ्चेत्यादिः । क्वचित्तु प्राप्नोति तत्र तथाच तत्रेति पाठः । असिद्धत्वादिति । शास्त्रासिद्धत्वादितिभावः । कृतेऽदसोऽसेरिति । ननु मुत्वाऽसिद्ध्या उकारे एवाकारवृद्धौ सुपि चेत्यन्त-रतमे दीर्घ आकारे मस्य स्वत एव सत्त्वाद्दात्परत्वाभावेन कथमनेन दीर्घोकारप्रवृत्तिरिति चेन्न । लोकसिद्धसन्नियोगशिष्टन्यायेन मत्वस्यापि निवृत्तेर्दात्पर-

॥ कै॰ ॥ निकुचित इति । कुञ्चेर्भावे क्तप्रत्ययः । अनिदितामिति नलोपः । तत्र कित्त्वनिमित्तमुदुपधत्वमुदुपधादि-त्यकित्त्वस्यानिमित्तमिति गुणो न भवति । अमुनेति । न मु न इत्यस्यायमर्थः । ने कर्त्तव्ये मुभावः सिद्धो भवति न तु ने

॥ भा॰ ॥ उदुपधत्वमकित्त्वस्यानिमित्तम् । क्व । निकुचिते । निकुचितमित्यत्र नलोपे कृते उदुपधा-द्भावादिकर्मणोरन्यतरस्यामित्यकित्त्वं प्राप्नोति । सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति न दोषो भवति । एतदपि नास्ति प्रयोजनम् । अस्त्वत्राऽकित्त्वम् । न धातुलोप आर्द्धधातुक इति प्रतिषेधो भविष्यति । नाभावो यञि दीर्घत्वस्यामुना । नाभावो यञि दीर्घत्वस्यानिमित्तम् । क्व । अमुना ॥

॥ कै॰ ॥ परतो यद्दीर्घत्वं प्राप्नोति तत्र तथाच मुभावस्यासिद्धत्वादकारान्तत्वाद्दीर्घप्रसङ्गः । तस्मिन् कृते अदसोऽसेरिति दी-र्घस्य दीर्घ ऊकारः प्राप्नोति ततश्चामूनेति स्यात् । उकारसन्निपातनिमित्तस्तु नाभावो दीर्घत्वस्याऽनिमित्तमिति सिद्धममुनेति ॥

॥ वि॰ ॥ त्वसत्त्वात् । नचाचः परस्मिन्निति स्थानिवत्त्वाद्दीर्घस्य नान्यतरापाय इति वाच्यम् । पूर्वत्रासिद्धीये न स्थानिवदिति निषेधात् । लक्ष्ये लक्षणस्येति न्यायस्तु न । लक्ष्यभेदादित्यभिमानः । केचित्तु अमाना अदाना इति वापत्तिरित्याहुः । दीर्घत्वस्येति । उकारस्वरूपविनाशकस्येत्यर्थः ॥

॥ वि० ॥ नन्वेवमपि टादेश एव सिद्धत्वं स्यादत आह । अनेकेति । अनेकविभक्त्यन्तपूर्व्वपद इत्यर्थः । सम्बन्धसामान्यषष्ठ्या समास इति तात्पर्य्यम् । कित्त्वस्येति ।

॥ कै० ॥ न मु टादेश इति । अनेकविभक्त्यन्तस्तत्र समास आश्रितः । टाया आदेशः टायामादेश इति । उपादास्तेति । एज्विषय

॥ भा० ॥ नाभावे कृते अतो दीर्घो यञि सुपि चेति दीर्घत्वं प्राप्नोति । सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति न दोषो भवति । एतदपि नास्ति प्रयोजनम् । वक्ष्यत्येतत् । न मु टादेश इति । आत्त्वं कित्त्वस्योपादास्त । आत्त्वं कित्त्वस्यानिमित्तं स्यात् । क्व । उपादास्तास्य स्वरः शिक्षकस्येति । आत्त्वे कृते स्थाघ्वोरिच्चेतीत्त्वं प्राप्नोति । सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति न दोषो भवति । एतदपि नास्ति प्रयोजनम् । उक्तमेतत् । दीङः प्रतिषेधः स्थाघ्वोरित्त्वे इति । तिसृचतसृत्वं ङीब्विधेः । तिसृचतसृत्वं ङीब्विधेरनिमित्तम् । क्व । तिस्रस्तिष्ठन्ति चतस्रस्तिष्ठन्तीति । तिसृचतसृभावे कृते ऋन्नेभ्यो ङीबिति ङीप् प्राप्नोति । सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति न दोषो भवति । एतदपि नास्ति प्रयोजनम् । आचार्यप्रवृत्तिर्ज्ञापयति न तिसृचतसृभावे कृते ङीब् भवतीति ॥

॥ कै० ॥ आत्त्वविधानादकित्त्वसन्निपातनिमित्तमात्त्वं स्थाघ्वोरिच्चेतिकित्त्वस्याऽनिमित्तं कित्त्वसन्नियुक्तं चेत्त्वमिति कित्त्वाभावे न भवति ॥

॥ वि० ॥ भाष्येऽपि स्थाघ्वोरिच्चेति कित्त्वं प्राप्नोतीति पाठः । इत्त्वमिति पाठे कित्त्वसहितमित्त्वमित्यर्थः । कित्त्ववारणेऽपीत्त्वं स्यादत आह । कित्त्वेति ॥



॥ वि० ॥ नास्ति ङीप इति । यत्त्वन्तरङ्गत्वात्समासात्पूर्वमेव ङीबिति । तन्न । अन्तरङ्गानपीतिन्यायेनाऽन्तर्वर्त्तिविभक्त्याश्रयतिस्रादेशस्याऽप्रवृत्तेः । ज्ञापकमेवेति । ऋन्ते तु नास्य प्रवृत्तिर्विभक्तौ लिङ्गविशिष्टाऽग्रहणात् । नन्वेवं स्वस्रादिपाठो व्यर्थः स्यादत आह । ज्ञापकादेवेति । एवञ्चैतज्ज्ञापकपरभाष्यप्रामाण्यात्स पाठोऽप्रामाणिक इति भावः । विभक्तिलुक इति । तन्निमित्तसंज्ञायाश्चेत्यपि बोध्यम् । अन्तग्रहणमिति । तत्सामर्थ्यादिति मन्यते । सामर्थ्यमसिद्धमिति परिहारः । संख्येति । बहुव्रीहेः फलं संख्यासम्प्रत्ययः । विभक्तीति । घेः परस्य ङेरौत् घेरन्ताऽऽदेशश्चाकार

॥ कै० ॥ यद्दयमिति । ननु समस्तार्थमेतत्स्यात् । प्रियतिसृणां ब्राह्मणानामिति । अत्र ह्यङ्गं पुंसि वर्त्तत इति नास्ति ङीपः प्राप्तिरिति केचित् । तदयुक्तम् । न हि ङीब्विधानेऽङ्गाधिकारोऽस्ति तत्राऽवयवस्य स्त्रीत्ववृत्तित्वाद् ङीपः प्राप्तिः केन वार्यत इति ज्ञापकमेव । ज्ञापकादेव च सिद्धत्वात् स्वस्रादिष्वनयोः पाठो न कर्त्तव्यो भवति । शतानीति । विभक्तिसन्निपातनिमित्तो नुमागमः षट्संज्ञाहेतुकस्य विभक्तिलुको न निमित्तम् । ष्णान्ता षडित्यन्तग्रहणमौपदेशिकप्रतिपत्त्यर्थमित्यत्र न भविष्यतीति चेत् । संख्यासंप्रत्ययार्थं बहु-

॥ भा० ॥ यदयं न तिसृचतसृ इति नामीतिदीर्घत्वस्य प्रतिषेधं शास्ति । इमानि तर्हि प्रयोजनानि । शतानि सहस्राणि । नुमि कृते ष्णान्ता षडिति षट्संज्ञा प्राप्नोति । सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति न दोषो भवति । शकटौ पद्धतौ ॥

॥ कै० ॥ व्रीह्यर्थं तत् स्यादित्यदोषः । शकटाविति । विभक्तिसन्निपातकृतमत्त्वं यदि टापो निमित्तं स्याद् आनन्तर्यं विहन्येत । शास्त्रीये च कार्येऽन्तादिवद्भावो नाऽऽनन्तर्ये लौकिके । टापि च सति शकटायामिति स्यात् । अत्र घेरिति तपरकरणेनाऽप्यत्र टाब् निवर्त्तयितुं शक्यते इदुतोर्हि स्थाने मात्रिक एवाकारो भविष्यति भाव्यमानत्वाद्वा सवर्णस्याकारो ग्राहको न भविष्यतीति लक्षणान्तरेणाऽपि प्राप्तस्य दीर्घत्वस्य निराकरणार्थं तपरकरणं सम्पद्यते ॥

॥ वि० ॥ इति सूत्रार्थाद् घ्यादेशौत्त्वसन्नियोगेन विधीयमानमत्त्वमङ्गप्रत्ययसन्निपातकृतमित्यर्थः । नन्वेकादेशेऽन्तवद्भावात्र टाब् व्यवधायकोऽत आह । शास्त्रीये चेति । ननु टापि वृद्ध्येकादेशे शकटावितिसिध्येदत आह । टापि चेति । वृद्धेः परत्वादाङ्गत्वाच्च याडामाविति भावः । सम्पद्यत इति । तपरत्वाद्धि सवर्णदीर्घत्वं न स्यात् टाप्तु स्यादेव । किञ्च शकटावित्यादौ वृद्धिरप्येवं न स्यादिति चिन्त्यमिदम् ॥

॥ वि० ॥ लुक् स्यादितीति । लुगभावेऽपि शकटाविति वद्यत्सन्निपातेन गुणो जातस्तदानन्तर्यविघातस्य सत्त्वेनैतत्कथनस्योपयोगश्चिन्त्यः । ननूषविदेत्याम्विधानादुवोपेत्यसंगतमत आह । उषविदेति । तत्र न द्विर्वचनात्प्राग्गुरुमत्त्वमितिभावः । प्रतिपदविधेरिति । क्वचिद्गुणो क्वचिद्द्वित्वैकादेशे गुरुमत्त्वादिजादेरित्येतन्नाप्राप्तमितिभावः । परत्वादिति । तदुक्तस्य ऊषतुरित्यस्यावकाशत्वमभ्युपगम्येदमुच्यते । उवोखेतिकवर्गद्वितीयान्तो वा भाष्ये पाठः । उषेर्विकल्पेन पक्षे आमभावेऽपि कृतद्वित्वाद् उवोषाद् आम् दुर्वार एव । रूपे चाऽस्यैव विशेष उवोषाञ्चकारेति । उषेस्त्वामि ओषा-

॥ कै० ॥ इयेषेति । आमि सति लुक् स्यादिति प्रकृतिप्रत्ययसन्निपातस्य विघातः स्यात् । उषविदेतिविकल्प ओषाञ्चकतुः ऊषतुरित्यादौ सावकाश इत्युवोषेति नित्य आम् प्रसज्येत । प्रतिपदविधेस्तु बलवत्त्वात्परत्वाच्चावापि विकल्पेनैव भाव्यमि-

॥ भा० ॥ अत्वे कृते अत इति टाप् प्राप्नोति । सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति न दोषो भवति । इयेष । उवोष । गुणे कृते इजादेश्च गुरुमतोऽनृच्छ इत्याम् प्राप्नोति । सन्नि-पातलक्षणो विधिरनिमित्तं तद्विघातस्येति न दोषो भवति । तस्य दोषो वर्णाश्रयः प्रत्ययो वर्णविचा-लस्य । तस्यैतस्य लक्षणस्य दोषो वर्णाश्रयः प्रत्ययो वर्णविचालस्यानिमित्तं स्यात् । क । अत इञ् । दाक्षिः । प्लाक्षिः । न प्रत्ययः सन्निपातलक्षणः ॥

॥ कै० ॥ त्वनुदाहरणमेतत् । गुरुमत इति नित्ययोगे मतुबाश्रयणादपि शक्योऽत्रामभावः प्रतिपादयितुम् । दाक्षिरिति । प्रयोगे व्यवस्थितस्यैवेकारस्याऽन्वाख्यानमनेन क्रियत इति सन्निपातलक्षणत्वं प्रत्ययस्य सम्भाव्यते । न प्रत्यय इति । कल्पितप्रकृ-तिप्रत्ययविभागेनाऽन्वाख्यानात्प्रकृतेरविद्यमान एव प्रत्यय उत्पाद्यत इत्याशयः ॥

॥ वि० ॥ त्वकारेति परे । नित्ययोगे इति । इजादेर्गुरोरित्युक्तावपि अनृच्छ इतिप्रतिषेधादिजादेर्गुरुमत इत्यर्थलाभे मतुब्ग्रहणादितिभावः । परे त्वेवं सत्यनृच्छ इत्यस्यानर्थक्यापत्तिः । तुगुत्पत्तेः प्राग्गुरुमत्त्वाभावात् । उक्षादीनां गुरुमतामामनापत्तेश्च । तेषामाशीर्लिङि गुरुमत्त्वाभावादिति भाष्याशय-माहुः । नन्विञ्प्रत्ययो नोभयाधिष्ठानसम्बन्धलक्षणसन्निपाताश्रय इत्यत आह । प्रयोगे इति । अन्वाख्यानं साधुत्वेन । प्रत्ययस्य साधुत्वावच्छिन्नस्य । अविद्यमान एवेति । मन्दमध्यानां तथैव प्रतीतेः । साधुत्वान्वाख्यानेऽपि साधुत्वस्य सन्निपातनिमित्तकत्वं न प्रत्ययस्येतिभावः ॥



॥ वि० ॥ सत्यामिति । यस्मादित्यस्य प्रत्ययविधावुद्देश्यताऽवच्छेदकावच्छिन्नादित्यर्थेऽवर्णान्तादिञि तदङ्गसंज्ञमिति सूत्रार्थ इतिभावः । यद्यङ्गसंज्ञाऽनिमित्तं कथं तर्हि वार्त्तिके प्रत्यय इत्युक्तमत आह । तत्रेति । आत्रेयेति । इतश्चानिञ इति ढक् । परे तु वार्त्तिकस्यायमाशयः । निमित्तनिमित्तिनोः सम्बन्धवद्विशेषणविशेष्ययोः सम्बन्धोऽपि सन्निपातः । एवञ्च प्रातिपदिकस्यादन्तत्वसम्बन्धनिमित्तः प्रत्ययस्तद्विघातस्याऽनिमित्तमिति । इममाशयमजानानः शङ्कते । न प्रत्यय इति । एकदेश्युत्तरयति । अङ्गसंज्ञा तर्हीति । युक्तं चैतद् उपजीव्यविरोधस्याऽन्याय्यत्वं हि एतन्न्यायमूलम् । तस्य च प्रकृतेऽपि सत्त्वात् । अतिप्रसङ्गस्तु एतन्न्यायस्याऽनित्यत्वेन सुशकवारणः । अत एव ग्रामणि कुलमित्यादौ नपुंसकह्रस्वत्वे तुग्न । उपजीवनस्य प्रातिपदिकाजन्तत्वसम्ब-

॥ कै० ॥ अङ्गसंज्ञेति । सत्यामङ्गसंज्ञायामकारलोप इति स्यादानन्तर्यविघातः । तत्र वर्णविचालस्याऽनिमित्तं स्यादिति अङ्गसंज्ञाद्वारेणेत्यर्थः । अत्र केचिद्वर्णाश्रय इति व्याचक्षते । तेषामात्रेयाद्यप्युदाहरणम् । अन्ये त्व-

॥ भा० ॥ अङ्गसंज्ञा तर्ह्यनिमित्तं स्यात् । आत्त्वं पुग्विधेः क्नापयति । आत्त्वं पुग्विधेरनिमित्तं स्यात् । क । क्नापयतीति ॥

॥ कै० ॥ वर्णाश्रय इत्यकारप्रश्लेषमाहुः । क्नापयतीति । णिचि वृद्धौ कृतायामात्त्वं पुको न निमित्तं स्यात् । अङ्गस्य य आकारस्तस्य पुगित्यवयवभक्तं पुकं मत्वा दोषोपन्यासः ॥

॥ वि० ॥ न्धस्य विघातात् । बहिरङ्गपरिभाषयाऽसिद्धत्वं तु न । तस्य तत्त्वाभावात् । शैवो गाङ्गेय इत्यादावप्यङ्गसंज्ञाया लोपनिमित्तत्वानापत्त्या वर्णाश्रय इत्यंशस्य वार्तिके वैयर्थ्यापत्तेश्चेत्याहुः । आत्त्वम् । क्नोङ्ग्जीनां णाविति । स्वाङ्गस्याऽव्यवधायकत्वादाह । आकार इति । श्रुतत्वात्तस्यैव पुगितिभावः । परे तु पुकोऽङ्गभक्तत्वेऽपि न क्षतिः । यादृशयोस्सन्निपातः पुग्निमित्तं तस्य विघातसत्त्वाद् यदागमा इति परिभाषया तद्ग्रहणेन ग्रहणेऽपि सूत्रश्रुतसन्निपातस्याऽभावात् । अत्र चेदमेव भाष्यं मानम् । ह्रस्वत्वं तुग्विधेरित्यादि च । सिद्धान्ताशयस्तु परिभाषाया अनित्यत्वमाश्रयणीयमित्येवेत्याहुः ॥

॥ वि० ॥ भाष्ये पुग् ह्रस्वत्वस्येति । णयाकारसन्निपातनिमित्तः पुक् । ह्रस्वे हि तद्विघातः स्पष्ट एव । नच ह्रस्वस्य चङ्परणिनिमित्तस्य णिनिमित्तपुगपेक्षया बहिरङ्गत्वेनासिद्धत्वात्कथमत्र परिभाषाप्राप्तिः । एतद्भाष्यप्रामाण्येनानयाऽसिद्धस्याऽपि निवृत्तिस्वीकारात् । किञ्च तया

॥ कै० ॥ अग्निमानिति । पूर्वमुदात्तमाश्रित्य मतुप उदात्तत्वं क्रियमाणं पूर्वस्य निघातं न कुर्यात् । परमवाचेति । अन्तोदात्तादुत्तरपदादिति विभक्त्युदात्तत्वं विधीयमानं पूर्वनिघातस्याऽनिमित्तं स्यात् । माभूदिति । हलश्यादिसूत्रे

॥ भा० ॥ पुग् ह्रस्वत्वस्यादीदपत् । पुग् ह्रस्वत्वस्याऽनिमित्तं स्यात् । क्व । अदीदपदिति । त्यदाद्यकारष्टाब्विधेः । त्यदाद्यकारष्टाब्विधेरनिमित्तं स्यात् । क्व । या सेति । इड्विधिराकारलोपस्य ययिवान् । इड्विधिराकारलोपस्याऽनिमित्तं स्यात् । क्व । ययिवान् तस्थिवानिति । मतुब्विभक्त्युदात्तत्वं पूर्वनिघातस्य । मतुब्विभक्त्युदात्तत्वं पूर्वनिघातस्याऽनिमित्तं स्यात् । क्व । अग्निमान् वायुमान् परमवाचा परमवाचे इति । नदीह्रस्वत्वं सम्बुद्धिलोपस्य । नदीह्रस्वत्वं सम्बुद्धिलोपस्याऽनिमित्तं स्यात् । क्व । नदि कुमारि किशोरि ब्राह्मणि ब्रह्मबन्धु इति । नदीह्रस्वत्वे कृते एङ्ह्रस्वात्सम्बुद्धेरिति सम्बुद्धिलोपो न प्राप्नोति । माभूदेवम् । ङ्यन्तादित्येवं भविष्यति । न सिध्यति । दीर्घादित्युच्यते ह्रस्वान्ताच्च न प्राप्नोति ॥

॥ कै० ॥ दीर्घग्रहणमदृष्टेदमुच्यते । तत्र कृतेऽपि ह्रस्वत्वे स्थानिवद्भावाद्भविष्यतीतिभावः । ब्रह्मबन्धुशब्दापेक्षया च नैतदुच्यते । तस्याङ्यावन्तत्वात् ॥

॥ वि० ॥ शास्त्रीये कार्येऽसिद्धत्वेऽपि लौकिके सन्निपातेऽसिद्धत्वाभावात् । भाष्ये इड्विधिरिति । वस्वेकाजादित्याकारान्तलक्षण इट् । नियमशास्त्राणां च विधिमुखेनैव प्रवृत्तिरितिभावः । पूर्वमिति । ह्रस्वनुड्भ्यामित्यत्रान्तोदात्तादित्यनुवृत्तेरितिभावः । ह्रस्वत्वमस्वार्थत्यनेन ॥



॥ वि० ॥ ननु ह्रस्वग्रहणन्निरवकाशत्वेन सन्निपातपरिभाषाबाधकं स्यादत आह । सम्बुद्धिलोपस्येति । भाष्ये एते दोषाः समा इति । वार्त्तिककारोक्तसकलप्रयोजनापेक्षमिदम् । यद्यपि प्रयोजनानि नव दोषा अष्टौ तथापि अल्पान्तरत्वात्समत्वोक्तिः । यद्वाऽन्यत्रापि दोषः सम्भाव्यत इत्यभिमानः । ननूक्तदोषाणामुक्तप्रयोजनेभ्यो बहुत्वमेव न कुतस्तदतिशयोऽत आह । दुष्टत्वेति । अन्ये तूक्तेषु दूषितप्रयोजनानि त्यक्त्वा स्थितप्रयोजनचयापेक्षया भूयस्त्वोक्तिरिति वदन्ति । ध्यायतेर्विचि षष्ठ्येकवचने आतो धातोरितिलोपे दुरो दाशनाशदभध्येष्वित्युत्वे उत्तरपदादेष्टुत्वे दूढ्य इति तदाह ।

॥ कै० ॥ नित्य इति । कार्यन्तावन्नित्यम् । तद्येन केनचिल्लक्षणेन भवत्वितिभावः । सम्बुद्धिलोपस्यावकाशो हे देवदत्तेति । भूयांसो वेति । दुष्टत्वप्रतिपादनाय प्रकर्षारोपः । सर्वादिषु समशब्दस्य सर्वशब्दपर्यायस्य सर्वनामसंज्ञाविधानात्तुल्यवाचिनोऽत्र समा

॥ भा० ॥ इदमिह सम्प्रधार्यम् । ह्रस्वत्वं क्रियतां सम्बुद्धिलोप इति । किमत्र कर्त्तव्यम् । परत्वाद्ध्रस्वत्वम् । नित्यस्सम्बुद्धिलोपः । कृते ह्रस्वत्वे प्राप्नोति अकृतेऽपि । अनित्यः सम्बुद्धिलोपः । नहि कृते ह्रस्वत्वे प्राप्नोति । किं कारणम् । सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति । एते दोषाः समा भूयांसो वा । तस्मान्नार्थोऽनया परिभाषया । नहि दोषाः सन्तीति परिभाषा न कर्त्तव्या लक्षणं वा न प्रणेयम् । नहि भिक्षुकाः सन्तीति स्थाल्यो नाधिश्रीयन्ते । नच मृगास्सन्तीति यवा नोप्यन्ते । दोषाः खल्वपि साकल्येन परिगणिताः । प्रयोजनानामुदाहरणमात्रम् । कुत एतत् । नहि दोषाणां लक्षणमस्ति ॥

॥ कै० ॥ इति प्रयोगः । अस्ति समशब्दः सर्वपर्यायः । यथा समराज्यं वर्त्तते सर्वेषां राज्यं वर्त्तत इत्यर्थः । वेदेऽपि मानः समस्य दूढ्य इति प्रयोगः । सर्वस्य दुर्धियो मान इत्यर्थः । तत्र प्रयोजनानामल्पत्वात्तान्येवोपसंख्यातव्यानीत्यर्थः ॥

॥ वि० ॥ दुर्धिय इति । सर्वस्य दुर्बुद्धेरंहतिरुपद्रवो नोऽस्मान्मावधीदित्यर्थः । दुःस्थिता धीर्येषामितिविग्रहे गतिकारकपूर्वकत्वाभावाद्यणन । तस्मान्नार्थ इति पूर्वपक्षाऽऽशयमाह । तत्रेति । सिद्धान्ती समाधत्ते । भाष्ये नहीति । परिभाषायाः कर्त्तव्यत्वे युक्त्यन्तरमप्याह सिद्धान्ती । दोषाः खल्वपीति । लक्षणमिति । उपलक्षकं रूपं नास्तीत्यर्थः ॥

॥ वि० ॥ तत्र विधानेति । यादृशप्रकृतिप्रत्ययसन्निपातनिमित्ताऽङ्गसंज्ञा तादृशसन्निपातविघातं विना यस्येतिलोपस्य चारितार्थ्याभावादिति भावः । कष्टायेति । अकारसन्निपातनिमित्तो ङेर्यो यञादिनिमित्तदीर्घस्याऽनिमित्तं स्यादिति भावः । नचैवं दोषाः साकल्येनेति भाष्यविरोधः । कष्टायेति यादेशो दीर्घत्वस्येतिग्रन्थो भाष्यपुस्तकेषु भ्रष्टोऽतो न दोषः । एवञ्च समा इत्यपि यथाश्रुतमेवेत्याहुः । लिङ्गादिति । इत्वनिषेधवैयर्थ्यादिति भावः । न त्वपूर्व इति । क्रादिनियमादार्द्धधातुकस्येडित्येवेट् सिद्ध इति नेडाकारान्तसन्निपातनिमित्त इति भावः । परेतु नियमशास्त्राणां विधित्वमेव आर्थी त्वितरनिवृत्तिरित्यर्थस्य भाष्यसम्मतत्वेनाकारान्तसन्निपातनिमित्त एवेडित्यनित्यत्वेनैवात्र समाधानं युक्तमित्याहुः । आकारान्तेति ।

॥ कै० ॥ प्रतिविधेयमिति । तत्र विधानसामर्थ्यादाङ्गो वर्णविचालो भविष्यति । कष्टायेतिज्ञापकाद्यशब्दे दीर्घो भविष्यति । न यासयोरिति लिङ्गादाव् भविष्यति । ययिवानिति वस्वेकाजादित्ययन्नियम इटो न त्वपूर्वोऽयं विधिरिति आकारस्य लोपः । क्रापयतीत्याकारान्तभक्तः पुग्न व्यवधायकः । अदीदपदिति लिङ्गाद्ध्रस्वः । यदयं मारणतोषणेति जानातेर्मित्त्वमुपधाह्रस्वार्थं शास्ति

॥ भा० ॥ तस्माद्यान्येतस्याः परिभाषायाः प्रयोजनानि तदर्थमेषा परिभाषा कर्त्तव्या प्रतिविधेयं दोषेषु ॥ ❀ ॥

॥ कै० ॥ तज्ज्ञापयति पुकि कृते उपधाह्रस्वत्वं भवतीति नहि जानातेरकृते पुकि ह्रस्वभाविन्युपधा भवति । अग्निमानिति अनुदात्तम्पदमेकवर्जमिति परिभाषा स्वरविषया सन्निपातपरिभाषां बाधते । एङ्ह्रस्वादित्यचापि गुणात्सम्बुद्धेरिति वक्तव्ये ह्रस्वग्रहणसामर्थ्यात्सन्निपातपरिभाषाऽभावः । दर्वीत्यचच्छन्दसि गुणाभावपक्षे छान्दसो लुग्भविष्यति ॥ ❀ ॥

॥ वि० ॥ अङ्गस्येत्यनेन सामानाधिकरण्यस्योचितत्वादिति भावः । अत्र यद्वक्तव्यं तत्प्रागेवोक्तम् । तज्ज्ञापयतीति । अत एव भरज्ञपीतिनिर्द्देशः सङ्गच्छते । मितां ह्रस्वे चोपधाया इत्यनुवर्त्तत इति भावः । ह्रस्वभाविनीति । अचश्चेत्युपस्थितेरिति भावः । अचश्चेत्यस्य श्रुतत्वेन तद्बाधकल्पनापेक्षयाऽस्यैवानुमितस्य लोकन्यायसिद्धस्य बाधकल्पनोचितेति तात्पर्य्यम् । बाधते इति । ह्रस्वनुड्भ्यामित्यत्रोपस्थिततयोपस्थितिसामर्थ्यादिति भावः । गुणाऽभावेति । जसादिषुच्छन्दसि वावचनमितिवचनादिति भावः ॥ ❀ ॥



॥ वि० ॥ अव्ययीभावश्च । उपचारो नाम अतः कृ इतिविहितविसर्गस्थानिकसत्वम् । यथा मशकार्थ इति । एतदेव निवृत्तिकारणमिति पातञ्जलैर्व्यवह्रियते । अनेनेति । ऋष्यन्तरवचनसंवादेनेत्यर्थः । तत्र वक्तव्य इत्यन्तं तत् । तत्र यदन्यदित्यन्यत्वे प्रतियोगिनस्त्रय उक्ता इत्याहुः ।

॥ कै० ॥ अव्ययीभावश्च । प्रयोजनमिति । मुखस्वरोपचारौ निवर्त्यमानौ प्रयोजनम् । यथा मशकार्थो धूम इति ।

॥ भा० ॥ अव्ययीभावश्च । अव्ययीभावस्याऽव्ययत्वे प्रयोजनं लुग्मुखस्वरोपचाराः । अव्ययीभावस्याऽव्ययत्वे प्रयोजनम् । किम् । लुग्मुखस्वरोपचाराः । लुक् । उपाग्नि प्रत्यग्नि । अव्ययादिति लुक् सिद्धो भवति । मुखस्वरः । उपाग्निमुखः प्रत्यग्निमुखः । नाव्ययदिक्शब्दगोमहत्स्थूलमुष्टिपृथुवत्सेभ्य इत्येष प्रतिषेधः सिद्धो भवति । उपचारः । उपपयःकारः । उपपयःकाम इति । अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्येति प्रतिषेधः सिद्धो भवति । किं पुनरिदं परिगणनमाहोस्विदुदाहरणमात्रम् । परिगणनमित्याह । अपि खल्वप्याहुः । यदन्यदव्ययीभावस्याऽव्ययकृतं प्राप्नोति तस्य प्रतिषेधो वक्तव्य इति । किं पुनस्तत् । पराङ्गवद्भावः । पराङ्गवद्भावेऽव्ययप्रतिषेधश्चोदितः । उच्चैरधीयान नीचैरधीयानेत्येवमर्थम् । स इहापि प्राप्नोति । उपाग्न्यधीयान प्रत्यग्न्यधीयान । अकच्यव्ययग्रहणं क्रियते उच्चकैर्नीचकैरित्येवमर्थम् । तदिहापि प्राप्नोति । उपाग्निकं प्रत्यग्निकमिति । मुमि अव्ययप्रतिषेधश्चोद्यते । दोषामन्यमहर्दिवामन्या रात्रिरित्येवमर्थम् । स इहापि प्राप्नोति । उपकुम्भंमन्य उपमणिकंमन्य इति ॥

॥ कै० ॥ अपि खल्विति । एवं खल्वित्यर्थः । परिगणनमनेन दृढीक्रियते । उपाग्न्यधीयानेति । अग्निसमीपे अधीयानेत्यर्थः । तत्र षष्ठ्यामन्त्रितकारकवचनमिति पराङ्गवद्भावो भवति ॥

॥ वि० ॥ किम्पुनस्तत्पराङ्गवदित्यादिना तस्यैवोदाहरणप्रदर्शनम् । षष्ठ्येति । अत्र च कारकत्वम् । तेन समुदायस्य षाष्ठमामन्त्रितस्य चेत्याद्युदात्तत्वम् ॥

॥ वि० ॥ भाष्ये यदयं नाव्ययीभावादिति । स ह्यनन्तरत्वादव्ययादाप्सुप इत्यस्यैव निषेधो न तु सुपो धात्वित्यस्येति उपसर्गाकमुख इत्यादौ तन्निषेधेन चरितार्थमिति न भ्रमितव्यम् । नचोक्तमिति । भाष्ये यदीत्यसन्दिग्धे सन्दिग्धवचनम् । वेदाः प्रमाणं चेदितिवत् । तस्मात्तत्र ग्रहणं कर्त्तव्यम् । सूत्रं च न कार्यमिति भाष्याशय इति वयम् । अन्ये त्विति । च्विना ह्यारोपितमव्ययत्वं वास्तवमनव्ययत्वञ्च प्रतीयत इति यथालक्ष्यं किञ्चिदव्ययकार्यं

॥ कै० ॥ नचैकमिति । सामान्यलक्षणमेकप्रयोजनार्थं न कर्त्तव्यमित्यर्थः । तत्रैवायमिति । नचोक्तं तस्मान्मुखस्वरेणाऽत्र भवितव्यमित्याहुः । अन्ये तु वर्णयन्ति । अनव्ययमव्ययं भवतीत्यन्वर्थसंज्ञाविज्ञानान्मुखस्वरनिवृत्तिर्भवतीति नार्थः सूत्रेणेति ।

॥ भा० ॥ अस्य च्वौ । अव्ययप्रतिषेधश्चोद्यते । दोषाभूतमहर्दिवाभूता रात्रिरित्येवमर्थम् । स इहापि प्राप्नोति । उपकुम्भीभूतम् । उपमणिकीभूतम् । यदि परिगणनं क्रियते नार्थोऽव्ययीभावस्याऽव्ययसंज्ञया । कथं यान्यव्ययीभावस्याव्ययत्वे प्रयोजनानि । नैतानि सन्ति । यत्तावदुच्यते लुगिति । आचार्यप्रवृत्तिर्ज्ञापयति । भवत्यव्ययीभावाल्लुगिति । यदयं नाव्ययीभावादत इतिप्रतिषेधं शास्ति । उपचार इति । अनुत्तरपदस्थस्येति वर्त्तते । तत्र मुखस्वर एकः प्रयोजयति । नचैकं प्रयोजनं योगारम्भं प्रयोजयति । यद्येतावत्प्रयोजनं स्यात्तत्रैवायं ब्रूयान्नाव्ययादव्ययीभावाच्चेति ॥ ❁ ॥

॥ कै० ॥ केचित्तु स्वरादिपाठात्सिद्धायामव्ययसंज्ञायाम्पुनर्वचनमनित्यत्वज्ञापनार्थं तेन कतिपयान्येवाव्ययकार्याणि भवन्तीति नार्थः परिगणनेनेत्याहुः । तेषां वचनमन्तरेण विशेषे प्रमाणाभावः ॥ ❁ ॥

॥ वि० ॥ भवति किञ्चिन्नेतीष्टं सिद्धमिति भावः । विशेषे । कार्यविशेषे । किञ्च द्विर्बद्धं सुबद्धमिति न्यायेन पुनर्विधानात् सार्वत्रिकमेव स्यादित्यपि द्रष्टव्यम् । एवञ्चाव्ययीभावस्याव्ययत्वात्क्यङ्गितिहरदत्तायुक्तं चिन्त्यम् । भाष्यविरोधात् । अन्ये तु मुखस्वरे नाव्ययीभावादितिनोक्तं सूत्रञ्च कृतं तस्मादन्यदपि प्रयोजनं तद्या उपकूलमित्यादौ षष्ठीसमासप्रतिषेधादीत्याहुरितिमतं हरिटीकायां स्पष्टम् । तदपि खल्वप्याहुरित्यादिभाष्याऽननुगुणम् ॥ ❁ ॥



॥ वि० ॥ शि सर्व्वनामस्थानम् । भाष्येऽसमर्थसमासश्चेतिदूषणान्तरम् । तत्रासामर्थ्यमसम्बन्धात् चेन वाक्यभेदस्याऽपि संग्रहः । पर्युदासेति । एवं हि समर्थसमासैकवाक्यते लभ्येते । यद्यपि पर्युदासेऽपि लक्षणा तथापि दोषद्वययुक्तप्रसज्यप्रतिषेधाऽपेक्षया लघुरेवेतिभावः । वस्तुतो

॥ कै० ॥ शिसर्व्वं । सुडनपुंसकस्येतिचेदिति । अस्मिन् सूत्रन्यासे दोषः । सुट्स्त्रीपुंसयोरित्यस्मिन्न्यासे न दोष इत्यर्थः ।

॥ भा० ॥ शि सर्व्वनामस्थानम् । सुडनपुंसकस्य । शि सर्व्वनामस्थानं सुडनपुंसकस्येतिचेज्जसि शिप्रतिषेधः । शि सर्वनामस्थानं सुडनपुंसकस्येतिचेज्जसि शिप्रतिषेधः प्राप्नोति । कुण्डानि तिष्ठन्ति । वनानि तिष्ठन्ति । असमर्थसमासश्च । असमर्थसमासश्चाऽयं द्रष्टव्योऽनपुंसकस्येति । नहि नञो नपुंसकेन सामर्थ्यम् । केन तर्हि । भवतिना । न भवति नपुंसकस्येति । यत्तावदुच्यते । शि सर्व्वनामस्थानं सुडनपुंसकस्येति चेज्जसि शिप्रतिषेध इति । नाप्रतिषेधात् । नायं प्रसज्यप्रतिषेधो नपुंसकस्य नेति । किन्तर्हि । पर्युदासोऽयं यदन्यन्नपुंसकादिति । नपुंसके न व्यापारः । यदि केनचित्प्राप्नोति तेन भविष्यति । पूर्व्वेण च प्राप्नोति ॥

॥ कै० ॥ प्रसज्यप्रतिषेधाश्रयेण पूर्वपक्षः । पर्युदासाश्रयेण सिद्धान्तः ॥

॥ वि० ॥ नञो निपातत्वेनानेकार्थत्वात्पर्युदासपक्षे लक्षणेति रिक्तं वचः । पर्युदासपक्षे सुडित्यनेनैकवाक्यतया तस्याप्राप्तावपि आद्यस्याप्राप्तौ न मानमिति तात्पर्य्यम् । भाष्ये नपुंसके न व्यापार इति । निषेधस्येति शेषः ॥

॥ वि० ॥ अप्राप्तेरितिवार्त्तिकस्य पूर्वसूत्रविहितसंज्ञायाः प्रतिषेधाऽप्राप्तेरित्यचरार्थः । भाष्य तु वस्त्वर्थ उच्यते । अन्यथेति । सुडि-त्यनपेक्ष्य नपुंसकसम्बन्धिमात्रस्य निषेध इत्यभिमानः । सुट्सम्बन्धे तु इदं चिन्त्यम् । शसः शौ चरितार्थत्वात् । ननु संज्ञाया एकत्वेन कार्य्यैक्ये विरोधाभावात्कथं परत्वमत आह । प्रतिषेधेति । शसि सावकाशत्वात् ! एवञ्चोभयोर्यौगपद्यासम्भवरूपो विरोधोऽस्तीतिभावः । पूर्वाम्प्राप्तिमिति । एवञ्च

॥ कै० ॥ अप्राप्तेर्वेति । प्रसज्यप्रतिषेधेऽप्यदोषः । तत्र सुडित्यनेन या प्राप्तिस्सा निषिध्यते न तु शि सर्व्वनामस्थानमि-तिप्राप्तिः । अन्यथा शि सर्वनामस्थानमिति निरवकाशं स्यात् । नपुंसकस्यैव हि शिः सम्भवति । ननुचेयमिति । परत्वा-दित्यर्थः । प्रतिषेधयुक्तायुक्तत्वाच्च विरोधसद्भावः । तत्र परत्वात् सुडिति प्राप्तिः पूर्वां प्राप्तिम्बाधते तामपि प्रतिषेध इति

॥ भा० ॥ अप्राप्तेर्वा । अथवा अनन्तरा या प्राप्तिः सा निषिध्यते । कुत एतत् । अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति । पूर्वा प्राप्तिरप्रतिषिद्धा तया भविष्यति । ननुचेयम्प्राप्तिः पूर्वाम्प्राप्तिम्बाधते । नोत्सहते प्रतिषिद्धा सती बाधितुम् । यदप्युच्यते । असमर्थसमासश्चायं द्रष्टव्य इति । यद्यपि वक्तव्यः । अथवैतर्हि बहूनि प्रयोजनानि । कानि । असूर्य्यम्पश्यानि मुखानि । अपुनर्गेयाः श्लोकाः । अश्राद्धभोजी ब्राह्मण इति ॥ ❁ ॥

॥ कै० ॥ दोषः । नोत्सहत इति । अपवादविषयपरिहारेणाऽस्याः प्रवर्त्तनादित्यर्थः । अथवैतर्हीति । इदानीमित्यर्थः । तत्र स्त्रीपुंसयोरितिवक्तव्ये अनपुंसकस्येति वचनं ज्ञापकं प्रसज्यप्रतिषेधेऽपि नञ्समासोऽस्तीति ॥ ❁ ॥

॥ वि० ॥ सकृद्गतिन्यायेन पुनर्न प्रवर्त्तत इतिभावः । अपवादेति । एवञ्च स्वयमप्रवर्त्तमाना कथमन्यबाधिकेति तन्न्यायावसरो नेतिभावः । इदानीमित्यर्थ इति । तथापीत्यर्थ इत्युचितम् । यद्यपि वक्तव्य इत्युपक्रमात् । स्त्रीपुंसयोरिति । मात्राधिक्येऽपि स्पष्टप्रतिपत्त्यर्थमित्यर्थः । पुंस्त्रियोरिति तु वक्तुमशक्यं तस्यासाधुत्वा-दितिबोध्यम् । अत्र पर्युदासप्रसज्यप्रतिषेधयोः समफलत्वोक्त्या शास्त्रप्रापितस्य प्रतिषेधे विकल्प इति मीमांसकोक्तं चिन्त्यम् । सामान्यविशेषन्यायेन बाधस्यैवौ-चित्यात् । स्वाऽभावे सम्भावितस्यैव च प्रतिषेध इत्यादि मञ्जूषायां विस्तरः ॥ ❁ ॥



॥ वि० ॥ नवेतिविभाषा । ननु समुदायस्य समासग्रहणनियमेनाऽप्रातिपदिकत्वान्नवेतिविभाषायामित्यनुपपन्नमत आह । समुदाय-स्येति । वार्त्तिकोच्चारितसमुदायस्येत्यर्थः । नन्वेवमपि समुदायस्यानाबन्तत्वात्कथं याडादीत्यत आह । स्त्रीप्रत्यये चेति । स्त्रीप्रत्यये चानु-पसर्जने नेति घ्यङः सम्प्रसारणमित्यत्र भाष्यपठितवचनेनेति भावः । यत्तु हल्ङ्याबितिदीर्घग्रहणादिति । तन्न । बहुश्रेयसीत्यादौ लोपार्थं प्रत्ययग्रहण इति तदन्तविधिना ङ्यन्तेत्यर्थे तस्य स्वादिप्रत्ययलब्धयस्मादिहितस्तदादेरित्येतद्विशेषणतया ङ्यन्तान्तेत्यर्थेन निष्कौशाम्बिव्यावृत्तये दीर्घग्रहणस्यावश्यकत्वादिति दिक् ।

॥ कै० ॥ नवेति । नवेतिविभाषायामिति । समुदायस्यानुकरणत्वादनुकरणस्य चानुकार्य्येणार्थवत्त्वात्प्रातिपदिकत्वे सति विभक्त्युत्पत्तिः । स्त्रीप्रत्यये च तदादिनियमाभावाद्याडामौ भवतः । अथवा नवेत्युच्चार्य्य या विभाषा कृता तस्यामितिव्याख्या ।

॥ भा० ॥ नवेतिविभाषा । नवेतिविभाषायामर्थसंज्ञाकरणम् । नवेतिविभा-षायामर्थस्य संज्ञा कर्त्तव्या । नवाशब्दस्य योऽर्थस्तस्य संज्ञा भवतीति वक्तव्यम् ॥

॥ कै० ॥ तत्र लोके क्रियापदसन्निधाने नवाशब्दयोर्योऽर्थौ द्योत्यौ विकल्पप्रतिषेधलक्षणः स संज्ञीत्यर्थः । अन्यथा विभा-षाप्रदेशेषु नवाशब्दावेवाऽऽदेशौ स्याताम् ॥

॥ वि० ॥ अनुकरणस्याबन्तत्वन्तु प्रकृतिवदनुकरणमिति न्यायात् । तस्यानित्यत्वाच्च न प्रत्ययान्तत्वप्रयुक्तप्रातिपदिकत्वनिषेध इति बोध्यम् । अथवेति । कृता । उच्चारिता । समासत्वादेव प्रातिपदिकत्वमसमासेऽपि लिङ्गविशिष्टपरिभाषया विभक्तिरिति भावः । नामपदसन्निधाने नवा शाटीत्यादौ प्रत्यया-र्थाऽवगतेराह । क्रियापदेति । अन्यथेति । प्रकरणादिवशाच्चार्थविशेषाऽवसाय इति भावः ॥

॥ वि० ॥ ननु दाधा घ्वित्यादौ न घुशब्दादिना दाधादीनां प्रत्ययः किन्तु दाधाशब्दैरेवेत्यत आह । प्रदेशेष्विति । भाष्ये घुग्रह-

॥ कै० ॥ घुग्रहणेष्विति । शब्दस्य संज्ञाकरणात्प्रदेशेषु तस्यैव सम्प्रत्यय इत्यर्थः । इतिकरण इति । क्रियत इति करणः कर्मणि ल्युट् । इतिश्चासौ करणश्चेति समासः । क्रियत इति सामान्यविशेषभावेन निर्द्देशः । शब्दाधिक्यादिति ।

॥ भा० ॥ किं प्रयोजनम् । शब्दसंज्ञायां ह्यर्थाऽसम्प्रत्ययो यथाऽन्यत्र । शब्दसंज्ञायां हि सत्यामर्थस्याऽसम्प्रत्ययः स्यात् । यथाऽन्यत्र । अन्यत्रापि हि शब्दसंज्ञायां शब्दस्यैव सम्प्रत्ययो भवति नार्थस्य । क्वाऽन्यत्र । दाधा घ्वदाप् । तरप्तमपौ घ इति । घुग्रहणेषु घग्रहणेषु च शब्दस्य सम्प्रत्ययो भवति नाऽर्थस्य । तत्तर्हि वक्तव्यम् । न वक्तव्यम् । इतिकरणोऽर्थनिर्द्देशार्थः । इतिकरणः क्रियते सोऽर्थनिर्द्देशार्थो भविष्यति । किं गतमेतदितिना । आहो-स्विच्छब्दाधिक्यादर्थाधिक्यम् । गतमित्याह । कुतः । लोकतः ॥

॥ कै० ॥ उपहासपरमेतच्चोदकस्य वचनम् । अशब्दार्थस्यालाभादिति भावः ॥

॥ वि० ॥ गोष्वित्यादेर्घुप्रदेशेष्वित्यर्थः । करणल्युटि अर्थासङ्गतेराह । कर्मणीति । बाहुलकादिति भावः । सामान्येति । पाकं पचतीतिवत् ॥



॥ वि० ॥ भाष्ये स्वस्मात्पदार्थात्प्रच्युतः शब्दपदार्थकः सम्पद्यत इत्यन्वयः । स्वस्मात्पदार्थादित्यस्य विवरणं याऽसाविति । दार्ष्टान्तिके च शब्दपदार्थकता स्वं रूपमितिवचनात् । तस्या इत्यस्य प्रच्युत इति शेषः । कोऽसौ लौकिकोऽर्थस्तत्राह । नवेति यद्गम्यत इति । तद्विवृणोति । नवेति यत्प्रतीयत इति । स लौकिकोऽर्थ इति शेषः । यद्यपीति । एवञ्च स्वस्मात्पदार्थादित्यनुपपन्नं सर्वस्यापि स्वपदार्थत्वात् प्रच्युतिश्चाऽनुपपन्नेति भावः । त्यागो नास्तीति चार्थान्तरग्रहणाऽभावस्याऽप्युपलक्षणम् । प्रसिद्धिवशादिति । लोकप्रसिद्ध्यैव तत्र स्वपदार्थत्वव्यवहारस्तेषामेवास्याऽयं प्रसिद्धो-

॥ कै० ॥ गौरित्ययमाहेति । यद्यपि नित्ये शब्दार्थसम्बन्धे उपात्तास्यार्थस्य त्यागो नास्ति । तथापि प्रसिद्धिवशादेतदभिधीयते । अर्थपदार्थकतायाः प्रच्युत इति । तत्त्वतस्त्वादावेव स्वरूपपदार्थको गोशब्दः प्रयुक्तः । सादृश्यात्तु तमर्थमनभि-

॥ भा० ॥ तद्यथा । लोके गौरित्ययमाहेति गोशब्दादितिकरणः प्रयुज्यमानो गोशब्दं स्वस्मात्पदार्थात्प्रच्यावयति । सोऽसौ स्वस्मात्पदार्थात्प्रच्युतो याऽसावर्थपदार्थकता तस्याश्शब्दपदार्थकः सम्पद्यते । एवमिहापि नवाशब्दादितिकरणः प्रयुज्यमानो नवाशब्दं स्वस्मात्पदार्थात्प्रच्यावयति सोऽसौ स्वस्मात्पदार्थात्प्रच्युतो याऽसौ शब्दपदार्थकता तस्या लौकिकमर्थं प्रत्याययति । नवेति यद्गम्यते नवेति यत्प्रतीयते इति ॥

॥ कै० ॥ व्यक्तमितिशब्दो द्योतयतीति पदार्थविपर्यासकृदितिरुच्यते । अर्थपदार्थकतेति । सम्बन्धे भावप्रत्ययः । सम्बन्धात्प्रच्युतोऽर्थादपि प्रच्युतो भवति ॥

॥ वि० ॥ ऽर्थस्यक्तोऽप्रसिद्धश्च गृहीत इति प्रसिद्ध्या भाष्ये प्रच्युत्यङ्गीकारावुक्ताविति भावः । वस्तुतो न प्रच्युत्यादिकमित्याह । तत्त्वत इति । सादृश्यादिति । अर्थभेदाच्छब्दभेद इतिपक्षे इदम् । एकशब्दत्वे त्वभेदादिति बोध्यम् । वस्तुतः प्रच्युत्यङ्गीकारौ तयोरर्थयोर्बोधाविषयत्वबोधविषयत्वे एव न तु मुख्याविति बोध्यम् । पदार्थविपर्यासकृदिति । लोके शब्दविशेषणकाऽर्थप्रतीतिः शास्त्रेऽर्थविशेषणकशब्दस्य । इति शब्दसमभिव्याहारे विपरीतमिति विपर्यासः । भाष्येऽपि स्वस्मात्पदार्थात्प्रच्युत इत्यस्य विशेष्यभूतादिति शेषः । अन्यथार्थप्रतीतिश्शब्दानालिङ्गिताया अभावेन एतदसङ्गतिः स्यादिति दिक् ॥

॥ वि॰ ॥ इतिकरणस्याऽर्थनिर्द्देशार्थत्वे स्थिते नैव समानानां शब्दानां प्राप्तिरत आह । समान इति । प्रत्यग्रेति । यद्यपि नचेह वयं विभाषाग्रहणेन सर्वादीन्यभिसम्बध्नीम इति भाष्यपर्यालोचनया सर्वादिविशेषणत्वलाभात् प्रत्यग्रत्वं समासविशेषणमयुक्तं तथापि दिग्वाचकसर्वादीनामर्थस्य दिशो नवपुराणत्वाऽसम्भवादुदाहरणपरभाष्याच्च तत्र सर्वादीनीत्यनेन तद्घटितसमासो लक्षणीय इति भावः । तन्निमित्त इति । लक्षण-

॥ कै॰ ॥ समानशब्दप्रतिषेध इति । समानः शब्दो वाचको येषामर्थानां तेषामित्यर्थः । विभाषा दिक्समास इति । विभाषाशब्देनाभिनवलक्षणोऽर्थः प्रत्याय्यते तत्र प्रत्यग्रवाची यो दिक्समास इति सम्प्रत्ययः स्यात् । तत्र दिशो नित्यत्वान्नवपुरा-

॥ भा॰ ॥ समानशब्दप्रतिषेधः । समानशब्दानां प्रतिषेधो वक्तव्यः । नवा कुण्डिका नवा घटिकेति । किञ्च स्यात् । यद्येतेषामपि विभाषा संज्ञा स्यात् । विभाषा दिक्समासे बहुव्रीहौ । दक्षिणपूर्वस्यां शालायाम् । अचिरकृतायां सम्प्रत्ययः स्यात् ॥

॥ कै॰ ॥ णत्वासम्भवात्तन्निमित्तो यदा शालायां व्यपदेशः दक्षिणपूर्वा शाला सा चाभिनवा तदा संज्ञा स्यादित्यर्थः । संज्ञाकार्य्यव्यङ्ग्यं च प्रत्यग्रत्वं स्यात् ॥

॥ वि॰ ॥ येत्यर्थः । तदा संज्ञेति । न बहुव्रीहावितिनिषेधे प्राप्ते इदं नित्यार्थं स्यादिति भावः । भाष्ये अचिरकृतायामिति । तस्यां बोध्यायामित्यर्थः । सम्प्रत्ययः स्यादित्यस्य संज्ञाया इति शेषः ॥



॥ वि॰ ॥ ननु प्रदेशे विभाषा दिगित्यादौ न नवाशब्द उच्चारितो नवेतिविभाषेतिसूत्रे तु न किञ्चिद्विधायोक्तं पूर्वोत्तरसाहचर्य्येणास्य संज्ञासूत्रत्वादित्यत आह । प्रदेशेति । इयं संज्ञेति । नवेतिविभाषेत्येतत्संज्ञासूत्रार्थ इत्यर्थः । कर्याणि । सर्वनामसंज्ञादीनि । नवार्थम् । नवा-

॥ कै॰ ॥ नवा विधिपूर्वकत्वादिति । प्रदेशवाक्यार्थं पर्यालोच्येयं संज्ञा व्यवस्थाप्यते । प्रदेशेषु च कार्याणि विधाय विभाषाशब्द उच्चारितो नवार्थं गमयति । तत्र लोकवन्निपातार्थावगतिर्भवति । नतु प्रत्यग्रार्थोऽवगतिरित्यर्थः । विलिङ्गमिति । भिन्नलिङ्गं

॥ भा॰ ॥ नवा विधिपूर्वकत्वात् प्रतिषेधसंप्रत्ययो यथा लोके । नवा एष दोषः । किं कारणम् । विधिपूर्वकत्वात् । विधाय किञ्चिन्नवेत्युच्यते । तेन प्रतिषेधवाचिनः संप्रत्ययो भवति । तद्यथा लोके । ग्रामो भवता गन्तव्यो नवा । नेति गम्यते । अस्ति कारणं येन नवेति लोके प्रतिषेधवाचिनः सम्प्रत्ययो भवति । किं कारणम् । विलिङ्गं हि भवान् लोके निर्द्देशं करोति । अङ्ग हि समानलिङ्गेन निर्द्देशः क्रियतां प्रत्यग्रवाचिनः सम्प्रत्ययो भविष्यति । तद्यथा । ग्रामो भवता गन्तव्यो नवः । प्रत्यग्र इति गम्यते ॥

॥ कै॰ ॥ व्यधिकरणमित्यर्थः । विलिङ्गत्वेन वैयधिकरण्यं लक्ष्यते न तु प्रतिषेधवाचिनो नवाशब्दस्य लिङ्गयोगोऽस्ति ॥

॥ वि॰ ॥ शब्दार्थम् । विभाषाशब्दस्याऽर्थसंज्ञात्वात् । क्वचित्तु तथैव पाठः । भाष्ये नवेत्युच्यते इत्यस्य तदर्थबोधको विभाषाशब्द उच्यते इत्यर्थः । प्रतिषेधवाचिन इति । प्रतिषेधवाच्ययं शब्द इतिप्रत्ययो भवतीत्यर्थः । न त्विति । एवञ्च प्रदेशानुगुण्येन प्रकृतसूत्रेऽपि न प्रत्यग्रवाचिनो ग्रहणमित्यर्थः । भिन्नेति । अग्रे समानलिङ्ग इति दर्शनाद्विशब्दो भिन्नार्थ इतिभावः । न त्विति । अव्ययत्वादितिभावः ॥

॥ वि॰ ॥ नैवेति । भाष्ये क्वचित् क्रियत इत्येतच्चैव न जानीम इत्यन्वयः । नवा विधीत्युक्तवतोऽयं ग्रन्थः । एवञ्च शास्त्रे समानलिङ्गनिर्देशस्य क्वाप्यभावान्न क्वापि प्रत्यग्रार्थावगतिरित्याशयः । ननूभयविधाऽन्वयसंभवे कथमन्यतरनिर्णय इत्यत आह । तत्रेति । अप्राप्ते यवागूभोजन

॥ कै॰ ॥ एतच्चैवेति । नैव क्वचिद्व्याकरणे समानलिङ्गो निर्देश इत्यर्थः । विभाषा सेनासुरेति यद्यपि समानलिङ्गो निर्देशः । तथापि भिन्नविभक्तित्वात्सामानाधिकरण्याऽभावः । अपिचेति । तत्र सामर्थ्याद्विशेषावगतिः । यदा अप्राप्ते यवागूभोजने वाक्य-

॥ भा॰ ॥ एतच्चैव न जानीमः । क्वचिद्व्याकरणे समानलिङ्गो निर्देशः क्रियत इति । अपिचात्र कामचारः प्रयोक्तुः शब्दानामभिसम्बन्धे । तद्यथा । यवागूर्भवता भोक्तव्या नवा । यदा यवागूशब्दो भुजिना सम्बध्यते भुजिर्नवाशब्देन तदा प्रतिषेधवाचिनः सम्प्रत्ययो भवति । यवागूर्भवता भोक्तव्या नवा । नेतिगम्यते । यदा तु नवाशब्दो यवागूशब्देनाऽभिसम्बध्यते न भुजिना तदा प्रत्यग्रवाचिनः संप्रत्ययो भवति । यथा यवागूर्नवा भवता भोक्तव्या । प्रत्यग्रेति गम्यते । नचेह वयं विभाषाग्रहणेन सर्वादीन्यभिसम्बध्नीमः । दिक्समासे बहुव्रीहौ सर्वादीनि विभाषा भवन्तीति । किं तर्हि । भवतिरभिसम्बध्यते । दिक्समासे बहुव्रीहौ सर्वादीनि भवन्ति विभाषेति ॥

॥ कै॰ ॥ मुदीर्य्यते तदा प्रत्यग्राऽर्थावगतिः । यदा त्वातुरं प्रति यवागूभोजननिषेधार्थमुच्यते तदा निषेधाऽवगतिः । नचेहेति । क्रियायाः प्राधान्यात्सैव विभाषाग्रहणेन सम्बध्यते न तु तदङ्गमित्यर्थः । तदेवं स्थितमेतत् । नवा विधिपूर्वकत्वादिति ॥

॥ वि॰ ॥ इति । अकर्तव्यत्वेनाऽवगत इत्यर्थः । प्ररोचनायेति शेषः । नतु तदङ्गमिति । भवतिक्रियाकर्त्तुरुद्देश्यरूपं तदङ्गमित्यर्थः । भाष्ये विभाषा भवन्तीति । अत्र विभाषेत्यग्रे सर्वनामानीतिशेषः । भवन्ति विभाषेत्यस्य सर्वनामानीत्यादिः ॥



॥ वि॰ ॥ ननु दिक्समासेऽपि नित्यनिषेधे न बहुव्रीहाविति सामान्यसूत्रेणैव सिद्धे विभाषा दिगितिसूत्रस्य वैयर्थ्यापत्तिरित्यत आह । परिहारान्तरेति । इति सिद्धे विभाषा दिगित्यसम्बद्धं स्यादित्यर्थः । ननु प्रसक्तस्य निषेधेऽभाव एव दृष्टो न तु विकल्पोऽत आह । प्रतिषेधादिति । विभाषा श्वेरित्यादौ पिद्विषये विधेरनुमानं करिष्यत इत्यर्थः । निषेधानुपपत्तिकल्पितशास्त्रेण प्रसज्येतिवार्तिकार्थ इति भावः । एवञ्च षोडशीग्रहणाग्रहणवदेक-

॥ कै॰ ॥ विध्यनित्यत्वमिति । विकल्प इत्यर्थः । नवाशब्द एक एव निपातः प्रतिषेधवाची तस्यैवोपादानादिति भावः ।

॥ भा॰ ॥ विध्यनित्यत्वमनुपपन्नं प्रतिषेधसंज्ञाकरणात् । विधेरनित्यत्वं नोपपद्यते । शुशाव शुशुवतुः शुशुवुः शिश्वाय शिश्वियतुः शिश्वियुः । किं कारणम् । प्रतिषेधसंज्ञाकरणात् । प्रतिषेधस्येयं संज्ञा क्रियते । तेन विभाषाप्रदेशेषु प्रतिषेधस्यैव संप्रत्ययः स्यात् । सिद्धन्तु प्रसज्य प्रतिषेधात् । सिद्धमेतत् । कथम् । प्रसज्य प्रतिषेधात् । विधाय किञ्चिन्नवेत्युच्यते । तेनोभयं भविष्यति । विप्रतिषिद्धन्तु । विप्रतिषिद्धं तु भवति । अत्र न विज्ञायते केनाभिप्रायेण प्रसजति केन निवृत्तिं करोतीति ॥

॥ कै॰ ॥ परिहारान्तराऽभिधानाय तु न बहुव्रीहावित्यसम्बद्धं स्यादिति नोक्तम् । सिद्धं त्विति । प्रतिषेधाद्विधिरनुमास्यते ततो विकल्पः सेत्स्यतीत्यर्थः । विप्रतिषिद्धं त्विति । एकविषययोर्विधिप्रतिषेधयोर्विरोधादित्यर्थः ॥

॥ वि॰ ॥ विषयत्वाद्विकल्पसिद्धिरिति तात्पर्य्यम् । तत इति । अन्यथा कल्पितशास्त्रं व्यर्थं स्यात् प्रक्षालनाद्धीतिन्यायविरोधान्न निषेधार्थमेव तदितिभावः । ननु विकल्पो विरुद्धविषय एवेति किमुच्यते विप्रतिषिद्धं त्विति अत आह । एकेति । युगपदितिशेषः । विप्रतिषेधोपपादकं भाष्यम् अत्र नेति । प्रसजति । भावमितिशेषः ॥

॥ वि० ॥ प्रसज्यते इति प्रसङ्गो विधिः प्रतिषेधविषयादित्यस्य कालविशेषविशिष्टात्ततोऽन्यत्र तत्रैव कालान्तरविशिष्टे इत्यर्थः । निषेधसामर्थ्यलब्धोऽयमर्थः । सामर्थ्यात्प्रतिषेधविषयादन्यत्र विधिरित्युक्ते यत्फलितं तदाह । प्रतिषेधसामर्थ्याच्चेति । इदमपि पूर्ववद्व्याख्येयं तद्ध्वनयन्नाह । पर्याय इति । भाष्ये या हि प्राप्ते इति । केवलोभयत्र विभाषारूपा वेत्यर्थः । कृतसामर्थ्य इति । पूर्वेणैव । कृतशास्त्रेणैव । विधिः कृतसामर्थ्यो

॥ कै० ॥ नवा प्रसङ्गेति । सामर्थ्याद्विधिप्रतिषेधयोः पर्यायो भविष्यतीत्यर्थः । महती संज्ञेति । तेन द्वावत्र संज्ञिनौ विकल्पप्रतिषेधावित्यर्थः । यदि हि केवलः प्रतिषेधः संज्ञी स्यात् संज्ञाकरणमनर्थकं स्यात् विभाषाप्रदेशेषु नेत्येव ब्रूयात् ।

॥ भा० ॥ नवा प्रसङ्गसामर्थ्यादन्यत्र प्रतिषेधविषयात् । नवा एष दोषः । किं कारणम् । प्रसङ्गसामर्थ्यात् । प्रसङ्गसामर्थ्याच्च विधिर्भविष्यति । अन्यत्र प्रतिषेधविषयात् । प्रतिषेधसामर्थ्याच्च प्रतिषेधो भविष्यति । अन्यत्र विधिविषयात् । तदेतत् क्व सिद्धं भवति । या अप्राप्ते विभाषा । या हि प्राप्ते विभाषा कृतसामर्थ्यस्तत्र पूर्वेणैव विधिरिति कृत्वा प्रतिषेधस्यैव संप्रत्ययः स्यात् । एतदपि सिद्धम् । कथम् । विभाषेति महती संज्ञा क्रियते । संज्ञा च नाम यतो न लघीयः । कुत एतत् । लघ्वर्थं हि संज्ञाकरणम् । तत्र महत्याः संज्ञायाः करणे एतत्प्रयोजनम् । उभयोः संज्ञा यथा विज्ञायेत । नेति च वेति च ॥

॥ कै० ॥ तत्र समुदायस्येयं संज्ञेति विभाषाप्रदेशेषु विकल्पप्रतिषेधावुपतिष्ठेते । अप्राप्तविभाषासु च प्राप्त्यभावात्प्रतिषेधस्याव्यापाराद्विकल्प एवोपतिष्ठते ।

॥ वि० ॥ विहितविधिकल्पकनिषेधीयशक्तिक इत्यर्थः । एवञ्च तत्र विधिकल्पनाभावात्प्रतिषेधमात्रप्रत्ययः स्यादिति भावः । एतद्भाष्यादपि सामान्यशास्त्रप्राप्तनिषेधे विकल्पं वदन्तो मीमांसकाः परास्ताः । महत्याःसंज्ञाया इति भाष्येण संज्ञैव न कर्तव्येति विवक्षितं न तु लघ्वी कर्तव्येतीत्याह । यदि हीति । समुदायस्येति । प्रत्येकधर्मावच्छिन्नस्योभयस्येत्यर्थः । विकल्पप्रतिषेधाविति । प्राप्तविभाषाविषये इत्यर्थः । विकल्प एवोपेति । उभयोः संज्ञाकरणेऽपि निषेधस्यान्वयायोग्यत्वाद्द्वितीयस्यैवोपस्थितिरितिभावः । अत्राप्राप्तविभाषाशब्देन केवलाऽप्राप्तविभाषोच्यते ॥



॥ वि० ॥ युगपदिति । अनवगतसंज्ञिद्वयक्रमोपस्थानस्य चोद्यमेतदित्यभिप्रायः । भावाभावाविति । इमावेव भाष्ये विधिप्रतिषेधशब्देनोक्तौ । भाष्ये पूर्वस्योत्तरेणेति । पूर्वस्य प्रतिषेधस्य उत्तरेण विकल्पेन । बाधश्चात्र न निषेधप्रवृत्तिप्रतिबन्धः किन्तु तत्फलस्याभावनिष्ठसार्वकालिकत्वस्य प्रतिबन्ध इति बोध्यम् । नन्वेवमपि पूर्ववाक्येन नशब्द एवादेशः स्यात् तत्राऽर्थपरत्वे मानाभावादत आह । इतिकरण इति । एवञ्चोभयत्रापीतिशब्दाऽन्वय

॥ कै० ॥ एवमपीति । यद्यपि विरुद्धयोरेका संज्ञा क्रियते तथापि प्रदेशेषु युगपद्विरोधाद्भावाभावौ विधातुं न शक्येते इत्यर्थः । सिद्धं त्विति । उभयत्र विभाषासु प्रतिषेधेन समीकृते विषये पश्चाद्विकल्पः प्रवर्तत इत्यर्थः । यदि तु पूर्वं विकल्पः

॥ भा० ॥ तत्र या तावदप्राप्ते विभाषा तत्र प्रतिषेध्यं नास्तीतिकृत्वा वेत्यनेन विकल्पो भविष्यति । या हि प्राप्ते विभाषा तत्रोभयमुपस्थितं भवति । नेति च वेति च । तत्र नेत्यनेन प्रतिषिद्धे वेत्यनेन विकल्पो भविष्यति । एवमपि विधिप्रतिषेधयोर्युगपद्वचनाऽनुपपत्तिः । विधिप्रतिषेधयोर्युगपद्वचनं नोपपद्यते । शुशाव शुशुवतुः शुशुवुः । शिश्वाय शिश्वियतुः शिश्वियुः । किं कारणम् । भवतीतिचेन्न प्रतिषेधः । भवतीति चेत् प्रतिषेधो न प्राप्नोति । नेति चेन्न विधिः । नेति चेद्विधिर्न सिध्यति । सिद्धं तु पूर्वस्योत्तरेण बाधितत्वात् । सिद्धमेतत् । कथम् । पूर्वविधिमुत्तरो विधिर्बाधते । इतिकरणोऽर्थनिर्देशार्थ इत्युक्तम् ॥

॥ कै० ॥ प्रवर्तते पश्चात्प्रतिषेधस्ततो विकल्पप्रवृत्तिरनर्थिकैव स्यात् । आनुपूर्वी च या संज्ञाविधावाश्रिता सैव प्रदेशवाक्येष्वाश्रीयते ।

॥ वि० ॥ इति भावः । एवञ्चार्थद्वयकसंज्ञाकरणसामर्थ्याद्वेव वाक्यभेदेन क्रमेणान्वय इतिभावः । एवञ्च केवलप्राप्तविभाषायामुभयत्र विभाषायां च क्रमेण निषेधविकल्पयोरुपस्थितिः । शुद्धाप्राप्तविभाषायां तु निषेधस्याऽन्वयायोग्यत्वाच्छुद्धविकल्पोपस्थितिरिति तात्पर्यम् । पूर्वं विकल्पाप्रवृत्तौ हेत्वन्तरमाहानुपूर्वी चेति ॥

॥ वि० ॥ अनुपयोगादिति । उभयगतिरिहेत्युक्तेर्लोकगृहीतविकल्पग्रह्यैव सिद्धेरितिभावः । पक्षे निवृत्तिरिति । एवञ्च तत्र निषेधतात्पर्यकतयैव प्रवृत्तिरितिभावः । अप्राप्तेति । तत्र विधितात्पर्यकतयैव प्रवृत्तिरिति भावः । पित्स्वेवेति । तत्राप्राप्तेरितिभावः । एकस्योभयत्र तात्पर्यन्तु न

॥ कै० ॥ उभयत्र विभाषायां चेयं संज्ञा । प्राप्तविभाषायामप्राप्तविभाषायां च संज्ञाकरणस्यानुपयोगात् । तथाहि । प्राप्तविभाषासु पक्षे निवृत्तिः क्रियते पक्षे तु प्रवृत्तिः स्थितैव । अप्राप्तविभाषासु च पक्षे कार्यस्य प्रवृत्तिः क्रियते पक्षान्तरे त्वप्रवृत्तिः स्थितैवेति नास्ति तत्र संज्ञाफलम् । विभाषा श्वेरित्यत्र तु यदि विधिमुखेन विभाषाश्रुतिः प्रवर्तते पित्स्वेव सम्प्रसारणं विभाषा स्यात् । कित्सु यजादित्वान्नित्यमेव स्यात् । अथ प्रतिषेधमुखेन प्रवृत्तिस्तदा कित्स्वेव विकल्प इति पित्सु न स्यात् । संज्ञाकरणे तु पूर्वं प्रतिषेधे कित्सु प्रवृत्तिः पश्चाद्विधिमुखेन सर्वत्र पक्षे सम्प्रसारणस्य प्रवर्तनादिष्टं सिध्यति । यदा तु प्रतिलक्ष्यं भेदेन विभाषा श्वेरित्यस्य व्यापारः क्वचिद्विधिमुखेन क्वचित्प्रतिषेधमुखेन तदा संज्ञाकरणमन्तरेणाऽपि सिध्यतीति अशिष्योऽयं योग इति वक्ष्यते । अशिष्यो वा विदितत्वादिति ॥

॥ वि० ॥ सम्भवतीत्याशयः । भावतात्पर्यकतालोभेन पिद्विषयतैव स्यादिति तत्त्वम् । अस्योभयत्रविभाषाविषयत्वं भाष्ये विभाषा श्वेरित्यस्यैवोदाहरणदानेन बोधितम् । एवञ्च तदर्थमावश्यकेऽस्मिन् अन्यत्राऽपि स्वशास्त्रगृहीतसङ्केतेनैव बोधान्न या हि प्राप्ते विभाषा तत्रोभयमुपस्थितमित्याद्युक्तभाष्यविरोध इति दिक् ॥



॥ वि० ॥ साधुत्वप्रतिपादनाच्छास्त्रस्येति पाठः । शास्त्रस्येतिकर्तुः शेषत्वे षष्ठी । क्वचित्तु साधुत्वप्रतिपादनार्थत्वाच्छास्त्रस्येति पाठः । प्राधान्यादिति । यदिह परिनिष्ठितं तत्साध्विति अर्थापत्तिकल्पितवाक्यस्यैव मुख्यत्वात्तेन मुख्यतया साधुत्वस्यैव विधानादित्याशयः । तदङ्गभूतानामिति । तदुद्देश्यभूतानामित्यर्थः । भाष्ये यस्य विभाषा क्रियत इति । यत्सम्बन्धेन विभाषोच्यत इत्यर्थः । समासस्यैव हीति । हि यतः समासो

॥ कै० ॥ साध्वनुशासन इति । साधुत्वप्रतिपादनार्थत्वाच्छास्त्रस्य साधुत्वस्यैव प्राधान्यादिकल्पेन सम्बन्धः स्याद् न तु तदङ्गभूतानां समाससंज्ञादीनामिति भावः । ततश्च विभाषा श्वेरित्यस्यायमर्थः स्यात् । विभाषा श्वयतेस्साधु सम्प्रसारणं भवति पक्षे त्वसा-

॥ भा० ॥ साध्वनुशासनेऽस्मिन् शास्त्रे यस्य विभाषा तस्य साधुत्वम् । साध्वनुशासनेऽस्मिन् शास्त्रे यस्य विभाषा क्रियते स विभाषा साधुः स्यात् । समासस्यैव हि विभाषा क्रियते तेन समासस्यैव विभाषा साधुत्वं स्यात् । अस्तु । यः साधुः स प्रयोक्ष्यते । असाधुर्न प्रयोक्ष्यते । नचैव हि कदाचिद्व्याकरणे राजपुरुष इत्येतस्यामवस्थायामसाधुत्वमिष्यते । अपि च द्वैधाऽप्रतिपत्तिः । द्वैधं शब्दानामप्रतिपत्तिः स्यात् । इच्छामश्च पुनर्विभाषाप्रदेशेषु द्वैधं शब्दानां प्रतिपत्तिः स्यादिति । तच्च न सिध्यति ॥

॥ कै० ॥ स्विति । अस्तु यः साधुरिति । यथा भक्ष्याऽभक्ष्यसन्निधौ भक्ष्यमेवोपादीयते । नचैव हीति । सर्वदा त्वस्य साधुत्वं नोभयरूपत्वमित्यर्थः । द्वैधाऽप्रतिपत्तिरिति । साधुत्वविकल्पने विभाषाग्रहणस्योपयुक्तत्वात् शिश्वियतुरित्यादिरूपं न सिध्यतीत्यर्थः ॥

॥ वि० ॥ विभाषा क्रियते समासो विभाषेत्युच्यते तत्र समासोद्देशेन साधुत्वविधानात्तस्यैव विकल्पः स्यादिति भावः । साधुत्वञ्च जातिविशेषः । समासप्रकरणीयविभाषाधिकारस्य भाष्ये प्रत्याख्यानादाह । विभाषा श्वेरिति । साधुत्वविकल्पे दूषणमाह । भाष्ये नचैवेत्यादिना । तद्व्याचष्टे । सर्वदा त्विति । सादृश्यादसाधुत्यागपुरस्सरं साधूपादानं दुष्करमित्यपि बोध्यम् ॥

॥ वि० ॥ तत्र साध्वनुशासन इत्युक्त्वा शब्दनित्यत्वपक्ष एवाऽयं दोषो न तु कार्यत्वपक्षे इत्युक्तं तदुपपादकं यस्य पुनरित्यादिभाष्यम् । प्राधान्यात्साधुत्वस्यैव विकल्पः स्यादिति यदुक्तं तत्राऽऽह । साधुत्वस्येति । संज्ञायाः श्रुतत्वेन साधुत्वस्याऽश्रुतत्वेन श्रुतस्य श्रुतेनैव सम्बन्धस्य न्याय्यत्वात्प्रयोगाऽसमवायिलडादिस्थले श्रुते विधेयत्वस्याऽवश्यकत्वाच्चेत्यपि बोध्यम् । पशुत्वेति । साक्षाच्छ्रूयमाणोऽप्ययोग्यत्वाद्यदा न सम्बन्धस्तदा किं वक्तव्यमश्रूयमाणोऽयोग्ये सम्बन्धो नेतीत्यर्थः । अन्यचेति । समर्थसूत्रे । मुख्यः प्रधानः । अभिन्नाऽर्थत्वमिति । एवञ्च तदर्थं कश्चित्साधुत्वेनाऽन्वाख्यायमानोऽनन्वाख्यातस्य तदर्थकस्यान्यस्य

॥ कै० ॥ यस्य पुनरिति । एवं मन्यते व्याकरणेनैव शब्दा उत्पाद्यन्ते तन्मते विभाषाग्रहणेनाऽपूर्वत्वेन विधेयत्वात्सम्प्रसारणमेव विकल्प्यत इति द्वैधं प्रतिपत्तिः शब्दानां सिध्यतीति भावः । यस्यापीति । साधुत्वस्याऽपौरुषेयत्वादविकल्प्यत्वात्तदज्ञानामेव विकल्पः । तद्यथेति । पशुत्वानुडुत्त्वयोरविकल्प्यत्वात्क्रिया विकल्प्यते । नन्वन्यत्रोक्तं नच संज्ञाया भावाभावाविष्येते इति इह तूक्तं संज्ञाभिसम्बध्यत इति ततश्च

॥ भा० ॥ यस्य पुनः कार्याः शब्दाः । विभाषाऽसौ समासं निवर्तयति । यस्यापि नित्याः शब्दास्तस्याप्येष दोषो न भवति । कथम् । न विभाषाग्रहणेन साधुत्वमभिसम्बध्यते । किं तर्हि । समाससंज्ञाभिसम्बध्यते । समास इत्येषा संज्ञा विभाषा भवतीति । तद्यथा । मेध्यः पशुर्विभाषितः । मेध्योऽनड्वान् विभाषित इति । नैतद्विचार्यते अनड्वाननड्वानिति । किं तर्हि । आलब्धव्यो नालब्धव्य इति ॥

॥ कै० ॥ विरोधः । नैष दोषः । इह वृत्तिवाक्ययोर्मुख्यार्थाभेदादभिन्नार्थत्वमाश्रित्योक्तम् । अन्यत्र तु व्यपेक्षैकार्थीभावभेदाद्भिन्नार्थत्वमाश्रित्यैकार्थीभावे एव संज्ञाया भावाभावौ नेष्येते इत्युक्तमित्यविरोधः ॥

॥ वि० ॥ निवर्तकः स्यादिति तस्यापि साधुत्वार्थं विभाषाऽधिकार आवश्यक इति भावः । वाक्ये व्यपेक्षा परस्पराऽऽकाङ्क्षारूपा पदार्थानामपृथगुपस्थितिविषयत्वमेकार्थीभावो वृत्तिविषयः । एवञ्च वृत्तिवाक्ययोर्भिन्नार्थत्वान्न वाक्याऽनुज्ञानाय विभाषाग्रहणं किन्तु वृत्तिविषये एव संज्ञाविकल्पार्थं वाच्यं नच वृत्तौ संज्ञायाः स इष्यते तस्मादेकार्थीभावस्यैव मन्दमत्यनुग्रहाय स विशेषणमिति तत्रोक्ततात्पर्यमित्यविरोध इति भावः । भाष्ये समाससंज्ञेत्यस्य तद्विषयैकार्थीभाव इत्यर्थः ॥



॥ वि० ॥ ननु युगपच्छब्दस्यैककाल इत्यर्थकस्य समभ्यर्थवृत्तेरन्वाचयशब्देनाताद्दृशेन कथं द्वन्द्व इत्यत आह । युगपद्भाव इति । कार्येषु शब्देषु यौगपद्याऽन्वाचयविषये तेषां यौगपद्यं युगपत्प्रयोगः प्राप्नोतीति वार्तिकाक्षरार्थः । भाष्ये युगपद्वचनतेति बहुव्रीहिस्तल् । अन्वाचयेनेत्युक्त्वा ढक् चेति समुच्चयोदाहरणमसङ्गतमित्यत आह । समुच्चय इति । स्वरितत्वेन वेति । यथा काश्यादिभ्यष्ठञ्ञिठाविति वर्तमाने वाहीकग्रामेभ्यश्चेत्यत्र । नित्यशब्दवादे तु प्रयोगदृष्टानामेव शास्त्रे काल्पनिकविधेयत्वेनेष्टप्रत्ययविभागसिद्धिः । रेखागवयन्यायस्याद्यन्ताविति सूत्रे भाष्य एव वक्ष्यमाणत्वात् । व्यवहितेऽपीति । लोके

॥ कै० ॥ नित्यवादी कार्यपक्षे दूषणमाह । कार्येष्विति । युगपद्भावे युगपच्छब्दो वर्तत इति द्वन्द्वः कृतः । अन्वाचयः समुच्चयोऽभिमतो यस्य चकारेण स्वरितत्वेन वा विधानम् । यस्य कार्याः शब्दाः स प्रयोगनिरपेक्षः शब्दानन्वाचष्ट इति तव्यादीनां युगपदुत्पत्तिः प्राप्नोति । नचैकस्या इति । ननु व्यवहितेऽपि परशब्दः प्रवर्तते । सत्यम् । अन्तरालस्थमनपेक्ष्याऽऽनन्तर्यमा-

॥ भा० ॥ कार्येषु युगपदन्वाचययौगपद्यम् । कार्येषु शब्देषु युगपदन्वाचयेन च यदुच्यते तस्य युगपद्वचनता प्राप्नोति । तव्यत्तव्यानीयरः । ढक्च मण्डूकादिति । यस्य पुनर्नित्याः शब्दाः प्रयुक्तानामसौ साधुत्वमन्वाचष्टे । ननु च यस्यापि कार्यास्तस्याप्येष न दोषः । कथम् । प्रत्ययः परो भवतीत्युच्यते नचैकस्याः प्रकृतेरनेकस्य प्रत्ययस्य युगपत्परत्वेन सम्भवोऽस्ति ॥

॥ कै० ॥ रोप्य तत्र परशब्दप्रयोगो निर्दिष्टग्रहणं त्वानन्तर्यार्थमिति कुतो व्यवहितस्य प्रयोगः । कथं तर्ह्युक्तमेका प्रकृतिर्बहवश्च यत्र इति । तत्र यत्राऽऽकृतेरेकत्वात्तस्याश्च परत्वादानन्तर्याच्चादोषः । तव्यदादयस्त्वेकाऽऽकृतियुक्ता न भवन्ति ॥

॥ वि० ॥ तथा दर्शनादितिभावः । आनन्तर्यमारोप्येति । अनेन परादिशब्दानामव्यवहित एव प्रवृत्तिरत एव व्यवहिताश्चेतिसूत्रं सार्थकमितिभावः । शास्त्रे तु सर्वथा न व्यवहिते प्रवृत्तिरित्याह । निर्दिष्टग्रहणं त्विति । तुश्चार्थे । छन्दसि परेऽपि परश्चेत्यादावपि उत्तराङ्गविकलतस्मादितिपरिभाषायाः प्रवृत्तेरितिभावः । कथं तर्हीति । सरूपसूत्रे इतिभावः । एकाऽऽकृतीति । आनुपूर्वी हि एकाऽऽकृतिरत्र ॥

॥ वि० ॥ भाष्ये नापि ब्रूम इत्यस्य नैव ब्रूम इत्यर्थः । अर्थोऽपि समुदायस्येतिशङ्कमानं प्रत्याह । तव्यदिति । प्रत्ययादिसंज्ञा तव्यत्तव्यानीयर इति बहुवचननिर्द्देशात्प्रत्येकमिति प्रत्येकमेव भावाद्यर्थकत्वमिति भावः । पुनः पुनस्संकीर्त्तनमिति । अत्र पुनःपुनरित्यस्योपयोगश्चिन्त्यः । एकैकस्मि-

॥ कै० ॥ नापि ब्रूम इति । एकस्याः प्रकृतेः सर्वे भवन्तीति न ब्रूमः किं तर्हि प्रत्ययान्तरेण प्रकृत्यन्तरस्याक्षेपात् कर्तव्यमिति प्रयुयुक्षिते करणी-यादीनामपि प्रयोगः प्राप्नोति । अर्थगत्यर्थ इति । तव्यत्तव्यानीयर इत्यस्मादाक्यादाख्यान्तराण्युपप्लुवन्ते । तत्प्रतिपादकानि धातोस्तव्यङ्गवति

॥ भा० ॥ नापि ब्रूमः प्रत्ययमाला प्राप्नोतीति । किं तर्हि । कर्तव्यमितिप्रयोक्तव्ये युगपद्द्वितीयस्य तृतीयस्य च प्रयोगः प्राप्नोतीति । नैष दोषः । अर्थगत्यर्थश्शब्दप्रयोगः । अर्थं सम्प्रत्याययिष्या-मीति शब्दः प्रयुज्यते । तत्रैकेनोक्तत्वात्तस्यार्थस्य द्वितीयस्य तृतीयस्य च प्रयोगेण न भवितव्यम् । उक्तार्थानामप्रयोग इति । आचार्यदेशशीलनेन च तद्विषयता । आचार्यदेशशीलनेन च यदुच्यते तस्य तद्विषयता प्राप्नोति । इको ह्रस्वो ड्यो गालवस्य । प्राचामवृद्धात् फिन् बहुलमिति । गालवा एव ह्रस्वान्प्रयुञ्जीरन् प्राचु चैव हि फिन् स्यात् । तद्यथा । जमदग्निर्वा एतत्पञ्चममवदानमवाद्यत् तस्मान्नाजामदग्न्यः पञ्चावत्तं जुहोति ॥

॥ कै० ॥ भावकर्म्मणोरित्यादीनि । तत्र कर्त्तव्यशब्देन तस्यार्थस्य प्रतिपादितत्वात्करणीयशब्दो न प्रयुज्यते । आचार्येति । आचार्यस्य देशस्य च पुनःपुनः सङ्कीर्त्तनमाचार्यदेशशीलनं तत्र तस्य शब्दस्य तद्विषयत्वमेव स्यात् । सर्वप्रयोक्तृत्वप्रसङ्गे गालवस्येतिनियमार्थं स्यात् ॥

॥ वि० ॥ न्छास्त्रे तदभावाच्च । तस्मात्सङ्कीर्त्तनमात्रमेवात्र शीलनमितिबोध्यम् । तेन यत्कार्य्यमुच्यत इतिवार्त्तिकाऽचरार्थः । अत एवाग्रे भाष्ये तत्कीर्त्तने चेत्येवो-क्तम् । तद्विषयत्वमुपपादयति । सर्वप्रयोक्तृति । इको ह्रस्वो भवति तत्प्रयोक्तृत्वं गालवस्येत्यादिकमेणार्थः । भाष्ये प्राचु चैवेति । प्राग्देश एव फिन्प्रयोगः स्यादित्यर्थः ॥



॥ वि० ॥ अनादित्वादिति । एवञ्च गालवातिरिक्तशिष्टैरपि प्रयुज्यमानत्वान्नियमासम्भवः । किञ्चैतत्पक्षे शास्त्रं रेखागवयन्यायेन कल्पि-तशब्दविषयमिति कल्पितशब्दे प्रयोक्तृनियमाऽसम्भव इतिभावः । शास्त्रस्य प्रामाण्यमिति । एवञ्च पूजार्थमित्यस्य स्वशास्त्रपूजार्थमित्यर्थ इति भावः । तदेवाह शास्त्रस्य हीति । भाष्ये देशग्रहणाच्चेति । चेनाचार्य्यग्रहणम् । देशग्रहणस्य पूजार्थत्वन्तु वक्तुमशक्यं देशस्य स्मर्तृत्वाद्यभावादिति भावः । स्थिरं

॥ कै० ॥ यस्य पुनरिति । अनादित्वाच्छब्दव्यवहारस्य नित्यत्वपक्षे नास्ति प्रयोक्तृनियमः केवलं गालवः स्मर्तृत्वेन निर्द्दि-ष्टोऽस्य शास्त्रस्य प्रामाण्यम्प्रतिपादयितुमिति पूजार्थमाचार्यग्रहणं शास्त्रस्य ह्यनाद्यर्थप्रतिपादकत्वात् पूजा भवति । कीर्त्त्यर्थमिति ।

॥ भा० ॥ यस्य पुनर्नित्याश्शब्दा गालवग्रहणं तस्य पूजार्थम् । देशग्रहणञ्च कीर्त्त्यर्थम् । ननु च यस्यापि कार्याः शब्दास्तस्यापि गालवग्रहणं पूजार्थं स्यात् । देशग्रहणञ्च कीर्त्त्यर्थम् ॥

॥ कै० ॥ कीर्त्तौ सत्यां तेषां स्वर्गाद्यवस्थानं स्थिरम्भवतीति । यथेन्द्रद्युम्नादीनाम् । ननु च यस्यापीति । कार्यपक्षेऽपि पूजा शक्यते व्याख्यातुं यस्माद्गालवेन ह्रस्वत्वम्प्रयुक्तं तस्मात्त्वमपि प्रयुङ्क्ष्वेतिस्तुत्यर्थोऽर्थवादः स्यादित्यर्थः ॥

॥ वि० ॥ भवतीति । ततश्च देशकीर्त्तौ तद्देशीयानां स्वरवस्थानमित्यर्थः । तेन च पाणिनेरपि तदितिभावः । ननु नित्यशब्दवादे गालवादिग्रहणस्य पूजार्थत्वे ह्रस्वाभावविशिष्टस्य साधुत्वबोधनं न स्यात् तत्पक्षे सल्लघूपायेन साध्वसाधुविवेकाय शास्त्रमिति चेन्न । गालवः स्मर्त्ता नान्य इति स्मृत्यन्तराऽनुसन्धानद्वारेण विकल्प-सिद्धेः । वाग्रहण एव कर्त्तव्ये गालवग्रहणं व्यर्थमिति शङ्कानिरासार्थं तु भाष्ये पूजार्थमित्युक्तम् ॥

॥ वि० ॥ भाष्ये तत्कीर्त्तने चेति । आचार्य्यदेशकीर्त्तने चेत्यर्थः । यस्य कार्य्यशब्दास्तस्येतिशेषः । तदेवाह । इदानीमिति । प्रयुक्तमिति । कृतमित्यर्थः । नित्यपक्षे त्विति । कार्य्यपक्षे त्वेवं वक्तुमशक्यं यतो गालवेन कृतोऽतः कर्त्तव्यो नान्येन कृतोऽतो न कर्त्तव्य इति । अन्येन कृतस्य पुनः करणवैयर्थ्यात् । नह्यन्यकृतस्य पुनः करणमस्ति । नाप्यन्येनाकृतस्याकरणम् । तादृशस्यैव करणात् । एतेनान्येन कृतस्याऽनुवादोऽन्याकृतत्वबोधनद्वारा

॥ कै० ॥ इदानीं कार्य्यपक्षे दूषणमाह । तत्कीर्त्तन इति । कार्यपक्षेऽयमर्थस्स्याद् यस्माद्गालवेन ह्रस्वत्वम्प्रयुक्तन्तस्मात्प्र-

॥ भा० ॥ तत्कीर्त्तने च द्वेधाऽप्रतिपत्तिः । तत्कीर्त्तने च द्वैधं शब्दानामप्रतिपत्तिः स्यात् । इच्छामश्च पुन-राचार्यग्रहणेषु देशग्रहणेषु च द्वैधं शब्दानां प्रतिपत्तिस्स्यादिति । तच्च न सिध्यति । अशिष्यो वा विदितत्वात् । अशिष्यो वा पुनरयं योगः । किं कारणम् । विदितत्वात् । यदनेन योगेन प्रार्थ्यते तस्यार्थस्य विदितत्वात् । येऽपि ह्येतां संज्ञां नारभन्ते तेऽपि विभाषेत्युक्ते अनित्यत्वमवगच्छन्ति । याज्ञिकाः खल्वपि संज्ञामनारभमाणा विभाषेत्युक्ते अनित्यत्वमवगच्छन्ति । तद्यथा । मेध्यः पशुर्विभाषितो मेध्योऽनड्वान् विभाषित इति । आल-भ्यो नालभ्य इति गम्यते । आचार्यः खल्वपि संज्ञामारभमाणो भूयिष्ठमन्यैरपि शब्दैरेतमर्थं सम्प्रत्याय-यति । बहुलमन्यतरस्यामुभयथा वा एकेषामिति ॥

॥ कै० ॥ योक्तव्यमिति । ततश्च ह्रस्वत्वस्य विकल्पो न स्यात् । नित्यपक्षे तु गालवो ह्रस्वस्य स्मर्त्ताऽन्यो दीर्घस्येति स्मृत्यन्तरानुसन्धानद्वारेण विकल्पस्सिध्यतीतिनित्यपक्ष एव श्रेयान् ।

॥ वि० ॥ विकल्पबोधक इति परास्तम् । पाणिनिकृतानामपि पचो व इत्यादीनामन्याकृतत्वेन तेषामपि विकल्पापत्तेश्च तस्मात् कार्य्यवादोऽसङ्गत इति दिक् । ननु लोकतोऽनित्यत्वार्थलाभेऽपि निषेधविकल्पयोरलाभ इत्यत आह । भाष्ये आचार्यः खल्वपीति । एवञ्च इक्कोरित्यादुभयत्रविभाषायां यथा तव तयोर्लाभस्तथा विभाषापदघटितेऽपि भविष्यतीति नार्थः सूत्रेणेतिभावः ।



॥ वि० ॥ वाशब्दो विकल्पे इति । यत्तु अर्थस्य संज्ञित्ववद्विभाषापदार्थस्यैव संज्ञात्वम् । तत्रापीतेः सम्बन्धात् । नच पदजन्यपदार्थोपस्थि-त्यभावेनान्वयासम्भवः । विकल्पवाचिपदस्य तदर्थे लक्षणाऽभ्युपगमात् । एवञ्च लक्षणातात्पर्यग्राहकमिदं सूत्रम् । अर्थे न संज्ञात्वमितिचेत्तद-र्थोपस्थितशब्दमात्रस्य संज्ञात्वमस्तु इतिशब्दसम्बन्धसामर्थ्यादिति । तन्न । एकस्याऽनेकसंज्ञायाः शास्त्रेऽदर्शनात् । अनाकृतिः संज्ञेति वृद्धिसूत्रस्थभाष्यविरोधाच्च । तेनाकृतीति । तत्पक्षे लिट्त्वजातौ विधिमुखेन प्रवृत्तौ पित्येव स्याद् निषेधमुखेन प्रवृत्तौ कित्येव स्याद् न तु सर्वत्रेति सूत्रं कर्त्तव्यं सति च सूत्रे लिट्त्वजातौ प्राप्तस्य निषेधे तस्यामेव विकल्पो विधीयमानस्सर्वत्र सिध्यतीति भावः । प्रत्याख्यानाऽऽशयमाह । व्यक्तिपक्षे त्विति । क्वचिद्विधिमुखेनेत्यन्वयः । किञ्चिल्लक्षणम् । उभयत्र विभाषारूपम् । उत्तरत्र तु क्वचित्प्रतिषेधमुखेनेत्येव पाठः । परे तु आकृतिपक्षे किं तज्जात्याश्रयसकलव्यक्तिविषयं लक्षणम् । उत तज्जात्याश्रययत्किञ्चिद्विषयम् ।

॥ कै० ॥ अशिष्यो वेति । वाशब्दो विकल्पे । तेनाकृतिपक्षे उभयत्र विभाषार्थं सूत्रं कर्त्तव्यम् । व्यक्तिपक्षे तु लक्ष्यभेदेन लक्षणभेदात् क्वचित्किञ्चिल्लक्षणं विधिमुखेन प्रवर्त्तते क्वचिन्निषेधमुखेन प्रवर्त्तत इतीष्टसिद्ध्या सूत्रं न कर्त्तव्यमित्यर्थः ॥

॥ वि० ॥ नाद्यः । सूत्रारम्भेऽपि नपदघटितवाक्यस्य तद्विषयताया वक्तुमशक्यत्वात् । तस्य यत्किञ्चिद्विषयता वाघटितस्य सर्वविषयतेति तु दुर्लभम् । नान्त्योऽपि । न ब्राह्मणं हन्यादित्यादौ जातिपक्षे सर्वविषयताया एव दृष्टत्वात् । किञ्च । तत्र विधिमुखप्रवृत्त्या पिद्विषयत्वं निषेधमुखप्रवृत्त्या किद्विषयत्वं वेत्यत्र विनिगमनाविरहात्सूत्रं विनाप्युभयमुखेन प्रवृत्त्याविष्टसिद्धेः । नच भावतात्पर्यकता पिद्विषयत्वे विनिगमिका । विभाषोपयमने इत्यादौ त्रिसंशयताऽनुपपत्तेः । भावतात्पर्यकतालोभेनाप्राप्तविभाषात्वस्यैव सम्भवात् । विप्रतिषेधशास्त्रबलात्तेष्वभावतात्पर्यकतापि स्यादिति चेत्प्रकृतेऽपि तुल्यम् । तस्मात्पक्षद्वयेऽपि सूत्रप्रत्याख्याने भाष्यतात्पर्यम् । किञ्च सूत्रे कृते त्रिसंशयाऽप्राप्तविभाषास्वपि तत्प्रवृत्तिः स्यादिति सोच्छित्रैव । लक्ष्यानुसारादप्रवृत्तौ तु सूत्रं व्यर्थमेवेतिभाष्याशयः । एतदेव ध्वनयन् त्रिसंशयाप्राप्तविभाषां दर्शयति । त्रिसंशयास्वप्राप्तविभाषात्वमेवेतिभ्रमनिरासायेतरयोरपि कथनमित्याहुः ॥

॥ वि० ॥ इत उत्तरमित्यस्य लाभे युक्तिमाह । अधिकार इति । संशयत्रयस्य क्वाप्यभावादाह । त्रिष्विति । द्वन्द्वे च विभाषा जसी- त्युक्तोभयशब्दोदाहरणमसङ्गतमत आह । उपलक्षणेति । विभाषा जसीत्यस्य द्वन्द्वविषयतया द्वन्द्वे च संज्ञानिषेधेन सर्वनामसंज्ञीयाप्राप्तवि-

॥ कै० ॥ अप्राप्ते इति । अधिकारोऽयम् । त्रिसंशया इति । त्रिष्वर्थेषु संशयो यासु तास्त्रिसंशयाः । द्वन्द्वे चेति ।

॥ भा० ॥ अप्राप्ते त्रिसंशयाः । इत उत्तरं या विभाषा अनुक्रमिष्यामः । अप्राप्ते ता द्रष्टव्याः । त्रि- संशयास्तु भवन्ति । प्राप्ते अप्राप्ते उभयत्र वेति । द्वन्द्वे च । विभाषा जसि । प्राप्ते अप्राप्ते उभयत्र वेति सन्देहः । कथञ्च प्राप्ते कथञ्चाऽप्राप्ते कथञ्चोभयत्रेति । उभयशब्दस्सर्वादिषु पठ्यते तयपश्चाऽयजा- देशः क्रियते तेन वा नित्ये प्राप्ते अन्यत्र वा अप्राप्ते उभयत्र वेति । अप्राप्ते अयच् प्रत्ययान्तरम् । यदि प्रत्ययान्तरम् । उभयीतीकारो न प्राप्नोति । माभूदेवं मात्रच इत्येवं भविष्यति । कथम् । मात्रजिति नेदं प्रत्ययग्रहणम् । किं तर्हि । प्रत्याहारग्रहणम् । क्व सन्निविष्टानां प्रत्याहारः । मात्रशब्दात्प्रभृति आ अयचश्चकारात् । यदि प्रत्याहारग्रहणं कति तिष्ठन्ति । अत्रापि प्राप्नोति । अत इति वर्त्तते ॥

॥ कै० ॥ प्रकरणोपलक्षणार्थमेतदुपात्तं प्रथमचरमतयेत्यत्र तयग्रहणे संशयः । तत्र तयशब्देन

॥ वि० ॥ भाषात्वनिश्चयेन निषेधीयप्राप्तविभाषात्वनिश्चयेन वा त्रिसंशयत्वाभावादिति भावः । द्वन्द्व इत्यस्यासम्बन्धे पूर्वादीनां जसि विकल्पाऽऽरम्भो व्यर्थः स्यादिति तात्पर्यम् । ननु तयशब्देऽपि कथं संशयः प्रथमादिसूत्रेण प्रत्ययमात्रस्य संज्ञा सर्वादिसूत्रेण तु उभयशब्दस्य समुदायस्येति भिन्नविषयत्वेनाऽप्राप्तविभा- षात्वनिर्णयादत आह । तत्रेति । तयशब्देनेत्यस्य तदन्तविधिरित्यनेनान्वयः ।



॥ वि० ॥ अन्वर्थत्वेन कथं तदन्तविधिरत आह । केवलस्येति । सर्वनामत्वसम्भवात् । सर्वार्थबोधकत्वसम्भवात् । तथाच तस्य सर्वार्थबोधक- त्वासंभवात्सामर्थ्येन संज्ञाविधावपि प्रत्ययग्रहणपरिभाषया तदन्तविधिरिति भावः । पूर्वविप्रतिषेधश्चेति । सर्वादित्वनिबन्धना संज्ञा जसभिन्ने सावकाशा द्वितयादिषु च विकल्प उभयशब्दे जस्युभयप्राप्तौ पूर्वविप्रतिषेधः । नच नित्या संज्ञाऽन्तरङ्गा । अन्तरङ्गपरिभाषाया अप्रवृत्तेः । तथाहि । नान्तरङ्गं बलीय

॥ कै० ॥ प्रयोजनं सर्वनामाव्ययसंज्ञायामिति वा अन्वर्थसंज्ञाविधानाद् वा केवलस्य प्रयोगाभावात्तदन्तस्यैव सर्वनामत्वसम्भ- वात्प्रत्ययग्रहणपरिभाषया वा तदन्तविधिः । तत्र यदि सर्व्वादिग्रहणेन तयान्तं विशेष्यते नेमशब्दोऽव्यभिचारात् प्रथमादयस्त्वसम्भ- वान्न विशेष्यन्ते तदोभयशब्दस्य जसि नित्या संज्ञा विभाष्यत इति प्राप्तविभाषा स्यात् । अथ सर्व्वादीनीतिनिवृत्तं पूर्वविप्रतिषेधश्च तदाऽप्राप्तविभाषा । अथ परविप्रतिषेधस्तदोभयत्र विभाषा । प्रत्ययान्तरमिति । आदेशपक्षे पूर्वविप्रतिषेधो वक्तव्य इति प्रत्ययान्तरपक्ष आश्रितः । उभादुदात्तो नित्यमित्यत्र तयस्येति नानुवर्त्तते इति प्रत्ययान्तरमयज् भवति ॥

॥ वि० ॥ इत्यस्या अत्र विषयः । युगपत्प्राप्त्यभावात् । जसादेस्सर्व्वनाम्नो विहितत्वसम्पत्तये तस्याः पूर्वमेव प्रवृत्तिरस्यास्तु जसुत्पत्त्यनन्तरमिति स्पष्टमेव । नाप्य- सिद्धं बहिरङ्गमन्तरङ्ग इत्यस्याः । अन्तरङ्गोत्तरं बहिरङ्गप्राप्तेरनया तत्प्रवृत्तेर्वारयितुमशक्यत्वात् । बहुशस्तथा सत्त्वात् । तदुत्तरमप्येतत्प्रवृत्त्या पक्षे तदभावविशिष्टस्य साधुत्वबोधनम् । पूर्वादिष्विव त्रिसंशयत्वस्य भाष्योक्तस्याऽसङ्गत्यापत्तेश्चेति दिक् । भाष्ये तेन वेत्यादि । तेन नित्ये प्राप्ते वा अन्यत्राप्राप्ते वेत्यन्वयः । प्रत्ययान्तरेति । एवञ्चोभयशब्देऽस्याप्राप्तेरप्राप्तविभाषात्वमेवेति भावः ॥

॥ वि० ॥ न विशेषित इति । न प्रत्याहारघटक इतरव्यावर्त्तकः । समुदायानुबन्धस्यावयवानुबन्धत्वाभावादिति भावः । प्रमाणे इति । सट्टशस्यैव तत्सन्निवेशे सत्त्वादिति भावः । भाष्ये ऊर्णोतेर्विभाषेति । ऊर्णोर्धातोः क्त्विविषये विभाषेत्यर्थः । वाक्यभेदेनेत्यस्य

॥ कै० ॥ तैलमात्रेति । प्रत्याहारे सति चकारेण मात्रशब्दो न विशेषित इति ह्रुयामाश्रुवसिभसिभ्यस्त्रन्निति त्रन्नन्तादपि मात्रशब्दाद् ङीप्प्रसङ्गः । सट्टशस्यापीति । प्रमाणे वर्तमानात्प्रमेये यो मात्रच्चिहितः स प्रत्याहारेण गृह्यत इत्यर्थः । ऊर्णोतेर्विभाषेति । विभाषोर्णोरिति सूत्रं यद्यसंयोगाल्लिड्कदित्यत्रानुवर्तते ऊर्णुश्चाऽसंयोगान्त एवेत्यसंयोगग्रहणाद्वाक्यभेदे-

॥ भा० ॥ एवमपि तैलमात्रा घृतमात्रा अत्रापि प्राप्नोति । सट्टशस्याऽप्यसन्निविष्टस्य न भविष्यति प्रत्याहारेण ग्रहणम् । ऊर्णोतेर्विभाषा । प्राप्ते अप्राप्ते उभयत्र वेति सन्देहः । कथञ्च प्राप्ते कथं चाऽप्राप्ते कथञ्चोभयत्र । असंयोगाल्लिड्कदिति वा नित्ये प्राप्ते अन्यत्र वा अप्राप्ते उभयत्र वेति । अप्राप्ते अन्यद्धि कित्त्वम् । अन्यद्धि ङित्त्वम् ॥

॥ कै० ॥ नोर्णोः परस्येडादेर्लिटो नित्यं कित्त्वं प्राप्तं विकल्प्यते ततः प्राप्तविभाषा । इडुपजीवनार्थं तु स्थानान्तरे सूत्रं पठितम् । अथ तत्र सूत्रं नानुवर्त्तते परविप्रतिषेधश्च ततोऽप्राप्तविभाषा । अथ पूर्वविप्रतिषेधस्तदोभयत्रेतिसंशयः । अन्यद्धीति । व्यपदेशातिदेशोऽयमिति कित्त्वङित्त्वयोर्भेदः ॥

॥ वि० ॥ विकल्प्यत इत्यनेनाऽन्वयः । इदं सर्वं ङित्त्वकित्त्वयोरैक्याभिमानेन । किमर्थं तर्हि पुरस्तात्कृतमत आह । इडुपेति । शङ्कते भाष्येऽन्यद्धीति । तद्व्याख्या । भेद इति । तथाच त्रिसंशयत्वानुपपत्तिरिति भावः ॥



॥ वि० ॥ गुणनिषेधस्येति । यद्यपि ङित्किकार्य्याणि भिन्नानि बहूनि सन्ति तथाप्यूर्णोतावन्याऽसम्भव इति भावः । इत्यत्रेति । इत्यत्रैवेत्यर्थः । वाक्यभेदेनेति । पृथक्पाठसामर्थ्यादितिभावः । परविप्रतिषेधे त्विति । विज इडित्यतोऽर्थाधिकाराद्वेडागम एव गृह्यत इतिपक्षे त्वित्यपि बोध्यम् । यमो गन्धने विभाषोपयमने इत्येते सिचः कित्त्वविधायके । यदेति । गन्धनं सूचनम् । उपयमनं स्वीकारः । गन्धनाङ्गमिति बहुव्रीहिः ।

॥ कै० ॥ एकश्चेदिति । कार्य्यातिदेशपक्षे गुणनिषेधस्य कार्य्यस्यैकत्वादेकत्वमनयोरित्यर्थः । प्रौर्णुवीति । लङ उत्तमैकवचनम् । सार्वधातुकमपिदित्यत्र यदि विभाषोर्णोरित्येतद्वाक्यभेदेन सम्बध्यते ततः प्राप्तविभाषा । अथासम्बन्धः पूर्वविप्रतिषे-

॥ भा० ॥ एकश्चेत् ङित्कितौ । यद्येकं ङित्कितौ ततः सन्देहः । अथ हि नाना नास्ति सन्देहः । यद्यपि नाना एवमपि सन्देहः । प्रौर्णुवीति । सार्वधातुकमपिदिति वा नित्ये प्राप्ते अन्यत्र वा अप्राप्ते उभयत्र वेति । अप्राप्ते । विभाषोपयमने । प्राप्ते अप्राप्ते उभयत्र वेतिसन्देहः । कथञ्च प्राप्ते कथञ्चाप्राप्ते कथञ्चोभयत्र । गन्धन इति वा नित्ये प्राप्ते अन्यत्र वा अप्राप्ते उभयत्र वेति । अप्राप्ते गन्धन इति निवृत्तम् । अनुपसर्गाद्वा । प्राप्ते अप्राप्ते उभयत्र वेति सन्देहः । कथञ्च प्राप्ते कथञ्चाप्राप्ते कथञ्चोभयत्र । वृत्तिसर्गतायनेषु क्रम इति वा नित्ये प्राप्ते अन्यत्र वा अप्राप्ते उभयत्रवेति । अप्राप्ते वृत्त्यादिष्विति निवृत्तम् । विभाषा वृत्त्यस्तगादीनाम् ॥

॥ कै० ॥ धश्च तत उभयत्र विभाषा । परविप्रतिषेधे त्वप्राप्ते । विभाषोपयमने इति । यदा गन्धनाङ्गमुपयमनं तत्र गृह्यते तदा प्राप्ते पूर्वविप्रतिषेधे त्वप्राप्ते परविप्रतिषेधे तु उभयत्रेतिसंशयः ॥

॥ वि० ॥ तत्र गन्धनपूर्वके स्वीकरणे यदि कित्त्वविकल्पः । ततः प्राप्तविभाषेत्यर्थः । परभूतासु दीपजनेतिभिन्नासु अप्राप्तविभाषासु पूर्वविषयनिवृत्तिः पूर्वविप्रतिषेधाङ्गीकारस्याप्राप्तविभाषात्वे वीजमितिबोध्यम् । वृत्तिसर्गत्यात्मनेपदविधायकम् ॥

॥ वि० ॥ ननु मृगादीनाम्प्राणित्वादप्राणिनामिति नित्ये प्राप्ते इत्ययुक्तं मृगादिविषयके एव च विसंशयत्वादत आह । चर्म्मादीति । प्रत्ययान्ता इति । प्रत्ययः सनादिरन्तावयवो येषामित्यर्थः । उषादयश्च तदेकदेशा न प्रत्ययान्तरूपा इतिभावः । संज्ञासंज्ञिसम्बन्धार्थ इति । अत एव क्यजाद्यन्तानां संज्ञासिद्धिरावृत्तौ तु गौरवमिति भावः । केचित्त प्रत्ययान्तादित्यनुवृत्तौ उषादिभ्यः कर्तृक्विबन्तप्रकृतिकाचारक्विबन्तेभ्य एव स्यादितिप्राप्तविभाषा

॥ कै० ॥ जातिरिति । चर्मादिमयास्तदा मृगादयो ग्राह्याः । निवृत्तमिति । तन्निवृत्तौ च गौणत्वाच्चर्मादिमयानामग्रहणम् । प्रत्ययान्तादितिवेति । कथं पुनः प्रत्ययान्ताः शब्दा रूपान्तरयुक्ता उषादिव्यपदेशं लभन्ते । उच्यते । सनाद्यन्ता धातव इत्यस्य

॥ भा० ॥ प्राप्ते अप्राप्ते उभयत्र वेतिसन्देहः । कथञ्च प्राप्ते कथञ्चाप्राप्ते कथञ्चोभयत्र । जातिरप्राणिनामितिवा नित्ये प्राप्ते अन्यत्र वा अप्राप्ते उभयत्र वेति । अप्राप्ते जातिरप्राणिनामिति निवृत्तम् । उषविदजागृभ्योऽन्यतरस्याम् । प्राप्ते अप्राप्ते उभयत्र वेतिसन्देहः । कथञ्च प्राप्ते कथञ्चाप्राप्ते कथञ्चोभयत्र । प्रत्ययान्तादितिवा नित्ये प्राप्ते अन्यत्र वा अप्राप्ते उभयत्र वेति । अप्राप्ते प्रत्ययान्ता धात्वन्तराणि । दीपादीनां विभाषा । प्राप्ते अप्राप्ते उभयत्र वेति सन्देहः । कथञ्च प्राप्ते कथञ्चाप्राप्ते कथञ्चोभयत्र ॥

॥ कै० ॥ यदा अयमर्थो व्याख्यायते । धातवः सनाद्यन्ता भवन्ति धातूनामन्तावयवाः सनादयो भवन्ति । यथा समासान्ताटजादयस्तदा पूर्वोक्तदोषाऽभाव इतिभावः । प्रत्ययान्ता इति । सनाद्यन्ता धातव इत्ययं योगः संज्ञासंज्ञिसम्बन्धार्थ इतिभावः ॥

॥ वि० ॥ तन्निवृत्तौ पूर्वविप्रतिषेधेऽप्राप्तविभाषा निवृत्तौ परविप्रतिषेधे उभयत्रेतिभाष्याशयः । प्रत्ययान्ता धात्वन्तराणीति । अस्यायं भावः । हलन्तेभ्य आचारक्विपोऽनभिधानमेवेतरप्रत्ययान्तास्तु नोषादय इत्यप्राप्तविभाषात्वमेवेति वदन्ति ॥



॥ वि० ॥ एकपरिहारः कर्मस्थभावकत्वाऽभावरूपः । ननु कर्त्तरीत्यनुवृत्तिर्व्यर्था कर्म्मणि भावे कर्म्मकर्त्तरि च परत्वाच्चिण् भावकर्म्मणोरित्यस्य प्रवृत्तेरिति चेन्न । विप्रतिषेधलभ्यार्थस्यैव स्फुटत्वायाऽनुवृत्त्या प्रदर्शनादितिदिक् । वृत्रादीनामिति । आक्रोशे च संज्ञायां विभाषा

॥ कै० ॥ भावकर्म्मणोरिति वेति । चिण् भावकर्म्मणोरित्यत्र सूत्रे यदि दीपजनेत्येतत्सूत्रमनुवर्त्य वाक्यभेदेन सम्बन्धः क्रियते पृथक्पाठसामर्थ्यात्तदा प्राप्तविभाषा । अथ नानुवर्त्तते परविप्रतिषेधश्च तदाऽप्राप्तविभाषा पूर्वविप्रतिषेधे तूभयत्रेति सन्देहः । अकर्म्मकाश्चेति । यद्यपि बुधिस्सकर्म्मकः । तथाप्येकपरिहारोपन्यासार्थमविशेषेणैतदुक्तम् । सोपसर्गा इति । अर्थान्तरवृत्ति-

॥ भा० ॥ भावकर्म्मणोरिति वा नित्ये प्राप्ते अन्यत्र वा अप्राप्ते उभयत्र वेति। अप्राप्ते कर्त्तरीति हि वर्त्तते। एवमपि सन्देहः । न्याय्ये वा कर्त्तरि कर्म्मकर्त्तरि वेति । नास्ति सन्देहः । सकर्म्मकस्य कर्त्ता कर्म्मवद्भवति । अकर्म्मकाश्च दीपादयः । अकर्म्मका अपि वै सोपसर्गाः सकर्म्मका भवन्ति । कर्म्मोपदिष्टा विधयः कर्म्मस्थभावकानां कर्म्मस्थक्रियाणां च भवन्ति । कर्तृस्थभावकाश्च दीपादयः । विभाषाग्रेप्रथमपूर्व्वेषु । प्राप्ते अप्राप्ते उभयत्र वेति सन्देहः । कथञ्च प्राप्ते कथञ्चाप्राप्ते कथञ्चोभयत्र । आभीक्ष्ण्य इति वा नित्ये प्राप्ते अन्यत्र वा अप्राप्ते उभयत्र वेति । अप्राप्ते आभीक्ष्ण्य इति निवृत्तम् । वृत्रादीनां विभाषा । प्राप्ते अप्राप्ते उभयत्र वेति सन्देहः । कथञ्च प्राप्ते कथञ्चाप्राप्ते कथञ्चोभयत्र । आक्रोश इति वा नित्ये प्राप्ते अन्यत्र वा अप्राप्ते उभयत्र वेति । अप्राप्ते आक्रोश इति निवृत्तम् ॥

॥ कै० ॥ त्वादनुभवतिवदिति भावः । कर्तृस्थभावकाश्चेति । अचः कर्त्तृयकीत्यत्र जायते स्वयमेवेत्युदाहृतम् । तस्य गत्यर्थवृत्तित्वात्कर्म्मस्थभावकत्वमिति नास्ति तेनास्य विरोधः । आभीक्ष्ण्य इति निवृत्तमिति । पूर्वविप्रतिषेधश्चेतिभावः । वृत्रादीनामिति । आक्रोश इत्यत्र यद्यच्कौ इति नानुवर्त्तते ततोऽयं संशयः ॥

॥ वि० ॥ वृत्रघ्नतीक्ष्णाग्रुचिष्विति सूत्रे इत्यर्थः । यद्यच्काविति । अच्कावशक्तावित्यतस्तदनुवृत्तौ तु निःसन्देहमप्राप्तविभाषेतिभावः । एतद्भाष्यविरोधाच्च तत्राच्कावित्यनुवृत्तिपरा ग्रन्था अयुक्ता एवेति तात्पर्यम् ॥

॥ वि० ॥ यङ्लुकीति । अचि विभाषा इत्यत्र यङीतिवर्त्तते तत्रोभयोर्यङजाद्योरव्यवहितपरत्वासम्भवात् श्रुतस्याचीत्यस्य परविशेषणत्वं यङीति विषयसप्तमी अचि परे यङ्विषये रेफस्य लत्वमित्यर्थः । तत्र विभाषारम्भसामर्थ्याद् यङ्लुकः पूर्वं ग्रो यङीति न भवति । न लुमते-तिनिषेधानित्यत्वेन पृथगल्लोपेन स्थानिवद्भावेन वा यङ्विषय इति प्राप्तविभाषात्वोपपत्तिः । यङीत्येतन्निवृत्तौ विभाषाया असिद्धत्वादेव नित्यलत्वं समुदायलुक्यपि

॥ कै० ॥ एकहलादाविति । पूरयितव्यस्य चास्ति संज्ञा उदपानमिति । चादिभिरिति । प्रतिषेधस्याऽप्राप्तविभाषा स्थाप्यते विधेस्तु

॥ भा० ॥ एकहलादौ पूरयितव्येऽन्यतरस्याम् । प्राप्ते अप्राप्ते उभयत्र वेति सन्देहः । कथञ्च प्राप्ते कथञ्चाप्राप्ते कथञ्चोभयत्र । उदकस्योदस्संज्ञायामिति नित्ये प्राप्ते अन्यत्र वा अप्राप्ते उभयत्र वेति । अप्राप्ते संज्ञायामिति निवृत्तम् । ष्ठ्यादेरिञि । पदान्तस्यान्यतरस्याम् । प्राप्ते अप्राप्ते उभयत्र वेति सन्देहः । कथञ्च प्राप्ते कथञ्चाप्राप्ते कथञ्चोभयत्र । इञीति वा नित्ये प्राप्ते अन्यत्र वा अप्राप्ते उभयत्र वेति । अप्राप्ते इञीतिनिवृत्तम् । सपूर्वायाः प्रथमाया विभाषा । प्राप्ते अप्राप्ते उभयत्र वेतिसन्देहः । कथञ्च प्राप्ते कथञ्चाप्राप्ते कथञ्चोभयत्र । चादिभिर्योग इति वा नित्ये प्राप्ते अन्यत्र वा अप्राप्ते उभयत्र वेति । अप्राप्ते चादि-भिर्योग इति निवृत्तम् । ग्रो यङि । अचि विभाषा । प्राप्ते अप्राप्ते उभयत्र वेतिसन्देहः । कथञ्च प्राप्ते कथञ्चाप्राप्ते कथञ्चोभयत्र । यङीति वा नित्ये प्राप्ते अन्यत्र वा अप्राप्ते उभयत्र वेति । अप्राप्ते यङीति निवृत्तम् । प्राप्ते च । इत उत्तरं या विभाषा अनुक्रमिष्यामः प्राप्ते ता द्रष्टव्याः । विसंशयास्तु भवन्ति । प्राप्ते अप्राप्ते उभयत्र वेति । विभाषा विप्रलापे । प्राप्ते अप्राप्ते उभयत्र वेति सन्देहः । कथञ्च प्राप्ते कथञ्चाप्राप्ते कथञ्चोभयत्र ॥

॥ कै० ॥ प्राप्तविभाषैव । यङीति वेति । यङ्लुकि कृते अजादिपरः सम्भवति जेगिल इति । अत्र च पचाद्यचि यङोऽचि चेति यङ्लुक् । प्राप्ते चेति । प्रकृतानुवृत्त्या प्राप्तविभाषा व्यवतिष्ठते ॥

॥ वि० ॥ न लुमतेतिनिषेधान्न तत्प्राप्तिरित्यप्राप्तविभाषात्वोपपत्तिः । उभयत्रविभाषात्वे त्वियमुपपत्तिः । ग्रो यङीत्येतत्प्रति प्रकरणे प्रकरणमसिद्धमिति विभाषाया असिद्धत्वाभावः । लुकः पूर्वं यङीत्यस्य न प्रवृत्तिः । अन्तरङ्गानपीतिन्यायेन लुकस्तत्प्रयोजकाच्प्रत्ययस्य च पूर्वम्प्रवृत्तेः । नच लुकि न लुमतेति निषेधे यङ्परत्वाभावाद् ग्रो यङीत्यस्याप्राप्तेः कथमुभयत्रविभाषात्वमितिवाच्यम् । दत्तोत्तरत्वादितिदिक् ॥



॥ वि० ॥ अथ त्विति । तथाच स पक्ष एतद्भाष्यविरुद्ध इतिभावः । वस्तुतो द्योतकत्वपक्षेऽपि व्यतिलुनीते गार्ग्यायणीत्यादौ द्योतकसमुच्चयस्य द्वावित्यादौ द्योतकवाचकसमुच्चयस्य च दृष्टत्वेनाऽत्राप्यात्मनेपदप्रवृत्तिरस्तीति प्राप्तविभाषा सूपपादेति चिन्त्यमेतत् । भाष्ये गतिबुद्धीतिनित्ये

॥ कै० ॥ अन्यत्र वेति । विप्रवदन्ति शकुनय इत्यत्र पूर्वविप्रतिषेधश्च यदीतिभावः । विभाषोपपदेनेति । कर्त्रभिप्राये क्रियाफले विषये

॥ भा० ॥ व्यक्तवाचामिति वा नित्ये प्राप्ते अन्यत्र वा अप्राप्ते उभयत्र वेति । प्राप्ते व्यक्तवाचामिति हि वर्तते । विभाषोपपदेन प्रतीयमाने । प्राप्ते अप्राप्ते उभयत्र वेति संदेहः । कथञ्च प्राप्ते कथञ्चाप्राप्ते कथञ्चोभयत्र । स्वरितञित इति वा नित्ये प्राप्ते अन्यत्र वा अप्राप्ते उभयत्र वेति । प्राप्ते स्वरितञित इति हि वर्तते । तिरोऽन्तर्द्धौ । विभाषा कृञि । प्राप्ते अप्राप्ते उभयत्र वेति संदेहः । कथञ्च प्राप्ते कथञ्चाप्राप्ते कथञ्चोभयत्र । अन्तर्द्धाविति वा नित्ये प्राप्ते अन्यत्र वा अप्राप्ते उभयत्र वेति । प्राप्ते अन्तर्द्धाविति हि वर्त्तते । अधिरीश्वरे । विभाषा कृञि । प्राप्ते अप्राप्ते उभयत्र वेति सन्देहः । कथञ्च प्राप्ते कथञ्चाप्राप्ते कथञ्चोभयत्र । अधि-रीश्वर इति वा नित्ये प्राप्ते अन्यत्र वा अप्राप्ते उभयत्र वेति । प्राप्ते ईश्वर इति हि वर्तते । दिवस्तदर्थस्य । विभाषोपसर्गे । प्राप्ते अप्राप्ते उभयत्र वेति सन्देहः । कथञ्च प्राप्ते कथञ्चाप्राप्ते कथञ्चोभयत्र । तदर्थस्येति वा नित्ये प्राप्ते अन्यत्र वा अप्राप्ते उभयत्र वेति । प्राप्ते तदर्थस्येति हि वर्तते । उभयत्र च । इत उत्तरं या विभाषा अनुक्रमिष्यामः । उभयत्र ता द्रष्टव्याः । विसंशयास्तु भवन्ति । प्राप्ते अप्राप्ते उभयत्र वेति । हृक्रोरन्यतरस्याम् । प्राप्ते अप्राप्ते उभयत्र वेति सन्देहः । कथञ्च प्राप्ते कथञ्चाप्राप्ते कथञ्चोभयत्र । गतिबुद्धिप्रत्यवसानार्थशब्दकर्माऽकर्मकाणामणिकर्त्ता स णाविति वा नित्ये प्राप्ते अन्यत्र वा अप्राप्ते उभयत्र वेति । उभयत्र । प्राप्ते तावत् । अभ्यवहारयति सैन्धवान् अभ्यवहारयति सैन्धवैः । विकारयति सैन्धवान् विकारयति सैन्धवैः ॥

॥ कै० ॥ आत्मनेपदं भवतीत्येवं प्राप्तविभाषा व्यवतिष्ठते अथ तु तदर्थद्योतनायाऽऽत्मनेपदं क्रियते तदोपपदेनैव द्योतितत्वादप्राप्तविभाषा स्यात् । गतिबुद्धीति । तत्र विपूर्वो हरतिर्गत्यर्थोऽभ्यवपूर्वः प्रत्यवसानार्थः । करोतिः क्वचिदकर्मकः । यथा विकुर्वते सैन्धवा इति ॥

॥ वि० ॥ प्राप्ते इति । नियमशास्त्राणां विधिमुखेन प्रवृत्तिरितिभावः । तत्र विपूर्व इति । विहरति ग्राममित्यादौ गच्छतीत्यर्थोऽवगमादितिभावः ॥

॥ वि॰ ॥ भाष्येऽप्राप्ते हरति भारमिति । ननु गत्यर्थत्वादस्याऽपि प्राप्तिरस्त्येवेति चेन्न । प्रापणार्थत्वेऽपि गत्यर्थत्वाभावस्य न गतीति सूत्रे वक्ष्यमाणत्वात् । दैवयज्ञीत्यादीति । अनार्षयोरित्यनुवृत्त्यादिनाऽत्रापि सन्देहसम्भव इति भावः । आदिना विभाषा पुरुषे इति ॥

॥ कै॰ ॥ यदीति वेति । प्रतिषेधे प्राप्ते इत्यर्थः । ल्रट् तु यदि प्रतिषिद्धः । दैवयज्ञीत्यादि न विचारितं तस्मादिङ्मात्रप्रदर्शनार्थं

॥ भा॰ ॥ अप्राप्ते हरति भारं देवदत्तः । हारयति भारं देवदत्तम् । हारयति भारं देवदत्तेन । करोति कटं देवदत्तः । कारयति कटं देवदत्तम् । कारयति कटं देवदत्तेन । न यदि । विभाषा साकाङ्क्षे । प्राप्ते अप्राप्ते उभयत्र वेति सन्देहः । कथञ्च प्राप्ते कथञ्चाप्राप्ते कथञ्चोभयत्र । यदीति वा नित्ये प्राप्ते अन्यत्र वा अप्राप्ते उभयत्र वेति । उभयत्र । प्राप्ते तावत् । अभिजानासि देवदत्त यत्कश्मीरेषु वत्स्यामो यत्कश्मीरेष्ववसाम यत्तत्रौदनं भोक्ष्यामहे यत्तत्रौदनमभुञ्ज्महि । अप्राप्ते । अभिजानासि देवदत्त कश्मीरान् गमिष्यामः कश्मीरानगच्छाम तत्रौदनं भोक्ष्यामहे तत्रौदनमभुञ्ज्महि । विभाषा श्वेः । प्राप्ते अप्राप्ते उभयत्र वेति सन्देहः । कथञ्च प्राप्ते कथञ्चाप्राप्ते कथञ्चोभयत्र । कितीति वा नित्ये प्राप्ते अन्यत्र वा अप्राप्ते उभयत्र वेति । उभयत्र । प्राप्ते तावत् । शुशुवतुः शुशुवुः । शिश्वियतुः शिश्वियुः । अप्राप्ते । शुशाव शुशविथ । शिश्वाय शिश्वयिथ । विभाषा संघुषास्वनाम् । संपूर्वाद् घुषेः । प्राप्ते अप्राप्ते उभयत्र वेति सन्देहः । कथञ्च प्राप्ते कथञ्चाप्राप्ते कथञ्चोभयत्र । घुषिरविशब्दन इति वा नित्ये प्राप्ते अन्यत्र वा अप्राप्ते उभयत्र वेति । उभयत्र । प्राप्ते तावत् । संघुष्टा रज्जुः संघुषिता रज्जुः । अप्राप्ते । संघुष्टं वाक्यमाह संघुषितं वाक्यमाह । आङ्पूर्वात्स्वनेः । प्राप्ते अप्राप्ते उभयत्र वेति सन्देहः । कथञ्च प्राप्ते कथञ्चाप्राप्ते कथञ्चोभयत्र । मनसीति वा नित्ये प्राप्ते अन्यत्र वा अप्राप्ते उभयत्र वेति । उभयत्र । प्राप्ते तावत् । आस्वान्तं मनः आस्वनितं मनः । अप्राप्ते । आस्वान्तो देवदत्तः आस्वनितो देवदत्त इति । इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये प्रथमस्याध्यायस्य प्रथमे पादे षष्ठमाह्निकम् ॥ ❋ ॥

॥ कै॰ ॥ कृतम् ॥ इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे प्रथमाध्यायस्य प्रथमे पादे षष्ठमाह्निकम् ॥ ॥ ❋ ॥

॥ वि॰ ॥ इति शिवभट्टसुतसतीगर्भजनागोजिभट्टकृते महाभाष्यप्रदीपोद्द्योते प्रथमाध्यायस्य प्रथमे पादे षष्ठमाह्निकम् ॥ ॥ ❋ ॥



॥ वि॰ ॥ इग्यणः । लिङ्गेति । प्रदेशेषु प्रथमानिर्देशो वाक्यसंज्ञाया अन्यविभक्तिनिर्देशश्च वर्णसंज्ञाया लिङ्गमिति भावः । ननु तर्हि लिङ्गादुभयोरपि संज्ञित्वमस्त्वित्यत आह । युगपच्चेति । अनेकस्यार्थस्यैकशब्देन युगपदनुपस्थितेरिति भावः । ननु वाक्यस्य संज्ञायां प्रदेशेषु तस्यैव विधानं स्यादत आह । वाक्यार्थ इति । पूर्वसूत्रादितीत्यनुवर्त्य इग्यण इति सम्प्रसारणसंज्ञमित्यर्थादिति भावः । स्वं रूपमित्युक्तेः शास्त्रे शब्दपरत्वस्यौत्सर्गिकत्वेनेतिसमभिहारं विनार्थपरत्वाऽसम्भवादिति बोध्यम् । ननु यण्स्थानिकत्वोपलक्षित इगेव वाक्यार्थ इति वर्णपक्षादस्य को भेद इत्यत आह । भवतीति ।

॥ कै॰ ॥ इग्यणः सम्प्रसारणम् । पक्षद्वयस्यापि लिङ्गदर्शनाद्युगपच्चोभयोः संज्ञित्वस्यैकस्मिन् वाक्येऽनुपादानादेकतरपक्षाऽऽश्रयणे सर्वकार्यासिद्धिप्रसङ्गात्प्रश्नः । किमियमिति । वाक्यशब्देन वाक्यार्थ उच्यते इग्यण इत्यत्र भवतीत्यध्याहारादिग्यणो भवतीति योऽयं वाक्यार्थस्तस्येयं संज्ञेत्यर्थः ।

॥ भा॰ ॥ इग्यणः सम्प्रसारणम् । किमियं वाक्यस्य सम्प्रसारणसंज्ञा क्रियते इग्यण इत्येतद्वाक्यं सम्प्रसारणसंज्ञं भवतीति । आहोस्विद्वर्णस्य इग्यो यणः स्थाने वर्णः स सम्प्रसारणसंज्ञो भवतीति । कश्चात्र विशेषः । सम्प्रसारणसंज्ञायां वाक्यस्य संज्ञा चेद्वर्णविधिः । सम्प्रसारणसंज्ञायां वाक्यस्य संज्ञा चेद्वर्णविधिर्न्न सिध्यति । सम्प्रसारणात्परः पूर्वो भवतीति सम्प्रसारणस्य दीर्घो भवतीति । नहि वाक्यस्य सम्प्रसारणसंज्ञायां सत्यामेष निर्देश उपपद्यते । नाप्येतयोः कार्य्ययोः सम्भवोऽस्ति ॥

॥ कै॰ ॥ अथवा वाक्यस्यैवेयं संज्ञा तत्प्रतिपादितश्च वाक्यं स्वार्थं प्रतिपादयति यणः स्थाने य इग्वर्णः स सम्प्रसारणसंज्ञो भवतीति वर्णसंज्ञापक्षः । वर्णविधिरिति । वर्णाश्रयो विधिर्दीर्घादिः । नहीति । वाक्यार्थेन पौर्वापर्याभावात्तस्य चाऽसत्त्वभूतस्य स्थानित्वाऽसम्भवादित्यर्थः ॥

॥ वि॰ ॥ एवञ्चेग्भवनं वाक्यार्थ इति भावः । तत्प्रतिपादितमिति । संज्ञयोपस्थितस्यानर्थकत्वे तदर्थानुपयोगे वा संज्ञोपस्थितस्वरूपस्यैवोपादानम् । नचैतदुभयमप्यत्रेति भावः । प्रतिपादयतीति । ष्यङः सम्प्रसारणमित्यादौ । उच्चारितस्यैव प्रत्यायकत्वमित्यणुदिदिति सूत्रस्थभाष्यविरुद्धमिदम् । वर्णविधिरित्यस्य वर्णविषयविधानमित्यर्थोऽसिद्धेरभावादाह । वर्णाश्रय इति । सम्बन्धसामान्यषष्ठ्या समासो विधिरिति कर्मणि किरिति भावः । आदिना एकादेशः । वाक्यार्थेनेति । क्रियारूपेणेत्यर्थः । नाप्येतयोरिति भाष्यं व्याचष्टे । तस्य चेति । चोऽसम्भवादित्युत्तरं योज्यः । भाष्ये एतयोः कार्ययोरिति । पूर्वरूपदीर्घयोरित्यर्थः ॥

॥ वि० ॥ स एव तावन्नास्तीति वक्तव्ये दुर्लभत्वोक्तिरनुचितेत्यत आह । कार्यपक्षे इति । अनेन भाष्येणातीतानागतयोरविद्यमानयोरप्रत्यासत्त्या शक्तिग्रहदौर्लभ्यमुक्तम् । निरूपितं चेदम्मञ्जूषायां नामार्थवादे । नित्यपक्षे त्विति । अनेनाथापि कथञ्चिदित्यपि भाष्यं व्याख्यातम् । शास्त्रेति । सितमित्यादौ यणस्थानिकत्वाभावेन शास्त्रमात्रैकगम्यं तदित्यर्थः । शास्त्रगम्यत्वे चेतरेतराश्रयमेवेति भावः । भाष्ये केनासाविति । केन मानेन यणः

॥ कै० ॥ दुर्लभ इति । कार्य्यपक्षे न लभ्यते नित्यपक्षे तु लभ्यत इति दुर्लभत्वमुक्तम् । केनासाविति । लोके इगेव नित्यम्प्रयोगेऽस्ति तस्य यणस्थानिकत्वं शास्त्रसमधिगम्यमित्यर्थः । भाविसंज्ञाविज्ञानं तु परिहारान्तराऽभिधानाय न तावदत्रोक्तम् ।

॥ भा० ॥ अस्तु तर्हि वर्णस्य । वर्णस्य संज्ञा चेन्निर्वृत्तिः । वर्णस्य संज्ञा चेन्निर्वृत्तिर्न सिध्यति । ष्यङः सम्प्रसारणमिति । स एव हि तावदिग् दुर्लभो यस्य संज्ञा क्रियते । अथापि कथञ्चिल्लभ्येत केनासौ यणः स्थाने स्यात् । अनेनैव ह्यसौ व्यवस्थाप्यते । तदेतदितरेतराश्रयम्भवति । इतरेतराश्रयाणि च कार्य्याणि न प्रकल्पन्ते । विभक्तिविशेषनिर्देशस्तु ज्ञापक उभयसंज्ञात्वस्य । यदयं विभक्तिविशेषैर्निर्देशं करोति सम्प्रसारणात्परः पूर्वो भवति सम्प्रसारणस्य दीर्घो भवति ष्यङः सम्प्रसारणं भवतीति । तेन ज्ञायते उभयोः संज्ञा भवतीति । यत्तावदाह । सम्प्रसारणात्परः पूर्वो भवति सम्प्रसारणस्य दीर्घो भवतीति । तेन ज्ञायते वर्णस्य भवतीति । यदप्याह । ष्यङः सम्प्रसारणमिति तेन ज्ञायते वाक्यस्यापि संज्ञा भवतीति ॥

॥ कै० ॥ उभयसंज्ञात्वस्येति । उभयोः संज्ञा उभयसंज्ञा तस्या भाव उभयसंज्ञात्वम् । तत्र तन्त्रावृत्त्येकशेषाणामन्यतमाश्रयेणोभयोः संज्ञा सिध्यति ॥

॥ वि० ॥ स्थाने इति ज्ञातः स्यात् । अनेन । सम्प्रसारणसंज्ञाविधायकेन शास्त्रेणासाविग् यणः स्थाने स्थाप्यत इत्यर्थः । उभयोः संज्ञात्वमित्यर्थोऽसंभवी एकस्यैव संज्ञात्वादत आह । उभयोः संज्ञेति । एकशेषश्च प्रतिपदमनेकमर्थमुद्दिश्यैकस्याः संज्ञाया एकवाक्यतयैव विधातुं शक्यत्वादवाऽऽवृत्तेः क उपयोग इति चिन्त्यम् ॥



॥ वि० ॥ भाष्ये यथा काकादिति । अज्ञात एव काकत्वे तज्जातत्वमात्रेण तथा व्यवहारवदत्रापीत्यर्थः । तत्र शङ्कते । नन्विति । अन्यत्र । एको गोत्र इत्यत्र । यदानुपेति । न उपजातो जात्यभिव्यञ्जकः संस्थानविशेष आकारविशेषो यस्येत्यर्थः । कथन्तर्हि तथा व्यवहार इत्यत्राह । निर्ज्ञातमिति । एवञ्च तस्माज्जातत्वेनाऽवगते तच्छब्दप्रयोग उभयत्रापीति दृष्टान्तत्वोपपत्तिः । अन्ये तु काकाज्जातो यथा काकत्वाभिसम्बन्धात्काक एवं सम्प्रसा-

॥ कै० ॥ यथा काकादिति । ननु काकत्वाभिसम्बन्धात्काकः । अन्यत्र चोक्तं येनैव हेतुनैकः काकस्तेनैवाऽपरोपीति । नैष दोषः । यदाऽनुपजातजात्यभिव्यञ्जकसंस्थानविशेषः काको भवति निर्ज्ञातं च तस्य काकाज्जन्म भवति तदैतदुक्तम् । एवमिहापि सम्प्रसारणाज्जातत्वादुपचाराद्वर्णोऽपि तच्छब्दं लभते इति भावः । प्रविशेति । प्रवेशनक्रिया कर्म योग्यमाक्षिपति तत्र पिण्ड्यां प्रवेशनाऽसम्भवाद्गृहप्रतिपत्तिः ।

॥ भा० ॥ अथवा पुनरस्तु वाक्यस्यैव । ननु चोक्तं सम्प्रसारणसंज्ञायां वाक्यस्य संज्ञा चेद्वर्णविधिरिति । नैष दोषः । यथा काकाज्जातः काकः । श्येनाज्जातः श्येनः । एवं सम्प्रसारणाज्जातं सम्प्रसारणमिति । यत्तत्सम्प्रसारणाज्जातं सम्प्रसारणं तस्मात्परः पूर्वो भवति तस्य दीर्घो भवतीति । अथवा दृश्यन्ते हि वाक्येषु वाक्यैकदेशान् प्रयुञ्जानाः पदेषु च पदैकदेशान् । वाक्येषु तावद्वाक्यैकदेशान् । प्रविश पिण्डीं प्रविश तर्पणमिति । पदेषु पदैकदेशान् । देवदत्तो दत्तः सत्यभामा भामेति ॥

॥ कै० ॥ एवं पिण्डीमिति कर्म योग्यां क्रियामाक्षिपद्भक्षणक्रियां प्रकरणवशात्प्रत्याययति । एवं सम्प्रसारणादित्येतन्निर्वृत्तार्थमाक्षेप्स्यतीत्यर्थः । यथाच पदैकदेशप्रयोगस्तथा सिद्धे शब्दार्थसम्बन्ध इत्यत्र प्रतिपादितम् ॥

॥ वि० ॥ रणाज्जातोऽपि सम्प्रसारणत्वारोपात्संप्रसारणमिति भाष्यार्थमाहुः । वाक्येष्विति । स्वार्थबोधनाय वाक्येषु प्रयोक्तव्येष्वित्यर्थः । योग्यक्रिया दर्शनादिरपीत्यत आह । प्रकरणेति । तत्तद्वाक्यस्य वाक्यार्थे शक्तिग्रहकाले तत्तदेकदेशस्यापि तत्तद्वाक्यार्थे शक्तिग्रहः पदैकदेशस्य पदार्थ इवेति शक्त्यैव बोधः । पूर्वपरिहारे सम्प्रसारणपदस्य तज्जन्यवर्णे उपचारात् प्रयोगः । अत्र त्वेकदेशेनैव शक्त्या तदर्थप्रतिपत्तिरिति भेदस्तदाह । आक्षेप्स्यतीति । आक्षेपोऽत्र बोधनमेव ॥

॥ वि० ॥ भाष्ये इत्येतस्य वाक्यस्यार्थे इति । अत्र वाक्यपदं पदसमुदायपरम् । इत्येतस्येत्येतदर्थकस्य सम्प्रसारणादुत्पन्नो यस्तस्मादिति सम्प्रसारणस्य यत्कार्यं तस्येति च वाक्यस्यार्थे इत्यर्थः । पूर्वेभ्यः पचेभ्योऽस्य भेदमाह । यथा ब्राह्मणेति । एवञ्च यथा तत्र संख्याऽन्वयसंख्येयद्वारा तथा प्रकृते स्वनिर्वृत्तद्वारेति भावः । तदेवाह । तत्फलस्येति । यथा पितृनाम्ना सङ्कल्पितं द्रव्यं तस्याऽयोग्यत्वे तत्पुत्राय समर्प्यते तद्वदिति भावः । भाष्ये

॥ कै० ॥ अथवेति । यथा ब्राह्मणशतं भोज्यतामित्युक्ते सामर्थ्यात्संख्येया ब्राह्मणा भोज्यन्ते तथेहापि सम्प्रसारणादित्युक्ते वाक्या-

॥ भा० ॥ एवमिहापि सम्प्रसारणनिर्वृत्तात्सम्प्रसारणनिर्वृत्तस्येत्येतस्य वाक्यस्यार्थे सम्प्रसारणात् सम्प्रसारणस्येत्येष वाक्यैकदेशः प्रयुज्यते । तेन निर्वृत्तस्य विधिं विज्ञास्यामः । सम्प्रसारणनिर्वृत्तात्सम्प्रसारणनिर्वृत्तस्येति । अथवा आहाऽयं सम्प्रसारणात्परः पूर्वो भवति सम्प्रसारणस्य दीर्घो भवतीति । नच वाक्यस्य सम्प्रसारणसंज्ञायां सत्यामेष निर्देश उपपन्नः । नाप्येतयोः कार्य्ययोः सम्भवोऽस्ति तत्र वचनाद्भविष्यति । अथवा पुनरस्तु वर्णस्य । ननु चोक्तं वर्णसंज्ञा चेन्निर्वृत्तिरिति । नैष दोषः । इतरेतराश्रयमात्रमेतच्चोदितं सर्वाणि चेतरेतराश्रयाण्येकत्वेन परिहृतानि । सिद्धन्तु नित्यशब्दत्वादिति । नेदं तुल्यमन्यैरितरेतराश्रयैः । नहि तत्र किञ्चिदुच्यते अस्य स्थाने ये आकारैकारौकारा भाव्यन्ते ते वृद्धिसंज्ञा भवन्तीति । इह हि पुनरुच्यते इग्यो यणः स्थाने वर्णः स सम्प्रसारणसंज्ञो भवतीति ॥

॥ कै० ॥ येन पौर्वापर्यासम्भवात्तत्फलस्य वर्णस्य प्रतीतिः ॥

॥ वि० ॥ एकत्वेनेति । साजात्यादेकत्वेन विशिष्टानि बुद्ध्या कृत्वेत्यर्थः । सर्वेषामेकत्वेनैकजातीयत्वेनैकपरिहारेण सर्वाणि परिहृतानीति भावः । नेदं तुल्यमिति । नित्यशब्दवादेऽपि यण्स्थानिकत्वस्य शास्त्रैकसमधिगम्यत्वादिति भावः ॥



॥ वि० ॥ भाविसंज्ञेति । सम्प्रसारणादिपदस्य तत्त्वेन व्यवहरिष्यमाणे लक्षणेति भावः । अयं समाधिर्वृद्ध्यादिविषयेऽपि बोध्यः । वृद्धीति । तदयं सूत्रार्थः । यणः प्रयोगे प्राप्ते इक् प्रयुज्यमानः सम्प्रसारणसंज्ञ इति । तज्ज्ञानञ्च यजाद्युपदेशज्ञानमात्रेण वचिस्वपीत्येतज्ज्ञानं विनापि जातमिति नान्योन्याश्रय इत्यर्थः । वचिस्वपीत्यादेश्चाऽयमर्थः । एतत्सम्बन्धियण्प्रयोगे प्राप्ते इक् प्रयुज्यमानः साधुरितीतिभावः । असाधोः साधुत्वं ब्रह्मणाप्युपपादयितुमशक्यमत आह । प्रागिति । एतदेव ध्वनयितुमभिमतस्येत्युक्तम् । ननु दुहेर्लिङि उत्तमपुरुषे लस्येटि तस्य सम्प्रसारणत्वेऽदुहितरामित्यादौ हल इति

॥ कै० ॥ भाविनीति । ष्यङः संप्रसारणमिति विधिप्रदेशेषु भाविसंज्ञाविज्ञानमित्यर्थः । सिद्धन्तु नित्यशब्दत्वादित्येतत्समर्थनार्थमाह । अथवेति । बुद्धिविपरिणाममात्रं स्थान्यादेशभाव इत्यर्थः । असाध्वभिमतस्येति । प्राक् सम्प्रसारणशास्त्रादिति भावः । यथासंख्यसम्बन्धाददु-

॥ भा० ॥ एवन्तर्हि भाविनीयं संज्ञा विज्ञास्यते । तद्यथा कश्चित्कञ्चित् तन्तुवायमाह अस्य सूत्रस्य शाटकं वयेति स पश्यति यदि शाटको न वातव्यः । अथ वातव्यो न शाटकः । शाटको वातव्यश्चेति विप्रतिषिद्धम् । भाविनी खल्वस्य संज्ञाऽभिप्रेता स मन्ये वातव्यो यस्मिन्नुते शाटक इत्येतद्भवतीति । एवमिहापि स यणः स्थाने भवति यस्याभिनिर्वृत्तस्य सम्प्रसारणमित्येषा संज्ञा भविष्यति । अथवा इजादियजादिप्रवृत्तिश्चैव हि लोके लक्ष्यते । यजाद्युपदेशात्तु इजादिनिवृत्तिः प्रसक्ता । प्रयुञ्जते च पुनर्लोका इष्टम् उप्तमिति ते मन्यामहे अस्य यणः स्थाने इममिकम्प्रयुञ्जते इति । तत्र तस्यासाध्वभिमतस्य शास्त्रेण साधुत्वमन्वाख्यायते किति साधुर्भवति ङिति साधुर्भवतीति ॥ ❋ ॥

॥ कै० ॥ ह्वितरामिति इकारस्य सम्प्रसारणसंज्ञा न भवति । दिव उदित्युत्वे यणादेशे कृते हल इति दीर्घत्वं तपरकरणान्न भवति द्युभ्यामिति । अचश्युवावित्यत्र सम्प्रसारणाच्चेति पूर्वैकादेशो न भवति अचः पश्चात्सन्निधानात् । अथवा वार्णादाङ्गस्य बलीयस्त्वात् ॥ ❋ ॥

॥ वि० ॥ दीर्घः स्यादत आह । यथासंख्येति । एवं हि यथासंख्यार्थं ऌकारोपदेशस्यावश्यकत्वे ऌकारोपदेशः किमर्थ इति ऋऌक्सूत्रस्थभाष्यासङ्गतिरिति चिन्त्यमिदम् । तस्मात् सम्प्रसारणस्येत्यादौ तद्भावितपरत्वाश्रयणान्न दोषः । ध्वनितञ्चेदं वाक्यसंज्ञापक्षस्थापने वाक्यैकदेशन्यायं वदता भगवता । एतेन द्युभ्यामचद्युवावित्यपि सिद्धम् । अचः पश्चादिति । समानाङ्गग्रहणस्य करिष्यमाणत्वादीकारस्य चानङ्गस्थत्वादित्यर्थः । तत्प्रत्याख्यानेऽप्याह । वार्णेति । आङ्गसुवङ् ॥ ❋ ॥

॥ वि० ॥ आद्यन्तौ । अपि त्विति । एतदर्थमेव स्थानाख्यप्रमाणेन सिद्धेऽपि यथासंख्यसूत्रमावश्यकमितिभावः । अभिन्नस्य । अपृथग्भूतस्य । सुतरामिति । यत्र न साहित्यस्य नियमेन प्रतीतिः पृथगुपस्थितिश्च तत्रापि चेन्न क्रमव्यवस्था किमु वक्तव्यं साहित्यप्रतीतावपृथगुपस्थितौ चेत्यर्थः । तथान्वयबोधे तत्तत्पदार्थानां सर्वसाधारणव्यासज्यवृत्तिधर्मानवच्छिन्नत्वेनोपस्थितिस्तत्त्वमितितात्पर्यम् । अन्तो निश्चय इति । दर्शनस्यावसानं निश्चये

॥ कै० ॥ आद्यन्तौ । लोकव्यवहारादत्र क्रमव्यवस्था न सिध्यति अपि तु शास्त्रेणैवेतिप्रदर्शनाय पूर्वपक्षः । समासनिर्देशोऽयमिति । अभिन्नस्याऽर्थस्य समासेन प्रतिपादनादित्यर्थः । यद्यपि देवदत्तस्य यज्ञदत्तस्य चाऽजा अवयश्च धनमिति वाक्येऽपि क्रमव्यवस्था नास्ति तथापि समासे

॥ भा० ॥ आद्यन्तौ टकितौ । समासनिर्देशोऽयं तत्र न ज्ञायते क आदिः कोऽन्त इति । तद्यथा । अजाविधनौ देवदत्तयज्ञदत्ताविन्युक्ते तत्र न ज्ञायते कस्याजा धनं कस्याऽवय इति । यद्यपि तावल्लोक एष दृष्टान्तः दृष्टान्तस्याऽपि तु पुरुषारम्भो निवर्त्तको भवति । अस्ति चेह कश्चित्पुरुषारम्भः । अस्तीत्याह । कः । संख्याताऽनुदेशो नाम । कौ पुनष्टकितावाद्यन्तौ भवतः । आगमावित्याह । युक्तं पुनर्यन्नित्येषु नाम शब्देषु आगमशासनं स्यात् । न । नित्येषु नाम शब्देषु कूटस्थैरविचालिभिर्वर्णैर्भवितव्यमनपायोपजनविकारिभिः । आगमश्च नामाऽपूर्वः शब्दोपजनः । अथ युक्तं यन्नित्येषु शब्देष्वादेशाः स्युः । बाढं युक्तम् । शब्दान्तरैरिह भवितव्यम् । तत्र शब्दान्तराच्छब्दान्तरस्य प्रतिपत्तिर्युक्ता । आदेशास्तर्हीमे भविष्यन्ति । अनागमकानां सागमकाः ॥

॥ कै० ॥ सुतरां नास्तीतिप्रतिपादयितुं समासनिर्देश इत्युक्तम् । यद्यपीति । दर्शनं दृष्टं तस्यान्तो निश्चयः । यद्यपि लोके एतद्दर्शनमित्यर्थः ॥

॥ वि० ॥ सत्याकाङ्क्षाऽभावाद्भवतीति दृष्टान्तशब्देन निश्चय उच्यते इत्यर्थः । एतद्दर्शनमिति । निश्चय इत्यर्थः । एवञ्च यथासंख्यान्वयाभिप्रायेणेदृशप्रयोगो लोकेऽसाधुरितिभावः । भाष्येऽस्ति वेति प्रश्नः । चपाटस्त्वयुक्तस्तस्य प्रश्नेऽयुक्तत्वात् । भाष्ये कौ पुनरिति । यौ टकितावाद्यन्तौ तौ किमागमावुताऽऽदेशाविति प्रश्नः । आगमावित्याहेति । आद्यन्तपदसत्त्वादिति भावः । नित्येष्विति । वर्णास्तद्घटिताः प्रयोगेषु श्रूयमाणाः शब्दाश्च व्याकरणकार्य्या आकाशवन्नित्या इतिमते इदम् । तत्र शब्दान्तरादिति । प्रसक्तां शब्दान्तरबुद्धिं विहायेत्यर्थः ॥



॥ वि० ॥ अनागमकानामित्यादेर्यद्यपि घुसंज्ञासूत्र आशय उक्त एव तथापि तं विस्मृत्य तत्कथमितिप्रश्ने एकदेशी साहचर्यादस्य संज्ञासूत्रत्वेन तदुपपत्तिमाह । संज्ञाधिकारोऽयमिति । तत्र शङ्कते । यद्येवमिति । उपलक्ष्यत इति । एवञ्चानयोरित्त्वमेव नेति भावः । आटजिति । यद्यपि प्रत्ययविधौ नास्य प्रवृत्तिः षष्ठीत्यपकर्षणात् । अत एव टाटिटन्ऐकागारिकाडित्यादौ नास्य प्रवृत्तिः । तथापि टुकः पर्यायेणाद्यन्तता स्यादितिदोष इति बोध्यम् । आटश्चेत्यादिभिस्तु

॥ कै० ॥ संज्ञाधिकारोऽयमिति । यद्येवं संज्ञा संज्ञिप्रत्यायनार्था संज्ञिनं प्रत्याय्य स्वयमेव निवर्तेत इति किमिङ्ग्रहणेन टकावित्येवास्तु । नैष दोषः । इत्संज्ञत्वेन देशविशेष उपलक्ष्यते । तेनेत्संज्ञकस्य यो देशस्तद्देशावस्थितौ टकौ संज्ञे भवत इति आलजाटचावित्याटच्प्रत्यये टकारः संज्ञा न भवति । तत्रेड्ग्रहणेनेकारादिः शब्दो गृह्यते स्थानेऽन्तरतमश्चाऽऽदेशो भवतीति तव्यस्य इतव्यो भवतीति सिद्धमिष्टम् । अङ्गस्योदात्त-

॥ भा० ॥ तत्कथम् । संज्ञाधिकारोऽयम् । आद्यन्तौ चेह संकीर्त्येते टकारककाराविताबुदाह्रियेते तत्राऽऽद्यन्तयोष्टकारककाराविती संज्ञे भविष्यतः । तत्रार्द्धधातुकस्येड्वलादेरित्युपस्थितमिदं भवति आदिरिति तेनेकारादिरादेशो भविष्यति । एतावदिह सूत्रमिडिति । कथं पुनरियता सूत्रेण इकारादिरादेशो लभ्यः । लभ्य इत्याह । कथम् । बहुव्रीहिनिर्देशात् । बहुव्रीहिनिर्देशोऽयम् । इकार आदिरस्येति । यद्यपि तावदत्रैतच्छक्यते वक्तुम् । इह तु कथम् । लुङ्लङ्लृङ्क्ष्वडुदात्त इति । अत्राशक्यमुदात्तग्रहणेनाकारो विशेषयितुम् । तत्र को दोषः । अङ्गस्योदात्तत्वं प्रसज्येत । नैष दोषः । त्रिपदोऽयं बहुव्रीहिः । तत्र वाक्य एवोदात्तग्रहणेनाकारो विशेष्यते । अकार उदात्त आदिरस्येति । यत्र तर्ह्यनुवृत्त्यैतद्भवति । आडजादीनामिति । वक्ष्यत्येतत् । अजादीनामटा सिद्धमिति ॥

॥ कै० ॥ त्वमिति । तत्रालोऽन्त्यस्येत्यन्त्यस्य स्यात् । त्रिपदोऽयमिति । विशेषणस्याप्युदात्तस्य सौत्रत्वान्निर्देशस्य परनिपातः । यत्र तर्हीति । तत्र ह्युदात्तग्रहणमेवानुवर्तेत इत्यशक्यो बहुव्रीहिराश्रयितुमितिभावः । वक्ष्यत्येतदिति । सूत्रस्यैव प्रत्याख्यानाददोष इत्यर्थः ॥

॥ वि० ॥ टकारार्थादित्वोपलक्षिताकाराद्यनुवादेन वृद्ध्यादिविधानम् । भाष्ये संकीर्त्येते । प्रथमत उच्चार्येते । उदाह्रियेते । पश्चादुच्चार्येते इत्यर्थः । अन्तरतम इति । अर्थतः श्रुतितश्चेतिभावः । ननु प्रथमातिक्रमे कारणाभावादाद्युदात्तत्वेनेष्टसिद्धिरत आह । तत्रेति । भाष्ये तत्र वाक्य एवेति । त्रिपदे वाक्य एवेत्यर्थः । एवः प्रसिद्धौ । एवञ्च तत्समानार्थकवृत्तावप्यकारविशेषणत्वं सुलभमितिभावः । प्रत्याख्यानादिति । यासुड्विधायकं च यासुडुदात्तः परस्मैपदेष्विति पाठ्यमिति न दोषः ॥

५४६

॥ वि० ॥ आडजादीनामिति कुर्वतः सूत्रकृतो नायं पक्षस्तात्पर्यविषयीभूत इत्यतो घुसंज्ञासूत्रोपपादितमेव पक्षं सिद्धान्त्याह । भाष्ये अथवेति । परिभाषापक्षेऽपीति । परिभाषात्वेनाऽऽगमत्वपक्षेऽपीत्यर्थः । भाष्ये तेनाऽयं विशेषेणेति । ततः पश्चादिकारमित्यन्तेनेत्यर्थः । शब्दान्तरं तव्याद्यपेक्षया भिन्नसमुदायम् इतव्यादिरूपमित्यर्थः । प्रतिपद्यते तव्यबुद्धिनिवर्तनेनेत्यर्थः । नित्यं पदमिति । व्याकरणानिष्पाद्यमित्यर्थः । अन्वाख्यायत इति । क्रमेण सिद्धतत्तदवयवप्रतिपादनेन पूर्वपूर्वनिरवयवकबुद्धिविपरिणामद्वारा प्रत्याय्यते इत्यादेशस्थल इवात्रापि बुद्धिविपरिणामान्न नित्यत्वहानिः । तदेव दर्शयति । न तत्र

॥ कै० ॥ अथवेति । परिभाषापक्षेऽपि न दोष इत्यर्थः । नहि व्यवस्थितस्य तव्यस्य पश्चादिकारोऽवयव आगच्छति येनाऽनित्यत्वं स्यात् । किं तर्हि । नित्यं पदमनेनोपायेनाऽन्वाख्यायते । खदिरबर्बुरयोरिति

॥ भा० ॥ अथवा यत्तावदयं सामान्येनोपदेष्टुं शक्नोति तत्तावदुपदिशति प्रकृतिं ततो वलाद्यार्द्धधातुकं ततः पश्चादिकारं तेनाऽयं विशेषेण शब्दान्तरं समुदायं प्रतिपद्यते । तद्यथा । खदिरबर्बुरयोः । खदिरबर्बुरौ गौरकाण्डौ सूक्ष्मपर्णौ । ततः पश्चादाह । कङ्कटवान् खदिर इति । तेनाऽसौ विशेषेण द्रव्यान्तरं समुदायं प्रतिपद्यते ॥

॥ कै० ॥ निर्द्धारणे षष्ठी तयोः कङ्कटवान् खदिर इत्युक्ते द्रव्यान्तरं खदिरं प्रतिपद्यते न तत्र कङ्कटास्तदानीमारोप्यन्ते प्रतिपादनोपाय एवाऽयमित्यर्थः ॥

॥ वि० ॥ कङ्कटा इति । कङ्कटः सन्नाह उपरितनशुष्कत्वचः । भाष्ये खदिरबर्बुरयोरिति सामान्यमुपदिशतीत्यध्याहृतसामान्यापेक्षया षष्ठी । सामान्यमेव दर्शयति । खदिरबर्बुरौ गौरकाण्डाविति । द्रव्यान्तरं कङ्कटाद्भिन्नं तदवयवकं समुदायमिति पतञ्जलिमते गुणसमुदायस्यैव द्रव्यत्वादितिभावः । तत्र यथा गौरकाण्डत्वादिना खदिरेऽपि प्रसक्तां बर्बुरबुद्धिं कङ्कटवानित्यनेन निवर्त्य खदिरबुद्धिः स्थाप्यते तथेहापि सामान्योपदेशात्सर्वत्र तव्यबुद्धौ प्रसक्तायाम् इड्बोधकविशेषेणागमित्वबोधनद्वारैव इतव्यबुद्धिः स्थाप्यते इत्यर्थः । निरूपितश्चैतद् घुसंज्ञासूत्रे । अत्र पक्षे वाचकस्यैवानया प्रणाल्या व्युत्पादनम् । उत्तरपक्षे तु कल्पितस्याऽनेन साक्षाद्बोधनं तेन च बोधकस्याखण्डस्य बोधनमिति भेदः ॥

५४७

॥ वि० ॥ रूपार्थान्वयाभावादिति । व्याकरणेन यस्य असितिरूपस्यार्थो दर्शितस्तेन रूपेण तस्यार्थस्य प्रयोगेष्वन्वयाभावः स्त एधीत्यादौ व्यभिचारादित्यर्थः । असत्येति । शास्त्रप्रक्रियाकल्पिता असत्या इत्यर्थः । यद्यपि सत्यगवयो रेखागवयवत्सावयव एव । अत्र कल्पिताऽवयवसदृशाऽनवयवानां तत्राऽन्वयात् तथाऽपि सत्यम्पदमखण्डमेव । एधीत्यादौ शास्त्रकृत्कल्पिताऽवयवसदृशानामनुपलम्भादित्येतत्पर्चानिष्कर्षः । सत्यस्य पद-

॥ कै० ॥ अथवेति । एतदाह अस्ति स्त एधीति तत्त्वतो रूपार्थान्वयाभावात्कल्पिताभ्यामेवान्वयव्यतिरेकाभ्यामर्थवत्तामाश्रित्याऽसत्यप्रकृतिप्रत्ययोप-

॥ भा० ॥ अथवा एतयाऽऽनुपूर्व्याऽयं शब्दान्तरमुपदिशति । प्रकृतिं ततो वलाद्यार्द्धधातुकं ततः पश्चादिकारं यस्मिंस्तस्याऽऽगमबुद्धिर्भवति । टकितोराद्यन्तविधाने प्रत्ययप्रतिषेधः । टकितोराद्यन्तविधाने प्रत्ययस्य प्रतिषेधो वक्तव्यः । प्रत्यय आदिरन्तो वा माभूदिति । चरेष्टः । आतोऽनुपसर्गे क इति ॥

॥ कै० ॥ देशेन सत्यस्य पदस्य व्युत्पादनं क्रियते रेखागवयेनेव सत्यगवयस्य । प्रत्ययप्रतिषेध इति । प्रत्ययपरत्वस्याऽप्ययमपवादः प्राप्नोतीति भावः ॥

॥ वि० ॥ स्थेति । एवञ्च रेखागवयवत्कल्पिताऽनित्यपदविषयकं शास्त्रं तत्रागमेष्वपि न क्षतिर्नच तल्लोके प्रयुज्यमानं किन्तु तत्प्रत्याय्यमेव पदं तथेति भावः । एतयेत्यादि भाष्यस्यायमर्थः । एतया वक्ष्यमाणयाऽऽनुपूर्व्या अयं पाणिनिः शब्दान्तरं बोधकशब्दापेक्षया भिन्नं रेखागवयस्थानीयम् उपदिशति प्रतिपादयति । तत्राऽऽगमबुद्धावपि न शब्दनित्यताहानिरिति । ननु टकितोराद्यन्तविधाने कस्यापि प्रत्ययस्याऽप्राप्तेः कस्य प्रतिषेधो वक्तव्य इत्यत आह । प्रत्ययपरत्वस्यापीति । अपिना स्थानेयोगत्वस्य ॥

॥ वि० ॥ भाष्ये युक्तं तत्रेति । नुम्म्नमादीनां मित्त्वमनवकाशम् । उभयम् । प्रत्ययसम्बन्धि टित्त्वं कित्त्वं च । एवञ्चागमटित्त्वकित्त्वयोरन-वकाशत्वात्प्रत्ययसम्बन्धिनश्च सावकाशत्वाद्येन नाप्राप्तन्यायेनेदं स्थानेयोगत्वस्यैवाऽपवाद इति भावः । सति परत्वे इति । टिदन्तान् ङीब्वि-

॥ कै० ॥ परवचनादिति । पुरस्तादपवादन्यायेन स्थानेयोगत्वमेवाऽनेन बाध्यते न प्रत्ययपरत्वमिति भावः । नापवादत्वादिति । बाध्यमात्रापेक्षायां पुरस्तादपवादन्यायो नास्तीति भावः । सर्वापवादत्वाच्चाह । प्रयोजनमिति । सति परत्वे प्रयोजनमेतत्स्यात्

॥ भा० ॥ परवचनात्सिद्धम् । परवचनात्प्रत्यय आदिरन्तो वा न भविष्यति । परवचनात्सिद्धमिति चेन्नाऽपवादत्वात् । परवचनात्सिद्धमिति चेन्न । किं कारणम् । अपवादत्वात् । अपवादोऽयं योगः । तद्यथा । मिदचोऽन्त्यात्पर इत्येष योगः स्थानेयोगत्वस्य प्रत्ययपरत्वस्य चापवादः । विषम उपन्यासः । युक्तं तत्र यदनवकाशं मित्करणं स्थानेयोगत्वं प्रत्ययपरत्वञ्च बाधते । इदं तु पुनरुभयं सावकाशम् । कोऽवकाशः । टित्करणस्याऽवकाशः । टित इति ईकारो यथा स्यात् । कित्करणस्याऽवकाशः । कितीत्याकारलोपो यथा स्यात् । प्रयोजनं नाम तद्वक्तव्यं यन्नियोगतः स्यात् । यदिचायं नियोगतः परः स्यात् तत एतत्प्रयोजनं स्यात् । कुतो नु खल्वेतत् टित्करणादयं परो भविष्यति न पुनरादिरिति कित्करणाच्च परो भविष्यति न पुनरन्त इति ॥

॥ कै० ॥ परत्वमेव त्वलभ्यमित्यर्थः । टित्करणादिति । ङीबर्थादित्यर्थः । कित्करणादिति । आकारलोपार्थात् ॥

॥ वि० ॥ धानात् किति परे आलोपविधानाच्चेति भावः । टित्परो भवतीति वचनाऽभावादाह । ङीबर्थादिति । यद्यप्युभयथा टित्त्वस्य सावकाशत्वे परत्वात्परश्चेत्यस्य प्रवृत्त्या पर एव भविष्यति तथापि मिदचोऽन्त्यादिति साहचर्याद्बाध्यसामान्यचिन्तामेव न्याय्यां मन्यते ॥



॥ वि० ॥ अभ्युपगम्याऽपि परश्चेत्यस्य परत्वात्प्रवृत्तिमाह । टितः खल्वपीति । एव परिहारो युक्तं तत्रेत्यादिनोक्तदिशा यथाकथञ्चिद्भवेदपीत्यर्थः । तत्राऽसंभवरूपविरोधसद्भावात् । किति तु तदभावात्समावेशः स्यादितिभावः । तत्र दोषमाह । नोङित्यादि । अवयवत्वेति । अन्तशब्दोऽवयववाचीतिभावः । पूर्वोक्तम् । कुतो नु खल्वित्यादिनोक्तम् । अधिकम् । ङीपोऽनवकाशत्वपूर्वपक्षसमाधानम् । भाष्ये स्यादेव हीति । बाध्यसामा-

॥ कै० ॥ प्रयोजनमभ्युपेत्याह । टित इति । कितस्त्विति । ननु परत्वाऽवयवत्वयोर्विरोधात्कथमुच्यते परश्च स्यादन्तश्चेति । नैष दोषः । परस्य सतोऽन्तवत्कार्यप्राप्त्या अन्तत्वमुच्यते । यथा समासान्तानाम् । टितश्चापीति । पूर्वोक्तमेव

॥ भा० ॥ टितः खल्वप्येष परिहारः । यत्र नास्ति सम्भवः । यत्परश्च स्यादादिश्च । कितस्त्वपरिहारः । अस्ति हि सम्भवो यत्परश्च स्यादन्तश्च । तत्र को दोषः । उपसर्गे घोः किः । आध्योः प्रध्योः । नोङ्धात्वोरिति प्रतिषेधः प्रसज्येत । टितश्चाऽप्यपरिहारः । स्यादेव ह्ययं टित्करणादादिर्न पुनः परः । क्व तर्हि इदानीमिदं स्यात् टित ईकारो भवतीति । य उभयवान् गापोष्टगिति । सिद्धन्तु षष्ठ्यधिकारे वचनात् । सिद्धमेतत् । कथम् । षष्ठ्यधिकारेऽयं योगः कर्त्तव्यः । आद्यन्तौ टकितौ षष्ठीनिर्दिष्टस्येति ॥

॥ कै० ॥ समर्थयते अधिकं वक्तुम् । गापोष्टगिति । अत्र कित्त्वात्परत्वादन्तत्वमिति टिदन्तमेतद्भवतीति ङीपोऽयमवकाशः । ततश्च चरेट इत्ययमादिः स्यात् । षष्ठ्यधिकार इति । यत्र स्थानषष्ठी प्राप्ता तत्रोपस्थानमस्या न तु प्रत्ययपरत्वबाधनाय ॥

॥ वि० ॥ न्यचिन्तामेव न्याय्यां मन्यते । परत्वादिति । शब्दपरविप्रतिषेधात् । आद्यन्ताविति सूत्रे च किदन्त इत्यस्य परत्वादित्यर्थः । भाष्ये गापोष्टगित्युपलक्षणम् । नदट्चोरडादीनाम् । बाध्यसामान्यचिन्ताश्रयणेऽपि दोषाभावमाह । सिद्धन्त्विति । षष्ठ्यधिकार इति । तत्राऽनुवर्त्त्येदं व्याख्येयम् । तत्रत्यषष्ठीपदं वाऽपकृष्टव्यमितिभावः । प्राप्तेति । एतदुपस्थितेः प्रागितिशेषः । नत्विति । प्रत्ययविधौ प्रसक्तस्थानषष्ठ्यभावादित्यर्थः ॥

॥ वि॰ ॥ भाष्ये षष्ठीपदासम्बन्धेऽपि समाधानमाह । आद्यन्तयोर्वेति । अर्थशब्दः प्रयोजनवाची षष्ठ्यर्थत्वादितिबहुव्रीहिरित्याह । षष्ठ्याः प्रयोजकाविति । षष्ठ्यर्थस्य प्रयोजकावित्यर्थः । षष्ठ्यन्तार्थस्यावयवभूताद्यन्तनिरूपकत्वेन तत्प्रयोजकत्वमेतयोर्बोध्यम् । यद्यत्रावयवभूताद्यन्तरूपोऽर्थः स्यात् तदा तस्य निरूपकाकाङ्क्षत्वात् स्यादेव षष्ठ्यर्थस्तद्बोधनाय च षष्ठीप्रयोगो न च सोऽस्ति तस्मादाद्यन्ताभावावगतिरितिभावः । भाष्ये षष्ठ्या

॥ कै॰ ॥ आद्यन्तयोर्वेति । षष्ठ्याः प्रयोजकावाद्यन्तौ । षष्ठ्यभावाच्चाऽऽद्यन्ताभावावगतिरित्यर्थः । युक्तं पुनरिति । शब्दभावाभावाभ्यामर्थभावाभावयोः शब्दनिमित्तकत्वमर्थस्य प्राप्तं तच्च पुनर्न युक्तम् । ज्ञापको हि शब्दोऽर्थस्य न तु कारकः सर्वेषा

॥ भा॰ ॥ आद्यन्तयोर्वा षष्ठ्यर्थत्वात्तदभावेऽसम्प्रत्ययः । आद्यन्तयोर्वा षष्ठ्यर्थत्वात्तदभावे षष्ठ्या अभावे असम्प्रत्ययः स्यात् । आदिरन्तो वा न भविष्यति । युक्तं पुनर्यच्छब्दनिमित्तको नामार्थः स्यात् । नार्थनिमित्तकेन नाम शब्देन भवितव्यम् । अर्थनिमित्तक एव शब्दः । तत्कथम् । आद्यन्तौ षष्ठ्यर्थौ । नैवाऽत्र षष्ठीं पश्यामः ॥

॥ कै॰ ॥ सर्वस्यार्थस्य क्रियाप्रसङ्गादितिभावः । अर्थनिमित्तक एवेति । अर्थ एव शब्दस्य प्रयोजकस्तत्प्रतिपादनाय शब्दप्रयोगः । अप्रयोगाच्चाऽनुमीयते नूनम् अर्थ एवात्र प्रयोजको नास्ति शब्दप्रयोगं यः प्रयुञ्जीतेत्यर्थः ॥

॥ वि॰ ॥ अभावे इत्यस्य तदर्थाभावे इत्यर्थः । षष्ठीरूपशब्दाभावात्तदर्थाभावस्तदर्थाभावाच्चाऽऽद्यन्ताभाव इत्यर्थं मन्वानस्य शङ्का । भाष्ये युक्तं पुनरिति । नार्थेत्यत्र काकुः । शब्दभावेति । षष्ठीसत्त्वे तदर्थसत्त्वादाद्यन्तस्थितिः षष्ठ्यभावे तदर्थाऽभावादाद्यन्ताभाव इत्युक्तेरितिभावः । कारकत्वे बाधकमाह । सर्वेषा । रत्नादिशब्देन । सर्वस्य । रत्नादिरूपस्य । भाष्ये समाधत्ते । अर्थनिमित्तक एवेति । तद्व्याचष्टे । अर्थ एवेति । अनुमीयत इति । कार्याभावेन कारणाभावोऽनुमीयते यथा नदीपूराऽभावेनोपरिदेशे वृष्ट्यभाव इति भावः । भाष्ये आद्यन्तावर्थौ षष्ठ्यर्थद्वारा षष्ठीप्रयोजकावित्यर्थः ॥



॥ वि॰ ॥ एवं कार्याभावात् कारणाभावाऽनुमाने कारणाऽभावात्कार्यमपि नेति निगमयति । भाष्ये तयोरभाव इति । ननु प्रत्ययविधावपि क्वचित् षष्ठी दृष्टेत्यत आह । चरेष्ट इत्यादि । नत्विति । एतत्सूत्रोपस्थानेनेतिभावः । तत्र हेतुमाह । प्रत्ययेति । आकाङ्क्षेति । देशांश इत्यर्थः । अनर्थित्वात् । एतदाकाङ्क्षाऽभावात् । अत एव धातोः प्रातिपदिकादित्यधिकाराऽनुग्रहो भवति । धात्वादिभ्यः परो गादिभ्योऽनन्तर इत्यर्थात् । न कार्यकालेति । एतत्तत्त्वमिको गुणवृद्धी इत्यत्र निरूपितम् । वस्तुतस्त्वाश्रित एव परवचनात्सिद्धमित्यस्यैव सिद्धान्त्युक्तित्वाद् नापवादत्वादित्यादेः पूर्वपक्ष्येकदेशिसिद्धान्त्येक-

॥ कै॰ ॥ चरेष्ट इत्यत्र परश्चेत्यधिकारात् पञ्चम्येव युक्ता गापोष्टग् व्रीहिशाल्योर्ढगित्यादावप्यानन्तर्यसम्बन्धे षष्ठी नत्ववयवावयविसम्बन्धे । प्रत्ययपरत्वेन प्रतियोगं सन्निहितेनाकाङ्क्षाविच्छेदादनर्थित्वादस्या अनुपस्थानात् । पुरस्तादपवादन्यायस्तु यथोद्देशपक्षे सम्भवति न कार्यकालपक्ष इति नाश्रितः ॥ ❀ ॥ मिदचोऽन्त्यात्परः । किमर्थमिति । किमनेन व्यावर्त्यत

॥ भा॰ ॥ तेन मन्यामहे आद्यन्तावेवाऽत्र न स्तस्तयोरभावे षष्ठ्यपि न भवतीति ॥ ❀ ॥ मिदचोऽन्त्यात्परः । किमर्थमिदमुच्यते । मिदचोऽन्त्यात्परः स्थानपरप्रत्ययस्याऽपवादः । मिदचोऽन्त्यात्पर इत्युच्यते स्थानेयोगत्वस्य प्रत्ययपरत्वस्य चापवादः । स्थानेयोगत्वस्य तावत् । कुण्डानि वनानि पयांसि यशांसि । प्रत्ययपरत्वस्य । भिनत्ति छिनत्ति । भवेदिदं युक्तमुदाहरणम् । कुण्डानि वनानि यत्र नास्ति सम्भवो यदयमचोऽन्त्यात्परश्च स्यात् स्थाने चेति ।

॥ कै॰ ॥ इति प्रश्नः । स्थानेति । परस्य सतः प्रत्ययस्यापवादस्तेन सामर्थ्यादयमर्थः प्रत्ययपरत्वस्याऽपवाद इति । कुण्डानीति । नपुंसकस्य झलच इत्यत्र झलज्भ्यान्नपुंसकस्य तदन्तविधिरिति अस्ति स्थानेयोगत्वस्य प्रसङ्गः । मित्त्वात् त्वस्मिन्नुपस्थिते नपुंसकस्याऽङ्गस्येत्यवयवषष्ठी सम्पद्यते ॥

॥ वि॰ ॥ देशिनोक्तित्वादितितत्त्वम् ॥ ❀ ॥ मिदचो । प्रयोजनप्रश्नेऽपवादत्वाभिधानमसङ्गतमत आह । किमिति । किं व्यावर्त्यत्वेन प्रयोजनमित्यर्थः । किं स्थानेयोगत्वमुत प्रत्ययपरत्वमपीति प्रश्न इति भावः । उभयापवादत्वे बीजन्तु तत्र तत्र मित्त्ववैयर्थ्यरूपम्पूर्वसूत्र एवोक्तम् । ननु नपुंसकस्येतिसूत्रे झलच इतिपञ्चमीति क्व स्थानेयोगत्वप्रसङ्गोऽत आह । नपुंसकस्येति । पञ्चम्यां हि तस्मादितिपरिभाषोपस्थाने यशांसि ज्ञानानीत्युभयोरप्यसिद्धिरिति षष्ठ्येवेतिभावः ॥

॥ वि० ॥ भाष्ये नैवेश्वर इति । ईश्वरो वेदः । धर्म्मसूत्रं धर्म्मशास्त्रम् । भाष्येऽपवादैरित्यस्याऽसम्भवे इत्यादिः । क्वचित्तथैव पाठः । बाध्यन्तामितिलोट् । मग्ने मस्जेर्जात्पूर्वन्नुमि अनिदितामितिलोपे सस्य संयोगादिलोपे कुत्वे निष्ठानत्वे रूपम् । अन्त्याचः परे तु सति अविशेषेण

॥ कै० ॥ स्थाने चेति । ततश्च सकारस्य स्थाने नुम् भवत्वित्यर्थः । दृष्टान्त इति । निश्चय इत्यर्थः । तत्र दृढव्यवहारा-दीदृश्येव वाक्यार्थे व्युत्पत्तिर्यत्सामान्यविहितो विशेषविहितेन बाध्यते न समुच्चीयते नापि विकल्प्यते । भर्जिमर्च्योश्चेति । भ्रजी

॥ भा० ॥ इदं त्वयुक्तम् पयांसि यशांसीति । अस्ति हि सम्भवो यदयमचोऽन्त्यात्परश्च स्यात् स्थाने चेति । एतदपि युक्तम् । कथम् । नैवेश्वर आज्ञापयति नापि धर्म्मसूत्रकाराः पठन्ति । अपवादैरुत्सर्गा बाध्यन्तामिति । किं तर्हि । लौकि-कोऽयं दृष्टान्तः । लोके हि सत्यपि सम्भवे बाधनम्भवति । तद्यथा । दधि ब्राह्मणेभ्यो दीयतां तक्रं कौण्डिन्यायेति । सत्यपि सम्भवे दधिदानस्य तक्रदानं निवर्त्तकं भवति । एवमिहापि सत्यपि सम्भवे अचामन्त्यात्परत्वं स्थानेयोगत्वं बाधिष्यते । अन्त्या-त्पूर्वो मस्जेर्मिदनुषङ्गसंयोगादिलोपार्थम् । अन्त्यात्पूर्वो मस्जेर्मिद्वक्तव्यः । किं प्रयोजनम् । अनुषङ्गसंयोगादिलोपार्थम् । अनुषङ्गलोपार्थं संयोगादिलोपार्थञ्च । अनुषङ्गलोपार्थं तावत् । मग्नः । मग्नवान् । संयोगादिलोपार्थम् । मङ्क्ता मङ्क्तुम् मङ्क्तव्यम् । भर्जिमर्च्योश्च । भर्जिमर्च्योश्चाऽन्त्यात्पूर्वो मिद्वक्तव्यः । भरूजा मरीचय इति : स तर्हि वक्तव्यः । न वक्तव्यः । निपातनात् सिद्धम् । किं निपातनम् । भरूजाशब्दोऽङ्गुल्यादिषु पठ्यते मरीचिशब्दो बाह्वादिषु ॥

॥ कै० ॥ भर्जन इत्यस्यौणादिकेऽचि कृते गुणे रपरत्वे च जकारात्पूर्वं ऊमागमः । मर्चशब्दार्थ इत्यस्य चौरादिकस्य णिच्य-च इरिति इप्रत्यये णिलोपे चकारात् पूर्वं ईमागमः ॥

॥ वि० ॥ संयोगत्वे संयोगादिलोपसिद्धावपि तस्याऽसिद्धत्वान्नस्योपधात्वाभावान्नलोपो न स्यादितिभावः । संयोगादिलोपस्तु बहूनां समवधाने बहूनामेव संयोगसंज्ञेति पक्षे फलत्वेन बोध्यः । मङ्क्तेत्यादि त्वनुषङ्गलोपाभावेऽप्युदाहरणमुक्तं भाष्ये । ऊमीमावौणादिकौ ॥



॥ वि० ॥ ननु च अन्त्यादचः परत्वं तस्य च वर्णान्तरावयवत्वमिति विरुद्धमत आह । सङ्घातेति । अन्त्यादित्यनेन समुदायाक्षेपेण समु-दायस्योपस्थितत्वात्समुदायावयवसन्निधौ समुदायग्रहणस्य न्याय्यत्वाच्च वर्णस्य वर्णावयवत्वासम्भवाच्चेत्याशयः । नन्वादिरित्यनुवृत्तौ पूर्वादित्वं कुतो नेत्यत आह । नहीति । परादित्वमिति । वाचनिकमेव वर्णस्य वर्णावयवत्वं ङः सीति धुडादेरिवेति भावः । अभक्त इति वार्त्तिकस्यैते न सिध्यन्तीति

॥ कै० ॥ पूर्व्वान्त इति । सङ्घातस्य पूर्वस्य भक्तो न तदेकदेशस्य । अथादिरिति । नहि सम्भवोऽस्ति यदचोऽन्त्यात्परश्च स्यात् पूर्वस्य चादिरिति सामर्थ्यात्परादित्वं विज्ञायते । कुण्डानीति । नान्तमङ्गं न भवतीति दीर्घत्वाऽप्राप्तिः । ननु तदादिवचनं स्यादिनुमर्थ-

॥ भा० ॥ किं पुनरयं पूर्वान्तः । आहोस्वित् परादिः । आहोस्विदभक्तः । कथं वाऽयं पूर्वान्तः स्यात् कथं वा परादिः कथं वाऽभक्तः । यद्यन्त इति वर्त्तते ततः पूर्व्वान्तः । अथादिरिति वर्त्तते ततः परादिः । अथोभयं निवृत्तं ततोऽभक्तः । कश्चाऽत्र विशेषः । अभक्ते दीर्घनलोपस्वरणत्वाऽनुस्वारशीभावाः । यद्यभक्तो दीर्घत्वं न प्राप्नोति । कुण्डानि वनानि । नोपधायाः । सर्वनामस्थाने चासम्बुद्धाविति दीर्घत्वं न प्राप्नोति । दीर्घ । नलोप । नलोपश्च न सिध्यति । अग्ने त्री ते वाजिना त्री षधस्था ता ता पिण्डानाम् । नलोपः प्रातिपदिकान्तस्येति नलोपो न प्राप्नोति । नलोप । स्वर । स्वरश्च न सिध्यति । सर्वाणि ज्योतींषि । सर्वस्य सुपीत्याद्युदात्तत्वं न प्राप्नोति । स्वर । णत्व । णत्वञ्च न सिध्यति । माषवापाणि व्रीहिवापाणि । पूर्वान्ते प्रातिपदिकान्तनकारस्येति सिद्धम् । परादौ विभक्तिनकारस्येति । अभक्ते नुमो ग्रहणं कर्त्तव्यम् । न कर्त्तव्यम् ॥

॥ कै० ॥ मित्युक्तम् । एवन्तर्हि तत् स्मर्त्तव्यं भवतीति गौरवापत्तिः । सर्वाणीति । नुमा सुपो व्यवधानात् स्वरो न सिध्यति ॥

॥ वि० ॥ शेषः । नन्वभक्तत्वेऽपि नान्तमङ्गत्वेत्यत आह । नान्तमङ्गमिति । दीर्घविधावङ्गाधिकारादिति भावः । गौरवापत्तिरिति । प्रतिपत्तिगौरवा-पत्तिरित्यर्थः । त्री ते इति । शेश्छन्दसि बहुलमिति शेर्लोपः । त्रीणि वाजिनानि तानि तानीत्यर्थः । नुमेति । व्यञ्जनाविद्यमानवद्भावस्तु हल्स्वरप्राप्तौ स्वरोद्देश्यकविधिप्राप्तौ वा नान्यत्रेति भावः । सुपीति न तदन्तसप्तमीत्यभिमानेनेदम् ॥

॥ वि॰ ॥ उत्तरपदस्येति । एवञ्च सर्वपक्षेष्वपीदमावश्यकमिति भावः । भगशब्दादिनौ तन्नकारः प्रातिपदिकाऽन्तो भवतीति भगिनी-त्यत्राऽनुच्यमाने उत्तरपदस्येत्यस्मिन् णत्वप्रसङ्गः । भगिनीत्यत्र च ङ्यन्तमुत्तरपदं न नान्तम् । सूत्रन्तु माषवापिणावित्यादौ चरितार्थमिति भावः । स हीति । नुम्विधावङ्गस्येत्यधिकारादित्यर्थः । एवञ्च माषवापाणीत्यादिसिद्ध्यर्थं नुम्ग्रहणमिति भावः । समासरूपप्रातिपदिकान्तस्येत्यर्थेन गर्गभगि-नीत्यस्य व्यावृत्तौ माषवापाणीत्यस्य सिद्धौ च प्रह्विखन्नित्याद्यर्थं नुम्ग्रहणमावश्यकमिति तत्त्वम् । द्विषन्तपादौ द्विषत्परयोस्तापेरिति खच् । खचि ह्रस्वः ।

॥ कै॰ ॥ क्रियते एतन्न्यास एवेति । उत्तरपदस्य प्रातिपदिकस्यान्तस्तत्र नकारो गृह्यते गर्गाणां भगिनी गर्गभगिनीत्यत्र णत्वं माभूदि-त्यवश्यं कर्त्तव्यं नुमो ग्रहणम् । स हि समुदायभक्तत्वादुत्तरपदस्यान्तो न भवतीति । द्विषन्तप इति । प्रसङ्गोच्चारितमेतत् । अत्र हि

॥ भा॰ ॥ क्रियते एतन्न्यास एव । प्रातिपदिकान्तनुम्विभक्तिषु चेति । णत्व । अनुस्वार । अनुस्वारश्च न सिध्यति । द्विषन्तपः परन्तपः । मोऽनुस्वारो हलीत्यनुस्वारो न प्राप्नोति । माभूदेवम् । नश्चापदान्तस्य झलीत्येवं भविष्यति । यस्तर्हि न झल्परः । वहंलिहो गौः । अभ्रंलिहो वायुः । अनुस्वार । शीभाव । शीभावश्च न सिध्यति । त्रपुणी जतुनी तुंबुरुणी । नपुंसकादुत्तरस्यौङः शीभावो भवतीति शीभावो न प्राप्नोति । एवन्तर्हि परादिः करि-ष्यते । परादौ गुणवृद्ध्यौत्त्वदीर्घनलोपाऽनुस्वारशीभावेनकारप्रतिषेधः । यदि परादिः । गुणः प्रतिषेध्यः । त्रपुणे जतुने तुंबुरुणे । घेर्ङितीति गुणः प्राप्नोतीति । गुण । वृद्धि । वृद्धिः प्रतिषेध्या ॥

॥ कै॰ ॥ तन्मध्यपतितस्तद्ग्रहणेन गृह्यते इति मुमो द्विषद्ग्रहणेन ग्रहणमस्ति । त्रपुणी इति । नित्यत्वात् परत्वाच्च नुमि कृते व्यव-धानमिति भावः ॥

॥ वि॰ ॥ अरुर्द्विषदिति मुम् । प्रसङ्गेति । द्विषद्ग्रहणेन मुम्विशिष्टस्य ग्रहणे तस्य पदत्वात्तकारस्य संयोगान्तलोपे एकदेशविकृतन्यायेन द्विषमित्यस्य मान्तस्य पदत्वात्सिद्धोऽनुस्वार इत्यर्थः । वस्तुतस्तस्य न्यायस्याद्याप्यज्ञानात्तदनाश्रयेणेदम् । बहिरङ्गासिद्धत्वं त्रिपाद्यां नेति तत्रोक्तम् । वहंलिहे वहाभ्रे लिह इति खश् । परादावितिवार्त्तिके शीभावेनकारप्रतिषेध इति पाठः । शीभावे इत्यलुगार्षः । एते दोषस्थानानीति शेषः ॥



॥ वि॰ ॥ टजभावाय नपुंसकत्वाय चाह । बहुव्रीहिरिति । भाष्येऽग्ने त्री त इति । ननु परादिपक्षे नलोपः प्रातिपदिकान्तस्येत्यस्याप्राप्तावपि शेश्छन्दसि बहुलमित्यनेन नलोपः सिद्ध इति चेन्न । निर्दिश्यमानपरिभाषयाऽलोन्त्यपरिभाषया च इकारस्यैव लोपापत्तेरित्याशयात् । तद्भक्त-

॥ कै॰ ॥ अतिसखीनीति । बहुव्रीहिः । द्विषन्तप इति । परादिपक्षे तकारस्य मकारो भक्तस्तकारश्च पदान्त इति मका-रोऽपि तद्भक्तत्वात् पदान्त इति सिद्धोऽनुस्वार इत्याहुः । अन्ये तु तद्भक्तत्वात्तकारग्रहणेनाऽस्य ग्रहणं भवतु न तु पदान्तत्वम् ।

॥ भा॰ ॥ अतिसखीनि ब्राह्मणकुलानि । सख्युरसम्बुद्धाविति णित्त्वे अचो ञ्णितीति वृद्धिः प्राप्नोति । वृद्धि । औत्त्व । औत्त्वञ्च प्रतिषेध्यम् । त्रपुणि जतुनि तुम्बुरुणि । इदुद्भ्यामौदच्चघेरित्यौत्त्वं प्राप्नोति । औत्त्व । दीर्घ । दीर्घत्वञ्च न सिध्यति । कुण्डानि वनानि । नोपधायाः सर्वनामस्थाने इति दीर्घत्वं न प्राप्नोति । माभूदेवम् । अतो दीर्घो यञि सुपि चेत्येवं भविष्यति । इह तर्हि अस्थीनि दधीनि प्रियसखीनि ब्राह्मणकुलानि । दीर्घ । नलोप । नलोपश्च न सिध्यति । अग्ने त्री ते वाजिना त्रीषधस्था ता ता पिण्डानाम् । नलोपः प्रातिपदिकान्तस्येति नलोपो न प्राप्नोति । नलोप । अनुस्वार । अनुस्वारश्च न सिध्यति । द्विषन्तपः परन्तपः । मोऽनुस्वारो हलीत्यनु-स्वारो न प्राप्नोति । माभूदेवम् । नश्चाऽपदान्तस्य झलीत्येवम्भविष्यति । यस्तर्हि न झल्परः । वहंलिहो गौः । अभ्रंलिहो वायुः । अनुस्वार । शीभविनकारप्रतिषेधः । शीभावे नकारस्य प्रतिषेधो वक्तव्यः । त्रपुणी जतुनी तुम्बुरुणी । सनुम्कस्य शीभावः प्राप्नोति । नैष दोषः । निर्दिश्यमानस्यादेशा भवन्तीत्येवं न भविष्यति ॥

॥ कै॰ ॥ न हि द्वयोर्मकारतकारयोः पदान्तत्वमुपपद्यत इत्याहुः । शीभावेनकारप्रतिषेध इति । शीभावे विधीयमाने नकारस्य स्थानित्वप्रतिषेधो वक्तव्य इत्यर्थः । निर्दिश्यमानस्येति । यथा पादः पदिति पद्भावः पाच्छब्दस्यैव भवति न तदन्तस्य ॥

॥ वि॰ ॥ त्वात्पदान्त इति । यदागमा इत्यस्य तद्ग्राहकेण शब्देनागमस्य ग्रहणमित्यप्यर्थ इति भावः । न हि द्वयोरिति । ननु संयोगान्तलोपे उक्तरीत्याऽस्यैव मस्य पदान्तत्वमितिचेदुक्तमेवैतत् । न तदन्तस्येति । पादन्तस्यानुच्चारणादितिभावः ॥

॥ वि० ॥ श्रुतिसन्निपातीति । उच्चारितमितियावत् । धानाशष्कुलिनी इति । समाहारद्वन्द्वे तद्धितविवक्षायां द्विवचनम् । तत्र पूर्वं ह्रस्व-स्ततो नुमि नास्ति दोष इत्यत आह । नित्यत्वादिति । इदञ्च पदस्य विभज्याऽन्वाख्यानपक्षे बोध्यम् । अनजन्तत्वादिति । ऋच इत्यनेन प्राति-पदिकस्य विशेषणादित्यर्थः । परत्वादिति । यद्यपि कार्यैक्ये यौगपद्यसम्भवेन विरोधाऽभावे परत्वादित्यसङ्गतं तथापि नुमि कृते उभयोरप्यप्राप्त्योभयोः सम्भवसत्त्वे-

॥ कै० ॥ यस्तर्हीति । यो निर्दिश्यते तस्य न प्राप्नोति श्रुतिसन्निपाति यद्रूपमौ इति तन्नकारेण भक्तेनाऽपि तत्त्वतो व्यवहितमित्यर्थः । धानाशष्कुलिनी इति । नित्यत्वात्पूर्वं नुमं मन्यते तत्र कृतेऽनजन्तत्वाद् ह्रस्वाप्राप्तिः । निष्कौशाम्बिनी इति ।

॥ भा० ॥ यस्तर्हि निर्दिश्यते तस्य न प्राप्नोति । कस्मात् । नुमा व्यवहितत्वात् । एवन्तर्हि पूर्वान्तः करिष्यते । पूर्वान्ते नपुंसकोपसर्जनह्रस्वत्वं द्विगुस्वरश्च । यदि पूर्वान्तः क्रियते । नपुंसकोपसर्जनह्रस्वत्वं द्विगु-स्वरश्च न सिध्यति । नपुंसकोपसर्जनह्रस्वत्वम् । आराशस्त्रिणी । धानाशष्कुलिनी । निष्कौशाम्बिनी । निर्वाराणसिनी । द्विगुस्वर । पञ्चारत्निनी दशारत्निनी । नुमि कृते अनजन्तत्वादेते विधयो न प्राप्नुवन्ति । नवा बहिरङ्गलक्षणत्वात् । नवा एष दोषः । किं कारणम् । बहिरङ्गलक्षणत्वात् । बहिरङ्गो नुम् अन्तरङ्गा एते विधयः । असिद्धं बहिरङ्गमन्तरङ्गे । द्विगुस्वरे भूयान् परिहारः । संघातभक्तोऽसौ नोत्सहते अवयव-स्येगन्ततां विहन्तुमिति कृत्वा द्विगुस्वरो भविष्यति । मिदचोऽन्त्यात्परः ॥ ❁ ॥

॥ कै० ॥ नपुंसकह्रस्वत्वमुपसर्जनह्रस्वत्वेन परत्वाद्बाध्यते तदपि नुमि कृते तथैव न प्राप्नोति । नवेति । नित्यादप्यन्तरङ्गो बलीयानिति स्वरह्रस्वौ च विभक्तिनिरपेक्षत्वादन्तरङ्गौ तदत्र निर्दोषत्वात्पूर्वान्तपक्षः स्थितः ॥ ❁ ॥

॥ वि० ॥ नच न भाष्ये काचिदनुपपत्तिः । अत एव भाष्ये नपुंसकोपसर्जनह्रस्वत्वमिति संश्लिष्टमेवोक्तमिति बोध्यम् । तथैवेति । अनजन्तत्वादितिभावः । अन्तरङ्गो बलीयानिति । असिद्धं बहिरङ्गमित्येव समानकालप्राप्तिकबहिरङ्गासिद्धत्वबोधकं पूर्वजातबहिरङ्गासिद्धत्वबोधकञ्चेतिभावः । अत एव भाष्येणाऽविरोधः । अकृतव्यूहपरिभाषा तु नास्त्येवेतिभावः । पञ्चारत्निशब्दे समाहारे द्विगुः । प्रमाणे मात्रचो लुग्वा ॥ ❁ ॥



॥ वि० ॥ एच इग् । विनापीति । वक्ष्यमाणसूत्रप्रत्याख्यानप्रकारेणेतिभावः । एच इति वक्तव्ये एङ इति अनुचितमत आह । एङ इति । प्रश्लिष्टेति । पांशूदकवदित्यर्थः । प्रश्लिष्टावर्णत्वादिनाप्यान्तरतम्यं गृह्यत इतिभावः । ऐचोस्तदप्राप्तौ हेतुमाह । नत्विति । ऐचौ त्वर्द्धौ न स्त एवेतिभावः । सवर्णाकारनिवृत्त्यर्थमित्येतद्विषयभेदेन योज्यत इति बोध्यम् । कर्मघञन्तसमाहारशब्दस्य वर्णशब्देन न बहुव्रीहिर्वर्णैकदेशस्य वर्णत्वाभा-

॥ कै० ॥ एच । किमर्थमिति । विनापि सूत्रेणेष्टसिद्धिरितिप्रश्नः । एङ इति । एङः प्रश्लिष्टावर्णत्वात् प्रश्लिष्टावर्णा-वर्द्धेकारौकारौ प्राप्नुतः । न तु विश्लिष्टावर्णयोरैचोरितिभावः । समाहारवर्णाविति । समाह्रियमाणावयवत्वात् ।

॥ भा० ॥ एच इग्घ्रस्वादेशे । किमर्थमिदमुच्यते । एच इग्वचनं सवर्णाकारनिवृत्त्यर्थम् । एच इग्भवतीत्युच्यते सवर्णनिवृत्त्यर्थमकारनिवृत्त्यर्थं च । सवर्णनिवृत्त्यर्थं तावत् । एङो ह्रस्वादेशशासनेषु अर्द्ध एकारो अर्द्ध ओकारो वा माभूदिति । अकारनिवृत्त्यर्थं च । इमावैचौ समाहारवर्णौ । मात्रावर्णस्य मात्रेवर्णोवर्णयोः । तयोर्ह्रस्वशा-सनेषु कदाचिदवर्णः स्यात् कदाचिदिवर्णोवर्णौ मा कदाचिदवर्णं भूदित्येवमर्थमिदमुच्यते । अस्ति प्रयोजनमे-तत् । किन्तर्हीति । दीर्घप्रसङ्गः । दीर्घास्त्विकः प्राप्नुवन्ति । किं कारणम् । स्थानेऽन्तरतमो भवतीति ॥

॥ कै० ॥ मात्रावर्णस्येति । अष्टादशभेदभिन्नस्यावर्णस्य मात्राऽवयवभेद इति भेदसद्भावात् षष्ठ्या निर्देशः । दीर्घास्त्विति । स्वतन्त्रमिदं निर्वर्त्तकमितिभावः । भाव्यमानस्यापि सवर्णग्रहणं दृश्यते अमूभ्यामित्यादाविति दोषोपन्यासः ॥

॥ वि० ॥ वादत आह । समाह्रियमाणावयवेति । मध्यमपदलोपी समास इति भावः । मात्राऽवर्णस्येति भाष्यस्य मात्राकालावर्णादिसदृश ऐचोरवयव इति तात्पर्यम् । मात्राऽवयव इति । तत्सदृशश्चैतयोरवयव इत्यर्थः । नन्वस्य नियमत्वेन ह्रस्वविध्येकवाक्यतया कथं दीर्घप्राप्तिरत आह । स्वतन्त्रमिति । नियमत्वे-ऽनुवादादिदोषाद्विधित्वमेव न्याय्यमित्यभिमानः । भाव्यमानस्येति । सम्बन्धसामान्ये षष्ठी ॥

॥ वि० ॥ देवेति। देवदत्तेत्येतद्विषयकगुरोरन्वत इत्येतत्प्लुतविधावित्यर्थः। आदिनोदात्तादिस्वरसंग्रहः। नन्वनेन दीर्घे पुनस्तेन लक्षणेन ह्रस्वः स्यादत आह । ह्रस्वस्येति । अपवादस्य प्रवृत्त्या तद्विषये उत्सर्गाप्रवृत्तेरितिभावः । एकवाक्यभावेनैव इति । एकवाक्यभावो नामैच इगित्यस्य ह्रस्वे शेषभावो न तु परस्परवियोगाभावः । अन्वयस्तु वाक्यभेदेनैवेति एतदजानानो नोदयति। यदीति। उक्ताभिप्रायेणैवोत्तरयति । पूर्वं ह्रस्वेति । एवं हि परि-

॥ कै० ॥ ननुचेति । अयं हि वाक्यार्थः। एचो ह्रस्वप्रसङ्गे इगेव ह्रस्व इति । विषयार्थमिति । यत्र ह्रस्वो विधीयते तत्रैवास्योपस्थानं यथा स्यात् । देवदत्तेति प्लुतादिविधावुपस्थानं माभूद् अस्मिंश्चोपस्थिते वाक्यभेदेनैच इको विधीयमाना अन्तरतमा दीर्घा एव प्राप्नुवन्ति ह्रस्वस्य बाधितत्वाद्दीर्घेषु कृतेषु पुनर्ह्रस्वाप्रसङ्गः । निवर्त्तकत्वादिति । एकवाक्यभावेनैच इगेव

॥ भा० ॥ ननु च ह्रस्वादेश इत्युच्यते तेन दीर्घा न भविष्यन्ति । विषयार्थमेतत् स्यात् । एचां ह्रस्वप्रसङ्गे इग्भवतीति । दीर्घप्रसङ्गस्तु निवर्त्तकत्वात् । दीर्घाणां त्विकामप्रसङ्गः । किं कारणम् । निवर्त्तकत्वात् । नानेनेको निर्वर्त्यन्ते । किन्तर्हि । अनिको निवर्त्यन्ते। सिद्धा ह्यत्र ह्रस्वा इकश्चानिकश्च । तत्रानेनानिको निवर्त्यन्ते । सवर्णनिवृत्त्यर्थेन तावन्नार्थः । सिद्धमेङः सस्थानत्वात् । सिद्धमेतत् । कथम् । एङः सस्थानत्वाद् इकारोकारौ भविष्यतः ॥

॥ कै० ॥ ह्रस्वो भवति नान्य इत्येवमनिको व्यावर्त्यन्ते । यदि तर्ह्येकवाक्यता एज्व्यतिरेकेणान्यस्य ह्रस्वो न प्राप्नोति । नैष दोषः । पूर्वं ह्रस्वश्रुत्याऽच उपस्थानाद्ध्रस्वत्वं क्रियते तत्रैचोऽप्यन्तर्भावाद्ध्रस्वे क्रियमाणे एच इगित्यस्योपस्थानम् । सिद्धमेङ इति । एकारस्य तालव्यस्य तालव्य इकार ओकारस्यौष्ठ्यस्योकार ओष्ठ्यो भविष्यतीत्यर्थः ॥

॥ वि० ॥ भाषादयस्याप्यनुग्रहो भवतीति भावः । एकारस्येति। यत्तु कण्ठताल्वादिस्थानत्वेऽपि विप्रतिषेधेन पूर्वावयवो न स्वान्तरतमादेशप्रयोजकः किन्तु परावयव एवेति न दोष इति । तन्न । लक्ष्यगतपरत्वमादाय विप्रतिषेधशास्त्राऽप्रवृत्तेः स्थानिवत्प्रकरणभाष्ये स्पष्टत्वात् । किन्त्वन्तरङ्गत्वेन पूर्वावयव एव तथेतिबोध्यम् ॥



॥ वि० ॥ भाष्ये अर्द्ध एकार ओकारो वा न भविष्यतीति । तयोरसत्त्वादितिभावः। इतरस्तु सस्थानत्वाभावादितिहेतुरनेनोक्त इति मत्वा नोदयति । ननु चेति । सस्थानतराविति । कण्ठतालुस्थानमिति पक्षेऽपि तालुस्थानसाम्यसत्त्वमितिबोधयितुन्तरनिर्देशः । स्वाशयम्प्रकटयति ।

॥ कै० ॥ ऐचोश्चेति । ऐकारः कण्ठ्यतालव्य ओकारः कण्ठ्योष्ठ्यः । नच तथाविधो ह्रस्वोऽस्तीति अवयवान्तरतमेन

॥ भा० ॥ अर्द्ध एकारोऽर्द्ध ओकारो वा न भविष्यति । ननु च एङः सस्थानतरावर्द्धैकारार्द्धौकारौ । न तौ स्तः । यदि हि तौ स्यातां तावेवायमुपदिशेत् । ननु च भोश्छन्दोगानां सात्यमुग्रिराणायनीया अर्द्धमेकारमर्द्धमोकारञ्चाधीयते । सुजाते ए अश्वसूनृते अध्वर्यो ओ अद्रिभिः सुतं शुक्रन्ते ए अन्यद्यजन्ते ए अन्यदिति । पार्षदकृतिरेषा तत्रभवताम् । नैव लोके नाऽन्यस्मिन्वेदे अर्द्ध एकारः अर्द्ध ओकारो वास्ति । अकारनिवृत्त्यर्थेनापि नार्थः । ऐचोश्चोत्तरभूयस्त्वात् । ऐचोश्चोत्तरभूयस्त्वादवर्णो न भविष्यति । भूयसी मात्रेवर्णोवर्णयोरल्पीयस्यवर्णस्य । भूयस एव ग्रहणानि भविष्यन्ति । तद्यथा । ब्राह्मणग्राम आनीयतामित्युच्यत तत्र चावरतः पञ्चकारुकी भवति ॥ ॥

॥ कै० ॥ भाव्यं भूयसा चाऽवयवेन व्यपदेशो भवति । तदात्मक इव हि समुदायो लक्ष्यत इतीदुतावेव भविष्यतः । ब्राह्मणग्राम इति । ब्राह्मणानां वास्तव्यत्वे उदाहरणं नतु स्वामित्वे ॥ ॥

॥ वि० ॥ न तौ स्त इति । तावेवेति । प्रत्याहारसूत्र इतिभावः । एतच्च एओङ्सूत्रे निरूपितम् । पार्षदेति । तत्र भवतां या पर्षत्सभा तत्र भवेत्यर्थः । भाष्यप्रयोगादेव गमकत्वात्साधुत्वं बोध्यम् । भूयस एवेति । भूयोंऽशस्याऽऽन्तरतम्यप्रतियोगितया ग्रहणमित्यर्थः । ब्राह्मणस्वामिकग्रामस्य भूयसा व्यपदेशे दृष्टान्तत्वाऽसङ्गतेराह । वास्तव्यत्वे इति । वास्तव्यः कर्त्तरि तव्यान्तः । कुलालकर्मारवर्द्धकिनापितरजकाः पञ्चकारुकी ॥ ॥

॥ वि० ॥ षष्ठी स्थाने । युक्तिरिति । षष्ठीतिस्त्रीलिङ्गविशेषणत्वादिति भावः । निपातनादिति । तृतीयान्तस्य समासे तृतीयाया लुक्यस्यैत्वमित्यर्थः । तृतीयायाः स्थाने एतद्विधाने तु अन्तरङ्गबाधे मानाभावादिनादेशोऽन्त्यस्य स्यात् लुग्बाधे मानाभावाच्च वृद्ध्यापत्तिश्च । अत एवैत्वं नोक्तमिति बोध्यम् । अत्र स्थानसामीप्यादयः षष्ठ्यर्थसम्बन्धनिरूपका न तु षष्ठ्यर्था इति न मतुप्सूत्रस्थभाष्यविरोधः । अत एवात्र भगवता सप्तम्यन्तेन तृतीयान्तेन वा समासो दर्शितः । न तु समानाधिकरणबहुव्रीहिः । तद्ध्वनयतोक्तं स्थाननिमित्तसम्बन्धेत्यर्थ इति । ननु आदेशविधौ स्थानशब्दाभावेन कथं स्थाननिमित्तः

॥ कै० ॥ षष्ठी । किमिदमिति । समासे विभक्तिश्रवणाप्रसङ्गः । असमासेऽपि युक्तिरिति प्राप्नोति न तु योगेतिप्रश्नः । स्थाने योगोऽस्या इति । स्थाननिमित्तसम्बन्धेत्यर्थः । तृतीयाया वेति । निपातनादिति योज्यम् । यथा देवदत्तस्य यज्ञदत्त इति पुत्रत्वादिद्वारकसम्बन्धोऽवगम्यते । एवमस्तेर्भूरित्यत्रापि अस्याम्परिभाषायां सत्यां स्थाननिमित्तः सम्बन्धोऽवसीयते । स्थानमर्थ इति

॥ भा० ॥ षष्ठी स्थानेयोगा । किमिदं स्थानेयोगेति । स्थाने योगोऽस्याः सेयं स्थानेयोगा । सप्तम्यलोपो निपातनात् तृतीयाया वा एत्वम् । स्थानेन योगोऽस्याः सेयं स्थानेयोगेति ॥

॥ कै० ॥ केचिदाहुः । तिष्ठन्त्यस्मिन् शब्दा इति स्थानम् । अर्थे च शब्दास्तिष्ठन्ति तेनास्तेरर्थे भूरित्यर्थः । अन्ये त्वाहुः । भ्रस्जो रोपधयोरन्यतरस्यामित्यादौ रोपधादीनामानर्थक्याद्भावसाधनः प्रसङ्गवाची स्थानशब्द आश्रीयते । तेनास्तेः प्रसङ्गे अस्तेः प्राप्तौ भूः प्रयुज्यते इत्यर्थः सम्पद्यते । स्वाभाविकोऽस्तेरप्रयोग आर्द्धधातुके भूशब्दस्य च प्रयोगोऽनेन प्रकारेणान्वाख्यायते ॥

॥ वि० ॥ सम्बन्धोऽत आह । यथेति । तथाच देवदत्तस्य यज्ञदत्त इत्युक्ते किमित्याकाङ्क्षावशात्पुत्र इत्यध्याहारो यथा तथा प्रदेशेषु स्थानपदाध्याहारेण वाक्यैकदेशन्यायेन वा बोध इति भावः । अर्थे चेति । वाचकत्वसम्बन्धेनेतिभावः । अस्तेः प्रसङ्ग इत्यस्य व्याख्याऽस्तेः प्राप्ताविति । प्रयोग इति । स्वाभाविक इत्यनुपद्यते शब्दनित्यत्वभङ्गापत्त्या स्थानशब्दो निवृत्तिवाची नोपपद्यते इति भावः । रम्विधौ रोपधघटितस्यार्थे रम्घटित इत्यर्थे न चतिरित्यत्रार्थः ॥



॥ वि० ॥ आरब्धे चेति । तत्रातिप्रसङ्गवारणाय व्याख्यानत इत्येतदाश्रयणे तयैव सिद्धौ परिभाषेयं व्यर्थेति भावः । षष्ठीदण्डकपाठो ग्रन्थविशेषः । भाष्ये षष्ठ्यर्था इति । षष्ठीप्रयोजकास्तदर्थान्वयिनः शब्दाः शतमित्यर्थः । यद्वा षष्ठ्यर्थानां शतत्वे तेषां शतत्वमर्थसिद्धं बोध्यम् । एकशतमिति निर्णयेनाभिधाय पुनः सन्दिग्धाभिधानमयुक्तमत आह । शब्द इति । वाशब्दो वाक्यालङ्कारे । भाष्ये प्राप्नुवन्तीति । तेषां सर्वेषां

॥ कै० ॥ किमर्थमिति । विनापि सूत्रेणेष्टं सिध्यति आरब्धेऽप्यतिप्रसङ्ग इति प्रश्नः । एकशतमिति । षष्ठीदण्डकपाठाश्रयेणैतदुक्तम् । यावन्तो वेति । शब्दे यावतां सम्भव इत्यर्थः । अवयवेति । नियमेन सम्बन्धान्तराणां निवर्त्तनादिति भावः । उपधामात्रस्य

॥ भा० ॥ किमर्थं पुनरिदमुच्यते । षष्ठीस्थानेयोगवचनं नियमार्थम् । नियमार्थोऽयमारम्भः । एकशतं षष्ठ्यर्था यावन्तो वा सन्ति ते सर्वे षष्ठ्यामुच्चारितायां प्राप्नुवन्ति । इष्यते च व्याकरणे या षष्ठी सा स्थानेयोगैव स्यादिति तच्चान्तरेण यत्नं न सिध्यतीति षष्ठ्याः स्थानेयोगवचनं नियमार्थम् । एवमर्थमिदमुच्यते । अस्ति प्रयोजनमेतत् । किं तर्हीति । अवयवषष्ठ्यादिष्वतिप्रसङ्गः शासो गोह इति । अवयवषष्ठ्यादयस्तु न सिध्यन्ति । तत्र को दोषः । शास इदङ्हलोरिति । शासेश्चान्त्यस्य स्यादुपधामात्रस्य च । ऊदुपधाया गोह इति गोहेश्चान्त्यस्य स्यादुपधामात्रस्य च । अवयवषष्ठ्यादीनां चाऽप्राप्तिर्योगस्याऽसन्दिग्धत्वात् । अवयवषष्ठ्यादीनां च नियमस्याप्राप्तिः । किं कारणम् । योगस्यासन्दिग्धत्वात् ॥

॥ कै० ॥ चेति । शासिना सम्बन्धाभावात् पचादिसम्बन्धिनोऽपीत्यर्थः । तत्र ह्यनिदितामित्यत उपधाया इत्यनुवर्त्तते । असन्दिग्धत्वादिति । अनियमप्रसङ्गे हि नियमः क्रियते न तु प्रागेवावस्थिते नियमे ॥

॥ वि० ॥ बोधः प्राप्नोतीत्यर्थः । नियमेन । प्रकृतसूत्रेण । शासिनेति । तस्य स्थानषष्ठीत्वेनोपधाविशेषणे सामर्थ्याभावादिति भावः । भाष्येऽवयवषष्ठ्यादीनामिति । अवयवषष्ठ्यादीनामिष्टानां निवृत्तये नियमाप्राप्तिरिति वार्त्तिकार्थः ॥

॥ वि० ॥ दक्षिणो यस्येति । दक्षिणो हस्तो यस्य सन्निहित इत्यर्थः । तिर्यक्पथः । अन्वृजुमार्ग इत्यर्थः । पूर्वपश्चिमाऽन्यतरदिशि गच्छतो दक्षिणोत्तरमार्ग इति यावत् । विशिष्ट इति । निर्णयविशिष्ट इत्यर्थः । अयमेव भाष्येऽव्यक्तशब्दस्यार्थः । अत्र पक्षे योगशब्दः

॥ कै० ॥ हस्तदक्षिण इति । हस्तो दक्षिणो यस्येति बहुव्रीहिः । भाष्यकारवचनात्सर्वनाम्नोऽपि परनिपातः । अयोगेति । योग-

॥ भा० ॥ सन्देहे नियमः । नचावयवषष्ठ्यादिषु सन्देहः । किं वक्तव्यमेतत् । नहि । कथमनुच्यमानं गंस्यते । लौकिकोऽयं दृष्टान्तः । तद्यथा । लोके कश्चित् कञ्चित् पृच्छति । ग्रामान्तरं गमिष्यामि पन्थानं मे भवानुपदिशत्विति । स तस्मायाचष्टे अमुष्मिन्नवकाशे हस्तदक्षिणो ग्रहीतव्यः । अमुष्मिन्नवकाशे हस्तवाम इति । यस्तत्र तिर्यक्पथो भवति न तस्मिन् सन्देह इति कृत्वा नासावुपदिश्यते । एवमिहापि सन्देहे नियमः । नचाऽवयवषष्ठ्यादिषु सन्देहः । अथवा स्थाने अयोगा स्थानेयोगा । किमिदमयोगेति । अव्यक्तयोगा अयोगा । अथवा योगवती योगा । का पुनर्योगवती । यस्या बहवो योगाः । कुत एतत् । भूम्नि हि मतुप् भवति । विशिष्टा वा षष्ठी स्थानेयोगा । अथवा किञ्चिल्लिङ्गमासज्य वक्ष्यामि इत्थंलिङ्गा षष्ठी स्थानेयोगा भवतीति न च तल्लिङ्गमवयवषष्ठ्यादिषु करिष्यते । यद्येवं शास इदङ्हलोः । शा हौ शासिग्रहणं कर्त्तव्यं स्थानेयोगार्थं लिङ्गमासङ्क्ष्यामीति । न कर्त्तव्यम् । यदेवाऽदः पुरस्तादवयवषष्ठ्यर्थं प्रकृतम् । एतदुत्तरत्राऽनुवृत्तं सत् स्थानेयोगार्थं भविष्यति ॥

॥ कै० ॥ मन्तरेण षष्ठ्या एवाऽभावादविशिष्टो योगो यस्या नास्तीति सामर्थ्यात्प्रतीयते । योगवतीति । षष्ठ्या अवश्यम्भावी योग इति भूम्नि सामर्थ्याद् मत्वर्थीयोऽकारः । किञ्चिल्लिङ्गमिति । कलादिकम् ॥

॥ वि० ॥ कर्मव्युत्पत्त्या सम्बन्धिपरः । योगवतीतिपक्षेऽप्येवमेव । स्थानरूपसम्बन्धिनियमार्थत्वादस्य । विशिष्टा वेति वार्त्तिकं व्याचष्टे । अथवा किञ्चिदिति ॥



॥ वि० ॥ भाष्ये कश्चिदेकदेशस्थ इति । इदं च यथोद्देशपक्षे स्पष्टमेव कार्यकालपक्षेऽपि स्वविषयसर्वशास्त्रैकवाक्यत्वादेवमुक्तिः । पठित-देशस्थेनैव तत्र तत्र तद्बुद्धिजननात् । दीपो यथा प्रभाद्वारा सर्वगृहप्रकाशक एवमेतत्स्वबुद्धिजननद्वारा सर्वशास्त्रोपकारकं न तु तत्प-क्षेऽप्यचेतनस्य शास्त्रस्य स्वदेशं विहाय तद्देशे गमनमस्तीतिबोध्यम् । पठितदेशस्थत्वमेव सर्वथा बोधयितुमेकदेशस्थ इत्युक्तम् । तस्यानिर्द्देशार्थ इति । अधिक्रियमाणस्यानुच्चारणार्थ इत्यर्थः । यदेवाद इति । शब्दाधिकार आश्रयिष्यत इत्यर्थः । अनुमानमिति । उच्चारित एव प्रत्यायक इत्यणुदित्सूत्र-

॥ कै० ॥ अधिकारो नामेति । पारार्थ्यसाम्यात्परिभाषाऽप्यधिकार इत्युच्यते । कश्चिदिति । परिभाषारूप इत्यर्थः ।

॥ भा० ॥ कथम् । अधिकारो नाम त्रिप्रकारः । कश्चिदेकदेशस्थः सर्वं शास्त्रमभिज्वलयति । यथा प्रदीपः सुप्रज्वलितः सर्वं वेश्माऽभिज्वलयति । अपरोऽधिकारो यथा रज्ज्वा अयसा वा बद्धं काष्ठमनुकृष्यते तद्व-दनुकृष्यते चकारेण । अपरोऽधिकारः प्रतियोगं तस्यानिर्द्देशार्थं इति योगे योगे उपतिष्ठते । तद्यदेष पक्षः अधिकारः प्रतियोगं तस्याऽनिर्द्देशार्थ इति । तदा हि यदेवाऽदः पुरस्तादवयवषष्ठ्यर्थम् एतदुत्तरत्राऽनुवृत्तं सत् स्थानेयोगार्थं भविष्यति । सम्प्रत्ययमात्रमेतद्भवति । नह्यनुच्चार्य शब्दं लिङ्गं शक्यमासङ्क्तुम् ॥

॥ कै० ॥ चकारेणेति । यथा सहस्य स इत्यविशेषेण ग्रन्थाऽन्ताऽधिके चेत्यादावनुकृष्यते । सम्प्रत्ययमात्रमिति । स्वरि-तत्वप्रतिज्ञानादुत्तरेषु योगेषु तस्य शब्दस्याऽनुमानं भवतु लिङ्गासङ्गस्त्वनुच्चारितस्य कथं स्यादित्यर्थः ॥

॥ वि० ॥ स्वभाष्यविरुद्धमिदम् । तस्माद्दोषुरनुमानपूर्वकमुच्चारणान्न त्वाचार्यस्येत्यर्थः । शास्त्रप्रणयनकालिकतत्कृतलिङ्गासङ्ग एवैतच्छास्त्रप्रवृत्त्युपयोगी नान्यकृतोऽतिप्रसङ्गात् । पाणिनिना त्वनुच्चारणाच्छास्त्रप्रणयनकाले लिङ्गाऽऽसङ्गः कर्तुमशक्य इति भावः । भाष्ये सम्प्रत्ययमात्रमिति । स्वरितत्वबलात्स एवोत्तरत्रेतिज्ञानमात्रमाचार्यकृतमित्यर्थः । आसङ्क्तुमित्यस्याऽऽचार्येणेतिशेषः ॥

॥ वि० ॥ यदि नियम इति । स्थाननिमित्तसम्बन्धार्थकत्वनियम इत्यर्थः । अनेकं विशेष्यम् । प्रसङ्गरूपमवयवरूपञ्च तत्राऽऽयं श्रा हावि-त्यादौ अन्त्यन्तु भाष्ये एव वक्ष्यति । तत्र न सिध्यतीति । अवयवादिनिमित्तसम्बन्धार्थकत्वञ्च सिध्यतीत्यर्थः । अणापीति । हल इति सूत्रे तृतीये दीर्घ्याहत्यर्थमणुग्रहणस्यापि सम्बन्धादितिभावः । तत्राऽलोन्त्यस्येत्येकवाक्यतया अङ्गावयवाद्धलः परं यदङ्गान्त्यावयवाणुरूपं सम्प्रसारणं तस्य दीर्घ इति सूत्रार्थः ।

॥ कै० ॥ एवं तर्हीति । आदेशे लिङ्गाऽऽसङ्गात्तस्य च षष्ठ्यभावात्तत्सम्बन्धिनः स्थानिनो लिङ्गकार्यं फलिष्यतीत्यर्थः ।

॥ भा० ॥ एवं तर्ह्यादेशे तल्लिङ्गं करिष्यते यत्प्रकृतिमाक्रन्त्स्यति । यदि नियमः करिष्यते । यत्रैका षष्ठी अनेकञ्च विशेष्यं तत्र न सिध्यति । अङ्गस्य हलः । अणः सम्प्रसारणस्येति । हलपि विशेष्योऽणपि विशेष्यः सम्प्रसारणमपि विशेष्यम् । असति पुनर्नियमे कामचारः । एकया षष्ठ्या अनेकं विशेषयितुम् । तद्यथा । देवदत्तस्य पुत्रः पाणिः कम्बल इति । तस्मान्नाऽर्थो नियमेन । ननुचोक्तम् एकशतं षष्ठ्यर्थाः । यावन्तो वा सन्ति ते सर्वे षष्ठ्यामुच्चारितायां प्राप्नुवन्तीति । नैष दोषः । यद्यपि लोके बहवोऽभिसम्बन्धा आर्था यौनाः मौखाः स्रौवाश्चेति । शब्दस्य तु शब्देन कोऽन्योऽभिसम्बन्धो भवितुमर्हति अन्यदतः स्थानात् । शब्दस्याऽपि शब्देनानन्तरादयोऽभिसम्बन्धाः ॥

॥ कै० ॥ यदीति । अङ्गस्येति स्थानषष्ठीत्वाद्विशेषणविशेष्यभावो न प्रकल्प्यत इत्यर्थः । देवदत्तस्येति । सम्बन्धसा-मान्यमुपक्रम्यते पश्चात्पदान्तरसन्निधानाद्विशेषावसायः ।

॥ वि० ॥ तत्राऽङ्गस्येत्यस्य श्रा हावित्यादौ स्थानषष्ठीत्वे हलादिनिरूपितमवयवषष्ठीत्वं न सिध्येदित्यर्थः । स्थानेति । तच्चाद्गुल इत्यादिनाऽवयववाचकेन विशेषणविशेष्यभावो न स्यादित्यर्थः । विशेषावसाय इति । तत्तदन्वय्यर्थकपदकल्पनयेतिभावः । आर्थाः । स्वस्वामित्वादयः । यौनाः पितृत्वादयः । मौखो गुरुशिष्यभावः । स्रौवाः । ऋत्विक्त्वादयः ॥



॥ वि० ॥ स्थाने अनन्तरे इत्यादि । स्थानादिरूपसम्बन्धिसन्देह इत्यर्थः । आनन्तर्यमव्यवधानम् । सामीप्यं साधारणम् । अन्तरङ्गत्वादिति । स्थानशब्दोऽर्थवाची प्रसङ्गवाची वोभयथाप्यन्तरङ्गत्वं स्थानिवदादेश इतिज्ञापकमप्यत्र बोध्यम् । निर्दिश्यमानमिति । उच्चार्यमाणमित्यर्थः । निर्दिश्यमानं षष्ठ्यन्तमेवेत्यन्वयः । निर्दिश्यमानपदस्य चाध्याहार इतिभावः । न बाध्यते इति । किन्तु स्वव्यवस्थापकत्वेनाऽऽश्रीयत इत्यर्थः । एवमनेकाल्सूत्र

॥ कै० ॥ स्थान इति । अन्तरङ्गत्वाल्लक्ष्यापेक्षणाद्वेतिभावः । यतः षष्ठीति । तेन पादः पदित्यस्याऽयमर्थः । पादन्तस्याऽङ्गस्य योऽवयवः पाच्छब्दः सूत्रे षष्ठ्या निर्दिष्टस्तस्य शब्दस्य पच्छब्द आदेशो भवति न तु प्रतीयमानस्य पादन्तस्य । अस्यैव सूत्रस्य निर्दिश्यमानस्याऽऽदेशा

॥ भा० ॥ अस्तेर्भूर्भवतीतिसन्देहः स्थाने अनन्तरे समीपे इति । सन्देहमात्रमेतद्भवति । सर्वसन्देहेषु चेदमुपतिष्ठते । व्याख्यानतो विशेषप्रतिपत्तिर्नहि सन्देहादलक्षणमिति । स्थान इति व्याख्यास्यामः । न तर्हीदानीमयं योगो वक्तव्यः । वक्तव्यश्च । किं प्रयोजनम् । षष्ठ्यन्तं स्थानेन यथा युज्येत यतः षष्ठ्युच्चारिता । किं कृतं भवति । निर्दिश्यमानस्याऽऽदेशा भवन्तीत्येषा परिभाषा न कर्त्तव्या भवति । षष्ठी स्थानेयोगा ॥ ❁ ॥ स्थानेऽन्तरतमः । किमुदाहरणम् ॥

॥ कै० ॥ भवन्तीत्ययमर्थः । षष्ठीति षष्ठ्यन्तं गृह्यते तेन षष्ठ्यन्तमेव निर्दिश्यमानं स्थानेन युज्यते न तु प्रतीयमानमित्यर्थः । अलोऽन्त्यस्यादेः परस्येत्येतत्तु वचनसामर्थ्यान्न बाध्यते ॥ ❁ ॥ स्थाने ; किमुदाहरणमिति । क्वचिल्लक्षणान्तरेणेष्टं सिद्धमिति प्रश्नः ॥

॥ वि० ॥ सर्वोऽप्येतत्परिभाषाबोधित एव गृह्यते । पद्दन्न इत्यादावपि आदेशः पाणिनिकृतस्थान्युच्चारणाऽनुमानाद्व्यवस्थार्थत्वाद्वा न दोषः । यत्त्वलोऽन्त्यस्याऽऽदेः परस्येत्यमू एतद्बाधकाविति तत्तु उदस्था इति पादः पदितिसूत्रस्थभाष्यविरुद्धम् । व्यवस्थापकत्वे सम्भवति बाधकत्वकल्पनानौचित्यश्चस्तञ्च ॥ ❁ ॥ स्थानेऽन्तर । इति प्रश्न इति । एवञ्च परोक्तोदाहरणदूषणायाऽयम्प्रश्नो नतूदाहरणासम्भवकृत इतिभावः ॥

॥ वि० ॥ उदाहरणप्रश्ने इको यणचीत्यस्योल्लेखो व्यर्थोऽत आह । अस्य सूत्रस्येति । सामान्यतो ज्ञातस्य विशेषाकारेण यत्र प्रतिपत्तिस्तदुदाहरणमितिभावः । षट्षष्टिरिति । ऌवर्णस्य दीर्घाऽभावात् दीर्घप्लुतऋकारस्य प्लुतऌकारस्य चाऽनुनासिकस्याऽदर्शनादिदश्चिन्त्यम् । सप्तेति । रेफस्य सानुनासिकस्याऽभावादितिभावः । इदश्चिन्त्यम् । अणुदित्सूत्रेऽणग्रहणसामर्थ्येन यणंशे गुणभेदकत्वस्यैव न्याय्यत्वेन विधीयमानत्वेन च तेषामग्रहणात् । तत्प्रत्याख्यानेऽपि आरम्भप्रत्याख्यानयोः फलाऽभेदाय भेदकत्वस्यैवाऽऽश्रयणेन तेषामग्रहणम् । अत एव मतोर्मस्य नानुनासिको वकार इति । संख्यातानुदेशः ।

॥ कै० ॥ इको यणचि दध्यत्रेति । अस्य सूत्रस्य लक्षणमप्युदाहरणं प्रयोगोऽपीत्युभयोपन्यासः । इको ह्रस्वादिभेदात् षट्षष्टिर्यणस्तु सप्तेति वैषम्यात्संख्याताऽनुदेशो न सिध्यतीत्यर्थः ।

॥ भा० ॥ इको यणचि दध्यत्र मध्वत्र । तालुस्थानस्य तालुस्थानः । ओष्ठस्थानस्य ओष्ठस्थानो यथा स्यादिति । नैतदस्ति । संख्यातानुदेशेनाप्येतत्सिद्धम् ॥

॥ कै० ॥ नैतदस्तीति । प्रत्याहारपाठे शब्दतस्साम्यमस्तीतिभावः । घस्लादेश इत्यादौ लकारोपि ऌकारस्यादेशो दृश्यत इति ऌकारस्य स्थानित्वाऽभावो नाशङ्कनीयः ॥

॥ वि० ॥ क्रमेणान्वयः । शब्दत इति । अयं भावः । यथा स्यतासी ऌलुटोरित्यत्राऽर्थवैषम्येऽपि बोधकशब्दसाम्याद् यथासंख्यं तथा इक्पदयण्पदाभ्यामनेकोपस्थितावपि बोधकशब्दतः साम्यमस्त्येवेति न दोष इति । नच ऋकारे लकारस्य ऌकारे रेफस्य चाऽऽपत्तिः । ऋदिल्लृदितोर्भेदेन निर्देशात् सावर्ण्यानित्यत्वेनाऽत्र ऋऌभ्यान्न ऋकारऌकारयोर्ग्रहणमिति नोक्तदोष इति तदाशयात् । ननु ऌकारोदाहरणाभावात्कथं यथासंख्यमत आह । घस्लेति । वस्तुतः प्रतिपत्तिकालिकं संख्यासाम्यमेव यथासंख्यप्रवृत्तिनियामकं न तु लक्ष्यसंस्कारकालिकमपीति प्रत्याहाराह्निके भाष्ये स्पष्टत्वान्नायं दोष इति बोध्यम् ॥



॥ वि० ॥ अनुनासिकस्थाने सानुनासिकार्थमपि न तत्रैतदुपयोगः । विधेयेऽणि गुणभेदकपक्षस्यैव सत्त्वेन तत्र तदप्राप्तेः । आदेशानां तत्थानापन्नत्वेन न तदर्थत्वं किन्तु स्वभावत एव शब्दार्थसम्बन्धानां नित्यत्वादित्याशयेन भाष्ये एकार्थ इति । तावन्मात्रोक्तौ तस्तस्मपि प्राप्नोति थसस्तामपीत्यत आह । सादृश्येति । उत्तमे प्रत्यक्षरूपोऽहङ्कारास्पदचेतनधर्म्मो मध्यमे अहङ्कारानास्पदचेतनधर्म्मः पराक्त्वं प्रथमे त्वनियतम् । भाष्ये अनुवर्त्तमान

॥ कै० ॥ एकार्थस्येति । सादृश्यहेतुधर्म्मोपलक्षणमेतत् । तेन प्रत्यक्षादयोऽपि धर्म्मा गृह्यन्ते । यत्रानेकमिति । स्थानग्रहणेऽनुवर्त्तमाने वाक्यभेदः क्रियते ।· स्थानेऽन्तरतमो भवति यत्र चाऽनेकमान्तर्य्यमस्ति तत्र स्थानकृतमेवाऽन्तर्य्यमाश्रीयत इति । वाक्यभेदस्य च

॥ भा० ॥ इदन्तर्हि तस्थस्थमिपां तान्तन्ताम इति । एकार्थस्यैकार्थः । द्व्यर्थस्य द्व्यर्थः । बह्वर्थस्य बह्वर्थो यथा स्यादिति । ननु च एतदपि संख्यातानुदेशेनैव सिद्धम् । इदन्तर्ह्यकः सवर्णे दीर्घ इति । दण्डाग्रम् । क्षुपाग्रम् । दधीन्द्रो मधूष्णः । कण्ठस्थानयोः कण्ठस्थानस्तालुस्थानयोस्तालुस्थान ओष्ठस्थानयोरोष्ठस्थानो यथा स्यात् । अथ स्थान इति वर्त्तमाने पुनः स्थानग्रहणं किमर्थम् । यत्राऽनेकमान्तर्यं तत्र स्थानत एवान्तर्यं बलीयो यथा स्यात् । किं पुनस्तत् । चेता स्तोता । प्रमाणतोऽकारो गुणः प्राप्नोति । स्थानत एकारौकारौ । पुनः स्थानग्रहणादेकारौकारौ भवतः ॥

॥ कै० ॥ तमव्ग्रहणमेव लिङ्गम् । स्थानकृत एव हि सादृश्ये गृह्यमाणे सादृश्यान्तरपरित्यागात्तमग्रहणमनर्थकमेव स्यात् ॥

॥ वि० ॥ इति । एकदेशे स्वरितत्वप्रतिज्ञानादिति भावः । वाक्यभेद इति । अनुवृत्तप्रसङ्गवाचिस्थानशब्देनैकं वाक्यं तात्वादिवाचीत्यस्थानशब्देनापरम् । अत्र च स्थाने इति तृतीयार्थे सप्तमीतिभावः । तमग्रहणमनर्थकमिति । प्रसङ्गे स्थानकृतान्तर्य्यवानित्यर्थेनैव सिद्धे स्थानेग्रहणं न वाक्यभेदे मानमितीदमुक्तं तथैकवाक्यतायान्तु स्थानकृतान्तऽर्य्याऽभावे तद्वसतीत्यादावव्यवस्थैव स्यात् वाक्यभेदे तु सादृश्यान्तरमादाय तत्र व्यवस्थेति भावः ॥

॥ वि० ॥ ऊष्मत्वेति । सदृशशब्दप्रयोगोपपत्तये धर्म्मपर ऊष्मशब्द इतिभावः । नन्वनन्यथासिद्धोदाहरणरूपप्रयोजनोक्तेः पुनः प्रश्नानुपपत्तिरत आह । यदीति । सूत्राभावे किमनिष्टमिति प्रश्नतात्पर्य्यमिति भावः । बहव इति । एवञ्चैकत्वनिर्द्देशादित्यनुपपन्नमिति भावः ।

॥ कै० ॥ सोष्मण इति । ऊष्मत्वगुणयुक्तस्येत्यर्थः । तमग्रहणादिति । ईषत्सदृशेऽपि लोके सदृशव्यवहारदर्शनादिह तमब्ग्रहणं कृतम् । किमर्थमिति । यदीदं नोच्येत तदा किं स्यादितिप्रश्नः । स्थानिन इति । यद्यपि अक इत्यनेन

॥ भा० ॥ अथ तमग्रहणं किमर्थम् । झयो होऽन्यतरस्यामित्यत्र सोष्मणः सोष्माण इति द्वितीयाः प्रसक्ताः । नादवतो नादवन्त इति तृतीयाः प्रसक्ताः । तमग्रहणाद्ये सोष्माणो नादवन्तश्च ते भवन्ति चतुर्थाः । वाग्घसति त्रिष्टुब्भसति । किमर्थं पुनरिदमुच्यते । स्थानिन एकत्वनिर्द्देशादनेकादेशनिर्द्देशाच्च सर्वप्रसङ्गस्तस्मात् स्थानेऽन्तरतमवचनन्नियमार्थम् । स्थान्येकत्वेन निर्द्दिश्यते अक इति अनेकश्च पुनरादेशः प्रतिनिर्द्दिश्यते दीर्घ इति । स्थानिन एकत्वनिर्द्देशादनेकादेशनिर्द्देशाच्च सर्व्वप्रसङ्गः । सर्वे सर्वत्र प्राप्नुवन्ति इष्यते चान्तरतमा एव स्युरिति तच्चान्तरेण यत्नन्नसिध्यति तस्मात् स्थानेऽन्तरतमवचनन्नियमार्थम् । एवमर्थमिदमुच्यते ॥

॥ कै० ॥ स्थानिनो बहव उपात्तास्तथापि प्रयोगे एकैकः स्थानी तस्य पर्य्यायेण बहवो दीर्घा आदेशाः प्राप्नुवन्तीत्यर्थः ॥

॥ वि० ॥ प्रयोग इति । अक इत्येतद्बोध्यः स्थानी प्रयोगे एकत्वविशिष्ट उच्चार्य्यत इति भाष्याऽक्षरार्थः । यद्यपि पूर्वपरयोरित्युक्तेरेकः स्थानीत्ययुक्तं तथापि तत्समुदायाऽभिप्रायेणेदम् । युगपदेककर्तृकं सर्वोच्चारणमशक्यमत आह । पर्य्यायेणेति ॥



॥ वि० ॥ येन प्रकारेण संहितापाठलक्षणेनेति पाठः । अनेन संहितापाठ एव पूर्वं स्थित इत्युक्तम् । अस्तु तर्हि विच्छिद्यपाठोऽत आह । पदप्रकृतिरिति । षष्ठीतत्पुरुषः । बहुव्रीहिरित्यन्ये । तत्प्रकृतग्रन्थाननुगुणम् । भाष्ये सा किं प्रकृतित इति । सेति इयमित्यस्य प्रतिनिर्द्देशः । इदंशब्दोऽपि यच्छब्दार्थः क्वचित् । केचित्तु येत्यर्थे यथापुनरिति अव्ययसमुदायं वदन्ति । अन्तरतमशब्दार्थस्य विशेषणत्वेन या प्रतिपत्तिः सा किं

॥ कै० ॥ यथा पुनरिति । येन प्रकारेण संहितापाठलक्षणेनेत्यर्थः । प्रतिसूत्रन्तु विच्छिद्यपाठे संशयाभावः । पदप्रकृतिः संहितेति संहिताया एव नित्यत्वात्ततः पदापोद्धारे क्रियमाणेऽन्तरतमशब्दः किं सप्तम्यन्तोऽपोद्ध्रियते अथ प्रथमान्त इति प्रश्नः । तत्र सप्तम्यन्तपक्षे षष्ठीति वर्त्तते अन्तरतमो य आदेशस्य स्थानी तत्रैव षष्ठी यत्रैव षष्ठी तत्रादेश इति प्रकृतिर्नियम्यते । प्रथमान्तपक्षे तु अन्तरतम

॥ भा० ॥ अस्ति प्रयोजनमेतत् । किन्तर्हीति । यथा पुनरियमन्तरतमनिर्वृत्तिः सा किं प्रकृतितो भवति स्थानिन्यन्तरतमे षष्ठीति आहोस्विदादेशतः स्थाने प्राप्यमाणानामन्तरतम आदेशो भवतीति । कुतः पुनरियं विचारणा । उभयथा हि तुल्या संहिता । स्थानेऽन्तरतम उरण् रपर इति । किञ्चातः । यदि प्रकृतितः । इको यणचीति यणां ये अन्तरतमा इकस्तत्र षष्ठी यत्र षष्ठी तत्रादेशा भवन्तीतीहैव स्यात् । दध्यत्र मध्वत्र ॥

॥ कै० ॥ आदेशो भवतीत्यादेशो नियम्यते । इहैवेति । यणामर्द्धमात्रिकाणां सदृशा इको मात्रिका न तु दूरविप्रकृष्टा दीर्घा इति भावः । आदेशनियमपक्षे चैतदुदाहरणत्वेन दूषितं प्रकृतिनियमपक्षे तु भवत्येवैतदुदाहरणम् ॥

॥ वि० ॥ सौत्रस्थानशब्दस्य तिष्ठन्त्यस्मिन्नादेशा इत्यधिकरणव्युत्पत्त्याऽन्तरतमे स्थानिनीत्यर्थात् स्थानिनम्प्रति उताऽऽदेशम्प्रतीत्यर्थः । षष्ठीति वर्त्तत इति । अन्तरतमेऽर्थादादेशस्य स्थानिनि षष्ठी उपसंहर्त्तव्येत्यर्थः । यत्रैव षष्ठीत्यादि तु पर्य्यवसितार्थकथनम् । ननु भाष्ये संख्यातानुदेशेनैतदुदाहरणस्य दूषितत्वात्तदुपन्यासोऽयुक्तोऽत आह । आदेशेति । भवत्येवैतदिति । दीर्घव्यावृत्तये इत्यर्थः ॥

॥ वि० ॥ भाष्ये इको गुणवृद्धी इति । विध्येकवाक्यतापन्नस्य खण्ड इति बोध्यम् । नन्विको गुणवृद्धी इत्युक्त्वा चायक इत्युदाहरणमसङ्गतमत आह । अच इति । केचित्तु इको यत्र गुणवृद्धी इष्टे तत्रेतिभाष्यार्थान्न दोष इत्याहुः । ननु ऋकारस्येगचोरन्तर्भावात्पु-

॥ कै० ॥ चायक इति । अचो ञ्णितीत्यत्राऽपि अयमेव दोष इत्युपन्यासः । ऋवर्णस्येति । ऋकारस्य ह्रस्वस्यैव गुणः स्यात्

॥ भा० ॥ कुमार्य्यर्थं ब्रह्मबन्ध्वर्थमित्यत्र न स्यात् । आदेशतः पुनरन्तरतमनिर्वृत्तौ सत्यां सर्वत्र षष्ठी यत्र षष्ठी तत्राऽऽदेशा भवन्तीति सर्व्वत्र सिद्धम्भवतीति । तथा इको गुणवृद्धी गुणवृद्ध्योर्ये अन्तरतमा इकस्तत्र षष्ठी यत्र षष्ठी तत्राऽऽदेशा भवन्तीतीहैव स्यात् । नेता लविता नायको लावकः । चेता स्तोता चायकः स्तावक इत्यत्र न स्यात् । आदेशतः पुनरन्तरतमनिर्वृत्तौ सत्यां सर्व्वत्र षष्ठी यत्र षष्ठी तत्राऽऽदेशा भवन्तीति सर्व्वत्र सिद्धम्भवतीति । तथा ऋवर्णस्य गुणवृद्धिप्रसङ्गे गुणवृद्ध्योर्यदन्तरतमस्सवर्णं तत्र षष्ठी यत्र षष्ठी तत्राऽऽदेशा भवन्तीतीहैव स्यात् । कर्ता हर्ता । आस्तारकः । निपारक इति । आस्तरिता निपरिता कारको हारक इत्यत्र न स्यात् । आदेशतः पुनरन्तरतमनिर्वृत्तौ सत्यां सर्वत्र षष्ठी यत्र षष्ठी तत्राऽऽदेशा भवन्तीति सर्वत्र सिद्धं भवतीति । आदेशतोऽन्तरतमनिर्वृत्तौ सत्यामयं दोषः ॥

॥ कै० ॥ दीर्घस्यैव च वृद्धिरितिविशेषप्रदर्शनाय ऋवर्णस्य पृथगुपन्यासः ॥

॥ वि० ॥ नन्वुपन्यासो व्यर्थेत्यत आह । ऋकारस्येति । एवञ्च सप्तम्यन्तच्छेदो लक्ष्याऽसिद्ध्या दुष्ट इति भावः ॥



॥ वि० ॥ यादृश इति । अचीत्यनुवृत्त्याऽचि परतो यस्य यो वान्तो दृष्टस्तस्य यि प्रत्यये स इति व्याख्येयमित्यर्थः । अन्ये तु वाच्यवृत्त्येदृशार्थस्याऽलाभाद् यि प्रत्यय इति दृष्टाऽचीत्यस्याऽसम्बन्धाच्च भाष्योक्तं वचनमेव ज्याय इत्याहुः । भाष्ये चिज्योरेवेति । ह्रस्वनिर्देशात् ची इति दीर्घान्तस्य जै जय

॥ कै० ॥ वान्तो यीति । एच इत्यनुवर्तनात् सर्वेषां वान्तादेशप्रसङ्गः । यदा त्वेवं व्याख्यायते यादृशो वान्त आदेशः पूर्वं दृष्टस्तादृशो यि प्रत्यये भवति । ओकारस्थानिकोऽवादेशो दृष्ट औकारस्थानिकश्चावादेश इति तदा न दोषः । उभयत इति ।

॥ भा० ॥ वान्तो यि प्रत्यये । स्थानिनिर्द्देशः कर्त्तव्यः । ओकारौकारयोरिति वक्तव्यम् । एकारैकारयोर्माभूदिति । प्रकृतितः पुनरन्तरतमनिर्वृत्तौ सत्यां वान्तादेशस्य एचु या अन्तरतमा प्रकृतिस्तत्र षष्ठी यत्र षष्ठी तत्राऽऽदेशा भवन्तीत्यन्तरेण स्थानिनिर्द्देशं सिद्धं भवति । आदेशतोऽप्यन्तरतमनिर्वृत्तौ सत्यां न दोषः । कथम् । वान्तग्रहणं न करिष्यते । यि प्रत्यये एचोऽयादयो भवन्तीत्येव । यदि न क्रियते । चेयं जेयमित्यत्रापि प्राप्नोति । क्षय्यजय्यौ शक्यार्थे इत्येतन्नियमार्थं भविष्यति । चिज्योरेवैच इति । तयोस्तर्हि शक्यार्थादन्यत्रापि प्राप्नोति । चेयं पापं जेयो वृषलः । उभयतो नियमो विज्ञास्यते । चिज्योरेवैचस्तयोश्च शक्यार्थ एवेति । इहापि तर्हि नियमान्न प्राप्नोति । लव्यं पव्यम् । अवश्यलाव्यम् । अवश्यपाव्यमिति । तुल्यजातीयस्य नियमः । कश्च तुल्यजातीयः । यथाजातीयकः चिज्योरेच् । कथञ्जातीयकः चिज्योरेच् । एकारः ॥

॥ कै० ॥ योगविभागेनेतिभावः । इहापीति । सामान्येन नियम इति प्रश्नः । तुल्यजातीयस्येति । कण्ठ्यतालव्यस्येत्यर्थः ॥

॥ वि० ॥ इत्यस्य च नेदं निपातनमितिबोध्यम् । योगविभागेनेति । विनिगमनाविरहाद् ब्रह्मभ्रूणेत्यादाविवोभयतो नियम इत्यन्ये । भाष्ये तुल्यजातीयस्येति । अन्यथा यि प्रत्यय इति विधिवैयर्थ्यं स्यादिति भावः । तत्त्वं च यद्येत्वेन तर्हि ऐकारे आयादेशः स्यादत आह । कण्ठ्येति । भाष्ये एकारग्रहणमुपलक्षणमितिभावः ॥

॥ वि० ॥ एतदनभिज्ञः शङ्कते भाष्ये रायमिच्छतीति । तदाह । एकारस्यैवेति । एकारस्य तालव्यत्वमेवेति भाष्याशयः । क्यजन्तेति । रा०रैशब्दो०यि०यकारादिप्रत्यय इति भाष्यार्थ इतिभावः । भाष्ये विसर्गरहित एव पाठः । एतेन रायिरित्ययुक्तम् आत्वस्य दुर्लभत्वाद् रैशब्दात्क्विक् दुर्लभ इत्यपास्तम् । नास्ति प्रयोग इति । अनभिधानादितिभावः । क्वच् त्वित्यादिर्वचनादित्यन्तो ग्रन्थस्तस्यैकीयमतत्वात् । अत एव नः क्ये इति सूत्रे वाच्य-

॥ कै० ॥ रायमिच्छतीति । एकारस्यैव नियमेन व्यावृत्तिः कृता नत्वैकारस्येतिप्रश्नः । छान्दस इति । क्यजन्तस्य रैशब्दस्य भाषायां नास्ति प्रयोगः । अन्यत्र तु विद्यत एवेति व्याचक्षते । क्वच् त्वैकारान्तान्नास्ति गोसमानाक्षरनान्तादितिवचनात् ।

॥ भा० ॥ एवमपि रायमिच्छति रैयतीत्यत्रापि प्राप्नोतीति । रा यि च्छान्दसः । दृष्टानुविधिश्छन्दसि भवति । ऊदुपधाया गोहः । आदेशतोऽन्तरतमनिर्वृत्तौ सत्यामुपधाग्रहणं कर्त्तव्यम् । प्रकृतितः पुनरन्तरतमनिर्वृत्तौ सत्यामूकारस्य गोहो याऽन्तरतमा प्रकृतिस्तत्र षष्ठी यत्र षष्ठी तत्राऽऽदेशा भवन्तीत्यन्तरेणोपधाग्रहणं सिद्धं भवति । आदेशतोऽप्यन्तरतमनिर्वृत्तौ सत्यां न दोषः । क्रियते एतन्न्यास एव ॥

॥ कै० ॥ अन्ये तु भाषायां रैशब्दस्य प्रयोग एव नास्तीत्याहुः । गोह इति । एतत्परिभाषोपस्थाने सति गोह इति षष्ठ्यन्तरतमे स्थानिन्युपसंह्रियते । न्यास एवेति । अन्यथा परत्वादलोऽन्त्यस्येत्यनेन गोह इति षष्ठ्यन्तेऽल्युपसंह्रियेतेतिभावः ॥

॥ वि० ॥ तीतिभाष्ये प्रयुक्तम् । अन्ये त्विति । अत्रारुचिबीजन्तु रायमिच्छतीति भाष्यप्रयोगविरोधः । नहि विग्रहश्छन्द इति बोध्यम् । भाष्ये यीत्यस्य वैयर्थ्याच्च । भाष्ये गोहः सम्बन्धिन ऊकारस्य याऽन्तरतमा प्रकृतिरित्यन्वयः । स्थानिन्युपसंह्रियत इति । एवञ्च गोह इति गोहावयवत्वाच्चणिकमूकारान्तरतमस्य गोहावयवस्योदित्यर्थ इतिभावः । ननूपधाग्रहणाकरणलाघवे दर्शिते क्रियत इत्युत्तरमसङ्गतमत आह । अन्यथेति । परत्वादलोऽन्त्यस्येत्येव व्यवस्थापकं स्यादित्यर्थः । एवञ्च पक्षद्वयेऽप्यावश्यकं तदितिभावः ॥



॥ वि० ॥ ननु तग्रहणाभावे चरितमित्यादावपि रेफाऽनन्तरा निष्ठेतिनत्वं स्यादत आह । चरितमिति । रदाभ्यामित्यस्य प्रधानविशेषणताया न्याय्यतया परिभाषासंस्कृते लक्ष्यसंस्कारके वाक्ये रेफदकाराभ्यां परस्य निष्ठासम्बन्धिनोऽन्तरतमस्य नकारादेश इत्यर्थ इति भावः । आदेः परस्य स्थानेऽन्तरतम इत्याभ्यामादेरन्तरतमस्य न इत्यर्थे इकारस्याऽन्तरतमत्वाभावेन तकारस्य चादित्वाभावेनाप्राप्तिरिति परे । पक्षान्तरेऽपि तुल्यत्वान्न गौरवमित्याह । अन्यथेति । दकारस्य नत्वं स्यादिति । अनया परिभाषयेति भावः । वस्तुतस्तु आदेः परस्येत्यनेनाऽन्त्यस्याऽप्राप्तिः । सूत्रं तु उभयाविरोधेन

॥ कै० ॥ रदाभ्यामिति । चरितमित्यादौ व्यवधानान्न भवति । निष्ठाया इति । षष्ठ्यास्तकार एवोपसंहारात्तस्यैवाऽऽनन्तर्येण

॥ भा० ॥ रदाभ्यां निष्ठातो नः पूर्वस्य च दः । आदेशतोऽन्तरतमनिर्वृत्तौ सत्यां तकारग्रहणं कर्तव्यम् । प्रकृतितः पुनरन्तरतमनिर्वृत्तौ सत्यां नकारस्य निष्ठायां या अन्तरतमा प्रकृतिस्तत्र षष्ठी यत्र षष्ठी तत्रादेशा भवन्तीत्यन्तरेणापि तकारग्रहणं सिद्धं भवति । आदेशतोऽप्यन्तरतमनिर्वृत्तौ सत्यां न दोषः । क्रियत एतन्न्यास एव ॥

॥ कै० ॥ नत्वविधानात् । क्रियत एतन्न्यास एवेति । अन्यथा हि भिन्नवद्भ्यामित्यत्र दकारस्य नत्वं स्यात् । स हि नकारस्य सुसदृशः । यथा तृतीयास्तथा पञ्चमा इति वचनात् ॥

॥ वि० ॥ भिन्नमित्यादौ चरितार्थमित्यत्र प्रयोगे न स्यादेव नत्वमित्युभाभ्यामपि तग्रहणं कर्त्तव्यमिति भाष्यतात्पर्य्यम् । एवञ्च प्रथमान्तच्छेदो निर्दोषः । सप्तम्यन्तच्छेदस्तु दुष्ट एव । अत एव न भूसुधियोरित्यादि चरितार्थम् । ऋनरयोर्वृद्धिश्चेति शार्ङ्गरवाद्यन्तर्गणसूत्रं यथार्थं तदा नरः ऋ इति व्याख्यानादाद्याकारस्यैव वृद्धिरिति न तत्र दोषः । तत्र ऋनरयोरित्यावर्त्तते एकत्र पञ्चम्यर्थे षष्ठी पृथगपि वा तौ गणे पठ्येते इति बोध्यम् ॥

॥ वि० ॥ अथेति । वाक्यभेदाऽभेदाभ्यां पक्षद्वयभेद इति बोध्यम् । तत्र तृतीयः सिद्धान्तो भविष्यति । भिन्नरूप इति । पर्यायो यद्यपि भिन्नरूपस्तदर्थप्रत्यायकश्च तथापि विनिगमकाऽभावादुभयोः स्थानित्वमादेशत्वञ्च वाच्यम् । तथाच सूत्रमनारम्भसमं स्यादिति भावः । शास्त्रप्रवृत्तौ हेतुर्वचनसामर्थ्यम् । सदृशादेशे हेतुश्शब्देति । भाष्ये यदि चैवमिति । स्थान्यपेक्षयाऽऽदेशे यत्र वैरूप्यं प्रसक्तं तत्रैव दोष इत्यर्थः । नहि तदेति ।

॥ कै० ॥ किं पुनरिति । किं स्वतन्त्रमिदं लक्षणम् । आहोस्विल्लक्षणाऽन्तरेणाभिनिर्वृत्तानामनेन नियमः क्रियते अथ लक्षणान्तरशेषभूतमिति प्रश्नः । स्थानिनिवृत्तिरिति । दधिशब्दस्य यदि दधिशब्द आदेशः क्रियते तदा प्रयोजनाभावः । भिन्नरूपस्त्वादेशस्तदर्थस्या-

॥ भा० ॥ किं पुनरिदं निर्वर्त्तकम् । अन्तरतमा अनेन निर्वर्त्यन्ते आहोस्वित् प्रतिपादकम् । अन्येन निर्वृत्तानामनेन प्रतिपत्तिः । कश्चात्र विशेषः । स्थानेऽन्तरतमनिर्वर्त्तके सर्वस्थानिनिवृत्तिः । स्थानेऽन्तरतमनिर्वर्त्तके सर्वस्थानिनां निवृत्तिः प्राप्नोति । अस्यापि प्राप्नोति । दधि मधु । अस्तु । न कश्चिदन्य आदेशः प्रतिनिर्दिश्यते तत्रान्तर्यतो दधिशब्दस्य दधिशब्द एव मधुशब्दस्य मधुशब्द एवादेशो भविष्यति । यदि चैवं क्वचिद्वैरूप्यं तत्र दोषः स्यात् । विसं मुसलमिति । इण्कोरादेशप्रत्यययोरिति षत्वं प्राप्नोति ॥

॥ कै० ॥ ऽप्रत्यायक इति शब्दव्यवहारोत्साद एवेति भावः । अस्त्विति । वचनसामर्थ्याच्छब्दव्यवहारस्य चानादित्वादिति भावः । क्वचिद्वैरूप्यमिति । यदा विसशब्दस्य विसशब्द आदेशस्तदा षत्वं नास्ति न हि तदा सकार आदेशः । यदा तु सकारस्य सकार आदेशस्तदा षत्वप्रसङ्ग इति वैरूप्यप्राप्तिः । अस्तेर्भूरित्यादयस्तु विशेषविहितत्वादस्य बाधकाः ॥

॥ वि० ॥ आदेशरूपसस्यैव तेन षत्वविधानादिति भावः । यदा त्विति । तद्ध्वनयन् भाष्यकृद्वक्ष्यति । इमे वर्णा इत्यादि । नन्वस्य निर्वर्तकत्वे आर्द्धधातुकेऽप्यस्त्यादीनामस्त्याद्यादेशाः स्युरिति कुतो नोक्तं किञ्चानेन सिद्धे तद्यर्थं चेत्यत आह । अस्तेरिति । विद्यतिनिवृतिस्तत्फलमिति भावः ॥



॥ वि० ॥ सदृशाऽऽदेशविषयेऽपि दोषमाह । भाष्ये अपि चेष्टेति । ननु सदृशाऽऽदेशे कथमिष्टव्यवस्थाऽसिद्धिरत आह । पुनरिति । ननु लक्ष्ये लक्षणस्येतिन्यायविरोधोऽत आह । प्रयोजनमिति । सप्रयोजनशास्त्रप्रवृत्तौ हि प्रथमप्रवृत्त्यैव प्रयोजननिष्पत्तेर्न द्वितीयादिप्रवृत्तिरितितद्बीजं नचेदं प्रकृते इतिभावः । भाष्ये व्यवस्थेत्यस्य सापेक्षत्वादाह । साधुत्वस्येति । परिनिष्ठितत्वव्याप्यत्वात् साधुत्वस्येतिभावः । एवञ्च दोषान्तमेव शास्त्रं स्यादितितात्पर्यम् । निर्वृत्तेष्विति ।

॥ कै० ॥ अपि चेति । पुनरन्येनाऽऽदेशेन भवितव्यमितिभावः । प्रयोजनमन्तरेण प्रवृत्तौ सत्यामसकृदपि प्रवृत्तिः स्यात् ततश्च सर्वस्य निवृत्त्यभिमुखत्वात्साधुत्वस्य व्यवस्था नोपपद्यते । अस्तु तर्हीति । निर्वृत्तेषु लक्षणाऽन्तरेणाऽऽदेशेषु नियमोऽनेन क्रियते

॥ भा० ॥ अपि च इष्टा व्यवस्था न प्रकल्पते । तद्यथा । तप्ते भ्राष्ट्रे तिलाः प्रक्षिप्ता मुहूर्तमपि नावतिष्ठन्ते एवमिमे वर्णा मुहूर्तमपि नावतिष्ठेरन् । अस्तु तर्हि प्रतिपादकम् । अन्येन निर्वृत्तानामनेन प्रतिपत्तिः । निर्वृत्तप्रतिपत्तौ निर्वृत्तिः । निर्वृत्तप्रतिपत्तौ निर्वृत्तिर्न सिध्यति । सर्वे सर्वत्र प्राप्नुवन्ति । किं तर्ह्युच्यते । निर्वृत्तिर्न सिध्यतीति । न साधीयो निर्वृत्तिः सिद्धा भवति । न ब्रूमो निर्वृत्तिर्न सिध्यतीति । किं तर्हि । इष्टा व्यवस्था न प्रकल्पेत । न सर्वे सर्वत्रेष्यन्ते । इदमिदानीं किमर्थं स्यात् । अनर्थकं च । अनर्थकमेतत्स्यात् । यो हि भुक्तवन्तं ब्रूयाद् माभुक्था इति किं तेन कृतं स्यात् ॥

॥ कै० ॥ तत्रान्तरतमः साधुर्नान्य इत्यर्थः । निर्वृत्तिरिति । अभिमतस्य शब्दस्येत्यर्थः । इष्टा व्यवस्थेति । अकः सवर्णे दीर्घ इत्यनेन लक्षणेन यदा सर्वे दीर्घाः कृतास्तदा तेषां साधुत्वं विज्ञातं नचाऽनेन तेषामेवाऽसाधुत्वं शक्यं प्रतिपादयितुमितिभावः ॥

॥ वि० ॥ अन्येन निर्वृत्तानां मध्येऽनेनान्तरतमस्यैव साधुत्वप्रतिपत्तिरितिभाष्यार्थ इतिभावः । अभिमतस्येति । शास्त्रप्रामाण्यादुभयोरपि पाक्षिकसाधुत्वाऽऽपत्तेरितिभावः । दीर्घादेरिष्टा व्यवस्था न भविष्यतीत्यत आह । अक इति । एकप्रमाणबोधितस्य सामान्यविशेषभावाभावेन प्रमाणान्तरेण आत्यन्तिको निरासोऽशक्यः कर्तुमितिभावः । ननु शास्त्रप्रामाण्यादुभयोरपि साधुत्वे इदं व्यर्थं स्यादितिपृच्छति । इदमिदानीमिति । उत्तरयति । अनर्थकमिति । भुक्था इति । निरनुस्वारः पाठः ॥

॥ वि० ॥ आनर्थक्यं परिहरति । उक्तं वेति । द्वितीयपक्षाद्भेदमुपपादयति । एकवाक्यतेति । एवञ्चेतरस्याऽविधानमेवेतीष्टव्यवस्थासिद्धिरितिभावः । परे तु उत्पन्नानामनेन निवृत्तिर्लुगादिनैवेतिभावः । एतदाशयमजानान आह । निर्वृत्तिर्न सिध्यतीति । तदभ्युपेत्य समाधत्ते । उक्तं वेति । भुक्तवतो भोजनफलतृप्तेर्जातत्वान्निषेधस्य वैयर्थ्येऽपि शास्त्रे वृद्धिरादैच्सूत्रभाष्योक्तशास्त्रप्रामाण्याल्लुगादिनैव जातनिवृत्तिरिति वाशब्देन सूचितमित्याहुः ।

॥ कै० ॥ उक्तं वेति । इको गुणवृद्धी इत्यत्र यत्र षष्ठी तत्रेदमुपतिष्ठते तेनैकवाक्यताऽनेन सूत्रेण विधिवाक्यानामिति विधानकाल एवान्तरतम आदेशो विधीयते । प्रत्यात्ममिति । आत्मानमात्मानं प्रतीतिसमासः । स्थान्यात्मनोऽन्तरतम इत्यर्थः ।

॥ भा० ॥ उक्तं वा । किमुक्तम् । सिद्धं तु षष्ठ्यधिकारे वचनादिति । षष्ठ्यधिकारेऽयं योगः कर्तव्यः । स्थानेऽन्तरतमः षष्ठीनिर्दिष्टस्येति । प्रत्यात्मवचनं च । प्रत्यात्ममिति च वक्तव्यम् । किं प्रयोजनम् । यो यस्यान्तरतमः स तस्य स्थाने यथा स्यात् । अन्यस्यान्तरतमोऽन्यस्य स्थाने माभूदिति । प्रत्यात्मवचनमशिष्यं स्वभावसिद्धत्वात् । प्रत्यात्मवचनमशिष्यम् । किं कारणम् । स्वभावसिद्धत्वात् । स्वभावत एतत्सिद्धम् । तद्यथा । समाजेषु समाशेषु समवायेषु चाऽऽस्यतामित्युक्ते नचोच्यते प्रत्यात्ममिति प्रत्यात्मं चासते ॥

॥ कै० ॥ स्वभावसिद्धत्वादिति । तुल्यन्यायतया सूत्रप्रत्याख्यानायैतदुक्तं न तु सम्बन्धिशब्दत्वादिति । समाजेष्विति । समाज उत्सवेषु संघातः । समाशः सहभोजनम् । समवायः कस्याञ्चित्क्रियायां मेलनम् ॥

॥ वि० ॥ आत्मानमिति । अनश्चेतिटच् । स्थान्यात्मन इति । स्थानिरूपपदार्थस्येत्यर्थः । नन्वन्तरतमशब्दस्य सदृशार्थकत्वेन तुल्यास्यप्रयत्नमित्यत्रेव सम्बन्धिशब्दत्वादिति कुतो नोक्तमत आह । तुल्येति । प्रत्यात्मं चासत इति । स्वस्वसमाजेष्वेवासत इत्यर्थः । कस्याञ्चिदिति । धर्मनिर्णयादिक्रियायामित्यर्थः ॥



॥ वि० ॥ अर्थकृतान्तर्ये सति तदेव प्रयोजकमित्याह । गुणेत्यादि । पाण्डुत्वं गुणः । कृशत्वादि प्रमाणम् । विद्यादीति । आदिनोत्सवाशनाद्यर्थित्वब्राह्मणत्वादिजातिधनादिसंग्रहः । एवञ्च अन्तरतमो भवतीति यत्रानेकविधमिति च न्यायसिद्धमितिभावः । दृष्टान्ते विवक्षितार्थ-

॥ कै० ॥ नैव कृशा इति । गुणप्रमाणकृतसादृश्यपरिहारेण विद्याद्यर्थकृतमान्तर्यं लोक आश्रीयत इत्यर्थः । एवमिहापि यदीयमर्थं यः शक्नोति वक्तुं तस्य स्थाने स एव भवति । गाव इति । तिरश्चामप्ययं व्यवहारः संकीर्णानामसंकरलक्षणः । एवं चोदनायां

+ अन्तरतमवचनं चाशिष्यम् इत्यपि क्वचित्

॥ भा० ॥ अन्तरतमवचनं च + । योगश्चाप्ययमशिष्यः । कुतः । स्वभावसिद्धत्वादेव । तद्यथा । समाजेषु समाशेषु समवायेषु चास्यतामित्युक्ते नैव कृशाः कृशैः सहासते न पाण्डवः पाण्डुभिः । येषामेव किञ्चिदर्थकृतमान्तर्यं तैरेव सहासते । तथा गावो दिवसं चरितवत्यो यो यस्याः प्रसवोभवति तेन सह शेरते । तथा यान्येतानि गोयुक्तकानि संघुष्टकानि भवन्ति तान्यन्योन्यमपश्यन्ति शब्दं कुर्वन्ति । एवं तावच्चेतनावत्सु । अचेतनेष्वपि । तद्यथा लोष्ठः क्षिप्तो बहुवेगं गत्वा नैव तिर्यग्गच्छति नोर्द्ध्वमारोहति पृथिवीविकारः पृथिवीमेव गच्छत्यान्तर्य्यतः । तथा या एता आन्तरिक्ष्यः सूक्ष्मा आपस्तासां विकारो धूमः स धूम आकाशे निवाते नैव तिर्य्यग्गच्छति नाऽर्वागवरोहति ॥

॥ कै० ॥ संकीर्णा अप्यादेशा असंकरेण प्रवर्त्स्यन्ति । तथा यानीति । यथा तत्र सादृश्याद्वर्गीभवनं विच्छिन्नसाहचर्याणामपि भवति तथा स्थान्यादेशानां स्थानादिना सादृश्येन वर्गीभवनमित्यर्थः । अचेतनेष्वपीति । न्यायस्य व्याप्तिप्रतिपादनमेतत् ॥

॥ वि० ॥ माह । संकीर्णानामिति । भाष्ये प्रसवो वत्सः तेन सह स्वस्वप्रसवेन सह शेरत इति शेतिः स्थितौ । एवं चोदनायामिति । अनया रीत्या विधिशास्त्रेऽपीत्यर्थः । युक्तकशब्दो युग्मवाची । संघुष्टकशब्दस्तत्तद्युगवहनादिनाऽत्यन्तपरिचितवाची अनेनापि ग्रन्थेन यत्राऽनेकविधमित्यर्थः साधित इत्याहुः । सादृश्यादिति । तत्तद्युगवहनाद्यत्र सादृश्यम् ॥

॥ वि० ॥ अन्तरिच इति । अन्तरिचे भवा आन्तरिच्य: । अत एव निदाघे निशि निरावरणे शयानानां शैत्योपलम्भ: । तस्यैव च रविकिरण- सम्पर्केण मेघरूपतया वायुयोगाद्वृष्टि: । आन्तरिचीणामपाम्परम्परया धूमो विकार इति दर्शयति । तद्विकार: सर्वा इति । सूर्य्यविकार इति । अत एव दावाग्नेर्मध्याह्नादौ सूर्यकरसम्पर्कात् कौर्य्यातिशयो दृश्यते । तदनाश्रयेणेति । मन्दमध्यबुद्ध्यर्थमित्यर्थ: । ननु नार्द्धमात्रिक इत्यत आह । इद-

॥ कै० ॥ अव्विकार इति । अन्तरिचे सूक्ष्म: समुद्रोऽस्तीति तद्विकार: सर्वा आप इति काष्ठादिस्थानामपामग्निसंयोगाद् धूमो विकार: । सूर्य्यविकारोऽर्च्चि: सूर्यमेव गच्छति । लोकव्यवहाराऽऽश्रयणेन प्रत्याख्याते सूत्रे तदनाश्रयेण योगारम्भे दोषमाह । व्यञ्जनेति । व्यतिक्रम: ।

॥ भा० ॥ अव्विकारोऽप एव गच्छत्यान्तर्य्यत: । तथा ज्योतिषो विकारोऽर्च्चिराकाशदेशे निवाते सुप्रज्वलितं नैव तिर्य्यग्गच्छति नाऽर्वागवरोहति । ज्योतिषो विकारो ज्योतिरेव गच्छत्यान्तर्य्यत: । व्यञ्जनस्वरव्यतिक्रमे च तत्का- लप्रसङ्ग: । व्यञ्जनव्यतिक्रमे स्वरव्यतिक्रमे च तत्कालता प्राप्नोति । व्यञ्जनव्यतिक्रमे । इष्टम् । उप्तम् । आन्तर्यतो- ऽर्द्धमात्रिकस्य व्यञ्जनस्याऽर्द्धमात्रिक इक् प्राप्नोति । नैव लोके नैव वेदे अर्द्धमात्रिक इगस्ति । कस्तर्हि । मात्रिक: । योऽस्ति स भविष्यति । स्वरव्यतिक्रमे । दध्यत्र मध्वत्र कुमार्य्यर्थं ब्रह्मबन्ध्वर्थम् । आन्तर्य्यतो मात्रिकस्य द्विमात्रिक- स्यैको मात्रिको द्विमात्रिको यण् प्राप्नोति । नैव लोके नैव वेदे मात्रिको द्विमात्रिको वा यणस्ति ॥

॥ कै० ॥ स्थानित्वेन निवृत्ति: । इदमेव शास्त्रं निर्वर्त्तकमितिभाव: । नैव लोक इति । नित्याश्शब्दा अन्वाख्यायन्ते निर्वृत्तिपक्षेऽप्युच्चा- रणस्याऽशक्यत्वादिति भाव: । नैव लोक इति । कुकुटादिषु द्वे व्यञ्जने न त्वेकमात्रिकमितिभाव: ॥

॥ वि० ॥ मेवेति । कार्या: शब्दा इतिदर्शने प्रमाणादिना तत्तदन्तरतमवर्णनिर्वर्त्तकमित्यर्थ: । एवञ्च लोकवेदयोरभावेऽपि एतच्छास्त्रसिद्ध एव स इतिभाव: । यदुक्तमिदमेवेति तत्राह । नित्या इति । निर्वृत्तिपक्षेऽपीति । शास्त्रकार्य्या: शब्दा इति दर्शनेऽपीत्यर्थ: । उच्चारणस्येति । तस्य लोकाधीनत्वादितिभाव: ॥



॥ वि० ॥ इदमस्त्रिमात्रिकत्वेनाऽर्द्धतृतीयमात्रिक इत्ययुक्तमत आह । अत्वेति । परत्वादत्वेऽन्तरङ्गत्वादेकादेश इतिभाव: । प्लुताप्लुतेति । तादृशस्थले हि सपादसप्ताध्यायीस्थेन प्लुतविधौ त्रिपादीस्थप्लुतस्याऽसिद्धत्वात्तद्विषयेऽप्यनेनैव प्लुतविधौ तदंशेऽनुवादत्वमन्यांशे विधित्वमिति

॥ कै० ॥ अर्द्धतृतीयमात्रमिति । अत्वैकादेशयो: कृतयोरिश्भाव इति यदा प्रक्रियेति भाव: । भाव्यमानेनेति । नैव लोक इत्ययं परिहारो नोक्त: । यदा विशेषविहितत्वादत्वमिश्भावेन बाध्यते इतिन्यायस्तदा त्रिमात्रस्य त्रिमात्रसम्भवात्स्यादेव

॥ भा० ॥ कस्तर्हि । अर्द्धमात्रिक: । योऽस्ति स भविष्यति । अचु चानेकवर्णादेशेषु । अचु चानेकवर्णादेशेषु तत्कालता प्राप्नोति । इदम इश् । आन्तर्यतोऽर्द्धतृतीयमात्रिकस्येदम: स्थानेऽर्द्धतृतीयमात्रमिवर्णं प्राप्नोति । नैष दोष: । भाव्यमानेन सवर्णानां ग्रहणं नेत्येवं न भविष्यति । गुणवृद्ध्योज्भावेषु च । गुणवृद्ध्योरे भावेषु च तत्कालता प्राप्नोति । खट्वा इन्द्र: । खट्वेन्द्र: । खट्वा उदकम् । खट्वोदकम् । खट्वा ईषा खट्वेषा । खट्वा ऊढा खट्वोढा । खट्वा एलका खट्वैलका । खट्वा ओदन: खट्वौदन: । खट्वा ऐतिकायन: खट्वैतिकायन: । खट्वा औपगव: खट्वौपगव इति । आन्तर्यतस्त्रिमात्रचतुर्मात्राणां स्थानिनां त्रिमात्रचतुर्मात्रा आदेशा: प्राप्नुवन्ति । नैष दोष: । तपरे गुणवृद्धी ॥

॥ कै० ॥ प्लुत: । प्लुताप्लुतप्रसङ्गे च प्लुतस्य विषये स्मृत इत्युच्यते । अत्र तु प्लुतस्यैव प्राप्ति: । खट्वेन्द्र इति । संज्ञयाऽत्र गुणवृद्ध्योर्भावनं संज्ञा च भिन्नकालानामपि स्यादिति भाव्यमानेनेतिपरिहारस्याऽत्रासम्भव: ॥

॥ वि० ॥ शास्त्रवैरूप्यापत्तिस्तद्बीजम् । शास्त्रं त्वप्लुतविधानेन चरितार्थमिति । प्लुतमात्रविधाने तु तद्विषयकलक्षणवैयर्थ्यापत्त्यांशेऽनुवादत्वकल्पना सोढव्यैव । सामर्थ्येनाऽन्तरतमपरिभाषाबाधकल्पनापेक्षयाऽनुवादत्वस्य युक्तत्वाच्चेतिभाव: । संज्ञा चेति । कार्यकालपक्षेऽपि यथा भाव्यमानत्वाभावस्तथोपपादितं वृद्धिसंज्ञासूत्रे ॥

॥ वि॰ ॥ प्रत्याहार इति । वार्त्तिके गुणवृद्ध्योज्भावेष्विति द्वन्द्वो न तु कर्म्मधारयो भाष्यविरोधादितिभावः । तत्र हीति । प्रमाणत आन्तर्यादितिभावः । नन्वेवं ह्रस्वे सर्वगुणप्रसङ्गस्याऽनुपपादनादृवर्णमात्रे सर्वप्रसङ्ग इत्यनुपपन्नमत आह । समुदायापेक्षयेति । ऋवर्णीय-

॥ कै॰ ॥ एज्भाव इति । प्रत्याहारः पूतक्रतोरैच् मनोरौ वेत्यादिसंग्रहार्थः । तत्र हि मात्रिक एवैकार औकारश्च स्यात् । ऋवर्णस्येति । अत्र ह्रस्वस्याऽकार एव गुणः स्यात् सचेष्यत एव दीर्घस्य त्वेङौ स्याताम् । तुल्यप्रमाणत्वात् । तथा ह्रस्वस्य दीर्घस्य च सर्वे वृद्धिसंज्ञकाः प्राप्नु-

॥ भा॰ ॥ ननु च तः परो यस्मात्सोऽयं तपरः । नेत्याह । तादपि परस्तपर इति । यदि तादपि परस्तपरः । ऋदोरबिति इहैव स्यात् । यवः स्तवः । लवः पव इत्यत्र न स्यात् । नैष तकारः । कस्तर्हि । दकारः । किं दकारे प्रयोजनम् । अथ किं तकारे । यद्यसन्देहार्थस्तकारः । दकारोऽपि । अथ मुखसुखार्थस्तकारः । दकारोऽपि । एज्भावे । कुर्व्वीत कुर्व्वाथे । आन्तर्यतोऽर्द्धतृतीयमात्रस्य टिसंज्ञकस्याऽर्द्धतृतीयमात्र एव प्राप्नोति । नैव लोके नच वेदे अर्द्धतृतीयमात्र एजस्ति । ऋवर्णस्य गुणवृद्धिप्रसङ्गे सर्वप्रसङ्गोऽविशेषात् । ऋवर्णस्य गुणवृद्धिप्रसङ्गे सर्वप्रसङ्गः । सर्वगुणवृद्धिप्रसङ्गः । सर्व्वे गुणवृ-द्धिसंज्ञका ऋवर्णस्थाने प्राप्नुवन्ति । किं कारणम् । अविशेषात् । नहि कश्चिद्विशेष उपादीयते एवञ्जातीयको गुणवृद्धि-संज्ञक ऋवर्णस्य स्थाने भवतीति । अनुपादीयमाने विशेषे सर्व्वप्रसङ्गः । नवा ऋवर्णस्य स्थाने रपरप्रसङ्गादृवर्णस्यान्तर्यम् ॥

॥ कै॰ ॥ वन्ति । समुदायापेक्षया तु सर्व्वप्रसङ्ग इत्युच्यते । नवेति । उरण् रपर इत्यनेन गुणवृद्धिशास्त्रस्यैकवाक्यतायां विधीयमान एवाण् रपरो भवतीति ऋश्रुतिस्थानेऽरारौ क्रियमाणौ गुणवृद्धी भवत इत्यर्थः ॥

॥ वि॰ ॥ ह्रस्वादिसमुदायापेक्षयेत्यर्थः । गुणवृद्धिशास्त्रस्येति । प्रतिलक्ष्यं लक्षणभेदादृवर्णविषयगुणादिशास्त्रस्येत्यर्थः । अङ्गान्त्यस्यैक ऋवर्णस्य रपरोऽण्-रूपो गुण इति वाक्यार्थ इतिभावः । ऋश्रुतेरित्यनेनैकदेशद्वारा स्थानत आन्तर्यमुक्तम् ॥



॥ वि॰ ॥ ऋवर्णस्येति । ऋवर्णान्ताङ्गस्येत्यर्थः । सर्वादेशाविति । तस्येऽपि समुदायान्तर्वर्त्तित्वादृवर्णस्य तदादेशत्वमपि खट्वर्श्य इत्यादाविव वक्तुं शक्यमितिभावः । पूर्वमेवेति । अन्यथा ऋवर्णस्थानिकत्वाऽभावाद्रपरत्वमेव न स्यात् । नच समुदायान्तःपातिऋकाराश्रयेण रपरत्वम् । प्रत्यक्षे ऋवर्णस्थानित्वे चरितार्थस्याऽनुमानिके प्रवृत्त्ययोगात् । खट्वर्श्य इत्यादौ तु पूर्वपरयोरित्यधिकारात्प्रत्यक्षमेव स्थानित्वमितिभावः । पूर्वप्रवृत्तमिति । उपजी-

॥ कै॰ ॥ सर्वादेश इति । ऋवर्णस्य स्थानेऽरारौ क्रियमाणावलोऽन्त्यस्येत्येतद्बाधेनानेकाल्त्वात्सर्वादेशौ प्राप्नुतः । नवेति । अङ्गस्येति षष्ठी पूर्वमेवाऽन्त्यमिकमुपसंह्रियते ततश्च ऋवर्णस्य स्थानित्वे विज्ञाते रपरत्वमानुपूर्व्या सिद्धत्वात् पूर्वप्रवृत्तमलोऽन्त्यस्येत्यल्युपसंहारं न बाधत इत्यर्थः । अथवेति । निर्वृत्तस्याऽणो रपरत्वविधानेऽपि न दोष इत्यर्थः । अनान्तर्यमेवेति । न हि स्थानार्थगुणप्रमाणकृतमेवान्तर्यं परिभाषितं रूपान्तरे-

॥ भा॰ ॥ नवा एष दोषः । किं कारणम् । ऋवर्णस्य स्थाने रपरप्रसङ्गात् । उः स्थाने अण् प्रसज्यमान एव रपरो भवतीत्युच्यते तत्र ऋवर्णस्याऽन्तर्यतो रेफवतो रेफवानकार एवान्तरतमो भवति । सर्वादेशप्रसङ्गस्त्वनेकाल्त्वात् । सर्वा-देशस्तु गुणवृद्धिसंज्ञक ऋवर्णस्य प्राप्नोति । किं कारणम् । अनेकाल्त्वात् । अनेकाल् शित्सर्वस्येति । नवानेकाल्त्वस्य तदाश्रयत्वादृवर्णादेशस्याऽविघातः । नवा एष दोषः । किं कारणम् । अनेकाल्त्वस्य तदाश्रयत्वात् । यदायमुः स्थानेऽण् तदाऽयमनेकाल् । अनेकाल्त्वस्य तदाश्रयत्वादृवर्णादेशस्य विघातो न भविष्यति । अथवा अनान्तर्यमेवैतयोरान्तर्यम् ॥

॥ कै॰ ॥ णाऽपि सादृश्यसम्भवात्परिग्रहाच्चेतिभावः । ऋवर्णस्य मात्रिकोऽकारो गुणोऽन्तरतमोऽस्त्वेवेति चेत् । तदर्थस्य यत्नस्याऽकरणाद्दोष एव । दीर्घस्य तुल्यप्रमाणत्वादेकारौकारावन्तरतमौ स्त इति चेत् । भवेदेतद्यदा भेदापेक्षा क्रियते । ऋवर्णमात्रस्य ह्रस्वाद्यवान्तरभेदानपेक्षायां स्थानकृतमान्तर्यं न केनचिदस्तीत्यनान्तर्यमेवेत्याद्युक्तम् ॥

॥ वि॰ ॥ व्यक्त्वेत्यपि बोध्यम् । न बाधत इत्यत्रानेकाल्शित्सर्वस्येतिसूत्रं कर्तृ । रेफवतो रेफवानन्तरतम एवेत्यथवेत्ययुक्तमत आह । निर्वृत्तस्येति । परिग्रहा-च्चेति । पादद्न्नित्यादौ स्थान्यादेशभावमते वर्णसाम्यकृतस्येतिभावः । सदृशसम्बन्धभावकत्वमुभयोः साधारणधर्म्मरूपं सादृश्यमितितात्पर्यम् । यत्नस्येति । परि-हारान्तराभिधानरूपस्येत्यर्थः । स्थानकृतमिति । आन्तर्यमिति भाष्यस्य स्थानकृताऽन्तरतमाभाव इत्यर्थः ॥

॥ वि० ॥ नष्टाऽश्वदग्धरथवदिति । बहुव्रीहिगर्भद्वन्द्वाद् वतिः । पूर्वोक्तेनाऽथवेत्यनेन पौनरुक्त्यम्परिहरति । यदेति । केचित्तु तत्प्रत्याख्यानेऽपि लोकन्यायेन सदृश एवादेश इत्यर्थः साधितो भगवतेति प्रत्याख्यानाप्रत्याख्यानयोः को विशेषस्तस्मादनान्तर्यस्याऽभावरूपस्य सादृश्यत्वा-

॥ कै० ॥ सम्प्रयोगो वेति । यदा स्थानेऽन्तरतम इत्येतत्प्रत्याख्यातमित्यर्थः । अवर्णप्रधानत्वादिति । इममेव हि

॥ भा० ॥ एकस्याऽप्यन्तरतमा प्रकृतिर्नास्ति अपरस्यान्तरतम आदेशो नास्ति । एतदेवैतयोरान्तर्यम् । सम्प्रयोगो वा नष्टाश्वदग्धरथवत् । अथवा नष्टाश्वदग्धरथवत्सह सम्प्रयोगो भवति । तद्यथा । तवाऽश्वो नष्टो ममापि रथो दग्ध उभौ सम्प्रयुज्यावहा इति । एवमिहापि तवाप्यन्तरतमा प्रकृतिर्नास्ति ममाप्यन्तरतम आदेशो नास्ति अस्तु नौ सम्प्रयोग इति । विषम उपन्यासः । चेतनावत्स्वर्थात्प्रकरणाद्वा लोके सम्प्रयोगो भवति । वर्णाश्च पुनरचेतनाः । तत्र किंकृतः सम्प्रयोगः । यद्यपि वर्णा अचेतनाः । यस्त्वसौ प्रयुङ्क्ते स चेतनावान् । एजवर्णयोरादेशेऽवर्णं स्थानिनोऽवर्णप्रधानत्वात् । एजवर्णयोरादेशे अवर्णं प्राप्नोति । खट्वैलका मालौपगवः । किं कारणम् । स्थानिनोऽवर्णप्रधानत्वात् । स्थानी ह्यत्रावर्णप्रधानः । सिद्धन्तूभयान्तर्यात् । सिद्धमेतत् । कथम् । उभयोर्योऽन्तरतमस्तेन भवितव्यम् । नचाऽवर्णमुभयोरन्तरतमम् ॥ ❀ ॥

॥ कै० ॥ न्यायमाश्रित्योक्तमैचोश्चोत्तरभूयस्त्वादिति । उभयान्तर्यादिति । ह्रस्वशासने ह्येचः समुदायान्तरतमाभावादैचोश्चेत्युक्तम् इह तु सम्भवत्येव स्थानेन समुदायान्तरतम इत्यर्थः ॥ ❀ ॥

॥ वि० ॥ नङ्गीकारेऽप्याह । नष्टाश्वेति । ऋवर्णस्य स्थानित्वेनाऽवर्णस्यादेशत्वेन ग्रहणसामर्थ्यादसादृश्येऽपि स्थान्यादेशभावो यथा नष्टाश्वदग्धरथयोरत्यन्तभिन्नयोरपि असदृशयोरपि सम्प्रयोग इति तात्पर्यमित्याहुः । प्रधानत्वं भूयस्त्वेन । न्यायस्तर्हि क्वेत्यत आह । ह्रस्वेति ॥ ❀ ॥



॥ वि० ॥ उरण् । भाष्ये उरण् रपरवचनमिति । सूत्रस्थविसर्गप्राग्भागाऽनुकरणेन षष्ठीसमासः । नन्वन्यशब्देन न स्थानी आदेशस्य स्थानिनिवर्तकत्वस्वभावत्वाद् न स्थानिव्यतिरिक्त उरणित्येतावतः स्थानिव्यतिरिक्तनिवर्त्तने सामर्थ्याभावादत आह । षष्ठीति । यत्र षष्ठ्या ऋवर्णस्यादेशप्रसक्तिस्तत्रेत्यर्थः । स्वातन्त्र्येणाऽस्य विधायकत्वं तु इको गुणवृद्धी इत्यत्र भाष्ये एव निराकृतम् । तत्र यद्यन्यनिवृत्त्यर्थत्वं नियामकत्वेन तदाऽय मतमेतदिति

॥ कै० ॥ उरण् । किमिदमिति । षष्ठीप्रकरणाद्यत्र षष्ठी तत्रेदमुपतिष्ठते तत्र किमादेशान्तराणां बाधकमणं निर्वर्तयति तस्य च वाक्यभेदेन रपरत्वम् । आहोस्विद्रपरत्वमात्रमनेन क्रियते उः स्थाने लक्षणान्तरेण निष्पन्नो योऽण्

॥ भा० ; उरण् रपरः । किमिदमुरण् रपरवचनमन्यनिवृत्त्यर्थम् । उः स्थाने अणेव भवति रपरश्चेति । आहोस्विद्रपरत्वमात्रमनेन विधीयते । उः स्थाने अण् च अनण् च । अण् तु रपर इति । कश्चात्र विशेषः ॥

॥ कै० ॥ स रपर इति प्रश्नः । तत्र केषाञ्चित्पाठोऽण् भवति रपरश्चेति तत्राऽपूर्वोऽण् विधीयमान आदेशान्तराणां बाधकः । अन्येषां तु पाठोऽणेव भवतीति । तत्र सामर्थ्याच्चाऽन्यनिवृत्तिः । सैवैवकारेण प्रदर्श्यते ॥

॥ वि० ॥ वक्ष्यमाणस्य विशेषो न स्यादत आनुषङ्गिकं तदित्याह । तत्रेति । अपूर्व इति । वाक्यभेदेन ञ्नित्यादिरुदात्तो भवति ऋवर्णस्य त्वण् भवति स च रपर इत्यर्थ इति भावः । तत्र सामर्थ्यादिति । विशेषविधिः सामान्यविधिबाधकत्वेनेत्यर्थो नतु वाच्यवृत्त्याऽस्य नियमपरत्वमितिभावः ॥

॥ वि० ॥ सचोदात्तादिगुण इति । अत्र पचेऽनन्तरस्येतिन्यायेनाऽन्तरतमपरिभाषाया अनेन बाध इति भावः । नवेति । यत्रोपस्थिति-स्तद्विधेयस्य बाध इत्यभिमानः । भाष्ये कृतिर्नित्स्वरेणाद्युदात्तः । कृतमित्यत्र प्रत्ययस्वरेणान्तोदात्तत्वे शेषनिघातेन ऋकारोऽनुदात्तः । प्रकृते गतिरनन्तर इति पूर्वपदप्रकृतिस्वरे शेषनिघाते उदात्तादनुदात्तस्येति स्वरितत्वम् । उच्चैरुदात्त इत्यादिषु पष्ठ्यन्तमच इत्यनुवर्त्तत इतिपचे ञ्नित्यादिरित्यादावच

॥ कै० ॥ उदात्तादिष्विति । अन्तरतमस्य बाधकोऽण् प्रसज्यत इतिभावः । स चोदात्तादिगुणो नवे-तिसर्वथा दोषः । नॄँःपाहीति । यद्यप्यस्मिन् पचे पूर्वसवर्ण ऋकारो न लभ्यते तथापि नॄन् प इतिनिपा-

॥ भा० ॥ उरण् रपरवचनमन्यनिवृत्त्यर्थमितिचेदुदात्तादिषु दोषः । उरण् रपरवचनमन्यनिवृत्त्यर्थं चेदुदात्तादिषु दोषो भवति । के पुनरुदात्तादयः । उदात्ता-ऽनुदात्तस्वरितानुनासिकाः । कृतिः । हृतिः । कृतं हृतं प्रकृतं प्रहृतं नॄँःपाहि ॥

॥ कै० ॥ तनाद्भवति नकारस्य तु रुत्वे कृतेऽनुनासिको विधीयमानोऽणेव स्यान्न तु ऋकार इतिदोषः । प्रतिपदविहितैरित्वोत्वादिभिरयं हि बाध्यत इति तेषां रपरत्वं न स्यात् ॥

॥ वि० ॥ इत्युपस्थितेः षष्ठीसद्भावादुरणित्यस्योपस्थानमिति द्रष्टव्यम् । नियमपचे वच्यमाणदोषमवाप्याक्षिप्य दर्शयति । प्रतिपदेति । तेषामिति । प्रत्यासत्त्योरणित्यनेन विधीयमानस्याणो विधीयमानमितिशेषः ॥



॥ वि० ॥ दुर्लभ इति । ह्रस्वस्य गुणाकारलाभेऽपि दीर्घस्याऽकारगुणालाभः । वृद्धिस्तु नियमेन अण् न लभ्यत इत्यर्थः । कर्तेत्याद्यु-दाहरणं भाष्ये दीर्घान्तस्याऽप्युपलचणम् । किमित्यस्य विशेष्यमाह । कारणमिति । भाष्ये असवर्णे सदृशाभावे इत्यर्थः । ननु नियाम-काभावे कदाचिदवर्णस्यापि प्रतिपत्तौ कथमवर्णाऽप्रतिपत्तिरत आह । ततश्चेति । दोषपरिहारायाचेपवाद्येवाऽन्यनिवृत्त्यर्थमित्यस्य नियमपरतया व्याख्यानमाश-

॥ कै० ॥ गुणवृद्ध्योरिति । भूतस्य चेदणो रपरत्वं क्रियते तदा तु गुणवृद्धिविधावणेव दुर्लभ इति दोषः । किं हि साधीय इति । किं साधुतरं कारणमित्यर्थः । न पुनरिति । ततश्चाऽवर्णस्यैव नियमेनाऽप्रतिपत्तिरिति व्याख्येयम् । अथ मतमिति । स एव पचाचेपवा-

॥ भा० ॥ अस्तुतर्ह्युः स्थाने अण् चानण् च अण् तु रपर इति । य उः स्थानेऽण् स रपर इति चेद्गुणवृ-द्ध्योरवर्णाऽप्रतिपत्तिः । य उः स्थाने अण् स रपर इति चेद्गुणवृद्ध्योरवर्णस्याऽप्रतिपत्तिः । कर्त्ता हर्त्ता वार्षगण्यः । किं हि साधीयः । ऋवर्णस्याऽसवर्णे यदवर्णं स्यान्न पुनरेङैचौ । पूर्वस्मिन्नपि पचे एष दोषः । किं हि साधीयः । तत्रापि ऋवर्णस्यासवर्णे यदवर्णं स्यान्न पुनरिकारोकारौ । अथ मतमे-तत् । उः स्थाने अणश्चाऽनणश्च प्रसङ्गे अणेव भवति रपरश्चेति सिद्धा पूर्वस्मिन् पचेऽवर्णस्य प्रतिपत्तिः ॥

॥ कै० ॥ चाह । नानेनाऽन्येषां बाधकोऽपूर्वोऽण् विधीयते । किन्त्वणनणोः प्रसङ्गेऽणेव भवतीति नियमः क्रियते स च रपरः । न च गुणवृद्धिप्रसङ्गे इकारोकारयोः प्राप्तिः ॥

॥ वि० ॥ इत्थं दूषयति । भाष्येऽथ मतमिति । एतद्वच्यमाणं नियमरूपत्वमन्यनिवृत्त्यर्थमिति वदतो मतं सम्मतं विवचितमित्यर्थः । सिद्धा पूर्वस्मिन्निति । अन्यनिवृत्त्यर्थमिति पचे इत्यर्थः । स चेति । वाक्यभेदेनेत्यर्थः । नचैवमिकारोकारावपि स्यातामत आह । नच गुणेति ॥

॥ वि० ॥ भवानिति । नियमपचवादीत्यर्थः । स एवेति । विचारक एवेत्यर्थः । शङ्कते भाष्ये यद्यप्यणोऽपीति । परिहरति कुतो न्विति । तमवग्रहणसहितस्याप्यवकाशप्रदर्शनाय झयो ह इत्युक्तम् । उरण् रपर इत्यस्यावकाश इति । गुणविधौ स्थानेऽन्तरतमपरिभाषा-

॥ कै० ॥ यत्तु तदुक्तमिति । किं भवान्मन्यत इति विचारयति । स एव युक्तियुक्तं पचं गृह्णाति जायत इति । कुतो नु खल्विति ।

॥ भा० ॥ यत्तु तदुक्तमुदात्तादिषु दोष इति । स इह दोषो जायते । न जायते । जायते स दोषः । कथम् । उदात्त इत्यनेनाणोऽपि प्रतिनिर्दिश्यन्ते अनणोऽपि । यद्यपि अणोऽपि प्रतिनिर्दिश्यन्ते न तु प्राप्नुवन्ति । किं कारणम् । स्थानेऽन्तरतमो भवतीति । कुतो नु खल्वेतत् । द्वयोः परिभाषयोः सावकाशयोः समवस्थितयोः स्थानेऽन्तरतम इति उरण् रपर इति च स्थानेऽन्तरतम इत्यनया परिभाषया व्यवस्था भविष्यति न पुनरुरण् रपर इति । अतः किम् । अत एष दोषो जायते उदात्तादिषु दोष इति ॥

॥ कै० ॥ अन्तरतमपरिभाषाया अवकाशः अकः सवर्णे दीर्घः । झयो होऽन्यतरस्यामिति । उरण् रपर इत्यस्याऽवकाशः कर्ता हर्त्तेति । इहोभयं प्राप्नोति । कृतिरिति । परत्वादियमेव प्राप्नोतीति दोषः ॥

॥ वि० ॥ नुपस्थितिः । ऋवर्णसमुदायान्तरतमगुणाभावादिति भावः । यद्यपि भाष्यादिनिगमनाभावो लभ्यते । तथाप्येष दोषो जायत इत्युत्तरग्रन्थासङ्गतेर्विनिगमकं प्रदर्श्यान्तरतमपरिभाषाऽप्रवृत्तिमुपपादयति । परत्वादिति ॥



॥ वि० ॥ भाष्ये ये चाप्येत इति । बहुवचनेनाऽऽपृच्छ्यपृधामिति ईत्वसंग्रहः । विधीति । ऋवर्णस्थानिकाऽण्विधिवाक्यैरित्यर्थः । एकवाक्यतायामिति । वाक्यैकवाक्यतायामित्यर्थः । ननु उरिति षष्ठ्या स्थानेयोगत्वस्य लाभः स्यादत आह । नहीति । एवञ्चाऽयमनुवाद इति भावः । विध्यङ्गेति । विधेयेन साचाद् यत्र सम्बन्धस्तत्र परिभाषेत्यर्थः । उदात्तस्वरितयोर्यणः खः परस्मैपदमित्यादावनुवादेऽप्यस्याः प्रवृत्तेर्यद्येवमित्यादि

॥ कै० ॥ ये चाप्येत इति । यत्र ह्यनियमप्रसङ्गस्तत्रानेन नियमः क्रियते तत्र तच्छेषभूतं रपरत्वं भवति न त्वन्यत्र प्रतिपदविधाविति दोषः । सिद्धं त्विति । विधिवाक्यैरस्यैकवाक्यतायां विधानकाल एवाणो रपरत्वं क्रियत इत्यर्थः । यद्येवमिति ।

॥ भा० ॥ ये चाऽप्येते ऋवर्णस्य स्थाने प्रतिपदमादेशा उच्यन्ते तेषु रपरत्वं न प्राप्नोति । ॠत इद्धातोरुदोष्ठ्यपूर्वस्येति । सिद्धं तु प्रसङ्गे रपरत्वात् । सिद्धमेतत् । कथम् । प्रसङ्गे रपरत्वात् । उः स्थाने अण् प्रसज्यमान एव रपरो भवति । किं वक्तव्यमेतत् । नहि । कथमनुच्यमानं गंस्यते । स्थान इति वर्तते । स्थानशब्दश्च प्रसङ्गवाची । यद्येवमादेशोऽविशेषितो भवति ॥

॥ कै० ॥ न ह्यनेनोः स्थानेऽण् विधीयते अपि तु लचणान्तरेण तत्र विध्यङ्गभूता षष्ठी स्थानेयोगेति परिभाषा नोपतिष्ठते तथाचोदीचामातः स्थाने इत्यत्र स्थानग्रहणं कृतम् । तत उः समीपे योऽण् तस्यापि रपरत्वप्रसङ्ग इति स्थानग्रहणाऽनुवृत्त्या उः स्थाने य आदेशोऽणित्येतावल्लभ्यते न तु प्रसज्यमान इति ॥

॥ वि० ॥ भाष्यमेकदेशिनोरुक्तिरितिबोध्यम् । उः समीप इति । तथाच तृतीय इत्यादावप्यणो रपरत्वप्राप्तिरित्यर्थः । सामीप्ये च षष्ठी व्यवहितेऽपीतिभावः । स्थाने य आदेशोऽणिति । अनुवर्तमानस्थानेग्रहणमुरित्यस्य सम्बन्धिशब्दत्वात्तत्रैव सम्बध्यतेत्यर्थः ॥

॥ वि० ॥ नन्वेवमादेशः स्थानेन विशेषित एवेति आदेशोऽविशेषित इति भाष्याऽसंगतिरित्यत आह । प्रसज्यमानत्वेनेति । अथवा स्थानेति । स्थानशब्दस्य प्राधान्यात् रपर इत्यनेन सम्बन्ध इतिभावः । तत इति । अणः स्थानेपदार्थेनाविशेषणादित्यर्थः । एवञ्च नाऽऽदेशान्तराणां बाध-

॥ कै० ॥ आदेश इति । प्रसज्यमानत्वेनेत्यर्थः । अथवा स्थानग्रहणाऽनुवृत्त्या प्रसज्यमान इत्येषोऽर्थो लभ्यते नतूः स्थान इति । ततश्चाण आदेशरूपता नियमेन न लभ्यते इति सामीप्यलक्षणोऽपि सम्बन्धोऽवगम्येतेत्यर्थः । द्वितीयमिति । तच्चार्थात् प्रथमान्तं सम्पद्यते अथवा सप्तम्यन्त एव तस्मिन्नयमर्थो भवति प्रसङ्ग एवाऽत्राण् रपरो भवतीति । इदानीमुदात्तादिष दोषो

॥ भा० ॥ आदेशश्च विशेषितः । कथम् । द्वितीयं स्थानग्रहणं प्रकृतमनुवर्तते । तत्रैवमभिसम्बन्धः करिष्यते । उः स्थाने अण् स्थान इति । उः प्रसङ्गे अण् प्रसज्यमान एव रपरो भवति । अथाणग्रहणं किमर्थं न ऊ रपरो भवतीत्येवोच्येत । रपर इतीयत्युच्यमाने क इदानीं रपरः स्यात् ॥

॥ क० ॥ नास्ति स्थानेऽन्तरतम इत्यनया परिभाषया कृतिरित्यादावृकारस्य ऋकार एव प्रवर्तत इत्यणः प्रसङ्ग एव नास्ति । गुणवृद्धी च ऋकारस्य विधीयमाने अण् एवान्तरतम्याद्भवत इत्यवर्णप्रतिपत्तिरप्यस्ति ॥

॥ वि० ॥ कोऽण् विधीयते नाऽपि नियमो नाऽपि विहितस्य रपरत्वं प्रसज्यमानत्वेन विशेषणात् किन्तु तत्तद्विधिभिर्वाक्यैकवाक्यतैवाऽस्येतिबोध्यत इतिबोध्यम् । अथवेति । स्थानपदेन प्रसङ्गकालो लक्ष्यते इतिभावः । ऋकार एवेति । स्थानतः प्रमाणतः स्वरूपतश्च सदृशत्वादितिभावः ॥



॥ वि० ॥ ननु वार्तिकोक्तरीरिविध्योर्ज्ञातत्वात्तस्य चोपलक्षणत्वे प्रमाणाभावात्के पुनरिति प्रश्नानुपपत्तिरत आह । बहुवचनेति । सौधातकौ सुधातुरकङ्चेति इञ् पैतृष्वसेये ढकि लोपस्तत एव ढक्च । ननु लोपस्य रपरत्वे तं विनापि यणादेशेन तत्साध्यरूपसिद्धिरत आह । लोपेति । रपरत्वाभिधानमुखेन सर्वादेशत्वमेव लोपस्याऽभिधित्सितमितिभावः । यदि सर्वादेशो लोपस्तदा उः स्थाने नेति कथं रपरत्वमितीदं चिन्त्यम् ।

॥ कै० ॥ रीरिविधिष्विति । बहुवचननिर्देशाद् रीरिशब्दावुपलक्षणमिति पृच्छति । के पुनरिति । पैतृष्वसेय इति । लोपवचनन्तु सर्वादेशार्थं स्यात् । होतापोताराविति । रेफस्य संयोगान्तलोपे कृते तस्यासिद्धत्वान्नलोपो न स्यात् ।

॥ भा० ॥ यः स्थाने भवति । कश्च स्थाने भवति । आदेशः । आदेशो रपर इतिचेद्रीरिविधिषु रपरप्रतिषेधः । आदेशो रपर इतिचेद्रीरिविधिषु रपरत्वस्य प्रतिषेधो वक्तव्यः । के पुना रीरिविधयः । अकङ्लोपाऽऽनङनङ्रीङ्रिङादेशाः । अकङ् । सौधातकिः । अकङ् । लोप । पैतृष्वसेयः । लोप । आनङ् । होतापोतारौ । आनङ् । अनङ् । कर्ता हर्ता । अनङ् । रीङ् । मात्रीयति पित्रीयति । रीङ । रिङ् । क्रियते ह्रियते । रिङ् । उदात्तादिषु च । उदात्तादिषु च किम् । रपरत्वस्य प्रतिषेधो वक्तव्यः । कृतिः । हृतिः । कृतं हृतम् । प्रकृतम् । प्रहृतम् । नॄँः पाहि । तस्मादण्ग्रहणं कर्तव्यम् । एकादेशस्योपसंख्यानम् ॥

॥ कै० ॥ एकादेशस्येति । पूर्वपरयोरिति समुदायस्य स्थानित्वेन चोदितत्वात्तस्य च ऋवर्णरूपत्वाऽभावादितिभावः ॥

॥ वि० ॥ तस्माल्लोपविधिवैयर्थ्यापादनमेव दोष इति तत्त्वम् । आनङनङौ आनङृतो द्वन्द्वे ऋदुशनेतिविहितौ । रेफस्येति । झल्ग्रहणाऽपकर्षाद्यणः प्रतिषेधारम्भाच्च चिन्त्यमिदम् । तस्माद्रेफश्रवणमेव दोषोऽत्रेति बोध्यम् । समुदायस्येति । द्वन्द्वस्य सत्त्वादिति भावः ॥

॥ वि० ॥ उद्भूतेति । अत एव द्विवचननिर्देशः । तत्सामर्थ्यादेव प्रत्येकं स्थानित्वबुद्धिरितिभावः । नन्ववयवभेदस्योद्भूतत्वविवचा नाम तन्नतसंख्या- याः समुदाये आरोपो नैतावता प्रत्येकं स्थानित्वलाभोऽत आह । अवयवावेव चेति । इतरेतरयोग इति शेषः । एवञ्च तत्र समुदायस्यावयवाभेदेन

॥ कै० ॥ अवयवग्रहणादिति । पूर्वपरयोरित्यनेनोद्भूतावयवभेदः समुदायो निर्दिश्यते अवयवावेव चाऽपेचितपरस्परौ समुदाय इति भवत्ययमृवर्णस्य स्थान इतिभावः । रान्तप्रतिषेध इति । आनङि

॥ भा० ॥ एकादेशस्योपसख्यानं कर्तव्यम् । खट्वर्श्यः । मालर्श्यः । किं पुनः कारणं न सिध्यति । उः स्थाने अण् प्रसज्यमान एव रपरो भवतीत्युच्यते । नचायमुरेव स्थाने अण् शिष्यते । किन्तर्हि । उश्चान्यस्य च । अवयवग्रहणात्सिद्धम् । यदत्र ऋवर्णं तदाश्रयं रपरत्वं भविष्यति । तद्यथा । माषा न भोक्तव्या इत्युक्ते मिश्रा अपि न भुज्यन्ते । अवयवग्रहणात्सिद्धमितिचेदादेशे रान्तप्रतिषेधः । अवयवग्रह- णात्सिद्धमितिचेदादेशे रान्तस्य प्रतिषेधो वक्तव्यः । होतापोतारौ ॥

॥ कै० ॥ विधीयमाने आकारस्याणोऽभावादित्यर्थः । तस्मादवयवग्रहणादित्यस्यातिव्यापक- त्वात्तत्र साचाट्टवर्णस्याऽण् विधीयते तत्रैवेदमुपतिष्ठत इत्येकादेशस्योपसंख्यानं कर्त्तव्यमेव ॥

॥ वि० ॥ बोधनाद् द्विवचनेन प्रत्येकं तयोः स्थानित्वलाभोऽयमेव चोद्भूतावयवभेदः समुदाय इत्यस्याऽर्थ इतिभावः । भाष्येऽगृहीताभिप्राय; समुदायस्याऽतिरिक्तस्य स्थानित्वेऽपि तदन्तर्गतावयवस्याऽपि स्थानित्वमादाय ऋस्थानिकत्वमनेनोक्तमित्यभिप्रायवानाह । अवयवग्रहणात्सिद्धमितिचेदिति । रान्तस्येति । रान्तत्वस्येत्यर्थः ।



॥ वि० ॥ ऋवर्णान्तेति । शब्दशास्त्रप्रस्तावात् शब्दरूपं विशेष्यमादाय तदन्तविधिरिति भावः । नन्विकाऽङ्गे विशेष्यमाणे तदन्तविधेऋ- वर्णान्तस्य गुणेन भाव्यमत आह । अङ्गस्येति षष्ठीति । इगन्ताङ्गान्त्यस्य गुण इति वाक्यार्थ इतिभावः । भाष्ये लक्ष्यासिद्धिदोष ऋवर्णान्तस्येत्यर्थ उक्तः । स्वयं तदर्थाऽसम्भवमप्याह । नचेहेति । भूतानुवादादिति । एवञ्चानुवादे परिभाषाया इव संज्ञाया अप्यप्रवृत्तिः । यद्वा समानविभक्त्यन्तविशेष्यरहि- तभूतानुवादादित्यर्थः । यत्र हि साचादर्थाद्वा विशेषणसमानाधिकरणं विशेष्यमुपादीयते तत्रैव वर्णग्रहणे तदन्तविधिः । गमकं विना शब्दरूपविशेष्यमादाय तु न

॥ कै० ॥ यदि पुनरिति । उरिति वर्णग्रहणाद्वर्णग्रहणाच्च सर्वत्र तदन्तविधिं प्रयोजयतीति न्यायाट्टवर्णान्तस्य ग्रहणं खट्वर्श्य इत्यत्र च समुदाय ऋवर्णान्तो भवतीति सिद्धं रपरत्वम् । कर्त्तेति । अङ्गस्येति षष्ठी अन्त्यमलमुपसंहृतेति ऋवर्णस्य

॥ भा० ॥ यथैवोश्चाऽन्यस्य च स्थानेऽण् रपरो भवतीति । एवं य उः स्थानेऽण्चानण्च सोऽपि रपरः स्यात् । यदि पुनऋवर्णान्तस्य स्थानिनो रपरत्वमुच्यते खट्वर्श्यः । मालर्श्यः । नैवं शक्यम् । इह न प्रसज्येत । कर्त्ता हर्त्ता किरति गिरति । ऋवर्णान्तस्येत्युच्यते नचैतदृवर्णान्तम् । ननु च एतदपि व्यपदेशिवद्भावेन ऋवर्णान्तम् ॥

॥ कै० ॥ गुणेन भाव्यम् । नच ऋवर्णं ऋवर्णान्तो भवतीति दोषः । नचेह तदन्तविधिरस्ति उरणिति भूतानुवादात् । नच प्रदेशेषु तदन्तस्य कार्य्यम् । अन्त्यस्यैवानुसंहारेण स्थानित्वप्रतिपादनादितिभावः ॥

॥ वि० ॥ तदन्तविधिरितिभावः । नच प्रदेशेष्विति । इह तदन्तविध्यभावेऽपि यदि प्रदेशेषु ऋवर्णान्तस्य षष्ठीनिर्देशेन स्थानित्वं स्यात्ततस्तदनुरोधेनाऽनुवादेऽ- प्येकदेशद्वारा ऋवर्णान्तं ग्राह्यं तदपि नास्तीतिभावः । इदं चिन्त्यम् । वृद्धिर्यस्येत्यादावीदूदेद्विवचनमित्यादौ चाऽनुवादेऽपि संज्ञाप्रवृत्तेः । वर्णविधौच सर्वत्रेति च शब्दरूपविशेष्यमादाय तदन्तविधौ गमकमतो भाष्योक्त एव दोषः ॥

॥ वि॰ ॥ भाष्येऽर्थवतेति । इदमसहायत्वोपलक्षणमत एव कुरुते इत्यादावनर्थकेनाऽपि सः । तत्र हि स टिसंज्ञोपयोगिसहायरहित एवेतिदिक् । भाष्ये इह चेति । एकादेशस्योपसंख्यानमित्यौपसंख्यानिकरपरत्वप्रतिषेधश्च वक्तव्य इत्यर्थः । मातुरित्यादौ तदुपसंख्यानातिव्याप्तेरितिभावः । मातॄरितीति । उ रपर इति पूर्वोक्तभाष्यप्रयोगविरोधाद्दत उदिति तपरत्वान्मातॄरित्यादौ न दीर्घ इत्यपास्तं वेदितव्यम् । उक्तोऽर्थे गमकमाह ।

॥ कै॰ ॥ अर्थवतेति । यथैवेयायेत्यत्रैकाच्त्वम् । अर्थस्य हि त्यागोपादानाभ्यां वर्णरूपता धातुरूपता च व्यवस्थाप्यते । इह चेति । उपसंख्यानस्याऽतिव्याप्येत्यर्थः । मातुरिति । रपरत्वे कृते विभक्तिसकारस्य रुत्वं पूर्वस्य रोरीतिलोपः । ढ्रलोप इति दीर्घत्वम् । तत्र मातूरितिप्राप्नोतीतिभावः । द्वयोरिति । अवयवावेवात्रापेक्षितपरस्परौ स्थानिनौ । अत एवैकग्रहणं

॥ भा॰ ॥ अर्थवता व्यपदेशिवद्भावः । नचैषोऽर्थवान् । तस्मान्नैवं शक्यम् । नचेदेवमुपसंख्यानं कर्तव्यम् । इह च रपरत्वस्य प्रतिषेधो वक्तव्यः । मातुः पितुरिति । उभयं न वक्तव्यम् । कथम् । यो द्वयोः षष्ठीनिर्दिष्टयोः प्रसङ्गे भवति । लभतेऽसावन्यतरतो व्यपदेशम् । तद्यथा । देवदत्तस्य पुत्रः । देवदत्तायाः पुत्र इति । कथं मातुः पितुरिति । अस्त्वत्र रपरत्वं का रूपसिद्धिः । रात्सस्येति सकारस्य लोपः । रेफस्य विसर्जनीयः । नैवं शक्यम् । इह हि मातुः करोति पितुः करोतीति । अप्रत्ययविसर्जनीयस्येति षत्वं प्रसज्येत ॥

॥ कै॰ ॥ स्थानिभेदादादेशभेदनिवृत्त्यर्थं कृतम् । अन्यतरत इति । तृतीयान्तादाद्यादित्वात्तसिः । तद्यथेति । एकः पुत्र उभाभ्यामपि यथा व्यपदिश्यते तथेहापि पूर्वपराभ्यां तत्स्थानिकत्वेनादेशस्य व्यपदेशः । अकङादेस्तु समुदायस्यादेशत्वं नाण इति रपरत्वाभावः । प्रत्ययेति । असित्ययं समुदायः प्रत्ययो नत्वकार इति तदादेशोऽप्यप्रत्यय इतिभावः ॥

॥ वि॰ ॥ अत एवेति । पञ्चम्यन्तात् तसिल्व्यर्थाऽसंगतेराह । तृतीयान्तादिति । समुदायस्येति । प्रत्येकमादेशत्वे प्रमाणाभावादित्यर्थः । भाष्ये रात्सस्येति । सलोपे रुत्वस्याऽसिद्धत्वादिति भावः । असित्ययमिति । प्रत्ययरूपविसर्गभिन्नस्येत्यर्थ इतिभावः ॥



॥ वि॰ ॥ अकारोऽपीति । सूत्रस्थप्रत्ययशब्दस्तदवयवे लाक्षणिक इतिभावः । उत्वे च कृत इति । नचैकादेशस्य परादिवत्त्वेनोर्सित्यस्य प्रत्ययतया लोपे एकदेशविकृतन्यायेनोरित्यस्य प्रत्ययतया विसर्गस्य प्रत्ययावयवत्वमस्त्येवेतिवाच्यम् । त्रिपाद्या असिद्धत्वेन तत्राऽन्तादिवद्भावाऽप्रवृत्तेः । स्थानिवत्त्वेन त्वनिर्वाहः । उपात्तस्य स्थानिनोऽकारस्य प्रत्ययत्वाभावात् । सर्वे सर्वपदादेशा इत्यनेन तु मातृअसित्यस्य स्थानित्वेऽपि असित्यस्य स्थानि-

॥ कै॰ ॥ प्रत्ययेति । प्रत्ययाऽवयवत्वादकारोऽपि प्रत्ययः । अतस्तदादेशोऽपि प्रत्यय इतिभावः । लुप्यत इति । सकार सन्निधिकालेऽकारेण नैव लब्धा प्रत्ययसंज्ञा समुदायसन्निवेशिनीत्वात् तस्या इति कुतस्तदादेशस्तां लप्स्यते । उत्वे च कृतेऽवशिष्टः सकार

॥ भा॰ ॥ अप्रत्ययविसर्ज्जनीयस्येत्युच्यते प्रत्ययविसर्ज्जनीयश्चायम् । लुप्यतेऽत्र प्रत्ययो रात्सस्येति । एवन्तर्हि भ्रातुष्पुत्रग्रहणं ज्ञापकमेकादेशनिमित्तात् षत्वप्रतिषेधस्य । यदयं कस्कादिषु भ्रातुष्पुत्रशब्दं पठति तज्ज्ञापयत्याचार्य्यः । नैकादेशनिमित्तात् षत्वं भवतीति ॥

॥ कै॰ ॥ एव प्रत्ययसंज्ञः स च लुप्त इति भावः । एकादेशनिमित्तादिति । एकादेशशास्त्रं निमित्तं यस्य तस्मात्परस्येत्यर्थः ॥

॥ वि॰ ॥ त्वालाभात् । भाष्ये लुप्यतेऽत्र प्रत्ययविसर्जनीय इतिपाठे योऽत्र प्रत्ययस्थानिकत्वेन तत्राऽभिमतो विसर्जनीयः स लुप्यते न दृश्यते स्थानिनः प्रत्ययस्यैव लोपादित्यर्थः । एवं तर्हि भ्रातुष्पुत्रेति । त्रिपाद्यामप्यन्तादिवद्भावप्रवृत्तिज्ञापनद्वारेतिगूढोऽभिसन्धिः । कर्मधारये निमित्तपदवैयर्थ्यमिति बहुव्रीहिमेकादेशपदे लक्षणां च दर्शयति । एकादेशशास्त्रमिति ॥

॥ वि० ॥ यद्यपीति । तथा च तस्यैव विशेषणं स्यादितिभावः । प्राधान्यादिति । रपरशब्दतात्पर्यविषयत्वादित्यर्थः । एवञ्च पूर्वान्तावयवभूतरेफपरोऽणित्यर्थः । सूत्रे रपर इति समासश्च सौत्रत्वात्साधुः । नन्वरारादिरूपेण विधानात्कथमभक्तत्वादिशङ्केत्यत आह । यद्यपीति । अविधानादिति । अनुच्चारणादित्यर्थः । तात्पर्य्येति । प्राप्ताप्राप्तविवेकन्यायेनेत्यर्थः । केवलेति । रेफमात्रविधौ सूत्रतात्पर्य्यादितिभावः । यत्तु अयमपि विचारो

॥ कै० ॥ यद्यन्त इति । यद्यपि रपर इत्यत्राऽन्यपदार्थस्य प्राधान्यं तथापि रेफस्य विधेयतया प्राधान्यात्तस्यैवान्तत्वं विशेषणमितिभावः । यद्यपि प्रसज्यमान एवाण् रपरो विधीयते । तथा-

॥ भा० ॥ किं पुनरयं पूर्वान्तः । आहोस्वित्परादिः । आहोस्विदभक्तः । कथञ्चाऽयं पूर्वान्तः स्यात् । कथं वा परादिः कथं वा अभक्तः । यद्यन्त इति वर्त्तते । ततः पूर्वान्तः । अथादिरितिवर्तते । ततः परादिः ॥

॥ कै० ॥ प्यानङ इव साक्षादरार् आर् इत्येवमविधानात्तात्पर्यपर्य्यालोचनन्यायेन केवलाऽवस्थानात्पक्षत्रयविमर्शः ॥

॥ वि० ॥ भूतस्याऽणो रपरत्वमितिपक्षे नष्टाश्वदग्धरथन्यायेनाऽनान्तर्य्यमेवान्तर्य्यमिति ऋकारस्याकाराकारावेव गुणवृद्धी भविष्यतः । अरादिरूपेण विधानमिति पक्षे तु आनङादौ नकारविषयो यथा न विचारस्तथाऽत्रापीति तत्त्वमिति तत्तु प्रकृतसूत्रे तस्य पक्षस्याश्रितत्वादयुक्तम् ॥



॥ वि० ॥ वार्तिके प्रतिषेधोऽभावो निवर्तनञ्च आद्ये स्यादितिशेषः । द्वितीये वक्तव्य इति । गॄप्रोः क्विपि गीः पूः ॠत ईत् उदोष्ठ्येतीत्वोत्वे । भाष्ये पदमिति । पदस्येत्यनुवर्तमानमित्यर्थः । अनन्तरयोगेति । अनन्तरशब्दोऽव्यवहितवाची । स्वरविधाविति । यद्यपि हल्स्वरप्राप्तौ

॥ कै० ॥ लत्वं चेति । ग्र इत्यवयवषष्ठीति चोद्यम् । पिपरुरिति । पॄ लङ् झि शप् श्लुर्द्विर्वचनमर्तिपिपर्त्योश्चेतीत्वं सिजभ्यस्तेति जुस् जुसि चेतिगुणः ॥

॥ भा० ॥ अथोभयं निवृत्तम् । ततोऽभक्तः । कश्चात्र विशेषः । अभक्ते दीर्घलत्वयगभ्यस्तस्वरहलादिःशेषविसर्जनीयप्रतिषेधः प्रत्ययाऽव्यवस्था च । यद्यभक्तः । दीर्घत्वं न प्राप्नोति । गीः पूः । रेफवकारान्तस्य धातोरिति दीर्घत्वं न प्राप्नोति । किं पुनः कारणं रेफवकाराभ्यां धातुर्विशेष्यते न पुनः पदं विशेष्यते । रेफवकारान्तस्य पदस्येति । नैवं शक्यम् । इहापि प्रसज्येत । अग्निर्वायुरिति । एवं तर्हि रेफवकाराभ्यां पदं विशेषयिष्यामो धातुनेकम् । रेफवकारान्तस्य पदस्येको धातोरिति । एवं प्रियं ग्रामणि कुलमस्य प्रियग्रामणिः प्रियसेनानिः । अत्राऽपि प्राप्नोति । तस्माद्धातुरेव विशेष्यते । धातौ च विशेष्यमाणे इह दीर्घत्वं न प्राप्नोति । गीः पूः । दीर्घ । लत्व । लत्वं च न सिध्यति । निजेगिल्यते । ग्रो यङीति लत्वं न प्राप्नोति । नैष दोषः । ग्र इत्यनन्तरयोगैषा षष्ठी । एवमपि स्वर्जेगिल्यत इत्यत्रापि प्राप्नोति । एवं तर्हि यङा आनन्तर्यं विशेषयिष्यामः । अथवा ग्र इति पञ्चमी । लत्व । यक्स्वर । यक्स्वरश्च न सिध्यति । गीर्यते स्वयमेव पूर्यते स्वयमेव । अचः कर्तृयकीत्येष स्वरो न प्राप्नोति । रेफेण व्यवहितत्वात् । नैष दोषः । स्वरविधौ व्यञ्जनमविद्यमानवद्भवतीति नास्ति व्यवधानम् । यक्स्वर । अभ्यस्तस्वर । अभ्यस्तस्वरश्च न सिध्यति । मा हि स्म ते पिपरुः । मा हि स्म ते बिभरुः । अभ्यस्तानामादिरुदात्तो भवति अजादौ लसार्वधातुके इत्येष स्वरो न प्राप्नोति । रेफेण व्यवहितत्वात् ॥

॥ वि० ॥ स्वरोद्देश्यकविधौ चेदम् । अत एवाऽचः कर्तृ इति सूत्रेऽच इति चरितार्थम् । तथाऽपि तदनाश्रयेणैकदेश्युक्तिर्भाष्यमिति तत्त्वम् । भाष्ये माङ्प्रयोगोऽडभावाय । तस्मिन्हि अट्स्वरः स्यात् । हिप्रयोगो हि चेति निघातनिषेधाय स्मशब्दो लङ्सिद्धये ॥

॥ वि० ॥ अभ्यासावयवस्येति । गर्भवदनवयवस्यापि तद्ग्रहणेन ग्रहणं तन्मध्यपतितन्यायेन न त्वेतावतावयवत्वमितिभ्रमितव्यमितिभावः । यदा ऋ-वर्णान्ताभ्यासस्येत्यर्थे पूर्वं तकारस्य हलादिः शेषेण निवृत्तावुरदत्त्वं ततः पुनर्हलादिः शेषो न स्याद् अनवयवत्वादितिभावः । नचैवं लक्ष्ये लक्षणस्ये-तिन्यायेन पुनर्हलादिः शेषानापत्तिरितिवाच्यम् । लक्ष्यभेदात् । न्वकुटीशब्दात्तु भवादावण् । न्वपतेर्दित्यदित्यादित्येतिण्यः । ननु रेफान्तान्न सुब्विधिरिति कथं तदन्तस्य

॥ कै० ॥ वव्रत इति । अभ्यासावयवस्यानादेर्हलो निवृत्त्या भाव्यमिति रेफस्य निवृत्त्यसिद्धिः । नार्कुट इति । यस्मात्सु-प्तिङ्विधिस्तदादि सुवन्तं तिङन्तं चेति रेफान्तस्य पदत्वाद्विसर्जनीयप्रसङ्गः । किरत इति । एकवचने किरतीति नित्य-त्वात्पूर्वं विकरणः । आङ्गं तु कार्य्यमनित्यम् । अकृते हि विकरणे गुणः प्राप्नोति कृतेत्विर्त्वमिति । द्विवचने तु द्वयोरपि

॥ भा० ॥ नैष दोषः । स्वरविधौ व्यञ्जनमविद्यमानवद्भवतीति नास्ति व्यवधानम् । अभ्यस्तस्वर । हलादिः शेष । हलादिः शेषश्च न सिध्यति । वव्रते वव्रधे । अभ्यासस्येति हलादिः शेषो न प्राप्नोति । हलादिः शेष । विसर्जनीय । विसर्जनीयस्य प्रतिषेधो वक्तव्यः । नार्कुटो नार्प्यत्यः । खरवसानयोर्विसर्जनीय इति विसर्जनीयः प्राप्नोति । विसर्जनीय । प्रत्ययाव्यवस्था च । प्रत्यये च व्यवस्था न प्रकल्पते । किरतः गिरतः ॥

॥ कै० ॥ नित्यत्वात्परत्वादित्त्वं तत्र रेफोऽभक्तत्वान्न धात्ववयव इति विकरणो न स्यात् । स हि धातोःपरो विधीयते अथ विकरणात्परो रेफस्तदाऽप्यणः परो न स्यादितिव्यवस्था द्वयोर्न प्रकल्पते अथ व्यवहितेऽपि परशब्दस्य प्रवृत्तिस्तथापि समीहिता व्यवस्था न प्रकल्पत इति प्रत्ययाव्यवस्थोक्ता ॥

॥ वि० ॥ प्रत्ययलक्षणेन पदत्वमत आह । यस्मादिति । यस्माद् विधिस्तद्वृत्ति न्वशब्दत्वं नाशब्दस्य स्थानिवद्भावेन तदादित्वं च रेफान्तस्य मुख्यं सुबन्तत्वं च प्रत्यय-लक्षणेनेतिभावः । एकवचनान्ताऽनुदाहरणे बीजमाह । एकेति । नित्यत्वादिति । विकरणविधौ सार्वधातुक इतिविषयसप्तमी अन्यथाऽभक्तत्वेऽनन्तरसार्वधातुकाऽभावेन विकरणाप्राप्तेर्नित्यत्वं व्याहतं स्यादितिभावः । नित्यत्वादिति । ततो ङित्वादित्त्वस्यैव प्रवृत्तेः । न प्रकल्पत इति । नियमेन विकरणस्यैव व्यवहितपरत्वं न सिध्येदितिभावः ॥



॥ वि० ॥ न्वकल्पेति । न्वशब्दात्कल्पः प्रत्ययः । पदसंज्ञेति । स्वादिष्वित्यनेन यद्यसौ कल्पशब्दावयवस्स्यात् तदा स्वावयवभूतरेफान्तस्य ना-रित्यस्य न स प्रत्ययः परः स्यादितिभावः । परादिरित्यत्र परशब्देन परत्वपर्याप्त्यधिकरणे यावान् स सर्वोऽपि गृह्यते न तदवयवोऽपीति तात्प-

॥ कै० ॥ गीर्ष्विति । परादौ सुब्ग्रहणेन गृह्यत इति न पदान्तत्वमितिभावः । अभक्तपक्षेऽपि तदादिवचनात्प्राप्तिरिति कर्तव्यमवधारणं कल्पिपदेऽपि न्वकल्पशब्दादिजि वृद्धौ च रेफः प्रत्ययसमुदायस्य कल्पिशब्दस्य भक्तत्वादवयवो न तु कल्पशब्दस्य । ततश्च न्वशब्दस्य कल्पशब्दे परतः पदसंज्ञा विधीयमाना तदादीत्यधिकाराद्रेफान्तस्य भवतीति विसर्जनीयप्रसङ्गः । पदशब्देन च

॥ भा० ॥ रेफोऽप्यभक्तः प्रत्ययोऽपि तत्र व्यवस्था न प्रकल्पते । एवं तर्हि पूर्वान्तः करिष्यते । पूर्वान्ते चेवधारणं विसर्जनीयप्रतिषेधो यक्स्वरश्च । यदि पूर्वान्तः रोरवधारणं कर्तव्यम् । रोःसुपि रोरेव सुपि नान्यस्य सर्पिष्षु । धनुष्षु । इह माभूत् । गीर्षु पूर्षु । परादावपि सत्यवधारणं कर्तव्यं चतुर्ष्वित्येवमर्थम् । विसर्जनीयप्रतिषेधः । विसर्जनीयस्य च प्रतिषेधो वक्तव्यः । नार्कुटः । नार्पत्यः । खरवसानयोर्विसर्जनीय इति विसर्जनीयः प्राप्नोति । परादावपि विसर्जनीयस्य प्रतिषेधो वक्तव्यः नार्कल्पिरित्येवमर्थम् । कल्पिपदसंघातभक्तोऽसौ नोत्सहतेऽवयवस्य पदान्ततां विहन्तुमिति विसर्जनीयः प्राप्नोति ॥

॥ कै० ॥ पद्यतेऽनेनार्थ इति प्रत्यय उच्यते तेन प्रत्ययसमुदायभक्तो रेफः कल्पिशब्दे परतो व्यवस्थितो न कल्पशब्दस्यावयव इति तयोः पौर्वापर्यमस्त्येवेति अवयवस्यात्मन एव पदान्ततां विहन्तुं नोत्सहत इत्यर्थः । क्वचित्तु कल्पपदसंघातभक्त इतिपाठः तत्रायमर्थः । कल्पशब्दस्य सम्बन्धि यत्पदं नार्कल्पिरिति तस्य पदस्य योऽवयवः प्रत्ययसंघातः कल्पिशब्दस्तद्भक्त इत्यर्थः ॥

॥ वि० ॥ र्थम् । ननु प्रत्ययस्य कथं पदत्वमत आह । पदशब्देनेति । कल्पिरूपः पदसंघातः पदसमुदाय इतिभाष्यार्थः । तस्मात्पक्षद्वयेऽपि विसर्जनीय-प्रतिषेधस्य वक्तव्यतया नायं दोष इतिभावः । इह्वेर्वहिरङ्गाऽसिद्धत्वं तु नोक्तं त्रिपादीस्थेऽन्तरङ्गे तत्परिभाषाया अप्रवृत्तेः ॥

॥ वि० ॥ भाष्ये उपदेश इतिवर्त्तत इति । अचः कर्त्तव्यव तास्यनुदात्तेदित्यत इत्यर्थः । भाष्ये ऽथवा पुनरस्तु परादिरिति । र्वधारणा-विसर्जनीयप्रतिषेधयोः कर्त्तव्यतायाः पूर्वान्तपरादिपचयोस्समत्वात् परादिपचो वा वक्तव्यः पूर्वान्तो वेत्यत्र न विशेष इति चेत्कश्चिद् ब्रूयात् तत्राह वार्त्तिककारः परादावितीत्यर्थः । परादावितिवार्त्तिके पुगन्तद्वन्द्वस्य प्रतिषेधपदेन षष्ठीतत्पुरुषो वक्तव्य इतिशेषः । चङ्युपधाह्रस्वत्वं वक्तव्यमग्रे सर्वत्रायमेव शेषो

॥ कै० ॥ धिनुत इति । एकवचने असत्यप्यकारलोपे आङ्गुणेन वा विकरणस्य वा गुणे पररूपेण धिनोतीति सिध्यतीति द्विवचनं समुदाहृतम् । आर्द्धधातुकोपदेश इति । सन्नियोगेन चाऽकारस्य विधानादार्द्धधातुकप्रतिपत्तिकालेऽकारान्तप्रतिपत्त्या सिद्धो लोपः । निर्द्दिश्यमानस्येति ।

॥ भा० ॥ यक्स्वर । यक्स्वरश्च न सिध्यति । गीर्यते स्वयमेव स्तीर्यते स्वयमेव । अचः कर्त्तृयकीत्येष स्वरो न प्राप्नोति । नैष दोषः । उपदेश इति वर्त्तते । अथवा पुनरस्तु परादिः । परादावकारलोपौत्वपुक्प्रतिषेधश्चङ्युपधाह्रस्वत्वमिटोव्य-वस्थाऽभ्यासलोपोऽभ्यस्तादिस्वरो दीर्घत्वञ्च । यदि परादिः । अकारलोपः प्रतिषेध्यः । कर्त्ता हर्त्ता । अतो लोप आर्द्धधातु-क इत्यकारलोपः प्राप्नोति । नैष दोषः । उपदेश इतिवर्तते । यद्युपदेश इतिवर्तते । धिनुतः कृणुतः । अत्र लोपो न प्राप्नोति । नोपदेशग्रहणेन प्रकृतिरभिसम्बध्यते । किं तर्हि । आर्द्धधातुकमभिसम्बध्यते आर्द्धधातुकोपदेशे यदकारान्त-मिति । अकारलोप । औत्व । औत्वञ्च प्रतिषेध्यम् । चकार जहार । आत औ णल इत्यौत्वं प्राप्नोति । नैष दोषः । निर्द्दिश्यमानस्यादेशा भवन्तीत्येवं न भविष्यति ॥

॥ कै० ॥ नन्वादेः परस्येति रेफस्यौत्वेन भाव्यम् । नैष दोषः । णल इत्यनेन यत्प्रत्यायितं प्रयोगविषयमकारमात्रं तस्याकारान्तादङ्गादुत्त-रस्यादेशः प्रवर्त्तते सरेफस्य त्वनुमीयमानत्वादादेशाभावः । प्रत्याय्यप्रत्यायकाभेदविवक्षया षष्ठीनिर्द्दिष्टस्यादेशा इत्युच्यते ॥

॥ वि० ॥ बोध्यः । उपदेश इति वर्त्तत इति । अतो लोप इत्यत्रानुदात्तोपदेश इत्यत इत्यर्थः । पररूपेण । अतो गुण इत्यनेन । नन्विति । आदेः परस्येति निर्द्दिश्यमानपरिभाषाबाधकमित्यभिमानः । तस्यैवायमनुपसंहार इत्युत्तरम् । ननु सूत्रे उच्चारितस्य णलो नादेशः किन्तु तत्प्रत्यायिताकारस्येति षष्ठीनिर्द्दिष्ट-स्यादेशा इत्ययुक्तं स्यादत आह । प्रत्याय्येति । निर्द्दिश्यमानस्येत्यस्य प्रतिपादितस्येत्यर्थे तु पादन्तस्यापि पदादेशापत्तिरितिबोध्यम् ॥



॥ वि० ॥ यदि त्विति । तथा तु वक्तुमशक्यम् । सर्वत्रादेशापत्तेरिति भावः । कथन्तर्हि इडपीत्यादि भाष्यमत आह । प्रवृत्तौ वेति । नेड्वशीत्यत्रोपदेश इत्यपकृष्योपदेशे वशादेरेव निषेध इतिभावः । भाष्ये वृत इति । ऋवर्णान्ताभ्यासस्याऽदित्यर्थे पूर्वं तलोपे पश्चाद्रेफ-स्तस्य लोप इति पचे इदम् । वत्रे इत्यप्युदाहार्यम् । प्रकर्त्त्रेति । तृन् । एष स्वरः । पूर्वपदप्रकृतिस्वरः । कृदुपदेशकालिकतादिप्रत्ययप्रतीत्यर्थं तादावितिसूत्रे

॥ कै० ॥ रेफेणेति । यद्रूपं षष्ठीनिर्द्दिष्टमकारमात्रं तद्व्यवहितमित्यर्थः । यदि तु प्रत्ययस्येत्युच्यते लिट इति वा तदा व्यवधानाऽभावात् स्यादेवा-

॥ भा० ॥ यस्तर्हि निर्द्दिश्यते तस्य कस्मान्न भवति । रेफेण व्यवहितत्वात् । औत्व । पुक्प्रतिषेध । पुक् च प्रतिषेध्यः । कारयति हारयति । आतः पुगिति पुक् प्राप्नोति । पुक्प्रतिषेध । चङ्युपधाह्रस्वत्व । चङ्युपधाह्रस्वत्वञ्च न सिध्यति । अचीकरत् अजीहरत् । णौ चङ्युपधाया ह्रस्व इति ह्रस्वत्वन्न प्राप्नोति । इटोव्यवस्था । इटश्च व्यवस्था न कल्पते । आस्तरिता निपरिता । इडपि परादौ रेफोऽपि तत्र व्यवस्था न प्रकल्पते । अभ्यासलोप । अभ्यासलोपश्च वक्तव्यः । वृते ववृधे । अभ्यासस्य हलादिशेषो न प्राप्नोति । अभ्यासलोप । अभ्यस्तस्वर । अभ्यस्तस्वरश्च न सि-ध्यति । मा हि स्म ते पिपरुः । मा हि स्म ते बिभरुः । अभ्यस्तानामादिरुदात्तो भवत्यजादौ लसार्वधातुक इत्येष स्वरो न प्राप्नोति । अभ्यस्तस्वर । तादिस्वर । तादिस्वरश्च न सिध्यति । प्रकर्त्ता प्रकर्त्तुम् । तादौ च निति कृत्यता-वित्येष स्वरो न प्राप्नोति । नैष दोषः । उक्तमेतत् । कृदुपदेशे वा ताद्यर्थमिडर्थमिति । तादिस्वर ॥

॥ कै० ॥ देशः । आस्तरितेति । नित्यत्वाद्गुणे रपरत्वे च कृते नेड्वशि कृतीति प्रतिषेधादप्रवृत्तिलक्षणेटोऽव्यवस्था । प्रवृत्तौ वा रेफात्पूर्व इडिति अनिष्टा व्यवस्था प्राप्नोति ॥

॥ वि० ॥ कृद्ग्रहणमिति भाष्योदाहृतवार्त्तिकार्थः । तादावितिसूत्रेण गतेः स्वरो विधीयते क्रियायोगे च गतित्वम् । क्रियावाची च धातुः । तत्र तिङन्ते पूर्वपदाभावेन कृदन्ते एव सिद्धमिति कृद्ग्रहणमुक्तार्थम् । नच कृद्ग्रहणाभावे तादित्वमुत्तरपदस्य विशेषणं स्यात् तथा च प्रतरितेत्यादावेव स्यादिति तस्य कृद्विशे-षणत्वाय तदितिवाच्यम् । श्रुतनित्प्रत्ययविशेषणताया एव न्याय्यत्वादितिदिक् ॥

॥ वि० ॥ ननु रेफस्य परादित्वेऽपृक्तत्वाऽभावाद्धलोपो न प्राप्नोतीति कुतो नोक्तमत आह । अन्तरङ्गत्वादिति । तदानीं सुपोऽभावादाह । कल्पनायामिति । पदस्य विभज्यान्वाख्यानमिति भावः । पूर्वान्तेति । नार्कुटादौ वचनेनैव निर्वाहो भाष्ये उक्त इति बोध्यम् । एवञ्च रपर इति अवयववाचिपरशब्देन षष्ठ्यर्थे बहुव्रीहिरितिध्वनितम् । अवयवत्वञ्चावयवसादृश्ये पर्यवस्यति न हि वर्णस्य वर्णान्तरमवयवो भवति अत एव प्रसङ्गाऽवस्थायां रपरत्वे गुणादिशब्देन विधानं यदागमा इतिन्यायेन विशिष्टस्य गुणादित्वात् । एवञ्च ऋवर्णादचि पूर्वपरयोरन्तरतमो रपरोऽण् भवतीत्यर्थ इति बोध्यम् । गुणादिशब्देनाऽरारोर्ग्रहणाऽभावे तु ऋकारस्य गुणवृद्धी अरारावेवेति नियमो न स्यात् । गुणादिशब्देन अकारादे रेफः परो यस्मात्तादृशस्य विधानं गुणत्वादिकञ्चा-

॥ कै० ॥ गीरिति । अन्तरङ्गत्वाद्धिलोपे कृते इत्वे रपरत्वे च सुपोऽयमादौ रेफ इतिकल्पनायां रात्सस्येति सलोपे कृते दीर्घत्वं न

॥ भा० ॥ दीर्वे । दीर्घत्वं च न सिध्यति । गीः पूः । रेफवकारान्तस्य धातोरिति दीर्घत्वं न प्राप्नोति ॥ ❁ ॥
अलोऽन्त्यस्य । किमिदमल्ग्रहणमन्त्यविशेषणम् । आहोस्वित् आदेशविशेषणम् । किञ्चातः । यद्यन्तविशेषणम् ।
आदेशोऽविशेषितो भवति । तत्र को दोषः । अनेकालप्यादेशोऽन्त्यस्य प्रसज्येत ॥

॥ कै० ॥ स्यादिति पूर्वान्तपक्षोऽत्र स्थितः ॥ ❁ ॥ अलोऽन्त्यस्य । किमिदमिति । षष्ठीप्रथमयोर्निर्देशस्य साम्यात् प्रश्नः ॥

॥ वि० ॥ कारादिनिष्ठमेव तेन च नान्तर्यम् । एतदेवाभिप्रेत्य रदाभ्यामितिसूत्रे भाष्ये गुणो भवति वृद्धिर्भवतीति रेफशिरा गुणवृद्धिसंज्ञकोऽभिनिर्वर्त्तत इति वक्ष्यति । अत एव यद्यन्त इतिवर्त्तते ततः पूर्वान्त इत्युपक्रमस्थभाष्यमेकदेश्युक्तिः । तथाहि सति यथा परादिपक्षे नार्कल्पिरित्यादौ रेफस्य कल्पीतिसमुदायावयवत्वोपपत्तये परत्वपर्याप्त्यधिकरणादिरित्यर्थस्तथा पूर्वान्त इत्यस्य पूर्वत्वपर्याप्त्यधिकरणान्त इत्यर्थापत्तौ उक्तदोषो रदाभ्यामितिसूत्रस्थभाष्यविरोधश्चेत्याहुः ॥ ❁ ॥ अलोऽन्त्यस्य । भाष्ये प्रसज्येतेत्यनन्तरं तन्निवृत्तये अनेकाल् सर्वस्येतिवाच्यं स्यादिति शेषः । नन्वलन्त्यस्येत्युच्यमाने सूत्रभेदः स्यादत आह । प्रथमेति । बहुत्वस्याविवक्षितत्वं दर्शयितुमेवमुक्तमितिभावः ॥



॥ वि० ॥ प्राप्नोतीति । लोपस्याभावरूपत्वेनाऽलृपत्वाऽभावादितिभावः । एवञ्चायं पक्षो दुष्ट एव । क्सस्याऽचीति लोपे प्रकृते लुग्वा दुहेति लुग्ग्रहणस्य प्रथमान्तपक्षेऽल्ग्रहणमनेकाल्भिन्नलक्षकमित्यर्थज्ञापकत्वमिति नाऽयं दोष इति भाष्याशयमन्ये । भाष्ये इदं नियमार्थमिति । इदमा सूत्रं न परामृश्यते । अप्राप्तान्त्यादेशविध्यर्थत्वात्तस्य किन्त्वल्पदमिति तस्य नियमार्थत्वमुपपादयति । अन्त्यस्येति । अलोऽपीति । अलात्मकादेशस्याऽपीत्यर्थः । अपिनानेकालोऽपि । नत्विति । षष्ठी स्थान इत्यनुवर्त्त्य स्थानषष्ठीबोधितान्त्यस्येति व्याख्यानादित्यर्थः । यत्तु यथा तथा यथापुरयोरिति सूत्रे न यथातथाऽयथातथा

॥ कै० ॥ यदि पुनरिति । प्रथमाबहुवचनम् अल इति यदि व्याख्यायेतेत्यर्थः । अस्मिंश्च पक्षे रहोरजसां लोपश्चेति लोपः सर्वादेशः प्राप्नोति । विरजीकरोतीति । इदं नियमार्थमिति । अन्त्यस्याऽऽदेशा भवन्तीत्यलोऽप्याक्षेपादल्ग्र-

॥ भा० ॥ यदि पुनरलन्त्यस्येत्युच्यते तत्राऽयमप्यर्थः । अनेकाल् शित्सर्वस्येत्येतन्न वक्तव्यं
भवति । इदं नियमार्थं भविष्यति । अलेवान्त्यस्य भवति नान्य इति । एवमप्यन्त्योऽवि-
शेषितो भवति । तत्र को दोषः । वाक्यस्याऽपि पदस्याऽप्यन्त्यस्य प्रसज्येत ॥

॥ कै० ॥ हणमनल्व्यावृत्त्यर्थमितिभावः । वाक्यस्यापीति । दोषपरत्वादेवमुक्तम् । न तु वाक्यं षष्ठीनिर्दिष्टमस्ति पदस्य तु परमानडुह्यामित्यत्राऽनडुच्छब्दस्याऽन्त्यस्य सर्वस्य दत्वं प्राप्नोति ॥

॥ वि० ॥ अयथातथाभावोऽयाथातथ्यमितिभाष्यदर्शनात् तत्प्रामाण्येन निपातसमुदायात् प्रत्ययो निपातसमुदायेन नञ्समास इत्यङ्गीकार्यम् । तत्रायथातथाशब्दात् ष्यञि यस्येति लोपोऽवर्णान्ताङ्गस्य भसंज्ञकस्य जायमानस्तदन्तस्य यथातथेति पदसमुदायस्य स्यादिति । तन्न । निर्दिश्यमानपरिभाषया सिद्धेः । तदनाश्रयेण वा तदुक्तिः । पदस्य त्विति । अधिकृतस्य पदस्येत्यस्य वस्त्रादिभिर्विशेषणादित्यर्थः ॥

॥ वि० ॥ यदि खल्विति । पराभिप्रायं वदता सूचितमन्याद्दशं स्वाभिप्रायं प्रकटयति । अवश्येति । असौ योगः । अनेकाल् शिदिति-योगः । अतो भिस इत्यादावादेः परस्येत्यादिवाधनार्थं इति भावः । नन्वस्यावश्यकत्वेऽन्त्यविशेषणेऽपीत्यादिग्रन्थोऽसङ्गतोऽत आह । अथेति । अलिति प्रथमान्तं मण्डूकानुवृत्त्यादेः परस्येत्यत्र सम्बध्यते इत्येवादौ न दोषः । तातङ्यपि ज्ञापकात्सर्वादेशत्वं भविष्यतीतिभावः । भाष्ये ङिच्चेवानेकालन्त्यस्येति । अलूरूपङिदित्यस्य फलाभावादनेकालितिलभ्यम् । श्रवश्वाऽस्य सूत्रस्यानेकालादेशेऽप्रवृत्त्यैतत्साहचर्यादादेः परस्येत्यस्याऽप्यनेकालादेशेऽप्रवृत्तिरितिदिक् । किमर्थं

॥ कै० ॥ यदि खल्वपीति । अवश्यकर्त्तव्योऽसौ योगोऽपवादविप्रतिषेधार्थः । अथ लाघवमात्रे आदरस्तत्राप्युच्यते ।

॥ भा० ॥ यदि खल्वप्येषोऽभिप्रायस्तन्न क्रियेतेति अन्त्यविशेषणेऽपि सति तन्न करिष्यते ।
कथम् । ङिच्च अलोऽन्त्यस्येत्येतन्नियमार्थं भविष्यति । ङिदेवाऽनेकालन्त्यस्य भवति नान्य इति ।
किमर्थं पुनरिदमुच्यते । अलोऽन्त्यस्येति स्थाने विज्ञातस्याऽनुसंहारः । अलोऽन्त्यस्येत्युच्यते स्थाने
विज्ञातस्यानुसंहारः क्रियते । स्थाने प्रसक्तस्येति ॥

॥ कै० ॥ अन्त्यविशेषणेऽपीति । स्थाने विज्ञातस्येति । षष्ठी स्थानेयोगेत्यनुवर्त्तते । तेन या षष्ठी स्थानेयोगत्वेन विज्ञाता साऽन्त्यमलमनुसंह्रियते । आदेशो वा यो निश्चितः सोऽन्त्यस्यालः स्थाने इत्यनुसंह्रियते ॥

॥ वि० ॥ पुनरिति । किं स्थानषष्ठीनिर्देशविषयमुत षष्ठीमात्रविषयमिति प्रश्नः । स्थानेविज्ञातस्य कस्येत्यपेक्षायामाह । षष्ठीति । स्थाननिरूपितसम्बन्धार्थकत्वेन ज्ञातस्य षष्ठीरूपप्रत्ययस्येत्यर्थः । नन्वेवं विज्ञाताया इति वक्तुं युक्तमत आह । आदेश इति । स्थानषष्ठीसम्बन्धादादेशत्वेन यो विज्ञात इत्यर्थः । अन्येतु अलोऽन्त्यस्येति यदुच्यते तेन स्थाने विज्ञातस्य समुदायस्थाने प्रसक्तस्यान्त्येऽल्यनुसंहार उपसंहारस्तत्स्थानिकत्वमात्रं क्रियते बोध्यत इति भाष्याक्षरार्थः । स्थाने विज्ञातस्येत्यस्य व्याख्या स्थाने प्रसक्तस्येति कैयटव्याख्याने एतद्वैयर्थ्यमातीत्याहुः ॥



॥ वि० ॥ षष्ठीमात्रमिति । उपलक्षणमेतत् । षष्ठीमात्रोच्चारणेन विधीयमानं चेत्यपि बोध्यम् । ततो यदुक्तमिति । आकारावयवत्व प्रणिदापयतीत्यादौ णत्वं न स्यादित्यर्थः । नचाऽवयवावयवः समुदायावयव इति निर्वाहः । यस्याऽवयवस्तत्र तद्विशिष्टे यत्र तदवयववृत्तिधर्मबुद्धिस्तादृशस्यावयवावयवस्य समुदायावयवत्वबुद्धिर्हि लोकसिद्धा यथा भुजाऽवयवाङ्गुल्यादिविशिष्टे भुजत्वबुद्धिसत्त्वात्तदवयवकशरीरावयवत्वबुद्धिरङ्गुल्यादौ । नचैवमवाऽऽकारावयवपकारादिविशिष्टे वर्णत्वबुद्धिः । अर्थवत आगमेन तु तद्विशिष्टे तदर्थवत्त्वबुद्ध्या तद्बुद्धिसत्त्वेन भवत्येव समुदायावयवत्वमिति भवितेत्यादावङ्गावयवत्वं सम्भवतीति इटो गुणनिषेधचारितार्थ्यमपि । वर्णस्य वर्णावयवत्वन्तु वाचनिकं गौणं तत्र यावद्वचनं वाचनिकमितिन्यायेन समुदायावयवत्वे मानाभाव इत्याशयः ।

॥ कै० ॥ इतरथेति । यदि षष्ठीमात्रमनुसंह्रियेतेत्यर्थः । तत्र लवितेति तृच ऋकारात्पूर्वमिट् प्राप्नोतीति दोषः । दापयतीति पुगाकारस्य स्या॒ । ततश्च यदुक्तमर्थवतो ह्यागम इति तन्न युज्यते । यदि पुनरिति । षष्ठी स्थानेयोगेत्यनेनाऽस्यैकवाक्यता । अत्र तु प्रकरणे करणं ङिच्चेत्यादेः सम्बन्धार्थं तत्रायमर्थो भवति । शास्त्रे या षष्ठी साऽन्त्येऽलि सा च स्थानेयोगैवेति न

॥ भा० ॥ इतरथा ह्यनिष्टप्रसङ्गः । इतरथा ह्यनिष्टं प्रसज्येत । टित्किन्मितोऽप्यन्त्यस्य स्युः । यदि
पुनरयं योगशेषो विज्ञायेत । योगशेषे च । किम् । अनिष्टं प्रसज्येत । टित्किन्मितोऽप्यन्त्यस्य स्युः ॥

॥ कै० ॥ तु स्थाने विज्ञातस्य पश्चादनुसंहारः प्रतिपत्तिगौरवप्रसङ्गादितिभावः । अनिष्टमिति । आद्यन्तौ टकितौ मिदचोऽन्त्यात्पर इत्येताभ्यां स्थानेयोगत्वमेव बाध्यते तुल्यजातीयत्वात्सम्बन्धस्य सम्बन्धान्तरेण बाधोपपत्त्या । पश्चात्तु यद्रूपं तदन्त्य एवाऽल्यवस्थितमितिपूर्ववद्दोषप्रसङ्गः । अनुसंहारः पुनरनुसंहारान्तरेणादेः परस्याऽनेकाल्शित्सर्वस्येत्यनेन बाध्यते ॥ ❁ ॥

॥ वि० ॥ सम्बन्धार्थमिति । अन्त्यस्येत्यनेनेतिभावः । शास्त्रे येति । या षष्ठी सा स्थानेयोगैव सा चाऽन्त्येऽलीति तु नार्थः । स्थानेयोगेतिपदाऽऽवृत्त्यापत्तेः । इदमेव प्रतिपत्तिगौरवं तस्माच्छास्त्रे या षष्ठी सा स्थानेयोगैवाऽन्त्येऽल्येव चेति वाक्यार्थ इतिभावः । सा चेति । सा षष्ठी स्थानेयोगैव चेत्यन्वयः । स्थानेयोगत्वमेव बाध्यत इति । अत्र हेतुस्तुल्येत्यादिरुपपत्त्येत्यन्तः । सम्बन्धस्येत्यादि । सम्बन्धनिरूपकस्य सम्बन्धनिरूपकान्तरेणेत्यर्थः । सन्नियोगशिष्टन्यायस्तु न परिभाषाविषये । तस्मिन्नित्यादेरुत्तराङ्गविकलायास्तत्र तत्रोपस्थितिस्वीकारादित्याशयः । इत्यनेन बाध्यत इति । नत्वाद्यन्तौ टकितावित्यनेनेतिभावः ॥ ❁ ॥

॥ वि० ॥ ङिञ्च । भाष्ये कस्मान्न भवतीति । येन नाप्राप्तिन्यायेनाऽस्यानेकाल्शित्यस्यापवादत्वादितिभावः । उत्तरस्य त्वयं भावः । नेदमपूर्वविधायकं किन्तु तत्र तत्र ङित्करणसामर्थ्यसिद्धानेकाल्त्वेतद्बाधानुवादकम् । अनुवादफलन्तु ङित्त्वसामर्थ्यादर्थान्तरकल्पनानिवृत्तिः । एवञ्च प्रकृते नास्य प्रवृत्तिः । प्रवृत्तौ हि शास्त्रस्यापूर्वविधायकतापत्त्या गौरवापत्तिः । एवञ्च यत्र सर्वादेशे ङित्त्वस्य वैयर्थ्यन्तत्र तद्बाधः । यत्र तु न तत्र न तद्बाध इतिभावः । विप्रतिषेधादिति । परिभाषात्वविरोधादित्यर्थः । यदि सावकाशङित्त्वेऽपि प्रवृत्तिः स्यात्तदाऽनुवादत्वासम्भवेन परिभाषाप्रकरणविरोध इति भावः । यथाचैतत् तथानुपदमेव स्पष्टीभविष्यति । विप्रतिषेधे परमितिशास्त्रपरत्वे तु ङित्त्वस्य सावकाशत्वोक्तिरसङ्गता स्यात्सूत्रसावकाशत्वमेव हि विप्रतिषेधे बीजन्तत्स्य सूत्रस्य

॥ कै० ॥ ङिञ्च । विप्रतिषेधादिति । नन्वयमपवादोऽनेकाल्शिदित्युत्सर्गः । उत्सर्गापवादयोश्चायुक्तो विप्रतिषेधः ।

॥ भा० ॥ तस्मात्सुष्ठूच्यते । अलोऽन्त्यस्येति स्थाने विज्ञातस्याऽनुसंहार इतरथा ह्यनिष्टप्रसङ्ग इति ॥ ॥
ङिञ्च । तातङन्त्यस्य स्थाने कस्मान्न भवति ङिञ्चाऽलोन्त्यस्येति प्राप्नोति । तातङि ङित्करणस्य सावकाशत्वाद्विप्रतिषेधात्सर्वादेशः । तातङि ङित्करणं सावकाशम् ॥

॥ कै० ॥ नैतदस्ति । ङित्त्वस्यान्यार्थत्वसम्भवे सति दौर्बल्यात्सन्दिग्धोपस्थानोऽयं योग इत्यपवादत्वमेवात्र विषयेऽस्य नास्ति ॥

॥ वि० ॥ सर्वादेशप्राप्तिविषये क्वचिच्चारितार्थ्यम् । अवश्यप्राप्तिरेव च बाध्यत्वे बीजं दृष्टम् । किञ्च । विप्रतिषेधशास्त्रपरवार्त्तिकव्याख्यानपरभाष्ये शास्त्रद्वयावकाशप्रदर्शनशैली भाष्यकारस्य दृश्यते नचाऽत्र तथोक्तम्भगवता । यद्यप्यन्यत्रानुवादत्वं दोष उक्तश्शास्त्रस्य तथाऽपि परिभाषाणान्नियमरूपत्वेन तासु गुण एव तत्र हि प्राप्तानुवादादेवेतरनिवृत्तिरर्थात् । यथा व्रीहीनवहन्तीत्यवघातानुवादेन नखविदलनादिनिवृत्तिः । यथाच तस्मिन्नित्यादौ प्राप्तपूर्वस्येत्याद्यनुवादेन परादिनिवृत्तिः । किञ्च टप्यप्श्रवादिष्वनन्यार्थपित्त्वेषु चरितार्थस्यानुदात्तौ सुप्पितावित्यस्य जित्वरीत्यादौ तुक्संपादनेन चरितार्थपित्त्वे क्वरपि अन्तरङ्गेण प्रत्ययाद्युदात्तत्वेन बाधापत्तिस्तदाह । दौर्बल्यादिति । परिभाषात्वभङ्गकृतन्तदिति भावः । सन्दिग्धेति । आपाततः सन्देहः । पर्यालोचने त्वनुपस्थितिरेवेतिभावः । तदाहापवादत्वमेवेत्यादि । ङित्त्वसामर्थ्यकृतं हि तत्त्वमितिभावः ॥



॥ वि० ॥ ननु ङित्त्वं सर्वादेशत्वद्वारा गुणबाधनाद्यर्थं वोताऽन्यत्र क्लृप्तसर्वादेशत्वबाधफलकं वेतिशङ्कते । भाष्ये प्रयोजनं नामेति । सति सर्वादेशत्वे इति । अन्त्याऽऽदेशत्वे तु तत्सम्पादनेनैवाऽवयवे ङित्त्वस्य चारितार्थ्येन समुदायोपकारकत्वे मानाभावात् प्रत्ययस्य ङित्त्वाऽभावेन

॥ कै० ॥ प्रयोजनं नामेति । सति सर्वादेशत्वे ङित्करणं गुणवृद्धिप्रतिषेधार्थं स्यात् तदेव तु सर्वादेशत्वमलभ्यं ङित्त्वादन्त्यस्यैव प्रसङ्गादितिभावः । ङित्करणादिति । गुणवृद्धिप्रतिषेधार्थादितिभावः । एवन्तर्हीति । अन्तरेणाऽपि ङित्त्वमेकरित्यत्र

॥ भा० ॥ कोऽवकाशः । गुणवृद्धिप्रतिषेधार्थो ङकारः । तातङि ङित्करणस्य सावकाशत्वाद्विप्रतिषेधात्सर्वादेशो भविष्यति । प्रयोजनं नाम तद् वक्तव्यं यन्नियोगतः स्यात् । यदि चायं नियोगतः सर्वादेशः स्यात् तत एतत्प्रयोजनं स्यात् । कुतो नु खल्वेतत् ङित्करणादयं सर्वादेशो भविष्यति न पुनरन्त्यस्य स्यादिति । एवन्तर्ह्येतदेव ज्ञापयति न तातङन्त्यस्य स्थाने भवतीति । यदेतं ङितं करोति । इतरथा हि लोट एरुप्रकरण एव ब्रूयात् तिह्योस्तादाशिष्यन्यतरस्यामिति ॥ ॥ आदेः परस्य । अलोऽन्त्यस्यादेः परस्यानेकाल् शित्सर्वस्येत्यपवादविप्रतिषेधात्सर्वादेशः । अलोन्त्यस्येत्युत्सर्गः । तस्यादेः परस्यानेकाल् शित्सर्वस्येत्यपवादौ । अपवादविप्रतिषेधात् सर्वादेशो भविष्यति ॥

॥ कै० ॥ प्रकरणे तातेति विधीयमानेऽन्त्यादेशत्वं सिद्धमिति ङित्त्वादेव गुणवृद्धिप्रतिषेधार्थं ङित्त्वमिति विज्ञायते ॥

॥ वि० ॥ न गुणादिप्रतिषेधप्राप्तिरित्यर्थः । ङित्त्वादिति । गुणवृद्धिप्रतिषेधार्थत्वे सिद्धे सर्वादेशत्वं तस्मिंश्च तत्त्वमिति अन्योऽन्याश्रयेण सर्वादेशत्वाऽलाभेऽन्त्यस्यैव स्यादिति भावः । अन्तरेणाऽपीति । तथाच तत्सामर्थ्यात्सर्वादेशत्वद्वारा गुणवृद्धिबाधनार्थत्वमेवाऽस्येतिभावः ॥

॥ वि० ॥ अनेकाल् शि । ननु शित्पदाभावे कथं शित्करणादेवेतिभाष्यमत आह । सतीति । शकारोच्चारणसामर्थ्याद् भूतपूर्वाऽनेकाल्त्वमादाय शास्त्रप्रवृत्तिरितिभावः । यच्चेतत्सामर्थ्यात्फलप्रत्यासत्तेश्च विधानोत्तरमेवेत्संज्ञादिशास्त्रप्रवृत्तिर्लक्ष्ये इतिभाव इति । तन्न । अणुदित्सूत्रे इशि सवर्णग्रहणापत्तिपरभाष्येण सूत्रे एवेत्संज्ञालोपप्रवृत्तेः सूचनात् । नन्वेवं शकारादित्येव वक्तुं युक्तं किमित्पदेनेतिचेत् । न । फलान्तराभावेऽपि शकारोच्चारणस्य सप्रयोज-

॥ कै० ॥ अनेकाल् । शित्करणादेवेति । सति शकारेऽनेकाल्त्वादितिभावः । अनेकाल्त्वसंपादनेन च कृतार्थः शकार

॥ भा० ॥ आदेः परस्येत्यस्यावकाशः । द्व्यन्तरुपसर्गेभ्योऽप ईत् । द्वीपम् । अन्तरीपम् । अनेकाल् शित्सर्वस्येत्यस्याऽवकाशः । अस्तेर्भूः । भविता भवितुम् । इहोभयं प्राप्नोति । अतो भिस ऐस् । अनेकाल् शित्सर्वस्येत्येतद्भवति विप्रतिषेधेन । शित्सर्वस्येत्यस्याऽवकाशः । इदम इश् । इतः । इह । आदेः परस्येत्यस्याऽवकाशः स एव । इहोभयं प्राप्नोति । अष्टाभ्य औश् । शित्सर्वस्येत्येतद्भवति विप्रतिषेधेन ॥ ॥ अनेकाल् शित्सर्वस्य । शित्सर्वस्येति किमुदाहरणम् । इदम इश् । इतः । इह । नैतदस्ति प्रयोजनम् । शित्करणादेवाऽत्र सर्वादेशो भविष्यति । इदं तर्हि अष्टाभ्य औश् । ननुचात्रापि शित्करणादेव सर्वादेशो भविष्यति । इदं तर्हि । जसः शी । जश्शसोः शिः । ननुचात्रापि शित्करणादेव सर्वादेशो भविष्यति । अस्त्यन्यच्छित्करणे प्रयोजनम् ॥

॥ कै० ॥ इतीत्संज्ञकत्वाल्लुप्यत एव । अष्टाभ्य औशिति । आदेः परस्येत्यादेः प्राप्त इति भावः ॥

॥ वि० ॥ नत्वाल्लोप एवेत्कार्य्यमिति शस्येत्त्वं प्रवर्तत इतिसूचयितुं तथोक्तेः । तदाह । अनेकाल्त्वेति । भाष्ये ननु चात्रापीति । अपवादविप्रतिषेधादिति भावः । अस्त्यन्यदिति । एवञ्च तस्य सप्रयोजनत्वेन भूतपूर्वगत्याऽऽश्रयणे मानाभावेन नाऽनेकाल्त्वात्सर्वादेशत्वमपितु शित्वादेवेति शिद्ग्रहणं सूत्रे कार्य्यमितिभावः ॥



॥ वि० ॥ सर्वादेशात्प्राक् प्रत्ययादित्वाभावेन नेत्त्वमिति प्रतिपादयितुमन्त्यस्याऽयमित्यादि भाष्यं तदाचिपति । नन्विति । ततश्च सर्वादेशत्वं विनापि प्रत्ययादित्वाल्लभ्यत एवेत्त्वमितिभावः । षष्ठीमिति । सर्वनामसम्बन्धिनो जसः शी । नपुंसकाद्विहितयोर्जश्शसोः शिरिति चार्थः । एवञ्च परशब्देन परस्य विधानाभावान्न तत्प्रवृत्तिरितिभावः । तयोः परशब्दयोगे पञ्चमीत्वेऽप्याह । अथवेति । असत्यपि सूत्रे शिद्ग्रहण इत्यर्थः । श्यादयो यावन्ना-

॥ कै० ॥ अन्त्यस्याऽयमिति । ननु सर्वनाम्नो नपुंसकादिति च पञ्चमीनिर्देशादादेः परस्येत्यादेर्भाव्यं तत्किमुच्यतेऽन्त्यस्याऽयं भवन्निति । एवं तर्हि सर्वनाम्न इति षष्ठीं मन्यते नपुंसकादिति च विहितविशेषणमिति ज्ञापकत्वमेव शित्करणस्य । अथवाऽसत्यपीह

॥ भा० ॥ किम् । विशेषणार्थः शकारः । क्व विशेषणार्थेनार्थः । शि सर्वनामस्थानम् । विभाषा ङिश्योरिति । शित्सर्वस्येति शक्यमकर्त्तुम् । कथम् । अन्त्यस्याऽयं स्थाने भवन्न प्रत्ययः स्यात् । असत्यां प्रत्ययसंज्ञायामित्संज्ञा न स्यात् । असत्यामित्संज्ञायां लोपो न स्यात् । असति लोपे अनेकाल् । यदानेकाल् । तदा सर्वादेशः । यदा सर्वादेशः । तदा प्रत्ययः । यदा प्रत्ययस्तदेत्संज्ञा तदा लोपः । एवं तर्हि सिद्धे सति यच्छित्सर्वस्येत्याह तज्ज्ञापयत्याचार्य्यः ॥

॥ कै० ॥ शिद्ग्रहणे अनेकाल्त्वादादेः परस्येति वाधित्वा सर्वादेशो भविष्यतीति किं शिद्ग्रहणेनेति पुनरपि ज्ञापकमेव शिद्ग्रहणम् ॥

॥ वि० ॥ देशास्तावन्नेत्त्वलोपौ । आदेशाश्च परत्वात्सर्वस्यैवेतिभावः । नानुबन्धकृतमिति । एवञ्च शीप्रभृतीनामपि शित्वादेव सर्वादेशत्वं तस्याप्यनुबन्धत्वात् । नच विधानकाले उक्तरीत्या तस्य तत्त्वज्ञानाभावः । तद्योग्यतयैव तत्त्वात् । अन्यथा कप्रत्ययादीनां कादेर्वाक्यार्थबोधोत्तरं प्रत्ययलक्षान इत्संज्ञालोपाविति विधानकाले कस्याऽनुबन्धत्वज्ञानाभावेन नानुबन्धकृतमसारूप्यमित्यस्याऽप्राप्तौ विकल्पापत्तेः । शिदित्यस्यापीत्संज्ञायोग्यशकारवान् सर्वस्येत्यर्थ इति न दोष इति भाति ॥

॥ वि० ॥ अस्त्येश परिभाषेति। अनुवन्धानामल्व्यवहाराभावस्य ज्ञापनादितिभावः । अत एवानुवन्धकार्य्येष्वनल्विधाविति स्थानिवत्त्वनिषेधो न। अन्यथा क्त्वो ल्यपः कित्त्वं न स्यार् । नच पूर्वमनुवन्धलोपे तद्रहितस्यैव स्थानिवत्त्वात्तस्य न स्वाऽन्यवयवत्वम्। सूत्रे स्थानिषष्ठ्या निर्दिष्टस्यैव स्थानिपदवाच्यतया तदवयवत्वस्य ककारे सत्त्वात् । अन्यथाऽग्रहीदित्यादाविट ईटीति दीर्घो न स्यादिति स्थानिवत्सूत्रे निरूपयिष्यामः । भाष्ये तत्राऽसरूपेति ।

॥ कै० ॥ अनेकान्तेषु चानुवन्धेषु नास्त्येव नानुबन्धकृतमनेकाल्त्वमिति एकान्तेषु च तेषु ज्ञापकेन प्रयोजनम्।

॥ भा० ॥ अस्त्येषा परिभाषा । नानुबन्धकृतमनेकाल्त्वं भवतीति । किमेतस्य ज्ञापने प्रयोजनम् । तत्राऽसरूपसर्वादेशदाप्प्रतिषेधेषु पृथग् निर्देशोऽनाकारान्तत्वादित्युक्तं तन्न वक्तव्यं भवति । इतिश्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये प्रथमाध्यायस्य प्रथमे पादे सप्तममाह्निकम् ॥ ❋ ॥

॥ कै० ॥ इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे प्रथमाध्यायस्य प्रथमे पादे सप्तममाह्निकम् ॥ ❋ ॥

॥ वि० ॥ असरूपे क्तविषयेऽण्प्राप्तिर्दोषः । सर्वादेशे दिव औदिति सर्वादेशः स्यादितिदोषः । प्रतिषेधे । दैपो भेदेन निर्देशः कार्यः । तृतीये छेतुरनाकारान्तत्वादितीत्यर्थः। ज्ञापकमनावश्यकमित्याह । अनेकान्तेष्विति । एकान्तेषु चेति। अयमेव मुख्यः पच इति तस्य लोप इत्यत्र भाष्ये स्पष्टम् । इति कालोपनामशिवभट्टसुतसतीगर्भजनागोजिभट्टविरचिते महाभाष्यप्रदीपोद्योते प्रथमाध्यायस्य प्रथमे पादे सप्तममाह्निकम् ॥ ❋ ॥



॥ वि० ॥ स्थानिवदादेशः । स्थानिरूपमिति । नच सिद्धं धर्मिग्राहमित्यादिन्यायेन पूर्वोच्चारितस्योद्देश्यत्वबोधकेन स्थान्यादेशरूपं प्रतिपद्यत इत्येवार्थो युक्त इति वाच्यम्। प्रसिद्धस्थानिनां प्रसिद्धादेशविधाने वैयर्थ्यापत्तेः । अन्यत्र विधाने तु स्थानेऽन्तरतम इतिसूत्रोक्तन्यायेनाव्यवस्थापत्तेस्तस्य न्यायस्य सूत्रकृताऽप्यत्र त्यागाच्च । अत एव भाष्यकृता स्थानी संज्ञेत्येवोक्तं नत्वादेशः संज्ञेतीतिबोध्यम् । वा लिटीति । नच चक्षिङः ख्याञित्यनेनाऽनेन च सर्वत्रार्द्धधातुके ख्याञो विकल्पे सिद्धे लिट्येव वेति नियमार्थं स्यादिति वाच्यम् । दोषदुष्टनियमाऽपेक्षया एतत्सूत्रे एतदतिरिक्तार्थकत्वज्ञापकताया एवौचि-

॥ कै० ॥ स्थानिवत् । वत्करणमिति । विनापि वतिना तदर्थलाभो यथा ङित्किर्दितिभावः । नच स्थान्यादेश इत्युच्यमाने स्थानिरूपमादेशः प्रतिपद्यते इतिकल्पनाऽऽश्रयितुं युक्ता । अस्तेर्भूरित्यादेशविधानवैयर्थ्यप्रसङ्गात् । नच वचनद्वयप्रामाण्या-

॥ भा० ॥ स्थानिवदादेशोऽनल्विधौ । वत्करणं किमर्थम् । स्थान्यादेशोऽनल्विधावितीयत्युच्यमाने संज्ञाधिकारोऽयं तत्र स्थानी आदेशस्य संज्ञा स्यात् । तत्र को दोषः ॥

॥ कै० ॥ विकल्पः । वा लिटीतिविकल्पारम्भात् । संज्ञाधिकार इति । संज्ञाप्रस्ताव इत्यर्थः । तत्र को दोष इति । आदेशे कार्यसिद्ध्यर्थोऽतिदेशः । तच्चाऽऽदेशे कार्यं संज्ञासंज्ञिसम्बन्धेनापि सिध्यतीति प्रश्नः ॥

॥ वि० ॥ त्यात् । भाष्ये स्थानी आदेशस्येति । नवेतीत्यत इतिशब्दाऽनुवृत्तेः स्थानिशब्दार्था हनादय आदेशपदार्थस्य वधादेः संज्ञेत्यर्थः । स्थानिशब्दस्यादेशशब्दसंज्ञात्वे वैयर्थ्यमितिभावः । ननु स्वरितलिङ्गकाऽनुवृत्तिरूपाधिकारस्य संज्ञाविषयस्य शास्त्रेऽभावादाह । प्रस्ताव इति । प्रस्तावः प्रकरणम् । बुद्धिसन्निधिरितियावत् । पूर्वोत्तरत्र प्रायेण संज्ञाया दर्शनादितिभावः । परिभाषात्वं त्वनुक्तिसम्भवग्रस्तमिति तन्नोक्तम् ॥

॥ वि० ॥ भाष्ये वधेरेवेति । नचैवमाङो वधयम इत्येवाकारविवचणेन स्वतन्त्रवधिव्याद्वत्तौ हन्ग्रहणं व्यर्थं स्यादिति वाच्यम् । आजघ्न इत्या-
दिसकलहन्त्यादेशसंग्रहार्थं तस्य सत्त्वात् । हन्तेर्न स्यादिति । आहनिष्यत इत्यादौ । नन्वत्र पादे वतिं विनाऽतिदेशानवगतौ कथं बहुगणेत्य-
वातिदेशपच उक्तोऽत आह । वह्निति । संख्येतीति । संख्यापदस्येत्यर्थः । लौकिकार्थग्रहणादिति । संख्यानकरणरूपेत्यर्थः । एवञ्च तद्वाधापत्त्या संज्ञात्वाऽसम्भवा-

॥ कै० ॥ वधेरेवेति । संज्ञा हि प्रदेशेषु संज्ञिप्रत्यायनार्था संज्ञिनं प्रत्याय्य निवर्त्तते नतु स्वतः कार्यं प्रतिपद्यत इतिभावः ।
वहुगणेत्यत्र तु संख्येत्यन्वर्थताऽऽश्रयणाल्लौकिकार्थग्रहणादिनाऽपि वतिनाऽतिदेशपच उपन्यस्तः । वत्करणाच्चिहातिदेशेन स्थानि-
कार्याण्यादेशे क्रियन्ते न तु स्थानिनि निवर्त्यन्त इत्यदोषः । ङित्किदिति तु संज्ञा न भवति न क्त्वा सेडिति प्रतिषेधात् । न हि

॥ भा० ॥ आङो यमहनः । आत्मनेपदं भवतीतिवधेरेव स्यात् । हन्तेर्न स्यात् ॥

॥ कै० ॥ क्त्वाः कित्सञ्ज्ञा विहिता या प्रतिषिध्येत । किकिनौ लिड्वेत्यत्र तु संज्ञाप्रकरणाभावात् तद्वदतिदेशः । स्थानिकार्य-
मित्यनेन कार्यातिदेशोऽयमिति प्रदर्शयति । शास्त्राद्यतिदेशापेचया कार्योऽतिदेशस्य प्राधान्यादितरेषां कार्यार्थत्वादिति भावः ॥

॥ वि० ॥ दतिदेश इति भावः । इदं च तत्रैव सूत्रे कैयटे स्पष्टम् । संज्ञा नेति । उभयगतेरिह शास्त्रे सत्त्वेन संज्ञात्वेऽपि ङिन्दादिग्रहणेन चङादीनामपि ग्रह-
णम् । नहीति । अनुवृत्तकिद्ग्रहणस्य संज्ञापरत्वेन सैव प्रतिषेध्या न च सा क्त्वो विहितेत्यर्थः । किञ्च । किदित्यादेः संज्ञात्वे क्ङिति चेत्यत्रास्य ग्रहणं न स्यात्
संज्ञास्वरूपानुच्चारणादितिबोध्यम् । तथा निष्ठा शीङित्यादिनिषेधोऽप्यसम्बद्धः स्यात् । कित्साहचर्याद् ङिदित्यप्यतिदेशः । कार्यातिदेशोऽयमिति । एवञ्चाऽन-
पेचितशास्त्रमनपेचितनिमित्तं च प्रत्ययत्वादिरूपं कार्यमनेनैव क्रियत इतिभावः ॥



॥ वि० ॥ भाष्ये यः स्थाने इति । स्थानशब्दप्रयोगात् तदनुवृत्त्यादेशो लभ्यत इति भ्रमं व्युदस्यति । स्थानीति : नन्वादेशलब्धौ क इति
प्रश्नानुपपत्तिरिति तत आह । द्विविध इति । केचित्तु स्थानिशब्दस्य सम्बन्धिशब्दत्वमजानतः प्रश्नः । क इति । सम्बन्धिशब्दत्वाऽभिप्राय-
मुत्तरं यः स्थाने इति । समाधत्ते । आदेशमात्रमिति । अस्याशयः कैयटोक्त एव । कैयटोक्तव्याख्यानेऽपि यः स्थाने इत्यादिग्रन्थस्याशयानभिज्ञवक्तृकतयैव

॥ कै० ॥ आदेशग्रहणमिति । स्थानिशब्दस्य सम्बन्धिशब्दत्वादादेशो लभ्यत एव यथा पितृवदधीत इत्युक्ते पुत्र इति भावः । क इदा-
नीमिति । द्विविध आदेशः प्रत्यचश्चास्तेर्भूरित्यादिः । आनुमानिकश्चेरुरित्यादिः । अत्र हि इकारेणोकारान्तः स्थान्यनुमीयते । उकारे-

॥ भा० ॥ वत्करणे पुनः क्रियमाणे न दोषो भवति स्थानिकार्यमादेशे अतिदिश्यते गुरुवद् गुरुपुत्र
इति यथा । अथादेशग्रहणं किमर्थम् । स्थानिवदनल्विधावितीयत्युच्यमाने क इदानीं स्थानिव-
त्स्यात् । यः स्थाने भवति । कश्च स्थाने भवति । आदेशः । इदं तर्हि प्रयोजनम् । आदेशमात्रं स्थानि-
वद्यथा स्यात् । एकदेशविकृतस्योपसंख्यानं चोदयिष्यति तन्न वक्तव्यं भवति । अथ विधिग्रहणं किमर्थम् ॥

॥ कै० ॥ णोकारान्तश्चादेशः । ततस्तेस्तुरितिसम्पद्यते । तत्र प्रत्यचस्यैव ग्रहणं स्याद् नाऽनुमानिकस्येति । आदेशमात्रमिति ।
प्रत्यचमनुमितं चेत्यर्थः । एरुरित्यत्र प्रत्यचमुकारस्यादेशत्वमिकारस्य च स्थानित्वम् । नच किञ्चिदिकारस्य कार्यमस्ति यदुकारेऽतिदिश्येत ।
तिशब्दकार्यं तु तुशब्दस्यातिदिश्यत इति पदत्वसिद्धिः ॥

॥ वि० ॥ योच्यमानत्वादित्याहुः । नन्वत्राऽपि प्रत्यचस्यैव स्थानिवत्त्वमस्त्वित्यत आह । नचेति । पदत्वेति । अत एव देवदत्तः पचत्वित्यत्र पदस्येत्यधि-
कृत्य विधीयमानो निघातः सिध्यति । पचतु ते ओदनमित्यत्र पदादित्यधिकृत्य विधीयमानस्तेमयादिश्च सिध्यति । भाष्ये विधिग्रहणं किमर्थमिति । विधावि-
त्यध्याहाराल्लप्स्यते इति प्रश्नः ॥

॥ वि० ॥ ननु समासोत्तरं सप्तम्या एव ग्रहणेन सर्वविभक्त्यन्तत्वं समासस्यानुपपन्नमत आह । अवयव इति । पूर्वपदरूप इत्यर्थः । ननु विभक्तिचतुष्टयेनैव विग्रहस्यार्थप्रदर्शनेन सर्वेत्यनुपपन्नमत आह । बहुत्वेति । द्वितीयाचतुर्थीप्रथमाभिः स्थान्यलः सूत्रेऽनिर्देशादिति भावः । ननु सकृच्छ्रुतेऽल्विधिपदे कथमल्पदस्यानेकविभक्त्यन्ततेत्यत आह । तत्रेति । विधिशब्दः कर्मसाधनः । तेनाल्सम्बन्धिकार्ये इत्यर्थः । प्रौढ्या पक्षान्तरमाह । अथवेति । अल्शब्दात्परो विधिशब्दोऽल्विधिशब्दस्थेन च तद्वाच्योऽर्थो लक्ष्यत इति भावः । एवञ्च तद्वाच्यत्वेन रूपेण सर्वार्थाश्रयणात् सर्वविभक्त्यन्तत्वे यत्फलं

॥ कै० ॥ सर्वविभक्त्यन्त इति । सर्वविभक्त्यन्तोऽवयवोऽस्यास्तीति मत्वर्थीयोऽकारः । बहुत्वप्रतिपादनपरमेतत् । न ह्यत्र सप्त विभक्तयः सम्भवन्ति तत्र सम्बन्धमात्रे षष्ठ्युपादानेऽनेकविभक्त्यर्थान्तर्भावात् फलतः सर्वविभक्त्यन्तता सम्भवति । अथवाऽल्विधिशब्दवाच्योऽल्विधिरिति विशिष्टप्रवृत्तिनिमित्तानाश्रयणात् सर्वविभक्त्यन्तत्वम् । सति च विधिशब्दे समासभावादेतद्वस्तुलाभः । केवलस्त्वल्शब्द उपादीयमानो

॥ भा० ॥ सर्वविभक्त्यन्तः समासो यथा विज्ञायेत । अलः परस्य विधिः ।
अल्विधिः । अलो विधिः । अल्विधिः । अलि विधिः । अल्विधिः ॥

॥ कै० ॥ यद्विभक्तिरुच्चार्येत तदर्थोपचय एव स्यात् । तत्रालः परस्य विधिः । द्यौः पन्थाः स इति । सुलोपो न भवति । अलि परतो विधिः । क इष्टः स इष्टः । हशि चेत्युत्वं न भवति । अलो विधिः । द्युकाम इति । लोपो व्यो र्वलीति लोपो न भवतीति । उत्वं त्वऽवलि सावकाशं स्यादहर्विमलद्यु इति ॥

॥ वि० ॥ तत्फलसिद्धिरिति तात्पर्यम् । समासभावादिति । उपदर्शितपक्षद्वयोक्तसमाससत्त्वादित्यर्थः । यद्विभक्तिरिति । षष्ठ्युपादानेऽपि स्थानसम्बन्ध एव बुध्येतेति भावः । तदर्थोपचय एव स्यादिति । तदर्थमात्रान्वितार्थक एव स्यादित्यर्थः । इष्ट इति । यजेः क्तः । यद्यपि क इष्ट इति रूपमुत्वेपि सिध्यति तथापि कविष्ट इति पक्षे स्यात्कयिष्ट इति न स्यादिति बोध्यम् । स इष्ट इत्यत्रैतत्तदोरितिनित्यो लोपः स्यादिति च बोध्यम् । दिवि कामोऽस्य द्युकामः । दिव उत् । यद्यपि वल्त्वं हल्त्वाद्यपेक्षया विशेषधर्मस्तथाप्येतद्वाक्योपप्लुतवकारवदुकार इति वाक्योपात्तधर्मापेक्षया न तत्त्वम् । सूत्रकृतस्थान्यादेशभावमादायैव छेतत्कृतवाक्योपप्लव इति दिक् ॥



॥ वि० ॥ उपदेशादिति । सस्य स्थानिवत्त्वेन विसर्गत्वाद्विसर्गस्य चाट्सूपदेशेनाट्त्वादितिभावः । केवलप्रकृतेः प्रयोगाभावादाह । अत्रेति । विवक्ष्यत इति । तत्समभिव्याहारे प्रतीयमानो विधेयत्वरूपोऽर्थो न विवक्ष्यत इत्यर्थोऽन्वयायोग्यत्वादितिभावः । लिङ्गेति । अत एव भूतिरित्यादिसिद्धिः । सप्तम्यर्थस्तु तत्र विवक्षित एवेतिलिङ्गसंख्ये इत्येवोक्तम् । भाष्ये अर्थतन्त्रा इति । स्वार्थमात्रबोधकविभक्त्यधीना इत्यर्थः । प्राधान्येन । विभक्तिं विशिष्य प्रकृतान्वययोग्यविभक्त्यर्थं नाश्रयन्ति । निर्दिष्टे । बोधिते । पश्चादन्वययोग्यविभक्त्यर्थाकाङ्क्षायां यद्यद्विभक्त्यर्थमन्वयित्वेनाश्रयितुं लक्ष्यानुसाराद्बुद्धि-

॥ कै० ॥ अला विधिः । महोरस्केनेति । अयोगवाहानामट्सूपदेशात्सत्वं न भवतीति । प्रातिपदिकनिर्देशार्थेति । अनल्वित्येतावदेवोच्यताम् । अत्र शब्दसंस्काराय केवलं प्रथमा विभक्तिरुपादीयते न तु तदर्थो विवक्ष्यते । यथा भाव इत्यत्र लिङ्गसंख्ये इतिभावः । उत्तरपदलोप इति ।

॥ भा० ॥ अला विधिरल्विधिरिति । नैतदस्ति प्रयोजनम् । प्रातिपदिकनिर्देशोऽयम् । प्रातिपदिकनिर्देशाश्चार्थतन्त्रा भवन्ति । न काञ्चित्प्राधान्येन विभक्तिमाश्रयन्ति । तत्र प्रातिपदिकार्थे निर्दिष्टे यां यां विभक्तिमाश्रयितुं बुद्धिरुपजायते सा सा आश्रयितव्या । इदं तर्हि प्रयोजनम् । उत्तरपदलोपो यथा विज्ञायेत ॥

॥ कै० ॥ अनल्वित्युच्यमाने यत्र कार्ये स्वातन्त्र्येणालाश्रीयते तत्रैव निषेधः स्यात् । क इष्टः स इष्ट इत्यादौ । प्रदीव्येत्यादौ इटः प्रतिषेधो न स्यात् । नह्यीड्विधौ वलः स्वातन्त्र्येणाश्रयणं वलादेरित्यन्यपदार्थस्य प्राधान्याद्गुणभावादलः । उत्तरपदलोपे त्वलाश्रयत्वादिड्विधेः प्रतिषेधसिद्धिः ॥

॥ वि० ॥ रुपजायते सा सा विभक्तिरध्याहार्या साधुत्वार्थमुत्पन्नविभक्तेस्तु लुगितिभावः । एतेन प्रत्ययाध्याहारो न क्वापि दृष्ट इत्यपास्तम् । माभेर्मा संविक्था इति पुरोडाशावदानमन्त्रस्य धानासमूहे मा भैष्ट मा संविग्ध्वमित्यादौ दर्शनाच्च । तत्तद्विषयकलक्षणभेदात्तत्र तत्र सा आश्रयितव्येतितात्पर्यम् । नचानल्विति प्रथमानिर्देशेऽनलात्मक आदेश इत्यर्थे ल्यपोऽनलात्मकत्वेन प्रपठ्येत्यादावपीट् स्यात् । उत्तमपुरुषैकवचने टेरेत्वस्य स्थानिवत्त्वाभावात्पदत्वं न स्यादिति चेन्न । अदो जग्धिरितिसूत्रे ल्यब्ग्रहणेनादेशविशेषणत्वाभावज्ञापनादित्यदोषः । स्वातन्त्र्येण । प्राधान्येन । सकलविधिपरिग्रहार्थविधिशब्देन प्रधानन्यायो बाध्यत इतिभावः ॥

॥ वि० ॥ एवं हीति । कर्मण्यणा पचाद्यचो बाधादितिभावः । शब्दानित्यत्ववारणाय वार्तिकप्रत्याख्यानाय चाह । अप्रयोग एवेति । भाष्ये यत्र प्राधान्येनेत्यस्य विधिग्रहणाभावेत्यादिः । प्रतिषेधो न स्यादित्यस्य तदर्थं विधिग्रहणमितिशेषः । ननु पृथक्त्वमङ्गीकृत्यैव तत्स्थानापत्त्या

॥ कै० ॥ अलमाश्रयत इति । अर्थप्रदर्शनमेतत् । एवं ह्यलाश्राय इतिस्यात् । तस्मादाश्रीयत इत्याश्रयः । एरच् । अलाश्रयो यस्येति अलाश्रयो विधिरल्विधिः । अलाश्रयत्वाद्विधिरेवाल्त्युच्यत इति गतार्थत्वादप्रयोग एव उत्तरपदस्य लोपः । किमर्थमिति ।

॥ भा० ॥ अलमाश्रयते अलाश्रयः । अलाश्रयो विधिः । अल्विधिरिति । यत्र प्राधान्येनालाश्रीयते तत्रैव प्रतिषेधः स्यात् । यत्र विशेषणत्वेनालाश्रीयते तत्र प्रतिषेधो न स्यात् । किं प्रयोजनम् । प्रदीव्य प्रसीव्येति । वलादिलक्षण इड् माभूदिति । किमर्थं पुनरिदमुच्यते । स्थान्यादेशपृथक्त्वादादेशे स्थानिवदनुदेशो गुरुवद्गुरुपुत्र इति यथा । अन्यः स्थानी अन्य आदेशः । स्थान्यादेशपृथक्त्वादेतस्मात्कारणात् स्थानिकार्यमादेशे न प्राप्नोति । तत्र को दोषः । आङो यमहन इत्यात्मनेपदं भवतीति हन्तेरेव स्यात् वधेर्न स्यात् । इष्यते च वधेरपि स्यादिति । तच्चान्तरेण यत्नं न सिध्यतीति तस्मात्स्थानिवदनुदेशः । एवमर्थमिदमुच्यते गुरुवद्गुरुपुत्र इति यथा । तद्यथा । गुरुवद्गुरुपुत्रे वर्त्तितव्यमिति गुरौ यत्कार्यं तद्गुरुपुत्रे अतिदिश्यते । एवमिहापि स्थानिवत्कार्यमादेशे अतिदिश्यते । नैतदस्ति प्रयोजनम् । लोकत एतत् सिद्धम् । तद्यथा । लोके यो यस्य प्रसङ्गे भवति लभतेऽसौ तत्कृतानि कार्याणि ॥

॥ कै० ॥ तत्स्थानापत्त्या तद्धर्मलाभात् स्थानिकार्याण्यादेशाः प्राप्स्यन्तीतिभावः । स्थान्यादेशपृथक्त्वादिति । स्थानिस्वरूपाश्रयं यत्कार्यं तद्भिन्नरूपत्वादादेशे न सिध्यतीतिभावः । लोकत इति । लोके हि वचनमन्तरेणापि तत्स्थानापत्त्या तद्धर्मलाभो दृष्टः ॥

॥ वि० ॥ तद्धर्मलाभेऽभिहिते स्थान्यादेशपृथक्त्वादिति हेतुरसंगतोऽत आह । स्थानिस्वरूपेति । स्वं रूपमित्युक्तेर्न स्थानापत्त्या शास्त्रे तत्कार्यलाभ इतिभावः ॥



॥ वि० ॥ व्यभिचाराभावादिति । तत्स्थानापत्त्या तद्धर्मलाभे दृष्टान्तोऽसंगतः स्यादिति च बोध्यम् । यद्यप्युपनीय सर्ववेदाध्यापकरूपाचार्यशिष्यव्यावृत्तये उपाध्यायस्येतितद्विशेषणमावश्यकम् । वेदैकदेशाध्यापको ह्युपाध्यायस्तथापि तद्व्यावृत्तौ प्रयोजनाभाव इत्यभिप्रायेणेदमितिबोध्यम् । अत्र भाष्ये लोकत एतत्सिद्धमित्युक्त्या स्वं रूपमिति शास्त्रादादेशे न स्यादिति सूत्रं कार्यमित्युक्तम् । तेन स्वं रूपमितिशास्त्राविषये लोकन्यायेन सिद्धमिति सूचितम् । अनल्विधावितिनिषेधोऽपि शास्त्रीयस्थानिवद्भाव एव । अतिप्रसङ्गस्तु लक्ष्यानुसारेण क्वचिल्लोकन्यायाश्रयणेन परिहरणीयः । एवञ्च लोलुव इत्यादावनादिष्टादचः

॥ कै० ॥ उपाध्यायस्येति । प्रसङ्गापेक्षेयं षष्ठी नतु शिष्यस्य विशेषणमेतद् व्यभिचाराभावात् । प्रतिषेधं वक्ष्यामीति ।

॥ भा० ॥ तद्यथा । उपाध्यायस्य शिष्यो याज्यकुलानि गत्वा अग्रासनादीनि लभते । यद्यपि तावल्लोक एष दृष्टान्तः । दृष्टान्तस्यापि तु पुरुषारम्भो निवर्तको भवति । अस्ति चेह कश्चित्पुरुषारम्भः । अस्तीत्याह । कः । स्वरूपविधिर्नाम । हन्तेरात्मनेपदमुच्यमानं हन्तेरेव स्यात् वधेर्न स्यात् । एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति स्थानिवदादेशो भवतीति । यदयं युष्मदस्मदोरनादेश इत्यादेशे प्रतिषेधं शास्ति । कथं कृत्वा ज्ञापकम् । युष्मदस्मदोर्विभक्तौ कार्यमुच्यमानं कः प्रसङ्गो यदादेशेऽपि स्यात् । पश्यति त्वाचार्यः स्थानिवदादेशो भवतीति अत आदेशे प्रतिषेधं शास्ति । इदं तर्हि प्रयोजनम् । अनल्विधाविति प्रतिषेधं वक्ष्यामीति । इह माभूत् । द्यौः पन्थाः स इति । एतदपि नास्ति प्रयोजनम् । आचार्यप्रवृत्तिर्ज्ञापयति । अल्विधौ स्थानिवद्भावो न भवतीति । यदयमदो जग्धिर्ल्यप् ति कितीति ति कितीत्येव सिद्धे ल्यब्ग्रहणं करोति ॥

॥ कै० ॥ नह्यप्रदर्शितविषयः प्रतिषेधः शक्यो विधातुमितिभावः । एवं तावल्लिङ्गेनाभिमतोऽर्थः सिद्ध इति प्रदर्शितम् ॥

॥ वि० ॥ पूर्वत्वं लोकन्यायेन भवत्येवेतिकेचित् । अप्रदर्शितविषयः । अप्रदर्शितप्रतिषेध्यः । ननु युष्मदस्मदोरनादेशे इत्यत्र विभक्तिविषये स्वंरूपमित्यस्य लोकन्यायबाधकस्याप्राप्त्या तत्र लोकन्यायेन प्राप्ततद्धर्मलाभप्रयुक्तकार्यनिवारणेन चरितार्थस्य अनादेशग्रहणस्य ज्ञापकत्वासंभवाद्धनो वधेत्यादौ दोषवारणायेदं सूत्रमावश्यकमिति चेन्न । स्वादिसूत्रे स्वं रूपमित्यस्य प्रवृत्त्या तत्स्वरूपाणामेव सुपसंज्ञकत्वेन तेषामेव विभक्तिसंज्ञकत्वेन तत्र तत्र तत्स्थानापत्त्या तद्धर्मलाभ इतिलौकिकन्यायाप्रवृत्तेरित्याशयात् ॥

॥ वि॰ ॥ क्रियमाणेऽपीति । मन्दमत्यनुग्रहायेत्याशयः । न पदान्तेत्यत्र निषेध्यसमर्पणाय चावश्यकं तदितिबोध्यम् । अनल्विधाविति न कर्तव्यमित्यस्य विधिपदघटितं न कर्तव्यमित्यर्थः । असत्यपीति भाष्ये छेदः । अल्विधौ प्रतिषेध इत्यस्य चैतद्विशेषणम् । अप्राधान्येनालाश्रयणेऽपि निषेधार्थं क्रियमाणे विधिग्रहणे ऽसत्यपीत्यर्थः । वार्तिके अविशेषणे इतिच्छेदः । लक्ष्ये विशेषणाभावे इतितदर्थस्तदाह । विशेषणे समाश्रीयमाण इति । विधाविति शेषः । असतीत्यादेः प्रयोग इतिशेषः । सामान्यातिदेशे विशेषानतिदेश इतिहेतुं व्याचक्षाणो वलादित्वस्य विशेषत्वं दर्शयति । तत्रेति । अविवक्षितत्वादिति ।

॥ कै॰ ॥ इदानीं क्रियमाणेऽपि सूत्रेऽनल्विधाविति न कर्त्तव्यमित्याह । अल्विधौ प्रतिषेध इति । प्रदीव्येतीड् न भवति इड्विधौ वलादेरितिविशेषणमाश्रितम् । तत्र क्त्वो ल्यबितिवस्तुस्थित्या संनिहितमपि वलादित्वं स्थानिन्यविवक्षितत्वादनाश्रितम् ।

॥ भा॰ ॥ तस्मान्नार्थोऽनेन योगेन । आरभ्यमाणेऽप्येतस्मिन् योगे अल्विधौ प्रतिषेधेऽविशेषणेऽप्राप्तिस्तस्यादर्शनात् । अल्विधौ प्रतिषेधेऽसत्यपि विशेषणे समाश्रीयमाणे असति तस्मिन् विशेषणे अप्राप्तिर्विधेः । प्रदीव्य प्रसीव्य । किं कारणम् । तस्यादर्शनात् । वलादेरित्युच्यते नचात्र वलादिं पश्यामः । ननुचैवमर्थ एवायं यत्नः क्रियते । अन्यस्य कार्यमुच्यमान-मन्यस्य यथा स्यादिति । सत्यमेवमर्थो न तु प्राप्नोति । किं कारणम् । सामान्यातिदेशे हि विशेषानतिदेशः ॥

॥ कै॰ ॥ तथाहीडादिरपि क्त्वा भवत्येव क्त्वा केवलोऽपि आकारान्तोऽपि स्नात्वीतीकारान्तोऽपि दत्त्वायेति च यगन्तोऽपि इष्ट्वी-नमितिमान्तोऽपि तत्र क्त्वामात्रप्रतिबद्धं यत्कार्यं कृत्त्वप्रत्ययत्वाव्ययत्वादि तदादेशेऽतिदिश्यतां न तु वलादित्वमिति ल्यपो न स्वतो नापि स्थानितो वलादित्वमितीडभावः सिद्ध एवेतिभावः ॥

॥ वि॰ ॥ विवक्षाकारणयत्नविशेषविषयीकृतत्वाभावादित्यर्थः । उपात्तरूपव्याप्यरूपविवक्षा हि यत्ने सत्येव भवति । अत एव सनि मीत्यत्र सः सीत्यतः सीत्यनु-वर्तितम् । नच तथा कश्चिद्यत्नः प्रकृते । एवञ्च वलाद्यादेशो वलादिवदित्येवं वाक्यकल्पनात्र नेतिभावः । तत्र वलादित्वस्य क्त्वाव्याप्यत्वं दर्शयितुमाह । तथाहीति । आकारान्तोऽपीत्यादि दृष्टान्तार्थम् । यत्कार्यमिति । यो धर्म इत्यर्थः । क्त्वावत् ल्यबित्येव वाक्यकल्पनेतिभावः । सामान्यातिदेशे इत्यादि वार्तिकखण्डमवतारयति । ननुचेति भाष्ये । एवमर्थशब्दं व्याचष्टे । अन्यस्येति ॥



॥ वि॰ ॥ अशब्दार्थत्वादिति । यद्यपि क्त्वावदित्युक्तेऽशब्दार्थप्रत्ययत्वादेरप्यतिदेशो भवति तथापि व्याप्येन व्यापकानुमानात्तदुपस्थितिव-द्व्याप्योपस्थितौ मानाभाव इतिभावः । यत्र त्विति । गोतो णिदित्यादौ । अथ सिद्धान्ती विशेषानतिदेशे दूषणं वदन् तज्ज्ञापनार्थमेवानल्विधा-

॥ कै॰ ॥ ब्राह्मणवदिति । सामान्यशब्दोपादानेन यत्र कार्यमतिदिश्यते तत्र हि विशेषस्याशब्दार्थत्वाद्विशेषाश्रयकार्यानतिदेशः । यत्र तु विशेषशब्दोपादानेनातिदेशस्तत्र विशेषातिदेशो भवत्येव । अग्रहीदिति । ग्रहोऽलिटि दीर्घ इतिदीर्घे कृत इतिभावः । दीर्घविधौ ह्यच्परिभाषोपस्थानादच एव स्थानित्वम् । इट् त्वजन्तराणां व्यावर्त्तक इतीट्कार्यं विशेषकार्यत्वान्न प्राप्नोति । तथा

॥ भा॰ ॥ सामान्ये ह्यतिदिश्यमाने विशेषो नातिदिष्टो भवति । तद्यथा । ब्राह्मणवदस्मिन् क्षत्रिये वर्तित-व्यमिति सामान्यं यद्ब्राह्मणकार्यं तत् क्षत्रियेऽतिदिश्यते । यद्विशिष्टं माठरे कौण्डिन्ये वा न तदतिदिश्यते । एव-मिहापि यत्सामान्यं प्रत्ययकार्यं तदतिदिश्यते यद्विशिष्टं वलादेरिति न तदतिदिश्यते । यद्येवमग्रहीत् इट ईटीति सिचो लोपो न प्राप्नोति । अनल्विधाविति पुनरुच्यमाने इहापि प्रतिषेधो भविष्यति । प्रदीव्य प्रसीव्येति । विशिष्टं ह्येषोऽलमाश्रयते वलं नाम । इह च प्रतिषेधो न भविष्यति अग्रहीदिति ॥

॥ कै॰ ॥ प्रदीव्येतिगुणप्रतिषेधो न प्राप्नोति । देवित्वेत्यादावकितोऽपि क्त्वाप्रत्ययस्य संभवात् कित्त्वस्यापि वलादित्ववन्न स्यादतिदेशः । तस्माद्विशेषकार्यातिदेशज्ञापनार्थमनल्विधाविति कर्त्तव्यमितिभावः । अनुबन्धकार्येषु चानल्विधावितिप्रतिषेधो न प्रवर्त्तते स्थानिन्य-नुबन्धस्यासन्निधानादसन्त एवानुबन्धाः कार्यस्य विशेषका इतिसिद्धान्तव्यवस्थापनात् ॥

॥ वि॰ ॥ वित्यावश्यकमित्याह । भाष्ये यद्येवमिति । यदि विशेषानतिदेश इत्यर्थः । दीर्घे कृत इति । दीर्घदृष्ट्या सिज्लोपस्यासिद्धत्वादितिभावः ॥

६१८

॥ वि० ॥ ननु दीर्घस्येट इतिसमुदायस्थानिकत्वेन तद्वृत्तीट्त्वाश्रयो लोपः स्थानिवत्त्वेन स्यादेव स्थानी चादेशविधावुपात्त एवेत्यत आह । दीर्घेति । नन्वच एव स्थानित्वे ग्रहणमित्यादावपि दीर्घः स्यादत आह । इद् त्विति । भाष्ये लोपो न प्राप्नोतीत्यस्य तस्मादनल्विधावितिवक्तव्यमितिशेषः । विशेषानतिदेशे दूषणान्तरमाह । तथेति । अकितोऽपीति । न क्त्वा सेडिति कित्त्वनिषेधादितिभावः । तस्मादिति । नच क इष्टो युष्मामित्यादिव्यावृत्त्या तस्य चारितार्थ्यात्कथं ज्ञापकत्वमिति वाच्यम् । अप्राधान्येनाप्यलाश्रयणे आर्द्धधातुकस्येडित्यादौ निषेधप्रवृत्तये क्रियमाणं विधिग्रहणं प्रकृतार्थज्ञापकम् । विशेषानतिदेशे तेषामसंग्रहेण तद्वैयर्थ्यस्य स्पष्टत्वात् । वार्तिकेऽपि विधिपदघटिते प्रतिषेधेऽसत्यपीत्यर्थः । ज्ञापिते विशेषातिदेशेऽनल्विधावित्यस्य चारितार्थ्यं दर्शयति । भाष्ये इहापि प्रतिषेधेत्यादि । ननु कित्त्वस्याल्विधित्वेन क्ङिति चेति निषेधे स्थानिवत्त्वाभावात्प्रतिदीव्येत्यादौ गुणः स्यादत आह । अनुबन्धेति । स्थानिनीति । स्थान्यलाश्रये विधौ स्थानिवत्त्वनिषेधादितिभावः । न ल्यपीति लिङ्गमप्यत्र बोध्यम् । नन्वेवमप्यग्रहीदिति दीर्घस्थानिभूताज्रूपेकाराश्रय एव सिज्लोपोऽनुबन्धस्तु उपदेश एव लुप्त इति तत्रापि स्थानिवत्त्वनिषेधः स्यादतो भाष्ये विशिष्टं ह्येष इति । एवञ्च दीर्घ इड्डित्येवातिदेशकल्पना । स्थानितावच्छेदकं च शास्त्रोपात्तरूपमेव तच्च नाल्रूपमिति इट इत्यादि न स्थान्यल्वृत्तिधर्माश्रयम् । एवञ्च यत्र शास्त्रे विशेष्यतया विशेषणतया वा आदेशस्थानिभूतो योऽल् स्थानिसम्बन्धी वा योऽल् तन्मात्रवृत्तिधर्म्माश्रयणं तादृशे विधौ हि निषेधः । अत्र च शब्दतो विशिष्टमनलमाश्रयते वलादेरित्यत्र च शब्दतो विशिष्टमलमितिभावः । सिद्धान्तव्यवस्थापनादिति । इदं निरनुबन्धकानुवादेन विहितादेशविषयम् । क्त्वो ल्यबित्यादौ सानुबन्धानुवादेनादेशविधौ तु यथानुबन्धकार्यस्याल्विधित्वाभावस्तथाऽनेकाल्शिदित्यत्र निरूपितम् ॥

६१९

॥ वि० ॥ अत्रापीट एव स्थानित्वमिति । अन्यथा स्थान्यल्वृत्तीट्त्वाश्रयस्य लोपस्याऽल्विधित्वात् तत्र स्थानिवत्त्वानापत्तिर्विशेषातिदेशेऽपीति भावः । एवञ्च तदुदाहरणे विशेषाऽनतिदेशेऽपि न दोषः । एतदेवाभिप्रेत्य स्वयं प्रदीव्येति गुणापत्तिर्विशेषानतिदेशे दूषणमुक्तम् । वस्तुतो भाष्योक्तदोषोऽपि दृढ एव । तथाहि अनल्विधावित्यस्याभावे प्रायोगिकस्थानिनमादायैव वाक्योपप्लवः स्यात् । तद्बुद्धिं निवर्त्यैवादेशबुद्धेर्जायमानत्वेन तस्यैव मुख्यस्थानित्वात् । यद्येवमित्यस्य विशेषाऽनतिदेशमाश्रित्य विधिग्रहणाकरणे इत्यर्थः । एवञ्च दीर्घस्थान्यल्परस्य कार्यं लोप इति स्थानिवद्भावेन तदप्राप्तिरिति

॥ कै० ॥ विशिष्टं ह्येषोऽनल्मिति । इट ईटीति सलोपे समुदायरूपेणाऽऽश्रयणाद्ग्रहोऽलिटि दीर्घ इत्यत्रापि इट एव स्थानित्वं नाचः । अनियमाप्रसङ्गान्नियमफलाया अच्परिभाषाया अनुपस्थानात् । सत्याश्रय इति । आश्रीयत इत्याश्रयः । यथा वलादित्वमिड्विधौ ।

॥ भा० ॥ विशिष्टं ह्येषोऽनलमाश्रयते इटं नाम । यदि तर्हि सामान्यमप्यतिदिश्यते विशेषश्च सत्याश्रये विधिरिष्टः । सति च वलादित्वे इटा भवितव्यम् । अरुदिताम् । अरुदितम् । अरुदित । किमतो यत्सति भवितव्यम् । प्रतिषेधस्तु प्राप्नोति अल्विधित्वात् । प्रतिषेधस्तु प्राप्नोति । किं कारणम् । अल्विधित्वात् । अल्विधिरयं भवति । तत्रानल्विधाविति प्रतिषेधः प्राप्नोति ॥

॥ कै० ॥ तत्रेडागमस्याल्विधित्वादनल्विधौ च स्थानिवद्भावविधानादरुदितामिति स्थानिकार्यमिडागमो न प्राप्नोति ॥

॥ वि० ॥ पूर्वपक्षः । विधावित्युक्तौ तु न दोषः । शास्त्रस्योपस्थित्या शास्त्रोपात्तस्थान्यादेशभावस्य निमित्तस्य च ग्रहणमिति न दीर्घोऽल्विधिरित्युत्तरम् । तदेतदेषोऽनलमित्यनेन दीर्घादिविधिरित्यर्थकेन ध्वनितमिति बोध्यम् । अत एव भो भगो अघो इति सूत्रे भाष्ये रेफस्थानिकविसर्गस्य स्थान्यल्वृत्तिधर्मत्वाश्रयं कार्यं नाल्विधित्वादित्युक्तम् । भाष्ये यदि तर्हि सामान्यमिति । अनल्विधाविति ज्ञापकात्तज्ज्ञापनार्थं वाऽनल्विधाविति यदि क्रियत इत्यर्थः । आश्रयशब्दस्य भावसाधनत्वे वलादित्वे इति तद्विवरणमसङ्गतं स्यादत आह । आश्रीयत इति । स्थानिकार्यमिति । सार्वधातुकत्वाभावादिति भावः । भाष्ये प्रतिषेधस्त्विति । आदेशः स्थानिवद् अलाश्रये विधौ तु नेति सूत्रार्थ इति भावः ॥

॥ वि० ॥ समाधत्ते । नवेति । स प्रयोजनं प्रयोजको यस्य वलादित्वस्येत्यर्थः । करणे ल्युट् । पदसंस्कारपक्षाऽऽश्रयेण तु अतिदेशः प्रयोजनमिति प्रयुक्तम् । शङ्किताऽऽह । नैतद्विवदामह इति । ननु सार्वधातुकत्वस्याऽल्धर्मत्वाभावात् कथं प्रतिषेधप्राप्तिरत आह ।

॥ कै० ॥ नवेति । अतिदेश एवानुदेशः स प्रयोजनं यस्य तदानुदेशिकम् । तत्र स्वाश्रयं वलादित्वमाश्रित्य स्थान्याश्रयं च सार्वधातुकत्वमितीड्विधास्यते । तत्राऽनल्विधावितीति । इडागमार्थमत्र स्थानिवद्भावः प्रार्थ्यते इट् चाऽल्विधिरिति अनल्विधावितिप्रतिषेधात् सार्वधा-

॥ भा० ॥ नवानुदेशिकस्य प्रतिषेधादितरेण भावः । नवा एष दोषः । किं कारणम् । आनुदेशिकस्य प्रतिषेधात् । अस्त्वत्राऽऽनुदेशिकस्य वलादित्वस्य प्रतिषेधः । स्वाश्रयमत्र वलादित्वं भविष्यति । नैतद्विवदामहे वलादिर्न वलादिरिति । किं तर्हि स्थानिवद्भावात् सार्वधातुकत्वमेषितव्यम् । तत्राऽनल्विधावितिप्रतिषेधः प्राप्नोति । किं पुनरादेशिन्यल्याश्रीयमाणे प्रतिषेधो भवति । आहोस्विदविशेषेण आदेशे चादेशिनि च । कश्चाऽत्र विशेषः । आदेश्यल्विधिप्रतिषेधे कुरुवधपिबां गुणवृद्ध्योः प्रतिषेधः । आदेशिन्यल्विधिप्रतिषेधे कुरुवधपिबां गुणवृद्ध्योः प्रतिषेधो वक्तव्यः । कुर्वित्यत्र स्थानिवद्भावादङ्गसंज्ञा स्वाश्रयं च लघूपधत्वम् । तत्र गुणः प्राप्नोति ॥

॥ कै० ॥ तुकत्वस्याऽपीडर्थत्वादिड् न प्राप्नोतीति । इदानीं यथाऽत्र प्रतिषेधो न प्रवर्तते तथा विचारपूर्वकं प्रतिपादयितुमाह । किं पुनरिति । आदेशोऽस्यास्तीत्यादेशी स्थानी । किं स्थान्यलाश्रये कार्ये स्थानिवत्त्वनिषेधोऽथाल्मात्राश्रय इति विचारः । किं प्रत्यासत्तिराश्रीयते अथवा व्याप्तिरिति भावः ॥

॥ वि० ॥ इडागमेति । उक्तदोषमपरिहृत्य विचारान्तरारम्भोऽनुपपन्न इत्यत आह । इदानीमिति । प्रतिपादयितुमिति । वादिमुखेनैव प्रतिपादयितुमित्यर्थः । आदेशोऽस्येति । आदेशिनीत्यलीत्यनेन व्यधिकरणं स्थानिसम्बन्ध्यलाश्रय इत्यर्थः । सम्बन्धिन एवाधिकरणत्वविवक्षया सप्तमी । अत एव स्थानित्वे तु व्यपदेशिवद्भावेन तत्त्वमिति बोध्यम् । सन्देहबीजं दर्शयति । किमिति ॥



॥ वि० ॥ स्थानिवद्भावादिति । अचः परस्मिन्नित्यनेन । एवञ्चोपधात्वाभावो ञ्णित्परत्वाभावश्चेतिभावः । अतिदेशोऽतिदिष्टं चेदर्थासङ्गतिरत आह । आदिष्ट एवेति । सुबादीनामादेशेष्वित्यर्थः । तेषु दीर्घत्वे इटि उवङि च स्थानिवत्त्वप्रतिषेधः प्राप्नोति । तद्धितत्व-

॥ कै० ॥ वधक इति । हन्तेर्ण्वुलि वहुलं संज्ञाछन्दसोरितिवक्तव्यम् अन्नवधकगात्रविचक्षणाजिराद्यर्थमितिवधादेशः । स च हलन्त इति दोषोपन्यासः । अदन्तत्वे त्वल्लोपस्य स्थानिवद्भावाद्वृद्ध्यभावः । सुप्तिङ्कृदतिदिष्टेष्विति । आदिष्ट एवातिदिष्टो

॥ भा० ॥ वधक इत्यत्र स्थानिवद्भावादङ्गसंज्ञा स्वाश्रयं चादुपधत्वं तत्र वृद्धिः प्राप्नोति । पिबेत्यत्र स्थानिवद्भावादङ्गसंज्ञा स्वाश्रयञ्च लघूपधत्वं तत्र लघूपधगुणः प्राप्नोति । अस्तु तर्ह्यविशेषेण आदेशे आदेशिनि च । आदेश्यादेश इतिचेत्सुप्तिङ्कृदतिदिष्टेषूपसंख्यानम् । आदेश्यादेश इतिचेत् सुप्तिङ्कृदतिदिष्टेषूपसंख्यानं कर्त्तव्यम् । सुप् । वृचाय प्लुचाय । स्थानिवद्भावात्सुप्संज्ञा स्वाश्रयञ्च यञादित्वं तत्र प्रतिषेधः प्राप्नोति । सुप् । तिङ् । अरुदिताम् अरुदितम् अरुदित । स्थानिवद्भावात्सार्वधातुकसंज्ञा स्वाश्रयञ्च वलादित्वम् । तत्र प्रतिषेधः प्राप्नोति । तिङ् । कृदतिदिष्टम् । भुवनं सुवनं धुवनम् । स्थानिवद्भावात् प्रत्ययसंज्ञा स्वाश्रयञ्चाजादित्वं तत्र प्रतिषेधः प्राप्नोति । किं पुनरत्र ज्यायः ॥

॥ कै० ॥ विवक्षितः । उपलक्षणं चैतत् तद्धितादेशेष्वपि न प्राप्नोति लैगवायन इति । अत्र हि स्वाश्रयमजादित्वं स्थानिवद्भावात्तद्धितत्वम् । किं पुनरिति । न्यायापेक्षः प्रकर्षः कः पक्षो न्यायोपपन्न इत्यर्थः ॥

॥ वि० ॥ मिति । भस्य तद्धिते ओर्गुणविधानादितिभावः । ननु पक्षद्वयेऽपि दोषोक्तेः कस्यापि प्रशस्यत्वाभावाद् आतिशयिकोऽनुपपन्न इत्यत आह । न्यायेति । युक्तीत्यर्थः । का युक्तिः प्रकृष्टेत्यत्र प्रश्नतात्पर्यमितिभावः ॥

॥ वि० ॥ प्रत्यासत्त्येति । अत एव कष्टायेत्यादिनिर्द्देशाः सङ्गच्छन्ते । एवञ्च प्रत्यासत्त्याश्रयणमेव न्याय्यमितिभावः । भाष्ये विशिष्टं स्थानिकार्यमिति । स्वरूपेणालभ्यमानमित्यर्थस्तदाह । यत्कार्यमिति । तच्छेषोऽतिदेशशेषः । तद्वारके । अतिदेशद्वारके । यथेति ।

॥ कै० ॥ आदेशिनीति । प्रत्यासत्त्येतिभावः । यत्कार्यमादेशः स्वतो न प्रतिपद्यते तत्र स्यादतिदेशाकाङ्क्षा तच्छेषश्च प्रतिषेधस्तद्वारक एवाऽल्कार्ये युक्तः । अरुदितामित्यत्र त्वादेशस्य स्वतो वलादित्वान्न तत्रातिदेशाकाङ्क्षा सार्वधातुकत्वं तस्य

॥ भा० ॥ आदेशिन्यऽल्याऽऽश्रीयमाणे प्रतिषेध इत्येतद् न्याय्यः । कुत एतत् । तथा ह्ययं विशिष्टं स्थानिकार्यमादेशेऽतिदिशति गुरुवद्गुरुपुत्र इति यथा । तद्यथा । गुरुवद्गुरुपुत्रे वर्त्तितव्यमन्यत्रोच्छिष्टभोजना-त्पादोपसंग्रहणाच्चेति । यदि च गुरुपुत्रोऽपि गुरुर्भवति तदपि कर्त्तव्यं भवति । अस्तु तर्ह्यादेशिन्यल्याऽऽश्री-यमाणे प्रतिषेधः । ननु चोक्तम् आदेश्यल्विधिप्रतिषेधे कुरुवधपिबां गुणवृद्धिप्रतिषेध इति । नैष दोषः । करोतौ तपरनिर्द्देशात्सिद्धम् । पिबिरदन्तः । बधक इति नायं ण्वुल् । अन्योऽयमकशब्दः किदौणादिकः ॥

॥ कै० ॥ स्वतो नास्तीति तदेवाऽतिदेशेन प्रार्थ्यते । यथा गुरुपुत्रो गुरुत्वे सति नातिदेशमपेक्षते तथा वलादित्वं प्रत्यादेशस्य नास्त्यतिदेशाऽपेक्षेत्येतावता दृष्टान्तः । सार्वधातुकत्वं प्रत्यस्त्येवाऽतिदेशापेक्षा । करोताविति । अकारस्य ह्युकारो मात्रिक एव न्याय्य इति शास्त्रान्तरेणाऽपि प्राप्तस्य भिन्नकालस्य निवृत्त्यर्थं तपरत्वमित्यर्थः । अन्योऽयमिति । हनो वधचेति कुन्प्रत्ययः ।

॥ वि० ॥ एवञ्च यथा तत्राऽतिदेशप्राप्तोच्छिष्टभोजनस्यैव वर्जनं न तु स्वाश्रयगुरुत्वप्राप्तस्यैवमलंशेऽतिदेशप्राप्ताऽल्विधेरेव वर्जनमितिभावः । भाव्यमानस्य सवर्णग्राहकत्वस्वीकारेऽपि तपरत्वं व्यर्थमित्याह । अकारस्येति । अन्तरतमत्वादिति भावः । ऋकारस्थानिकाऽवयवविकारोऽत्रेति लक्ष्यभेदान्नोदवोढामिति॰ वक्ष्यते लक्षणस्येति न्यायेनात्र निर्वाह इत्याहुः । कुन् औणादिकः ॥



॥ वि० ॥* बहुव्रीहौ निष्ठान्तस्य पूर्वनिपातः स्यादत आह । तृतीयेति । आनुमानिकेऽपि स्थानिवत्त्वप्रवृत्तिर्वक्तव्येत्येतद्वार्तिकतात्पर्यम् । लोकन्यायाऽऽश्रयेणैतत्प्रत्याचष्टे । अनन्यत्वात् सिद्धमिति भाष्ये । नन्ववयवविगमे जात्यभिव्यञ्जकाभावात् कथं श्वेतिव्यवहारोऽत आह । छिन्नेऽपीति । तथाचेति । लोपस्य विकारत्वाभावेनैकदेशविकृतोपसंख्यानेऽपि तत्रोक्तरीतिरेवावश्यकीति भावः । अर्थेत्यादि दृष्टान्तार्थम् । अन्यथा शक्तता-वच्छेदकाऽऽनुपूर्व्यज्ञानाद्बोधो न स्याद् एतदर्थं च तन्न्यायाङ्गीकार आवश्यक इति भावः । अवस्थिते इति । नच इप्रसङ्गे उरिति वाच्यमिति नानित्यत्वम् । अनर्थ-

॥ कै० ॥ एकदेशविकृतस्येति । एकदेशेन विकृत इति तृतीयासमासः । तद्यथेति । छिन्नेऽपि पुच्छे शिष्टावयवसन्निवेशः श्वत्वजातेरभिव्य-ञ्जकः । एवं पचत्वित्यत्रेकारस्य विकारेऽपि तकारस्तिङ्त्वस्य व्यञ्जकः । तथाचेकारलोपेऽपि अपचदिति तकारमात्रस्य तिङ्त्वमर्थप्रतीतिहेतुत्वं चास्ति । नाश्व इति । अवयवापगमेऽपि न तस्य जात्यन्तरेण योगः किं तर्हि श्वत्वेनैवेत्यर्थः । अनित्यविज्ञानमिति । अवस्थिते तकारे इकारस्य

॥ भा० ॥ रुचक इति यथा । एकदेशविकृतस्योपसंख्यानम् । एकदेशविकृतस्योपसंख्यानं कर्त्तव्यम् । किं प्रयोज-नम् । पचतु पचन्तु इति । तिङ्ग्रहणेन ग्रहणं यथा स्यात् । एकदेशविकृतस्याऽनन्यत्वात्सिद्धम् । एकदेशविकृतम-नन्यवद्भवतीति तिङ्ग्रहणेन ग्रहणं भविष्यति । तद्यथा । श्वा कर्णे पुच्छे वा छिन्ने श्वैव भवति नाश्वो न गर्दभ इति । अनित्यविज्ञानं तु तस्मादुपसंख्यानम् । अनित्यविज्ञानं तु भवति । नित्याः शब्दाः । नित्येषु च नाम शब्देषु कूट-स्थैरविचालिभिर्वर्णैर्भवितव्यमनपायोपजनविकारिभिः । तत्र स एवायं विकृतश्चेत्येतन्नित्येषु नोपपद्यते ॥

॥ कै० ॥ उकार इत्यनित्यत्वं शुन इव प्राप्नोतीति भावः । उपसंख्याने तु क्रियमाणे नास्त्यनित्यत्वम् । एरुरितिस्थान्यादेशाभ्यां तिश-ब्दतुशब्दयोरनुमीयमानत्वात्तेः प्रसङ्गे तोर्विधानात् । तत्रादेशग्रहणाद्वा उपसंख्यानाद्वाऽऽनुमानिकस्याऽऽप्यादेशस्य स्थानिवद्भावः सिद्धः ॥

॥ वि० ॥ कत्वेनाऽर्थबोधाय प्रसङ्गस्य वक्तुमशक्यत्वात् । अवयवत्वेन प्रसङ्गे त्ववयवान्तरप्रादुर्भावपूर्वावयवापगमाभ्यामनित्यत्वं स्यादित्यर्थः । स एवायमिति प्रत्य-भिज्ञया भाष्ये नित्यत्वमुपलक्षितम् । अत एव विकृत इत्यनेन विरोधः । अनित्यत्वाभावे हेतुस्तेः प्रसङ्गे इत्यादि । अस्य ह्यर्थवत्त्वात्तेः प्रसङ्गे इत्युक्तिर्नासमञ्जसे-त्यर्थः । तदुपपादकम् । एरुरित्यादि । एवञ्च कार्यशब्दवादे न्यायेन सिद्धं नित्यशब्दवादे तु नेतिवचनारम्भवादितात्पर्यम् । वस्तुतो वचनारम्भेऽपि विकृतत्वबु-द्धिमात्रेण तत्सङ्गतिरित्यवश्यं वाच्यमन्यथा विकृतस्येत्यसङ्गतं स्यात् तदा तयैव रीत्या लोकन्यायप्रवृत्तिरपि सूपपादेति । अनित्यविज्ञानं त्वित्याद्येकदेश्युक्तिः ॥

६२४

॥ वि॰ ॥ कात्यायनीयाद्भारद्वाजीयपाठे हेत्वभिधानं बहुवचनं च विशेषः । एकरित्यत्रेति । प्रत्यक्षादेशत्वं चेह निषेध्यमिति भावः । लोकन्यायेन सिद्धिखण्डनाय रूपाऽन्यत्वाच्चेति । तद्याचष्टे । यदीति । इदमो म इत्यादिवदिति भावः । अर्हस्याऽन्यथाभावेन जात्यभिव्यक्त्काऽभाव इति तात्पर्यम् । एकदेशविकृतेष्विति बहुवचनेन लोपस्यापि संग्रहादपचदित्यादावपि स्थानिवत्त्वमिति बोध्यम् । भाष्ये वचनं खण्डयति । इमेऽपीति । आनुमानिकादेशस्याप्यादेशपदसामर्थ्येन ग्रहणादिति भावः । इममाशयमजानानः पृच्छति । कथमिति । उक्तेनैवाऽभिप्रायेणाऽऽह । आदिश्यन्त इति ।

॥ कै॰ ॥ नचेम इति । तुशब्दादयः । एकरित्यत्र साक्षात् समुदायानुपादानात् । रूपान्यत्वाच्चेति । यद्यऽयमवयवादेशो रूपं न भिन्द्यात्स्यादेव प्रत्यभिज्ञानात्तिङ्त्वम् । यतस्तु भेदको रूपस्य तस्मान्नास्ति तिङ्त्वमिति भावः । योऽत्रादेश इति । इकारस्य उकारः ।

॥ भा॰ ॥ तस्मादुपसंख्यानं कर्त्तव्यम् । भारद्वाजीयाः पठन्ति । एकदेशविकृतेषूपसंख्यानं कर्त्तव्यम् । किं प्रयोजनम् । पचतु पचन्तु । तिङ्ग्रहणेन ग्रहणं यथा स्यात् । किञ्च कारणं न स्यात् । अनादेशत्वात् । आदेशः स्थानिवदित्युच्यते । नचेमे आदेशाः । रूपान्यत्वाच्च । अन्यत् खलु रूपं पचतीति अन्यत्पचत्विति । इमेऽप्यादेशाः । कथम् । य आदिश्यन्ते त आदेशाः । इमे चाप्यादिश्यन्ते । आदेशः स्थानिवदितिचेन्नानाश्रितत्वात् । आदेशः स्थानिवदिति चेत् तन्न । किं कारणम् । अनाश्रितत्वात् । योऽत्रादेशो नाऽसावाश्रीयते यश्चाश्रीयते नासावादेशः ॥

॥ कै॰ ॥ नाऽसावाश्रीयते । पदसंज्ञायाम् । सा हि तिशब्दनिबन्धना नाऽवयवनिबन्धना । यश्चेति । तुशब्दः साक्षादविधानान्नादेशः पदसंज्ञानिमित्तभावेन चाश्रीयत इत्यर्थः ॥

॥ वि॰ ॥ इमे चेति । तुशब्दादयः । आदेशपदसामर्थ्यमजानान आह । आदेश इत्यादि । प्रत्यक्षादेशस्यैव ग्रहणं न्याय्यमित्यभिमानः । तदाह । योऽत्रेति । ननु तामादेः पदसंज्ञायामनाश्रयणेऽपि यथा स्थानिवत्त्वात्पदत्वमेवमुकारस्यापीत्यत आह । सा हीति । तेन नायमादेश इति भावः । तिङ्त्वं समुदायपर्याप्तमितितात्पर्यम् । स्थानिवत्त्वद्वारापि नायमुकारः पदत्वहेतुतयाऽऽश्रीयत इति भाष्यार्थः । आश्रीयत इत्यर्थ इति । आश्रयितुमिष्यत इत्यर्थः ॥

६२५

॥ वि॰ ॥ तत्रोत्तरमाहेति । एकदेशीतिशेषः । भाष्ये समुदाये इत्यादि । सुप्तिङन्तमित्यादौ ति इति समुदाये निमित्तत्वेनाश्रितेऽवयवातिरिक्तसमुदायाभावात् तकारेकारान्तं पदमित्यर्थः । एवञ्चेकारस्योकारादेशे स्थानिवद्भावेनेकारबुद्धौ निमित्तभूतसमुदायसत्त्वात्पदत्वं

॥ कै॰ ॥ तत्रोत्तरमाह । नैतदिति । तिप्तस्झीतिसंनिवेशे इकारतकारावपि संनिविष्टाविति इकारस्य तिङ्त्वात्तदादेशस्याऽप्युकारस्य तिङ्त्वमिति सिद्धा पदसंज्ञा । अल्विधिप्रसङ्ग इति । इकारस्य पदसंज्ञानिमित्तत्वादल्विधिः पदसंज्ञा स्यादि-

॥ भा॰ ॥ नैतन्मन्तव्यं समुदाये आश्रीयमाणे अवयवो नाऽऽश्रीयत इति । अभ्यन्तरश्च समुदायेऽवयवः । तद्यथा । वृक्षः प्रचलन् सहावयवैः प्रचलति । आश्रय इति चेदल्विधिप्रसङ्गः । आश्रय इतिचेदल्विधिरयं भवति । तत्रानल्विधाविति प्रतिषेधः प्राप्नोति । नैष दोषः । नैवं सति कश्चिदनल्विधिः स्यात् । उच्यते चेदमनल्विधाविति । तत्र प्रकर्षगतिर्विज्ञास्यते साधीयो योऽल्विधिरिति । कश्च साधीयः । यत्र प्राधान्येनाऽलाश्रीयते यत्र हि नान्तरीयकोऽलाश्रीयते नाऽसावल्विधिरिति ॥

॥ कै॰ ॥ त्यर्थः । यत्र प्राधान्येनेति । यत्र साक्षादल् निर्दिष्टस्तत्र प्रतिषेधो नानुमीयमाने संभवमात्रेणाऽलीत्यर्थः । प्राधान्यग्रहणं प्रत्यक्षोपलक्षणम् ॥

॥ वि॰ ॥ सिद्धमितिभावः । तिङ्त्वात् । तदवच्छिन्नावयवत्वात् । तिङ्त्वम् । तदवच्छिन्नावयवेकारत्वमित्यर्थः । यथाश्रुते हि पचतीत्यादौ तान्तस्याऽपि पदत्वापत्तौ जश्त्वाऽऽपत्तिरिति बोध्यम् । ननु प्राधान्येनेत्युक्तौ प्रदीव्येति न सिध्येदत आह । यत्रेति । प्रत्यक्षेति । अनान्तरीयकेत्यर्थः ॥

॥ वि० ॥ इदानीं सिद्धान्ती एकदेश्युक्तमनुमन्यमान इव पक्षान्तरत्वेन स्वाशयं प्रकाशयति । भाष्येऽथवेति । सर्वविकार इति । अस्तेर्भूरित्यादौ । यो भूत्वेत्यादिभाष्यस्य प्रागभावाऽप्रतियोगित्वे सति ध्वंसाऽप्रतियोगित्वं नित्यत्वमितितात्पर्यम् ।

॥ कै० ॥ आदेशमात्रमिति । आनुमानिकमपीत्यर्थः । अनुपपन्नमिति । एकदेशविकारेऽपि यत्र नित्यत्वहानिस्तत्र सर्वविकारे

॥ भा० ॥ अथवा उक्तमादेशग्रहणस्य प्रयोजनम् । आदेशमात्रं स्थानिवद्यथा स्यादिति । अनुपपन्नं स्थान्यादेशत्वं नित्यत्वात् । स्थानी आदेश इत्येतन्नित्येषु शब्देषु नोपपद्यते । किं कारणम् । नित्यत्वात् । स्थानी हि नाम यो भूत्वा न भवति । आदेशो हि नाम यो भूत्वा भवति । एतच्च नित्येषु शब्देषु नोपपद्यते यत्सतो नाम विनाशः स्यादसतो वा प्रादुर्भाव इति । सिद्धं तु यथा लौकिकवैदिकेष्वभूतपूर्वेऽपि स्थानशब्दप्रयोगात् । सिद्धमेतत् । कथम् । यथा लौकिकवैदिकेषु च कृतान्तेषु अभूतपूर्वेऽपि स्थानशब्दप्रयोगो वर्त्तते । लोके तावत् । उपाध्यायस्य स्थाने शिष्य इत्युच्यते नच तत्रोपाध्यायो भूतपूर्वो भवति । वेदेऽपि । सोमस्य स्थाने पूतीकतृणान्यभिषुणुयादित्युच्यते नच तत्र सोमो भूतपूर्वो भवति । कार्यविपरिणामाद्वा सिद्धम् । अथवा कार्यविपरिणामात् सिद्धमेतत् । किमिदं कार्यविपरिणामादिति । कार्या बुद्धिः सा विपरिणम्यते । ननु च कार्याविपरिणामादितिर्भवितव्यम् ॥

॥ कै० ॥ कुतो नित्यत्वं यत्राऽन्वयोऽपि कस्यचिन्नास्तीत्यर्थः । सोमस्येति । सोमस्तृणविशेषः । तदसन्निधौ पूतीकतृणानि प्रतिनिधीयन्ते । कार्या बुद्धिरिति । अन्यस्याऽत्र विपरिणामासम्भवात् सामर्थ्यात्कार्यत्वेन बुद्धिर्गृह्यते न तु कार्यशब्दो बुद्धिपर्यायः ॥

॥ वि० ॥ स्थानशब्दः प्रसङ्गवाचीत्युत्तरम् । तदसन्निधाविति । नित्यस्यावश्यकर्त्तव्यत्वादाऽऽरब्धस्य चावश्यसमापनीयत्वादिति भावः ॥



॥ वि० ॥ संज्ञाच्छन्दसयोरभावादाह । बहुलेति । भूतपूर्वे स्थानशब्दप्रयोगमभ्युपेत्येदं परिहारान्तरम् । अन्यथाऽऽनर्थक्यप्रसङ्गात् । नच तत्र स्थानशब्दो दृश्यते सोमस्थाने इत्यादावभूतपूर्व एव प्रयोगदर्शनादिति यदि भूतपूर्वे इत्यादिभाष्यतात्पर्यम् । नचेति । भूतपूर्वे हि स्थानशब्दो निरुक्तिवचनः स्यादितिभावः । तत्पक्षे नित्यत्वं कथमिति पृच्छति भाष्ये । कथमिति । उत्तरमाह । बुद्ध्येति । प्रतिपत्तृवशादिति । प्रतिपत्तृशब्देन

॥ कै० ॥ सन्तीति । ड्याप्योरित्यत्र बहुलग्रहणात् । भूतपूर्वे चापीति । नच नित्यत्वविरोधः । बुद्धिधर्माः केवलमर्थेषु

॥ भा० ॥ सन्ति चैव ड्यौत्तरपदिकानि ह्रस्वत्वानि । अपिच । बुद्धिः संप्रत्यय इत्यनर्थान्तरम् । कार्या बुद्धिः कार्यः संप्रत्ययः कार्यस्य संप्रत्ययस्य विपरिणामः । कार्यविपरिणामादिति । परिहारान्तरमिदं मत्वा पठितम् । कथं चेदं परिहारान्तरं स्यात् यदि भूतपूर्वेऽपि स्थानशब्दो वर्त्तते । भूतपूर्वे चापि स्थानशब्दो वर्त्तते । कथम् । बुद्ध्या । तद्यथा । कश्चित्कस्मैचिदुपदिशति । प्राचीनं ग्रामादाम्रा इति ॥

॥ कै० ॥ प्रतिपत्तृवशादारोप्यन्ते न तु तद्वशादर्थानां तथाऽवस्थानम् । प्राचीनमिति । प्राचि देशे प्राक् । ततो विभाषाञ्चेरदिक् स्त्रियामिति स्वार्थे खः । तत्र सप्तम्यर्थस्याभिहितत्वादन्तर्भूतत्वाच्च प्रथमैव कृता ॥

॥ वि० ॥ तदीया प्रतिपत्तिर्लक्ष्यते तद्वशात् । प्रतिपत्तॄणां तथा ज्ञानव्यवहाराभ्यां बुद्धिधर्मारोपस्तत्रानुमीयते स्वतस्तद्वत्त्वस्य तत्र बाधादितिभावः । क्वचित्तु प्रतिपत्तिवशादितिपाठः । तदाह । नन्विति । आरोपितभूतपूर्वत्वव्यवहारान्न नित्यत्वहानिरितिभावः । ननु प्राचीनमित्यस्याऽत्राधिकरणप्रतिपादकत्वात्सप्तमी स्यादत आह । प्राचीति । सप्तम्यन्तादुत्पन्नाऽस्तातेरञ्चेर्लुगितिलुक् ॥

॥ वि॰ ॥ भाष्ये तस्य सर्वत्रेति । प्राग्देशश्चत्वावच्छिन्न इत्यर्थः । स तत्र । न्यग्रोधेषु । नन्वाऽऽम्रबुद्ध्या इति न तृतीया अर्थाऽसङ्गतेः । नापि षष्ठी संवन्धिनोऽनुपस्थितेरत आह । तस्या अनन्तरमिति । अनन्तरपदाध्याहारेण षष्ठीतिभावः । केचित्तु आम्रबुद्ध्या इत्यस्य तां विहायेत्यर्थ

॥ कै॰ ॥ आम्रबुद्ध्या इति । तस्या अनन्तरमित्यर्थः । अपवादप्रसङ्गस्त्विति । बुद्धिविपरिणाममात्रं यदि स्थान्यादेशभाव इतिभावः ।

॥ भा॰ ॥ तस्य सर्वत्राम्रबुद्धिः प्रसक्ता । ततः पश्चादाह । ये क्षीरिणोऽवरोहवन्तः पृथुपर्णास्ते न्यग्रोधा इति । स तत्राम्रबुद्ध्या न्यग्रोधबुद्धिं प्रतिपद्यते स ततः पश्यति बुद्ध्या आम्रांश्चापकृष्यमाणान् न्यग्रोधांश्चोपाधीयमानान् नित्या एव च स्वस्मिन् विषये आम्रा नित्याश्च न्यग्रोधाः । बुद्धिस्तस्य विपरिणम्यते । एवमिहाप्यस्तिरस्मायविशेषेणोपदिष्टः । तस्य सर्वत्राऽस्तिबुद्धिः प्रसक्ताऽस्तेर्भूरित्यनेनाऽस्तिबुद्ध्या भवतिबुद्धिं प्रतिपद्यते । स ततः पश्यति बुद्ध्या अस्तिञ्चापकृष्यमाणं भवतिं चाधीयमानं नित्य एव च स्वस्मिन्विषयेऽस्तिर्नित्यो भवतिश्च । बुद्धिस्त्वस्य विपरिणम्यते । अपवादप्रसङ्गस्तु स्थानिवत्त्वात् । अपवादे उत्सर्गकृतं प्राप्नोति । कर्मण्यण् आतोऽनुपसर्गे क इति । केऽपि अणि कृतं प्राप्नोति । किं कारणम् । स्थानिवत्त्वात् ॥

॥ कै॰ ॥ कर्मण्यणिति । अणिति सर्वत्राऽणो बुद्धिः प्रसक्ता आतोऽनुपसर्गे क इति कबुद्ध्या निवर्त्यत इति केप्यऽणकृतप्रसङ्गः ॥

॥ वि॰ ॥ इत्याहुः । भाष्येऽपकृष्यमाणानिति । तत्र यथा बुद्धेरेवापकर्ष उपधानं चाऽऽम्रेषु न्यग्रोधेषु चारोप्यते तथाऽत्रापि बुद्धिगतोत्पादविनाशयोः स्थान्यादेशभावस्य च शब्देष्वारोप इतिभावः । आधानमुत्पत्तिः । ननु उत्सर्गापवादयोः स्थान्यादेशभावात्कथं स्थानिवत्त्वमत आह । बुद्धीति । अणकृतेति । ङीप इत्यर्थः ॥



॥ वि॰ ॥ भाष्ये उक्तं वेति वार्तिकस्थमुक्तमित्यंशं व्याचष्टे । विषयेण त्वित्यादि । अइउण्सूत्रे एकोऽकार इतिपक्षेऽनुबन्धसंकरः प्राप्नोति केऽप्यणकृतं प्राप्नोतीतिपूर्वपक्षे विषयेण तु नानालिङ्गकरणात्सिद्धमित्युक्तम् । विषयेऽणकादौ भिन्नलिङ्गकरणात् । इह मुण्डो भव इह जटी भवेति लोकव्यवहारे यथा यद्गुणको यत्रोच्यते तत्र तद्गुण एव भवति । तथा यल्लिङ्गो यत्रोच्यते तत्र तल्लिङ्गकार्यमेव नाऽन्यानुबन्धकार्यमिति तदर्थश्चोक्तः । एवञ्च सामान्यापेक्षत्वान्नियमस्य स्थानिवत्त्वप्रयुक्तस्याऽपि व्यावृत्तिरितिभावः । वार्त्तिकेऽधिकरणस्यैव करणत्वविवक्षया तृतीया । कैयटोक्तव्याख्याने तु अथवा यदयं श्वनादीनितिवक्ष्यमाणपक्षे एतत्पक्षाद्वैलक्षण्यं दुर्लभं शब्दमर्यादया वार्त्तिकात्तदर्थाऽलाभश्च तु शब्दस्य पुनरर्थत्वेऽपि नानापदाऽनन्वयस्तदवस्थश्च । किञ्च कैयटोक्तार्थकं

॥ कै॰ ॥ विषयेण त्विति । तुशब्दः पुनरर्थे यदयं णापोष्टगिति कापवादस्य टकः कित्त्वं शास्ति तज्ज्ञापयति नोत्सर्गकृतमपवादे भवतीति । षष्ठीनिर्दिष्टस्येति । नचाऽपवादः षष्ठीनिर्दिष्टस्य स्थाने विधीयते नाभि नभं

॥ भा॰ ॥ उक्तं वा । किमुक्तम् । विषयेण तु नानालिङ्गकरणात् सिद्धमिति । अथवा सिद्धं तु षष्ठीनिर्दिष्टस्य स्थानिवद्वचनात् ॥

॥ कै॰ ॥ चेत्यादौ षष्ठ्याः स्थाने प्रथमाया विधानादस्ति षष्ठी । विश्ववणरवणेतितु शब्दान्तरं प्रत्ययविषयं विज्ञेयम् । यथोक्तं वालवायो विदूरं च प्रकृत्यन्तरमेव वेति । विश्रव:शब्दात्त्वनभिधानात् प्रत्ययाभावः ॥

॥ वि॰ ॥ विषयेण तु पुनर्लिङ्गकरणात्सिद्धमिति भाष्ये तत्र पठितं न नत्वेवमितिदिक् । तत्रत्यं वेत्यंशं व्याचष्टे । अथवा सिद्धं त्विति । अनुवर्त्तमानं षष्ठीतिपदं षष्ठीनिर्दिष्टलाक्षणिकं षष्ठ्या विपरिणम्यत इत्याशयेनाह । षष्ठीनिर्दिष्टस्येति । नन्वेवं नाभि नभमित्यादौ षष्ठीनिर्देशाभावात्स्यानिवत्त्वाभावेन यत्प्रत्ययसन्नियुक्तनभस्य भत्वाङ्गत्वयोरभावाद्यस्येति लोपो न स्यादत आह । नाभीति । विधानात् । करणात् । यत्र तर्हि स्थान्यनुमानं तत्र कथमत आह । विश्रवणेति । प्रत्ययविषयम् । णिवाद्यविषयम् । वालवेति । वैदूर्यस्य विदूरान्न प्रभवः किन्तु वालवायादितिविदूरात् ञ्य इत्यस्याऽसङ्गतौ इदं वार्तिकं वालवायो विदूरमापद्यतेऽथास्मात्प्रत्ययः । यद्वा वालवायार्थवाचको विदूरोऽन्य एव ञ्यप्रत्ययविषय इतितदर्थः । ननुविश्रव:शब्दादपि प्रत्ययः स्यादत आह । विश्रव इति ॥

॥ वि० ॥ विशेषोऽस्तीति । नित्त्वं हि प्रत्ययाद्युदात्तत्वबाधेनाद्युदात्तत्वाय । स्थानिवत्त्वात् पित्त्वेनानुदात्तत्वे तु लसार्वधातुकस्याप्युदुप-
देशादित्यनुदात्तत्वे धातोरुदात्तत्वं सिद्धमेवेतिभावः । आद्युदात्तार्थमिति । इष्टमपि चित्त्वप्रयुक्तान्तोदात्तत्वं बाधित्वेत्यर्थः । अन्यत्र विकरणेभ्य
इत्यपि नित्त्वसामर्थ्याद्बाध्यत इतिभावः । किञ्च वाष्टतु इत्यस्यानेकाचो दिवादौ सत्त्वेन तत्राऽपि नित्त्वपित्त्वयोर्विशेषः । कैयटस्वरसस्तु तस्य धातोर्दिवादावभाव एवे-

॥ कै० ॥ यद्यमिति । नच पित्त्वनिवृत्त्यर्थं नियमार्थं शित्त्वम् । श्यनो नित्त्वात् ज्ञापकात् पित्त्वनिवृत्तेः सिद्धत्वात् । न
ह्यत्र पित्त्वस्य नित्त्वस्य वा विशेषोऽस्तीति केचिदाहुः । तदयुक्तम् । ताच्छील्यादौ विषये चानशि श्यनो नित्त्वं प्रकृतेराद्यु-

॥ भ० ॥ सिद्धमेतत् । कथम् । षष्ठीनिर्दिष्टस्यादेशः स्थानिवदिति वक्तव्यम् । तत्तर्हि षष्ठीनिर्दिष्टग्रहणं
कर्तव्यम् । न कर्तव्यम् । प्रकृतमनुवर्तते । क्व प्रकृतम् । षष्ठी स्थानेयोगेति । अथवा आचार्यप्रवृत्तिर्ज्ञापयति
नाऽपवादे उत्सर्गकृतं भवतीति । यदयं श्यन्वादीन् कांश्चिच्छितः करोति श्यन् श्नम् श्ना शः श्नुरिति । तस्य
दोषस्तयादेश उभयप्रतिषेधः । तस्यैतस्य लक्षणस्य दोषः । तयादेश उभयप्रतिषेधो वक्तव्यः । उभये देवमनु-
ष्याः । तयपो ग्रहणेन ग्रहणाद् जसि विभाषा प्राप्नोति । नैष दोषः । अयच् प्रत्ययान्तरम् । यदि प्रत्ययान्त-
रम् उभयीति ईकारो न प्राप्नोति । माभूदेवम् । मात्रच इत्येवं भविष्यति । कथम् । मात्रजिति नेदं प्रत्ययग्र-
हणम् । किं तर्हि । प्रत्याहारग्रहणम् । क्व सन्निविष्टानां प्रत्याहारः । मात्रशब्दात्प्रभृति आ अयचश्चकारात् ॥

॥ कै० ॥ दात्तार्थं स्यात् । तस्मादिष्टसिद्धये सामान्येन ज्ञापकं शित्त्वमाश्रीयते अपवादे उत्सर्गकृतं न भवतीति ॥

॥ वि० ॥ तिबोध्यम् । इष्टसिद्धये इति । वैयर्थ्यान्नियमत्वं वा ज्ञापकत्वं वेत्यत्र विनिगमकाभावान्नित्त्वसामर्थ्यादन्यत्र विकरणेभ्य इत्युपदेशबाधकल्पनापेक्षया
स्थानिवदित्यतिदेशबाधकल्पनस्यैवौचित्याच्चेतिभावः । सामान्येनेति । न विकरणविषयमेव नापि पित्त्वविषयमेवेत्यर्थः । भाष्ये श्यन्वादीनिति । उत्सर्गसजातीयानु-
बन्धवदपवादानामुपलक्षणम् ॥



॥ वि० ॥ प्रत्ययानुकरणमिति । टिड्ढाणञ्सूत्रे साहचर्यादितिभावः । नन्वेकस्मिन् बहुवचनमित्युक्त्या षष्ठ्यभावात्कथमादेशत्वमत आह ।
एकस्मिन्निति । भाष्येऽर्थातीति । बहुवचनशब्दो न प्रत्ययपरः किन्त्वर्थपर इति भावः । ङ्याब्ग्रहणे अदीर्घ इति भाष्ये । ननु गङ्गाया ईर्गङ्गी
गङ्गीयतेः क्विपि गङ्गीरित्यादौ स्थानिवत्त्वनिषेधो न स्यात् । नच तत्र स्थानिवत्त्वे इष्टापत्तिरस्तु सुलोपश्चास्त्विति वाच्यम् । आकारेकारप्रश्लेषमादायैतत्प्रत्याख्यानप-
रभाष्यविरोधात् । सूत्रमतेऽपि नात्र लोपः । प्रत्यासत्त्या ङ्याप्पदोपस्थितईकाराकारयोरेव दीर्घग्रहणेन ग्रहणादितिचेन्न । तेषामनभिधानात् । नचेदं विशेषणं

॥ कै० ॥ कति तिष्ठन्तीति । परिहारान्तरसद्भावान्नपट्स्वस्रादिभ्य इतिप्रतिषेधोऽत्र नोक्तः । तैलमात्रेति । चकारस्य
प्रत्याहारार्थस्योपादानात्तस्याऽविशेषकत्वाद् मात्रशब्दमात्रग्रहणप्रसङ्गः । सट्शस्येति । प्रत्ययानुकरणं मात्रशब्द इति

॥ भा० ॥ यदि प्रत्याहारग्रहणं कति तिष्ठन्ति । अत्रापि प्राप्नोति । अत इति वर्त्तते । एवमपि तैलमात्रा
घृतमात्रा अत्राऽपि प्राप्नोति । सट्शस्याप्यसंनिविष्टस्य न भवति प्रत्याहारग्रहणेन ग्रहणम् । जात्याख्यायां
बहुवचनातिदेशे स्थानिवद्भावप्रतिषेधः । जात्याख्यायां बहुवचनातिदेशे स्थानिवद्भावस्य प्रतिषेधो वक्तव्यः ।
व्रीहिभ्य आगत इत्यत्र घेर्ङितीति गुणः प्राप्नोति । नैष दोषः । उक्तमेतत् । अर्थातिदेशात्सिद्धमिति ।
ङ्याब्ग्रहणेऽदीर्घः । ङ्याब्ग्रहणेऽदीर्घ आदेशो न स्थानिवदितिवक्तव्यम् ॥

॥ कै० ॥ प्रातिपदिकस्याऽग्रहणमित्यर्थः । जात्याख्यायामिति । एकस्मिन् यत् प्राप्तमेकवचनं तस्य प्रसङ्गे
बहुवचनमादेश इतिकल्पनाऽऽश्रयेण दोषोपन्यासः ॥

॥ वि० ॥ व्यर्थम् । खट्वा इत्यादौ सवर्णदीर्घे परत्वेन परादिवद्भावप्राप्त्या स्थानिवत्त्वस्यैवाभावादितिवाच्यम् । न स्थानिवदित्यस्य स्थानिकार्यं न लभते इत्यर्थे
येन केनापि प्राप्तस्य स्थानिकार्यस्य निषेध इतिदीर्घेऽप्याप्त्वप्रयुक्तकार्याभावशङ्कावारणार्थं तत् । ह्रस्व इति नोक्तम् । चित्रायां जातश्चित्र इत्यादौ जातार्थलुकि
टापो लुक्यपि प्रत्ययलक्षणे न हल्ङ्यादिलोपापत्तेः । मम तु लुकोऽपि दीर्घभिन्नत्वात्तत्रापि न स्थानिप्रयुक्तकार्यातिदेश इति दिक् ॥

६३२

॥ वि० ॥ अतिखट्व इति । नचात ह्रस्व आकारस्येति तन्नतमात्वमल्विधिरितिवाच्यम् । गोस्त्रियोरुपसर्जनस्येत्यस्य स्त्रीप्रत्ययान्तान्तप्रातिपदिकान्त्यस्य ह्रस्व इत्यर्थः । अचश्चेति तु नोपतिष्ठते । अनियमाप्रसक्तेः । स्त्रीप्रत्ययत्वं च टाङीत्यादिविशिष्टनिष्ठमिति न दोषः । सूत्रोपात्तस्यैव स्थानितावच्छेदकत्वमित्युक्तम् । अत एव गोटाङ्ग्रहणं कर्त्तव्यमितिवार्तिकक्रतोक्तम् । स्वरितत्ववलात् स्त्रियामिति प्रकृत्य ये विहितास्तेषां ग्रहणमितिभाष्यक्रतोक्तम् । विधानञ्चानुवन्धविशिष्टस्यैवेतिस्पष्टमेवेतिदिक् । अतिखट्वायेति । नचावन्तादङ्गात्परस्य याडिति तदर्थः । उपसर्जनस्त्रीप्रत्यये च तदादिनियमात्

॥ कै० ॥ भूतपूर्व इति । अनुवन्धकार्ये सर्वत्र भूतपूर्वगत्याश्रयणादा इति च रूपसद्भावात् ।

॥ भा० ॥ किं प्रयोजनम् । निष्कौशाम्बिः । अतिखट्वः । ङ्याव्ग्रहणेन ग्रहणात्सुलोपो माभूदिति । ननु च दीर्घादित्युच्यते । तत्र वक्तव्यं भवति । किं पुनरत्र ज्यायः । स्थानिवद्भावप्रतिषेध एव ज्यायान् । इदमपि सिद्धं भवति । अतिखट्वाय अतिमालाय । याडाप इति याड् न भवति । अथेदानीमसत्यपि स्थानिवद्भावे दीर्घत्वे कृते पिच्चासौ भूतपूर्व इति कृत्वा याट् कस्मान्न भवति । लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति । ननु चेदानीं सत्यपि स्थानिवद्भावे एतया परिभाषया शक्यमिहोपस्थातुम् । नेत्याह । न तर्हीदानीं क्वचिदपि स्थानिवद्भावः स्यात् । तत्तर्हि वक्तव्यम् । न वक्तव्यम् ॥

॥ कै० ॥ लक्षणेति । अत्र चान्तरा ह्रस्वे कृते स एवायमिति बुद्धेर्विच्छेदः ॥

॥ वि० ॥ नैतदङ्गमावन्तमिति स्थानिवत्त्वेऽपि न याट्प्रवृत्तिरितिवाच्यम् । प्रत्ययग्रहणपरिभाषयाऽऽवन्तग्रहणे तेन चाङ्गविशेषणे आवन्तान्तं यदङ्गमित्यर्थान्न दोषः । अत एवार्द्धखट्वायामित्यादौ याट्सिद्धिरितिभावः । नन्वेवमपि दीर्घे कृते स्थानिवद्भावेनाप्त्वं स्यादेवाऽयं निषेधस्तु न दीर्घत्वादत आह । अत्र चेति । एवञ्च स्थानिवद्भावेन तदलाभस्तत्स्थानिन्यसत्त्वादिति भावः । भाष्ये ननु चेदानीमिति । वार्तिकाकरणे इत्यर्थः । सत्यपीति । निष्कौशाम्बिरित्यादौ ॥

६३३

॥ वि० ॥ प्रश्लिष्टनिर्देशादिति । अतिखट्वायेत्यादौ आकारस्य लाक्षणिकत्वादेव न दोषः । खट्वायै इत्यादौ प्रत्युत दोषो यतो लक्षणप्रवृत्तिं विना यद्रूपाऽसम्भवस्तदेव लाक्षणिकं परिभाषाया निषेधविषयः । नचेह तथा । एकादेशतः प्रागपि तद्रूपसत्त्वादित्याहुः । अयञ्च प्रक्षेपो याडाप आङिचाप औङ आप ङेराम्नद्याप् हल्ङ्याविव्येतेषु । ह्रस्वनद्याप इत्यत्र तु प्रक्षेपे न मानमिति दिक् । ननु भाष्यमते सूत्रमते च अतिखट्वस्य अः । अतिखट्वा इत्यत्र सुलोपो भवति वार्तिकमते तु न । अतिखट्वे आवन्तत्वस्य विच्छेदादग्रे प्ररोहाऽसम्भवादिति चेन्न । अनभिधानेनैषां प्रयोगाणामभावात् । यद्वा स्थानिवद्भावस्य कार्यार्थत्वेनाऽतिखट्वशब्दे आकारप्रश्लेषे फलाभावात्तदप्रवृत्तौ स्थानिन्यात्वबुद्धेरभावात् तदादेशे तदारोहः सूत्रमते भाष्यमते च दुर्लभः ।

॥ कै० ॥ झलादिरिति । णलादिषु थलेव भूतपूर्वो झलादिरिति भावः ॥

॥ भा० ॥ प्रश्लिष्टनिर्देशात् सिद्धम् । प्रश्लिष्टनिर्देशोऽयम् । ङी ई ईकारान्तात् । आ आप् आकारान्तादिति । आहिभुवोरीट्प्रतिषेधः । आहिभुवोरीट्प्रतिषेधो वक्तव्यः । आत्थ अभूत् । अस्ति ब्रूग्रहणेन ग्रहणादीट् प्राप्नोति । आहेस्तावन्न वक्तव्यः । आचार्यप्रवृत्तिर्ज्ञापयति । नाऽऽहेरीड् भवतीति । यदयमाहस्थ इति झलादिप्रकरणे थत्वं शास्ति । नैतदस्ति ज्ञापकम् । अस्ति ह्यन्यदेतस्य वचने प्रयोजनम् । किम् । भूतपूर्वगतिर्यथा विज्ञायेत । झलादिर्यो भूतपूर्व इति । यद्येवं थवचनमनर्थकं स्यात् ॥

॥ वि० ॥ परम्परया कार्यमादायाऽऽद्यस्थानिवत्त्वप्रवृत्तौ मानाभावात् । यत्तु वार्तिकमते लोपाप्राप्त्या भाष्यादिमतेऽपि ईकारादिप्रश्लेषान्तरेण लोपाभाव एव वाच्यः । एकप्रश्लेषेणैवाऽतिखट्व्याद्यवृत्तौ सिद्धायां दीर्घग्रहणं सूत्रमते भाष्यमते तत्प्रत्याख्यानाय कृतप्रश्लेषान्तरञ्च नियमार्थं न कदाचिद्रूपान्तरं प्राप्तौ यौ ङ्यापाविति एवञ्च न दोष इति । तन्न । मानाभावात् । अतिखट्वायेत्येव वार्तिकप्रयोजनं प्रदर्श्याऽऽकारप्रश्लेषेण हि तत्प्रत्याख्यातम् । भाष्ये आहिभुवोरिति । ब्रुव ईडिति अस्तिसिचोऽपृक्त इत्याभ्यां प्राप्तिः ॥

६३४

॥ वि० ॥ द्विसकारको निर्देश इति । अस्तिस्सिच इति सूत्रपाठ इति भावः । प्रकारान्तरे तु आदेशैरपहारात्तद्वयोच्चारणाऽभावेन निर्देश इति भाष्यास्वारस्यम् । अत एव वार्त्तिककृता सिज्लुकः स्थानिवत्त्वस्य प्रत्ययलक्षणस्य वा प्रतिषेधो नारब्धः सकारस्य सिज्विशेषणत्वमित्याशयेन । तद्विशेषणसामर्थ्यात् श्रूयमाणसान्तपरमिति प्रत्ययलक्षणसूत्रस्य विध्यर्थत्वेऽपि न दोषः । भाष्यकृता तु मध्यमणिन्यायेनोभयसम्बन्धमङ्गीकृत्य भुवः स्थानिवत्त्वप्रतिषेधोऽपि प्रत्याख्यात इति बोध्यम् । नायं खल्विति । यद्यपि इड्विर्वधस्याऽदन्तत्वेनाऽपि वारयितुं शक्या तथापि तत्वांशप्रत्याख्यानायेदमावश्यकमिति भावः । इड्वि-

॥ कै० ॥ आथिमिति । तिबादयो हि सर्वे झलादय इति णलादयो भूतपूर्वा झलादय इति भावः ॥

॥ भा० ॥ आथिमेवायमुच्चारयेत् । ब्रुवः पञ्चानामादित आथो ब्रुव इति । भवतेश्चापि न वक्तव्यः । अस्ति सिचोऽपृक्त इति द्विसकारको निर्देशः । अस्तेः सकारान्तादिति । बध्यादेशे इड्वितत्वप्रतिषेधः । बध्यादेशे इड्वितत्वयोः प्रतिषेधो वक्तव्यः । वधकं पुष्करमिति । स्थानिवद्भावादिड्वितत्वे प्राप्नुतः । नैष दोषः । उक्तमेतत् । नाऽयं खल् अन्योऽयमकशब्दः किदौणादिको रुचक इति यथेति । इड्विधिश्च । इड्विधेयः । आवधिषीष्ट । एकाच उपदेशेऽनुदात्तादितीट् प्रतिषेधः प्राप्नोति । नैष दोषः । आद्युदात्तनिपातनं करिष्यते । स निपातनस्वरः प्रकृतिस्वरस्य बाधको भविष्यति । एवमप्युपदेशिवद्भावो वक्तव्यः । यथैव हि निपातनस्वरः प्रकृतिस्वरं बाधते एवं प्रत्ययस्वरमपि बाधेत ॥

॥ वि० ॥ धिश्चेति । यथेड्विधिः सिध्यति तथा तन्निषेधे स्थानिवत्त्वप्रतिषेधो वक्तव्य इत्यर्थः । इड्विधेय इत्यस्य तन्निषेधे स्थानिवत्त्वप्रतिषेधद्वारेतिशेषः । आवधिषीष्टेति । आङो यमहन इत्यात्मनेपदम् । प्रतिषेधः प्राप्नोतीति । तत्र वधेः स्थानिवत्त्वेनाऽङ्गतया निषेधः प्राप्त इड्निषेधरूपे कार्ये स्थानिवत्त्वप्रतिषेधेनाङ्गत्वाभावान्नेत्यर्थः । वधेरपि सूत्रे स्थान्यनुरूपाऽनुदात्तस्यैवोच्चारणेन अनुदात्तत्वं बोध्यम् । प्रकृतिस्वरस्य । प्रकृतितः स्थान्यनुरूपतया प्राप्तस्यानुदात्तत्वस्य । प्रत्ययस्वरम् । तत्प्रयुक्तनिघातम् ॥

६३५

॥ वि० ॥ नन्वत्रोदाहरणे तिङ्ङतिङ इतिनिघातेन भाष्यमत आह । यदा यदिति । यदेत्यस्य तदैतदुदाहरणमित्यनेनाऽन्वयः । मध्ये भवति तदेत्यपाठः । भाष्ये आर्द्धधातुकसामान्य इति । आर्द्धधातुक इतिवल्लिङीत्याद्यपि विषयसप्तम्येवेतिभावः । एवञ्चाद्युदात्तनिपातने उपदेशिवद्भावारम्भगौरवाभावेन उपदेशत्वावच्छेदेनाऽनुदात्तत्वाऽभावात्स्थानिवद्भावेनाऽङ्गत्वे सत्यपि निषेधाप्राप्त्या तन्निषेधो न कार्य इतितात्पर्यम् । आकारान्तादिति । विभाषा

॥ कै० ॥ आवधिषीष्टेति । यदा यच्छब्दप्रयोगः यदावधिषीष्टेति तदा तिङ्ङतिङ इति निघातः प्राप्तो निपातैर्यद्यदीति

॥ भा० ॥ आवधिषीष्टेति । नैष दोषः । आर्द्धधातुकीयाः सामान्येन भवन्ति अनवस्थितेषु प्रत्ययेषु । तत्रार्द्धधातुकसामान्ये वधिभावे कृते सति शिष्टत्वात् प्रत्ययस्वरो भविष्यति । आकारान्तान्नुक्पुक्प्रतिषेधः । आकारान्तान्नुक्पुकोः प्रतिषेधो वक्तव्यः । विलापयति । भापयते । लीभीग्रहणेन ग्रहणान्नुक्पुकौ प्राप्नतः । लीभियोः प्रश्लिष्टनिर्देशात्सिद्धम् । लीभियोः प्रश्लिष्टनिर्देशोऽयम् । ली ई ईकारान्तस्येति । भी ई ईकारान्तस्येति । लोडादेशे शाभावजभावधित्वहिलोपैत्वप्रतिषेधः । एषां लोडादेशे प्रतिषेधो वक्तव्यः ।

॥ कै० ॥ प्रतिषिद्धस्तदैतदुदाहरणम् । क्वचित्तु यदावधिषीष्टेतिपाठः ॥

॥ वि० ॥ लीयतेः । बिभेतेर्हेतुभये इत्यात्वं लीलोर्नुग्लुकाविति भियो हेतुभये इति च नुक्पुकौ । प्रश्लिष्टनिर्देशादिति । यद्यपि भिय इत्यत्र प्रश्लेषे एकादेशस्य कृदतिङ्सूत्रभाष्योक्तरीत्या पूर्वधर्माऽवच्छिन्नोद्देश्यके इयङ्विधौ अचः परस्मिन्निति स्थानिवत्त्वेनेयङ् दुर्लभस्तथाऽपि सौत्रत्वात्स इतिबोध्यम् । चियो निष्ठायामितिदीर्घविधावितिदिक् । शाभावेत्यादि । शा हौ हन्तेर्जः हुझल्भ्यो हेर्धिः उतश्च प्रत्ययाद् घ्वसोरेद्धावित्येतैः ॥

॥ वि० ॥ परत्वादिति । युगपत्प्रवृत्तौ स्वस्वनिमित्तानन्तर्याभावरूपासंभवस्य सत्त्वात् । तादृशाऽसंभव एव च विप्रतिषेधशास्त्रप्रवृत्त्युपयोगी स्थानिवद्भावस्तु कार्यप्रवृत्त्युत्तरं न प्रवृत्तिकाले इति युगपदसंभवः स्पष्ट एवेतिभावः । एवमग्रेऽपि । परत्वात्तिस्वभाव इति । नच लिङ्गविशेषविभक्तिसंज्ञाऽपेक्षया प्रत्ययविशेषाऽपेक्षस्याऽप्यन्तरतङ्गत्वाच्चयादेशापत्तिः । किञ्च । स्वरूपेणोपादाने विशेषाऽपेक्षत्वकृतबहिरङ्गत्वं नेत्यर्थस्य पादः पदिति सवस्थभाष्ये

॥ कै० ॥ उकारात् प्रभृतीति । तनादिकृञ्भ्य उरित्यतस्तत्र च वसुरन्तर्भूतः ॥

॥ भा० ॥ शिष्टात् । हतात् । भिन्तात् । कुरुतात् । स्तात् । लोडादेशे कृते शाभावो जभावो धित्वं हिलोप एत्वमित्येते विधयः प्राप्नुवन्ति । नैष दोषः । इदमिह संप्रधार्यम् । लोडादेशः क्रियताम् एते विधय इति । किमत्र कर्त्तव्यम् । परत्वाल्लोडादेशः । अथेदानीं लोडादेशे कृते पुनः प्रसङ्गविज्ञानात् कस्मादेते विधयो न भवन्ति । सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवेतिकृत्वा । वयादेशे स्वन्तप्रतिषेधः । वयादेशे स्वन्तस्य प्रतिषेधो वक्तव्यः । तिस्भावे कृते त्वेस्वय इति वयादेशः प्राप्नोति । नैष दोषः । इदमिह संप्रधार्यं तिस्भावः क्रियतामाहोस्विच्चेस्वय इति । किमत्र कर्त्तव्यम् । परत्वात्तिस्भावः । अथेदानीं तिस्भावे कृते पुनः प्रसङ्गविज्ञानाच्चयादेशः कस्मान्न भवति । सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवेति । आम्विधौ च । आम्विधौ स्वन्तस्य प्रतिषेधो वक्तव्यः । चतस्रस्तिष्ठन्ति । चतस्भावे कृते चतुरनडुहोरामुदात्त इत्याम् प्राप्नोति ॥

॥ वि० ॥ ध्वनितत्वेन सर्वथा वयादेशस्यान्तरङ्गत्वमितिवाच्यम् । अर्थसंज्ञाकृतबहिरङ्गत्वस्य शास्त्रेऽनाश्रयणात् । एतेन चतस्र इत्यपि व्याख्यातमिति दिक् । विदुष इत्यत्र विदेः शतुर्वसुरितिशवादेशो वसुः । शतुरनुम इत्यादि । अनुम् शता तदन्तात्परा नदी अजादिश्च शसादिर्विभक्तिरुदात्तेत्यर्थः ॥



॥ वि० ॥ यदि प्रत्याहारेति । उम्वहितशवन्तेत्यर्थ इत्यभिमानः । अनुम्क इति । वसोरपि व्यपदेशिवद्भावेनोम्वत्त्वम् । आगमग्रहणे हीति । हिरण्यर्थे । तद्ग्रहणेऽपीत्यर्थः । कैयटेऽनुमेव शतेति । यद्यपि शतापि प्रत्याहारान्तर्गतस्तथाऽपि सामर्थ्यात्तद्भिन्नस्यैव

॥ कै० ॥ यदीति । श्नाप्रत्ययस्य प्रत्याहारान्तर्भावात् । शता य इति । नचात्र श्ना शतुः कृत इत्यनुमेव शता । मुञ्चतेति । शव-

॥ भा० ॥ नैष दोषः । इदमिह सम्प्रधार्यं चतस्भावः क्रियताम् आहोस्विच्चतुरनडुहोरामुदात्त इत्यामिति । किमत्र कर्त्तव्यम् । परत्वाच्चतस्भावः । अथेदानीं चतस्भावे कृते पुनः प्रसङ्गविज्ञानाद् आम् कस्मान्न भवति । सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवेति । स्वरे वस्वादेशे प्रतिषेधः । स्वरे वस्वादेशे प्रतिषेधो वक्तव्यः । विदुषः पश्य । शतुरनुमो नद्यजादी अन्तोदात्तादित्येष स्वरः प्राप्नोति । नैष दोषः । अनुम इति प्रतिषेधो भविष्यति । अनुम इत्युच्यते नचाऽत्र नुमं पश्यामः । अनुम इति नेदमागमग्रहणम् । किं तर्हि । प्रत्याहारग्रहणम् । क सन्निविष्टानां प्रत्याहारः । उकारात्प्रभृत्या नुमो मकारात् । यदि प्रत्याहारग्रहणं लुनता पुनता अत्रापि प्राप्नोति । नानुम्ग्रहणेन शवन्तं विशेष्यते । किं तर्हि । शतैव विशेष्यते शता योऽनुम्क इति । अवश्यं चैतदेवं विज्ञेयम् । आगमग्रहणे हि सतीह प्रसज्येत । मुञ्चता मुञ्चत इति ।

॥ कै० ॥ न्तस्य सनुम्कत्वादितिभावः । तस्मादागमग्रहणेऽपि शतैव विशेषणीय इति प्रत्याहारग्रहणेऽपि स एव विशेष्यत इत्यदोषः ॥

॥ वि० ॥ प्रत्याहारान्तर्गतस्य ग्रहणमितिभावः । व्यापकत्वात्प्राथम्याच्च तनादीत्युकारेण प्रत्याहार इतितात्पर्यम् ॥

॥ वि० ॥ भाष्ये विभाषा पूर्वत्वं प्राप्नोतीति । अत्र वार्त्तिके भाष्ये च पूर्वशब्देन तदपवादो लक्ष्यते । भाष्ये सर्वत्रेति चावङिति सूत्रस्याप्युपलक्षणम् । ध्वनितं चेदमवङ्सूत्रे भाष्येऽइति षष्ठे निरूपयिष्यामः । अनन्तरेतिन्यायेन तदपवादोऽपि परत्वाद्यणमपि बाधित्वा स्यादित्याशयः । यत्तु कैयटेन तस्मादेङ इत्यादिप्रसङ्ग उक्त इत्यन्तमुक्तं तत्तु चिन्त्यमेव एङः पदान्तादितिसूत्रे एङ्पदोच्चारणसत्त्वेन शङ्काया असंभवदुक्तिकत्वात् । भाष्योक्ते त एङ्प-

॥ कै० ॥ सर्वत्रेति । प्रकृतिभावोऽनेन विधीयते न तु पूर्वत्वं तस्मादेङः पदान्तादतीतिपूर्वत्वं प्राप्नोतीति वाच्यम् । यदा

॥ भा० ॥ गोः पूर्वणित्त्वात्त्वस्वरेषु । गोः पूर्वणित्त्वात्त्वस्वरेषु प्रतिषेधो वक्तव्यः । चित्रग्वग्रं शबलग्वग्रम् । सर्वत्र विभाषा गोरिति विभाषा पूर्वत्वं प्राप्नोति । नैष दोषः । एङ इतिवर्त्तते तत्राऽनल्विधाविति प्रतिषेधो भविष्यति । एवमपि हेचित्रगो अग्रम् इत्यत्र प्राप्नोति । णित्त्वम् । चित्रगुः । चित्रगू । चित्रगवः । गोतो णिदिति णित्त्वं प्राप्नोति । आत्त्वम् । चित्रगुं पश्य शबलगुं पश्य । आ ओत इत्यात्वं प्राप्नोति । नैष दोषः । तपरकरणात्सिद्धम् । तपरकरणसामर्थ्यात् णित्त्वात्त्वे न भविष्यतः ॥

॥ कै० ॥ ऽत्वप्रकृतिभावस्तदाऽयं प्रसङ्ग उक्तः । उत्तरं त्वल्विधित्वात्स्थानिवत्त्वाभावः ॥ ❁ ॥

॥ वि० ॥ दाभावादनुवृत्तिमजानतः शङ्केत्युक्तिसंभवात् । भाष्ये एवमपीति । लाक्षणिकत्वादस्य गोशब्दस्य स्वतः प्रकृतिभावाऽप्राप्तावपि स्थानिवत्त्वेन प्राप्नोतीति तत्प्रतिषेधो वक्तव्य इत्यर्थः । यदि तु ओत्सूत्रभाष्योक्तरीत्या वर्णग्रहणेऽपि प्रतिपदोक्तपरिभाषा प्रवर्त्तते तदेदं वचनं न कार्यम् । एङो लाक्षणिकत्वात् । तदंशे स्थानिवत्त्वाऽनपेक्षणेनाऽतिदेशविषये तदप्रवृत्तिरित्यपि नेत्याहुः । भाष्ये तपरकरणसामर्थ्यादिति । एवञ्च गस्याऽविवक्षितत्वेनाऽल्विधित्वात्स्थानिवत्त्वाऽभाव इतिभावः ॥ ❁



॥ वि० ॥ अचः पर । पूर्वणैव सिद्धे इदं किमर्थमत आह । अल्विति । उरदत्त्वे इति । अङ्गाक्षिप्तप्रत्ययपरत्वनिमित्तके इति शेषः । लिड्यभ्यासस्येत्युभयेषां ग्रहणाद् हलादिः शेषात्प्राक् सम्प्रसारणे वस्य सम्प्रसारणात्तन्निषेधाच्च प्राग् नित्यत्वात्परत्वाच्चोरदत्त्वमिति भावः । एवमचितीति । उत्तरपदस्याधिकृतस्य ह्रस्वेन विशेषणात्तदन्तग्रहणे लब्धे ह्रस्वान्ते इत्यत्रान्तस्य ग्रहणेन भूतपूर्वगतेराश्रयणेनेदं साधयितुं शक्यमिति कश्चित् ।

॥ कै० ॥ अचः परस्मिन् । अल्विध्यर्थमिदम् । तथाहि । वव्रश्चेति उरदत्त्वे कृते न सम्प्रसारणमिति वकारस्य सम्प्रसारणनिषेधः स्थान्यलाश्रयः । एवमचितीकः । सुचितीकः । बहुचितीक इति चितेः कपीति दीर्घे कृते ह्रस्वान्तेऽन्त्यात्पूर्वमिति स्थान्यलाश्रयः

॥ भा० ॥ स्वर । बहुगुमान् । न गोश्वन्साववर्ण इति प्रतिषेधः प्राप्नोति । करोतिपिबत्योः प्रतिषेधः । करोतिपिबत्योः प्रतिषेधो वक्तव्यः । कुरु पिब इति । स्थानिवद्भावाल्लघूपधगुणः प्राप्नोति । उक्तं च । किमुक्तम् । करोतौ तपरकरणनिर्देशात्सिद्धं पिबिरदन्त इति ॥ ❁ ॥ अचः परस्मिन् पूर्वविधौ । अच इति किमर्थम् । प्रश्नो विश्नः । द्यूत्वा । स्यूत्वा । आक्राष्टाम् । आगत्य । प्रश्नो विश्न इत्यत्र छकारस्य शकारः परनिमित्तकस्तस्य स्थानिवद्भावाच्छे चेति तुक् प्राप्नोति ॥

॥ कै० ॥ स्वरोऽस्मादचनाद्भवति । वार्त्तानि प्रत्युदाहरणानि कानिचिच्छक्यप्रतिविधानानीति प्रश्नः । अच इति किमिति ॥

॥ वि० ॥ तत्र । तदभावे ह्रस्वादावित्यर्थापत्तेः । ह्रस्वान्ते इत्यत्र नञ्सुभ्यामित्यनुवृत्तावपि बहोर्नञ्वदिति वचनाद् बहुचितीक इत्युदाहृतम् । प्रत्युदाहरणादिचिन्ता वृत्तिकाराणामुचिता न तु भाष्यकृतोऽत आह । वार्त्तानीति । वृत्त्युदाहृतानि । भाष्ये शकारः । च्छ्वोः शूडिति विहितः ॥

॥ वि० ॥ अत एवेति । प्रत्ययनिरपेक्षतयान्तरङ्गत्वेन तुकः शादेशात् प्राक् प्रवर्त्तनादेवेत्यर्थः । अत्रान्तरङ्गत्वं प्रथमप्रवृत्तिकत्वरूपम् । युगपदिति । बलाबलविचारस्य प्रतियोगिसापेक्षत्वेन तत्रैव सम्भवादिति भावः । यथेति । कारकः किरतीत्यादावन्तरङ्गत्वात्पूर्वमकादेशविकरणाविति भावः । सतुगिति । यद्यप्यकृतव्यूहपरिभाषया तुग्व्यावृत्तिः कर्त्तुं शक्या तथापि तदभावस्याऽपि तुग्निर्देशो ज्ञापकः । नच वाञ्छतेः क्विपि वाञ्छावि-

॥ कै० ॥ अन्तरङ्गत्वादिति । अत एव युगपत्प्राप्त्यभावाद्वार्णादाङ्गं बलीय इत्येतदत्र नास्ति । यत्र हि युगपदाङ्गवार्णयोः प्राप्तिर्यथा कारकमिति वृद्धियणादेशयोः यथा च किरतः किरन्तीति यणिच्वयोस्तत्रैतदुपतिष्ठते । तत्रायं यत्नः । च्छ्वोः शूडिति तकारच्छकारयोः

॥ भा० ॥ अच इति वचनान्न भवति । नैतदस्ति प्रयोजनम् । क्रियमाणेऽपि अज्ग्रहणे अवश्यमत्र तुगभावे यत्नः कर्त्तव्यः । अन्तरङ्गत्वाद्धि तुक् प्राप्नोति । इदं तर्हि प्रयोजनम् । द्यूत्वा स्यूत्वा । वकारस्य ऊठ् परनिमित्तकः । तस्य स्थानिवद्भावादचीति यणादेशो न प्राप्नोति । अच इति वचनाद्भवति । नैतदप्यस्ति प्रयोजनम् ॥

॥ कै० ॥ समुदायनिर्देशात्सतुक् छकारः स्थानी समुदायनिर्देशसामर्थ्याच्चालोऽन्त्यस्येत्यस्याऽनुपस्थानमनर्थकत्वात् । एवञ्च नङो ङिन्करणं विश्न इत्यत्र गुणनिषेधार्थमर्थवद्भवति ॥

॥ वि० ॥ त्यादौ शाभावाय सतुक्कनिर्देश इति वाच्यम् । शादेशयोग्यप्रत्ययपरस्य वाञ्छतेः प्रयोगाभावात् । अत एव सतुग्निर्देशसामर्थ्यात्सर्वादेशः श इति पाठभाष्योक्तं सङ्गच्छते । ननु सतुग्निर्देशेऽपि तेनाङ्गविशेषणात्तदन्तविधौ अलोऽन्त्यस्येत्यन्त्यस्यैव स्यादत आह । समुदायेति । अनर्थकत्वादिति । नानर्थक इति निषेधादिति भावः । सतुक्छनिर्देशे लिङ्गमाह । एवञ्चेति ॥



॥ वि० ॥ नहीति । अयोगवाहेषु हल्त्वाऽच्त्वयोस्समावेशदर्शनेन तयोरविरोध इति भावः । ननु स्वाश्रयाऽनिवृत्तौ वाव्योरित्यत्र दोषोऽत आह । वाव्योरितीति । असिद्धत्वनिषेधादिति । ऊठ इति शेषः । बहिरङ्गपरिभाषाऽनित्यत्वादित्यन्ये । योऽनादिष्टादच इति । अज्ग्रहणं सिद्धान्तरीत्या स्थान्यपेक्षया पूर्वत्वमाश्रीयत इत्यत्र तात्पर्यम् । स्थापयिष्यमाणत्वादिति । व्याख्यास्यमानत्वादित्यर्थः । अत्र स्वाश्रयकार्याभावाऽतिदेशस्याऽपि सिद्धान्तयिष्यमाणत्वाद्भाष्ये परिहारान्तरम् । अथवा योऽचेति । अयं भावः । अभावातिदेशेऽपि स्थानिप्रयुक्तं भवत्यादेशप्रयुक्तं नेत्यर्थ इति तदाह । समुदायेति ।

॥ कै० ॥ स्वाश्रयमिति । न ह्यतिदेशेन स्वाश्रया धर्मा निवर्त्यन्ते । यथा ब्राह्मणवदस्मिन् क्षत्रिये वर्त्तितव्यमिति क्षत्रियस्य क्षत्रियधर्माः । वाव्योरित्यादौ तु सत्यपि स्वाश्रये वल्त्वे बहिरङ्गत्वाद्यणोऽसिद्धत्वाद्धलि लोपाभावः । द्यूत्वेत्यत्र तु नाऽजानन्तर्य इति असिद्धत्वनिषेधाद् यण् प्रवर्त्तते । ऊठः स्थानिवत्त्वाद्यलोपः कथं नाशङ्कित इति चेत् । योऽनादिष्टादच इत्येवमर्थस्याऽज्ग्रहणस्य स्थापयिष्यमाणत्वात् ।

॥ भा० ॥ स्वाश्रयमत्राऽच्त्वं भविष्यति । अथवा योऽत्रादेशो नाऽसावाश्रीयते यश्चाऽऽश्रीयते नाऽसावादेशः । इदं तर्हि प्रयोजनम् । आकाष्टाम् । सिचो लोपः परनिमित्तकस्तस्य स्थानिवद्भावात् षढोः कस्सीति कत्वं प्राप्नोति । अच इति वचनान्न भवति । एतदपि नास्ति प्रयोजनम् । वक्ष्यत्येतत् पूर्वत्रासिद्धे न स्थानिवदिति । इदं तर्हि प्रयोजनम् । आगत्य । अभिगत्य ॥

॥ कै० ॥ योऽत्रादेश इति । समुदायरूप ऊठ् । यश्चाश्रीयत इति । यण्विधावच् । नासावादेश इति । समुदायस्यादेशत्वात् । नचाऽऽदेशस्याऽवयव आदेशो गृह्यते । मुख्यसम्भवे गौणग्रहणस्याऽयुक्तत्वात् । स्वाञ्जादीनां तर्ह्यनुबन्धवियुक्तानां धातुसंज्ञा आदेशावयवत्वान्न प्राप्नोति । षष्ठादेशस्य ल्टदित्त्वादङर्थात् ज्ञापकाद्धातुकार्याणि भविष्यन्तीत्यदोषः ॥

॥ वि० ॥ यथा सूत्रे सानुबन्धकग्रहणे तस्याऽनल्विधित्वं स्थानित्वं च नालस्तथाऽऽदेशत्वमपि सूत्रोपात्तस्यैवेति भावः । एवञ्च यण् नादेशप्रयुक्तः किन्तु तदवयवप्रयुक्त इति नासौ वार्यत इति तात्पर्यम् । आदेशो गृह्यत इति । आदेश इति गृह्यत इत्यर्थः । न प्राप्नोतीति । स्थानिवत्त्वेनेति शेषः । भाष्ये आगत्येतिमलोपस्याऽपि ह्रस्वस्य पित्कृत्प्रत्ययपरत्वसम्पादकतया तुग्विधावाश्रयणमित्यर्थः । अभावातिदेशे चैतत् फलम् । अत एवाऽभावातिदेशे पटयतीत्यादौ वृद्धिर्नित्यत्रे भाष्यं सङ्गच्छते ॥

॥ वि० ॥ ननु स्वाश्रयवत्त्वादिना यलोपसिद्धावपि आलोपः स्थानिवत्त्वेन स्यादिति तद्वारणाय परग्रहणमावश्यकमेवेत्यत आह । अव्युत्पन्न-त्वादिति । आकारलोप इति । आतो लोप इत्यनेन । जनेरौणादिके यकि ये विभाषेत्यात्वे टापि तेनैकादेशे तस्य पूर्वान्तवद्भावादार्द्धधातुकत्वेन युव-तिशब्देन बहुव्रीहौ निङादेशे यलोपेऽवशिष्टस्य स्थानिवत्त्वेनार्द्धधातुकत्वादिसत्त्वात् । यातिरितिवदिति भावः । ननु आभीयत्वेनाऽऽत्वस्यासिद्धत्वाल्लोपो नेत्यत आह ।

॥ कै० ॥ युवजानिरिति । अव्युत्पन्नत्वादुणादीनां जाशब्दस्याऽऽकारलोपो न भवति । अन्यथाऽऽकारस्य निङि कृते यलोपे च निङः स्थानिवद्भावात्प्रत्ययत्वादाकारलोपः स्यात् । नचाऽसिद्धवदत्राभादित्याकारलोपे कर्त्तव्येऽसिद्धत्वमात्वस्य । व्याश्रयत्वात् । पुनरिति । यस्येति लोपे

॥ भा० ॥ अनुनासिकलोपः परनिमित्तकस्तस्य स्थानिवद्भावाद्ध्रस्वस्येति तुङ् न प्राप्नोति । अच इति वचनाद्भ-वति । अथ परस्मिन्निति किमर्थम् । युवजानिः । वधूजानिः । द्विपदिका वैयाघ्रपद्यः । आदीध्ये । युवजानिः वधूजानिरिति जायाया निङ् अपरनिमित्तकः । तस्य स्थानिवद्भावाद्वलीति यलोपो न प्राप्नोति । परस्मिन्निति वचनाद्भवति । नैतदस्ति प्रयोजनम् । स्वाश्रयमत्र वल्त्वं भविष्यति । अथवा योऽत्राऽऽदेशो नाऽसावाश्रीयते यश्चा-ऽऽश्रीयते नाऽसावादेशः । इदं तर्हि प्रयोजनम् । द्विपदिका त्रिपदिका । पादस्य लोपोऽपरनिमित्तकस्तस्य स्थानि-वद्भावात्पद्भावो न प्राप्नोति । परस्मिन्निति वचनाद्भवति । एतदपि नाऽस्ति प्रयोजनम् । पुनर्लोपवचनसामर्थ्यात् स्थानिवद्भावो न भविष्यति । इदं तर्हि प्रयोजनम् । वैयाघ्रपद्यः ॥

॥ कै० ॥ सिद्धे पादशतस्येत्यत्र पुनर्लोपवचनं स्थानिवत्त्वनिषेधार्थम् । पुनर्लोपवचने सति लुप्यत एवाकारः कार्ये नाऽऽश्रीयते इत्यर्थः ॥

॥ वि० ॥ नचेति । व्याश्रयत्वादिति । ये आत्वमास्थानिके निङि लोप इत्यात्वनिमित्तापेक्षया न्यूननिमित्तकत्वाद् व्याश्रयता । भाष्ये द्विपदिकेति । द्वौ द्वौ पादौ ददातीति तद्धितार्थेतिसमासे पादशतस्येतिवुन्लोपौ । परस्मिन्नितीति । सहविधाने परनिमित्तकत्वव्यवहाराऽभावादित्यर्थः । पुनर्लोपवचनेन यथा स्थानिवत्त्वाभावस्त-थाऽभिनयति । पुनर्लोपे इति । भाष्ये वैयाघ्रपद्ये व्याघ्रस्येव पादावस्येति बहुव्रीहौ पादस्य लोप इति लोपे गर्गादित्वाद्यञि पादः पदिति पद्भावे न व्वाभ्यामित्यैच् ॥



॥ वि० ॥ ननु स्थानिवत्त्वादित्ययुक्तं तेन विनापि टित एत्वात् प्राग् यीवर्णयोरित्यस्य परत्वात्प्राप्तेरत आह । इट इति । अन्तरङ्गत्वादिति भावः । नित्यत्वादिति । लोपस्तु विकरणे कृते तेन व्यवधानान्न प्राप्नोतीतिभावः । यद्यपि लुकि इलोपप्राप्तिः सोऽपि नित्यस्तथापि विकरणस-म्प्रधारणामावाऽभिप्रायेणेदम् । ननु परस्मिन्नित्यस्याऽभावे शब्लुकः स्थानिवत्त्वेन एरनेकाच इति यण् स्यात् तत्र च कृते यलोपे स्थानिवत्त्वनिषेधेन इकारपर-

॥ कै० ॥ ननु चाऽत्रापीति । यस्येति लोपे सिद्धे पादस्य लोप इति पुनर्लोपवचनादित्यर्थः । आदीध्य इति । इट एत्वे कृते

॥ भा० ॥ ननु चात्राऽपि पुनर्वचनसामर्थ्यादेव भविष्यति । अस्ति ह्यन्यत्पुनर्लोपवचने प्रयोजनम् । किम् । यत्र भसंज्ञा न व्याघ्रपात् श्येनपादिति । इदन्त्वाऽप्युदाहरणम् । आदीध्ये आवेव्ये । इकारस्यैकारो न परनिमित्तकः । तस्य स्थानिवद्भावाद् यीवर्णयोर्दीधीवेव्योरिति लोपः प्राप्नोति । परस्मिन्नितिवचनान्न भवति । अथ पूर्वविधाविति किमर्थम् । हे गौः । वाभ्रवीयाः । नैधेयः । हेगौरित्यौकारः परनिमित्तक-स्तस्य स्थानिवद्भावादेङ्ह्रस्वात्संबुद्धेरितिलोपः प्राप्नोति । पूर्वविधावितिवचनान्न भवति ॥

॥ कै० ॥ लोपः प्राप्नोति विकरणश्च तत्र नित्यत्वाद्विकरणस्तस्य लुक् तस्य स्थानिवद्भावेन एरनेकाच इति यण् न प्रवर्त्तते । क्ङिलुगुपधात्वचङ्परनिर्ह्रासकुत्वेष्विति स्थानिवत्त्वनिषेधात् ॥

॥ वि० ॥ त्वाऽभावान्न लोपप्राप्तिर्यलोपे लोपरूपाजादेश एव भिति नियमस्वनिर्मित्तभूताऽजादेशविषय एवाऽस्तु परस्मिन्निति च न कार्यमत आह । एरनेकाच इति । एतेन शब्लुकः स्थानिवत्त्वेन व्यवधानाद्यीवर्णयोरित्यस्याप्राप्तिरित्यपास्तम् ॥

६४४

॥ वि० ॥ ह्रस्वादित्येवेति । सेस्मृतोशब्दादावप्येवम् । यत्र स्थानिवत्त्वेऽपि न ह्रस्वान्तता तत्राऽऽह । खट्वे इति । लोपः सिद्ध इत्यनुपद्यते । स्थानिवत्त्वादेवैकाराकारप्रश्लेषेऽपि न दोषः । नैतेभ्य इति । एवं दीर्घैकारान्तप्रकृतिकसे इत्यादीनामेकाक्षरकोशबोधितस्य रा इत्यस्य च संबुद्धावभिधानाभावो बोध्यः । अत्रेदं चिन्त्यम् । ओग्रहणस्य भाष्ये कृतत्वेन दीर्घौकारान्तप्रकृतिकओकारान्तानभिधाने मानाभावः । गोऽर्थमितिभाष्यं तु ओशब्दस्य

॥ कै० ॥ यदयमिति । अग्ने वायो इति स्थानिवत्त्वात् ह्रस्वादित्येव लोपः सिद्धः । खट्वे माले इत्यादौ हल्ङ्याब्भ्य

॥ भा० ॥ नैतदस्ति प्रयोजनम् । आचार्यप्रवृत्तिर्ज्ञापयति न संबुद्धिलोपे स्थानिवद्भावो भवतीति । यदयमेङ्ह्रस्वात्संबुद्धेरित्येङ्ग्रहणं करोति । नैतदस्ति ज्ञापकम् । गोऽर्थमेतत् स्यात् । यत्तर्हि प्रत्याहारग्रहणं करोति इतरथा ह्योह्रस्वादित्येव ब्रूयात् । इदं तर्हि प्रयोजनम् ॥

॥ कै० ॥ इति । नयत्यादीनां विजन्तानां विचि गुणे ने लो इति कथं संबुद्धिलोप इतिचेन्नैतेभ्यो विच् दृश्यते ॥

॥ वि० ॥ सर्वसंमततया ओकारान्तोपलक्षणतया व्याख्येयमेव सर्वैः । किञ्च संबुद्धावनभिधानेनोपपत्तौ सर्वथा विजभावकल्पना कुत इति । अपरेतु पर्वविधावित्यस्याऽभावेऽयं विचारः । तत्र दीर्घान्तप्रकृतिक एकारान्ते स्थानिवत्त्वेनैङोऽभावाद् विनातिदेशबाधं प्रत्याहारग्रहणचारितार्थ्यस्य वक्तुमशक्यत्वादनभिधानकल्पने न मानम् । नचेदं भाष्यमभावातिदेशानङ्गीकारेणैव प्रवृत्तमितिवाच्यम् । अथवा योऽत्राऽऽदेश इति भाष्येण तदाश्रयणात् । आगत्य वैयाघ्रपद्य इत्यादेः प्रत्युदाहरणेन तदाश्रयणाच्चेत्याहुः । भाष्ये गोऽर्थमेतदिति । अनिष्टलोपसिद्ध्यर्थमेव तत् । स्थानिवद्भावेनैङ्त्वादितिभावः ॥

६४५

॥ वि० ॥ वाभ्रवीया इति । मधुबभ्र्वोरिति यञि वृद्धावोर्गुणेऽवि वृद्धाच्छे यस्येतिलोपे हलस्तद्धितस्येतिसूत्राद्धल इत्यनुवर्त्तमाने आपत्यस्येति सूत्रेण यलोपः । ननु सिद्धान्तेऽपि यनिमित्तो वान्तादेशः कथं यलोपनिमित्तं स्यादत आह । सन्निपातेति । भाष्ये नैधेय इति ।

॥ कै० ॥ वाभ्रवीया इति । सन्निपातपरिभाषाया अनित्यत्वाद्यशब्दसन्निपातनिमित्तो वान्तादेशो यलोपनिमित्ततां प्रतिपद्यते । योऽत्रादेश इति । वान्तः समुदायः । यश्चेति । लोपं प्रति निमित्तत्वेन वकारः । नैधेय इति । स्थानिवद्भावात्

॥ भा० ॥ वाभ्रवीयाः । माधवीयाः । वान्तादेशः परनिमित्तकस्तस्य स्थानिवद्भावाद्धलस्तद्धितस्येति यलोपो न प्राप्नोति पूर्वविधाविति वचनाद्भवति । एतदपि नास्ति प्रयोजनम् । स्वाश्रयमत्र हल्त्वं भविष्यति । अथवा योऽत्रादेशो नासावाश्रीयते यश्चाऽऽश्रीयते नाऽसावादेशः । इदं तर्हि प्रयोजनम् । नैधेयः । आकारलोपः परनिमित्तकस्तस्य स्थानिवद्भावाद् द्व्यज्लक्षणो ढग् न प्राप्नोति पूर्व्वविधावितिवचनाद्भवति । अथ विधिग्रहणं किमर्थम् । सर्व्वविभक्त्यन्तस्समासो यथा विज्ञायेत । पूर्व्वस्य विधिः पूर्वविधिः पूर्वस्माद्विधिः पूर्व्वविधिरिति ॥

॥ कै० ॥ व्यच्त्वव्यपदेशे सति विरोधात् स्वाश्रयं द्व्यच्त्वं न लभ्यते । यदविरुद्धं स्वाश्रयं तदतिदेशेन न बाध्यते विरुद्धं तु बाध्यत एव । संख्याकृतस्तु व्यपदेशः परस्परपरिहारेण लोके स्थितः । न हि त्रिपुत्रो द्विपुत्रव्यपदेशं लभते । अथेति । अचः परस्मिन् पूर्वस्येत्येषं षष्ठ्या विध्यर्थ आक्षिप्तः पूर्वस्य कार्यं कर्त्तव्य इति कार्यस्य विधिरितिप्रश्नः ॥

॥ वि० ॥ निपूर्वाद्धाञः किप्रत्यये आतो लोपे गतिसमासे द्व्यच इतश्चानिञ इतिढक् ॥

॥ वि० ॥ जश्त्वं प्राप्नोतीति । झलां जशोऽन्त इत्यस्य पदचरमावयवविधायकत्वात् । जश्ग्रहणं तु झलां जशिति जश्त्वे तन्निषेधार्थम् । एकादेशस्यैवेति । अत एवोभयत आश्रये नेत्यनेन वच्यमाणसमाधानं सङ्गच्छते । सिद्धान्त्येकदेश्याह । अस्ति पुनरिति । पूर्वपच्याह । कानीति । इह पदान्त एव यकारादिर्विधेय इति भावसाधनेऽपि सिध्यतीति भावः । असाधारणमिति । भावसाधनपचमात्रसाध्यमित्यर्थः । भाष्ये षडिक-

॥ कै० ॥ ब्रह्मबन्ध्वेति । ब्रह्मबन्धुशब्दादूङ् ऊङन्तूङोरेकादेश आदिवद्भावादूङ्ग्रहणेन गृह्यत इति तस्मिन् स्वादिष्वितिपदसंज्ञायां धकारस्य पदान्तता विधेयेति स्थानिवत्त्वनिषेधाज्जश्त्वं स्यात् । भसंज्ञां तु प्रत्येकादेशस्य स्थानिवत्त्वादूकारान्तमेतदिति भिन्नावधिकत्वाद्भपद-संज्ञयोर्नास्ति बाध्यबाधकभावः । यणादेशोच्चारणं चाऽतन्त्रम् । एकादेशस्यैवोदाहरणत्वात् । कानि सन्तीति । पचद्वयसाधारणमिदं प्रयो-जनम् । भावसाधनपचेऽपि सिध्यत्येवेति तूपन्यस्तम् । यकार इति । यकारवकारौ विधीयमानावेव पदान्तौ भवत इत्यस्ति पदान्ततया विधा-

॥ भा० ॥ इदञ्च ब्रह्मबन्ध्वा ब्रह्मबन्ध्वै धकारस्य जश्त्वं प्राप्नोति । अस्ति पुनः किञ्चिद्भावसाधनस्य विधि-शब्दस्योपादाने सतीष्टं संगृहीतम् । आहोस्विद्दोषान्तमेवेति । अस्तीत्याह । इह कानि सन्ति यानि सन्ति कौ स्तः यौ स्त इति । योऽसौ पदान्तो यकारो वकारो वा श्रूयते स न श्रूयते । षडिकश्चाऽपि सिद्धो भवति ॥

॥ कै० ॥ नम् । इदानीमसाधारणं प्रयोजनमाह । षडिक इति । षडङ्गुलिशब्दाद् बह्वचो मनुष्यनाम्नष्ठज्वेति ठचि कृते ठाजादावूर्ध्वमिति ङ्गुलिशब्दस्य लोपे यस्येति लोपे षषित्ययं शब्दोऽन्तर्वर्तिन्या विभक्त्या सिद्धः पदत्वेनेति पदान्ततया अविधानान्नास्ति स्थानिवत्त्वनिषेध इत्यकार-लोपस्य स्थानिवद्भावादकारान्तस्य भसंज्ञा । पदसंज्ञा त्वन्तर्वर्त्तिविभक्त्याश्रयेण षकारान्तस्येति सिद्धं जश्त्वम् । कर्मसाधने तु षषः षकारः पदान्त-त्वेन सिद्ध इति स्थानिवत्त्वनिषेधात् षकारान्तस्यैव भसंज्ञेति तुल्यावधिकया भसंज्ञया पदसंज्ञाया एकसंज्ञाधिकाराद् बाधनाज्जश्त्वासिद्धिः ॥

॥ वि० ॥ स्थापीति । अत्रैकादेशाऽल्लोपान्तसपादसप्ताध्यायीस्थकार्यप्रवृत्तियोग्यतयाऽसिद्धत्वेन जश्त्वाप्रवृत्तिस्तदनन्तरं त्वल्लोपस्य स्थानिवत्त्वप्रसक्तिस्तत्र कर्मसा-धने यस्येति लोप इक्निमित्तकभत्वेन समासान्तर्वर्तिविभक्तिनिमित्तकपदत्वस्यापि निवृत्तेः षडिकासिद्धिः ।



॥ वि० ॥ नच भत्वे स्थानिवत्त्वमल्लोपस्येति न समानावधिकत्वं भत्वपदत्वयोरितिवाच्यम् । साचात्परम्परया वा पदान्तस्थानिकविधिप्राप-कप्रतिबन्धकस्थानिवत्त्वस्य निषेधेन भत्वेऽपि तन्निषेधात् । पदान्तत्वेन सिद्धस्य विधावित्यर्थे पदत्वस्य सिद्धत्वेन तद्द्वारकपरम्परायां वक्तुमशक्यत्वे-नान्यद्वारिकाया अपि ग्रहणात् । भावसाधनत्वे तूपस्थितपदत्वद्वारिकैव परम्परा गृह्यते इति भत्वे निषेधाभावेन स्थानिवत्त्वादकारान्ते भत्वेऽपि षान्ते पदत्वस्याव्या-घातेन न दोष इत्याशयः । कैयटे पदान्ततायाः अविधानादिति । पदत्वस्याविधानेन धर्मविशिष्टत्वेनापि पदान्तस्याविधानादितिभावः । सिद्ध इति । जश्त्वे कार्ये

॥ कै० ॥ वाचिकस्त्विति । चकारस्य पदान्तत्वात्कुत्वप्रसङ्गात् । कथं पुनः षडिकस्य सिद्धिः । यावतोक्तं योऽसौ पदान्तो यकार इति तद्वदिहापि डकारस्य पदान्तस्य विधेयत्वात् पदान्ततया विधिरिति स्थानिवत्त्वनिषेधप्रसङ्गः । नैष दोषः । पूर्वमेव जश्त्वेन डकारस्य निष्पन्नत्वान्नेदानीं विधिरिति भावसाधने षडिकसिद्धिः । कर्मसाधने तु डकारस्य पदान्तत्वेन प्रसिद्धस्य भत्वात्पदत्वनिवृत्तौ षकाररूपापत्तिर्विधेयेति स्थानिवत्त्वनिषेधात् तुल्यावधिकया भसंज्ञया पदसंज्ञाया बाधनाज्जश्त्वनिवृत्तौ षडिकासिद्धिः । नच

॥ भा० ॥ वाचिकस्तु न सिध्यति । अस्तु तर्हि कर्मसाधनः । यदि कर्मसाधनः । षडिको न सिध्यति । अस्तु तर्हि भावसाधनः । वाचिको न सिध्यति । वाचिकषडिकौ न संवदेते ॥

॥ कै० ॥ भावसाधने षकारापत्तिर्भाव्येति शक्यते वक्तुं तस्या अपदान्तरूपत्वात् पदान्तत्वे हि जश्त्वं स्यात् । नच जश्त्वविधि-निमित्तस्थानिवत्त्वनिषेधः । यत्र स्थानिवत्त्वनिषेधाज्जश्त्वं विधीयते सग्धिर्बब्धामिति सोऽस्य विषयः । इह तु पूर्वमेव जश्त्वं कृतं स्थानिवत्त्वनिषेधात्तु तन्निवृत्तिराशङ्क्यते पूर्वत्रासिद्धे न स्थानिवदित्यस्याप्ययमविषयः । न ह्यत्र पूर्वत्रासिद्धीयं किञ्चित्कार्यं विधेयम् ॥

॥ वि० ॥ इतिशेषः ॥ सिद्धान्त्येकदेश्याह । वाचिकस्त्विति । चकारस्येति । वाचिकेऽपि वागाशीर्दत्तशब्दात् ठचि ठाजादावितिशीर्दत्तशब्दलोपे यस्येति लोपे पूर्वोदाहरणे डत्ववदत्रापि कुत्वापत्तिरितिभावः । एवं मदुक्तरीत्या भाष्यस्य सामञ्जस्ये कथम्पुनरित्यादिर्न ह्यत्र पूर्वत्रासिद्धीयं किञ्चित्कार्यं विधेयमित्यन्तः कैयटश्चिन्त्यः । स्फुटार्थत्वाच्च न व्याख्यातः । तथा हि पूर्वमेव डस्य निष्पन्नत्वादित्यसङ्गतं सपादसप्ताध्यायीस्थकार्यप्रवृत्तियोग्यतया तदप्राप्तेः । किञ्च षकाररू-पापत्तिर्न शास्त्रीया । पदचरमावयवस्य शास्त्रीयस्यैव ग्रहीतुमुचितत्वादित्याद्यूह्यम् ॥

॥ वि० ॥ सिद्धान्त्याह । कर्तव्योऽत्रेति । पञ्चमे वक्ष्यमाणयत्नं दर्शयति । एकेति । तथाचाज्झलादेशत्वाद्वाचिके भत्वेऽपि न स्थानिवत्त्व-मितिभावः । एवञ्च भावसाधनपक्षोऽत्र स्थितः । पूर्वपक्ष्याह । ब्रह्मबन्ध्वेति । सिद्धान्त्येकदेशी उक्तमपि यः सम्प्रतिपदान्त इत्येवंरूपं सिद्धान्तं परेण गृहीतत्वात् पक्षानुरूपवलिन्यायेनाह । उभयत इति । तद्व्याचष्टे । यस्मात्स्वादिविधिरिति । अत एवात्र नैकदेशविकृतन्यायेन धान्तस्य पदत्वसम्भावना । उकारान्ताद्दूङ्विधानेनाक्रपरिमाणसंज्ञात्वेन दुर्लभत्वात् उभयत आश्रयणे इत्यस्यैकदेशिमतत्वाच्च । एतच्चान्तादिसूत्रे वक्ष्यते । पूर्वपक्ष्याह । कथं वेतस्वानिति । अथ वेतस्वानित्येवंजातीयकानामेतदनुदाहरणत्वमेवेति बोधयितुं वास्तवं सिद्धान्तमाह । नैवमिति । तद्व्याचष्टे । नच झ्मतुविति । एवं ब्रह्मबन्धूशब्दे ऊकारो न पद-

॥ कै० ॥ कर्त्तव्योऽत्र यत्न इति । एकाचरपूर्वपदानामुत्तरपदलोपो वक्तव्य इति वाचिकः सिद्धः । षडिकस्तु षषष्ठाजा-दाविति लोपे यस्येति लोपे च सिद्धः । उभयत इति । यस्मात् स्वादिविधिस्तस्मादौ पदमिति पूर्वपरोभयाश्रयणम् ।

॥ भा० ॥ कर्त्तव्योऽत्र यत्नः । कथं ब्रह्मबन्ध्वा ब्रह्मबन्ध्वे । उभयत आश्रयणे नान्तादिवदिति । कथं वेतस्वान् । नैवं विज्ञायते पदस्यान्तः पदान्तः । पदान्तस्य विधिः पदान्तविधिः । पदान्तविधिं प्रतीति । कथं तर्हि । पदे अन्तः । पदान्तः । पदान्तस्य विधिः पदान्तविधिः पदान्तविधिं प्रतीति ॥

॥ कै० ॥ पदेऽन्त इति । न च झ्मतुप्प्रत्ययः पदम् । एवं षडिके इकप्रत्ययो न पदमिति नास्ति स्थानिवत्त्वनिषेधः ॥

॥ वि० ॥ मितिबोध्यम् । नन्विदमयुक्तं गतिकारकोपपदानां सुबुत्पत्तेः पूर्वं समासेऽसुबन्तत्वेन सुबन्तेन समासे उत्तरपदत्वे चेति प्रत्ययलक्षणनिषेधेन चोत्तर-स्यापदत्वात् गोऽचेत्यादावल्लोपस्य स्थानिवत्त्वेनावङापत्तेरिति चेन्न । उत्तरपदस्य कार्यित्व एव प्रत्यासत्त्या तन्निषेधप्रवृत्तेः । अत्र चेदं भाष्यमपि मानम् । सुबुत्पत्तेः पूर्वं समासस्य चैतद्विषयेऽनित्यत्वान्न प्रवृत्तिरितिभावः । एवञ्च विग्रहद्वयप्रदर्शनेन पदचरमावयवे कर्त्तव्ये परपदस्थाजादेश एव न स्थानिवदिति भाष्ये ध्वनितं कानि सन्तीत्यायेवोदाहरणम् । एवञ्च पूर्वसूत्रेऽपरविधाविति प्रघट्टकस्थकैयटग्रन्थो भोभगो इतिसूत्रस्थकैयटग्रन्थश्च चिन्त्य एव । एवं षडिके इत्याद्यपि चिन्त्यम् । इकस्य पदत्वाभावेऽपि क्ङलिशब्दाकारयोर्लोपे तस्य स्थानिवद्भावेन पदत्वात्तस्मिन्नन्तस्य विधिसत्त्वेन दोषादितिदिक् ॥



॥ वि० ॥ भाष्ये पदस्यान्त इति पूर्वपक्षे पूर्वपक्ष्यभिमते एकपदस्थाऽजादेशस्य स्थानिवत्त्वनिषेधेऽपि न दोष इति प्रौढ्या प्रतिपादयितुं भसंज्ञात्र बाधिका भविष्यतीति स्वोक्तेरेकदेश्याशयमाह । अथवेति । यः संप्रतिपदान्त इत्येतत्तु न शब्दमर्यादालभ्यमिति भावः । अस्य पक्षस्य कैयटोक्तव्याख्या चिन्त्या । तावताऽपि भसंज्ञायाः पदान्तविधित्वानुपपादनात् । किञ्च यथा कारकाधिकारे कारकं सत्कर्मेति व्याख्यानेन तयोः संज्ञयोः समावेश उक्तस्तथाऽत्रापि स्यात् । न हि भत्वपदत्वयोः समावेश इष्टः । तस्मादेवं व्याख्येयम् । यथा रुत्वजश्त्वादीनां साक्षात्प्रापकः प्रतिबन्धको वा स्थानिवद्भावः प्रतिबध्यते तथा भसंज्ञाविषयातिदेशस्याऽपि परम्परया तत्त्वाद् निषेध इति । यथैवान्यानि पदकार्याणि पदचरमावयवकार्याणि रुत्वजश्त्वादीनि तत्प्रापकपद-संज्ञारूपं चाऽत्र सूत्रे उपलक्ष्यन्ते पदान्तविधिशब्देन गृह्यन्ते । पदचरमावयवप्रापकाद्यपि तत्त्वेन गृह्यते । एवमिदमपि भसंज्ञारूपमपि । पदकार्यं परम्परया

॥ कै० ॥ यथैवेति । यचिभमित्यत्र तसौ मत्वर्थ इत्यत्र च पदमिति वर्त्तते तेन पदं सञ्ज्ञं भवतीति लब्धे पदत्वे तन्निबन्धनरुत्वप्रतिबन्धार्था भसंज्ञा

॥ भा० ॥ अथवा यथैवान्यान्यपि पदकार्याण्युपलक्ष्यन्ते रुत्वं जश्त्वञ्च एवमिदमपि पदकार्यमुपलक्ष्यते । किम् । भसंज्ञा नाम । वरे यलोपविधिं प्रति न स्थानिवद्भवतीत्युच्यते तत्र तेऽप्सु यायावरः प्रवपेत पिण्डान् अवर्णलोपविधिं प्रति स्थानिवत्स्यात् ॥

॥ कै० ॥ तद्विषयत्वात् पदान्तविधिरिति स्थानिवत्त्वनिषेध इति भत्वाद्रुत्वाऽभावः सिद्धः ॥

॥ वि० ॥ पदचरमावयवप्रापकं प्रतिबन्धकं वा पदचरमावयवत्वेन गृह्यते इत्यर्थः । अयं भावः । यथा पदान्तपदे उपस्थितत्वात्पदत्वद्वारिका परम्परा गृह्यते तथा पदत्वबाधकतया भत्वस्यापि प्रत्यासन्नत्वेन तद्द्वाराऽपि पदचरमाऽवयवविषयस्थानिवत्त्वप्रतिषेध इति । षडिके तु षषष्ठाऽजादिवचनात्सिद्धमितिद्वितीयादच उर्ध्वलोपविधायकवचनप्रामाण्यात् तद्विषये न भत्वद्वारा पदचरमावयवसंपादकस्थानिवत्त्वप्रतिषेध इति न दोषः । वाचिके त्वेवं न दोषः । उत्तरपदलोप-विधानात् । पञ्चमे चेदमुपपादयिष्यते । एवञ्चामलकीतटीसारसीत्यादौ जश्त्वादिप्रसक्तिरेव नेति बोध्यम् । यद्यपि पूर्वत्राऽसिद्धे न स्थानिवदिति निषेधोऽत्र प्राप्नोति । तथाऽपि विधिशब्दो भावसाधनोऽन्तशब्दश्चरमावयववाचीत्यादिसिद्धान्तान् बोधयितुं पूर्वत्रासिद्धे इत्यादावपि साक्षात्परम्परया वा प्रापकप्रतिबन्धकस्य निषेध इत्यादि बोधयितुं पदेऽन्त इति सप्तमीसमासेन वेतस्वानित्यादौ न पदान्तेति निषेधवारणेन पूर्वत्राऽसिद्धे नेत्यत्र पदचरमावयवविधायकातिरिक्तस्यैव ग्रहणमेवं जश्पदेनेति बोधयितुमुपक्षेप इति बोध्यम् ॥

॥ वि० ॥ भाष्येऽवर्णलोपविधिमिति । आतो लोप इटि चेत्येतं प्रतीत्यर्थः । एवञ्च वरे यलोपग्रहणे कृतेऽपि यायावर इत्यस्याऽसिद्धिरिति शङ्का । यातिरित्यस्याऽत्राऽसिद्धेः सिद्धान्तमाह । अथवेति । यलोपे किमिति । यायावरे यलोपस्य वरे इत्यनेनैव सिद्धत्वात्प्रश्नः । कौ लुप्तमिति । यद्यप्यप्रत्ययशब्देन विजप्युच्यते तथापि तस्य क्वाचित्कत्वान्न दोषः । क्विग्रहणं विचोऽप्युपलक्षणमित्यन्ये । कैयटे उक्तं हीति । कण्ड्वादिभ्यो यगित्यत्र भाष्ये । उपधात्व-

॥ कै० ॥ कण्डूयतेरिति । क्यजन्तात् क्विप् यगन्तात्तु क्विन्न भवति । उक्तं हि भाष्ये नैतेभ्यः क्विप् दृश्यत इति । सौरीति । एको-ऽण्यकारलोपो द्वितीय ईकारे तयोः स्थानिवत्त्वाद्यकारस्योपधात्वन्न स्यात् । स्थानिवत्त्वनिषेधे द्वितीयलोपस्य समानाश्रयत्वादसिद्धत्वादणि लोपस्य व्याश्रयत्वात्सिद्धत्वाद् यकारस्य उपधात्वाल्लोपः सिध्यति । आदित्य इति । अदितेः साऽस्य देवतेत्यत्रार्थे ण्यस्ततो भवाद्यर्थे

॥ भा० ॥ नैष दोषः । नैवं विज्ञायते वरे यलोपविधिं प्रति न स्थानिवदिति । कथं तर्हि । वरे अयलोपविधिं प्रतीति । किमिदमयलोपविधिं प्रतीति । अवर्णलोपविधिं प्रति यलोपविधिं च प्रतीति । अथवा योगविभागः करिष्यते वरे लुप्तं न स्थानिवत् । ततो यलोपविधिं प्रति न स्थानिवदिति । यलोपे किमुदाहरणम् । कण्डूयतेरप्रत्ययः कण्डूरिति । नैतदस्ति कौ लुप्तं न स्थानिवत् । इदं तर्हि प्रयोजनम् । सौरी बलाका । नैतदस्ति उपधात्वविधिं प्रति न स्थानिवत् । इदं तर्हि प्रयोजनम् । आदित्यः । नैतदस्ति पूर्वत्रासिद्धे न स्थानिवत् । इदं तर्हि कण्डूतिर्वल्गूतिः । नैतदस्ति प्रयोजनम् । कण्डूया वल्गूया इति भवितव्यम् । इदं तर्हि कण्डूयतेः क्तिच् । ब्राह्मणकण्डूतिः क्षत्रियकण्डूतिः ॥

॥ कै० ॥ द्वितीयो ण्यः । हलो यमां यमीति लोपयिष्यते स च स्थानिवत्त्वनिषेधात् सिध्यति । ब्राह्मणकण्डूतिरिति । षष्ठीसमासः कर्मधारये कण्डतिशब्दस्य पूर्वनिपातप्रसङ्गः ॥

॥ वि० ॥ विधिं प्रतीति । प्रत्ययविधावित्यनाश्रित्येदम् । तत इति । आदित्यशब्दादित्यर्थः । अदितेरपत्यण्यान्ताद्देवतार्थे ण्य इति तु नोक्तम् । आपत्यस्येत्यस्य प्राप्त्या पूर्वत्रासिद्धे इत्यक्षरयन्यासङ्गतेः । तस्मादेतत् खण्डनमेतदज्ञानेनैवेति बोध्यम् । कण्डूतिशब्दस्येति । विशेषणत्वादित्यर्थः । नचाऽत्राऽल्लोपस्य स्थानिवत्त्वादुवङ् एव स्यादिति वाच्यम् । जाते तत्रोठा सिद्धेः । ऊठि तु न स्थानिवत्त्वमनादिष्टादचः पूर्वत्वाऽभावात् । अस्मादेव भाष्यप्रयोगात्स्थानिद्वारकं तदाश्रयणं क्वाचित्कमित्याहुः ॥



॥ वि० ॥ ननु लितीति वचनसामर्थ्यात्स्यादेवेत्यत आह । कारक इतीति । अत्र वचनं सावकाशमितिभावः । स्वरविधाविति । हल्स्वरप्राप्तेः सत्त्वादितिभावः । अन्यव्यवधाने इति । अज्व्यवधान इत्यर्थः । अज्व्यवेति वा पाठः । लुप्ततया तदनुच्चारणेन तदाश्रयस्यापादयितुमशक्यत्वात्तस्य स्यादिति नापादितं स्वरविधौ स्थानिवत्त्वाभावाच्च । ननु लितीत्यत्र प्रत्ययात्पूर्वमित्यनुवृत्तेः पूर्वग्रहणस्य सत्त्वान्निर्दिष्टपरिभाषाऽनुपस्थितिः पूर्वशब्दस्य व्यवहितेऽपीति

॥ कै० ॥ आकर्षिक इति । चरत्यर्थे आकर्षात् ष्ठलिति ष्ठल् । यस्येतिलोपस्य स्थानिवत्त्वात् ककाराकारस्योदात्तत्वं न स्यात् कारक इत्यादौ च स्वरविधौ व्यञ्जनमविद्यमानवदिति व्यञ्जनस्याविद्यमानवत्त्वादनन्तरस्य स्वरभाजस्सम्भवादन्यव्यवधाने

॥ भा० ॥ प्रतिषेधे स्वरदीर्घयलोपेषु लोपाजादेशो न स्थानिवत् । प्रतिषेधे स्वरदीर्घयलोपविधिषु लोपाजादेशो न स्थानिवदितिवक्तव्यम् । स्वर । आकर्षिकः । चिकीर्षकः । जिहीर्षकः ॥

॥ कै० ॥ न स्यात् यत्र तु व्यवहितेऽपि पूर्वशब्दो वर्त्तते तत्राप्यऽवध्यवधिमतोरानन्तर्यासम्भवादन्तरालस्थान् सतोऽप्यर्था-ननादृत्य व्यवहारः । यत्र त्वानन्तर्यसम्भवस्तत्र व्यवहितं नैवाश्रीयते । ष्ठलो लित्करणाद् व्यवधानेऽपि भविष्यतीतिचेत् । आकारस्यापि पक्षे स्यादिति स्थानिवत्त्वनिषेधः ॥

॥ वि० ॥ न दोषोऽत आह । यत्र त्विति । तत्राप्यव्यवधानारोपेणैव प्रयोगः पूर्वादीनां चाव्यवहिते एव शक्तिरितिभावः । यत्र त्विति । मुख्ये सम्भवति आरोपितग्रहणे मानाभाव इतिभावः । परं त्विदं चिन्त्यम् । तस्मिन्निति सूत्रे निर्दिष्टग्रहणात् । तस्मात् उत्तरांशविकलपरिभाषोपस्थितेः प्रत्ययः परश्चेत्यादौ दृष्टत्वादत्रा-प्युपस्थितिरितितत्त्वम् । पक्षे स्यादिति । अनुदात्तं पदमिति वचनात्पक्षे इत्युक्तम् । चिकीर्षक इत्याद्यर्थमावश्यकेन निषेधेनैव सिद्धेर्लित्त्वसामर्थ्यमेव कथमितिचिन्त्यम् ॥

॥ वि० ॥ भाष्ये पञ्चारत्न्य इति । अन्तरङ्गत्वेनापीदं सिद्धम् । बहुखट्वक इत्युदाहरणम् । अत्र कपि आपोऽन्यतरस्यामिति ह्रस्वत्वे तस्य स्थानिवत्त्वाद् ह्रस्वान्तेऽन्त्यादिति स्वरो न भवति । प्रतिदीव्नेत्यत्र बहिरङ्गत्वेनासिद्धत्वमल्लोपस्येति न शङ्क्यम् । विपार्यां तदप्रवृत्तेः । वाय्वो-

॥ कै० ॥ प्रतिदीव्नेति । रेफवकारान्तस्य भस्य नभकुर्छुरामिति दीर्घत्वनिषेध इत्यत्र न प्रवर्त्तते । इह हि लोपोऽपीति । प्रकृतः । प्रस्तुतः । आनुपूर्व्येणेति । तत्र पदार्थानां समन्वयावगमात् । इह तु लोपो यशब्देन सम्बद्धः । सकृच्च श्रुतो

॥ भा० ॥ यो ह्यन्य आदेशः स्थानिवदेवासौ भवति । पञ्चारत्न्यो दशारत्न्यः । स्वर । दीर्घ । प्रतिदीव्ना प्रतिदीव्ने । यो ह्यन्य आदेशः स्थानिवदेवासौ भवति । किर्योः । गिर्योः । दीर्घ । यलोप । ब्राह्मणक-ण्डूतिः । क्षत्रियकण्डूतिः । यो ह्यन्य आदेशः स्थानिवदेवासौ भवति । वाय्वोरध्वर्य्वोरिति । तर्त्तर्हि वक्तव्यम् । न वक्तव्यम् । इह लोपोऽपि प्रकृत आदेशोऽपि विधिग्रहणमपि प्रकृतमनुवर्त्तते दीर्घादयोऽपि निर्दिश्यन्ते । केवलं तत्राभिसम्बन्धमात्रं कर्त्तव्यम् । स्वरदीर्घयलोपविधिषु लोपाजादेशो न स्थानिव-दिति । आनुपूर्व्येण सन्निविष्टानां यथेष्टमभिसम्बन्धः शक्यते कर्त्तुम् । नचैतान्यानुपूर्व्येण संनिविष्टानि ॥

॥ कै० ॥ द्विधा चास्योपयोग इष्यते स्वरदीर्घयलोपाश्च विच्छिन्नाः कथं समुच्चीयन्तामितिभावः ॥

॥ वि० ॥ रित्यत्रापि यथा न सा तथोक्तम् । रेफेति । अत्र तु नान्तं भमितिभावः । न सूत्रान्तरवृत्तित्वं प्रकृतत्वमित्याह । प्रस्तुत इति । पदान्तरेणाव्यव-धानरूपाऽऽसत्तिरानुपूर्व्यम् । विच्छिन्नाः । विभिन्नदेशस्थाः । भाष्ये यथेष्टसम्बन्धः । इष्टवाक्यार्थबोधजनकत्वरूपः ॥



॥ वि० ॥ असम्भवादिति । चखतुर्जग्मतुरित्यादौ सम्भवाच्चिन्त्यमिदम् । पारिशेष्यादिति । व्याख्यानाच्चेत्यपि बोध्यम् । एतावदिति । पूर्वोक्तो नियमोऽपीत्यर्थः । ननु सूत्रस्यैकत्वात्तावन्मात्रविषये तादृशो वाक्यार्थो दुर्वच इत्यत आह । ग्रहणकवाक्यादिति । पाठक्रमादिति । आर्थक्रमो नाम राजपुरप्रवेशन्यायेन स्वस्वाकाङ्क्षितार्थान्वयक्रमः । एवञ्च कल्पितासन्नवाक्याद्बोधविषये तात्पर्यं नियामकमितिभावः । भाष्यात्तु आसत्त्यभावेऽपि पदार्थोपस्थितौ आकाङ्क्षावशाद्व्युत्पत्त्यनुसारेणाऽन्वयबोध इतिभावः । साचीनमित्यस्य तिर्यग्गच्छन्तमित्यर्थः । क्निलुगितिवार्त्तिके क्नावित्यत्र विधावित्येतदध्या-

॥ कै० ॥ अनानुपूर्व्येणापीति । लोपशब्द आवर्त्तते । तत्र लोपाजादेश इति ज्ञायते । तत्र द्विर्वचनविधौ लोपाजादेशस्याऽसम्भवा-त्सवर्णादिविधौ तु तस्यैव सम्भवान्न तत्राऽऽदेशस्य लोपो विशेषणम् । पदान्ते तु यद्यपि सम्भवव्यभिचारौ स्तस्तानि सन्ति कानि सन्तीति । तथापि न पदान्तेतियोगविभागात् तद्विधौ लोपो न विशेषणमिति पारिशेष्यात् स्वरदीर्घयलोपेषु लोपाऽजादेशो न स्थानिवदिति

॥ भा० ॥ अनानुपूर्व्येणापि सन्निविष्टानां यथेष्टमभिसम्बन्धो भवति । तद्यथा । अनड्वाहमुदहारि या त्वं हरसि शिरसा कुम्भं भगिनि साचीनमभिधावन्तमद्राक्षीरिति । तस्य यथेष्टमभिसम्बन्धो भवति उदहारि भगिनि या त्वं कुम्भं हरसि शिरसा अनड्वाहं साचीनमभिधावन्तमद्राक्षीरिति । क्निलुगुपधात्वचङ्परनिर्ह्रासकुत्वेषूपसंख्यानम् । क्निलुगु-पधात्वचङ्परनिर्ह्रासकुत्वेषूपसंख्यानं कर्त्तव्यम् । क्नौ किमुदाहरणम् । कण्डूयतेरप्रत्ययः कण्डूरिति । नैतदस्ति । यलोपविधिं प्रति न स्थानिवत् । इदं तर्हि पिपठिषतेरप्रत्ययः । पिपठीः । नैतदस्ति ॥

॥ कै० ॥ विज्ञायते । स्मृतिशास्त्रत्वाच्चाऽस्य एतावन्तोऽर्थाः सन्निहिता इत्येतावत्प्रतीयते । ग्रहणकवाक्यात्तु लक्ष्यसंस्कारकं प्रक्रिया-वाक्यम् उपप्लवत इति सिद्धमिष्टम् । अनड्वाहमिति । पाठक्रमादार्थक्रमो बलीयानिति यथेष्टमत्राभिसम्बन्धः ॥

॥ वि० ॥ क्रियते तेन क्निनिमित्तविधावित्यर्थः । आवृत्त्या क्नावित्यादेशेनाऽपि संबध्यते क्निनिमित्तादेश इत्यर्थः । तदेतदर्थतः पठ्यते । क्नौ लुप्तमिति । इदं च क्वाचित्कमिति वक्ष्यते । एवं लुग्रूपे आदेशे उपधात्वप्रयुक्ते कार्ये चङ्परह्रस्वे कुत्वे च स्थानिवत्त्वं नेत्यर्थः । भाष्ये क्नावित्यस्य क्नौ लुप्तमित्यर्थे उदाहरणं कण्डूरिति । क्यजन्तात् क्विप् । अत्र यण् न यलोपश्च भवतीतिभावः । तत्रान्त्यं खण्डयति । यलोपेति । पिपठीरिति । अल्लोपस्य स्थानिवत्त्वेन रेफान्तस्याऽप-दत्वाद्दीर्घो न स्यादिति भावः । अत्र इत्वमप्येतदधीनमेव ॥

॥ वि० ॥ लावयतेरिति । णयन्तलूधातोरित्यर्थः । ऊड् नेति । कौ वान्तस्याऽनङ्गत्वादितिभावः । ऊठि एत्येधतीतिवृद्धिः । वर्णाश्रयत्वादिति । अचः परस्मिन्निति स्थानिवत्त्वं तु न वृद्धेरनादिष्टादचः पूर्वत्वाभावात् । तत्र त्विति । कारक इत्यादौ णिस्थानिकवृद्धिविषये स चरितार्थस्तथैव चातोलोप इति सूत्रे भाष्ये स व्याख्यात इतिभावः । परेतु षत्वतुकोरितिज्ञापकादनित्यत्वेनान्तरङ्गत्वमनाश्रित्य कौ लुप्तमिति न कार्यं नित्यत्वाच्च पूर्वं णिलोपः । वृद्धिस्त्वकृते णिलोपे उपदेशेन कृते त्वतिदेशेनेत्यनित्येतिपूर्वपच्याशयमाहुः । देवयतेरिति । णयन्ताद्दिवेरित्यर्थः । नन्वत्रोठ् कौविधिमित्येव सिद्धः । नचो-

॥ कै० ॥ लौरिति । णिलोपस्य स्थानिवत्त्वादूण् न स्यात् । अकृत्वेति । णयल्लोपावियङ्यण्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषिद्धमिति णिलोपस्ततो वृद्धिरावादेशस्तु वर्णाश्रयत्वात् प्रत्ययलक्षणेन न भवति यथा गोहितमित्यवादेशः । एतच्चान्तरङ्गत्वमनाश्रित्योक्तम् । तत्र त्वाश्रितेऽन्तरङ्गबहिरङ्गयोर्विप्रतिषेधाभावः । लवमाचष्ट इति । कौ विधिं प्रति न स्थानिवदित्यस्याऽर्थस्य

॥ भा० ॥ दीर्घविधिं प्रति न स्थानिवत् । इदं तर्हि । लावयतेर्लौः । पावयतेः पौः । नैतदस्ति । अकृत्वा वृद्ध्यावादेशौ णिलोपः । प्रत्ययलक्षणेन वृद्धिर्भविष्यति । इदं तर्हि लवमाचष्टे लवयति । लवयतेरप्रत्ययो लौः स्थानिवद्भावण्णोरूण् न प्राप्नोति । कौ लुप्तं न स्थानिवदिति भवति । एवमपि न सिध्यति । कथम् । कौ णिलोपो णावकारलोपस्तस्य स्थानिवद्भावादूण् न प्राप्नोति । नैष दोषः । नैवं विज्ञायते । कौ लुप्तं न स्थानिवदिति । कथं तर्हि । कौ विधिं प्रति न स्थानिवदिति । लुकि किमुदाहरणम् । बिम्बं बदरम् ॥

॥ कै० ॥ प्रदर्शनायेदमुदाहृतम् । इदं तु कौ लुप्तस्योदाहरणं देवयतेर्द्यूरिति । बिम्बमिति । बिम्बीबदरीशब्दाभ्यां ङीषन्ताभ्यामनुदात्तादेश्चेत्यञ् । तस्य फले लुक् । लुक् तद्धितलुकीति ङीषो लुकि तस्य स्थानिवद्भावाद्यस्येतिलोपः प्राप्नोतीति प्रतिषेध उच्यते तद्धितस्य स्थानिनः परत्वाल्लुकोऽपि परत्वाऽऽश्रयणात् परनिमित्तकत्वं स्त्रीप्रत्ययलुक आश्रीयते । अन्यथा अभावेन पौर्वापर्याभावात् कुतः परनिमित्तकत्वम् । अथवा बुद्धिपरिकल्पितमभावेनापि पौर्वापर्यं भवति ॥

॥ वि० ॥ कारस्य वृद्धिः स्यात् णेः स्थानिवत्त्वादितिवाच्यम् । ऊठ आदिष्टादचः पूर्वत्वादिति नेदमसाधारणमुदाहरणमितिचेन्न । सखीयतेः सखुरिति ख्यत्यात्सूत्रभाष्योक्तं णयन्तपदेः पात् पद इति येनविधिरितिसूत्रभाष्योक्तं कण्डूतिः पिपठीरित्यादौ यणभावरुत्वयोः सिद्धिश्च तस्याऽसाधारणमुदाहरणं स्थानिद्वारकेऽनादिष्टादचः पूर्वत्वे तु इदमप्युदाहरणमिति बोध्यम् । नैवं विज्ञायते कौ लुप्तमिति । नैवमेव विज्ञायते किन्त्विदमपि क्वाचित्कं लक्ष्यसिद्धये आश्रयणीयमितिभावः ॥



॥ वि० ॥ तदाश्रये इति । वृक्षजातिः स्त्रियामितिलिङ्गानुशासनाद् वृक्षे स्त्रीलिङ्गत्वं फले च नपुंसकत्वमितिभावः । वस्तुत आम्र इत्यादौ लिङ्गानुशासनस्य व्यभिचारादेतद्भाष्यप्रामाण्याच्च बिम्बबदरामलका वृक्षेऽपि त्रिलिङ्गा इत्याहुः । किं तर्हीति । यौगिकत्वे हि वृक्षसम्बन्धात् फले न पुनः फलसम्बन्धाद् वृक्षे इत्यत्र विनिगमनासम्भवादितिभावः । विशिष्टेति । विजातीयेत्यर्थः । अन्तरङ्गानपीति । अस्य न्यायस्यान्तरङ्गनिमित्तविनाशकलुक एव तदन्तरङ्गबाधकताबोधकत्वे तु तत्परिभाषाप्रवृत्त्यभावसम्पादकस्थानिवत्त्वनिषेधायेदमितिबोध्यम् । अश्वविकेति । वोतोगुणेति ङीषो वैकल्पिकत्वादितिभावः ।

॥ कै० ॥ पुंवद्भावेनेति । भस्याढे तद्धित इति पुंवद्भावः । अत्र च भाषितपुंस्कत्वं नाश्रीयते इत्येवमुक्तम् । तदाश्रये तु नास्ति पुंवद्भावः । आमलकमिति । वृद्धत्वाद् मयटो विधानाद्भत्वाभावः । प्रकृत्यन्तरत्वादिति । बिम्बबदरामलकादयो न यौगिकाः शब्दाः किं तर्हि विशिष्टफलजातिवाचिन इत्यर्थः । पञ्चभिरिति । आर्हादितिठक् तस्याध्यर्द्धपूर्वेति लुक् । लुक् तद्धितलुकीतिङीषो लुक् ।

॥ भा० ॥ नैतदस्ति पुंवद्भावेनाप्येतत्सिद्धम् । इदं तर्हि आमलकम् । नैतदस्ति । वक्ष्यत्येतत् फले लुग्वचनानर्थक्यं प्रकृत्यन्तरत्वादिति । इदं तर्हि पञ्चभिः पट्वीभिः क्रीतः पञ्चपटुर्दशपटुरिति । ननुचैतदपि पुंवद्भावेनैव सिद्धम् । कथं पुंवद्भावः । भस्याढे तद्धिते पुंवद्भवतीति । भस्येत्युच्यते यजादौ च संज्ञा भवति । नचात्र यजादिं पश्यामः । प्रत्ययलक्षणेन यजादिः । वर्णाश्रये नास्ति प्रत्ययलक्षणम् ॥

॥ कै० ॥ अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधत इति यणादेशः पूर्वं न प्रवर्तते । कृते तु लुकि तस्य स्थानिवत्त्वाद्यणः प्रसङ्ग इति स्थानिवत्त्वनिषेध उच्यते । अश्वविकन्यायेन पटुशब्दान्तादेव ठग् भविष्यति न तु पट्वीशब्दान्तादिति चेत्प्रतिपत्तिगौरवप्रसङ्गः । वर्णाश्रय इति । यद्यपि पुंवद्भावे सिद्धश्च प्रत्ययविधावित्यस्ति तथापि यत्र भावि भत्वं तत्र पुंवद्भावः । इह तु लुकि भत्वाभावात् कुतः पुंवद्भावः ॥

॥ वि० ॥ प्रतिपत्तिगौरवेति । ज्ञानगौरवेत्यर्थः । ननु भसंज्ञकस्य न पुंवत्त्वं येन वर्णाश्रयतया भत्वाभावेन पुंवत्त्वं न स्यात् किं तु तत्प्रत्ययविषये पूर्वमेव पुंवत्त्वप्रतिपत्तिरत आह । यद्यपीति । इह तु लुकीति । अनेन नलुमतेति निषेधान्न प्रत्ययलक्षणम् । किञ्च ढभिन्नतद्धितविषयाभावादपि न तत्प्रवृत्तिरित्यपि ध्वनितम् । किञ्चान्तरङ्गानपीति न्यायेनैकादेशात्पूर्वमेव लुकि प्रत्ययलक्षणसत्त्वे यजादित्वाभावान्न भत्वम् । नच वर्णप्राधान्याभावात्कथं वर्णाश्रये नास्तीत्युक्तिर्भगवत इति वाच्यम् । प्रत्ययलक्षणसूत्रस्य नियमार्थत्वमितिपक्षेऽदोषात् ॥

॥ वि० ॥ नलुमताङ्गस्येतियथाश्रुतेऽभ्युपेत्यापि ठक्छसोश्चेतिपुंवत्त्वंभाष्ये आह । न खल्वपीति । नन्वानुक् न ङीषीत्युच्यते येन स्थानिवत्त्वेन तदापत्तिरत आह । सन्नियुक्त इति । एवञ्च सन्नियोगशिष्टपरिभाषाप्राप्ताऽऽनुक्निवृत्तिप्रतिबन्धद्वारा आनुग्रहणमेव पूर्वविधिरिति भावः । अत एवैनेय इत्यादौ यस्येति लोपे नस्य श्रवणम् । अत एवाचःपरस्मिन्निति सूत्रे विधिशब्दस्य भावसाधनत्वे पूर्वस्य विधानं प्रति पूर्वस्य भावं प्रति पूर्वः स्यादिति स्थानिवदित्यर्थ उक्तः । पूर्वः स्यादित्यस्य पूर्वः स्थितः स्यादित्यप्यर्थो बोध्यः । एवञ्च पूर्वसूत्रे तन्त्रेणोभयसाधनविधिशब्दघटितग्रहणम् । यत्तु कैयटादिभिः सन्नियोगशिष्टपरि-

॥ कै० ॥ किं तर्ह्यन्येऽपीति । यत्र पुंवद्भावो नास्ति पञ्चेन्द्र इति । साऽस्य देवतेत्यण् तस्य द्विगोर्लुगनपत्य इति लुक् ततो ङीषो लुक् तस्य स्थानिवत्त्वाद् ङीष्सन्नियुक्त आनुक् श्रूयते यथेन्द्राणीति तथा पञ्चाग्नाय्यो देवता अस्य पञ्चाग्निरिति ऐकारः श्रूयेत समानायामा-

॥ भा० ॥ एवं तर्हि ठक्छसोश्चेत्येवं भविष्यति । ठक्छसोश्चेत्युच्यते । नचात्र ठक्छसौ पश्यामः । प्रत्ययलक्षणेन । नलुमता तस्मिन्निति प्रत्ययलक्षणस्य प्रतिषेधः । न खल्वप्यवश्यं ठगेव क्रीतप्रत्ययः क्रीताद्यर्था एव वा तद्धिताः । किं तर्ह्यन्येऽपि तद्धिता ये लुकं प्रयोजयन्ति । पञ्चेन्द्राण्यो देवता अस्येति पञ्चेन्द्रः । दशेन्द्रः । पञ्चाग्निः । दशाग्निः । उपधात्वे किमुदाहरणम् । पिपठिषतेरप्रत्ययः पिपठीरिति । नैतदस्ति । दीर्घविधिं प्रति न स्थानिवत् । इदं तर्हि सौरी बलाका । नैतदस्ति । यलोपविधिं प्रति न स्थानिवत् ॥

॥ कै० ॥ कृतौ भाषितपुंस्कत्वाभावाद्वर्णाश्रयत्वाद्भत्वाभावाच्च पुंवद्भावो नास्ति । अथवा यस्येतिलोपप्रसङ्गः । लुकि च स्थानिवत्त्व-निषेधाद्दादीध्य इतिपरस्मिन्नित्यस्य पूर्वसूत्रे प्रत्युदाहरणमुपपद्यते । शब्लुकि कृते टेरेत्वस्य स्थानिवद्भावादव्यवधानाच्च लोपप्रसङ्गात् ॥

॥ वि० ॥ भाषाऽनित्यत्वेनेदं साधितं तद्वृथैव । नन्वत्रापि भस्याढ इति पुंवत्त्वं स्यादत आह । समानायामिति । पुंसि इन्द्रत्वादि प्रवृत्तिनिमित्तं स्त्रियां तु तत्सं-बन्ध इतिभावः । नन्वेवमग्नायी देवता अस्याग्नेयं हविरिति उदाहरणासिद्धिस्तस्मादारोपितेन्द्रत्वाद्येव स्त्रियामपि प्रवृत्तिनिमित्तमित्यत आह । वर्णाश्रयत्वादिति । अणो लुकि नलुमतेति निषेधाद् ढभिन्नतद्धितविषयाभावाच्चेत्यपि बोध्यम् । अथवेति । ङीलुकः स्थानिवत्त्वेन भत्वादीकारपरत्वाच्चेतिभावः । शब्लुकीति । अन्यथा शब्लुकः स्थानिवत्त्वेन व्यवधानात्प्राप्तिरेव नेति भावः । शब्लुकः परनिमित्तत्वाभावादेव न स्थानिवत्त्वप्रसक्तिः । अत एव जुहुत इत्यादौ श्लोः स्थानिवत्त्वान्न गुणः ॥



॥ वि० ॥ भाष्ये योऽसौ णाविति । णेर्णिच्युपसंख्यानमितिसिद्धमेतत् । वस्तुभेदान्न दोष इति तत्त्वम् । अत एव ज्ञापकात्प्रायोगिकम-च्स्थानिकादेशत्वमेवाऽचः परस्मिन्नित्येतत्प्रवृत्त्युपयोगीति बोध्यम् । प्रत्ययविधाविति । अत एव चङ्परह्रस्वे निषेधः सार्थकः । ननूपधात्वे स्थानिवत्त्वनिषेधेऽपि ञ्णित्परत्वांशे णिपरत्वांशे च तस्य दुर्वारत्वेन न पटयतीत्यादौ वृद्धिर्नाऽपि ह्रस्वनिषेधो व्यर्थ इति चेन्न । प्रत्ययस्याङ्गांशे उत्थिताकाङ्क्षत्वेन ञ्णिति णावित्यादेरङ्गविशेषणत्वस्यैवौचित्यात् । उपधात्वप्रयुक्तकार्य एव तन्निषेधेन ञ्णित्परत्वाद्यंशेऽपि स्थानिवत्त्वनिषेधाच्च । अर्क इति । कर्मणि घञ्

॥ कै० ॥ पारिखीय इति । परिखाशब्दाच्चातुरर्थिकेऽणि कृते आकारलोपस्य स्थानिवत्त्वात्पारिखे भव इति वृद्धादकेकान्तखोपधादिति छो न स्यात् ।

॥ भा० ॥ इदं तर्हि पारिखीयः । चङ्परनिर्ह्रासे चोपसंख्यानं कर्त्तव्यम् । वादितवन्तं प्रयोजितवान् । अवीवद-द्वीणां परिवादकेन । किं पुनः कारणं न सिध्यति । योऽसौ णौ णिर्लुप्यते तस्य स्थानिवद्भावाद्ध्रस्वत्वं न प्राप्नोति । ननु चै-तदप्युपधात्वविधिं प्रति न स्थानिवदित्येवं सिद्धम् । विशेषत एव तदुक्तव्यम् । क्व । प्रत्ययविधाविति । इह माभूत् पटयति लघयति । कुत्वे चोपसंख्यानं कर्त्तव्यम् । अर्चयतेरर्कः । मर्चयतेर्मर्कः । नैतद् घञन्तम् । औणादिक एष कप्रत्ययस्त-स्मिन्नाष्टमिकं कुत्वम् । एतदपि णिचा व्यवहितत्वान्न प्राप्नोति । पूर्वत्रासिद्धे च । पूर्वत्रासिद्धे च न स्थानिवदिति वक्तव्यम् । किं प्रयोजनम् । क्सलोपः सलोपे । क्सलोपः सलोपे प्रयोजनम् । अदुग्ध अदुग्धाः । लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्य इति लुग्ग्रहणं न कर्त्तव्यम् भवति । दध आकारलोप आदिचतुर्थत्वे प्रयोजनं धत्से धद्ध्वे धद्ध्वमिति ॥

॥ कै० ॥ क्सलोप इति । अदुग्धेत्यर्थं लुग्वचनं कर्त्तव्यमेव । तदर्थं लुग्ग्रहणं नेति छेदं कुर्वन्ति । कर्त्तव्यं भवतीत्युत्तरम् । अवश्यकार्यमित्यर्थः ॥

॥ वि० ॥ चजोरिति कुत्वमिति भावः । नैतद् घञन्तमिति । एरच्प्रसङ्गादित्यर्थः । एतदपीति । एवञ्च कुत्व इत्यावश्यकमिति भावः । वस्तुतस्तद-नावश्यकमित्याह । पूर्वत्रासिद्धे इति । अचः परस्मिन्नित्येतद्दृष्ट्या विपाद्या असिद्धत्वेन न्यायसिद्धत्वेन न्यायसिद्धानुवादोऽयं तत्फलं त्वतिदेशान्तराणां वतिघटिता-नामन्तादिवदित्यादीनां त्रिपाद्यां प्रवृत्तिबोधनम् । तेनामी चीरपेणेत्यादौ तत्सिद्धिरिति दिक् । अदुग्धेति । क्सस्यान्तलोपे झलो झलीति सलोपे तदीयान्त्यलोपस्य स्थानिवत्त्वं न । चतुर्थत्व इति । भष्भावे इत्यर्थः ॥

॥ वि० ॥ चकार इति । स्थ्वोरित्यनुकर्षणार्थ इत्यर्थः । पूर्वत्रैवेति । एकाचो बश इत्यनेनेत्यर्थः । ननु संयोगान्तलोपप्रभृतिषु इत्युक्ता तं विहाय कृत्वाद्युदाहरणदाने बीजाभावोऽत आह । संयोगान्तेति । पदान्तेति । चिन्त्यमेतत् । पदचरमावयव एव तन्निषेधात् । परपदस्थाजादेशस्यैव तेन स्थानिवत्त्वनिषेधाच्चेति । तदुदाहरणानि दर्शयति । स्कन्दयतेरित्यादिना । काष्ठतगिति । नच काष्ठशगेव नास्ति कुतः काष्ठशक् स्थातेति परेश्चेति सूत्रस्थभाष्याद् एषामनभिधानमिति वाच्यम् । यत्र संयोगादिलोपप्रसक्तिस्तद्विषयत्वेनाऽनभिधानस्यादोषात् । नन्वत्र संयोगादिलोपः प्राप्नोति न च तत्र पदान्तविधित्वमिति न तेन सिद्धिरत आह । संयोगादिलोपेति । केचित्तु एतद्भाष्यप्रामाण्यादेषां प्रयोगाणामनभिधानमेवेत्याहुः । भाष्ये वरे यलोपस्वरवर्जमिति ।

॥ कै० ॥ चकारो न कर्त्तव्य इति । झषन्तत्वात् पूर्वत्रैव सिद्धत्वात् । पापक्तिरिति । क्तिच् । संयोगान्तलोपादयः पदान्तविधौ स्थानिवत्त्वनिषेधात्सिद्धा इति भाष्ये नोदाहृताः । स्कन्दयतेः स्कन् काष्ठं तचयतीति काष्ठतक् । संयोगादिलोपलत्वणत्वेष्विति वचनात्संयोगादिलोपे स्था-

॥ भा० ॥ दधस्तथोश्चेति चकारो न कर्त्तव्यो भवति । हलो यमां यमि लोपे प्रयोजनम् । आदित्यः । हलो यमां यमि लोपः सिद्धो भवति । अल्लोपणिलोपौ संयोगान्तलोपप्रभृतिषु प्रयोजनम् । पापच्यतेः पापक्तिः । यायज्यतेर्यायष्टिः । पाचयतेः पाक्तिः । याजयतेर्याष्टिः । द्विर्वचनादीनि च प्रयोजनानि न पठितव्यानि भवन्ति पूर्वत्रासिद्धेनैव सिद्धानि भवन्ति । किमविशेषेण । नेत्याह । वरे यलोपस्वरवर्जम् । वरे यलोपं स्वरं च वर्जयित्वा । तस्य दोषः संयोगादिलोपलत्वणत्वेषु । तस्यैतस्य लक्षणस्य दोषः संयोगादिलोपलत्वणत्वेषु ॥

॥ कै० ॥ निवृत्त्यात्तदभावात्तत्र संयोगान्तलोपः । दोहयतेर्धोक् । लेहयतेर्लेट् । उणादीनामव्युत्पन्नत्वात् किर्योर्गिर्योरित्यत्र दीर्घाभावः ॥

॥ वि० ॥ सवर्णानुस्वारदीर्घादयः साहचर्यात् त्रैपादिका एव गृह्यन्त इति भावः । नन्वेवं यङन्तात्सिजन्तप्रकृतिकणयन्ताद्वा चिणि अशंशामि अशामीत्यादौ दीर्घो न स्यात् णिलोपाल्लोपयोः स्थानिवत्त्वादिति चेन्न । णेर्णिच्युपसंख्यानादशामीत्यस्य सिद्धेः । अशंशामि इति तु यङ्लुगन्ताद् णिचि भविष्यति । नहि यङ्यङ्लुकोः स्वरे रूपे वा विशेषः । णाहितमित्यादौ विहितविशेषणाश्रयणान्न दीर्घ इति दिक् । अन्ये तु तृतीयषष्ठाध्यायस्थभाष्यप्रामाण्यादन्यदीर्घमप्युपलक्षयन्ति । एतच्च तत्रैव निरूपयिष्यामः ॥



॥ वि० ॥ भाष्ये काक्यर्थमिति । नच स्कोरितिसूत्रे झल्ग्रहणापकर्षेण झलन्तसंयोगस्यैव ग्रहणात्प्रकृते न दोष इतिवाच्यम् । झलो लोपः संयोगान्तलोप इत्याष्टमिकभाष्येण संयोगादिलोपे तदसम्बन्धबोधनात् । विपाद्यां बहिरङ्गासिद्धत्वाप्रवृत्तेश्चेतिभाष्याभिप्रायः । निगाल्यत इति । नन्वत्रान्तरङ्गत्वादेव लत्वं सिध्यतीतिवाच्यम् । सपादसप्ताध्यायीस्थकार्यप्रवृत्तियोग्यतया तदप्रवृत्तेः । विपाद्यां तत्परिभाषाऽप्रवृत्तेश्च । नच प्रत्ययलक्षणम् । अल्विधित्वात् । प्रत्ययलक्षणसूत्रस्य नियमार्थताया एव भाष्यसम्मतत्वात् । ननु स्थानिवत्त्वनिषेधेऽपि माषशब्दस्य वपनीशब्देन समासे समासान्तो नकारो नेति णत्वं

॥ कै० ॥ माषवपनीति । समासान्तस्य नकारस्य णत्वं विधीयमानमल्लोपस्य स्थानिवत्त्वनिषेधाद् ङीबुत्पत्तेः प्राक् समासविधानात् प्राप्नोति ॥ ❁ ॥ द्विर्वचने । अचः परस्मिन्नित्यत्र योऽनादिष्टादचः पूर्व इतिस्थितम् । साच्कस्य च द्विर्वचन-

॥ भा० ॥ संयोगादिलोपे । काक्यर्थं वास्यर्थम् । स्कोः संयोगाद्योरितिलोपः प्राप्नोति । लत्वम् । निगार्यते निगाल्यते । अचि विभाषेतिलत्वं न प्राप्नोति । णत्वम् । माषवपनी । व्रीहिवपनी । प्रातिपदिकान्तस्येति णत्वं प्राप्नोति । न पदान्तद्विर्वचन ॥ ❁ ॥ द्विर्वचनेऽचि । आदेशे स्थानिवदनुदेशात्तद्वतः द्विर्वचनम् । आदेशे स्थानिवदनुदेशात्तद्वतः । किंवतः । आदेशवतो द्विर्वचनं प्राप्नोति । तत्र को दोषः । तत्राभ्यासरूपम् । तत्राभ्यासरूपं न सिध्यति ॥

॥ कै० ॥ मिति पूर्वविधित्वाभावादप्राप्तं स्थानिवत्त्वं विधीयते । अथाऽपि निमित्तात् पूर्वमित्यस्मिन् पक्षे प्राप्तिः स्यात् । तथापि न पदान्तद्विर्वचनेतिप्रतिषेधप्रसङ्गादिदं वचनम् । आदेश इति । कार्यातिदेश इति पूर्वः पक्षः ॥

॥ वि० ॥ न स्यादत आह । ङीबुत्पत्तेरिति । गतिकारकोपपदानां कृद्भिरितिवचनादितिभावः । नच बहिरङ्गासिद्धत्वेनेदं सिद्धम् । विपाद्यां तदप्रवृत्तेरिति दिक् ॥ ❁ ॥ द्विर्वचनेऽचि । अथाऽपीति । प्रौढिवादोऽयम् । तत्पक्षस्यास्थितत्वात् । न पदान्तसूत्रे आष्टमिकद्वित्वस्यैव ग्रहणाच्च ॥

॥ वि० ॥ यगयुक्तस्यैवेति । यद्यपि स्थानिवत्त्वे द्विर्वचनं नित्यं तथापि यगपि नित्य इति परत्वात्स स्यादितिभावः । इदमेवाभिप्रेत्य भाष्येऽभ्यासरूपं न सिध्यतीत्येतावदेवोक्तं न तु निन्यतुरित्यादावियङ उत्तरखण्डे श्रवणं स्यादित्यापादितं तस्याऽनित्यत्वेन ततः पूर्वं द्वित्वस्यैव प्रवृत्तेरिति । दुर्लक्ष्योऽपि विशेषः सूक्ष्मदृशं प्रति दुर्वारोऽत आह । छान्दसश्चैवेति । एवञ्च दाति प्रियाणीतिवद्द्वित्वाऽभाव इतिभावः । अत्रोपधालोपस्य छान्दसत्वं वदता क्वसो लौकिकत्वमभ्युपेतम् । ननु सिद्धान्ते द्वित्वनिमित्तेऽचीत्यर्थस्तदाचीति किमर्थम् । अरिरिषतीत्यादिसिद्धये कार्यमनुभवतः कार्यिणो निमित्तत्वाऽना-

॥ कै० ॥ चक्रतुरित्यत्र यणादेशे कृते एकाचो विधीयमानं द्विर्वचनमनच्कत्वादप्राप्तमितिस्थानिवत्त्वाद् यणयुक्तस्यैव प्राप्नोति । अथ हीति । कार्याऽतिदेशे हि घ्रीध्मीतिभाष्यमेव द्विर्वचनेनेति किमज्ग्रहणेन । नन्वज्ग्रहणस्य प्रयोजनं भसेः क्वसौ घसिभसोर्हलीत्युपधालोपे कृते द्विर्वचनं माभूदिति । नैतदस्ति । सत्यसति वा द्विर्वचने प्सानितिश्रुतौ

॥ भा० ॥ चक्रतुश्चक्रुरिति । अज्ग्रहणं तु ज्ञापकं रूपस्थानिवद्भावस्य । यदयमज्ग्रहणं करोति तज्ज्ञापयत्याचार्यो रूपं स्थानिवद्भवतीति । कथं कृत्वा ज्ञापकम् । अज्ग्रहणस्यैतत्प्रयोजनम् । इह माभूत् । जेघ्रीयते । देध्मीयते । यदि च रूपं स्थानिवद्भवतीति ततोऽज्ग्रहणमर्थवद्भवति अथ हि कार्यं नाऽर्थोऽज्ग्रहणेन भवत्येवाऽत्र द्विर्वचनम् । तत्र गाङ्प्रतिषेधः । तत्र गाङः प्रतिषेधो वक्तव्यः ॥

॥ कै० ॥ विशेषाऽभावात् । छान्दसश्चैवोपधालोपः । छन्दसि च दृष्टाऽनुविधिः । रूपस्थानिवत्त्वे च निन्यतुरित्यत्र पूर्वमियङादेशे कृते स्थानिरूपातिदेशाद् नीनीति द्विर्वचने एरनेकाच इतियणा बाधितत्वात्पुनरियङ् न प्रवर्त्तते ॥

॥ वि० ॥ अयणेनात्रापि नटभार्यावद्यञ्जनानीति षाष्ठभाष्यरीत्या द्वितीयाजवधिकस्य घ्रीय्इत्यस्यैव द्वित्वप्राप्त्या यङः कार्यित्वेन द्वित्वनिमित्तत्वाभावात् कथं तन्निमित्तादेशे स्थानिवत्त्वप्रसक्तिरितिचेन्न । द्वितीयहल्पर्यन्तस्यैव द्वित्वमितिमते तत्सत्त्वात् । अत एव प्रातिशाख्ये उक्तं स्वरान्तरे व्यञ्जनान्युत्तरस्येति । अरिरिषतीत्यादौ रि इत्यस्य द्वित्वेऽपि इकारस्य सनवयवतया सनो द्वित्वानुभवेन तन्निमित्तत्वाभावादितिदिक् । षाष्ठभाष्यरीत्या त्वधिजगे इतिव्यावर्त्यं बोध्यम् ॥



॥ वि० ॥ ननु लिटि विधीयमानस्य गाङः कथमच्यादेशत्वमत आह । कृते इति । ङ्कारस्येति । प्रकृतसूत्रे प्रयोगे निवर्त्यस्यैव स्थानित्वेन ग्रहणमचः परस्मिन्नितिवदितिभावः । द्विलकारक इति भाष्ये । एवञ्चाचि नाऽयमितिभावः । एवञ्च इदमज्ग्रहणव्यावर्त्यमिति स्पष्टमेवोक्तमिति बोध्यम् । नच सिद्धान्ते आर्द्धधातुके लिटीत्यादीनां तत्र विषयसप्तमीत्वेनानैमित्तिकत्वान्न तत्र दोष इतिवाच्यम् । विषयसप्तमीत्वेऽपि बुद्धिकृतनिमित्तत्वस्य दुर्वारत्वेन सनैमित्तिकत्वमस्त्येवेति भाष्याशयात् । अत्र पञ्च पक्षाः । अचि योऽजादेशः स द्वित्वे कार्ये स्थानिवदित्येकः । अजादौ प्रत्यये योऽजादेशः स द्वित्वे

॥ कै० ॥ अधिजग इति । कृते एशादेशे गाङिंतिप्रक्रियाश्रयेण चोद्यम् । ङ्कारस्यानुबन्धत्वादिकारस्य गाङ् भवत्यजादेशः । कृत्येजन्तेति ।

॥ भा० ॥ अधिजगे । इवर्णाभ्यासता प्राप्नोति । न वक्तव्यः । गाङ्लिटीति द्विलकारको निर्देशः । लिटि लकारादाविति । कृत्येजन्तदिवादिनामधातुष्वभ्यासरूपम् । कृत्येजन्तदिवादिनामधातुष्वभ्यासरूपं न सिध्यति । कृति । अचिकीर्तत् । एजन्त । जग्ले मग्ले । दिवादि । दुद्यूषति सुस्यूषति । नामधातु । भवनमिच्छति भवनीयति भवनीयतेस्सन् विभवनीयिषति । एवं तर्हि प्रत्यय इतिवक्ष्यामि । प्रत्यय इति चेत् कृत्येजन्तनामधातुष्वभ्यासरूपम् । प्रत्यय इति चेत् कृत्येजन्तनामधातुष्वभ्यासरूपं न सिध्यति । दिवादय एके परिहृताः ॥

॥ कै० ॥ अचि योऽजादेशः स द्विर्वचने कर्त्तव्ये स्थानिवदितिसूत्रार्थमाश्रित्यैतदुच्यते । जग्ल इति । शित्सदृशे आत्त्वमित्यत्र पक्षेऽयं दोषः ॥

॥ वि० ॥ स्थानिवदितिद्वितीयः । द्विर्वचनशब्दस्याधिकरणल्युडन्तत्वादर्शआद्यजन्तत्वाद्वा द्वित्वनिमित्तेऽचीत्यादीतितृतीयः । द्वित्वनिमित्तेऽचि आदेशनिषेध इति चतुर्थः । द्वित्वनिमित्तेऽचि योऽजादेशः स स्थानिवन्न भवति द्वित्वे कार्ये इतिपञ्चमः । तत्राऽऽद्ये दोषोद्भावनमित्याह । अचीति । कृतेरुपधायाश्चेतीत्त्वं तस्य च णिनिमित्ततयाऽच्यादेशता । अङ्गाच्चित्ते प्रत्यये तद्विधानात् । ननु आत्त्वं कथमच्यादेशोऽनैमित्तिकत्वादत आह । शित्सदृश इति । शिदिति तत्पुरुषः । इत्संज्ञकशकारादिप्रत्ययभिन्नप्रत्यय इत्यर्थः । अन्तरङ्गत्वात्तिवादिषु एशि च कृते आत्त्वमितिभावः । दिवेः सनि सनीवन्तेतीडभावपक्षे हलन्ताच्चेतिकित्त्वे च्छ्वोरित्यूठि यणि च सन्यङोरिति द्वित्वे रूपम् । द्वितीयं निराकरोति भाष्ये प्रत्यय इति ॥

॥ वि० ॥ त्रपुसमिति । त्रपसमितिपाठान्तरं त्रपुसमिति च । कर्मधारयमुपपादयति । विशिष्टावस्थेति । रूपरसगन्धान्तरयुक्तमित्यर्थः । आद्ये त्रपुसं फलविशेषः । द्वितीये समासाभावेऽपि न चतिरितिबोध्यम् । तद्रूपाऽऽरोपेणेति । दृष्टान्तबलेन तथैव लाभात् । ननु दृष्टान्ते

॥ कै० ॥ द्विर्वचननिमित्त इति । अस्मिन् पचे जग्ध इत्यपरिहृतम् । उत्तरत्र तु परिहरिष्यते । दधित्रपुसमिति । समाहारद्वन्द्वः कर्मधारयो वा दध्येव विशिष्टावस्थायुक्तं त्रपुसमुच्यते तत्र द्विर्वचननिमित्तत्वात्तद्रूपाऽऽरोपेणाजेव द्विर्वचनमुच्यते । अथवा अधिकरणे

॥ भा० ॥ एवं तर्हि द्विर्वचननिमित्ते अच्यजादेशः स्थानिवदितिवक्ष्यामि । स तर्हि निमित्तशब्द उपादेयः । नह्यन्तरेण निमित्तशब्दं निमित्तार्थो गम्यते । अन्तरेणापि निमित्तशब्दं निमित्तार्थो गम्यते । तद्यथा । दधित्रपुसं प्रत्यक्षो ज्वरः । ज्वरनिमित्तमितिगम्यते । नड्वलोदकं पादरोगः । पादरोगनिमित्तमिति गम्यते । आयुर्घृतम् आयुषो निमित्तमिति गम्यते । अथवा अकारो मत्वर्थीयः । द्विर्वचनमस्मिन्नस्ति सोऽयं द्विर्वचनः द्विर्वचने इति । एवमपि न ज्ञायते कियन्तमसौ कालं स्थानिवद्भवतीति । यः पुनराह द्विर्वचने कर्त्तव्य इति । कृते तस्य द्विर्वचने स्थानिवन्न भविष्यति । एवं तर्हि प्रतिषेधः प्रकृतः सोऽनुवर्तिष्यते । क्व प्रकृतः । नपदान्तद्विर्वचनेति । द्विर्वचननिमित्ते अचि अजादेशो न भवतीति । एवमपि न ज्ञायते कियन्तमसौ कालमजादेशो न भवतीति । यः पनराह द्विर्वचने कर्त्तव्य इति कृते तस्य द्विर्वचने अजादेशो भविष्यति ॥

॥ कै० ॥ ल्युट् । द्विरुच्यतेऽस्मिन्निति द्विर्वचनम् । एतदप्रतिपद्यमानं प्रति परिहारान्तरमाह । अथवा अकार इति । एवमपीति । एकत्वाद्द्विर्वचनशब्दस्य तस्य चाज्विशेषणे उपयुक्तत्वात् कालावधारणाभावः । एवं तर्हीति । स्थानिवदिति नानुवर्त्तते इतिभावः ॥

॥ वि० ॥ लक्षणाया अव्यभिचारेण कार्यजननप्रतीतिः प्रयोजनं प्रकृते च न किञ्चित्तथेति लक्षणा दुरुपपादेत्यत आशयेनेति । कालेति । द्विर्वचनविधानसमय एवेत्यवधारणाभाव इत्यर्थः । एवञ्च चक्रतुरित्याद्यसिद्धिः पुनर्यणादेशानापत्तेरितिभावः ॥



॥ वि० ॥ प्रत्ययश्च विशेष्यते द्विर्वचनं चेत्यस्य चिकीर्षितत्वेन निर्दिश्यत इतिशेषः । तत्राश्रुतस्य प्रत्ययस्य कथं विशेष्यत्वमत आह । द्विर्वचनेनेति । अचीत्युपादानात् षाष्ठमिह द्विर्वचनं तत्र प्रत्यये इति तेन तद्वाचकप्रत्ययपदाक्षेप इत्यर्थः । तद्भावभावितामात्रेण निमित्ततया आश्रयणात्सन्यङन्तस्य द्वित्वेऽपि तदाक्षेपः । स चाचीत्यस्य श्रवणात्सप्तम्यन्तस्यैवेतिभावः । अचीत्येतच्च तस्येति । विशेषणमित्याकृष्यते । तदादिविधिरित्यस्य तेनेत्यादिः । तदयमर्थः । द्वित्वनिमित्ताजादिप्रत्ययनिमित्तोऽजादेशः स्थानिवद् द्वित्वे कर्त्तव्ये इति । विरुद्धत्वादिति । एवञ्च सहविवक्षाभावान्नैकशेषो वक्तुं शक्य इतिभावः ।

॥ कै० ॥ प्रत्ययश्चेति । द्विर्वचनेन प्रत्ययस्याक्षिप्तत्वात्तद्विशेषणं द्विर्वचनम् अचीत्येतच्च तस्य तदादिविधिर्भवत्यजादाविति । कथं पुनरिति । विरुद्धत्वादनयोरर्थयोरेकेन द्विर्वचन इत्यनेन पदेनानुपादानादिति भावः । एकशेषनिर्देश

॥ भा० ॥ एवं तर्हि उभयमनेन क्रियते । प्रत्ययश्च विशेष्यते द्विर्वचनं च । कथं पुनरेकेन यत्नेनोभयं लभ्यम् । लभ्यमित्याह । कथम् । एकशेषनिर्देशात् । एकशेषनिर्देशोऽयं द्विर्वचनं च द्विर्वचनं च द्विर्वचने । द्विर्वचने कर्त्तव्ये द्विर्वचनेऽचि प्रत्यय इति । द्विर्वचननिमित्तेऽचि स्थानिवदितिचेण्णौ स्थानिवद्वचनम् । द्विर्वचननिमित्तेऽचि स्थानिवदितिचेण्णौ स्थानिवद्भावो वक्तव्यः । अवनुनावयिषति अवचुचावयिषति । न वक्तव्यः ॥

॥ कै० ॥ इति । सहविवक्षाभावेऽपि सरूपाणामित्येकशेषः संज्ञापरिभाषावल्लक्षणाङ्गत्वात्तस्येति प्रागेवोक्तम् । विभक्त्यन्तयोश्चैकशेषविधानादप्रातिपदिकत्वाच्च द्विवचनाभावः । अथवैकशेषेण समानफलत्वात्तन्त्रमावृत्तिर्वा लभ्यते ॥

॥ वि० ॥ प्रागेव । सर्वादीनीत्यत्र । नन्वेकशेषे द्विवचनापत्तिरत आह । विभक्त्यन्तयोरिति । परिभाषावच्छास्त्रमात्रोपयोगित्वादितिभावः । प्रातिपदिकानामेवैकशेषेऽप्याह । अथवेति । नीलोत्पलस्पर्धिनी नेत्रे तनुर्वैतिवदितिभावः । क्रमेण बोधाद्वावृत्तिर्बोद्धारं प्रति उच्चारयितुस्तन्त्रम् । इह निमित्तशब्देन साक्षात्परम्परासाधारणं प्रयोजकं न तु साक्षादेवत्याग्रहः । तद्भावभावितामात्रेण निमित्तस्येहाङ्गीकारात् । अत एव चक्रतुरित्युदाहरणसङ्गतिः ॥

॥ वि० ॥ ओक्सर्वेष्विन्यस्य पुयण्जिष्विति भाष्ये निर्धारणसप्तमीनिर्देशस्य च कृत्यमाह । पिपविषत इति । अनेन । द्विर्वचनेऽचीत्यनेन । नचाऽत्रोत्तरखण्डे जातयोरचोरचः परस्मिन्निति स्थानिवत्त्वेनावर्णपरत्वाभावात्कथमोः पुयणित्यस्य प्राप्तिरितिवाच्यम् । एतत्सूत्रारम्भसामर्थ्येनैव तद्प्रवृत्तेः । सनीवन्तेति क्षिपूङितिचोभयत्रेट् । नन्ववर्णपरपुयण्जयो णौ प्रत्ययान्तरे च संभवन्ति तत्कथं णावित्युक्तमित्याशङ्कते । नन्विति । येननेति । प्रकृत-सूत्रे परस्मिन्निति वर्तते तेन द्वित्वनिमित्तेऽजादौ प्रत्यये प्रत्ययान्तरेणाव्यवहिते परे सति योऽजादेशः स स्थानिवदिति सूत्रार्थः । तत्राऽनेन ज्ञापकेन व्यवाये प्रवृत्ति-र्ज्ञाप्यते तत्र प्रत्ययव्यवधानं विना वर्णादीनामुदाहरणासंभवेन येननाव्यवधानन्यायेनैकव्यवधाने एव प्रवृत्तिः सच णेरेव संभवतीति भावः । नचोरूर्णुजुत्रम्बुशब्दादिभ्य आचारक्विपि सनि इटि द्वित्वे गुणाद्यभावे उरूरविषतीत्यादावित्त्वार्थं वर्णादिग्रहणं चरितार्थम् । किञ्च भ्वादिभ्यो विजन्तेभ्य आचारे क्विपि सनि विभविषतीत्यादौ

॥ कै० ॥ ओः पुयण्जिष्विति । न हि णौ कृतस्य स्थानिवद्भावमन्तरेण पुयण्जिषु सर्वेष्ववर्णपरेषु उवर्णान्तोऽभ्यासः संभ-वति । पिपविषते यियविषतीत्यत्रैवाऽनेन स्थानिवद्भावात्तत्र पु इतिपवर्गग्रहणात् यणितिप्रत्याहारग्रहणाज्जग्रहणाच्च ज्ञापकाणौ

॥ भा० ॥ ओः पुयण्जिषु वचनं ज्ञापकं णौ स्थानिवद्भावस्य । यदयमोः पुयण्ज्यपर इत्याह तज् ज्ञापयत्याचार्यो भवति णौ स्थानिवद्भाव इति । यद्येतज् ज्ञाप्यते । अचिकीर्तत् । अत्रापि प्राप्नोति । तुल्यजातीयस्य ज्ञापकम् ॥

॥ कै० ॥ कृतस्य स्थानिवद्भावोऽनुमीयते । ननु तत्र णाविति नास्ति तत्कथं तत्रैव स्थानिवत्त्वानुमानम् न तु विभवनीयिषति दिद-वनीयिषतीत्यादावपि । नैतदस्ति । येननाव्यवधानमित्येकेनैव प्रत्ययेन तत्र व्यवधानाश्रयणाण्णेरेव केवलस्य व्यवधायकस्य संभवात् ॥

॥ वि० ॥ चरितार्थमिति कथं ज्ञापकत्वमितिवाच्यम् । सनिग्रहेत्यत्रोपदेशाधिकाराभावस्य एकाच उपदेशे इतिसूत्रे भाष्ये ध्वनितत्वेनोक्तप्रयोगेषु तेन निषेधे-नेटो दुर्लभत्वादेषामनभिधानाच्च विचोऽसार्वत्रिकत्वाच्च । एतेन दवादिभ्य आचारक्विपि सनि दिदविषतीत्यादावेकव्यवधानस्यैव सत्त्वेन दोष इत्यपास्तम् । भाष्ये णौ स्थानिवदिति । अत्र णाविति प्रत्ययग्रहणेन यस्माद्विहितस्तदादेरित्यस्योपस्थित्या तस्याचो णिनिमित्तकादेश इत्यर्थः । यदि त्वनियमप्रसक्त्यभावेन नियम-फलायास्तस्या नोपस्थितिरत एव ह्रस्वस्य पितीत्यादौ न तदुपस्थितिरित्युच्यते तर्हि मास्तु । णो पर इत्यर्थे रेफेण व्यवधानात्पुस्फारयिषतीत्याद्यसिद्धिरितिबोध्यम् । ज्ञापनफलं तुतावयिषतीत्यादि । तुल्यजातीयस्येति । प्वादिघटितधात्वच्तुल्यस्याच आदेश इत्यर्थः । षष्ठ्यन्तस्य पञ्चम्यन्ताच इत्यनेनैवान्वययोग्यत्वादितिबोध्यम् ॥



॥ वि० ॥ अच्त्वेन तुल्यत्वं कृतेरपीतिपृच्छति । कश्चेति । उत्तरयति । यथाजातीयका इति । प्वादिघटितधात्वच इत्यर्थः । प्वादिभिरच-स्तुल्यत्वासंभवात् । अवर्णपरा इति । अवर्णपरत्वसंपादकादेशस्थानिन इत्यर्थः । एवञ्चावर्णपरत्वसंपादकादेशस्थानित्वेन तुल्यतेतिभावः । एव-ञ्चौननद् औजढदित्यादि चिन्त्यमेव । किञ्च यत्र द्विरुक्तौ परभागस्याद्योऽजवर्णस्तत्रेदमिति द्विर्वचनेऽचीत्यादौ भाष्यकैयटयोः स्थितमितिमाधवोक्तं कथं भाष्यारू-ढमित्यपि चिन्त्यमेवेत्याहुः । अनैमित्तिकमात्त्वमिति । अत एव ह्वावामश्चेतिसूत्रेऽतः कवाधनार्थं पुनरात्त्वविधानं चरितार्थमिति पर्युदासपक्षेऽप्यदोषमादेच इत्यत्र

॥ कै० ॥ कानि पुनरिति । अन्यथासिद्धत्वात्प्रश्नः । पूर्वविप्रतिषेधेनापीति । अपूर्वो वाचनिकः पूर्वविप्रतिषेधः । न हि नित्या-नामाल्लोपादीनामनित्येन द्विर्वचनेन च न्याय्यो विप्रतिषेधः । अथ निन्यतुरिति कथं नह्यत्रेयङ् परिगणितः । एवं तर्हि प्रकल्प्य

॥ भा० ॥ कश्च तुल्यजातीयः । यथाजातीयकाः पुयण्जयः । कथञ्जातीयकाश्चैते । अवर्णपराः । कथं जग्ले मग्ले । अनैमित्तिकमात्त्वं शिति तु प्रतिषेधः । कानि पुनरस्य योगस्य प्रयोजनानि । पपतुः पपुः । तस्थतुस्तस्थुः । जग्मतुर्जग्मुः । आटिटद् आशिशत् । चक्रतुश्चक्रुरिति । आल्लोपोपधालोपणिलोपयणादेशेषु कृतेष्वनच्कत्वाद्विर्वचनं न प्राप्नोति । स्थानिवद्भावाद्भवति । नैतानि सन्ति प्रयोजनानि । पूर्वविप्रतिषेधे-नाप्येतानि सिद्धानि । कथम् । वक्ष्यति ह्याचार्यः । द्विर्वचनं यणयवायावादेशाल्लोपोपधालोपणिलोपकि-किनोरुत्त्वेभ्य इति । स पूर्वविप्रतिषेधो न पठितव्यो भवति ॥

॥ कै० ॥ चापवादविषयमितिन्यायाद् यणाऽत्र भवितव्यमितीयङ् न प्रवर्तत इति द्विर्वचने कृते एरनेकाच इति यणा सिद्धम् ॥

॥ वि० ॥ भाष्यकारो वक्ष्यति । अनच्कत्वादिति । आटिटदित्यत्र णिलोपे धातोर्द्वितीयस्याज्रहितत्वादित्यर्थो बोध्यः । पूर्वविप्रतिषेधेनाप्येतानीति । द्विर्वचनेऽ-चीतिसूत्रसाध्यानि णौ स्थानिवदितिज्ञापकसाध्यानि चेत्यर्थः । न हि नित्यानामिति । आल्लोपादीनामित्यर्थः । द्विर्वचनेऽचीत्यादेरभावे द्विर्वचनमनित्यम् । भाष्ये वक्ष्यति हीति । द्वाभ्वान्साध्वानितिसूत्रे । यणाऽत्र भाव्यमिति । यदीयङ् न स्यात् तर्हि स स्यादितितत्संभावनासत्त्वादित्यर्थः । जग्लावित्याद्यर्थं वृद्धिपाठोऽप्यत्र बोध्यः । वस्तुतोऽत्र यणादिग्रहणमच्स्थानिकस्य द्विर्वचनात्परस्य विधेरुपलक्षणं बोध्यम् । सूत्रारम्भवादी आह । स पूर्वविप्रतिषेध इति ॥

॥ वि० ॥ उभयोः समतया तृतीयः पृच्छति । किं पुनरिति । स्थानिवद्भाव एव ज्यायानिति । अयं भावः । अयं पूर्वविप्रतिषेधोऽन्तरङ्गाणां बाधको न वा । नाद्यः । विभवनीयिषतीत्याद्यसिद्ध्यापत्तेः । किञ्चेष्टानिष्टविवेकस्य लक्षणैकचक्षुष्कोर्दुर्ज्ञेयत्वेन सर्वत्रैव पूर्वविप्रतिषेधवचनस्यावश्यकत्वेनेह नित्यान्तरङ्गबाधाय सुतरां वचनावश्यकत्वेन क्व सूत्रमतापेक्षया लाघवमिति । अन्त्ये दूषणमाह । ओदौदादेशस्येति । अत्र समानाधिकरणबहुव्रीह्यङ्गीकारे चुच्चावयिषतीत्यादौ दोषः स्थानिवत्त्वं त्वल्विधित्वान्नेत्यत आह । ओदौतोरादेशो यस्मिन्निति । इदमेव ज्ञापकमन्तरङ्गाणामिदमबाधकमिति न विभवनीयिषतीत्यादौ दोषः । अत्र सनीत्यंशोऽपि पूरणीयः । अन्यथा दिदवनीयिषतीत्यादौ अनेनोत्वापत्तिः । तत्र कृते तु निर्दिष्टपरिभाषयाऽनेकव्यवधानान्न तत्र दोषः । एकणिज्व्यवधानं तु येन नाव्यवधानन्यायेन सह्यत एव । नन्विदं वचनं जोः सौत्राद् णिचि चङि सनि वाजीजवत् जिजावयिषतीत्यादावतिव्याप्तम् ।

॥ कै० ॥ ओदौदादेशस्येति । ओदौतोरादेशो यस्मिन्नङ्गे तस्य योऽभ्यासश्चुटुतुशरादिस्तस्य योऽकारस्तस्योकारादेशो भवतीत्यर्थः । यथा चुच्चावयिषति ऊर्णुनावयिषति नुनावयिषति तुतावयिषति शुश्रावयिषति । पुस्फारयिषति । अत्र चिस्फुरोर्णावित्योकारस्यात्वम् ।

॥ भा० ॥ किं पुनरत्र ज्यायः । स्थानिवद्भाव एव ज्यायान् । पूर्व्वविप्रतिषेधे हीदं वक्तव्यं स्यात् । ओदौदादेशस्य उद्भवति चुटुतुशरादेरभ्यासस्येति ॥

॥ कै० ॥ अत्र च यद्यपि खयः शेषे कृते अभ्यासस्य शरादित्वं नास्ति तथाप्यभ्याससंज्ञाप्रवृत्तिसमयेऽस्ति एतेष्वन्तरङ्गत्वात्प्रागेव द्विर्वचनाद्वृद्ध्यावादेशयोः प्रवर्त्तनादिवर्णान्ततायामभ्यासस्य प्राप्तायामुत्त्वं विधीयते ॥

॥ वि० ॥ नच चकार एव पाठ्यः । गुङ्घुङ्भ्यां णिचि चङि सनि वाजूगवदित्यादौ दोषापत्तेरितिचेन्न । जोर्नैत्यस्यापि वाच्यत्वात् । ओदौतोः किम् । चिखादयिषति । च्चित्यादि किं । बिभावयिषतीत्यादि । यद्यपि छो छेदने चिच्छासति इत्यत्रैवातिप्रसक्तं तथापि औसाहचर्यादोकारोऽपि लाक्षणिक एव गृह्यते तदादेशो वा औदादेशसाहचर्याद् अत्रेव गृह्यत इति न दोषः । ऊर्णुनावयिषतीति । यद्यपि पूर्वत्रासिद्धीयमद्वित्वे इत्यस्यानित्यतया नुशब्दस्यैव द्वित्वेनाभ्याससंज्ञाप्रवृत्तिकाले द्रादित्वाभावस्तथापि द्वित्वे कृतेऽपि द्वित्वनिष्पन्नस्य कार्ये कर्त्तव्ये पूर्वत्रासिद्धत्वाभावबोधनात्तत्रानित्यत्वकल्पने मानाभावान्नैतत्प्रवृत्तिकाले द्रादित्वमस्त्येवेतिबोध्यम् । अभ्याससंज्ञाप्रवृत्तिसमय इति । एवञ्चाभ्याससंज्ञाप्रवृत्तिसमये परिनिष्ठितरूपे वा यत्र चुटुतुशरादित्वं तत्रास्य प्रवृत्तिरितिभावः । तत्रान्त्योदाहरणं चुच्चावयिषतीत्यादि नहि तत्राद्यकाले तत्त्वं चु इतिकवर्गादित्वादित्याहुः ॥



॥ वि० ॥ ननु णेर्द्वित्वनिमित्तत्वाभावेन स्थानिवत्त्वाभावाद्बिभावयिषतीत्यादि सिद्धमिति त्वयापीत्ययुक्तमत आह । ओः प्विति । चुच्चावयिषतीत्यादिसिद्ध्यर्थमित्यर्थः । परार्थमित्यत्र परशब्देन ज्ञापकापेक्षया परमित्त्वं विवक्षितमित्याह । इत्त्वार्थमिति । द्विर्वचनेऽचीति स्थानिवत्त्वात् पिपविषते यियविषतीत्याद्यर्थमित्यर्थः । प्रसङ्गादिति । वर्गप्रत्याहारजग्रहादित्यर्थः । सन्यत इद्भवतीति विहितमित्त्वमिष्टानुवर्तमानं परार्थं भविष्यतीति भाष्येऽन्वयः ।

॥ कै० ॥ ननु च त्वयापीति । ओः पुयण्जिष्विति ज्ञापनार्थमवश्यं वाच्यमित्यर्थः । उत्त्ववादी तु ओः पुयण्जीति न पठति सन्यत इतीत्त्वस्य सिद्धत्वात् । परार्थमिति । इत्त्वार्थं प्रसङ्गात्तु ज्ञापकं त्वया त्वपूर्वमुक्तं वक्तव्यमित्यर्थः । ममापीति । उक्तमप्यन्यार्थं वक्तव्यं तदेवाधिकविषये उपजीव्यत इत्यर्थः । तत्रायं न्यासः ।

॥ भा० ॥ ननु च त्वयापीत्त्वं वक्तव्यम् । परार्थं मम भविष्यति सन्यत इद्भवतीति । ममापि तर्ह्युत्त्वं परार्थं भविष्यति उत्परस्यातस्त्विचेति । इत्वमपि त्वया वक्तव्यम् ॥

॥ कै० ॥ उत्परस्यातः । ति च ओदौदादेशस्य चुटुतुशरादेरिति अभ्यासस्येतिवर्तते । इत्त्वमपीति । यत्रान्तरङ्गत्वं नास्ति समानाश्रयत्वात् । पवतेर्यौतेश्च सनि स्मिङ्पूङ्रञ्ज्वशां सनि सनीवन्तर्द्धेति चेटि कृते परत्वाद्गुणः पूर्वविप्रतिषेधादवादेशात् पूर्वं द्विर्वचनमितीत्त्वं वक्तव्यम् । तथा जिजावयिषतीत्यत्रेत्त्वविधानार्थं वक्तव्यम् ॥

॥ वि० ॥ तत्र सन्यत इत्यभिधानं स्वरूपेणेत्त्वमपूर्वं न भवतीतिप्रदर्शनार्थं तद्भनयन्नाह । अपूर्वमुत्त्वमिति । अपूर्वत्वं तदभावमात्रेण वैषम्यमस्याभिप्रेतमितिमन्वानस्तद्विघटयितुमाह परः । ममापि तर्ह्युत्त्वमिति । तद्व्याचष्टे उत्त्वमपीति । नापूर्वत्वं तदभावमात्रेण वैषम्यमभिप्रेतं किन्तु गौरवतदभावाभ्यामिति दर्शयितुं भाष्ये इत्त्वमपीति । तदुपपादयति । यचेति । गुणावादेशयोरितिशेषः । वक्तव्यमिति । जोर्नैतिवक्तव्यमित्यर्थः ॥

॥ वि० ॥ नन्वसतीति । असत्यपीत्यर्थः । यदीति । लघुपरत्वाभावेन सन्वत्त्वाभावोऽचिकीर्त्तदित्यत्र दोषः दिदवनीयिषतीत्यादावपि दोषो बोध्यः । अथ तुल्येति । अवर्णपरत्वं यत्राभ्यासोत्तरखण्डाद्यवर्णस्य अभ्याससंज्ञाप्रवृत्तिसमये परिनिष्ठितरूपे वा तत्र द्विर्वचनेनान्तर-

॥ कै० ॥ तस्मादिति । नन्वसत्यस्मिन् सूत्रे ओः पुयण्जीति ज्ञापकमेवं समर्थयिष्यते अन्तरङ्गो नित्यश्च विधिर्द्विर्वचनेन प्रतिषिध्यत इति तत्र द्विर्वचने कृते यथाप्राप्तं भविष्यति । तदयुक्तम् । यदि सामान्येन ज्ञापकमाश्रीयते अचिकीर्त्तदित्यत्रापि

॥ भा० ॥ यत्समानाश्रयं तदर्थम् । उत्पिपविषते संयियविषतीत्येवमर्थम् । तस्मात्स्थानिवदित्येष एव पक्षो ज्यायान् । द्विर्वचनेऽचि । इतिश्रीमद्भगवत्पतञ्जलि-विरचिते व्याकरणमहाभाष्ये प्रथमस्याध्यायस्य प्रथमे पादेऽष्टममाह्निकम् ॥ ❁ ॥

॥ कै० ॥ पूर्वं द्विर्वचनप्रसङ्गादनिष्टरूपप्राप्तिः । अथ तुल्यजातीयापेक्षं ज्ञापकं व्याख्यायते यथोक्तं भाष्यकारेण तथा सति चक्रुरित्यादि न सिध्यतीति सूत्रमेव कर्त्तव्यं यत्तु तेन न सिध्यति तदर्थं ज्ञापकमाश्रयणीयं तुल्यजातीयापेक्षमिति सर्वेष्टलक्ष्य-सिद्धिः । इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे प्रथमाध्यायस्य प्रथमे पादेऽष्टममाह्निकम् ॥ ❁ ॥

॥ वि० ॥ इनित्ये बाध्येते इत्यर्थः । चक्रतुरिति । दिदवनीयिषतीत्याद्यसिद्धिरित्यपि बोध्यम् । इति कालोपनामकशिवभट्टसुतसतीगर्भजनागोजिभट्टविरचिते महाभाष्यप्रदीपोद्द्योते प्रथमाध्यायस्य प्रथमे पादेऽष्टममाह्निकम् ॥ ❁ ॥



॥ वि० ॥ अदर्शनं लोपः । नन्वपत्यादिवदर्थपरोऽदर्शनशब्द इति सिद्धैवार्थस्य संज्ञेत्यत आह । स्वं रूपमिति । नानुवादे इति । तत्र हि न संज्ञाकृतोऽभाव इत्यर्थः । भाष्ये उक्तमिति । नवेतिविभाषेत्यत्रेत्यर्थः । असम्बद्धपदव्यवायान्नानुवृत्तिरत आह । लोप इतीति । तदर्थान्वय-योग्यताया अर्थे एव सत्त्वाददर्शनशब्दस्य तादृशान्वर्थसंज्ञाकरणे फलाभाव इतिभावः । प्रसक्तादर्शनस्येत्यर्थलाभार्थं स्थाने पदस्येवास्याप्यनुवृत्तिः सुलभा । लुप्तृच्छेदन

॥ कै० ॥ अदर्शनं लोपः । अर्थस्येति । स्वंरूपमितिवचनाच्छब्दस्यैव संज्ञा प्राप्नोतीतिभावः । इतरेतराश्रयमिति । विधिप्रदेशेष्वेतच्चोद्यं नानुवादे चादिलोपे विभाषेत्यादौ । इतिकरण इति । इहापि स एवानुवर्तते लोप इत्यन्वर्थसंज्ञावि-

॥ भा० ॥ अदर्शनं लोपः । अर्थस्य संज्ञा कर्त्तव्या शब्दस्य माभूदिति । इतरेतराश्रयं च भवति । का इत-रेतराश्रयता । सतोऽदर्शनस्य संज्ञया भवितव्यम् । संज्ञया चादर्शनं भाव्यते । तदेतदितरेतराश्रयं भवति । इतरेतराश्रयाणि च कार्याणि न प्रकल्पन्ते । लोपसंज्ञायामर्थसतोरुक्तम् । किमुक्तम् । अर्थस्य तावदुक्तम् इतिक-रणोऽर्थनिर्देशार्थ इति । सतोऽप्युक्तं सिद्धं तु नित्यशब्दत्वादिति । नित्याः शब्दाः । नित्येषु शब्देषु च सतोऽदर्श-नस्य संज्ञा क्रियते न संज्ञयाऽदर्शनं भाव्यते । सर्वप्रसङ्गस्तु सर्वस्यान्यत्रादृष्टत्वात् । सर्वप्रसङ्गस्तु भवति सर्वस्यादर्शनस्य लोपसंज्ञा प्राप्नोति । किं कारणम् । सर्वस्यान्यत्रादृष्टत्वात् । सर्वो हि शब्दो यो यस्य प्रयोगविषयः स ततोऽन्यत्र न दृश्यते । त्रपु जतु इत्यत्राणोऽदर्शनं तत्रादर्शनं लोप इतिलोपसंज्ञा प्राप्नोति । तत्र को दोषः । तत्र प्रत्यय-लक्षणप्रतिषेधः । तत्र प्रत्ययलक्षणं कार्यं प्राप्नोति । तस्य प्रतिषेधो वक्तव्यः । अचो ञ्णितीति वृद्धिः प्राप्नोति ॥

॥ कै० ॥ ज्ञानादाऽर्थस्य संज्ञा न शब्दस्य । सर्वप्रसङ्गस्त्विति । यदि स्वभावतोऽप्रयुक्तस्यान्वाख्यानमात्रं क्रियते तदा सर्वस्य स्वविषयादन्यत्राप्रयोगादस्त्यदर्शनमिति लोपसंज्ञाप्रसङ्गः ॥

॥ वि० ॥ इतिधात्वर्थानुसारेणान्वर्थत्वासम्भवादिति तु भाष्यतात्पर्यम् । अभावो लोप इत्यवसानसंज्ञासूत्रभाष्योक्तेरदर्शनशब्देन तत्समनियतो वर्णाभाव एवावेति बोध्यम् । स्वंरूपमित्यस्य प्रत्याख्याने तदनुवृत्तिं विनापि सिद्धिरितिबोध्यम् । नित्यशब्दाश्रयणे इतरेतराश्रयपरिहारेऽप्ययं दोष इत्याह । यदीति ॥

॥ वि० ॥ अत्र प्रत्ययो नाणित्याह । सोरिति । ञ्णिति वृद्धिनिमित्ते इति । अङ्गसंज्ञासूत्रे प्रत्यासत्त्या प्रत्ययपदार्थयोरैक्याश्रयणात् वृद्धिविधौ ञ्णित्प्रत्ययनिरूपिताङ्गग्रहणाच्चेतिभावः । चादिलोप इतिसंग्रहायाऽऽह । अर्थादिति । एकवचनमुत्सर्गत इत्यादिशास्त्रमर्थनिरपेक्षं विभक्तिप्रसञ्जकम् । अर्थोऽप्येकत्वादिर्विवक्षित एकवचनादिप्रसञ्जक इतिबोध्यम् । ननु कथं प्रसक्तस्येतिलभ्यतेऽत आह । स्थाने इति । नच पित्कृता प्रकृत्याक्षेपेणापि तुग्वारयितुं शक्यः । आक्षेपे आक्षिप्तस्य शाब्देऽन्वये च मानाभावात् । अत्रचेदमेव भाष्यं मानम् । किञ्चानुपपद्यमानेन स्वोपपादकमाक्षिप्यते यथा पीनत्वेन रात्रिभोजनं

॥ कै० ॥ ञ्णित्यङ्गस्येति । अङ्गसंज्ञा च विधानप्रतिबद्धा नचात्र प्रत्ययस्य णितो विधानम् । यस्माच्चेति । त्वपुशब्दात्सोर्विधानम् । न तत्प्रत्यय इति । ञ्णिति वृद्धिनिमित्त इत्यर्थः । यच्चेति । सुशब्दे । न तस्मादिति । तस्माच्चपुशब्दात्सोरन्यस्याणो विधानं नास्तीत्यर्थः ।

॥ भा० ॥ नैष दोषः । ञ्णित्यङ्गस्याचो वृद्धिरुच्यते । यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गं भवति । यस्माच्च प्रत्ययविधिर्न तत् प्रत्यये परतः । यच्च प्रत्यये परतः न तस्मात्प्रत्ययविधिः । क्विपस्तर्ह्यदर्शनम् । तत्रादर्शनं लोप इति लोपसंज्ञा प्राप्नोति । तत्र को दोषः । तत्र प्रत्ययलक्षणप्रतिषेधः । तत्र प्रत्ययलक्षणं कार्यं प्राप्नोति । तस्य प्रतिषेधो वक्तव्यः । ह्रस्वस्य पिति कृति तुगिति तुक् प्राप्नोति । सिद्धं तु प्रसक्तादर्शनस्य लोपसंज्ञत्वात् । सिद्धमेतत् । कथम् । प्रसक्तादर्शनं लोपसंज्ञं भवतीति वक्तव्यम् ॥

॥ कै० ॥ अनाङ्गं कार्यं चोदयति । क्विप इति । त्वपु इत्यत्र क्विपोऽदर्शनमस्ति स च कृदिति तुक्प्रसङ्गः । सिद्धं त्विति । शास्त्रादर्थाद्वा प्रसक्तस्य यददर्शनं तल्लोपसंज्ञं भवति । स्थाने ग्रहणमिहाप्यनुवर्तते । स्थानं च प्रसङ्गः । तेन प्रसङ्गे यददर्शनमितिलभ्यते ॥

॥ वि० ॥ नचैवं प्रकृते । नहि तत्सूत्रे आक्षेपं विना पित्कृत्प्रत्ययानुपपत्तिरस्ति । नापि तदाक्षेपेण तदुपपत्तिर्नापि प्रत्ययग्रहणे यस्मात्स विहितस्तदादेरित्युपस्थितिः । अनियमप्रसक्त्यभावेन नियमफलायास्तस्या अनुपस्थितेरित्यावेदितम् । किञ्चात्रैव प्रकृतिं विना प्रत्ययज्ञानसत्त्वेन व्यभिचारात्तदाक्षेपासम्भव इति दिक् । यत्तु ग्रामाधिकरणिका स्थितिरित्यर्थके ग्रामे तिष्ठतीतिवाक्ये ल्यब्लोप इतिपञ्चम्यापत्तिवारणाय प्रसक्तस्येत्यावश्यकमिति । तन्न । तेन प्रत्यासत्त्या ल्यबन्तार्थकर्माधिकरणयोरेव पञ्चमीविधानेनात्राप्राप्तेः । तत्त्वे त्विष्टापत्तिः पञ्चम्या इत्यलम् ॥



॥ वि० ॥ अर्थादिति । कर्तृलक्षणादित्यर्थः । शास्त्रात् । कर्मण्यणित्यतः । अणः प्रसङ्ग इति । यस्मात्प्रत्ययविधिरित्यत्र विधिः प्रसङ्ग एव निविष्ट इत्यङ्गत्वमस्तीत्यभिमानः । षष्ठीग्रहणमिति । तच्च षष्ठ्यन्तं वैयधिकरण्येनाऽदर्शनान्वयीति बोध्यम् । अत्राऽपीति ।

॥ कै० ॥ ग्रामणीरिति । अर्थोपपदधातुसन्निधानादर्थाच्छास्त्राच्चाणः प्रसङ्गोऽस्तीति भावः । षष्ठीनिर्दिष्टस्येति । षष्ठीग्रहणमप्यनुवर्त्तते । चादिलोप इति । ततश्च शुक्ला व्रीहयो भवन्ति श्वेता गा आज्याय दुहन्तीति निघातविकल्पो न स्यात् । अथेति । अत्राऽपि

॥ भा० ॥ यदि प्रसक्तादर्शनं लोपसंज्ञं भवतीत्युच्यते । ग्रामणीः सेनानीः । अत्र वृद्धिः प्राप्नोति । प्रसक्ताऽदर्शनं लोपसंज्ञं भवति षष्ठीनिर्द्दिष्टस्य । यदि षष्ठीनिर्दिष्टस्येत्युच्यते । चाहलोप एवेत्यवधारणम् । चादिलोपे विभाषा । अत्र लोपसंज्ञा न प्राप्नोति । अथ प्रसक्ताऽदर्शनं लोपसंज्ञं भवतीत्युच्यमाने कथमेवैतत् सिध्यति । को हि शब्दस्य प्रसङ्गः । यत्र गम्यते चाऽर्थो न च प्रयुज्यते । अस्तु तर्हि प्रसक्ताऽदर्शनं लोपसंज्ञं भवतीत्येव । कथं ग्रामणीः सेनानीः । योऽत्राऽणः प्रसङ्गः क्विपाऽसौ बाध्यते ॥ ❀ ॥ प्रत्ययस्य लुक्श्लुलुपः । प्रत्ययग्रहणं किमर्थम् ॥

॥ कै० ॥ चादीनां शास्त्रान्नास्ति प्रसङ्गः । क्विपाऽसौ बाध्यत इति । सत्सूद्विषेति क्विपो विधानादणोऽत्र प्रसङ्गाऽभावः ॥ ❀ ॥ प्रत्ययस्य । प्रत्ययग्रहणमिति । लुगादिविधौ क्वचित्प्रत्ययः साक्षान्निर्दिश्यते क्वचिदनुवर्त्तते क्वचित्सामर्थ्यात्प्रतीयत इति प्रश्नः ॥

॥ वि० ॥ शास्त्रतः प्रसक्तिरेवाऽभिमतेति बोध्यमिति भावः । अर्थतोऽपि प्रसक्तिर्गृह्यते इत्युत्तरम् । अणोऽत्रेति । परिहृत्यचाऽपवादविषयमिति न्यायेन प्रसङ्ग एव नास्तीति भावः ॥ ❀ ॥ प्रत्ययस्य । ननु लुगादिविधौ प्रत्ययादर्शनविधिर्यथा स्यादित्यर्थं प्रत्ययस्येतीत्यत आह । लुगादीति । साक्षादिति । लुगणिञोरित्यादौ । क्वचिदिति । यथा लुग्वा दुहेत्यादौ क्सस्येति । क्वचिदिति । वक्ष्यमाणसूत्रेषु वक्ष्यमाणयुक्तिभिरित्यर्थः ॥

॥ वि० ॥ नन्वदर्शनस्येमाः संज्ञा इत्यप्रत्ययस्यैता इत्यनुपपन्नमत आह । अविद्यमान इति । प्रतियोगिविशेषणत्वेनेति शेषः । वस्तु-तोऽवसानसंज्ञासूत्रवक्ष्यमाणरीत्या प्रत्ययाऽभावस्यैवेमाः संज्ञा इति भाष्याऽभिप्रायः । भाष्ये गोरपीति । गोस्त्रियोरिति समुदायाऽनुवृत्तेरिति भावः । ननु गोस्त्रियोरित्यत्र स्त्रीति स्वरितगुणयुक्तमिति स्त्रियामित्यधिकारविहितप्रत्ययग्रहणेन तदन्तग्रहणात् प्रत्ययान्तस्य लुक् स्यादिति तद्धितलुकि तन्निवृत्त्य-

॥ कै० ॥ अप्रत्ययस्येति । अविद्यमानः प्रत्ययोऽस्मिन्नदर्शने इति तदप्रत्ययम् । गोरपीति । पञ्चेन्द्र इत्यादौ तु निर्दिश्यमानस्यादेशा भवन्तीति वचनात् स्त्रीप्रत्ययस्यैव लुग्भविष्यति न तदन्तस्य । गोरतद्धितलुकीत्यत्र गोर्लुकि कृते पञ्चगुरित्यादौ गोशब्दान्तत्वाऽभावात्समा-

॥ भा० ॥ लुमति प्रत्ययग्रहणमप्रत्ययसंज्ञाप्रतिषेधार्थम् । लुमति प्रत्ययग्रहणं क्रियते । अप्रत्ययस्यैताः संज्ञा माभूवन्निति । किं प्रयोजनम् । प्रयोजनं तद्धितलुकि कंसीयपरशव्ययोर्लुकि च गोप्रकृतिनिवृत्त्यर्थम् । तद्धित-लुकि गोनिवृत्त्यर्थम् । कंसीयपरशव्ययोश्च लुकि प्रकृतिनिवृत्त्यर्थम् । लुक्तद्धितलुकीति गोरपि लुक् प्राप्नोति । प्रत्ययग्रहणान्न भवति ॥

॥ कै० ॥ सान्ताऽप्राप्तावतद्धितलुकीति प्रतिषेधोऽनर्थकः स्यादिति चेत् । कृते समासान्ते लुक् स्यादित्यर्थवानेव प्रतिषेधः । ननु स्वभा-वतोऽप्रवृत्तस्याऽदर्शनं लुक्संज्ञं नच तत्र गोशब्दस्य स्वभावतोऽप्रवृत्तिः । नैष दोषः । शास्त्राऽनुसारिभिरस्यार्थस्य दुर्ज्ञानत्वात् ॥

॥ वि० ॥ र्थत्वमपि कुतो नोक्तमत आह । पञ्चेन्द्र इति । गोनिवृत्तिः प्रत्ययग्रहणं विनाऽपि सिध्यतीति शङ्कते । गोरिति । पञ्चगुरित्यत्र क्रीतार्थठको-ऽध्यर्द्धेति लुक् । कृते इति । परत्वादिति भावः । अन्तरङ्गानपीति न्यायस्तु अन्तरङ्गनिमित्तविनाशकप्रत्ययलुग्विषय इति तात्पर्यम् । नच समासान्ते तेन व्यवधानात् कथं लुक् । गोरित्यनुवृत्तिसामर्थ्येन लुक्प्राप्तेरिति बोध्यम् । नित्यशब्दाऽन्वाख्यानाऽभिप्रायेण शङ्कते । नन्विति ॥



॥ वि० ॥ समुदायस्येति । यस्येतिचेत्यकारलोपे सिद्धे लुग्विधानसामर्थ्येन सर्वादेशः स्यादित्यर्थः । ननु योगविभागे सूत्रभेदः कृतः स्यादत आह । एकयोगेति । प्रकारान्तरम् । योगविभागरूपम् । छयताविति । कंसात् प्राक् क्रीताच्छः परशोरुगवादिभ्यो यत् । कंसे कमेः सः । परशौ आङ्परयोः खनिशृभ्यां डिच्चेत्युप्रत्ययः । अतः कृ इति । धातौ सप्तमीनिर्दिष्टे तदादिग्रहणात् कमिग्रहणेनैव सिद्धे इतिशेषः । कंसेस्तु कंस इति न रूपम् ।

॥ कै० ॥ प्रकृतेरपीति । समुदायस्य षष्ठीनिर्देशात् । योगविभागादिति । एकयोगनिर्दिष्टानामप्येकदेशाऽनुवृत्तिरित्येतत् प्रका-रान्तरेण प्रतिपाद्यते । विशिष्टनिर्देशादिति । छयतावेवाऽत्र निर्दिष्टव्यावित्यर्थः । उणादय इति । अतः कृकमिकंसकुम्भेति कंसशब्दस्य

॥ भा० ॥ कंसीयपरशव्ययोर्यञञौ लुक्चेतिप्रकृतेरपि लुक् प्राप्नोति प्रत्ययग्रहणान्न भवति । गोनिवृत्त्यर्थेन ताव-न्नार्थः । योगविभागात् सिद्धम् । योगविभागः करिष्यते । गोरुपसर्जनस्य । गोन्तस्य प्रातिपदिकस्योपसर्जनस्य ह्रस्वो भवति । ततः स्त्रियाः । स्त्रीप्रत्ययान्तस्य प्रातिपदिकस्योपसर्जनस्य ह्रस्वो भवति । ततो लुक्तद्धितलुकीति स्त्रिया इतिवर्त्तते गोरितिनिवृत्तम् । कंसीयपरशव्ययोर्विशिष्टनिर्देशात् सिद्धम् । कंसीयपरशव्ययोर्विशिष्टनिर्देशः कर्त्तव्यः । कंसीयपरश-व्ययोर्यञञौ भवतश्छयतोश्च लुग्भवतीति । सचावश्यं विशिष्टनिर्देशः कर्त्तव्यः । क्रियमाणेऽपि वै प्रत्ययग्रहणे उकारसका-रयोर्माभूदिति । कमेः सः कंसः । परान् शृणातीति परशुरिति । नैष दोषः । उणादयोऽव्युत्पन्नानि प्रातिपदिकानि ॥

॥ कै० ॥ भेदेनोपादानात् क्वचिदुणादयो व्युत्पत्तिकार्यं न लभन्त इत्यर्थः । यञञोस्तु विधानसामर्थ्याल्लुगभावः ॥

॥ वि० ॥ अनभिधानादितिभावः । अत एवेह कमेः सः कंस इति भाष्ये उक्तम् । नन्वेवमपि विशिष्टनिर्देशाऽभावे यञञोरपि लुक् स्यादत आह । यञञो-रिति । विकारावयवार्थप्रतीतये ह्यौत्सर्गिकाण एव लुकं विदध्यात् । नच यञञ्लुकां सामर्थ्याद्विकल्पोऽस्तु वेत्यनुक्तिस्तु यञञ्भ्यां मुक्त औत्सर्गिकाणः श्रवणाभावा-येतिवाच्यम् । यञञ्लुकामेककालप्रतीतानामुद्देश्यविधेयभावासम्भवात् । च्युच्युलौ तुट्चेत्यादौ तु अनद्यतन इत्यादिनिर्देशाद्वाक्यभेदाङ्गीकारः । किञ्च कंसीय-परशव्ययोरितिषष्ठीनिर्देशादपि न यञञोर्लुक् । अन्यथा पञ्चम्येव निर्दिशेदितिभावः ॥

॥ वि० ॥ प्रकृतीति । प्रकृतिव्यतिरिक्तप्रत्ययान्तरवाची अन्यशब्दः । तेन नञा समासे प्रकृतिरुच्यत इत्यर्थः । भाष्ये ङ्याविति । प्रातिप-दिकात्परस्य लुगित्यर्थे यञञोर्विधानसामर्थ्याल्लुगभावे उभयोः प्रातिपदिकात्परत्वाभावेन परिशेषात् कंसीयाद्यवयवप्रातिपदिकात् परयोश्छय-

॥ कै० ॥ स एषोऽनन्यार्थ इति । प्रकृतिनिवृत्त्यर्थ एव नतु प्रत्ययान्तरनिवृत्त्यर्थोऽपीत्यर्थः । षष्ठीनिर्देशार्थं त्विति । विशिष्टस्य

॥ भा० ॥ स एषोऽनन्यार्थो विशिष्टनिर्देशः कर्त्तव्यः प्रत्ययग्रहणं वा कर्त्तव्यम् । उक्तं वा । किमुक्तम् । ङ्या-प्प्रातिपदिकग्रहणमङ्गभपदसंज्ञार्थं यच्छयोश्च लुगर्थमिति । षष्ठीनिर्देशार्थं तु । षष्ठीनिर्देशार्थं तर्हि प्रत्ययग्रहणं कर्त्तव्यम् । षष्ठीनिर्देशो यथा प्रकल्पेत । अनिर्देशे हि षष्ठ्यर्थाप्रसिद्धिः । अक्रियमाणे हि प्रत्ययग्रहणे षष्ठ्य-र्थस्याप्रसिद्धिः स्यात् । कस्य । स्थानेयोगत्वस्य । क्व पुनरिह षष्ठीनिर्देशेनार्थः प्रत्ययग्रहणेन यावता सर्वत्रैव षष्ठ्युच्चार्यते अणिञोस्तद्राजस्य यञञोः शप इति । इह न काचित् षष्ठी जनपदे लुबिति । अत्रापि प्रकृतं प्रत्ययग्रहणमनुवर्त्तते । क्व प्रकृतम् । प्रत्ययः परश्चेति । तद्वै प्रथमानिर्दिष्टम् । षष्ठीनिर्दिष्टेन चेहार्थः । ङ्याप्प्रातिपदिकादित्येषा पञ्चमी प्रत्यय इति प्रथमायाः षष्ठीं प्रकल्पयिष्यति तस्मादित्युत्तरस्येति । प्रत्ययवि-धिरयं नच प्रत्ययविधौ पञ्चम्यः प्रकल्पिका भवन्ति । नायं प्रत्ययविधिः । विहितः प्रत्ययः प्रकृतश्चानुवर्त्तते ॥

॥ कै० ॥ षष्ठ्यर्थस्य स्थानेयोगत्वस्य निर्देशार्थमित्यर्थः । असति प्रत्ययस्येत्येतस्मिन् यः कश्चिदानन्तर्यादिः सम्बन्धः स्यात् ततश्च जनपदे लुबिति पञ्चालाः शोभना इत्यादौ जनपदवाचिनोऽनन्तरस्य शोभनादेरपि लुप् स्यात् ॥

॥ वि० ॥ तोरेव लुगित्यर्थः । विशिष्टेति । जनपदार्थकप्रत्ययसम्बन्धिन इत्यर्थः । भाष्ये प्रकृतमिति । अत एव लवणाल्लुगित्यत्र प्रकृतठक एव लुगिति बोध्यम् । शोभनाः पञ्चाला इत्यादौ इति पाठ उचितः । अनन्तरस्येति । अव्यवहितस्येत्यर्थः । जनपदार्थवाचके शब्दे सति तदनन्तरस्य लुबित्यर्थ इति भावः ॥



॥ वि० ॥ वार्तिककृदभिमतषष्ठीनिर्देशार्थत्वमुपपादयति । आगस्त्येति । त्रय इति । एवञ्च वैषम्याद्यथासंख्याप्राप्तेरगस्तयोऽपि कुण्डिनाः कुण्डिनाश्चागस्तयः स्युः । लुक् च ज्ञापकात् सर्वादेश इतिविभक्तिमात्रं श्रूयेतेति भावः । द्वावेवेति । तेन नोक्तापत्तिरिति भावः । सर्वत्रेति । अजादिप्राग्दीव्यतीयविषयेऽपीतिभावः । अवृद्धत्वादिति । यद्यपि स्थानिवद्भावेन वृद्धत्वाच्छः सिध्यति तथाप्यवृद्धत्वात्प्रकृतेश्छस्य वृद्धनिमित्तत्वाच्च आकारश्रवणं न

॥ कै० ॥ सर्वादेशार्थं वेति । षष्ठीनिर्देशार्थत्वं तु स्थितमेवेतिवार्तिककारेण विकल्पार्थो वाशब्दः प्रयुक्तः । आगस्त्यकौण्डि-न्ययोरित्यत्र हि यदि लुगनुवर्तते तदैकैकस्य त्रय आदेशाः स्युः । अथ नानुवर्त्तते द्वावेवादेशौ विधीयेते तदागस्त्यादेशेन सर्वत्र भाव्यमिति आगस्तीयाश्छात्रा इति न सिध्यति । अवृद्धत्वात् प्रकृतेः । प्रत्ययस्येति तूच्यमाने गोत्रे ऽलुगचीति लुकि प्रतिषिद्धे स-

॥ भा० ॥ सर्व्वादेशार्थं वा वचनप्रामाण्यात् । सर्वादेशार्थं तर्हि प्रत्ययग्रहणं कर्त्तव्यम् । लुक्श्लुलुपः सर्व्वादेशा यथा स्युः । अथ क्रियमाणेऽपि प्रत्ययग्रहणे कथमिव लुक्श्लुलुपः सर्व्वादेशा लभ्याः ॥

॥ कै० ॥ सन्नियोगशिष्टत्वात् लुगभावादगस्त्यादेशाभावादागस्तीया इतिसिध्यतीति । भाष्यकारस्तु तदर्थे वाशब्दं व्याचचाणः षष्ठीनिर्देशार्थत्वं नेच्छति । स ह्येवं मन्यते आगस्त्यकौण्डिन्ययोरित्यत्र यस्कादिभ्यो गोत्र इत्यतो गोत्रग्रहणमनुवर्तते लुगितिच तेनागस्त्यकौण्डिन्ययोर्यौ गोत्रे विहितस्तस्य लुक् परिशिष्टस्य तु प्रकृतिभागस्य यथासंख्यमगस्तिकुण्डिनचावादेशावितिसूत्रार्थः । अथ क्रियमाणेऽपीति । अलोऽन्त्यस्येति वचनात् प्रत्ययस्य योऽन्त्यस्तस्यैव प्राप्नुवन्तीति भावः ॥

॥ वि० ॥ स्यादितिभावः । सन्नियोगशिष्टत्वादगस्त्यादेशाभावे प्रतिषेधप्रयुक्तलुगभावो हेतुः । गोत्रे विहित इति । नन्वागस्त्यस्य गोत्रप्रत्ययान्तस्यैव ग्रहणं न तु अनन्तरापत्यप्रत्ययान्तस्येत्येतदर्थं तदनुवृत्तिस्स्यात् । शिवादिभ्य इत्यत्रैव गोत्र इतिनिवृत्तेर्ऋष्यणसाधारणोऽगस्त्यप्रकृतिकऋष्यणन्त एवाऽत्रागस्त्यः नत्वगस्ति-प्रकृतिकगर्गादियञन्तः यञञोश्चेति लुका सिद्धत्वादितिचेन्न । कौण्डिन्यसाहचर्येणागस्त्यस्यापि गोत्रप्रत्ययान्तस्यैव ग्रहणाद् भाष्यमते गोत्रसंज्ञासूत्रपर्यन्तं गोत्रा-धिकारेण ऋष्यणन्तस्यापि तत्त्वाच्च ॥

७००

॥ वि० ॥ वस्तुतो वार्तिककारस्यापीत्थमेव संमतमित्याह । वचनेति । सामर्थ्याल्लोपस्यैव सर्वादेशत्वं कुतो न कल्प्यत इत्यत आह । विपर्यय इति । न उपसंजातो विरोधो वैयर्थ्यशङ्कोद्भवो यस्य तत्त्वादित्यर्थः । नत्वयमिति । अयम् अवयवदाहादौ समुदायदाहादिव्यपदेशो गौणो न किन्तु मुख्य एव अवयवलोपे समुदायस्यापि लोपादित्यर्थः । अनुनासिकेति । अनुदात्तोपदेशेत्यनेन । आघ्नीतेत्यत्र आङो यमहन इत्यात्मनेपदैकवचनम् । संघ्नी-

॥ कै० ॥ वचनप्रामाण्यादिति । प्रत्ययस्येति वचनसामर्थ्यादलोन्त्यस्येति बाध्यते । वचनप्रामाण्यादिति ब्रुवतो वार्तिककारस्यापि षष्ठीनिर्देशार्थत्वमनभिप्रेतमेव षष्ठीनिर्देशार्थत्वे हि प्रत्ययस्येत्यस्य चरितार्थत्वात्कथमलोऽन्त्यविधिर्बाध्येतेति । यद्यमिति । विपर्ययस्तु न कल्प्यते अनुपसञ्जातविरोधित्वात् लोपस्तावदन्त्यादेशः स्थितस्ततो लुगारभ्यमाणो यद्यन्त्यस्य स्याल्लोपानुवृत्त्यैव सिद्धत्वा-

॥ भा० ॥ वचनप्रामाण्यात् । प्रत्ययग्रहणसामर्थ्यात् । एतदपि नास्ति प्रयोजनम् । आचार्यप्रवृत्तिर्ज्ञापयति लुक्श्लुलुपः सर्वादेशा भवन्तीति । यदयं लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्य इति लोपे प्रकृते लुकं शास्ति । उत्तरार्थं तु । उत्तरार्थं तर्हि प्रत्ययग्रहणं कर्त्तव्यम् । क्रियते तत्रैव प्रत्ययलोपे प्रत्ययलक्षणमिति । द्वितीयं कर्त्तव्यम् । कृत्स्नप्रत्ययलोपे प्रत्ययलक्षणं यथा स्यात् । एकदेशलोपे माभूदिति । आघ्नीत संघ्नायस्योपेण घ्नीयेति ॥ ❋ ॥

॥ कै० ॥ लुकं न विदध्यात् । विहितस्तु सर्वादेशत्वस्य ज्ञापकः संपद्यते । द्वितीयमिति । लोपविशेषणापेक्षया द्वितीयं पाठापेक्षया तु तृतीयं भवति । एकदेशलोप इति । अवयवक्रिया समुदायेऽपि व्यपदिश्यते । यथा पटो दग्ध इति । अवयवे हि पटाख्योऽवयवी समवेत इति तस्याप्यसौ दाहः । न त्वयं गौणव्यपदेशः । गौणत्वे हि सति मुख्यस्यैव संप्रत्ययान्न कर्त्तव्यमेव प्रत्ययग्रहणं स्यात् । आघ्नीतेति । परत्वादुपधालोपे कृते पुनः प्रसङ्गविज्ञानादनुनासिकलोपः स्यात् ॥ ❋ ॥

॥ वि० ॥ येति । गमेर्विधिलिङि समो गमीत्यात्मनेपदे इटि शपो बहुलं छन्दसीति लुकि लिङः सलोपे इटोऽति उपधालोपे रूपम् । तत्र प्रत्ययलक्षणेन झलादिङित्परत्वादनुनासिकलोपः स्यात् । इदं च प्रयोजनम् अप्राधान्येनालाश्रयणे विध्यर्थं प्रत्ययलक्षणसूत्रमिति वार्तिकमते बोध्यम् ॥ ❋ ॥

७०१

॥ वि० ॥ प्रत्यय । लक्षणशब्दार्थमाह । निमित्तमिति । कार्यमिति । बहुव्रीहिलभ्यम् । प्रत्यासत्त्येति । क्रियमाणेऽपि प्रत्ययग्रहणेऽन्यप्रत्ययलोपेऽन्यप्रत्ययनिमित्तकार्यवारणाय प्रत्यासत्तिराश्रयणीयेतिभावः । ननु प्रत्ययलक्षणमित्यस्य बहुव्रीहितयाऽनेन स्थान्यभावेऽप्राप्तकार्यप्रापणायातिदेश इति अत्र प्रत्ययस्य सत्त्वेन किं तन्निमित्तकार्यातिदेशेनात आह । प्रत्ययस्य लक्षणमिति । यस्य लोपस्तस्मिन् सति यः प्रत्ययो भवति तस्य तल्लोपेऽपि

॥ कै० ॥ प्रत्यय । प्रत्ययग्रहणमिति । प्रत्ययनिमित्तं कार्यं लोपे भवतीत्युक्ते प्रत्यासत्त्या प्रत्ययस्यैव लोप इति विज्ञायेत इति भावः । सौरथीति । प्रत्ययस्य लक्षणं दर्शनं प्रादुर्भाव इत्यर्थं परिकल्प्यैतदुच्यते । सुरथस्य विहतस्य चापत्यं गोत्रं स्त्रीति इञि कृते मकारनकारयोर्भावे यथा गुरूपो-

॥ भा० ॥ प्रत्ययलोपे प्रत्ययलक्षणम् । प्रत्ययग्रहणं किमर्थम् । लोपे प्रत्ययलक्षणमितीयत्युच्यमाने सौरथी वैहतीति गुरूपोत्तमलक्षणः ष्यङ् प्रसज्येत ॥

॥ कै० ॥ त्तमत्वात् ष्यङ् भवति एवं लोपेऽपि स्यात् । प्रत्ययग्रहणे तु सति विरुद्धत्वान्नायमर्थो भवति प्रत्ययस्य लोपे कृते तस्यैव पुनः प्रादुर्भाव इति । एवं हि लोपविधानमनर्थकं स्यात् । तस्मात् प्रत्ययनिमित्तं कार्यं प्रत्ययलोपे भवतीति वाक्यार्थ आश्रीयते ॥

॥ वि० ॥ प्रादुर्भाव इत्यर्थलाघवात् षष्ठीतत्पुरुष एव स्यादितितात्पर्यम् । रमेः क्यनि हन्तेश्च क्ते अनुदात्तेत्यनुनासिकलोपेऽगुरूपोत्तमत्वादप्राप्तः ष्यङतिदेशतः स्यादित्यर्थः । एवं हि लोपेति । ननु णेरनिटीत्यादिसामर्थ्यात् माभूत्तत्र प्रवृत्तिः । यस्तु सामान्येन लोपो णाविष्टवदिति सोऽप्रत्ययविषये चरितार्थ इति भिक्षुमाचष्टे भिक्षयतीत्यत्र पुनःप्रादुर्भावार्थमिदं स्यादितिचेन्न । एवं हि तत्रैव प्रत्ययस्य न लोप इति वदेत् । एवञ्च गुरुतरन्यासो ज्ञापक इतिबोध्यम् ॥

७०२

॥ वि॰ ॥ अन्यथा । व्यख्यानस्य शरणत्वाभावे । पदसंज्ञा न स्यादिति । तिङन्तत्वाऽभावादितिभावः । लोपे प्रत्यय इति । अस्य प्रादुर्भवतीतिशेषः ।

॥ कै॰ ॥ नैवमिति । संदेहेऽपि व्याख्यानात्करणसाधनो लक्षणशब्द आश्रयिष्यते । अन्यथा क्रियमाणेऽपि प्रत्ययग्रहणे भावसाधना-शङ्का न निवर्तते प्रत्ययलोपे प्रत्ययान्तरस्य प्रादुर्भाव इति । यथा ग्रामणीरितिक्विपो लोपे स्वाद्युत्पत्तिः । ततश्चाधोगित्यत्र पदसंज्ञा न

॥ भा॰ ॥ नैष दोषः । नैवं विज्ञायते लोपे प्रत्ययलक्षणं भवति प्रत्ययस्य प्रादुर्भाव इति । कथं तर्हि । प्रत्ययो लक्षणं यस्य कार्यस्य तल्लुप्तेऽपि भवति । इदं तर्हि प्रयोजनम् । सति प्रत्यये यत्प्राप्नोति तत्प्रत्ययलक्षणं यथा स्यात् । लोपोत्तरकालं यत्प्राप्नोति तत्प्रत्ययलक्षणं माभूदिति । किं प्रयोजनम् । ग्रामणिकुलं सेना-निकुलमित्यत्रौत्तरपदिके ह्रस्वत्वे कृते ह्रस्वस्य पिति कृति तुगिति तुक् प्राप्नोति स माभूदिति । यदि तर्हि यत्सति प्रत्यये प्राप्नोति तत्प्रत्ययलक्षणेन भवति लोपोत्तरकालं यत् प्राप्नोति तन्न भवति ॥

॥ कै॰ ॥ स्यादिति करणसाधनत्वे व्याख्यानमेव शरणमितिभावः । लक्षणशब्दोपादानसामर्थ्याद्वा करणसाधनो लक्षणशब्दः । अन्य-था लोपे प्रत्यय इत्येव वक्तव्यं स्यात् । सति प्रत्यय इति । प्रत्ययशब्दोऽत्र लुप्तसप्तमीको निर्दिश्यते तेन प्रत्यये सति यत्कार्यं दृष्टं तल्लोपे सति भवति नच ग्रामणीरित्यत्र क्विपि सति तुग् दृष्टः । ह्रस्वाभावात् । कृते क्विलोपे ह्रस्वत्वे च तुक्प्राप्तिः ॥

॥ वि॰ ॥ ननु प्रत्ययलोप इत्युक्ते कथं सति प्रत्यय इति लभ्यतेऽत आह । प्रत्यय इति । यत्कार्यमिति । प्रत्ययलक्षणं यत्कार्यं दृष्टमित्यर्थः ॥

७०३

॥ वि॰ ॥ ननु जगदित्यादौ विलोपात्परत्वात्पूर्वं गमः क्वावित्यनुनासिकलोपे क्विपि सत्यपि तुकः प्राप्तेराह । अत्रेति । भिन्नविषय-त्वादिति । वार्तिकमते एतत् । अचिरादेशे नुडपवादत्वपरभाष्यरीत्या विषयभेदेऽपि तत्त्वे तु लोपेनानुत्पत्तेरेवान्वाख्यानेनापवादत्वं नेति बोध्यम् । वैयात्याच्छायाङ्गीकारे दोषमाह । सति त्विति । एकमेवेति । अवयवस्य प्रत्ययत्वपर्याप्त्यधिकरणत्वाभावादिति भावः । एवञ्चाऽनयोः फलान्तरा-

॥ कै॰ ॥ जगदिति । द्युतिगमिजुहोत्यादीनां द्वेचेति गमेः क्विप् । अवान्तरङ्गत्वात्पूर्वं विलोपः । गमः क्वावित्ययं हि लोपोऽङ्गविशेषा-पेक्षत्वाद्बहिरङ्गः । भिन्नविषयत्वाच्च येननाऽप्राप्तिन्यायो न भवति सति त्वस्मिन्न्याये नैव विलोपः स्यात् । तस्मात्सति क्विपि नाऽत्र तुकः

॥ भा॰ ॥ जगत् जनगदित्यत्र ुग् न प्राप्नोति । लोपोत्तरकालं ह्यत्र तुगागमः । तस्मान्नार्थ एवमर्थेन प्रत्ययग्रहणेन । कस्मान्न भवति ग्रामणिकुलं सेनानिकुलम् । बहिरङ्गं ह्रस्वत्वम् । अन्तरङ्गस्तुक् । असिद्धं बहि-रङ्गमन्तरङ्गे । इदं तर्हि प्रयोजनम् । कृत्स्नप्रत्ययलोपे प्रत्ययलक्षणं यथा स्यादेकदेशलोपे माभूदिति । आघ्नीत संरायस्पोषेण ग्मीय । पूर्वस्मिन्नपि योगे प्रत्ययग्रहणस्यैतत्प्रयोजनमुक्तम् । अन्यतरच्छक्यमकर्तुम् । अथ द्वितीयं प्रत्ययग्रहणं किमर्थम् । प्रत्ययलक्षणं यथा स्यात् । वर्णलक्षणं माभूदिति । गवे हितं गोहितम् ॥

॥ कै॰ ॥ प्राप्तिः । अपि तु विलोपे कृते । अन्यतरदिति । एकमेव प्रत्ययग्रहणं सामर्थ्यात् कृत्स्नप्रत्ययलोपप्रतिपादने समर्थम् । वर्णलक्षणमिति । प्रत्ययलोपे तल्लक्षणमित्युच्यमाने प्रत्ययस्य यत्र कार्ये निमित्तभावः प्रत्ययरूपाऽऽश्रयेण वर्णरूपताऽऽश्रयेण वा तत्सर्वं स्यात् । सर्वनाम्नो वस्तुमात्रपरामर्शित्वात् । प्रत्ययग्रहणे सति प्रत्ययनिमित्तमेव कार्यं प्रत्ययलोपे भवति न वर्णरूपतानिमित्तम् ॥

॥ वि॰ ॥ भिनिवेशो भाष्यविरुद्ध इति बोध्यम् । ननु द्वितीयप्रत्ययग्रहणाभावे बहुव्रीह्यलाभात्तल्लभ्यकार्यातिदेशो न सिध्येदत आह । तल्लक्षणमिति । वस्तुमात्रेति । प्रत्ययमात्रेत्यर्थः । प्रत्ययनिमित्तमेवेति । प्रत्ययत्वेन प्रत्ययनिमित्तमित्यर्थः । न वर्णेति । प्राधान्येन वर्णनिमित्तमित्यर्थः ॥

७०४

॥ वि० ॥ ननु रैकुलमित्यत्रायादेशो न प्रत्ययाश्रयः किन्तु तदवयवाश्रयोऽत आह । अवयवद्वारेणेति । केचित्तु प्रत्ययग्रहणमित्यस्य द्वितीयप्रत्ययपदघटितं प्रत्ययलक्षणग्रहणमित्यर्थः । प्रत्ययलोपेऽपीत्येव सूत्रं कार्यम् । अस्य तद्भवति यत्प्रत्यये सतीति शेषः । स्थानिवदित्यनुवृत्तिर्वा । प्रत्ययलक्षणमिति । प्रत्ययत्वतद्व्याप्यान्यतरधर्मावच्छिन्नलक्षणमित्यर्थः । वर्णलक्षणं वर्णत्वव्याप्यधर्मावच्छिन्ननिमित्तं प्रत्यये सति वर्णनिमित्तं भवतीति तल्लोपेऽपि स्यादिति भावः । कैयटव्याख्या तु चिन्त्या । प्रकृते तच्छब्दप्रत्ययशब्दयोः पर्यायत्वेन तद्विचारस्याऽयुक्तत्वापत्तेरित्याहुः । अनेनैवेति ।

॥ कै० ॥ रैकुलमिति । अवयवद्वारेणाऽत्र प्रत्ययस्याप्यादेशं प्रति निमित्तत्वमस्त्येव प्रत्ययाश्रयस्त्वायादेशो न भवतीति न प्रवर्त्तते । अनेन न्यायेन न धातुलोप आर्द्धधातुक इत्यत्र धिन्विकृण्व्योर्विचि लोपो व्योर्वलीति वलोपस्य वल्निमित्तत्वादार्द्धधातु-

॥ भा० ॥ रायः कुलं रैकुलमिति । किमर्थं पुनरिदमुच्यते ॥

॥ कै० ॥ कनिमित्तत्वाभावाद्गुणप्रतिषेधो न भवति । तेन सुधे सुकरिति भवति न तु सुधीसुकीरिति । किमर्थमिति । स्थानिवद्भावेन सिद्धमिति भावः ॥

॥ वि० ॥ अत्र प्रत्ययग्रहणसामर्थ्यात्तथार्थलाभेऽपि तत्र तादृशार्थग्रहे न मानम् । आर्द्धधातुक इत्यस्य कैयटरीत्या तोतोर्त्तीत्यादिव्यावृत्त्या चरितार्थत्वात् । पूर्वसूत्रे आर्द्धधातुकग्रहणमनवकाशमिति क्ङिति चेति सूत्रस्थभाष्यविरोधाच्चावृत्त्यादिना तथार्थकल्पने तु न मानम् । किञ्च तथाऽर्थकल्पने यङ्यक्क्यवलोपे इति वार्तिकं तदुदाहरणपरं जीरदानुरिति भाष्यं चाऽसङ्गतं स्यादिति चिन्त्यमेतत् । सुधे इत्यादिधिविकृव्योर्नुमि विचि वलोपेऽप्रक्तलोपे गुणे सुना समासे सौ हल्ङ्यादिलोपनलोपयोरिमे रूपे । गुणनिषेधे तु सुधिन्शब्देइन्हन्निति दीर्घः सुकृणः सर्वनामस्थानेचेति दीर्घ उपधायाश्चेति इत्त्वे रपरत्वे सुनलोपयोः र्वोरिति दीर्घः स्यादिति भावः । स्थानिवद्भावेनेति । वर्णाश्रयस्य तत्राऽप्यनिष्टत्वादित्यर्थः ॥

७०५

॥ वि० ॥ ननु शास्त्रस्य कर्तृत्वे सतः कर्मत्वेनोभयप्राप्ताविति नियमाच्छास्त्रस्येति षष्ठ्यनुपपन्ना कर्मणि चेति समासनिषेधापत्तिश्च करणत्वे तु षष्ठ्युपपन्नेत्यत आह । शास्त्रमिति । शेषत्वेनोभयप्राप्तावित्यस्याप्राप्तेः षष्ठीसमासौ नाऽनुपपन्नाविति भावः । आचार्यः स्मर्तेति । फलितार्थकथनं सर्वाऽऽचार्येणेति त्वन्वाख्यायत इत्यन्वययोग्यम् । स्वतन्त्रत्वमिति । करणस्य कर्तृत्वविवक्षेति भावः । अल्विधित्वादिति । इमादेरिति शेषः । वर्णाश्रयेति तु

॥ कै० ॥ सदन्वाख्यानादिति । शास्त्रं कर्तृ करणं वा शेषत्वेन विवक्षितमिति षष्ठी कृता । सच्छास्त्रेणेति । शास्त्रेण करणेनाचार्यः स्मर्त्ता सद्विद्यमानं वस्तु निमित्तत्वेनान्वाचष्टे । सतो वेति । शास्त्रस्यैवाविच्छेदेन प्रवर्त्तमानस्य स्वतन्त्रत्वमन्वाख्याने

॥ भा० ॥ प्रत्ययलोपे प्रत्ययलक्षणवचनं सदन्वाख्यानाच्छास्त्रस्य । प्रत्ययलोपे प्रत्ययलक्षणमित्युच्यते सदन्वाख्यानाच्छास्त्रस्य । सच्छास्त्रेणान्वाख्यायते सतो वा शास्त्रमन्वाख्यायकं भवति । सदन्वाख्यानाच्छास्त्रस्य । उगिदचां सर्वनामस्थाने धातोरिति इहैव स्यात् गोमन्तौ यवमन्तौ । गोमान् यवमानित्यत्र न स्यात् । इष्यते च स्यादिति । तच्चान्तरेण यत्नं न सिध्यतीत्यतः प्रत्ययलोपे प्रत्ययलक्षणवचनमित्येवमर्थमिदमुच्यते । अस्ति प्रयोजनमेतत् । किं तर्हीति । लुक्युपसंख्यानम् । लुक्युपसंख्यानं कर्त्तव्यम् । पञ्च सप्त ॥

॥ कै० ॥ इति पूर्वस्माद्व्याख्यानादस्य विशेषः । नच स्थानिवद्भावेन सिध्यति । अट्टणेडित्यादावल्विधित्वात् । लुक्युपसंख्यानमिति । तक्रकौण्डिन्यन्यायेन लोपसंज्ञाया लुगादिसंज्ञया बाधनादिति भावः । लुग्ग्रहणस्योपलक्षणार्थत्वात् श्लुलुपावपि गृह्येते ॥

॥ वि० ॥ वर्णप्राधान्यविषयकम् । एवञ्चाप्राधान्येनालाश्रयणे विध्यर्थं सूत्रमिति भावः । भाष्येऽस्ति प्रयोजनमेतदिति । उक्तप्रयोजनविशिष्टं सूत्रं निर्दोषं वेति काक्वा प्रश्न इति बोध्यम् । किं तर्हीति । मम तु निर्दोषमेव तव कश्चिद्दोषप्रतिभासोऽस्ति चेद्वदेति प्रश्नगर्भमुत्तरम् । बाधनादिति । एवञ्च पञ्चेत्यादौ पदत्वं न स्यादिति भावः । उपलक्षणार्थत्वादिति । तयोरपि पूर्वपक्षबीजस्य समत्वादिति भावः । तत्र श्लुलुपोः प्रत्ययलक्षणस्य फलं चिन्त्यम् । लुकि तु पञ्चेत्यादौ पदत्वं फलमस्ति ॥

॥ वि॰ ॥ समावेशदर्शनादिति । कृत्कृत्यादिष्वितिभावः । लोपः संज्ञा यस्येति बहुव्रीहौ मत्वर्थीयानुपपत्तिस्तवान्तेन षष्ठीसमासेऽर्थाऽसंगतिरत इत्यन्तेन षष्ठीसमास इत्याह । लोपस्येति । संकर इति । परस्परं लोपशब्दभावितप्रत्ययाऽदर्शनविषये लोपसंज्ञया चेत्यर्थः । प्रत्ययादर्शनमात्रं सकलं लमत्संज्ञं प्राप्नोतीति भाष्याऽक्षरार्थः । उतो वृद्धिरिति । नच तत्र नाभ्यस्तस्येतिवर्त्तनाददोषः । अत्र पक्षे व्यभिचाराभावात् तदनुवृत्ते-

॥ कै॰ ॥ नवाऽदर्शनस्येति । अदर्शनमात्रस्य लोपसंज्ञा विधीयमाना लुगादिसंज्ञाविषयमप्यवगाहते नच संज्ञानां बाध्यबाधकभावः समावेशदर्शनात्तासामिति कडारसूत्रे वक्ष्यते । लोपस्य संज्ञि लोपसंज्ञि तस्य भावो लोपसंज्ञित्वं तस्मादित्यर्थः ।

॥ भा॰ ॥ किं पुनः कारणं न सिध्यति । लोपे हि विधानम् । लोपे हि प्रत्ययलक्षणं विधीयते तेन लुकि न प्राप्नोति । नवाऽदर्शनस्य लोपसंज्ञित्वात् । नवा कर्त्तव्यम् । किं कारणम् । अदर्शनस्य लोपसंज्ञित्वात् । अदर्शनं लोपसंज्ञं भवतीत्युच्यते । लुमत्संज्ञाश्चाऽप्यदर्शनस्य क्रियन्ते । तेन लुक्यपि भविष्यति । यद्येवम् । प्रत्ययादर्शनं तु लुमत्संज्ञम् । प्रत्ययादर्शनं तु लुमत्संज्ञमपि प्राप्नोति । तत्र को दोषः । तत्र लुकि श्लुविधिः प्रतिषेध्यः । तत्र लुकि श्लुविधिः प्राप्नोति स प्रतिषेध्यः । अत्ति हन्ति । श्लाविति द्विर्वचनं प्राप्नोति ॥

॥ कै॰ ॥ प्रत्ययादर्शनं त्विति । लुक्श्लुलुप्संज्ञानां संकरः प्राप्नोतीत्यर्थः । तत्र लुकि श्लुविधिरिति । उपलक्षणं चैतत् । तेन श्लावपि लुग्विधिः प्राप्नोति । जुहोतीति उतो वृद्धिर्लुकि हलीति । लुप्यपि लुग्विधिप्रसङ्गः । हरितकीति । लुक्तद्धितलुकीति । तथा लुकि लुप्विधिः । लवणः सूप इति । युक्तवद्भावः स्यात् ॥

॥ वि॰ ॥ वक्तुमशक्यत्वात् । हरीतकीति । नन्वत्र सत्यपि ङीषो लुकि युक्तवद्भावा पुनर्ङीष् स्यादितिचेन्न । लक्ष्ये लक्षणस्येतिन्यायादित्याहुः । हरितक्यां हरीतक्यादिभ्यश्चेत्यणो लुप् । यद्वा हरीतकीवेयं प्रतिकृतिरिति कनो लुप् । लवण इत्यत्र लवणाल्लुक् ॥



॥ वि॰ ॥ तद्भावितग्रहणे युक्तिमाह । तत्राश्रितेति । आश्रितः स्वरूपस्य व्यापारोऽदर्शनविषयो यैस्ते तथोक्ता इत्यर्थः । अदर्शनबोधका लुगादिशब्दाः प्रत्ययादर्शनस्य संज्ञेत्युक्ते प्रत्यासत्त्या यया संज्ञया यददर्शनं भाव्यते तस्यैव सा संज्ञेति लभ्यते इतिभावः । प्रत्यासत्तिस्सर्वैर्दुर्ज्ञेयेत्यत आह । आवृत्तिर्वेति । तेन लुगादिशब्दभावितमदर्शनं क्रमेण तत्संज्ञमित्यर्थः । अदर्शनस्य नित्यत्वेऽपि तद्भावितत्वस्य शास्त्रायत्तत्वादितरेतराश्रयत्वं तदवस्थमे-

॥ कै॰ ॥ नवा पृथगिति । एकयैव संज्ञया प्रदेशवाक्येषु संज्ञिप्रत्यायने सिद्धेऽनेकसंज्ञाविधानसामर्थ्यात्तद्भावितग्रहणं विज्ञायते । तत्राश्रितस्वरूपव्यापारास्ते लुगादय आश्रीयन्ते आवृत्तिर्वा लुगादिशब्दानामाश्रीयत इति तद्भावितग्रहणं सिध्यति । विधिप्रदेशेषु

॥ भा॰ ॥ नवा पृथक्संज्ञाकरणात् । नवा एष दोषः । किं कारणम् । पृथक्संज्ञाकरणात् । पृथक्संज्ञाकरणसामर्थ्याल्लुकि श्लुविधिर्न भविष्यति । तस्माददर्शनसामान्याल्लोपसंज्ञा लुमत्संज्ञा अवगाहते । यथैव तर्हि अदर्शनसामान्याल्लोपसंज्ञा लुमत्संज्ञा अवगाहते । एवं लुमत्संज्ञा अपि लोपसंज्ञामवगाहेरन् । तत्र को दोषः ॥

॥ कै॰ ॥ चेतरेतराश्रयदोषानवतारो नित्यशब्दाश्रयणाद्भाविसंज्ञाविज्ञानाद्वा । यथैवेति । तिसृणां संज्ञानां विधानसामर्थ्यात्परस्परविषयावगाहनं तासां माभूत् । लोपसंज्ञाविषये तु ताः प्रवर्त्तेरन् ॥

॥ वि॰ ॥ वेत्यत आह । भाविसंज्ञेति । तद्भावितग्रहणपक्षे यथैवेत्यादिग्रन्थोऽनुपपन्न इत्यत आह । तिसृणामिति । इतरेतराश्रयपरिहाराय भाविसंज्ञाविज्ञाने गौरवाऽऽपत्त्या सामर्थ्यात्तिसृणामसङ्करः प्रतिपादितो न तु तद्भावितपक्षाश्रयेणेत्यभिमानः ॥

॥ वि० ॥ वैयधिकरण्यादिति । भवनक्रियायां प्रकृतेः कर्तृत्वादितिभावः । क्वचिद्विकारस्येति । वस्तुतो वृत्तौ तद्वाक्ये च सर्वत्र प्रकृतेरेव कर्तृत्वं विकृतिशब्दस्यापि गौण्या प्रकृतिवृत्तित्वात् सामानाधिकरण्यम् । अत एव गौणत्वान्महच्छब्दे आत्वाभावो गोमतीशब्दे तु गोमती-नदीभिन्ना गोमतीनदीभूतेत्यर्थेनाभाषितपुंस्कत्वात्पुंवत्त्वाभाव इतिबोध्यम् । भाष्ये एवं लोपेति । एवं लोपसंज्ञायामपि तद्भावितग्रहणं मन्वानस्य चोद्यमेतत् ।

॥ कै० ॥ गोमतीति । च्वेर्लोपे कृते लुक्संज्ञायां सत्यां लुक् तद्धितलुकीति लुक् प्राप्नोति पुंवद्भावस्त्वत्र न भवति वैयधिकरण्यात् । महद्भूता ब्राह्मणीत्यत्र तु भवति सामानाधिकरण्याद् नित्यत्वाद्धि शब्दानां क्वचिद्विकारस्य जनिकर्तृत्वं क्वचित्प्रकृतेः ।

॥ भा० ॥ अगोमती गोमती सम्पन्ना गोमतीभूतेति लुक् तद्धितलुकीति ङीपो लुक् प्रसज्येत । ननुचात्रापि नवा पृथक्संज्ञाकरणादित्येव सिद्धम् । यथैव तर्हि पृथक्संज्ञाकरणसामर्थ्यादत्र लुमत्संज्ञा लोपसंज्ञां नावगाहन्ते एवं लोपसंज्ञापि लुमत्संज्ञा नावगाहेत । तत्र स एव दोषो लुक्युपसंख्यानमिति । अस्त्यन्यल्लोपसंज्ञायाः पृथक्करणे प्रयोजनम् । किम् । लुमत्संज्ञासु यदुच्यते तल्लोपमात्रे माभूदिति ॥

॥ कै० ॥ ननुचात्रापीति । लुगादिसंज्ञानां भेदेनोपादानात्तद्भावितग्रहणमित्यर्थः । अस्त्यन्यदिति । प्रत्ययाप्रत्ययादर्शनस्य लोपसंज्ञा यथा स्यादिति । लोपमात्रे माभूदिति । यथा गोमतीभूतेति च्वेर्लोपे कृते लुक्तद्धितलुकीति न भवति तस्माल्लोपसंज्ञायां नास्ति तद्भावितग्रहणम् ॥

॥ वि० ॥ अत्र सामर्थ्यात्तद्भावितग्रहणेऽपि लोपसंज्ञायां तद्ग्रहणे मानाभावः । नच लुगादिभ्यो लोपसंज्ञायाः पृथक्करणं मानं तस्याः प्रयोजनान्तरसत्त्वादित्याह । अस्त्यन्यदिति । तद्दर्शयति । लोपमात्र इति भाष्ये । स्वयम्प्रयोजनान्तरमप्याह । प्रत्ययाप्रत्ययेति ॥



॥ वि० ॥ भाष्ये लुमति प्रतिषेधादिति । भवतु लोपसंज्ञायामपि तद्भावितग्रहणं नलुमतेति निषेधेन तत्र लोपत्वनिमित्तकार्यप्रवृत्तिर्वार्यते इत्यदोष इति भावः । लुक्युपसंख्यानमिति दोषे परिहृते दोषान्तरमाशङ्कते । सतो निमित्तेति । वार्त्तिकतद्व्याख्यानयोर्विरोधं परिहरति । निमि-

॥ कै० ॥ सतो निमित्ताभावादिति । निमित्तशब्देन निमित्तत्वमुच्यते तेन यस्य सतः कार्यम्प्रति निमित्तत्वं नाभूत्स लुप्तोऽप्यनिमित्तं स्यादित्यर्थः । राज्ञ इति । सति ङसि भसंज्ञायां स्वादिष्विति पदसंज्ञा बाधितेति नलोपो नाभूदल्लोपश्चाभूदिति लुप्तेऽपि तस्मिन्नलोपो न स्यादल्लोपश्च स्यात् । अस्तु तस्या इति । द्वे चात्र पदसंज्ञे । एका स्वादिष्वित्यवयवस्य सा च भसंज्ञया बाधिता । द्वितीया सुबन्तत्वेन समुदायस्य सा च लुप्तेऽपि स्थितैव । अल्लोपस्तु नलुमताङ्गस्येति प्रतिषेधान्न भवति । सत्येत-

॥ भा० ॥ लुमति प्रतिषेधाद्वा । अथवा यदयं नलुमताङ्गस्येति प्रत्ययलक्षणप्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यो भवति लुकि प्रत्ययलक्षणमिति । सतो निमित्ताभावात्पदसंज्ञाभावः । ङन् प्रत्ययो येषां कार्याणामनिमित्तं राज्ञः पुरुष इति स लुप्तोऽप्यनिमित्तं स्याद् राजपुरुष इति । अस्तु तस्या अनिमित्तं या स्वादौ पदमिति पदसंज्ञा या तु सुबन्तम्पदमिति पदसंज्ञा सा भविष्यति । सत्येतत् प्रत्यय आसीत् । अनया भविष्यत्यनया न भविष्यतीति । लुप्त इदानीं प्रत्यये यावत एवावधेः स्वादौ पदमिति पदसंज्ञा तावत एव सुबन्तं पदमिति । अस्ति च प्रत्ययलक्षणेन यजादिपरतेति कृत्वा भसंज्ञा प्राप्नोति ॥

॥ कै० ॥ द्विति । कालविप्रकर्षप्रतिपादनायानद्यतनप्रत्ययप्रयोगः । राज्ञ इत्यत्राऽवधिभेदाद्भसंज्ञयाऽवयवस्यैव पदसंज्ञा बाध्यते न समुदायस्य सुबन्तत्वनिमित्ता । लुप्ते प्रत्ययेऽवधिभेदाभावात्प्रत्ययलक्षणेन प्राप्तया भसंज्ञया द्वे अपि पदसंज्ञे बाधितव्ये । एकाऽपवादत्वेन द्वितीया परत्वेनेति भावः । अनयेति । पदसंज्ञाद्वयमनेन दर्शितम् । भसंज्ञा प्रत्ययलक्षणेन वर्णाश्रयाऽपि भवति । यथा अदृणेडितीमागमः ॥

॥ वि० ॥ तशब्देनेति । नन्वेवं पदत्वेपि भत्वस्याऽपि सत्त्वादल्लोपः स्यादत आहाऽल्लोपस्त्विति । कालविप्रकर्षेति । अस्य चोत्तरस्य नाऽयमवसर इत्यर्थः । भाष्ये एतत् । वक्ष्यमाणवाक्यार्थरूपम् । पदसंज्ञाद्वयमिति । अनया पदसंज्ञया नलोपो भविष्यतीत्यादिभाष्यार्थः । यथेति । वर्णप्राधान्यविषय एव स निषेध इति भावः ॥

॥ वि० ॥ भाष्ये । पर्य्यवपन्नानि । सृतानि । अप्राप्तानीति यावत् । नन्वेतत्कार्य्यातिदेशे स्यात्स एव कुतः शास्त्रनिमित्तातिदेशयोरपि सम्भवादत आह । कार्य्यस्येति । व्यपदेशो निमित्तं । विधीयेते इति । इत्यभिमान इतिशेषः । वस्तुतः कार्य्यशास्त्रातिदेशयोरभेद एवेत्युक्तम् । भाष्ये एकयोगलचणानि चेति । तादृशानि विप्रतिषेधविषयत्वेन न प्रकल्प्यन्त इत्यर्थः । नन्वन्यभाव इति षष्ठीतत्पुरुषः कर्म्मधारयो वोभयथाऽपि ष्यञनुपपन्नो भावस्य भावान्तरेणायोगात्समाससंज्ञया गुणवचनसंज्ञाया वाधाच्चार्थाऽसङ्गतेश्चेत्यत आह । अन्यो भाव इति । भाष्येऽन्यरूपम्प्राप्तस्येत्यर्थकमन्यभूतस्येत्येतत्तु फलितार्थो वोध्यः ।

॥ कै० ॥ तुग्दीर्घत्वयोश्चेति । अनेनैव प्रत्ययनिमित्तानि कार्य्याणि लुप्तेऽपि प्रत्यये विधीयन्ते इति क्रमाभावात्पौर्वापर्य्यं न प्रकल्पते कार्य्यस्य प्राधान्याच्चानेन शास्त्रव्यपदेशौ विधीयेते । सिद्धन्त्विति । अन्यो भावोऽन्यद्वस्तु । स्थान्यपेचयाऽऽदेशः । अन्यभाव

॥ भा० ॥ तुग्दीर्घत्वयोश्च विप्रतिषेधानुपपत्तिरेकयोगलचणत्वात् परिवीरिति । तुग्दीर्घत्वयोश्च विप्रतिषेधो नोपपद्यते । क्व । परिवीरिति । किं कारणम् । एकयोगलचणत्वात् । एकयोगलचणे हि तुग्दीर्घत्वे । इह लुप्ते प्रत्यये सर्वाणि प्रत्ययाश्रयाणि कार्य्याणि पर्य्यवपन्नानि भवन्ति तान्येतेन प्रत्युत्थाप्यन्ते । अनेनैव तुग् अनेनैव च दीर्घत्वमिति । तदेकयोगलचणं भवति । एकयोगलचणानि च न प्रकल्पन्ते । सिद्धन्तु स्थानिसंज्ञानुदेशादान्यभाव्यस्य । सिद्धमेतत् । कथम् । स्थानिसंज्ञाऽन्यभूतस्य भवतीतिवक्तव्यम् । किं कृतं भवति । सत्तामात्रमनेन क्रियते । यथाप्राप्ते तुग्दीर्घत्वे भविष्यतः । तद्वक्तव्यम्भवति । यद्यप्येतदुच्यते अथवैतर्हि स्थानिवद्भावो नारभ्यते । स्थानिसंज्ञाऽन्यभूतस्यानल्विधाविति वक्ष्यामि ॥

॥ कै० ॥ एवान्यभाव्यमिति । स्वार्थे ष्यञ् । तत्र परिवीरिति स्थानिनः क्विपो या संज्ञा यो व्यपदेशः पित् कृत्प्रत्यय इत्यादिः स लोपस्थानेन विधीयते ततस्तन्निवन्धनं शास्त्रं प्रवर्त्तत इति सिद्धो विप्रतिषेधः । सत्तामात्रमिति । कृदादिव्यपदेशस्येत्यर्थः ॥

॥ वि० ॥ स्वार्थ इति । चातुर्वर्ण्यादित्वात् । ननु सत्ता स्थानिनश्चेदिरुद्धमतिदेशसहस्त्रेण सत्ताया अशक्यत्वाच्चात आह । कृदादिव्यपदेशस्येति । एतदर्थमेव स्थानिसंज्ञानुदेशादित्युक्तं नतु स्थान्यनुदेशादिति । तथासति स्थानिकार्य्यातिदेश एव स्यादितिबोध्यम् । भाष्ये शङ्किताऽऽह । तदक्तव्यमिति । वचनान्तरेण सूत्राचेपपरिहारो न युक्त इति भावः । परिहरति । यद्यपीति । अथवैतर्हीति । तथापीत्यर्थः । एवञ्च लघुतरत्वाद्वचनान्तरेणाऽपि परिहारो युक्त इतिभावः ॥



॥ वि० ॥ संज्ञामिति । निमित्तभूतव्यपदेशमित्यर्थः । ननु संज्ञासंज्ञिनोर्भेदाद्धन्तेर्हन्तिः संज्ञेत्ययुक्तमत आह । सूत्रोपात्त इति । फलान्तरमपि वचनान्तरारम्भे दर्शयति । भाष्ये भेत्यादि । सिद्धमिति । इष्टमितिशेषः । वक्ष्यमाणान्यल्विधित्वाद्वार्त्तिकमते नाऽतिदेशेन भविष्यन्ति । सूत्रारम्भे तु वर्णाश्रये इत्यस्य वर्णप्राधान्यविषयत्वाददतिदेशेन स्युरेवेतिभावः । चित्रेति । नचत्रेण युक्त इत्यणो लुबविशेष इति लुप् । युक्तवद्भावात् स्त्रीत्वं ततो जातेऽर्थे

॥ कै० ॥ यद्येवमिति । हन्तिं स्वरूपेणोपादायात्मनेपदं विधीयते । न तु काञ्चित्संज्ञामाश्रित्येतिभावः । नहीति । यद्यपि धातुसंज्ञाऽस्ति तथापि न तदुपादानेनात्मनेपदं विधीयते । हन्तेरपीति । आङो यमहन इतिसूत्रोपात्तो हन्तिः

॥ भा० ॥ यद्येवमाङो यमहन आत्मनेपदं भवतीति हन्तेरेव स्यात् वधेर्न स्यात् । न हि काचिद्धन्तेसंज्ञाऽस्ति या वधेरतिदिश्येत । हन्तेरपि संज्ञाऽस्ति । का । हन्तिरेव । कथम् । स्वं रूपं शब्दस्याशब्दसंज्ञेतिवचनात्स्वं रूपं शब्दस्य संज्ञा भवतीति हन्तेरपि हन्तिः संज्ञा भविष्यति । भसंज्ञाङीप्ष्फगोरात्वेषु च सिद्धम् । भसंज्ञा ङीप्ष्फगोरात्वेषु च सिद्धं भवति । भसंज्ञा । राज्ञः पुरुषः । राजपुरुषः । प्रत्ययलचणेन यचीति भसंज्ञा प्राप्नोति । स्थानिसंज्ञान्यभूतस्यानल्विधावितिवचनान्न भवति । ङीप् । चित्रायां जाता चित्रा । प्रत्ययलचणेनाग्नन्तादितीकारः प्राप्नोति । स्थानिसंज्ञान्यभूतस्यानल्विधावितिवचनान्न भविष्यति ॥

॥ कै० ॥ संज्ञा प्रयोगस्थस्तु संज्ञीति वधेरपि हन्तिसंज्ञाऽतिदिश्यते । चित्रायां जातेति । चित्रारेवतीरोहिणीभ्यः स्त्रियामुपसख्यानमित्यणो लुक् । टिड्ढाणञित्यत्रात इत्यधिकारात् ङीपोऽल्विधित्वम् ॥

॥ वि० ॥ सन्धिवेलादीत्यणो वार्तिकेन लुगितिभावः । नचाणो लुकि लुक् तद्धितेति टापो लुकि पुनष्टाब् दुर्लभो लच्ये लचणस्येतिन्यायादितिवाच्यम् । जातगतस्त्रीत्वबोधनरूपफलस्यासिद्धतया प्रवृत्तेः । अत इत्यधीति । अकारान्तादण् इत्यर्थः ॥

॥ वि० ॥ ननु वतण्डात् स्त्र्यपत्ये यञो लुक् स्त्रियामिति लुकि प्रत्ययलक्षणेन प्राचामिति प्राप्तं ष्फं बाधित्वा परत्वाद् ङीन् स्यात शार्ङ्गरवादिपाठादत आह । यथेति । तत्र हि सूत्रे यञ इतिवर्त्तते । सर्वत्रग्रहणादिति । तद्धि पूर्वसूत्रेऽपकृष्यते । औतोऽम्शसिति । एकादेशविधायकं हि

॥ कै० ॥ वतण्डीति । यथा आवट्यायनीतिचापं बाधित्वा सर्वत्रग्रहणापकर्षात् ष्फो भवत्येवं शार्ङ्गरवादिपाठात् प्राप्तं ङीनं बाधित्वा प्राचां ष्फः स्यात् । अत इत्यधिकारादल्विधिः ष्फः । गव्यतीति । औतोऽम्शसोरित्यत्राचीत्यनुवर्त्तनादल्विधिरात्वम् ।

॥ भा० ॥ ष्फ । वतण्डी । प्रत्ययलक्षणेन यञन्तादिति ष्फः प्राप्नोति स्थानिसंज्ञान्यभूतस्यानल्विधाविति वचनान्न भवति । गोरात्वम् । गामिच्छति । गव्यति । प्रत्ययलक्षणेनामि औतोऽम्शसोरित्यात्वं प्राप्नोति । स्थानिसंज्ञान्यभूतस्यानल्विधाविति वचनान्न भवति । तस्य दोषो ङौ नकारलोपेत्वेम्विधयः । तस्यैतस्य लक्षणस्य दोषः । ङौ नकारलोपः । आर्द्रे चर्मन् लोहिते चर्मन् । प्रत्ययलक्षणेन यचीतिभसंज्ञा सिद्धा भवति । स्थानिसंज्ञान्यभूतस्यानल्विधाविति वचनान्न प्राप्नोति । इत्त्वम् । आशीः । प्रत्ययलक्षणेन हलीतीत्त्वं सिद्धं भवति । स्थानिसंज्ञान्यभूतस्यानल्विधाविति वचनान्न प्राप्नोति । इम् । अतृणेट् । प्रत्ययलक्षणेन हलीति इम् सिद्धो भवति । स्थानिसंज्ञान्यभूतस्यानल्विधाविति वचनान्न भविष्यति । सूत्रञ्च भिद्यते । यथान्यासमेवास्तु । ननु-चोक्तं सतो निमित्ताभावात्पदसंज्ञाभावस्तुग्दीर्घत्वयोश्च विप्रतिषेधानुपपत्तिरेकयोगलक्षणत्वात्परिवीरिति ॥

॥ कै० ॥ चर्मन्निति । सुपां सुलुगिति ङेर्लुकि अत्र भसंज्ञाया अभावान्नलोपः प्राप्नोतीति न ङिसम्बुद्ध्योरितिवक्तव्यं जायते ॥

॥ वि० ॥ तत् । अचीति । अजाद्योरित्यर्थः । अत एव तद्धितशसो निवृत्तिः । भाष्ये सूत्रारम्भवादी वचनान्तरवादिनं प्रति दूषणमाह । तस्य दोष इति । स्थानिसंज्ञानुदेशादित्यस्येत्यर्थः । इत्वम् । शास इदङ्हलोरिति । इम् । तृणह इत्यनेन ॥



॥ वि० ॥ भाष्ये वक्ष्यत्यत्रेति । नङीति ङौ नलोपप्रतिषेधाज् ज्ञापकात् प्रत्ययलक्षणेन भसंज्ञा नेत्येवं रूपमनुपदमेतत्सूत्र एवेत्यर्थः । शास्त्रप-रेति । उपदेशशास्त्रपरेत्यर्थः । अतिदिश्यमानकार्य्याणामुत्पत्तिदेश एव विप्रतिषेधशास्त्रोपयोगीतिभावः । तदाह । सति प्रत्यये इति । इदं सूत्रं तत्तच्छास्त्रनिमित्तसंपादनद्वारा तत्तच्छास्त्रप्रवृत्तिसंपादकमितिभावः । अत एव पूर्वं तान्यनेन प्रत्युत्थाप्यन्त इत्युक्तम् । तानि तत्कार्यबोधकानि शास्त्राणीतितदर्थ उचितो न तु कार्य्याणि क्रियन्त इत्यर्थः । क्रियन्त इत्यस्यैव वक्तुमुचितत्वात् । अत एव टित आत्मनेपदानामिति सूत्रे पर्यवपादो रूपान्तरापत्तिरित्युक्तं कैयटेन विद्यमानस्य हि रूपान्तरापत्तिर्भवति शास्त्रमेव च विद्यमानं न तु कार्यं तस्य रूपान्तरमेतद्विषये कार्य्यान्तरप्रवर्त्तकत्वम् । एवञ्च पर्यवपन्नत्वमपि शास्त्रस्येत्यन्ये । भाष्ये कानि

॥ कै० ॥ परत्वाद्दीर्घत्वमिति । सति प्रत्यये यत्कार्य्यं दृष्टं तल्लुप्तेऽपि भवतीतिसूत्रार्थः । परिवीयेत्यादौ च सति प्रत्यये दीर्घो दृष्टो न तुगिति परिवीरित्यत्रापि दीर्घ एव भवति । प्रयोजनमिति । यद्यप्यल्विध्यर्थमिदमतृणेडित्यादौ तथापि विशेषविहि-

॥ भा० ॥ नैष दोषः । वक्ष्यत्यत्र परिहारम् । इहापि परिवीरिति । शास्त्रपरविप्रतिषेधेन परत्वाद्दी-र्घत्वं भविष्यति । कानि पुनरस्य योगस्य प्रयोजनानि । प्रयोजनम् प्टक्ष्लोपे नुममामौ गुणवृद्धी दीर्घत्वेम-डाट्श्नम्विधयः । अप्टक्लोपे श्निलोपे च कृते नुम् अमामौ गुणवृद्धी दीर्घत्वमिम् अडाटौ श्नम्विधिरितिप्र-योजनानि । नुम् । अग्ने त्री ते वाजिना त्री षधस्था ता ता पिण्डानाम् । अमामौ । हे अनड्वन् अनड्वान् ॥

॥ कै० ॥ तत्रान्नुमादयोऽप्यस्यैवोदाहरणानीतिभावः । अनड्वन्निति । पूर्वं सम्बुद्धिलोपमाश्रित्यैतदुक्तम् । यदि तु विशेष-विहितत्वादम्सम्बुद्धाविति पूर्वमम् प्रवर्तते तदा सम्बुद्धिलोपो न स्यात् ॥

॥ वि० ॥ पुनरिति । पूर्वमेतत्सूत्रकरणे का युक्तिरिति युक्तिप्रश्न इदानीं तु प्रयोजनप्रश्न इतिन पौनरुक्त्यमत एव सदन्वाख्यानादितिप्रागुत्तरितम् । यद्यप्यल्विध्यर्थमिति । इदमितिशेषः । विशेषविहितत्वादिति । प्रत्ययविषये शीघ्रोपस्थितिकत्वादित्यर्थः । त्री ते इत्यादौ शेश्छन्दसीति लोपः । नुम्फलं तु दीर्घः । आश्रित्ये-ति । अपवादबाधकवाचनिकपूर्वविप्रतिषेधाश्रयणेनेतिभावः । न्यायेन पूर्वं लोपप्राप्तिरत्यल्पविषयत्वात् । विशेषविहितत्वादिति । येननाप्राप्तिन्यायेनापवादत्वादित्यर्थः । तदेति । अपवादविषयं परित्यज्येतिन्यायेनापवादविषये उत्सर्गाप्रवृत्तेरितिभावः । यदीत्यनेन विषयभेदादपवादत्वमेव नास्तीति सूचितम् । यदि तु नुड्विषयेऽप्रतिषेधो वक्तव्य इत्यादिसाम्प्रतिकभाष्येण विषयभेदेऽप्यपवादत्वन्तर्हि प्रत्ययलोपस्थलेऽनुत्पत्तिरेवान्वाख्यायते इतिसरूपसूत्रस्थभाष्ये उक्तत्वेनापवादत्वसंभावनैव नेत्याहुः ॥

॥ वि० ॥ इतीयङिति । ततो गुणोऽपृक्तलोपेऽडाटाविति भावः । अडागमे रूपान्तरेण तत्तच्छास्त्रनिमित्तविघातात् केनाऽपि कार्य्येणानयोर्न यौगपद्यमितिभावः । लावस्थायामडिति पचेऽपि बहुलं छन्दस्यऽमाङ्योगेऽपीतिबाहुलकादत्रैवमेव प्रक्रिया बोध्या । अभिनोऽत्रेत्यत्राऽपीकार-

॥ कै० ॥ ऐयरिति । इयर्तेर्लङ् तिप् श्लपः श्लुर्द्विर्वचनमर्त्तिपिपर्त्त्योश्चेतीत्वमभ्यासस्यासवर्णे इतीयङ् । औन इति । उन्दे-

॥ भा० ॥ गुणः । अधोक् अलेट् । वृद्धिः । न्यमार्ट् । दीर्घत्वम् । अग्ने त्री ते वाजिना त्री षधस्था ता ता पिण्डानाम् । इम् । अतृणेट् । अडाटौ । अधोक् अलेट् ऐयः औनः । श्नम्विधिः । अभिनोऽत्र । अच्छिनोऽत्र । अपृक्तश्लिलोपयोः कृतयोरेते विधयो न प्राप्नुवन्ति । प्रत्ययलक्षणेन भवन्ति । नैतानि सन्ति प्रयोजनानि । स्थानिवद्भावेनाप्येतानि सिद्धानि । न सिध्यन्ति । आदेशः स्थानिवदित्युच्यते न च लोप आदेशः । लोपोऽप्यादेशः । कथम् । आदिश्यते यः स आदेशः । लोपोऽप्यादिश्यते । दोषः खल्वपि स्याद् यदि लोपो नादेशः स्यात् । इहाचः परस्मिन् पूर्वविधावित्येतस्य भूयिष्ठानि लोप उदाहरणानि तानि न स्युः । यत्र तर्हि स्थानिवद्भावो नास्ति तदर्थमयं योगो वक्तव्यः । क्व च स्थानिवद्भावो नास्ति । योऽल्विधिः । किं प्रयोजनम् । प्रयोजनं ङौ नकारलोपेत्वेम्विधयः । भसंज्ञाङीप्ष्फगोरात्वेषु च दोषः । भसंज्ञाङीप्ष्फगोरात्वेषु च दोषो भवति । भसंज्ञायां तावन्न दोषः । आचार्यप्रवृत्तिर्ज्ञापयति न प्रत्ययलक्षणेन भसंज्ञा भवतीति यदयं नङिसंबुद्ध्योरिति ङौ प्रतिषेधं शास्ति ॥

॥ कै० ॥ लङ् सिप्श्नम् श्नान्नलोपो दश्चेतिरुत्वम् । नच लोप इति । दिशिरुच्चारणक्रियो नच लोप उच्चार्यते । अभावरूपत्वात् । लोपोऽपीति । प्रतिपादनक्रियोऽत्र दिशिरितिभावः ॥

॥ वि० ॥ लोपापृक्तलोपाभ्यां श्नमो यौगपद्यासंभवेन परत्वाल्लोपे तस्य प्रवृत्तिरितिबोध्यम् । भाष्ये प्रयोजनं ङाविति सूत्रारम्भवादी । प्रत्याख्यानवाद्याह । भसंज्ञेत्यादि । सूत्रारम्भवाद्याह । भसंज्ञायां तावदिति । यदयं नङीति । अङ्गाधिकारप्रतिनिर्द्देशपक्षेऽयं ज्ञापकोपन्यासः ॥



॥ वि० ॥ अकारेणाऽणन्तमिति । तद्धि जातेरस्त्रीत्यादेराखुरित्यादौ व्यावृत्तये आवश्यकम् । ननु प्रत्ययग्रहणसामर्थ्येन प्रधानतया प्रत्ययत्वेन प्रत्ययस्य यत्र निमित्तता तत्रैवाऽल्विध्यर्थमिदमेवञ्चाकाररूपो योऽणित्यर्थेऽपि प्रत्ययलक्षणं दुर्वारमत आह । विशेषणेति । वस्तुतोऽकार एव विशेष्य इत्याहाणेति । न तु प्रत्ययनिमित्त इति । प्राधान्येन प्रत्ययनिमित्त इत्यर्थः । अज्झलात्मकयञोऽकारेण सामानाधिकरण्यासंभवादाहाकारावयवेति । बहु-

॥ कै० ॥ अणयोऽकार इति । अकारेणाणन्तं न विशेष्यते किं तर्ह्यणेव । सर्वस्याण् अकार एवेति विशेषणसामर्थ्याच्छ्रूयमाणाकाररूपादण इतिविज्ञायते । अथवाऽणयोऽकार इति अणाऽकारो विशेष्यत इति वर्णनिमित्तो ङीप् न तु प्रत्ययनिमित्त इति प्रत्ययलक्षणाभावः । यञ् योऽकार इति । अकारावयव

॥ भा० ॥ ङीप्यपि नैवं विज्ञायते अणन्तादकारान्तादिति । कथं तर्हि । अणयोऽकार इति । ष्फेऽपि नैवं विज्ञायते । यञन्तादकारान्तादिति । कथं तर्हि । यञ् योऽकार इति । गोरात्वेऽपि नैवं विज्ञायते अमि अचीति । कथं तर्हि । अच्यमीति । प्रयोजनान्यपि तर्हि नैतानि सन्ति । यत्तावदुच्यते ङौ नकारलोप इति । क्रियत एतन्न्यास एव । न ङिसंबुद्ध्योरिति । इत्त्वमपि वक्ष्यत्येतत् ॥

॥ कै० ॥ इत्यर्थः । अथवा यञवयवे यञ्शब्दोऽत्र वर्त्तते यञवयवो योऽकार इत्यर्थः । पूर्ववदेतद् व्याख्येयम् । अच्यमीति । अच् प्रधानं तद्विशेषणममीति तदादिविध्यभावः । तत्र वर्णनिमित्तमात्वं न प्रत्ययनिमित्तमिति दोषाभावः । क्रियत एतदिति । त्वयापि ज्ञापनार्थमवश्यं वक्तव्यमिति भावः ॥

॥ वि० ॥ व्रीहिः । अस्य विशेषणत्वे इदम् । गुणे त्वन्याय्यकल्पनेतिन्यायादितिभावः । नन्वेवं सति मत्यादिष्वतिप्रसङ्गवारणायाजायत इत्यत्र मुख्यार्थस्योत्तरत्र लक्षणायां वैरूप्यं स्यादतो व्याख्यानान्तरमाहाथवेति । तद्विशेषणमिति । अमोऽवयवेऽचीत्यर्थ इतिभावः । एवं प्रत्याख्यानवाद्युक्तदोषेषु परिहृतेषु प्रत्याख्यानवाद्याह । प्रयोजनान्यपीत्यादि । ज्ञापनार्थमिति । प्रत्ययलक्षणेन भत्वं नेत्यस्येतिशेषः । न लुमता तस्मिन्नित्यनाश्रित्येदम् ॥

॥ वि० ॥ अकृते तु इति । परस्मैपदिविहिताङ्साहचर्यात् शासुधातोरेव ग्रहणं तत्रेतिपक्षे विध्यर्थम् । नन्वेवमप्यार्यशीरित्याद्यसिद्धिरिति चेत् । अत्राहुः । शास इदितिसामान्यसूत्रं ततो ऽङि अजादौ चेदङ्येवेति नियमार्थमिदमेवञ्च सूत्रे हल्ग्रहणं मास्त्विति मित्रशीरित्यादिसिद्धिः । आशासः काविति तु अत्र शासोरेव ग्रहणे विध्यर्थम् अन्यथा नियमार्थमिति आशास्ते इत्यादौ न दोष इति । अथ वार्त्तिकोक्तविध्यर्थत्वे दूषिते भाष्यकृन्नियमार्थं सूत्रमिति प्रश्नपूर्व्वकमाह । न तर्हीत्यादि । प्रत्ययं गृहीत्वेति । प्रत्ययं तद्व्याप्यधर्मपुरस्कारेण यदुच्यत इत्यर्थः । शब्दं गृहीत्वेति । उक्तधर्मातिरिक्तपुरस्कारेण

॥ कै० ॥ शास इत्त्वे इति । कृतेऽप्यस्मिन् सूत्रे नियमार्थमेतदक्तव्यमाशास्ते इत्यादौ माभूत् । अकृते तु विध्यर्थम् । आशास्त इत्यादौ तु न भवति शासु अनुशिष्टावित्यस्यैव तत्र ग्रहणात् । प्रत्ययं गृहीत्वेति । स्थानिवद्भावेन सिद्धे सत्ययं योगो नियमार्थः । प्रत्यय एव यस्य लक्षणं तत्प्रत्ययलोपे यथा स्यात् । सोर्मनसी इत्यत्र त्वनिनस्कन्ग्रहणानिचेतिवचनादस्प्रत्ययश्चाप्रत्ययश्च गृह्यते

॥ भा० ॥ शास इत्त्वे आशासः काविति । इम्विधिरपि हलीतिनिवृत्तम् । यदि हलीतिनिवृत्तं तृणाहानि अत्रापि प्राप्नोति । एवन्तर्हि अचि नेत्यनुवर्त्तिष्यते । न तर्हीदानीमयं योगो वक्तव्यः । वक्तव्यश्च । किं प्रयोजनम् । प्रत्ययं गृहीत्वा यदुच्यते तत्प्रत्ययलक्षणेन यथा स्यात् शब्दं गृहीत्वा यदुच्यते तत्प्रत्ययलक्षणेन माभूदिति । किं प्रयोजनम् । शोभना दृषदोऽस्य ब्राह्मणस्य सुदृषद् ब्राह्मणः । सोर्मनसी अलोमोषसी इत्येष स्वरो माभूत् ॥ ❁

॥ कै० ॥ इति सुदृषदित्यत्र स्थानिवद्भावाभावादुत्तरपदाद्युदात्तत्वाभावे नञ्सुभ्यामित्यन्तोदात्तत्वं भवति । तत्रचोत्तरपदादिरित्यधिकारादसन्तमुत्तरपदं गृह्यते इतिसुदृषदित्यत्रापि स्थानिवद्भावादसन्तत्वमुत्तरपदस्य स्यात् ॥ ❁ ॥

॥ वि० ॥ यदुच्यत इत्यर्थः । ननु शब्दं गृहीत्वा यदुच्यते तत्प्रत्ययलक्षणेन माभूत् स्थानिवत्त्वेन तु स्यादत आह । स्थानिवदिति । प्रत्यय एवेति । उक्तोऽर्थः । एतदर्थमेव द्वितीयं प्रत्ययपदम् । नचालोमोषसी इति पर्य्युदासेन श्रूयमाणासन्तस्यैव ग्रहणमिति नियमोऽपि व्यर्थ इति वाच्यम् । पर्य्युदासेन प्रत्ययासन्तस्यैव ग्रहणापत्तौ सुव इत्यादौ स्वरानापत्तेरितिभाष्याशयात् । ननु स्थानिनिमित्तं यदन्यस्य कार्यं तत्स्थानिवत्त्वेन लोपेऽपि न तु तस्यैव ह्यसतो वचनशतेनापि कार्यित्वाप्रतिपादनादिह चासत एव कार्यित्वमत आह । तत्र चेति । सोर्मनसी इतिसूत्रे इत्यर्थः ॥ ❁ ॥



॥ वि० ॥ नलुमताङ्ग । लोपक्रियानिरूपिता करणे तृतीया । यद्यपि लुशब्दयोगात् संज्ञा लुमदाख्या न च तत्रायं प्रतिषधः किन्तु तत्प्रतिपादितादर्शने एवञ्च लुमति प्रतिषेध इत्यप्यनुपपन्नं तथापि वाचकधर्मस्य वाच्य उपचार इत्याह । लुमदिति । ननु सर्वोऽपि स्वरः कार्य्यित्वेनैकमेवपदं गृह्णातीत्यत आह । एकेति । सर्वामन्त्रिते सर्वामन्त्रितपदेनाष्टमिकमपि ग्रहीतुं शक्यमिति पदस्य पदादित्यधिकारेऽनन्तरमप्यामन्त्रितस्येत्युल्लङ्घ्य व्यवहितमुदाहरति । दधीति । अङ्गस्येत्यधिकारेति । वस्तुतस्तदनिर्देशेऽप्यावश्यकमेतत् । तथाहि सौवरीणां सप्तमीनां भीह्रीमदेतिसूत्रे प्रत्ययात् पूर्वमिति पूर्वग्रहणेन तदन्तसप्तमीत्वस्य षाष्ठभाष्ये तत्सूत्रे एवोक्तत्वेन स्वराणां प्रत्यये परतः पूर्वकार्यत्वाभावात् कित्स्वरे षष्ठ्या एव सत्त्वाच्च । ननु संज्ञायामुपमानमिति उपमानशब्दः संज्ञायामाद्युदात्त इत्यर्थकं कनो लुपि

॥ कै० ॥ न लुमताङ्गस्य । लुमतीति । लुमत्संज्ञया प्रतिपादितमदर्शनं लुमत् तत्र यः प्रतिषेधस्तस्मिन्नित्यर्थः । एकपदस्वरस्येति । एकपदाश्रयो यः स्वरस्तस्येत्यर्थः । यस्तु पदस्य पदादितिपदद्वयाश्रयः स्वरस्तत्र प्रत्ययलक्षणं भवत्येव । दधि तिष्ठति तिङ्ङ-

॥ भा० ॥ न लुमताङ्गस्य । लुमति प्रतिषेध एकपदस्वरस्योपसंख्यानम् । लुमति प्रतिषेध एकपदस्वरस्योपसंख्यानं कर्त्तव्यम् । एकपदस्वरे च लुमता लुप्ते प्रत्ययलक्षणं न भवतीतिवक्तव्यम् । किमविशेषेण । नेत्याह । सर्वामन्त्रितसिज्लुक्स्वरवर्जम् । सर्वस्वरमामन्त्रितस्वरं सिज्लुक्स्वरं च वर्जयित्वा ॥

॥ कै० ॥ तिङ इतिनिघातः । अङ्गस्येत्यङ्गाधिकारनिर्देशान् ञ्नितिकित्स्वरस्य चानाङ्गत्वात्प्रतिषेधस्याऽप्राप्तिरितिभावः ॥

॥ वि० ॥ चञ्चेव चञ्चेत्यादावाद्युदात्तसाधकं ञ्नित्यादिरित्येव सिद्धे व्यर्थं सदनुबन्धलक्षणे स्वरे प्रत्ययलक्षणाभावज्ञापकमिति तत्सूत्रे भाष्ये स्पष्टं तेनेदं विरुध्येतेति चेन्न । प्रकृतसूत्रे वार्त्तिकव्याख्यानमात्रं षष्ठे तु प्रत्याख्यातानीमानीत्यविरोधात् । अत एव तत्र भाष्ये पथिमथिस्वरार्थं वचनं कर्त्तव्यमित्युक्तम् । एवञ्च तदर्थस्यावत्यवचनस्य कर्त्तव्यत्वं वदताऽन्येषामकर्त्तव्यत्वमर्थादुक्तमेव । एतेन भीह्रीतिज्ञापकं विशेषापचं सप्तम्यर्थग्रहणे तदन्तग्रहणे च यत्र फलभेदस्तद्विषयम् । एवञ्चोपोत्तमं रितीत्यादावेव तत्प्रवृत्तिरिति कैयटाशय इतिपरास्तम् । संज्ञायामुपमानमिति सूत्रस्थभाष्यविरोधात् । तस्माज् ज्ञापकस्य सामान्यापेक्षत्वमेवोचितम् । तत्र सप्तम्या यथाश्रुतत्वे हि न लुमतेतिनिषेधात्तदप्राप्तौ ञ्नितीतिप्रयोजनमितिभाष्यासंगतिः स्पष्टैव । न चाङ्गाधिकारप्रतिनिर्देशपक्षे तद्भाष्यं सिद्धान्तपक्षे योजयितुं शक्यत्वादितिदिक् ॥

॥ वि॰ ॥ षष्ठीसमासादौ परत्वात्सतिशिष्टत्वाच्च समासान्तोदात्तत्वस्यैव प्राप्तेर्भाष्ये सर्वस्तोम इति बहुव्रीहिरुदाहृतः । तत्र बहुव्रीहिस्वरस्य द्विपदाश्रयत्वात्प्रतिषेधस्यैवाप्राप्तेः कथं तदपवादे इदमुदाहरणमत आह । सर्वस्येति । विधीयत इति । अपवादनिवर्त्तनेन व्यवस्थाप्यत इत्यर्थः । प्रत्ययस्वरेणेति । इसिप्रत्ययान्तत्वादितिभावः । नब्विषयस्येत्यस्य तु न प्राप्तिः । अनिसन्तस्येतिपर्युदासात् । घृतादित्वकल्पनं तु किमर्थमितिचिन्त्यम् । नित्स्वरेणेति ।

॥ कै॰ ॥ सर्वस्तोम इति । सर्वस्य सुपीति यदाद्युदात्तत्वं तदेव बहुव्रीहौ प्रकृत्येतिविधीयत इत्येकपदस्वरो भवत्येव । सर्पि-रिति । सर्पिःशब्दोऽन्तोदात्तः प्रत्ययस्वरेण घृतादित्वाद्वा सप्तन्शब्दोऽपि घृतादित्वादन्तोदात्तः । नित्स्वरेण त्वाद्युदात्तत्वे विशेषो

॥ भा॰ ॥ सर्वस्वर । सर्वस्तोमः सर्वपृष्ठः । सर्वस्य सुपीत्याद्युदात्तत्वं यथा स्यात् । आम-न्त्रितस्वर । सर्पिरागच्छ सप्ताऽऽगच्छत । आमन्त्रितस्य चेत्याद्युदात्तत्वं यथा स्यात् । सिज्लुक् । माहिदातां माहि धाताम् । आदिः सिचोऽन्यतरस्यामित्येष स्वरो यथा स्यात् । किं प्रयोजनम् । प्रयोजनं ञ्निकिल्लुकि स्वराः । ञ्निकित्स्वरा लुकि प्रयोजयन्ति । गर्गा वत्सा विदा उर्वाः ॥

॥ कै॰ ॥ न स्यात् । मा हि दातामिति । गातिस्थाघ्विति सेर्लुकि विधातव्ये सिचो लुग्विधानं प्रत्ययलक्षणार्थम् । ञ्निकि-ल्लुकीति । इकार उच्चारणार्थः । ञ्निकितां प्रत्ययानां लुकि कृते स्वरा निवर्त्यमानतया प्रयोजनमिति पदानां संबन्धः । भाष्यकारस्तु वस्त्वर्थं व्याचष्टे । ञ्निकित्स्वरा इति । प्रतिषेधमित्यध्याहारः ॥

॥ वि॰ ॥ सप्तन्शब्दो हि सप्यशुभ्यां तुट् चेतिकनिन्नन्तः । न्नः संख्याया इत्यप्याद्युदात्तत्वं प्राप्नोतीति द्रष्टव्यम् । माहि दातामित्यत्राऽट्प्रतिषेधाय माङ् । हि शब्दो हिचेति निघातप्रतिषेधार्थः । सिज्लुकस्वरवर्जनं न कार्य्यमित्याह । सेरिति । गातीत्यनेन च्लेरेव लुकि मन्त्रे घसेत्यत्र पुनर्लिग्रहणं न कार्य्यं लुग्विधावात इत्येतच्च विध्यर्थं स्यादितिलाघवमितिभावः । प्रत्ययलक्षणार्थमिति । प्रत्ययलक्षणेन सिज्निमित्तकार्यार्थमित्यर्थः । ननु ञ्निकित्स्वरा इतिभाष्यदर्शनाज् ञ्निकितां स्वरविशेषणत्वेन लुका समासोऽनुपपन्न इत्यत आह । ञ्निकितामिति । प्रयोजयन्तीत्यस्य कर्माकाङ्क्षायामाह । प्रतिषेधमिति ॥



॥ वि॰ ॥ लुकिति । वार्त्तिके लुकीत्युपलक्षणमितिभावः । भाष्ये आद्युदात्तत्वं माभूदिति । एवञ्च प्रातिपदिकादिस्वरेणान्तोदात्तत्वमेवेति भावः । अच्छिशब्दादितश्चानिञ इतिढकोऽच्छिभ्यश्चेतिलुक् । नन्वत्रय इत्यत्र कित्त्वप्रयुक्तान्तोदात्तत्वाभावेऽपि प्रातिपदिकस्वरेण तत्त्वं दुर्वारमत आह । राशदीति । विवन्त इति । नान्तस्त्वन्तोदात्त इति भावः । इदं प्रयोजनं कित्तद्धितान्तस्यान्त उदात्त इत्यर्थे बोध्यम् । कितः प्रत्ययस्यैवान्तोदात्तत्वे

॥ कै॰ ॥ उष्ट्रग्रीवा वामरज्जुरिति । देवपथादित्वात्कनो लुप् । असंज्ञायां चेदमुदाहरणं संज्ञायां तु संज्ञायामुपमानमितिभवितव्य-माद्युदात्तत्वेन । अच्छय इति । राशदिभ्यां त्रिप् अदेस्त्रिनिश्चेति त्रिवन्तोऽच्छिशब्द आद्युदात्तः । पथिप्रियो मथिप्रिय इति । पूर्वपदप्र-कृतिस्वरेणान्तोदात्तौ पथिमथिशब्दौ भवतः । अहर्ददातीति । असुपीति प्रसज्य प्रतिषेधः पर्युदासे तु दीर्घाहा निदाघ इत्यत्रापि

॥ भा॰ ॥ उष्ट्रग्रीवा वामरज्जुः । ञ्नितीत्याद्युदात्तत्वं माभूदिति । इहचाच्छयः । कित इत्यन्तोदात्तत्वं माभूदिति । पथिमथोः सर्वनामस्थाने लुकि । पथिमथोः सर्वनामस्थाने लुकि प्रयोजनम् । पथिमथोः सर्वनामस्थाने लुमता लुप्ते प्रत्ययलक्षणं न भव-तीतिवक्तव्यम् । पथिप्रियो मथिप्रियः । पथिमथोः सर्वनामस्थान इत्येष स्वरो माभूदिति । अह्नो रविधौ । अह्नो रविधाने लुमता लुप्ते प्रत्ययलक्षणं न भवतीतिवक्तव्यम् । अहर्ददाति अहर्भुङ्क्ते । रोऽसुपीतिप्रत्ययलक्षणेन प्रतिषेधो माभूदिति ॥

॥ कै॰ ॥ सुप्सदृशे निदाघशब्दे परतो रत्वं स्यात् रुत्वं चेष्यते । लोपशब्देन सोर्लुप्तत्वात्प्रत्ययलक्षणेन सुपि नेति रत्वप्रतिषेधाद्रुत्वे यत्वे तस्य च लोपे दीर्घाहा निदाघ इति सिध्यति । लुकि तु प्रत्ययलक्षणप्रतिषेधाद्रत्वे सत्युक्ताभावादहर्ददातीत्यादि सिध्यति ॥

॥ वि॰ ॥ तु प्रत्ययलक्षणेन कार्यिणोऽसंपादनान्न दोषः । अतएव नखनिर्भिन्न इत्यत्रैत्याहुः । पथिमथिशब्दौ इन्प्रत्ययान्ततया प्रत्ययस्वरेण फिषोऽन्त इति वाऽन्तोदात्तौ तयोः सर्वनामस्थाननिमित्तमाद्युदात्तत्वमत्रापि स्यादित्यर्थः । भाष्ये प्रतिषेधो माभूदिति । तेनापर्युदासत्वं सूचितं तदुपपादयति । पर्युदासे तु इति । प्रत्ययत्वेन सुप्सादृश्ये तु अहर्ददातीत्यत्रापि रत्वं न स्यादित्यर्थः । नन्विष्यमाणमपि रुत्वं न प्राप्नोति प्रत्ययलक्षणनिषेधेन रत्वस्यैव प्राप्तेरत आह । लोपशब्देनेति । चक्षुरादिसूत्रेणेति भावः । लुमता लुप्त एव निषेध इतितात्पर्यम् । न लुमता तस्मिन्नितिपक्षे तु नेदमावश्यकम् । उत्तरपदत्वेचेति सर्वथा कार्यम् ॥

॥ वि० ॥ ननु सामान्यत उत्तरस्य पदत्वे इत्यर्थे परमं चर्म इत्यवापि निषेधापत्तौ नलोपो न स्यादत आह । उत्तरपदमिति । अत एव बहुच्पूर्वस्य नेति वचनमर्थवदितिभावः । उत्तरपदशब्दश्च समासचरमावयवे रूढ इत्यसमासे नातिप्रसङ्ग इतिबोध्यम् । समासार्थेति । तत्र सुप्सुपेत्यधिकारादितिभावः । ताम् । सुपो धात्वितिलुप्ताम् । कुत्वादीनि । कुत्वघत्वढत्वादीनि । ननु भत्वेन पदत्वबाधोऽत आह ।

॥ कै० ॥ उत्तरपदत्वे चेति । उत्तरपदम् उत्तरशब्देनोच्यते पदैकदेशलोपात् । तेनोत्तरपदस्य पदत्वे पदव्यपदेशे कर्तव्ये प्रत्ययलक्षणं न भवतीत्यर्थः । परमवाचेति । समासार्था या विभक्तिः कृता तां प्रत्ययलक्षणेनाश्रित्य पदत्वनिबन्धनानि कुत्वादीनि

॥ भा० ॥ उत्तरपदत्वे चापदादिविधौ । उत्तरपदत्वे चापदादिविधौ लुमता लुप्ते प्रत्ययलक्षणं न भवतीतिवक्तव्यम् । परमवाचा परमवाचे । परमगोदुहा परमगोदुहे । परमश्वलिहा परमश्वलिहे । पदस्येति प्रत्ययलक्षणेन कुत्वादीनि माभूवन्निति । अपदादिविधाविति किमर्थम् । दधिसेचौ दधिसेचः । सात्पदाद्योरिति प्रतिषेधो यथा स्यात् । यद्यपदादिविधावित्युच्यते । उत्तरपदाधिकारो न प्रकल्पेत ॥

॥ कै० ॥ प्राप्नुवन्ति भसंज्ञा तु यस्माद् यजादिविधिरितिसमुदायस्यैव न त्ववयवस्य । दधिसेचाविति । दध्नः सेचाविति षष्ठीसमासः । उपपदसमासे तु प्राक्सुबुत्पत्तेः समासविधानात्सेच्शब्दस्य पदसंज्ञाया अभावात्पदादित्वं सकारस्य न स्यात् । अनभिधानाच्च सोपपदाद्विजभावाद्दधिषेचावित्यादिप्रयोगाभावात् ॥

॥ वि० ॥ यस्मादिति । तथाच भिन्नावधित्वान्न बाध्यबाधकभाव इतिभावः । भाष्ये पदस्येतीति । पदस्येत्यधिकृत्य यानि विहितानीत्यर्थः । ननु सोपपदात् सिचेर्विचि दधिषेचाविति स्यादेव । नचेष्टापत्तिः । पदादादिरितिपक्षे दुर्लभत्वादत आह । अनभिधानादिति । तस्य छान्दसत्वादितिभावः । भाष्ये यद्यपदादीति । एकदेशेन संपूर्णं वार्त्तिकमुपलक्ष्यते यतः प्रतिषेधस्यातिव्याप्तिर्न प्रतिषेधापवादस्येतिबोध्यम् ॥



॥ वि० ॥ स्वरश्चेति । उत्तरपदादिरित्यधिकारादितिभावः । नन्वसमासे स्वाङ्गशिटामिति कर्णस्याद्युदात्तत्वं सिद्धमेवेत्यत आह । कर्णशब्दादिति । एवमादिविधिर्न सिध्यतीतिभाष्यादुत्तरपदादिरित्यधिकारस्थसूत्राणां वैयर्थ्यस्यैव दूषणत्वेन प्रतीतिरित्येके । प्रत्यासत्त्येति । प्रत्ययग्रहणेन यस्मात्स विहितस्तदादेरित्युपस्थित्येतिभावः । तथाऽपीति । वस्तुतो राजकुमार्यावित्यत्राऽपि दोषः । समुदायादसौ विहितो नावयवात् । अन्यथा

॥ कै० ॥ कर्णो वर्णलक्षणादिति । नन्वपदादिविधावित्युच्यते स्वरश्चाऽयं पदादिविधिः । ककारोऽत्वादिर्न त्वकार इत्यदोषः । स्वरविधौ व्यञ्जनमविद्यमानवन्न त्वादिव्यपदेशे । सूत्रं चासमासार्थं स्यात् । कर्णशब्दादर्शआदित्वादचि कृते शुक्लः कर्ण इत्याद्युदात्तत्वं यथा स्यात् । यदि पुनरिति । तेन पूर्वस्मिन् परत्र च भवत्येव प्रत्ययलक्षणम् । राजकुमार्याविति । इकोऽसवर्णे इत्य-

॥ भा० ॥ तत्र को दोषः । कर्णो वर्णलक्षणादित्येवमादिविधिर्न सिध्यति । यदि पुनर्नलोपादिविधौ प्लुत्यन्ते लुमता लुप्ते प्रत्ययलक्षणं न भवतीत्युच्येत । नैवं शक्यम् । इह हि राजकुमार्यौ राजकुमार्य इति शाकलं प्रसज्येत । नैष दोषः । यदेतत् सिति शाकलं नेति । एतत्प्रत्यये शाकलं नेति वक्ष्यामि । यदि प्रत्यये शाकलं नेत्युच्यते दधि अधुना मधु अधुना अत्राऽपि न प्राप्नोति । प्रत्यये न शाकलं भवति कतरस्मिन् यस्माद्यः प्रत्ययो विहित इति । इह तर्हि परमदिवा परमदिवे । दिव उदित्युत्त्वं प्राप्नोति ॥

॥ कै० ॥ त्वेङः पदान्तादतीत्यतः पदग्रहणमनुवर्त्तते तत्र प्रत्ययलक्षणेन पदान्तत्वाच्छाकलप्रसङ्गः । दधि अधुनेति । अधुनाप्रत्यय इदमो विधीयते तत इदम इश् यस्येतिलोपः । यस्माद्य इति । प्रत्यासत्त्येतिभावः । राजकुमार्यावित्यत्र यद्यपि समुदायाद्विहितस्तथाप्यवयवादप्यसौ विहित इति बुद्धिर्भवत्येव । समुदायद्विर्वचनेऽवयवद्विर्वचनबुद्धिवत् । उत्त्वमिति । उत्त्वविधावेङः पदान्तादिति पदाधिकारः ॥

॥ वि० ॥ कौरुचरेय इत्यादौ चकाराकारस्याऽपि वृद्धिः स्यात् । इहतर्हीत्यादिभाष्यं तु अभ्युपेत्यवादेन । स्तुतेरग्रे तु नोत्तरपदत्वेचेत्यस्य प्रवृत्तिः । अत एव पूर्वत्रैव दोषेणेदं दूषितं भगवतेति बोध्यम् । ङमो ह्रस्वादिति सूत्रस्थं भाष्यं त्वेकदेश्युक्तिरिति न दोष इति तत्रैव निरूपयिष्यामः ॥

॥ वि० ॥ ननु सामान्यत उत्तरस्य पदत्वे इत्यर्थे परमं चर्म इत्यत्रापि निषेधापत्तौ नलोपो न स्यादत आह । उत्तरपदमिति । अत एव बहुच्पूर्वस्य नेति वचनमर्थवदितिभावः । उत्तरपदशब्दस्य समासचरमावयवे रूढ इत्यसमासे नातिप्रसङ्ग इतिबोध्यम् । समासार्थेति । तत्र सुप्सुपेत्यधिकारादितिभावः । ताम् । सुपो धात्विति लुप्ताम् । कुत्वादीनि । कुत्वघत्वढत्वादीनि । ननु भत्वेन पदत्वबाधोऽत आह ।

॥ कै० ॥ उत्तरपदत्वे चेति । उत्तरपदम् उत्तरशब्देनोच्यते पदैकदेशलोपात् । तेनोत्तरपदस्य पदत्वे पदव्यपदेशे कर्तव्ये प्रत्ययलक्षणं न भवतीत्यर्थः । परमवाचेति । समासार्था या विभक्तिः कृता तां प्रत्ययलक्षणेनाश्रित्य पदत्वनिबन्धनानि कुत्वादीनि

॥ भा० ॥ उत्तरपदत्वे चापदादिविधौ । उत्तरपदत्वे चापदादिविधौ लुमता लुप्ते प्रत्ययलक्षणं न भवतीतिवक्तव्यम् । परमवाचा परमवाचे । परमगोदुहा परमगोदुहे । परमश्वलिहा परमश्वलिहे । पदस्येति प्रत्ययलक्षणेन कुत्वादीनि माभूवन्निति । अपदादिविधाविति किमर्थम् । दधिसेचौ दधिसेचः । सात्पदाद्योरिति प्रतिषेधो यथा स्यात् । यद्यपदादिविधावित्युच्यते । उत्तरपदाधिकारो न प्रकल्पेत ॥

॥ कै० ॥ प्राप्नुवन्ति भसंज्ञा तु यस्माद् यजादिविधिरितिसमुदायस्यैव न त्ववयवस्य । दधिसेचाविति । दध्नः सेचाविति षष्ठीसमासः । उपपदसमासे तु प्राक्सुबुत्पत्तेः समासविधानात्सेच्शब्दस्य पदसंज्ञाया अभावात्पदादित्वं सकारस्य न स्यात् । अनभिधानाच्च सोपपदाद्क्विजभावाद्दधिषेचावित्यादिप्रयोगाभावात् ॥

॥ वि० ॥ यस्मादिति । तथाच भिन्नावधित्वान्न बाध्यबाधकभाव इतिभावः । भाष्ये पदस्येतीति । पदस्येत्यधिकृत्य यानि विहितानीत्यर्थः । ननु सोपपदात् सिचेर्विचि दधिषेचाविति स्यादेव । नचेष्टापत्तिः । पदादादिरितिपक्षे दुर्लभत्वादत आह । अनभिधानादिति । तस्य छान्दसत्वादितिभावः । भाष्ये यद्यपदादीति । एकदेशेन संपूर्णं वार्त्तिकमुपलक्ष्यते यतः प्रतिषेधस्यातिव्याप्तिर्न प्रतिषेधापवादस्येतिबोध्यम् ॥



॥ वि० ॥ स्वरश्चेति । उत्तरपदादिरित्यधिकारादितिभावः । नन्वसमासे स्वाङ्गशिटामिति कर्णस्याद्युदात्तत्वं सिद्धमेवेत्यत आह । कर्णशब्दादिति । एवमादिविधिर्न सिध्यतीतिभाष्यादुत्तरपदादिरित्यधिकारस्थसूत्राणां वैयर्थ्यस्यैव दूषणत्वेन प्रतीतिरित्येके । प्रत्यासत्त्येति । प्रत्ययग्रहणेन यस्मात्स विहितस्तदादेरित्युपस्थित्येतिभावः । तथाऽपीति । वस्तुतो राजकुमार्यावित्यत्राऽपि दोषः । समुदायादसौ विहितो नावयवात् । अन्यथा

॥ कै० ॥ कर्णो वर्णलक्षणादिति । नन्वपदादिविधावित्युच्यते स्वरश्चाऽयं पदादिविधिः । ककारोऽत्रादिर्न त्वकार इत्यदोषः । स्वरविधौ व्यञ्जनमविद्यमानवन्न त्वादिव्यपदेशे । सूत्रं चासमासार्थं स्यात् । कर्णशब्दादर्शआदित्वादचि कृते शुक्लः कर्ण इत्याद्युदात्तत्वं यथा स्यात् । यदि पुनरिति । तेन पूर्वस्मिन् परत्र च भवत्येव प्रत्ययलक्षणम् । राजकुमार्याविति । इकोऽसवर्णे इत्य-

॥ भा० ॥ तत्र को दोषः । कर्णो वर्णलक्षणादित्येवमादिविधिर्न सिध्यति । यदि पुनर्नलोपादिविधौ प्लुत्यन्ते लुमता लुप्ते प्रत्ययलक्षणं न भवतीत्युच्येत । नैवं शक्यम् । इह हि राजकुमार्यौ राजकुमार्य इति शाकलं प्रसज्येत । नैष दोषः । यदेतत् सिति शाकलं नेति । एतत्प्रत्यये शाकलं नेति वक्ष्यामि । यदि प्रत्यये शाकलं नेत्युच्यते दधि अधुना मधु अधुना अत्राऽपि न प्राप्नोति । प्रत्यये न शाकलं भवति कतरस्मिन् यस्माद्यः प्रत्ययो विहित इति । इह तर्हि परमदिवा परमदिवे । दिव उदित्युत्त्वं प्राप्नोति ॥

॥ कै० ॥ त्वेङः पदान्तादतीत्यतः पदग्रहणमनुवर्त्तते तत्र प्रत्ययलक्षणेन पदान्तत्वाच्छाकलप्रसङ्गः । दधि अधुनेति । अधुनाप्रत्यय इदमो विधीयते तत इदम इश् यस्येतिलोपः । यस्माद्य इति । प्रत्यासत्त्येतिभावः । राजकुमार्यावित्यत्र यद्यपि समुदायाद्विहितस्तथाप्यवयवादप्यसौ विहित इति बुद्धिर्भवत्येव । समुदायद्विर्वचनेऽवयवद्विर्वचनबुद्धिवत् । उत्त्वमिति । उत्त्वविधावेङः पदान्तादिति पदाधिकारः ॥

॥ वि० ॥ कौरुचरेय इत्यादौ चकाराकारस्याऽपि वृद्धिः स्यात् । इहतर्हीत्यादिभाष्यं तु अभ्युपेत्यवादेन । श्रुतेरग्रे तु नोत्तरपदत्वेचेत्यस्य प्रवृत्तिः । अत एव पूर्ववैव दोषेणेदं दूषितं भगवतेति बोध्यम् । ङमो ह्रस्वादिति सूत्रस्थं भाष्यं त्वेकदेश्युक्तिरिति न दोष इति तत्रैव निरूपयिष्यामः ॥

॥ वि० ॥ समासचरमावयवे उत्तरपदशब्दो रूढ इत्यभिप्रेत्याह । समासे हीति । ननु पदत्वमपि तद्व्यवहारे प्रयोजकमित्यर्थः । केवलरूढत्वे मानमुक्तं तुष्यतु दुर्जनन्यायेन केवलयोगेऽप्याह । नच कर्णेति । राजवाचककर्णशब्दस्य तु अभिव्यक्तपदार्था ये इतिन्यायान्न तत्र ग्रहणमिति भावः । काश्यपिनावित्यादौ छन्दोब्राह्मणानीति तद्विषयताबोधकशास्त्रबलात् सुबुत्पत्तेः प्रागेव तद्धित इति न दोषः । भाष्ये नः क्ये इत्यादि तदादि सुबन्तं चेति । यस्मात्प्रत्ययविधिरिति अवश्यमुत्तरत्रानुवर्त्यम्परमैश्चतुर्भिरित्यादौ परमघटितसमुदायस्य पदत्ववारणाय । तत्त्वे हि झल्युपोत्तममिति परमैरित्यस्याऽपि निघातापत्तिः । एवञ्च तस्य नः क्ये इत्यत्रापि सम्बन्धे यस्मात् क्यविधिस्तदादि यदि क्ये तन्निमित्तान्तर्वर्त्तिसुपा पदं तदा नान्तमेवेति नियमः स्यात् तथाच परमवा-

॥ कै० ॥ वचनादिति । समासे ह्युत्तरपदं भवति नच कर्णशब्दो अच्प्रत्ययान्तोऽस्ति अर्शआदिषु हि स्वाङ्गाद्धीनादिति पठ्यते

॥ भा० ॥ अस्तु तर्ह्यविशेषेण । ननुचोक्तम् उत्तरपदाधिकारो न प्रकल्प्येतेति । वचनादुत्तरपदाधिकारो भविष्यति । तत्तर्हि वक्तव्यम् । न वक्तव्यम् । अनुवृत्तिः करिष्यते । इदमस्ति यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् । सुप्तिङन्तं पदम् । यस्मात्सुप्तिङ्विधिस्तदादि सुबन्तं तिङन्तञ्च । नः क्ये । नान्तं क्ये पदसंज्ञं भवतीति यस्मात् क्यविधिस्तदादि सुबन्तञ्च । सितिच पूर्वम्पदसंज्ञं भवति यस्मात्सिद्विधिस्तदादि सुबन्तञ्च । स्वादिष्वसर्वनामस्थाने । स्वादिष्वसर्वनामस्थाने पूर्वं पदसंज्ञं भवति । यस्मात्स्वादिविधिस्तदादि सुबन्तञ्च । यचि भम् । यजादिप्रत्यये पूर्वं भं भवति । यस्माद्यजादिविधिस्तदादि सुबन्तञ्च ॥

॥ कै० ॥ तेन खञ्जादिभ्य एव हीनस्वाङ्गवाचिभ्योऽच् प्रत्ययो भवति न च कर्णशब्दो हीनस्वाङ्गवाची । तत्तर्हीति । उत्तरपदत्वे चापदादिविधावित्येतत् । यचि भमिति । ततश्च परमवाचेत्यत्र वाक्शब्दस्य भत्वात्पदत्वाऽभावः ॥

॥ वि० ॥ च्यतीत्यादावयववाक्शब्दस्य पदत्वेन कुत्वं स्यात् सूत्रन्तु समिध्यतीत्येतद्व्यावृत्त्यर्थं स्यादिति सुबन्तमित्यपि सम्बध्यत इति भावः । तस्य च मध्येचेत्सुबन्तं तदा तदपि नान्तमेव पदमित्यर्थः । अन्वाचयशिष्टञ्च सुबन्तमिति सर्वत्र सन्नियोगशिष्टत्वे षड्भ्य इत्याद्यसिद्धिः । सितिचेत्यत्र यद्यपि नास्ति उपयोगोऽवयवसुबन्ताऽप्रसिद्धेस्तथाऽपि उत्तरत्रानुवृत्तिं दर्शयितुं तत्राऽपि तत्सम्बन्धो दर्शितः । व्यपदेशिवद्भावेन कथञ्चिदन्वयः सम्पाद्यः । एवं स्वादिष्विति सूत्रेऽपि तदनुवृत्तिकरणमुत्तरार्थमेव । यचिभमित्यत्राऽपि पदसंज्ञया तुल्यावधिकत्वसिद्ध्यर्थं यस्मादित्याद्यनुवर्त्यमिति बोध्यम् ॥



॥ वि० ॥ संज्ञिनां भेदादिति । सति सौ तदन्तस्य सुबन्तमिति पदत्वं न तत्प्राग्भागस्य स्वादिष्विती तिभावः । नन्वपरनिमित्तकत्वेनान्तरङ्गतया सुबन्तमिति पदत्वं स्यादत आह । भाष्ये प्रतिषेधाश्चेति । विध्युन्मूलनं प्राप्तविधेर्निवर्त्तनम् । एवञ्चापवादन्यायेनात्रान्तरङ्गासम्भव

॥ कै० ॥ इदन्तर्हीति । असर्वनामस्थान इति प्रसज्यप्रतिषेधं मन्यते ततश्च सर्वनामस्थाने परतो यस्मात्स्वादिविधिस्तदादि

॥ भा० ॥ इदन्तर्हि परमवाक् । असर्वनामस्थान इति प्रतिषेधः प्राप्नोति । अस्तु तस्याः प्रतिषेधः । या स्वादौ पदमिति पदसंज्ञा । या तु सुबन्तं पदमिति पदसंज्ञा सा भविष्यति । सत्येतत्प्रत्यये आसीत् । अनया भविष्यत्यनया न भविष्यतीति । लुप्त इदानीम्प्रत्यये यावत एवावधेः स्वादौ पदमिति पदसंज्ञा तावत एवावधेः सुबन्तं पदमिति । अस्ति च प्रत्ययलक्षणेन सर्वनामस्थानपरतेति कृत्वा प्रतिषेधाश्च बलीयांसो भवन्तीति प्रतिषेधः प्राप्नोति । नाप्रतिषेधात् । नायं प्रसज्य प्रतिषेधः सर्वनामस्थाने नेति । किं तर्हि पर्युदासोऽयं यदन्यत्सर्वनामस्थानादिति सर्वनामस्थाने अव्यापारः । यदि केनचित्प्राप्नोति तेन भविष्यति । पूर्वेण च प्राप्नोति । अप्राप्तेर्वा । अथवा अनन्तरा या प्राप्तिः सा प्रतिषिध्यते । कुत एतत् । अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति ।

॥ कै० ॥ सुबन्तञ्च पदसंज्ञं न भवतीति प्रत्ययलक्षणेन सर्वनामस्थानपरत्वात्पदत्वप्रतिषेधात् कुत्वाप्राप्तिः । सत्येतदिति । अवधिभेदात्संज्ञिनां भेदात् । बलीयांस इति । विध्युन्मूलनरूपत्वात् ॥

॥ वि० ॥ इतिभावः । अत्रानुवर्त्तमानं सुबन्तमित्यपि स्वादिष्विति सूत्रेण तदनुवृत्त्या मध्यस्य सुबन्तस्य यत्प्राप्तन्तन्निषेधकन्न तु सुबन्तमितिसूत्रप्राप्तस्येतिबोध्यम् ॥

॥ वि० ॥ भाष्ये नोत्सहते इति । स्वयमप्रवर्तमाना कथमन्यं बाधेतेतिभावः । ननु सर्वनामस्थानेऽयचीति न्यासस्य पदत्वनिषेधकत्वेऽनन्तरस्येति न्यायेन स्वादिष्वित्यस्यैव निषेधे परमवाचावित्यादौ सुबन्तमिति पदत्वं स्यादत आह । योगविभागे इति । एवञ्च तत्सामर्थ्यादनन्तरस्येति

॥ कै० ॥ एवं तर्हीति । योगविभागे सति सर्वा प्राप्तिः प्रतिषिध्यत इतिदोषाभावः । असर्वनामस्थान इति । नञः क्रियापदेन संबन्धादुत्तरपदेनासंबन्धोऽयचीत्येतच्च सर्वनामस्थानविशेषणं तेनायमर्थो भवति यजादौ सर्वनामस्थाने

॥ भा० ॥ पूर्वा प्राप्तिरप्रतिषिद्धा तया भविष्यति । ननु चेयं प्राप्तिः पूर्वां प्राप्तिं बाधेत । नोत्सहते प्रतिषिद्धा सती बाधितुम् । यद्येवं परमवाचौ परमवाच इति सुप्तिङन्तं पदमिति पदसंज्ञा प्राप्नोति । एवं तर्हि योगविभागः करिष्यते । स्वादिषु पूर्वं पदसंज्ञं भवति । ततः । सर्वनामस्थाने अयचि । पूर्वं पदसंज्ञं भवति । ततो भम् । भसंज्ञं भवति यजादावसर्वनामस्थान इति । यदि तर्हि सावपि पदं भवति एचः प्लुतविकारे पदान्तग्रहणं चोदयिष्यति । इह माभूत् । भद्रं करोषि गौरिति तस्मिन् क्रियमाणेऽपि प्राप्नोति ॥

॥ कै० ॥ परतः पदसंज्ञा न भवतीति । हलादौ तु सुशब्दे भवत्येव । भाष्ये तु वस्तुमात्रमुपन्यस्तम् । सर्वनामस्थाने अयचीति । यजादौ सर्वनामस्थाने पदसंज्ञानिषेधात्सामर्थ्यादयमर्थः संपद्यते अयजादौ सर्वनामस्थाने पदसंज्ञा भवतीति ॥

॥ वि० ॥ न्यायबाध इति भावः । यचीत्यस्य पुरस्तादपकर्षे फलमाह । हलादाविति । वस्तुमात्रम् । अर्थसिद्धोऽर्थः । तत्फलं नञः सर्वनामस्थानपदेनासंबन्धप्रदर्शनम् । भाष्ये प्लुतविकारे इति । प्लुतसहितविकारे इत्यर्थः । एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्धस्यादुत्तरस्येदुतावित्यत्वेतिभावः ॥



॥ वि० ॥ भाष्ये इह तर्हीति । वार्तिकारम्भे त्वपदादिविधावित्युक्तेर्न दोषः । प्रत्याख्याने तु दोषः कुत्वाभावाय पदत्वनिषेधप्रवृत्तेरावश्यकत्वात् । एतेन योगविभागसिद्धस्य काचित्कत्वाच्च दोष इत्यपास्तमितिभावः । पञ्चमीतियोगविभागादिति । पदादित्यस्य परशब्दान्वयेनाऽसामर्थ्यादिव समासशास्त्राप्राप्तेः सौत्रः समास इतिवक्तुमुचितम् । भाष्ये न तेभ्यः प्रतिषेध इति । तेभ्यः परस्य सुबन्तं पदमितिपदत्वमाश्रित्यापि न प्रतिषेधः । अत एव

॥ कै० ॥ वाक्यपदयोरिति । गौरित्यौकारो वाक्यान्तो न भवतीत्यादुतौ न भवतः । पदादादिरिति । पञ्चमीतियोगविभागात्समासः ।

॥ भा० ॥ वाक्यपदयोरन्त्यस्येत्येवं तत् । इह तर्हि दधिसेचः सात्पदाद्योरिति पदादिलक्षणः षत्वप्रतिषेधो न प्राप्नोति । माभूदेवं पदस्यादिः पदादिः पदादेर्नेति । कथं तर्हि । पदादादिः पदादिः पदादेर्नेत्येवं भविष्यति । नैवं शक्यम् । इहापि प्रसज्येत ऋक्षु वाक्षु कुमारीषु किशोरीष्विति । सात्प्रतिषेधो ज्ञापकः स्वादिषु पदत्वेन येषां पदसंज्ञा न तेभ्यः प्रतिषेधो भवतीति । इह तर्हि बहुसेचौ बहुसेचः । बहुजयं प्रत्ययः । अत्र पदादादिः पदादिः पदादेर्नेत्युच्यमानेऽपि न सिध्यति । एवं तर्हि उत्तरपदत्वे च पदादिविधौ लुमता लुप्ते प्रत्ययलक्षणं भवतीति वक्ष्यामि । तन्नियमार्थं भविष्यति पदादिविधावेव न पदान्तविधाविति ॥

॥ वि० ॥ परमवाक्षु इत्यादावपि न दोषः । भाष्ये पदादेर्नेत्युच्यमानेऽपीति । षष्ठीतत्पुरुषेऽपि न सिध्यति कुत्वाऽभावाय पदत्वाऽभावस्यावश्यकत्वादिति अपेर्थः । अयं बहुसेचि दोषो वार्त्तिकारम्भेऽपि उत्तरपदत्वाभावेन निषेधाप्राप्त्या पदत्वसत्त्वेन षष्ठीतत्पुरुषेण षत्वनिषेधसाम्राज्येऽपि कुत्वप्राप्तेः । इदानीं प्रत्याख्यानप्रकारस्य गौरवदुर्ज्ञेयत्वाभ्यामयुक्तत्वं मनसि निधाय लाघवाय नञ्रहितवचनपाठमाह । एवं तर्हीति । न पदान्तविधाविति । पदान्तस्थानिकविधावित्यर्थः । नञ्घटितवार्त्तिकस्याप्यत्रैव प्रवृत्तिर्व्याख्यानादेतदेकफलत्वायेति बोध्यम् ॥

॥ वि॰ ॥ एतावतापि वहुसेचावित्यस्यासिद्धिरिति शङ्कते । कथं वहुसेचाविति । तदुपपादयति । समासेति । एवञ्च नियमाप्राप्तौ प्रत्ययलक्षणेन पदत्वात् षत्वनिषेधवञ्चोः कुः पदान्तस्येति कुत्वं स्यादितिभावः । पञ्चमीसमासेऽपि षत्वापत्तिरित्याह । नापि पूर्वस्येति । भाष्ये वहुच्पूर्वस्यचेति । आद्यवार्त्तिकारम्भे तत्प्रत्याख्याने च सात्पदाद्योरित्यत्रेदं कार्यमितिगूढ आशयः । न पदान्तविधाविति प्रतिनिर्देशादुत्तरपदत्वे चेत्यस्य वार्त्तिकस्य ङमुडादिविधौ णत्वादिविधौ चाप्रवृत्तिरितिबोध्यम् । ङमुट्सूत्रस्थं भाष्यं त्वेतद्विरोधाद् उञि च पद इतिसूत्रस्थभाष्यविरोधाच्च नलोपादिसुत्यन्त इति-

॥ कै॰ ॥ कथं वहुसेचाविति । समासाभावान्नोत्तरपदत्वं नापि पूर्वपदत्वम् । द्वन्द्वेऽन्त्यस्येति । उत्तरपदत्वे चेत्यनेनैव सिद्धे नियमार्थमिदमन्त्यस्यैवेति मध्यमपदस्यापि पूर्वपदापेक्षयोत्तरपदत्वसम्भवात्प्रत्ययलक्षणप्रतिषेधप्रसङ्गात् । मुख्ये तूत्तरपदे

॥ भा॰ ॥ कथं वहुसेचौ वहुसेचः । वहुच्पूर्वस्य च । पदादिविधावेव न पदान्तविधाविति । द्वन्द्वेऽन्त्यस्य । द्वन्द्वेऽन्त्यस्य लुमता लुप्ते प्रत्ययलक्षणं न भवतीतिवक्तव्यम् । वाक्स्त्वक्चम् । इहाभूवन्नितिप्रत्ययलक्षणेन जुस्भावः प्राप्नोति । सिचि जुसोऽप्रसङ्ग आकारप्रकरणात् । सिचि जुसोऽप्रसङ्गः । किं कारणम् । आकारप्रकरणात् । आत इतिवर्तते तन्नियमार्थं भविष्यति । आत एव सिज्लुगन्तान्नान्यस्मात्सिज्लुगन्तादिति ॥

॥ कै॰ ॥ सम्भवति कथं मध्यमपदस्य ग्रहणं स्यादिति चिन्त्यमेतत् । आकारप्रकरणादिति । आकारस्य नियमार्थत्वेन प्रस्तावादित्यर्थः । अथवाऽऽकारे प्रकरणादात इत्यत्र सिचः प्रकृतत्वादित्यर्थः ॥

॥ वि॰ ॥ वार्त्तिकस्यभाष्यविरोधाच्चैकदेश्युक्तिरिति बोध्यम् । एवञ्च प्रत्याख्यानप्रकारोऽपि योगविभागस्य काचित्कत्वेन ङमुडादिविषये न । इदमेव ध्वनयितुं प्रत्याख्यातमपि वार्त्तिकं पुनरक्षरान्तरैरुपात्तमित्याहुः । मुख्ये त्विति । उत्तरपदशब्दस्य समासचरमावयवे रूढेरितिभावः । रूढस्यैव ग्रहणमित्येतद्व्याख्यायकं द्वन्द्वेचेतीति तत्त्वम् । प्रत्याख्यानेऽपि न मध्यमस्य प्राप्तिः । मध्यसुवन्तस्यापि स्वादिपरत्वेन विशेषणादितिबोध्यम् । प्रस्तावादिति । आत इत्यारम्भादित्यर्थः । सिच इति । अनेन विधित्वासम्भवो दर्शितः ॥



॥ वि॰ ॥ भाष्ये श्रूयमाणेति । श्रूयमाणत्वार्थकं विभक्तिविशेषणमित्यर्थः । तल्लाभोपायं दर्शयति । षष्ठीत्यादि । अथवा यथा रथेति । स्वशब्दः साहित्यवाचीतिभावः । तदवयवमिति । वहुव्रीहिः । युष्मदस्मदोरिति तद्घटितसमुदाये लाक्षणिकमितिभावः । मुख्येऽर्थे एव पदसामानाधिकरण्ये सम्भवति किं लक्षणयेत्याह । अत्र हीति ।

॥ कै॰ ॥ इतियुष्मत्पत्र इति । पदादुत्तरयोर्युष्मदस्मदोरादेशविधानादितिशब्दप्रयोगः । श्रूयमाणविभक्तिविशेषणमिति । षष्ठीचतुर्थीद्वितीयास्वित्येव सिद्धे स्वग्रहणे सत्ययमर्थो भवति तासु ये त्ववस्थिते युष्मदस्मदी इति श्रूयमाणासु चावस्थानं भवति न तु लुप्तासु लुप्तस्याधारत्वासम्भवात् । अस्त्यन्यदिति । तिष्ठतिरहानावपि वर्तते यथा तपसि स्थितः तपो न जहातीत्यर्थः । तथा समये तिष्ठ सुग्रीवेति समयं माहासीरित्यर्थः । तेन सति स्वग्रहणे तत्सहितयोः कार्यं विज्ञायते । अथवा यथा रथस्य आनीयतामिति सरथ

॥ भा॰ ॥ इह च इति युष्मत्पुत्रो ददाति इत्यस्मत्पुत्रो ददातीत्यत्र प्रत्ययलक्षणेन युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वान्नावावितिवान्नावादयः प्राप्नुवन्ति । युष्मदस्मदोः स्वग्रहणात् । स्वग्रहणं तत्र क्रियते तच्छ्रूयमाणविभक्तिविशेषणं विज्ञास्यते । अस्त्यन्यत्स्वग्रहणस्य प्रयोजनम् । किम् । सविभक्तिकस्य वान्नावादयो यथा स्युरिति । नैतदस्ति प्रयोजनम् । पदस्येति वर्त्तते । विभक्त्यन्तं च पदं तत्राऽन्तरेणाऽपि स्वग्रहणं सविभक्तिकस्यैव भविष्यन्ति । भवेत्सिद्धं यत्र विभक्त्यन्तं पदं यत्र तु खलु विभक्तौ पदं तत्र न सिध्यति । ग्रामो वां दीयते ग्रामो नौ दीयते । सर्वग्रहणमपि प्रकृतमनुवर्तते तेन सविभक्तिकस्यैव भविष्यति ॥

॥ कै॰ ॥ आनीयते तथा षष्ठ्यादिसहितयोर्युष्मदस्मदोः कार्यं भवतीति विज्ञायते । पदस्येतिवर्तत इति । केवलयोः पदत्वाभावात्तदवयवं पदं गृह्यते इतिभावः । यत्र त्विति । अत्र हि ते एव पदे इति तयोरेवादेशप्रसङ्गः । सर्व्वग्रहणमपीति । अनेकाल्त्वात्सर्वादेशत्वे लब्धे सर्वग्रहणमनुवृत्तं षष्ठ्यन्तं विपरिणम्यमानं सर्व्वस्य पदस्य विभक्तिसहितस्य स्थानित्वमवगमयतीत्यर्थः ॥

॥ वि॰ ॥ यद्यपि द्वितीयायां षष्ठ्यां च तयोः पदत्वासम्भवेन तत्र लक्षणाया आवश्यकत्वेनान्यत्राप्येकरूपत्वाय लक्षणा युक्ता तथापि पदस्येत्यस्य मादुपधाया इत्यादावयवषष्ठीत्वस्य क्लृप्ततया पदावयवयोरित्यर्थ एव स्यादत ईदृशलक्षणालाभः सर्वग्रहणसाध्य एवेत्याह । सर्वग्रहणमिति । अनुदात्तं सर्वमित्यतः ॥

॥ वि० ॥ ननु लावस्थायामेवान्तरङ्गानपीतिन्यायेन लुकि प्रत्ययलक्षणेनाऽपि न तिङन्तत्वमत आह । परत्वादिति । नाप्राप्तेष्विति । अन्तरङ्गानपीतिन्यायादित्यपि बोध्यम् । इट्प्रतिषेध इत्यत्र न प्राप्नोतीत्यनुषङ्गः । दीर्घत्वम् । क्रमः परस्मैपदेष्विति । समुच्चिनुयादिति । तच्चासम्भवीतिशेषः । इत्यभिप्रायेणेति । प्रश्न इत्यर्थः । भाष्ये तटस्थोऽभिप्रायानभिज्ञ उत्तरयति । इटश्चेति । आचार्य आह । नेत्याहेति । गमेरिड्विधिर्दतेस्तत्प्र-

॥ कै० ॥ याजयाञ्चकारेति । परत्वात्तिवादिषु कृतेषु आम इति लुकि प्रत्ययलक्षणेन याजयामित्यस्य तिङन्तत्वमिति पूर्वः पक्षः । आमि लिलोपादिति । नाप्राप्तेषु तिवादिषु लुगारभ्यमाणस्तेषां बाधकः । अङ्गाधिकार इति । अङ्गस्येति स्वर्यते तेनाङ्गाधिकारविहितं यत्कार्यं तल्लुमता लुप्ते प्रत्यये न भवतीतिसूत्रार्थे दोषोपन्यासः । जिगमिषेति । अतो हेरिति लुकि कृते

॥ भा० ॥ इह चक्षुष्कामं याजयाञ्चकारेति तिङ्ङतिङ इति तस्य च निघातस्तस्माच्चानि-घातः प्राप्नोति । आमि लिलोपात्तस्यचानिघातस्तस्माच्च निघातः सिद्धो भविष्यति । अङ्गा-धिकारे इटो विधिप्रतिषेधौ । अङ्गाधिकारे इटो विधिप्रतिषेधौ न सिध्यतः । जिगमिष संविड्ढ्स । अङ्गस्येतीटो विधिप्रतिषेधौ न प्राप्नुतः । क्रमेर्दीर्घत्वञ्च । किञ्च । इटश्च विधिप्रतिषेधौ । नेत्याह । अदेशेऽयञ्चः पठितः । क्रमेश्च दीर्घत्वम् । उत्क्राम संक्रामेति । इह किञ्चिदङ्गाधिकारे लुमता लुप्ते प्रत्ययलक्षणेन भवति किञ्चिच्चान्यच्च न भवति ॥

॥ कै० ॥ गमेरिट्परस्मैपदेष्वितीड् न प्राप्नोति । संविड्ढ्सेति । न वृद्भ्यश्चतुर्भ्य इतीट् प्रतिषेधः । क्रमेरिति । कार्य्यसमीपे श्रूयमाणश्चकारः कार्य्यमेव समुच्चिनुयादित्यभिप्रायेण । किञ्चेति । अदेश इति । कार्यस्य समुच्चेतव्यस्याभावात्सामर्थ्यात्प्रकृ-तिसमुच्चय इत्यर्थः । किञ्चिच्चेति । ञ्निकित्स्वराः ॥

॥ वि० ॥ तिषेधः क्रमेश्च दीर्घत्वं न सिध्यतीत्यर्थ इतिभावः । अनन्तरोक्तातिव्याप्तेरुपक्रमोक्ताव्याप्तेश्चाङ्गाधिकारपरत्वं न युज्यत इत्युपसंहरति । भाष्ये इहेति । ञ्निकित्स्वरा इति । इदमुपलक्षणम् अचर्ईदातीत्यचासुपीतिप्रतिषेधस्यापि । वस्तुतः किञ्चिच्चेत्यत्र किञ्चित्पदेन रोऽसुपीत्येव ञ्निकित्स्वरविषये सौवरीणां सप्तमीनां तदन्तसप्तमीत्वेन नलुमता तस्मिन्निति न्यासेऽपि वचनस्यावश्यकत्वादिति बोध्यम् ॥



॥ वि० ॥ ॥ तस्मिन् कार्य्यमिति । तस्मिन् परतस्तन्निमित्तकं तत्प्रकृतिभूतस्य यत्कार्य्यमित्यर्थः । कित इत्युदाहरणभूतावय इत्यस्योभ-यपक्षेऽप्यसिद्धेस्तत्परिहरति । अत्वय इत्यत्रेति । यदन्यस्येति । प्रत्ययजमित्येव सिद्धे लक्षणग्रहणसामर्थ्येन प्रत्ययनिमित्तकमेव न तु प्रत्ययस्थानि-कमित्यर्थादितिभावः । युक्त्यन्तरमप्याह । नहीति । षष्ठ्यर्थस्योच्चारणरूपप्रसङ्गस्य वक्तुमशक्यत्वादितिभावः । अत एव नखनिर्भिन्न इत्यादावैसादिकं न । एवमसतः

॥ कै० ॥ न लुमता तस्मिन्निति । लुमता यो लुप्तः प्रत्ययस्तस्मिन्यत्कार्य्यमाङ्गमनाङ्गं वा तन्न भवतीत्यर्थः । अत्वय इत्यत्र स्वरो न भवति तद्धितस्यैव कितोऽन्तोदात्तत्वविधानाल्लुकि कृते कार्य्यिणोऽसत्त्वात् । प्रत्ययलक्षणं हि यदन्यस्य कार्य्यं तत्प्रत्ययलोपेऽपि भवति

॥ भा० ॥ यदि पुनर्न्नलुमता तस्मिन्नित्युच्यते । अथ नलुमता तस्मिन्नित्युच्यमाने किं सिद्धमेतद्भवति । इटो विधिप्रतिषेधौ क्रमेर्दीर्घत्वं च । बाढं सिद्धम् । न इटो विधिप्रतिषेधौ परस्मैपदेष्वित्युच्येते । कथं तर्हि । सकारादाविति तद्विशेषणं परस्मैपदग्रहणम् । न खल्वपि क्रमेर्दीर्घत्वं परस्मैपदेष्वित्युच्यते । कथं तर्हि । शितीति तद्विशेषणं परस्मैपदग्रहणम् । न लुमता तस्मिन्नितिचेद्घनिणिङादेशास्तल्लोपे ॥

॥ कै० ॥ न तु यत्प्रत्ययस्यैव कार्य्यं तदपि न हि वचनेनासतः कार्य्यं शक्यते प्रतिपादयितुम् । तद्विशेषणमिति । विशेषण एवोपक्षीण-त्वात्कार्यं प्रति निमित्तभावो नास्तीत्यर्थः । हनिणिङादेशा इति । लुका लुङो विषयत्वापहारादिषयसप्तम्याश्रयणेऽप्यसिद्धिः ॥

॥ वि० ॥ सत्तापि न वचनेन शक्येतिबोध्यम् । परस्मैपदपरसादेरङ्गत्वनिमित्तस्येडित्याद्यर्थे न दोष इत्याह । विशेषण एवेति । एवञ्च लुप्तप्रत्ययनिमित्तकं तत्प्रकृतेस्तन्न कार्यमितिभावः । नन्वार्द्धधातुक इत्यादीनां विषयसप्तमीत्वात्पूर्वमेव तेषां प्रवृत्तेर्न प्रत्ययलक्षणापेक्षेत्यत आह । लुकेति । एवञ्च विषयत्वज्ञाना-यावश्यं प्रत्ययलक्षणमाश्रयणीयं तच्च नलुमता तस्मिन्नितिन्यासे न प्राप्नोतीति भावः ॥

॥ वि० ॥ लुङ्परे चिणीति । लुङ्परार्द्धधातुकविषये इत्यर्थ इतिभावः । भाष्ये तत्रापीति । नलुमता तस्मिन्नित्येतदित्यर्थः । लुप्ते प्रत्यये यदङ्गमिति । लुप्तप्रत्ययनिरूपिताङ्गसंज्ञकस्य यत्कार्यमित्यर्थः । उत्कामित्यादौ तु परस्मैपदनिमित्ताङ्गसंज्ञकस्य न कार्यं किन्तु श्निदादिनिमित्ता-

॥ कै० ॥ तद्विशेषणं लुङ्ग्रहणमिति । तेन लुङ्परे चिण्यादेशविधानम् । नलुमतेति । अङ्गस्येत्यस्य स्वरितत्वाप्रति-

॥ भा० ॥ न लुमता तस्मिन्निति चेद्धुनिणिङादेशास्तल्लोपे न सिध्यन्ति । अवधि भवता दस्युः । अगायि भवता ग्रामः । अध्यगायि भवताऽनुवाकः । तल्लोपे कृते लुङीति हनिणिङादेशा न प्राप्नुवन्ति । नैष दोषः । न लुङीति हनिणिङादेशा उच्यन्ते । किं तर्हि । आर्द्धधातुक इति तद्विशेषणं लुङ्ग्रहणम् । इह च सर्व स्तोमः सर्वपृष्ठः सर्वस्य सुपीत्याद्युदात्तत्वं न प्राप्नोति । तत्रापि वक्तव्यम् । न वक्तव्यम् । नलुमताङ्गस्येत्येव सिद्धम् । कथम् । न लुमता लुप्तेऽङ्गाधिकारः प्रतिनिर्द्दिश्यते । किं तर्हि । योऽसौ लुमता लुप्यते तस्मिन् यदङ्गं तस्य यत्कार्यं तन्न भवति । एवमपि सर्वस्वरो न सिध्यति । कर्त्तव्योऽत्र यत्नः ॥ ॥

॥ कै० ॥ ज्ञानात्तत्र लुमता लुप्ते प्रत्यये यदङ्गं तस्य यत्कार्यं प्रत्ययाश्रयमाङ्गमनाङ्गं वा तन्न भवतीत्यर्थः । कर्तव्योऽत्र यत्न इति । सर्वशब्दार्थं वचनं कर्त्तव्यम् ॥ ॥

॥ वि० ॥ ङ्गसंज्ञकस्येति न दोषः । किञ्च परस्मैपदग्रहणस्य तङानाभावोपलक्षणत्वादपि न दोषः । अगायीत्यादौ तु न दोषः । लुङ्निमित्ताङ्गत्ववतश्चिण-न्तस्य कार्याभावादितिबोध्यम् । भाष्ये एवमपीति । अङ्गाधिकारप्रतिनिर्द्देशाभावेऽपीत्यर्थः । वचनं कर्त्तव्यमिति । सौवर्यः सप्तम्यन्तादन्तसप्तम्य इत्येतत् ॥ ॥



॥ वि० ॥ अलोऽन्त्यात् । असन्देहार्थमिति । अन्त्यात् पूर्वोऽलित्येव वदेदितिभावः । अल्ग्रहणमन्त्यनिर्देश इत्यनयोः सामानाधिकरण्यम-नुपपन्नमत आह । अभिधीयतेऽनेनेति । अल्ग्रहणमन्त्यप्रत्यायकं चेदित्यर्थः । घञन्तः पुंसीतिनिर्देशशब्दस्य पुंस्त्वम् । प्राप्तिपूर्वकत्वात्प्रतिषेधस्य प्राप्तिमाह । पूर्वस्येति । एकाजिति । यद्यप्यत्र समुदायसंज्ञया नावयवानामनुग्रहस्तथापि कदाचिदविशेषात्संघातस्यापि स्यादित्यनिष्टभावापादने भाष्यतात्प-

॥ कै० ॥ अलोऽन्त्यात् । किमिदमिति । प्रथमा पञ्चमी वेति संदेहात्प्रश्नः । एवमिति । प्रथमायामभिप्रेतायामसन्देहार्थम-लित्येकवचनं वक्तव्यं स्याद् अन्त्यादिति पञ्चमीसाहचर्याच्चाऽल इत्यपि पञ्चम्यन्तमितिभावः । अल्ग्रहणमिति । निर्दिश्यतेऽभिधी-यतेऽनेनेति निर्देशः । यद्यन्त्यः प्रत्याय्यत इत्यर्थः । संघातप्रतिषेध इति । पूर्वस्याऽविशेषितत्वात् समुदायाऽवयवसन्निधौ च

॥ भा० ॥ अलोऽन्त्यात्पूर्व उपधा । किमिदमल्ग्रहणमन्त्यविशेषणम् । एवं भवितुमर्हति । उपधासंज्ञायाम-ल्ग्रहणमन्त्यनिर्देशश्चेत्संघातप्रतिषेधः । उपधासंज्ञायामल्ग्रहणमन्त्यनिर्देशश्चेत्संघातस्य प्रतिषेधो वक्तव्यः । संघा-तस्योपधासंज्ञा प्राप्नोति । तत्र को दोषः । शास इदङ्हलोः शिष्टात् शिष्टाम् । संघातस्येत्त्वं प्राप्नोति । यदि पुनरलन्त्यादित्युच्यते । एवमप्यन्त्योऽविशेषितो भवति ॥

॥ कै० ॥ समुदायस्यैव कार्यित्वादेकाज्द्विर्वचन इवेति भावः । अन्त्यविशेषणत्वे वर्णनिर्देशे जातिग्रहणेऽप्यत्र इत्युपादान-सामर्थ्यात्संख्या विवक्ष्यते । यदि पुनरिति । अत्राप्यल्ग्रहणसामर्थ्यात्संख्या विवक्ष्यते पिबेरदन्तत्वप्रतिज्ञानाच्च लिङ्गादल्सम-दायस्य संज्ञित्वे गुणस्य प्राप्तिरेव नास्ति किमदन्तत्वप्रतिज्ञानेन ॥

॥ वि० ॥ र्यमितिबोध्यम् । ननु संज्ञिवदवधिरपि कस्माज्जातिग्रहणप्राप्तः समुदायो न निषिध्यतेऽत आह । अन्त्येति । संख्या विवक्ष्यत इति । ज्ञापकसि-द्धस्यासार्वत्रिकत्वादनेका व्यक्तिर्न गृह्यत इति भावः । संख्याविवक्षा तूद्देश्यगतत्वादयुक्ता । पिबेरदन्तत्वेति । अल्समुदायस्य लघुत्वाभावादितिभावः । सूत्रं उखादौचरितार्थं कदाचिदिकारस्याप्युपधात्वेन चिन्त्यमिदम् ॥

७३२

॥ वि० ॥ शब्दस्य हीति । एकाज्धातुविषयमिदम् । अनेकाच्तु प्रथमस्यैकाचो द्वित्वेनार्थवत्त्वशङ्कैव नेति बोध्यम् । एवञ्चोत्तरखण्ड एवार्थवानितिभावः । अव्यक्तानुकरणस्येति । अच्छब्दान्तस्याव्यक्तानुकरणस्येत्यर्थे सम्पूर्णस्याच्छब्दस्य पररूपानापत्तिरित्यतो वैयधिकरण्यमुक्तम् ।

॥ कै० ॥ सूत्रञ्चेति । अलन्त्यादितिपठ्यमान इत्यर्थः । अन्त्यविज्ञानादिति । उपधाया इतिषष्ठ्यन्त्यमलं नीयत इत्यर्थः । अनभ्यासविकार इति । अभ्यासोऽनर्थकः शब्दस्य द्व्यावृत्तिर्नार्थस्य । अव्यक्तानुकरणस्येति ।

॥ भा० ॥ तत्र को दोषः । संघातादपि पूर्वस्योपधासंज्ञा प्रसज्येत । तत्र को दोषः । शास इदङ्हलोः शिष्टः शिष्टवान् । शकारस्येत्त्वं प्रसज्येत । सूत्रं च भिद्यते । यथान्यासमेवास्तु । ननु चोक्तमुपधासंज्ञायामल्ग्रहणमन्त्यनिर्देशश्चेत् संघातप्रतिषेध इति । नैष दोषः । अन्त्यविज्ञानात्सिद्धम् । सिद्धमेतत् । कथम् । अलोऽन्त्यस्य विधयो भवन्तीत्यन्त्यस्य भविष्यति । अन्त्यविज्ञानात् सिद्धमितिचेन्नानर्थकेऽलोऽन्त्यविधिरनभ्यासविकारे । अन्त्यविज्ञानात् सिद्धमितिचेत्तन्न । किं कारणम् । नानर्थकेऽलोन्त्यविधिरनभ्यासविकारे । अनर्थकेऽलोन्त्यस्य विधिर्नेत्येषा परिभाषा कर्त्तव्या । किमविशेषेण । नेत्याह । अनभ्यासविकारे । अभ्यासविकारान् वर्ज्जयित्वा । भृञामित् । अर्तिपिपर्त्योश्चेति । कान्येतस्याः परिभाषायाः प्रयोजनानि । प्रयोजनमव्यक्तानुकरणस्यात इतौ । अव्यक्तानुकरणस्यात इतावित्यन्त्यस्य प्राप्नोति । अनर्थकेऽलोन्त्यविधिर्न भवतीति न दोषो भवति । नैतदस्ति प्रयोजनम् । आचार्यप्रवृत्तिर्ज्ञापयति । नान्त्यस्य पररूपं भवतीति । यदयं नाम्रेडितस्यान्त्यस्य तु वेत्याह ॥

॥ कै० ॥ अव्यक्तानुकरणस्य योऽच्छब्दस्तस्येतौ पररूपमिति सूत्रार्थः । यदयमिति । आम्रेडितस्य वेत्येव वक्तव्यं स्यात् ॥

॥ वि० ॥ अव्यक्तानुकरणं योऽच्छब्द इति तु नार्थः । एकाचो नेति निषेधारम्भादित्यलम् । ननु विकल्पार्थं तदावश्यकमत आह । नाम्रेडितस्येति । अन्त्यस्य पूर्वेण नित्ये पररूपे प्राप्ते इतिशेषः ॥

७३३

॥ वि० भेदेन निर्दिष्टाविति । यद्यप्येकदेशविकृतस्येत्यादौ लोपोऽपि विकारपदेनोच्यते तथापि व्याख्यानादेवाविष्टशार्थावगतिरितिबोध्यम् । ननु लोपग्रहणाभावे च्छ्वसोरेद्धावभ्यासस्येत्युक्ते चकाराभावादन्यवचनाच्च प्रकृतासंबन्धे एत्त्वमेव स्यादत आह । तत्र च्छ्वसोरित्यादि । ननु चेनानुवृत्तावपि लोपोऽभ्यासस्यैवेत्यत्र नियामकाभावात्पर्यायेण चयाणामप्येत्त्वलोपौ स्यातामत आह । तत्र व्याख्यानादिति । आगन्तूनामन्ते निवेशेनाभ्यासस्य

॥ कै० ॥ च्छ्वसोरिति । अनभ्यासविकार इति प्रतिषेधो रूपवत्यादेशे लोपस्तु नीरूपः । तथाच पस्पशायां लोपागमवर्णविकारज्ञ इति लोपविकारौ भेदेन निर्दिष्टौ । पुनर्लोपेति । लोपो यीत्यतो लोपग्रहणेऽनुवर्तमान इतिभावः । तत्र च्छ्वसो-

॥ भा० ॥ च्छ्वसोरेद्धावभ्यासलोपश्च । च्छ्वसोरेद्धावभ्यासलोपश्चेत्यन्त्यस्य प्राप्नोति । अनर्थकेऽलोऽन्त्यविधिर्नेति न दोषो भवति । एतदपि नास्ति प्रयोजनम् । पुनर्ल्लोपवचनसामर्थ्यात्सर्वस्य भविष्यति । अथवा शित्लोपः करिष्यते स शित्सर्वस्येतिसर्वादेशो भविष्यति । स तर्हि शकारः कर्त्तव्यः । न कर्तव्यः ॥

॥ कै० ॥ रेद्धावभ्यासस्यचेतिवक्तव्यं तत्र व्याख्यानादभ्यासस्य लोप एव भविष्यति नत्वेत्त्वं योगविभागो वा करिष्यते च्छ्वसोरेद्धौ । ततोऽभ्यासस्येति तत्र च लोपोऽनुवर्तिष्यते तत्र पुनर्ल्लोपवचनात् सर्वापहारार्थादलोऽन्त्यस्येतिबाध्यते ॥

॥ वि० ॥ लोपसंनिहितत्वादितिभावः । नन्वभ्यासपदोत्तरश्चकारः स्थान्यन्तरमेव समुच्चिनुयाद् न विधेयान्तरमिति एत्त्वमभ्यासस्यापि स्यादतः परिहारान्तरमाह । योगविभागो वेति । तत्रेति । नत्वेत्त्वमित्यर्थः । योगविभागसामर्थ्यादितिभावः । सर्वापहारेति । लोप एव नावशेषः कस्यचिदित्यर्थादितिभावः ॥

७३४

॥ वि० ॥ ननु लोपशब्दस्य संज्ञात्वेनाऽनर्थकत्वात्सुरेव न स्याद् उत्पत्तौ वा हल्ङ्यादिलोपाद् द्विशकारक इत्यनुपपन्नमत आह । लोपशब्दादिति । पदस्य संयोगान्तत्वाभावादसंदेहाय च झलां जशित्यत्र जश्त्ववत् संयोगान्तलोपसंयोगादिलोपौ नेतिबोध्यम् । इत्संज्ञेति । धातुप्रातिपदिकप्रत्ययनिपातागमादेशानां हलन्त्यमितीत्संज्ञायामपि न दोषः । अस्य स्वरूपेणार्थवत्तया प्रातिपदिकत्वात् कुण्डिनच इव । उपदेश इति तु तत्र नानुवर्त्तते

॥ कै० ॥ द्विशकारको निर्देश इति । लोपशब्दात् कृदन्तात्संज्ञिनार्थेनार्थवत्त्वाद्विभक्तौ कृतायां शकारः प्रतिनिर्दिश्यते तस्य चेत्संज्ञायां सत्यां सर्वादेशो लोपो भवति इत्संज्ञोपदेश एव प्रवर्तते तत्कार्य्यं तु प्रयोग इत्येष सिद्धान्तः । तिष्ठति

॥ भा० ॥ क्रियते न्यास एव । द्विशकारको निर्देशः । घ्वसोरेद्धावभ्यासलोपश्चेति ।
आपि लोपोऽकोऽनचि । तिष्ठति सूत्रम् अन्यथा व्याख्यायते । आपि हलि लोप इत्यन्त्यस्य
प्राप्नोति । अनर्थकेऽलोन्त्यविधिर्नेति न दोषो भवति ॥

॥ कै० ॥ सूत्रमिति । लक्ष्यलक्षणभावस्याविवक्षितत्वात्तिष्ठत् सूत्रमिति न कृतम् । तत्रायमर्थस्तिष्ठति सूत्रं न प्रत्याख्यायते तत्तु अन्यथा व्याख्यायते । तत्रानचीत्यनेन हलीत्यस्यार्थो व्याख्यातः । आप्यक इत्यनुवृत्तिर्दर्शिता ॥

॥ वि० ॥ इति तत्र भाष्ये स्पष्टम् । उपदेश एवेति । अन्तरङ्गत्वादितिभावः । एतेन लोपविधानकाले शित्त्वाभावात्कथं सर्वादेश इत्यपास्तम् । कार्यन्त्विति अनेकाल्शिदित्यादौ समीपेऽप्यवयवत्वारोपेण न दोष इतिभावः । एकान्ता अनुबन्धा इति मुख्यपक्षे तु आद्यमेव समाधानमितिबोध्यम् । भाष्येऽन्यथा व्याख्यायत । इति । न तु तत्प्रत्याख्याय तत्स्थाने वचनान्तरं पठितमितिभ्रमितव्यमितिभावः । इत्यन्त्यस्येति । एवञ्च तेन दलोपे आभ्यामित्यसिद्धिरितिभावः ॥

७३५

॥ वि० ॥ ननु म्स्थानिकत्वदाद्यत्वेन व्यवधानान्नाऽनो हलादिविभक्तिपरतेत्यत आह । येननेति । आप्परत्वेनेदमो विशेषणाच्चेत्यपि बोध्यम् । इदमिदो लोप इत्यर्थेऽप्यावश्यकम् । एवञ्च नलोपे द्वयोरकारयोः पररूपे

॥ कै० ॥ अन एवेति । अनाप्यक इति सामान्येनाऽनादेशं विधाय हलादौ तु तस्यैव लोपो विधीयत इत्यर्थः । येननाव्यव-

॥ भा० ॥ एतदपि नास्ति प्रयोजनम् । अन एव लोपं वक्ष्यामि । तदनो ग्रहणं कर्त्तव्यम् । न कर्त्तव्यम् ।
प्रकृतमनुवर्तते । क्व प्रकृतम् । अनाप्यक इति । तच्च प्रथमानिर्दिष्टं षष्ठीनिर्दिष्टेन चेहार्थः । हलीत्येषा
सप्तमी अनिति प्रथमायाः षष्ठीं प्रकल्पयिष्यति । तस्मिन्नितिनिर्दिष्टे पूर्वस्येति । अत्र लोपोऽभ्यासस्य ।
अन्त्यस्य प्राप्नोति । नानर्थके अलोऽन्त्यविधिरिति न दोषो भवति । एतदपि नास्ति प्रयोजनम् । अत्रग्रहण-
सामर्थ्यात्सर्वस्य भविष्यति । अस्त्यन्यदत्रग्रहणस्य प्रयोजनम् । किम् । सन्नधिकारोऽपेक्ष्यते । इह माभूत् । दधौ
ददौ । अन्तरेणाप्यत्र ग्रहणं सन्नधिकारमपेक्षिष्यामहे । संस्तर्हि सकारादिरपेक्ष्यते सनि सकारादाविति । इह
माभूत् । जिज्ञपयिषतीति । अन्तरेणाप्यत्रग्रहणं सनं सकारादिमपेक्षिष्यामहे । प्रकृतयस्तर्ह्यपेक्ष्यन्ते एतासां प्रकृ-
तीनां लोपो यथा स्यात् । इह माभूत् । पिपक्षति यियक्षति । अन्तरेणाप्यत्रग्रहणमेताः प्रकृतीरपेक्षिष्यामहे ॥

॥ कै० ॥ धानमितित्यदाद्यत्वेन व्यवधानमाश्रीयते । अत्रग्रहणसामर्थ्यादिति । मीमादीनामधिकारादेव सिद्धेरत्रग्रहणादयमर्थ आश्रीयते योऽभ्यासत्वेन निर्ज्ञातस्तस्य समग्रस्य लोपो नत्वलोऽन्त्यस्येति ॥

॥ वि० ॥ सुपिचेतिदीर्घे सिद्धमाभ्यामिति । अत्रग्रहणादिति । अत्रशब्देन पुनः सनः परामर्शात्सनि योऽभ्यासत्वाक्रान्तस्तस्य सर्वस्य लोप इत्यर्थ इति भावः ॥

॥ वि॰ ॥ भाष्ये विषयमपेक्षिष्यामह इति । यत्र मुचोऽकर्मकस्य गुणस्तत्राऽभ्यासस्य लोप इत्यर्थः । अकर्मकग्रहणमात्रानुवृत्तौ तु मुमुचते वत्सः स्वयमेवेत्यत्राऽपि स्यादितिभावः । विभाषा भवदितिवार्तिकेऽपि वक्ष्येत्येव सिद्धेऽवक्ष्येत्युच्चारणसामर्थ्यादलोऽन्त्यस्येति न प्रवर्तते इति प्रत्या-

॥ कै॰ ॥ यथाजातीयकोऽन्त्य इति । एतच्च ब्रुवता पञ्चमीपक्ष एवाश्रितः । षष्ठीप्रथमयोरपि न दोषः । षष्ठीपक्षे निर्द्धारणे षष्ठी निर्द्धारणं च तुल्यजातीयस्य भवतीति अलां मध्ये योऽन्त्योऽल् तस्मात्पूर्व उपधासंज्ञ इत्यलेवोक्तान्न्यायात्प्रती-

॥ भा॰ ॥ विषयस्तर्ह्यपेक्ष्यते । मुचोऽकर्मकस्य गुणो वेति । इह माभूत् । मुमुक्षति गामिति । अन्तरेणा-प्यत्रग्रहणमेतं विषयमपेक्षिष्यामहे । कथम् । अकर्मकस्येत्युच्यते तत्र यत्रैवायं मुचिरकर्मकस्तत्रैव भविष्यति । तस्मान्नार्थोऽनया परिभाषया नानर्थकेऽलोऽन्त्यविधिरिति । अलोऽन्त्यात् पूर्वोऽलुपधेतिवा । अथवा व्यक्तमेव पठितव्यम् । अलोऽन्त्यात्पूर्वोऽलुपधासंज्ञो भवतीति । तत्तर्हि वक्तव्यम् । न वक्तव्यम् । अवचनाल्लोकविज्ञा-नात् सिद्धम् । अन्तरेणापि वचनं लोक विज्ञानात् सिद्धमेतत् । तद्यथा । लोके अमीषां ब्राह्मणानामन्त्यात्पर्व आनीयतामित्युक्ते यथाजातीयकोऽन्त्यस्तथाजातीयकोऽन्त्यात्पूर्व आनीयते ॥ ❀ ॥

॥ कै॰ ॥ यते । प्रथमाबहुवचनपक्षेऽप्ययमर्थः । अन्त्यात्पूर्वोऽलुपधासंज्ञ इति । अल इति जातौ बहुवचनम् । अवधि-मत्तुल्यजातीयश्चाऽवधिरिति अलोऽन्त्यादितिविज्ञायते ॥ ❀ ॥

॥ वि॰ ॥ ख्याता परिभाषा । एवञ्च अन्त्यविज्ञानात्सिद्धमित्यस्य स्थितत्वाद्वार्तिके वाशब्दप्रयोगस्तदाह । अथवा व्यक्तमेवेति । एतच्चेति । अवधिनाऽवधिमतो निर्णयं ब्रुवतेत्यर्थः । संयोगोपधेत्यादिव्यवहारास्तु गौणा इतिभावः । षष्ठीप्रथमयोरपीति । दृष्टान्तेऽमीषां ब्रह्मणानामित्युपाददता भगवता सूचितमिदम् । उक्तान्न्यायादिति । भाष्योक्तादित्यर्थः । जातौ बहुवचनमिति । भाष्यकृता जात्याख्यायामितिसूत्रप्रत्याख्यानादिदं चिन्त्यम् ॥ ❀ ॥



॥ वि॰ ॥ तस्मिन्निति । स्वरूपपदार्थकत्वेनेति । स्वरूपस्य तत्र विशेष्यत्वादितिभावः । प्रश्न इति । तस्मिन्नणिचेत्यत्रैवोतान्यत्रापीतिप्रश्न इतिभावः । तत्रैव पूर्वेति । ननु तस्मान्नुडचि तस्मान्नुड् द्विहलस्तस्माच्छस इतिसूत्रत्रये उत्तरग्रहणे विपरीतं गौरवमिति चेन्न । यतो द्विहलो नुड्विधायके नास्योपयोगः । तत्राङ्गाधिकारेण लिण्निमित्ताङ्गसम्बन्धिदीर्घात्पूर्वस्य प्रत्यासत्त्या तदङ्गसम्बन्धिनोऽसम्भवेन फलाभावात् । एवं तस्मान्नुडचीत्यत्रापि न

॥ कै॰ ॥ तस्मिन्निति । किमुदाहरणमिति । इतिकरणस्य गौरित्ययमाहेत्यादौ स्वरूपपदार्थकत्वेन व्यवस्थापकत्वदर्शना-त्प्रश्नः । दध्यत्रेति । यदि तस्मिन्नणिचेति तस्माच्छस इतिचात्रैवैते परिभाषे उपास्थास्येतां तदा तत्रैव पूर्वग्रहणमुत्तरग्रहणञ्चा-करिष्येतामितिभावः । अत्र व्यवच्छेद्यमस्ति यौष्माकीण अस्मभ्यं देहि अस्माकीन युष्मभ्यं दीयतामितिखञः परयोर्युष्मदस्मदोरा-

॥ भा॰ ॥ तस्मिन्नितिनिर्द्दिष्टे पूर्वस्य । तस्मादित्युत्तरस्य । किमुदाहरणम् । इह तावत् तस्मिन्नितिनिर्द्दिष्टे पूर्वस्येति इको यणचि । दध्यत्र । मध्वत्र । इह तस्मादित्युत्तरस्येति द्व्यन्तरुपसर्गेभ्योऽप ईत् । द्वीपम् अन्तरीपं समीपम् ॥

॥ कै॰ ॥ दंशौ न भवतः । इचानित्यत्र च पूर्वसवर्णदीर्घभूताच्छसः पूर्वस्य षकारस्य नत्वन्न भवति । अथ शस इतिस्थानष-ष्ठीति व्याख्यानात् षकारस्य न भवतीत्युच्यते एवमप्युच्चरत आनुपलभत इत्यादौ पूर्वसवर्णदीर्घात्पूर्वस्य शसो नत्वं व्यवच्छेद्यमेव ॥

॥ वि॰ ॥ दोषः । उत्तरपदाधिकारेण प्रत्यासत्त्या नञ्रूपपूर्वपदनिरूपितोत्तरपदस्यैव तेन नुड्विधानादितिभावः । तस्मिन्निति । परामृष्टखञव्यवधानाय सम्बुद्ध्यन्तमुदाहरति । यौष्माकीणेति । षकारस्येति । तस्मादित्येतत्साहचर्याच्छस इति पञ्चमी शसा च सामानाधिकरण्यं शसवयवे लक्षणयैवेतिभावः । मुख्यार्थे सामानाधिकरण्याऽसम्भवात् स्थान्याकाङ्क्षासत्त्वाच्च अवयवषष्ठीत्याशङ्कते । अथेति । शस इति स्थानषष्ठीत्यपाठ इतिषष्ठीत्येव पाठः । आनित्यशब्दस्य शसिरूपम् ॥

॥ वि० ॥ इतिकरणादिति । लोकेऽर्थप्रधानस्य पदार्थविपर्यासकेतिना शब्दप्रधानत्वदर्शनादितिभाव: । नन्वेकार्थप्रत्ययद्वयोपादानं व्यर्थमत आह । थालेति । एवञ्च शब्देनेत्यनेन सामानाधिकरण्यानुपपत्तिर्जातीयस्तु तद्वति स्वभावादिति भाव: । नन्वेवञ्जातीय एव प्रयुज्यतां किं थालेत्यत आह । लौकिके इति । उभयो: प्रकारवद्वत्तित्वेऽप्येवं वक्तुं शक्यमिति उक्तयत्नो वृथा । अत एव कस्य प्रयोग इतिचिन्त्यम् । ननु दूषितस्यैव कथमुदाहरणत्वेन

॥ कै० ॥ अन्यथाजातीयकेनेति । इतिकरणात्स्वरूपग्रहणेनैव भाव्यमिति भाव: । थाला प्रकारमात्रमभिधीयते इति तद्वतोऽभिधानाय जातीयर्प्रत्यय: कृत: । लौकिके प्रयोगे लाघवानादरप्रदर्शनाय प्रत्ययद्वयप्रयोग: । केवलेनापि जातीयरा प्रकारवान् गम्यत एव । इदञ्चाऽपीतिसि-

॥ भा० ॥ अन्यथाजातीयकेन शब्देन निर्द्देश: क्रियते अन्यथाजातीयक उदाह्रियते । किन्तर्ह्युदाहरणम् । इह तावत् तस्मिन्नितिनिर्द्दिष्टे पूर्वस्येति तस्मिन्नणिच युष्माकास्माकाविति तस्मादित्युत्तरस्येति तस्माच्छसो न: पुंसीति । इदञ्चाप्युदाहरणम् । इको यणचि ह्यन्तरुपसर्गेऽभ्योप ईदिति । कथम् । सर्व्वनाम्नाऽयं निर्द्देश: क्रियते ॥

॥ कै० ॥ द्धान्तवादी । इतिकरणोऽत्रार्थनिर्द्देशार्थ एव स्वं रूपमितिवचनात्स्वरूपग्रहणे प्राप्ते । सर्वनाम्नाऽयमिति । सूत्रान्तरोपात्तस्य तस्मिन्नित्यस्य तस्मादित्यस्य च नैतदनुकरणं किं तर्हि सर्वनाम्ना निर्द्देश इत्यर्थ: । एतेन यत्र सप्तम्यर्थनिर्द्देश: पञ्चम्यर्थनिर्द्देशश्च तत्रोभयोरुपस्थानम् ॥

॥ वि० ॥ दानमत आह । सिद्धान्तेति । अर्थनिर्द्देशार्थ एवेति । अन्यथा तस्मिन्निति शब्देऽव्यवहिते इत्यर्थ: स्यादितिभाव: । नैतदनुकरणमिति । प्रागुक्तयुक्तेरितिभाव: । सर्वनाम्नेति । सप्तम्यन्तार्थकसर्वनाम्नेत्यर्थ: । सप्तमी त्वस्य सप्तम्यन्तार्थकत्वबोधनायानुवादिकेति भाव: । इतिशब्दलभ्यमर्थमाह । यत्र सप्तम्यर्थेति । सप्तम्यर्थबोध इत्याद्यर्थ: । अत एव तस्मान्नुडचीत्यादौ न प्रवृत्ति: । अचीत्यस्य षष्ठ्यर्थत्वादितिभाव: । सप्तमीपञ्चम्यर्थावधिकरणावधी । अयं पदोपस्थितिपक्षेऽर्थो दर्शित: पक्षान्तरेऽपि सप्तम्यन्तार्थेऽव्यवहिते सतीत्यर्थो बोध्य: ॥



॥ वि० ॥ भाष्ये सामान्यवाचीति । बुद्धिस्थत्वेनैव तदादीनां बोधकतेतिभाव: । सामान्यमनिर्द्धारितविशेषम् । तस्मिन्नणिचेत्यादेरपि सप्तमीपञ्चमीविशेषत्वादित्याशय: । सामान्यस्य । उक्तबुद्धिस्थत्वस्य । सर्वविशेषेषु भावात् । सत्त्वादित्यर्थ: । उक्तमर्थमजानानस्य चोद्यमित्यभिप्रायेणाह । सामान्येति । तस्मिन्नितीत्यस्य तस्मिन्नणिचेत्यादि: कथं विशेषस्तस्यापि खञादिनिरूपितसामान्यत्वादिति अचि इत्यस्याप्यकाराद्यपेक्षया सामान्यत्वादिति च प्रश्न इत्यपि बोध्यम् । ननु कथमनवस्थिति: पूर्वावगतं सामान्यं पश्चादवगतो विशेष इतिव्यवस्थासम्भवादाह । कदाचिदिति । परिच्छेद्यपरिच्छेदकभावोऽनियत

॥ कै० ॥ विशेषा अपीति । अपि: सम्भावनायां न समुच्चये न हि विशेषपरित्यागेनेह शास्त्रे सामान्यमस्ति यदुदाहरणं स्यात् तस्मात्सर्वे विशेषा इहोदाहरणमित्यर्थ: । सामान्यस्य सर्वविशेषेषु भावात् । किं पुनरिति । सामान्यविशेषभावस्याऽनव-

॥ भा० ॥ सर्व्वनाम च सामान्यवाची तत्र सामान्ये निर्द्दिष्टे विशेषा अप्युदाहरणानि भवन्ति । किं पुन: सामान्यं को विशेष: । गौ: सामान्यं कृष्णो विशेष: । न तर्हीदानीं कृष्ण: सामान्यं गौर्विशेषो भवति । भवति च । यदि तर्हि सामान्यमपि विशेषो विशेषोऽपि सामान्यं सामान्यविशेषौ न प्रकल्पेते । प्रकल्पेते च । कथम् । विवक्षात: । यदाऽस्य गौ: सामान्येन विवक्षितो भवति कृष्णो विशेषत्वेन तदा गौ: सामान्यं कृष्णो विशेष: ॥

॥ कै० ॥ स्थानात्प्रश्न: । कदाचिद्दूराद्गोत्वमात्रग्रहणं पश्चात् कृष्णादिविशेषाऽवगम: कदाचित्तु पूर्वं कृष्णादेर्ग्रहणं पश्चाद्गोत्वादे: । गौ: सामान्यमिति । यद्विशेष्यं प्रधानं तत्सामान्यम् । यत्तु विशेषणत्वेन परोपकारितया निर्द्दिश्यते स विशेष इतितात्पर्य्यम् । इहापि तस्मिन्नित्यनेन सप्तम्यर्थसामान्यं निर्द्दिष्टमचिहलीत्यादयस्तु विशेषा: ॥

॥ वि० ॥ इत्यर्थ: । एवं प्रकृतेऽप्यचीत्यादीनां बुद्धिस्थत्वेन परिच्छेदाद् बुद्धिस्थस्यापि तै: परिच्छेदादनिर्णय इतिभाव: । विशेष्यं प्रधानमिति । परिच्छेद्यमित्यर्थ: । परोपकारितया । परिच्छेदकत्वेन । एवं प्रकृतेऽपि तस्मिन्नित्यर्थस्य परिच्छेद्यत्वेन विवक्षणात्सामान्यत्वमचीत्यादीनां परिच्छेदकत्वविवक्षणाद्विशेषत्वमितिभावस्तदाह । इहापीति । अयं भाव: । सप्तम्यन्तार्थे इत्युक्ते कस्मिन्नित्याकाङ्क्षोदयादचीत्याद्यर्थस्य परिच्छेदकत्वाद्विशेषत्वमेवेति ॥

॥ वि० ॥ तदेवं पर्यायेण सामान्यविशेषभावमुपपाद्य द्वितीयविधया कृतं प्रश्नं समाधातुं यौगपद्येनापि तमुपपादयितुमाह । भाष्ये पितेत्यादि । यथा पराशरात्मजं वन्दे शुकतातं तपोनिधिमित्यत्र तथा राजपुरुषाश्च इत्यत्र पुरुषो राजापेक्षया विशेष्यः । अश्वापेक्षया विशेषणम् । एवं प्रकृते खञ्जादिनिरूपितसामान्यस्यापि तस्मिन्नणि चेत्यस्य तस्मिन्नित्येतत्प्रति विशेषत्वमितिभावः । इत्याहेति । इत्यत आहेत्यर्थः । निर्देशप्रयोजनानामिति । बोधप्रयोजनकानां शब्दानां मध्ये इत्यर्थः । द्विवचनविभज्योपपदत्वाभावादाह । भाष्यकारेति । परेतु नैर्देशिकानां मध्येऽन्येभ्यः शब्देभ्य इत्यध्याहृत्य विभज्योपपदे तरप् । अत

॥ कै० ॥ पितापुत्रवदिति । जन्यजनकशक्तिद्वययोगवदेकस्यैव विशेषणविशेष्यशक्तिद्वययोगात्कदाचित्काचिच्छक्तिराश्रीयते । सप्तमीनिर्दिष्टे पूर्वस्येत्येव कस्मान्नोच्यते इत्याह । एते खल्वपीति । नैर्देशिकानां निर्देशप्रयोजनानां मध्ये वार्त्ततरका युक्तत-

॥ भा० ॥ यदाऽस्य कृष्णः सामान्येन विवक्षितो भवति गौर्विशेषत्वेन तदा कृष्णः सामान्यम् । अपर आह । प्रकल्प्येते च । कथम् । पितापुत्रवत् । तद्यथा । स एव कञ्चित्प्रति पिता भवति कञ्चित्प्रति पुत्रो भवति । एवमिहापि स एव कञ्चित्प्रति सामान्यं कञ्चित्प्रति विशेषः । एते खल्वपि नैर्देशिकानां वार्त्ततरका भवन्ति ये सर्वनाम्ना निर्देशाः क्रियन्ते । एतैर्हि बहुतरकं व्याप्यते । अथ किमर्थमुपसर्गनिर्देशः क्रियते ॥

॥ कै० ॥ रका इत्यर्थः । भाष्यकारवचनप्रामाण्यादत्र तरप्प्रत्ययः । तमपा ह्यत्र भाव्यम् । एतैर्हीति । यदि हि सप्तमीनिर्दिष्ट इत्युच्यते तदा सप्तमीशब्देन यो निर्दिष्ट इतिप्रतीयेतेतिभावः । किमर्थमिति । किमर्थमुपसर्गयुक्तस्य धातोर्निर्देशः क्रियते तस्मिन्निति पूर्वस्येतिकस्मान्नोच्यत इतिभावः । न पुनर्दिष्ट इत्येवोच्यतामिति प्रश्नः केवलस्य दिशेर्दानार्थत्वादिहानुपयोगात् ॥

॥ वि० ॥ एव न खल्वपि बहूनां प्रकर्षे तरपा भवितव्यमितितत्सूत्रस्थभाष्येणाविरोध इत्याहुः । सप्तमीशब्देनेति । तथाच सप्तम्यां जनेर्ड इत्यादावेवेदमुपतिष्ठेतेतिभावः । किञ्च यत्र सप्तम्यन्तनिर्देश इत्यर्थे नेड्वशि कृतीत्यादौ दोषः । तत्र कृतीतिसप्तमीनिर्देशसत्त्वात् परन्तु षष्ठ्यर्थे स इतिभावः । सप्तमीनिर्दिष्ट इतिसूचकरणेऽपि तदर्थं थ्यादिनिर्देश इत्यर्थे स एव दोषः । यथाश्रुतमेव कस्मान्न गृह्यत इत्यत आह । न पुनरिति । अत एव किमर्थमुपसर्गनिर्देशो न दिष्ट इत्येवोच्येतेतिनोक्तम् ॥



॥ वि० ॥ अन्तरेणापीति । साकाङ्क्षतयोच्चारिते इति पदाध्याहारादितिभावः । पुनर्निर्दिष्टेति । एवञ्च सप्तम्यन्तार्थे बहिर्भूते उपश्लिष्टस्य पूर्वस्येत्यर्थः । बहिर्भावस्य चावध्यपेक्षत्वादवधेश्च सूत्रोपात्तस्यैव ग्रहीतुमुचितत्वेन तस्य च शब्दात्मकत्वादवधिमानपि शब्द एवेति शब्दे सप्तमीनिर्दिष्टे पूर्वस्येति लभ्यते इतिभावः । ननु प्रत्ययस्यार्थेन पौर्वापर्यासम्भवात् कथं जनपदे इत्यत्रास्योपस्थानमत आह । तत्रायमर्थः स्यादिति । लक्षणा स्यादि-

॥ कै० ॥ शब्द इति । अन्तरेणाऽपि निर्दिष्टग्रहणं तस्मिन्निति पूर्वस्येत्येव निर्दिष्टत्वे लब्धे पुनर्निर्दिष्टशब्द उपादीयमानो बहिर्भावं गमयति शब्दाच्च बहिर्भूतः शब्द एव भवतीति । जनपद इति । तत्रायमर्थः स्याद् जनपदवाचिनि शब्दे परतश्चातुर-

॥ भा० ॥ शब्दे सप्तम्या निर्दिष्टे पूर्वस्य कार्यं यथा स्यात् अर्थे माभूत् । जनपदे अतिशायन इति । किं गतमेतदुपसर्गेण आहोस्विच्छब्दाधिक्यादर्थाधिक्यम् । गतमित्याह । कथम् । निरयं बहिर्भावे वर्तते । तद्यथा । निष्क्रान्तो देशाद् निर्देशो बहिर्देश इति गम्यते । शब्दश्च शब्दाद्बहिर्भूतः । अर्थोऽबहिर्भूतः । अथ निर्दिष्टग्रहणं किमर्थम् ॥

॥ कै० ॥ र्थिकस्य लुब् भवतीति । अथेति । ननु प्रयोजनस्योक्तत्वात् पुनः प्रश्नानुपपत्तिः । अयं भावः । जनपदे लुबित्यत्रार्थेन पौर्वापर्याभावाज्जनपदे यः प्रत्यय उत्पन्नस्तस्य लुब् इति तथातिशायने वर्तमानास्तमबादय इत्यर्थनिर्देशेषूपस्थानं न भविष्यति । यदिचैतत्प्रयोजनं तदा तस्मिन्नितिशब्दे पूर्वस्येति वक्तव्यम् ॥

॥ वि० ॥ तिभावः । अर्थेन पौर्वेति । तद्वाचकशब्दलक्षणायाश्च न मानमितिभावः । अत्रार्थनिर्देशे च व्याख्यानमेव शरणम् । एवञ्चाथकिमर्थमित्यादिपूर्वपक्षसिद्धान्तावेकदेशिनोरितिबोध्यम् । किञ्चार्थनिर्देशे जनपदे यः प्रत्यय इत्यन्वयेऽनियमप्रसङ्गाभावान्नियमफलाय परिभाषा नोपतिष्ठते इत्यपि बोध्यम् ॥

॥ वि० ॥ भाष्ये आनन्तर्य्यमात्रे इति । ननु व्यवधाने इत्यर्थः । ननु संहितायामिति । निमित्तस्थानिनोरन्येनाव्यवधानं संहितेतिभावः । उपश्लिष्ट इति । उप समीपे श्लिष्टोऽत्यन्तसमीप इति हि तदर्थः । नैष दोष इति । वर्णशून्यकालाभावः संहितेतिभावः । सत्सप्तमीति । औपश्लेषिकाधिकरणत्वस्य व्यवहिते वाधात् सत्ता तु व्यवहितेऽपीतिभावः । एवञ्च निर्दिष्टग्रहणमौपश्लेषिकाधिकरणसप्तम्यां तात्पर्यग्राहकमिति तात्पर्यम् । वस्तुत

॥ कै० ॥ निर्दिष्टग्रहणमिति । पूर्वोक्तप्रयोजनाभावादितिभावः । निः शब्दश्च नैरन्तर्ये वर्तते दिशिश्चोच्चारणक्रियः । तेन निरन्तरोच्चारिते कार्य्यं लभ्यते । समिधाविति । ननु संहितायामित्युच्यते नच व्यवहितयोः संहिताऽस्ति अचीतिचाधिकरणमौपश्लेषिकं निर्दिष्टं न च व्यवहितमुपश्लिष्टं

॥ भा० ॥ निर्दिष्टग्रहणमानन्तर्यार्थम् । निर्दिष्टग्रहणं क्रियते । आनन्तर्यार्थम् । आनन्तर्यमात्रे कार्यं यथा स्यात् । इको यणचि । दध्यत्र । मध्वत्र । इह माभूत् । समिधौ समिधः । दृषदौ दृषदः । किमर्थं पुनरिदमुच्यते ॥

॥ कै० ॥ भवति । नैष दोषः । वर्णानां परः संनिकर्षः संहिता सा चात्रास्ति अचीति सत्सप्तमी विज्ञायते व्यवहितेऽपि पूर्वशब्दो वर्त्तते इति यत्र विषये यथाभूत इक् सम्भवति अनन्तरो व्यवहितो वा तथाभूतस्यैव यणादेशः स्यात् । किमर्थमिति । किं नियमार्थमथ षष्ठीप्रकॢप्त्यर्थमिति प्रश्नः ॥

॥ वि० ॥ उपश्लेषोऽप्यल्पव्यवहितेऽस्त्येव । किञ्चिद्दूरस्थितेऽपि वृक्षमूले तिष्ठतीति कटव्यवधानेऽपि भूमौ शेत इति च व्यवहारात् । ननु व्यवहिते इकोऽचः पूर्वत्वाभावेनाप्राप्तेर्निर्दिष्टग्रहणं व्यर्थमत आह । व्यवहितेऽपीति । मथुरायाः पूर्वं पाटलिपुत्रमित्यादिव्यवहारादितिभावः । यत्र विषय इति । लक्ष्यभेदेन लक्षणभेद इतिभावः । वस्तुतः संहिताधिकारो न कर्त्तव्य इत्यभिप्रायकमिदं भाष्यं संहिताधिकारप्रत्याख्यानं च तत्सूत्रे भाष्ये स्पष्टम् । किमुदाहरणमित्यादिना सूत्रप्रयोजनस्योक्तत्वात्प्रश्नानुपपत्तिरत आह । किं नियमार्थमित्यादि ॥



॥ वि० ॥ ननु पूर्वोत्तरयोर्योगयोरितिभाष्यदर्शनेन पूर्वोत्तरयोरित्यस्य योगसमानाधिकरणत्वात्सापेक्षस्यासमर्थत्वेन योगाविशेष इति समासो न स्यादत आह । कर्मणि षष्ठीति । क्रियायाः कारकांशे नित्यसापेक्षत्वेनाविरुद्धः समास इतिभावः । पूर्वोत्तरयोर्योगयोरिति तु फलितार्थकथनम् । अच्युपश्लिष्टस्येति । औपश्लेषिकेऽधिकरणे सप्तमीतिभावः । आद्यसूत्रोदाहरणं दध्युदेति द्वितीयसूत्रोदाहरणं पचत्योदेति । ननु

॥ कै० ॥ पूर्वोत्तरयोरिति । कर्म्मणि षष्ठी योगः सम्बन्धः । तदयमर्थः । अच्युपश्लिष्टस्येको यणा भाव्यम् । यथा च परस्मिन् पूर्व उपश्लिष्ट एवं पूर्वस्मिन्नपि परः । तिङ्ङतिङ इत्यत्रापि यथा तिङन्तात्परं तिङन्तं भवत्येवं पूर्वमपि तत्र षष्ठीप्र-

॥ भा० ॥ तस्मिन् तस्मादिति पूर्वोत्तरयोर्योगाविशेषान्नियमार्थं वचनं दध्युदकं पचत्योदनम् । तस्मिं-स्तस्मादिति पूर्वोत्तरयोर्योगयोरविशेषान्नियमार्थोऽयमारम्भः । ग्रामे देवदत्तः पूर्वः पर इतिसन्देहः । ग्रमाद्देवदत्तः पूर्वः पर इतिसन्देहः । एवमिहापि दध्युदकं पचत्योदनम् । उभाविको उभावचौ ॥

॥ कै० ॥ कॢप्तिपक्षे षष्ठ्यनुवर्त्तयितव्येति गौरवप्रसङ्गान्नियमार्थमित्युक्तम् । योगयोरिति । युज्येते इतियोगौ कर्म्मणि घञ् । अचीतिसत्सप्तमीपक्षेऽप्यनियमप्रसङ्गः ॥

॥ वि० ॥ नियमपक्षात् षष्ठीप्रकॢप्तिपक्षः प्रशस्तोऽनुवाददोषाभावादत आह । तत्र षष्ठीति । भाष्ये योगयोरितिद्विवचनोपपत्तये आह । कर्म्मणीति । युज्यमानयोः पूर्वपरयोरविशेषात् सम्बन्धाविशेषादित्यर्थः । वस्तुतस्तु व्यधिकरणे षष्ठ्यौ प्रतियोगिद्वित्वेन सम्बन्धद्वित्वाच्च द्विवचननिर्देश इतिबोध्यम् । सत्सप्तमीपक्षेऽपीति । यस्य च भावेनेतिसप्तमीतिभावः ॥

॥ वि० ॥ इदं चिन्त्यमित्याहोपपदविभक्तेरिति । कारकविभक्तित्वं च कारकाधिकारपठितसंज्ञानिमित्तकविभक्तित्वम् । एतच्च तत्र च दीयत इति सूत्रे कैयटे स्पष्टम् । न तु दिग्योगेति । सप्तम्या अप्युपलक्षणमिदम् । एतच्च श्नान्नलोप इत्यत्र निरूपयिष्यामः । पर्यायस्ये-

॥ कै० ॥ अचि पूर्वस्येति । उपपदविभक्तेः कारकविभक्तिर्बलीयसीतिन्यायादधिकरणसप्तमी कृता न तु दिग्योगलक्षणा पञ्चमी तत्र दध्युदकमित्यादौ पर्यायप्रसङ्गः । न हि युगपदेकस्य स्थानित्वं निमित्तत्वञ्चोप-

॥ भा० ॥ अचि पूर्वस्य अचि परस्येतिसन्देहः । तिङ्ङतिङ इति । अतिङः पूर्वस्य अतिङः परस्येतिसन्देहः । इष्यतेचाचि पूर्वस्य स्यात् । अतिङश्च परस्येति । तच्चान्तरेण वचनं न सिध्यतीति नियमार्थं वचनम् । एवमर्थमिदमुच्यते । अस्ति प्रयोजनमेतत् । किं तर्हीति । अथ यत्रोभयं निर्दिश्यते किं तत्र पूर्वस्य कार्यं भवति आहोस्वित् परस्येति ॥

॥ कै० ॥ पश्यत इतिनियमार्थं वचनं पूर्वस्यैवाऽनन्तरस्यैव भवतीति द्वयञ्चानेन क्रियते परनिवृत्तिर्व्यवहितनिवृत्तिश्च सन्देहरूपक्रममात्रतयोपन्यस्तः । न हि सन्देहादलक्षणमितिन्यायात् पर्यायप्रसङ्गात् । अथ यत्रेति । यथा बहोर्लोप इत्यत्र युगपच्चैकस्य कार्यित्वनिमित्तत्वासम्भवात् प्रश्नः ॥

॥ वि० ॥ वापादने बीजमाह । नहि युगपदिति । स्थानित्वेन कार्यित्वेन प्राधान्यं निवर्त्यत्वं च । निमित्तत्वे च पारार्थ्येन गुणत्वं सत्त्वं च तच्चोभयमेकदा एकस्य विरुद्धमितिभावः । ननु सन्देह इति भाष्योक्त्या शास्त्रस्य मूकत्वमित्याभात्यत आह । सन्देहस्त्विति ॥



॥ वि० ॥ ननु कार्यकालत्वात्परिभाषयोः पौर्वापर्याभावात्कथं विप्रतिषेधोऽत आह । सूत्रपाठेति । अत एवाग्रे ङमो ह्रस्वादितिवैपादिकमुदाहरणं सङ्गच्छते । तत्र हि कार्यकालपक्षाश्रयेणैव परिभाषाप्रवृत्तिरिति बोध्यम् । विभक्तिविशेषनिर्देशस्यानवकाशत्वादिति । इदमुदाहरिष्यमाणोदाहरणविशेषापेक्षम् । अत एव ङः सि धुडित्यत्र द्वयोरनवकाशत्वेऽपि न क्षतिः । भाष्ये वक्ष्यति तास्यादिभ्य इति । तास्यनुदात्तेदितिसूत्रेऽभ्यस्तसिजर्थ

॥ कै० ॥ विप्रतिषेधादिति । सूत्रपाठापेक्षया परस्य व्यवस्थापकत्वमित्यर्थः । किं प्रयोजनमिति । विभक्तिविशेषनिर्देशस्यानवकाशत्वाद्वक्ष्यमाणोऽभिप्रायः । संदेह इति । संदेहाच्च पर्यायप्रसङ्गः । इष्ठेमेयःस्विति । तदाच

॥ भा० ॥ उभयनिर्देशे विप्रतिषेधात्पञ्चमीनिर्देशः । उभयनिर्देशे विप्रतिषेधात्पञ्चमीनिर्देशो भविष्यति । किं प्रयोजनम् । प्रयोजनमतोलसार्वधातुकानुदात्तत्वे । वक्ष्यति तास्यादिभ्योऽनुदात्तत्वे सप्तमीनिर्देशोऽभ्यस्तसिजर्थ इति । तस्मिन् क्रियमाणे तास्यादिभ्यः परस्य लसार्वधातुकस्य लसार्वधातुके परतस्तास्यादीनामितिसंदेहः । तास्यादिभ्यः परस्य लसार्वधातुकस्य । बहोरिष्ठादीनामादिलोपे । बहोरुत्तरेषामिष्ठेमेयसामिष्ठेमेयःसु परतो बहोरितिसंदेहः । बहोरुत्तरेषामिष्ठेमेयसाम् । गोतो णित् । गोतः परस्य सर्वनामस्थानस्य सर्वनामस्थाने परतो गोत इतिसंदेहः । गोतः परस्यसर्वनामस्थानस्य । रुदादिभ्यः सार्वधातुके । रुदादिभ्यः परस्य सार्वधातुकस्य सार्वधातुके परतो रुदादीनामितिसंदेहः । रुदादिभ्यः परस्य सार्वधातुकस्य । आनेमुगीदासः । आस उत्तरस्यानस्याने परत आस इति सन्देहः । आस उत्तरस्यानस्य ॥

॥ कै० ॥ बहुशब्दस्य लोपभूभावौ पर्यायेण स्याताम् । गोतो णिदिति । यदि गोशब्दस्य णित्त्वं स्यात्तदा तिष्ठति गौरित्यत्र वचनसामर्थ्यादनङ्गस्यापि वृद्धिः स्यात् ॥

॥ वि० ॥ इति अभ्यस्तानामादिरादिः सिच इतिसूत्रयोर्लसार्वधातुक इतिसप्तम्यन्तानुवृत्तिसिद्धये इत्यर्थः । ननु भाष्ये सर्वनामस्थानस्य गोत इति षष्ठीदर्शनात् णिदित्यनेनान्वयो न स्यादत आह । णित्त्वमिति । भावप्रधानो निर्देश इतिभावः । गोतो णित्त्वे को दोषस्तत्राह । तिष्ठतीत्यादि ॥

॥ वि० ॥ पदस्य चेकेति । व्यक्तिपचे इदम् । व्यक्तिपचेऽप्येवं विधप्रयोगसाधनायैवं व्याख्यानमितिभावः । यद्वाऽन्तशब्दस्यावयववाचित्वेनेदृश विषये जातिग्रहणासम्भव एवेत्याहुः । ङः सि धुडित्यादावुभयोरप्यनवकाशत्वादाह । पूर्वोपात्तेष्विति । वहोरितिपञ्चमी अचरितार्थाऽत एवे-ष्ठादिषु षष्ठी । अत एव भूच वहोरिति पृथग् निर्देशश्चरितार्थः । गोत इत्यादौ सर्वनामस्थाने इति सप्तमी पूर्वत्र चरितार्था गोशब्दस्य णित्त्वे वैयर्थ्यं च । तिष्ठति गौरित्यत्र गोशब्दं प्रति तिष्ठतेरनङ्गत्वान्न दोषः । रुदादिभ्यः सार्वधातुक इति लिङः सलोप इत्यादौ चरितार्थम् । तत्र हि सार्वधातुके विद्यमानस्य सस्य लोप

॥ कै० ॥ ङमो ह्रस्वादिति । ङमो ङमुडागमे सति कुर्वन्नास्ते इत्यत्र णत्वप्रसङ्गः । पदस्य चैको नकारोऽन्त्यो न तु द्वाविति णत्वनिषेधो नास्ति । विभक्तीति । पूर्वोपात्तेषु सूत्रेषु सप्तमीनिर्देशस्य क्वचित् पूर्वार्थत्वात् क्वचिदुत्तरार्थत्वात् सावकाशत्वम् । पञ्चमी तु निरव-

॥ भा० ॥ आमि सर्वनाम्नः सुट । सर्वनाम्न उत्तरस्याम आमि परतः सर्वनाम्न इति सन्देहः । सर्वनाम्न उत्तर-स्यामः । घेर्ङित्याग् नद्याः । नद्या उत्तरेषां ङितां ङित्सु परतो नद्या इति सन्देहः । नद्या उत्तरेषां ङिताम् । याडापः । आप उत्तरस्य ङितो ङिति परत आप इति सन्देहः । आप उत्तरस्य ङितः । ङमो ह्रस्वादचि ङमुण् नित्यम् । ङम उत्त-रस्याऽचोऽचि परतो ङम इतिसन्देहः । ङम उत्तरस्याचः । विभक्तिविशेषनिर्देशानवकाशत्वादविप्रतिषेधः । विभक्तिवि-शेषनिर्देशस्यानवकाशत्वादयुक्तो विप्रतिषेधः । सर्वत्रैवात्र कृतसामर्थ्या सप्तमी अकृतसामर्थ्या पञ्चमीति कृत्वा पञ्चमीनिर्दे शोभविष्यति । यथार्थं वा षष्ठीनिर्देशः । यथार्थं वा षष्ठीनिर्देशः कर्त्तव्यः । यत्र पूर्वस्य कार्यमिष्यते तत्र पूर्वस्य षष्ठी कर्त्तव्या॥

॥ कै० ॥ काशेति परस्य कार्य्यित्वं बोधयिष्यतीति भावः । यथार्थं वेति । यथाविषयमित्यर्थः । प्रदेशेषु कार्यिणः षष्ठ्येव निर्देष्टव्याः ॥

॥ वि० ॥ इत्यर्थः । आमि सर्वनाम्न इत्यामीति तेस्त्रय इत्यत्र सावकाशम् । ङम इतिसूत्रेऽचीति मयउञ इतिसूत्रे चरितार्थम् । भाष्ये पञ्चमीनिर्देशो भविष्यतीत्यस्य वलवान् स्वार्थे एव भविष्यतीत्यर्थः । सप्तमी तु षष्ठ्यर्थे इति भावः । भाष्ये एकदेशी प्रौढ्याह । यथार्थं वेति । तत्रार्थशब्दो न प्रयोजनादिवाचीत्याह । यथाविष-यमिति । प्रदेशेष्विति । प्रागुक्तेष्वित्यर्थः । भाष्ये पूर्वस्य षष्ठीति । पूर्वबोधकपदस्य षष्ठ्यन्तस्योच्चारणं कार्यमित्यर्थः । एवञ्चोभयोच्चारणे गौरवमित्येकदेश्युक्तिरियम् ॥



॥ वि० ॥ तत्र तत्र सप्तम्यन्तषष्ठ्यन्तयोर्द्वयोः पाठे गौरवं मत्वेतर एकदेशी आह । स तर्हीति । एकदेशी प्रौढ्यैवाऽऽह । न कर्त्तव्यः । अनेनैवेति । षष्ठीपदानुवृत्तिगौरवादयमेकदेशी । उभयोः प्रकल्पकत्ववारणाय परत्वानवकाशत्वे चावश्यके इति च । निर्दिष्टे पूर्वस्य षष्ठीति । पूर्वस्य कार्यित्वप्रतिपादनयोग्या षष्ठी तद्बोधकपदे भवतीत्यर्थः । एवमुत्तरस्येति । नहीति । आवृत्तिप्रसङ्गादितिभावः । इतर एकदेशी

॥ कै० ॥ प्रकल्पकमितिचेदिति । यत्र षष्ठी नास्ति तत्र तस्याः प्रक्लृप्तिः क्रियते यत्र षष्ठ्यस्ति इको यणचीत्यादौ तत्रानेन नियमो न क्रियते नहि व्यापारद्वयमुपपद्यते येन षष्ठीप्रक्लृप्तिस्तस्या नियमश्चेति भावः । इत्संज्ञेति । आदेशस्योपदेशा-

॥ भा० ॥ यच परस्य कार्यमिष्यते तत्र परस्य षष्ठी कर्त्तव्या । स तर्हि तथा निर्देशः कर्त्तव्यः । न कर्त्तव्यः । अनेनैव प्रक्लृप्तिर्भविष्यति । तस्मिन्नितिनिर्दिष्टे पूर्वस्य षष्ठी तस्मादित्युत्तरस्य षष्ठीति । तत्तर्हि षष्ठीग्रहणं कर्त्तव्यम् । न कर्त्तव्यम् । प्रकृतमनुवर्त्तते । क्व प्रकृतम् । षष्ठी स्थानेयोगेति । प्रकल्पकमिति चेन्नियमाभावः । प्रकल्पकमितिचेन्निय-मस्याभावः । उक्तश्चैतन्नियमार्थोऽयमारम्भ इति । प्रत्ययविधौ खल्वपि पञ्चम्यः प्रकल्पिकाः स्युः । तत्र को दोषः । गुप्तिज्किद्भ्यः सन् । गुप्तिज्किद्भ्य इत्येषा पञ्चमी सन्नितिप्रथमायाः षष्ठीं प्रकल्पयेत् । तस्मादित्युत्तरस्येति । अस्तु । न कश्चिदन्य आदेशः प्रतिनिर्दिश्यते । तत्राऽऽन्तर्यतः सनः सन्नेव भविष्यति । नैवं शक्यम् । इत्संज्ञा न प्रकल्पेत । उपदेश इतीत्संज्ञोच्यते । प्रकृतिविकाराऽव्यवस्था च ॥

॥ कै० ॥ भावात्तस्येत्संज्ञा न सिध्यतीत्यर्थः । स्थानी चोत्पत्तिकाल एव निवृत्त्यभिमुखतया प्रतिपन्न इति स्थानिन्यपीत्संज्ञा नास्ति ॥

॥ वि० ॥ उपदेश इति हलन्त्यमित्यत्रानुवर्त्तत इति मत्वाऽऽह । इत्संज्ञेति । तद्व्याचष्टे । उपदेशाभावादिति । स्थानेऽन्तरतमपरिभाषयाऽनुमीयमानत्वेनादेश-स्योच्चारणाभावादित्यर्थः । ननु स्थानिन्येव तस्याः प्रवृत्तेरनुमीयमानादेशो निरनुबन्धक एवेत्यत आह । स्थानी चेति । यदा धातोः प्रत्ययस्तदानीमेवादेशो भवेदिति नेत्संज्ञादि प्रतीयते । यत्र कार्यं तत्रेत्संज्ञेति प्रयोग एवेत्संज्ञेत्यभिमानः । एकदेश्युक्तित्वादत्र नात्यन्तं निर्भरः कार्य्य इति बोध्यम् ॥

॥ वि० ॥ ततश्चेति । पूर्वस्य जायमानो यणपि पूर्व एवेति तत्रापि षष्ठीकल्पनमितिभावः । विरोधाभावादिति । स्थानिभेदादित्यर्थः । अत एव विप्रतिषेधाप्रवृत्तिः । यद्यपि कार्यित्वनिमित्तत्वे युगपद्विरुद्धे तथाप्येकदेशयुक्तित्वान्नात्यन्तं निर्भरः कार्य इति बोध्यम् । एवमग्रेऽपि बोध्यम् ।

॥ कै० ॥ यणिति प्रथमाया इति । ततश्चेकः स्थाने यण् न लभ्यते इकोऽप्यन्य आदेशः स्याद्यणोऽप्यन्य इत्यभिमता स्थान्यादेशभावव्यवस्था न स्यात् । उभयकार्यप्रसङ्ग इति । विरोधाभावाद्यौगपद्येनोभयोः कार्यं प्राप्नोति । माभून्नियम इति । षष्ठीप्रक्लृप्त्यैव तत्फलस्य

॥ भा० ॥ प्रकृतिविकारयोश्च व्यवस्था न प्रकल्पते इको यणचि अचीत्येषा सप्तमी यणितिप्रथमायाः षष्ठीं प्रकल्पयेत् तस्मिन्निति निर्दिष्टे पूर्वस्येति । सप्तमीपञ्चम्योश्च भावादुभयत्र षष्ठीप्रक्लृप्तिस्तत्रोभयकार्यप्रसङ्गः । सप्तमीपञ्चम्योश्च भावादुभयत्रैव षष्ठी प्राप्नोति । तास्यादिभ्य इत्येषा पञ्चमी लसार्वधातुक इत्यस्याः सप्तम्याः षष्ठीं प्रकल्पयेत् । तस्मादित्युत्तरस्येति । तथा लसार्वधातुक इत्येषा सप्तमी तास्यादिभ्य इतिपञ्चम्याः षष्ठीं प्रकल्पयेत् तस्मिन्नितिनिर्दिष्टे पूर्वस्येति । तत्र को दोषः । तत्रोभयकार्यप्रसङ्गः । तत्र उभयोः कार्यं प्राप्नोति । नैष दोषः । यत्तावदुच्यते । प्रकल्पकमितिचेन्नियमाभाव इति । माभून्नियमः । सप्तमीनिर्दिष्टे पूर्वस्य षष्ठी प्रकल्प्यते पञ्चमीनिर्दिष्टे परस्य । यावता सप्तमीनिर्दिष्टे पूर्वस्य षष्ठी प्रकल्प्यते पञ्चमीनिर्दिष्टे परस्य नोत्सहते सप्तमीनिर्दिष्टे परस्य कार्यं भवितुं नापि पञ्चमीनिर्दिष्टे पूर्वस्य । यदप्युच्यते प्रत्ययविधौ पञ्चम्यः प्रकल्पिकाः स्युरिति । सन्तु प्रकल्पिकाः । ननुचोक्तं गुपतिज्किद्भ्यः सन्नित्येषा पञ्चमी सन्नितिप्रथमायाः षष्ठीं प्रकल्पयेत् तस्मादित्युत्तरस्येति । परिहृतमेतत् । न कश्चिदन्य आदेशः प्रतिनिर्दिश्यते तत्रान्तर्यतः सनः सन्नेव भविष्यति ॥

॥ कै० ॥ लब्धत्वादितिभावः । यत्र षष्ठी नास्ति तत्रासौ प्रकल्प्यते । यत्रत्व स्त्रीकोयणचीति तत्रापि पूर्वस्यैव षष्ठी न परस्येतिप्रकल्प्यते ॥

॥ वि० ॥ यत्र त्वस्तीति । तस्मिन्नितीत्यस्य बहुविषयत्वलाभाय विषयभेदेन भेदात् क्वचित् पूर्वस्य षष्ठीतिविधिपरं क्वचिन्नियमार्थमित्यर्थः ॥



॥ वि० ॥ सूत्र एवेति । षष्ठीप्रक्लृप्तेः प्रागेव परत्वादन्तरङ्गत्वाच्चोपदेशोत्तरकाले सूत्र एवेत्संज्ञा कार्यन्तु प्रयोग एवेतिभावः । एवञ्च निरनुबन्धस्यैव प्रत्ययेन विधानात्तदादेशस्य कृतस्यानुबन्धकतेतितात्पर्यम् । भाष्ये उपदेश इतिहीत्संज्ञोच्यते इति । एवञ्च त्वदुक्तिर्व्यर्थेतितिभावः । हलन्त्यसूत्रे उपदेशपदाऽसंबन्ध एवेतितत्सूत्रे वक्ष्यमाणपक्षेऽप्याहाथवेति । परत्वविशिष्टस्येति । अनुत्पत्तौ धातोः परस्येतिवक्तुमशक्यत्वादितिभावः । उपचयादिति । पञ्चम्या इतिशेषः । प्रवृत्त्यन्तराभावादिति । पुनः प्रवृत्तौ मानाभावादितिभावः । अपेक्षाया इति । श्रुतयोः सम्बन्धाभावे हि तस्मिन्नित्यनेन षष्ठीप्रक्लृप्त्यपेक्षा

॥ कै० ॥ कृतायामित्संज्ञायामिति । सूत्र एवोच्चारितस्य इत्संज्ञेति प्रयोगे सशब्द एव सन्नित्कार्यं लभत इत्यर्थः । अथवेति ।

॥ भा० ॥ ननुचोक्तं नैवं शक्यं इत्संज्ञा न प्रकल्पेत उपदेश इति इत्संज्ञोच्यते । स्यादेष दोषो यदीत्संज्ञा आदेशं प्रतीक्षेत । तत्र खलु कृतायामित्संज्ञायां लोपे च कृते आदेशो भविष्यति । उपदेश इतिहीत्संज्ञोच्यते । अथवा नानुत्पन्ने सनि प्रक्लृप्त्या भवितव्यं यदा चोत्पन्नः सन् तदा कृतसामर्थ्या पञ्चमीतिकृत्वा प्रक्लृप्तिर्न्न भविष्यति । यदप्युच्यते प्रकृतिविकाराव्यवस्थाचेति । अत्राऽपि प्रकृतौ षष्ठी इक इति । विकृतौ प्रथमा यणिति । यत्रच नाम सौत्री षष्ठी नास्ति तत्र प्रक्लृप्त्या भवितव्यम् । आथवाऽस्तु तावदिको यणिति यत्र नाम सौत्री षष्ठी यदिचेदानीमचीत्येषा सप्तमी यणिति प्रथमायाः षष्ठीं प्रकल्पयेत् तस्मिन्नितिनिर्दिष्टे पूर्वस्येति अस्तु । न कश्चिदन्य आदेशः प्रतिनिर्दिश्यते ॥

॥ कै० ॥ परत्वविशिष्टस्य सन उत्पादने उपचयात् प्रवृत्त्यन्तराभावान्नास्ति पञ्चम्याः प्रकल्पकत्वमित्यर्थः । प्रकृतौ षष्ठीति । इको यणचीति श्रुतयोरेव स्थान्यादेशभावोपपादनान्नास्ति षष्ठीप्रकल्पनम् । अपेक्षाया अभावादित्यर्थः ॥

॥ वि० ॥ नच प्रकृते तथा लिङ्गाच्छ्रुते र्बलीयस्त्वादित्यर्थः । भाष्येऽथवाऽस्तु तावदिति । प्रथमाषष्ठीनिर्देशसामर्थ्यात् प्रथमत इग्यणोः स्थान्यादेशभावोऽस्तु तत एतत्सूत्रवलाद्यणः स्थानित्वेऽपि न क्षतिरित्यर्थः । भाष्ये यत्र नाम सौत्री षष्ठी यदिचेदानीमिति । यत्र सौत्री षष्ठ्यस्ति तत्रापीदानीं यदि प्रकल्पयेत्तर्हि अस्तु प्रकल्पयत्वित्यर्थः । परन्त्विदं प्रौढ्या । अथवा नानुत्पन्ने सनीति प्रागुक्तन्यायाद् गाङ्कुटादिभ्य इत्यादौ षष्ठीप्रक्लृप्तावपि न दोषः । ङित्पदस्य धर्मपरत्वादितिबोध्यम् ॥

॥ वि॰ ॥ यद्यपि युगपत्प्रवृत्तिर्विरोधान्न सम्भवति तथाप्येकदेशित्वादेव ज्ञापकेन परिहरति । नोभे इत्यादिना । तथैव प्रवृत्तिरिति । अवर्णादचि अवर्णस्याचश्चैको गुणो भवतीत्यर्थ इति भावः । ननूभयोः प्रकल्पकत्वाभावेऽपि कस्य प्रकल्पकत्वमत आह । तत्र परत्वेति । ङः सि धुडित्यादौ परत्व-

॥ कै॰ ॥ यदयमिति । यद्युभयनिर्देशात्परस्परषष्ठीप्रकल्पने सति ग्रहणकवाक्याद्वाक्यान्तरमनुमीयते तास्यादिभ्यो लसार्वधातुकस्य लसार्वधातुके तास्यादीनामनुदात्तत्वं भवतीति तदाऽऽङ्गुण इत्यादावपि तथैव प्रवृत्तिर्भविष्यतीति किं पूर्वपरयोरित्यनेनेत्यर्थः । तत्र परत्वानवकाशत्वाभ्यां नियमपक्षवत् षष्ठीप्रकल्पनपक्षे व्यवस्था । दीर्घाच्छे तुग्भवतीत्यत्र षष्ठीस्थाने व्यत्ययेन पञ्चमीति व्याख्यानात् सुराच्छायेत्यादेर्वा ज्ञापकाद्दीर्घस्यैव तुग्भवति न तु छस्य ॥ ❀ ॥
स्वं रूपं श । स्वरूपस्य पर्यायाणां तद्विशेषाणां च ग्रहणे प्राप्ते नियमार्था परिभाषेयमिति केचिदाहुः । अन्ये तु

॥ भा॰ ॥ तत्राऽऽन्तर्यतो यणो यणेव भविष्यति । यदप्युच्यते सप्तमीपञ्चम्योश्च भावादुभयत्र षष्ठीप्रकॢप्तिस्तत्रोभयकार्यप्रसङ्ग इति । नैष दोषः । आचार्यप्रवृत्तिर्ज्ञापयति नोभे युगपत्प्रकल्पिके भवत इति । यदयमेकः पूर्वपरयोरिति पूर्वपरग्रहणं करोति । तस्मिन्नितिनिर्दिष्टे पूर्वस्य तस्मादित्युत्तरस्य ॥ ❀ ॥ स्वंरूपं शब्दस्याशब्दसंज्ञा ॥

॥ कै॰ ॥ लिङ्गाभावाद्विध्यन्तरशेषभावाभावाच्च नेयं परिभाषा अपि तु संज्ञासूत्रमिदमिति प्रतिपन्नाः । देवदत्तादयश्च संज्ञाशब्दा नियमार्था इति सिद्धान्तः । सर्वार्थप्रत्यायनशक्तियुक्तो हि शब्दः सर्वशब्दप्रत्याय्यशक्तियुक्त एवार्थ इतिव्यवहाराय नियमः क्रियते । रूपशब्देन चेहाग्निशब्दत्वादिकं शुकसारिकापुरुषोदीरितभिन्नशब्दव्यक्तिसमवेतं सामान्यमभिधीयते तत्र व्यक्तेः सामान्यं संज्ञा सामान्यस्य वा व्यक्तिरितिव्याख्याने कामचारः । व्यक्तिः कार्यं प्रतिपद्यमाना सामान्यप्रतिबद्धैव प्रतिपद्यते सामान्यमपि कार्यं प्रतिपद्यमानं व्यक्तिद्वारेणैव प्रतिपद्यत इतिफले न कश्चिद्भेदः ॥

॥ वि॰ ॥ मुक्तेष्वनवकाशत्वमिति भावः । ननु दीर्घादितिसूत्रे पञ्चम्या अनवकाशत्वेन परत्वेन च षष्ठीप्रकल्पनं स्यादत आह । दीर्घाच्छे इति । सुराच्छायेति पदान्ते तुको वैकल्पिकत्वाच्चिन्त्यमिदम् । तुक्सहितं पाणिनिपाठमभिप्रेत्य तु ज्ञापकोपन्यासः । युक्तश्च तथापाठः । वैकल्पिकेषु भावानुष्ठानस्य धर्माधिक्यफलकत्वात् ॥ ❀ ॥



॥ वि॰ ॥ स्वं रूपं । स्वरूपस्येति । शब्देनार्थप्रतीतावर्थे केषाञ्चित्कार्याणामसम्भवात्तद्वाचकशब्दमात्रग्रहणादितिभावः । अन्येत्विति । शब्दस्य रूपमिह ग्राह्यत्वेन विधित्सितमिति नेह प्रदेशविशेषसमर्पकं लिङ्गमस्तीतिभावः । ननु शब्दस्येत्येव लिङ्गं यत्र शब्दग्रहणं तत्र स्वरूपमेव ग्राह्यं न तु पर्यायादीत्यर्थः । तेन जनपदे अपत्यमित्यादौ नास्याप्रवृत्तिरत आह । विध्यन्तरेति । न हि स्वं रूपमित्यस्याग्नेर्ढगित्यादौ पञ्चम्यन्तेन सामानाधिकरण्येन वैयधिकरण्येन वा सम्बन्धः सम्भवतीतिभावः । भाष्यकारोऽप्याह । रूपं शब्दस्य संज्ञेतीत्ययमेव पक्षो युक्तः । ननु संज्ञापक्षे उभयगतिन्यायादेकस्यानेकार्थसम्भवाच्चार्थस्य प्रतीतौ तत्र कार्यासम्भवे ढगादयः पर्यायादिभ्योऽपि दुर्वारा इत्यत आह । देवदत्तादयश्चेति । नियमार्थत्वमुपपादयति । सर्वार्थेति । एकस्य सकलशब्दार्थात्मकस्फोटस्यैव सर्वबोधकत्वादिति भावः । शक्तियुक्त इति । शक्त्याश्रय इत्यर्थः । सर्वशब्दप्रत्याय्यशक्तिरिति । प्रत्याय्यत्वशक्तियुक्त इत्यर्थः । अनेन नियमद्वयं दर्शितम् । अनेन शब्देनायमेवार्थो ग्राह्यः । अयमर्थोऽनेनैव शब्देन बोधनीय इतिचेति । वस्तुतस्तु सर्वेषां सर्वार्थवाचकत्वेऽपि तन्नास्मदादिज्ञानविषयः । सर्वार्थसर्वशब्दानामस्माकं विशिष्याज्ञानात् किन्तु योगिनामेव तज्ज्ञानम् । एवञ्च शास्त्राधिकारिणोऽस्मदादीन्प्रति नियमार्थत्वं शास्त्रस्यासम्भव्येव । इयं कथा तु सर्वस्य ब्रह्मरूपत्वकथावन्न व्यवहारोपयोगिनी । तस्मात्प्रकरणादस्यैवार्थस्य शास्त्रे उपस्थितौ अर्थान्नियमः फलित इतिबोध्यम् । तत्र द्वितीयो नियमश्चिन्त्यः । आकारादीनां वृद्धिशब्दातिरिक्तैराकारादिशब्दैर्व्यवहारानापत्तेरिति केचित् । ननु रूपरूपिणोरत्र भेदाभावाच्छब्दस्येति षष्ठ्यनुपपन्ना संज्ञासंज्ञिसम्बन्धश्चानुपपन्न इत्यत आह । रूपेति । सामान्यलक्षणघटकानेकसमवेतत्वसिद्धये आह । शुकेति । नच तत्रोच्चारणक्रियैव भिद्यते न शब्द इतिवाच्यम् । ताल्वादिव्यापाररूपोच्चारणस्याश्रौतत्वेन शब्दश्रवणानन्तरं जायमानवक्तृविशेषानुमानानापत्तेः । उदात्तत्वादिविरुद्धधर्माध्यासाच्च भेदसिद्धेः । वर्णनिष्ठतया प्रतीयमानानां ध्वनिनिष्ठत्वकल्पने मानाभावादितिभावः । ननु प्रायेण सामानाधिकरण्यं संज्ञासंज्ञिनोर्दृष्टं नचेह तदित्यत आह । तत्रेति । स्वशब्दो व्यक्तिबोधक आत्मीयत्वेन । एवञ्च शब्दस्य तत्तज्जातिविशिष्टस्य स्वं व्यक्तिस्तद्रूपसामान्यसंज्ञकमित्याद्यः पक्षः । शब्दस्य स्वं रूपमित्युद्दिश्य स्वमित्यनेन व्यक्तिसंज्ञकत्वं विधीयते इति द्वितीयपक्षसम्भवः सामानाधिकरण्यस्यचोपपत्तिः । नचानयोः फले कश्चिद्विशेष इत्याह । व्यक्तिरिति । व्यक्तिद्वारेणेति । सामान्यस्य ढगादिभिस्साक्षात्पौर्वापर्यासम्भवादितिभावः ॥

॥ वि० ॥ रूपग्रहणं किमर्थमिति भाष्यस्य स्वशब्देनैव जातिर्ग्राह्या व्यक्तिर्वा शब्दस्य स्वं स्वीया जातिर्व्यक्तिर्वा बोध्येत्यर्थो भविष्यति । सामानाधिकरण्यमेव संज्ञासंज्ञिनोरिति तु न नियमः । उञ इत्यादौ व्यभिचारादित्याशयः । शब्दस्य सूत्रोच्चारितस्य स्वं स्वीयं रूपं प्रयोगस्थं संज्ञीत्यर्थ इति केचित् । भाष्ये रूपं शब्दस्य संज्ञेति । अत्र संज्ञाशब्दो बोध्यपरः । कर्मव्युत्पत्तेः । अन्यथा स्वशब्देनार्थबोधनाय रूपग्रहणमित्युत्तरभाष्यासंगतेः । नह्यर्थः शब्दस्य संज्ञा किन्तु बोध्य एवेति बोध्यम् । तत्रात्मीयवाचिना स्वशब्देन रूपस्यैव कथं परिग्रह इत्यत आह । प्रतीताविति । उपदेशः सम्बन्धग्रहणम् ।

॥ कै० ॥ रूपग्रहणमिति । प्रतीतावुपदेशानपेक्षत्वादन्तरङ्गत्वादहेयत्वादसाधारणत्वाच्च रूपमेव ग्रहीष्यते अर्थो हि सम्बन्धग्रहणमपेक्षते अनुकरणशब्देषु नाऽर्थः प्रतीयते साधारणश्च पर्य्यायैरपि प्रत्यायनाद् नचार्थः संज्ञा शक्यते वक्तुं संज्ञित्वे चार्थस्य सूत्रमनर्थकमिति

॥ भा० ॥ रूपग्रहणं किमर्थं न स्वं शब्दस्याशब्दसंज्ञा भवतीत्येव रूपं शब्दस्य संज्ञा भविष्यति नह्यन्यत्स्वं शब्दस्यास्त्यन्यदतो रूपात् । एवन्तर्हि सिद्धे सति यद्रूपग्रहणं करोति तज्ज्ञापयत्याचार्यः । अस्त्यन्यद्रूपात्स्वं शब्दस्येति ॥

॥ कै० ॥ प्रश्नः । एवन्तर्हीति । यत एवेह रूपग्रहणस्य व्यावर्त्त्यं नास्ति तत एव ज्ञापकं सति तु व्यावर्त्त्ये तत्रैवोपक्षयान्न ज्ञापकं स्यात् ॥

॥ वि० ॥ अन्तरङ्गत्वं प्रथमतः श्रोत्रेणोपस्थित्या । अहेयत्वमुपपादयति । अनुकरणेति । शब्दमात्रतात्पर्यकोच्चारणस्यैवानुकरणत्वात् । अर्थस्य रूपतुल्यत्वमभ्युपेत्याप्याह । नचार्थ इति । शब्दात्मिकानामेवावर्त्तिनीत्वेन संज्ञात्वात् तादृशसंज्ञाव्यवहाराच्चेतिभावः । ननु स्वशब्दस्याभिधेयमित्येवार्थोऽस्त्वित्यत आह । संज्ञित्वेचेति । लोकत एव सिद्धेरितिभावः । ज्ञापकमिति । स्वशब्देन बहिरङ्गस्याऽप्यर्थस्य ग्रहणे इत्यर्थः । नन्वन्यस्य स्वीयस्य सत्त्वेन तद्व्यावृत्त्यर्थं रूपग्रहणमित्यर्थो भाष्याल्लभ्यते एवञ्च शास्त्रेऽर्थस्याऽग्रहणे कथमर्थवत्परिभाषासिद्धिरितिचेन्न । अन्यत्स्वीयमस्ति यतोऽतस्तस्यापि शब्दबोध्यत्वबोधनार्थमुभयोपादानमितिभाष्याशयात् । एवञ्चाऽधिकसंग्रहार्थं रूपग्रहणं रूपग्रहणेन चान्तरङ्गत्वादिन्यायबाधपूर्वकं स्वशब्देनार्थस्य शब्दबोध्यत्वं बोध्यत इति तात्पर्यम् ॥



॥ वि० ॥ तत्रोभयानुग्रहाय सति सम्भवेऽर्थवतो रूपस्य ग्रहणमसति केवलार्थस्य शुद्धस्य वा रूपस्य ग्रहणं तदाह । यत्र चार्थवतेत्यादि । अर्थोपस्थापकेन रूपेणेत्यर्थः । अत एव भिन्नविभक्तिनिर्देशश्चरितार्थः । इह योग्येति । योग्यता बोधजनकतारूपा तया लक्ष्यते कल्प्यते

॥ कै० ॥ अर्थवद्ग्रहण इति । अर्थयुक्तं रूपं गृह्यत इत्यर्थः । तेन काशे कुशे इत्यत्र शे इति प्रगृह्यसंज्ञा न भवति यत्र चार्थवता रूपेण शब्दो नाश्रीयते तत्रेदं नोपतिष्ठते यथा वर्णग्रहणेषु टेरेत्वेचेति पचेते इत्यत्रानर्थकस्यापि टेरेत्वं भवति । किमर्थमिति । वक्ष्यमाणोऽभिप्रायः । शब्देनार्थगतेरिति । कात्यायनवचनप्रामाण्यादस्त्रियामितिप्रतिषेधस्यानित्यत्वाद्विभाषा

॥ भा० ॥ किं पुनस्तत् । अर्थः । किमेतस्य ज्ञापने प्रयोजनम् । अर्थवद्ग्रहणे नानर्थकस्येत्येषा परिभाषा न कर्तव्या भवति । किमर्थं पुनरिदमुच्यते । शब्देनार्थगतेरर्थे कार्यस्यासम्भवात् तद्वाचिनः संज्ञाप्रतिषेधार्थं स्वरूपवचनम् । शब्देनोच्चारितेनार्थो गम्यते गामानय दध्यशानेति अर्थ आनीयते अर्थश्च भुज्यते । अर्थे कार्यस्यासम्भवादिह च व्याकरणे अर्थे कार्यस्यासम्भवः । अग्नेर्ढगिति न शक्यतेऽङ्गारेभ्यः परो ढक् कर्तुम् । शब्देनार्थगतेरर्थे कार्यस्यासम्भवाद् यावन्तस्तद्वाचिनः शब्दास्तावद्भ्यः सर्वेभ्य उत्पत्तिः प्राप्नोति । इष्यते च तस्मादेव स्यादिति । तच्चान्तरेण यत्नं न सिध्यतीति तद्वाचिनः संज्ञाप्रतिषेधार्थं स्वरूपवचनम् । एवमर्थमिदमुच्यते ॥

॥ कै० ॥ गुणेऽस्त्रियामिति पञ्चमी । इह योग्यतालक्षणेन सम्बन्धेन शब्दोऽर्थं लोके प्रत्याययति व्याकरणेऽपि पशुरपत्यंदेवता प्राच्य उदञ्चो भरता इत्यर्थ एव गृह्यते । अग्नेर्ढगित्यादौ त्वर्थस्य प्रत्ययेन पौर्वापर्यासम्भवात् साहचर्यात् सर्वस्य तद्वाचिनः सम्प्रत्ययः स्यादिति सूत्रारम्भः संज्ञासम्प्रत्यय उच्यते ॥

॥ वि० ॥ इति योग्यतालक्षणः शक्तिः तस्या उभयाश्रयकत्वेन उभयाधीनत्वलक्षणगुणयोगात् गौण्या वृत्त्या वा सम्बन्धपदव्यवहार्यत्वमितिबोध्यम् । इत्यर्थ एवेति । अर्थे कार्यस्य सम्भवादितिभावः । ननु संज्ञाविधायकस्य तत्प्रतिषेधार्थकत्वमयुक्तमत आह । संप्रत्यय इति । भावेऽङ्भावः ॥

॥ वि० ॥ नन्वर्थप्रत्ययस्य शब्दपूर्वकत्वेऽपि कथं स्वरूपस्यैव ग्रहणमत आह । शब्द इति । तथाच प्रथमप्रतीतत्वरूपकारणादुच्चारितशब्दस्यैव ग्रहणं युक्तमितिभावः । शब्दपूर्वक इत्यस्य शब्दज्ञानपूर्वक इत्यर्थः । प्रत्यासत्त्येति । अर्थबोधानुकूलत्वेन ज्ञाते प्रथमप्रतीते शब्द एवार्थेऽसंभवे कार्यं न तु तत्पर्यायादिष्वितिभावः । अर्थे कार्यसंभवे तु तस्यैव । एवञ्चोपस्थितस्यार्थस्य सर्वथा त्यागे मानाभावादर्थवत्परिभाषाऽपि सूत्रं विना सिद्धेति तात्पर्यम् । एवञ्चैतन्न्यायानुवादकमिदं सूत्रं मन्दमत्यनुग्रहायेतिबोध्यम् । ननु अर्थज्ञानोत्तरं परं प्रति तद्बोधनाय शब्दप्रयोग इति कथं शब्दपूर्वकत्वमर्थप्रतीते-

॥ कै० ॥ नवेति । शब्द उपलब्धोऽर्थं प्रत्याययति न सत्तामात्रेण । चक्षुरादीनि तु सत्तामात्रेण विषयमवग-

॥ भा० ॥ नवा शब्दपूर्वको ह्यर्थे संप्रत्ययस्तस्मादर्थनिवृत्तिः । नवा एतत्प्रयोजनमस्ति ।
किं कारणम् । शब्दपूर्वको ह्यर्थे संप्रत्ययः । आतश्च शब्दपूर्वकः । योऽपि ह्यसावाहूयते नाम्ना । नाम च यदानेन नोपलब्धं भवति तदा पृच्छति किं भवानाहेति । शब्दपूर्वकश्चार्थस्य संप्रत्ययः । इह च व्याकरणे शब्दे कार्यस्य संभवः । अर्थेऽसंभवस्तस्मादर्थनिवृत्तिर्भविष्यति ॥

॥ कै० ॥ मयन्ति अर्थस्य शास्त्रीये कार्ये क्वचिदयोग्यत्वात् प्रत्यासत्त्या स एवोपात्तः शब्दो ग्रहीष्यते न तु विप्रकृष्टं शब्दान्तरमितिभावः । शब्दपूर्वक इति । अस्योपलब्धुः शब्दपूर्वक इत्यर्थः ॥

॥ वि० ॥ एत आह । अस्योपलब्धुरिति । श्रोतुरित्यर्थः । भाष्ये शब्दपूर्वको हीति । हिः प्रसिद्ध्यर्थः । श्रोतुः शब्दज्ञानपूर्वकोऽर्थप्रत्यय इतिलोके प्रसिद्धमित्यर्थः । युक्त्यन्तरमप्याह । आतश्चेति । एवञ्च शब्दस्याऽर्थप्रतीतौ कारणत्वादर्थे कार्य्यासंभवे तद्बोधकारणत्वेनोपस्थिते शब्दे कार्यमितिभावः । इदानीं तत्तच्छब्दजन्यार्थबोधे प्रकारतया भासमानशब्द एव कार्यमर्थेऽसंभव इत्याह । शब्दपू कश्चेति । शब्दविशेषणश्चाऽर्थविशेष्यकः प्रत्यय इत्यर्थः । नसोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते इतिभावः । चकारेण चास्य युक्ततरत्वं सूचितम् । भाष्ये तस्मादर्थनिवृत्तिरिति । अर्थवाचकशब्दान्तरनिवृत्तिरित्यर्थः ॥



॥ वि० ॥ फलान्तरं शङ्कते । इदं तर्हीति । एवमर्थमिति । निषेधप्रतियोगिज्ञानार्थं न्यायसिद्धस्यापि विध्यंशस्यानुवाद इत्यर्थः । किप्रत्यय इति । नचैवं पेषं वासवाहनधिषुचेतिधिग्रहणं व्यर्थं स्याद् नहि धाधातोः किं विनोदकस्य ध्युत्तरपदत्वं संभवति तत्र हि कर्मण्यधिकरणेचेति तदुत्तरसूत्रेण किरितिवाच्यम् । उपलक्षणमिदं सनि मीमाघुनेर्गदेत्यादौ घुधातोर्ग्रहणं स्यादिति बोध्यम् । कुमारी घइति । नन्वयं षष्ठीतत्पुरुषः कर्मधारयो वोभयथाऽपि नात्र प्राप्तिस्तत्र स्त्रियां समानाधिकरण इत्यनुवृत्तिरितिचेन्न । घोऽस्त्यस्याः सा घा कुमारी घा अस्येति वहुव्रीहौ कुमारीघ इत्यर्थाद् घादिषु ह्रस्वत्वं पुंवद्भावादि-

॥ कै० ॥ अशब्दसंज्ञेति । न्यायात् स्वरूपग्रहणे सिद्धे शब्दसंज्ञायां स्वरूपग्रहणं माभूदित्येवमर्थमिदमित्यर्थः । अन्यथोपसर्गे घोः किरिति किप्रत्ययो घोर्द्धातोः शब्दार्थात् स्यान्न तु दाधाभ्यः । कुमारी घ इत्यत्र घरूपेति ह्रस्वः प्रसज्येत । ई हल्यघोरित्यत्र

॥ भा० ॥ इदं तर्हि प्रयोजनम् । अशब्दसंज्ञेति वक्ष्यामीति इह माभूत् दाधाघ्वदाप् तरप्तमपौ घ इति । शब्दसंज्ञाप्रतिषेधानर्थक्यं वचनप्रामाण्यात् । शब्दसंज्ञायाः प्रतिषेधोऽनर्थकः । शब्दसंज्ञायां स्वरूपविधिः कस्मान्न भवति । वचनप्रामाण्यात् । शब्दसंज्ञावचनसामर्थ्यात् ॥

॥ कै० ॥ तु घशब्दस्याकारान्तत्वाभावाद्दाधामेव ग्रहणं सिध्यति । वचनप्रामाण्यादिति । प्रदेशेषु संज्ञिप्रत्यायनार्थं संज्ञाकरणमिति सामर्थ्यात्स्वरूपग्रहणं न भविष्यति ॥

॥ वि० ॥ प्रतिषेधेनेत्युक्तेः पुंवत्त्वं वाधित्वा ह्रस्वप्राप्तिरस्त्वेत्याशयात् । घुसंज्ञाविधानस्य तर्हि कोऽवकाश इत्यत आह । ई हलीति । घसंज्ञापि किमेत्तिङव्ययघादित्यादौ चरितार्था तत्र हि तिङन्तात्पराऽन्यघान्तप्रातिपदिकाऽसंभवादितिबोध्यम् । प्रदेशेष्विति । सर्वप्रदेशेष्वित्यर्थः । संज्ञावचनसामर्थ्यगम्यप्रकरणात् प्रत्यासत्तिन्यायो वाध्यत इत्यभिप्रायः । नचेहल्यघोः किमेत्तिङव्ययघेत्यत्र तयोश्चारितार्थ्यम् । तावन्मात्रफलकत्वे तत्रैव दाधाग्रहणं तरप्तमब्ग्रहणं च कुर्यादितिबोध्यम् ॥

॥ वि॰ ॥ उभयगतिरिति । संज्ञावचनस्य प्रत्यासत्त्यानुग्रहायोभयगतिरितिभावः । सूत्रारम्भमभ्युपेत्येदम् । षड्भ्य इति । भाष्ये संज्ञाशब्दो बोधकपरः । न हि षकारान्तो बोधकशब्दस्तत्रोच्चारित इत्यर्थ इति भावः । षकारान्तादिति । जश्शसोर्लुकः प्राग् जश्त्वाभावात् । एवञ्च तदर्थं तस्य षट्संज्ञा विधीयत इति न ज्ञापकत्वमितिभावः । डकारान्त इति । षष उत्तरयोर्जश्शसोरितिस्वरूपग्रहणेन लुकि कार्ये जश्त्वमसिद्धमितिभावः ।

॥ कै॰ ॥ ननुचेति । उभयगतिरिह शास्त्रे दृष्टा संख्याकर्मकरणादिष्विति इहापि स्वरूपस्य संज्ञिनश्च प्रदेशेषु ग्रहणं स्यात् । नहीति । षड्भ्यो लुगित्यादावुच्चारितेतिभावः । का तर्हीति । तत्र डकारान्तः शब्द उच्चारितो जश्शसोश्च षकारान्ताल्लुक् कर्त्तव्यः ।

॥ भा॰ ॥ ननुच वचनप्रामाण्यात् संज्ञिनां संप्रत्ययः स्यात् स्वरूपग्रहणाच्च संज्ञायाः । एतदपि नास्ति प्रयोजनम् । आचार्यप्रवृत्तिर्ज्ञापयति शब्दसंज्ञायां न स्वरूपविधिर्भवतीति । यदयं ष्णान्ताषडिति षकारान्तायाः संख्यायाः षट्संज्ञां शास्ति । इतरथा हि वचनप्रामाण्याच्च नकारान्तायाः संख्यायाः संप्रत्ययः स्यात् स्वरूपग्रहणाच्च षकारान्तायाः । नैतदस्ति ज्ञापकम् । न हि षकारान्ता संज्ञा । का तर्हि । डकारान्ता । असिद्धं जश्त्वं तस्यासिद्धत्वात् षकारान्ता । मन्त्राद्यर्थं तर्हीदं वक्तव्यम् । मन्त्रे ऋचि यजुषीति यदुच्यते तन्मन्त्रशब्दे ऋक्शब्दे यजुःशब्दे च माभूत् । मन्त्राद्यर्थमितिचेच्छास्त्रसामर्थ्यादर्थगतेः सिद्धम् । मन्त्राद्यर्थमितिचेत्तन्न । किं कारणम् । शास्त्रस्य सामर्थ्यादर्थस्य गतिर्भविष्यति ॥

॥ कै॰ ॥ षसामिति च नुट । असिद्धमिति । डकारान्तः श्रूयमाणोऽपि डत्वस्यासिद्धत्वात् षकारान्तस्य स्वरूपस्य ग्राहको भविष्यतीत्यर्थः । मन्त्राद्यर्थमिति । मन्त्रादयः शब्दस्य संज्ञा । शास्त्रसामर्थ्यादिति । दिवसुम्नयोरित्यादौ क्यजादीनां निमित्तत्वेनोपादानाद्यजुषि ऋचि मन्त्र इति च स्वरूपन्न ग्रहीष्यते न च तथाविधं लक्ष्यमस्तीति भावः ॥

॥ वि॰ ॥ तत्रापि संज्ञासूत्रे टान्तोच्चारणात् षड्भ्य इत्यादौ डत्वासिद्धत्वेनैव निर्वाहः । संहितापाठेन डान्तस्य संज्ञात्वे षट् चतुर्भ्य इत्यत्र चर्त्वासिद्धत्वमावश्यकमिति तात्पर्य्यम् । ष्णान्तेत्यादि ज्ञापकं शास्त्रीयशब्दसंज्ञायाम्न स्वरूपग्रहणमित्यर्थं बोधयतु न तु शब्दपदार्थके इत्याशयेनाह । भाष्ये मन्त्राद्यर्थमिति ॥



॥ वि॰ ॥ शब्दानुविद्धस्यैवेति । नसोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते इतिहर्युक्तेरितिभावः । तद्बोध्यत्वेन सहचरितत्वमित्यन्ये । चार्थाभावमुपपादयति । सामान्यशब्देनेति । एवञ्च पदार्थभेदाभावात्साहित्यरूपचार्थासम्भव इतिभावः । पर्युदासे इति । कश्चित्तु अराजेति-

॥ कै॰ ॥ मन्त्रादिसहचरित इति । साहचर्यं च शब्दानुविद्धस्यैवार्थस्यावगमात् । सित्तद्विशेषाणामिति । वृचस् स्रगस् इत्येवं निर्देशः कर्त्तव्यः । एतदपि न्यायसिद्धं तुल्यजातीयानां द्वन्द्व एकवद्भवतीति वक्ष्यते । पर्य्यायाणाञ्च युगपत्प्रयोगाभावात् सामान्यविशेषाणाञ्चार्थाभावात् सामान्यशब्देन सर्वविशेषाणामाक्षेपाद्धवृक्षचर्मिति द्वन्द्वाभावाद्विशेषाणामेव प्लक्षन्यग्रोधादीनां

॥ भा॰ ॥ मन्त्रे ऋचि यजुषीति यदुच्यते मन्त्रशब्दे ऋक्शब्दे यजुश्शब्दे च तस्य कार्यस्य सम्भवो नास्तीतिकृत्वा मन्त्रादिसहचरितो योऽर्थस्तस्य गतिर्भविष्यति साहचर्य्यात् । सित्तद्विशेषाणां वृक्षाद्यर्थम् । सिन्निर्द्देशः कर्त्तव्यः । ततो वक्तव्यं तद्विशेषाणां ग्रहणं भवतीति । किं प्रयोजनम् । वृक्षाद्यर्थम् । विभाषा वृक्षमृगेति । प्लक्षन्यग्रोधं प्लक्षन्यग्रोधाः । पित्पर्यायवचनस्य च स्वाद्यर्थम् । पिन्निर्द्देशः कर्त्तव्यः । ततो वक्तव्यम् । पर्यायवचनस्य च तद्विशेषाणाञ्च ग्रहणं भवति स्वस्य च रूपस्येति । किं प्रयोजनम् । स्वाद्यर्थम् । स्वे पुषः । स्वपोषं पुष्यति । रैपोषम् । धनपोषम् । अश्वपोषम् । गोपोषम् । जित्पर्यायवचनस्यैव राजाद्यर्थम् । जिन्निर्द्देशः कर्त्तव्यः । ततो वक्तव्यम् । पर्यायवचनस्यैव ग्रहणं भवति । किं प्रयोजनम् । राजाद्यर्थम् । सभा राजामनुष्यपूर्वा । इनसभम् । ईश्वरसभम् । तस्यैव न भवति । राजसभा । तद्विशेषाणाञ्च न भवति ॥

॥ कै॰ ॥ ग्रहणं सिद्धम् । पित्पर्यायवचनस्य चेति । चशब्दात् स्वरूपस्य विशेषाणाञ्च ग्रहणम् । इदं वाचनिकमेव । जित्पर्यायेति । इदं न्यायसिद्धमित्याहुः । अराजेति पर्युदास आश्रीयते तेन राजसदृशानां तत्पर्यायाणामेव ग्रहणं सिध्यति ॥

॥ वि॰ ॥ च्छेदाभावात् किञ्च राजशब्दः शब्दपरः मनुष्यशब्दश्चार्थपर इतिदुर्लभं स्यात् किञ्च एवममनुष्यशब्देनाऽपि मनुष्यपर्यायाणामेव ग्रहणं स्यादितीदं वाचनिकमेवेत्याह ॥

॥ वि० ॥ आद्यन्तौ विहाय मध्योपादानेऽभिप्रायमाह । मृगेति । एवं मत्स्याद्यर्थमित्यादिशब्दप्रयोजनञ्चिन्त्यम् ॥ ❀ ॥ अणुदित् । किं यस्येति नाक्षेपोऽयं किन्तु विशेषजिज्ञासेत्यर्थः । उत यौगिक इत्यन्वयः । किमर्थमित्यत्रार्थशब्दोऽभिधेयपर इतितात्पर्यम् । नन्विदमः परत्वात् त्यदाद्यत्वेऽन्तरङ्गत्वाच्च पररूपे अर्धतृतीयमात्रस्य सवर्णग्रहणेऽपि नान्तरतम आदेशः सम्भवतीति प्लुत एव भविष्यति । नच प्लुतापेक्षया दीर्घप्लुतयोरन्तरतमत्वात्ते एव

॥ कै० ॥ झित्तस्येति । इदं वाचनिकमेव । मत्स्याद्यर्थमिति । मृगपक्षिणोस्तु पिन्निर्देशस्तत्फललाभार्थः कर्त्तव्यः । अस्यैकस्येति । इयमिष्टिरेव ॥ ❀ ॥ अणुदित् । अप्रत्यय इतिकिमर्थमिति । किं यस्य प्रत्ययसंज्ञा विहिता तस्य प्रतिषेध

॥ भा० ॥ पुष्यमित्रसभा चन्द्रगुप्तसभा । झित्तस्य च तद्विशेषाणाञ्च मत्स्याद्यर्थम् । झिन्निर्देशः कर्त्तव्यः । ततो वक्तव्यम् । तस्य च ग्रहणं भवति तद्विशेषाणाञ्चेति । किं प्रयोजनम् । मत्स्याद्यर्थम् । पक्षिमत्स्यमृगान् हन्ति । मात्स्यिकः । तद्विशेषाणाम् । शाफरिकः शाकुलिकः । पर्यायवचनानां न भवति । अजिह्मान् हन्ति अनिमिषान् हन्तीति । अस्यैकस्य पर्यायवचनस्येष्यते । मीनान् हन्ति मैनिकः । स्वं रूपं शब्दस्याशब्दसंज्ञा ॥ ❀ ॥ अणुदित्सवर्णस्यचाप्रत्ययः । अप्रत्यय इति किमर्थम् । सनाशंसभिक्ष उः । अ साम्प्रतिके । अत्यल्पमिदमुच्यते अप्रत्यय इति । अप्रत्ययादेशटित्किन्मित इतिवक्तव्यम् । प्रत्यये उदाहृतम् । आदेशे इदम इश् । इतः । इह । टिति लविता लवितुम् । किति बभूव । मिति हेऽनड्वन् । टितः परिहारः ॥

॥ कै० ॥ उत यः प्रतीयते विधीयते इतियौगिकः प्रत्ययस्तस्यापीतिप्रश्नः । इत इति । विशेषविहितत्वात् त्यदाद्यत्वं बाधित्वा विभाव आदेशः प्राप्नोति । बभूवेति । अनुनासिकः प्राप्नोति । अनड्वन्निति । आमपि पक्षे प्राप्नोति ॥

॥ वि० ॥ भविष्यतः । ह्रस्वोच्चारणन्तु लाघवार्थं स्यादितिवाच्यम् । एवन्तर्हि परत्वाड्डुविलोपे मात्रिकत्वान्मात्रिक एव भविष्यति तत्र नापीतिवर्त्तते फलाभावादत आह । विशेषेति । येननाप्राप्तिन्यायादितिभावः । शादीनाञ्चोपदेशे एवेत्संज्ञालोपयोरणत्वेन सवर्णग्रहणाप्रसक्तिः । अनुनासिक इति । पक्षे इतिशेषः ॥



॥ वि० ॥ नियमार्थं तत् स्यादत आह । ग्रहेरेवेति । वृतो वेत्यनेन विरोधादितिभाव इतिकेचित् । वस्तुतस्तु यथा दिक्संख्ये इतिनियमादप्राप्तसमासविधायकं तद्धितार्थेति एवं ग्रहेरेवेतिनियमादप्राप्तदीर्घविध्यर्थं वृतो वेतिस्यादितिचिन्त्यैषा व्याख्या । तस्माद् विधेयसंकोचस्यान्याय्यत्वात् तथा नियम इतिभावः । ववरिथेति । ववर्थेति छन्दसि इडभावनिपातनाद्भाषायां कृसृभृवृस्तुद्रुस्रुश्रुवः क्रादिनियमात् इट् । अलिट्येव वृतो वेत्यर्थात् लिटि ह्रस्व एवेतिभावः । वाग्रहणमिति । अत एव भाष्ये यद्विभाषां शास्तीत्युक्तं । भाष्ये भाव्यमानेति । इयं च जातिग्रहणप्राप्तं गुणाभेदप्राप्तं चानणसाधारण्येन प्राप्तं सव-

॥ कै० ॥ यदयमिति । ग्रहेरेव दीर्घो नान्येभ्य इतिनियमाभावादितिभावः । नियमार्थमिति । ग्रहेर्दीर्घ एव न ह्रस्व इत्येवमर्थं स्यादित्यर्थः । वृतो वेति । ननु ववरिथेति लिटि दीर्घो माभूदित्येवमर्थमेतत् स्यादिति कथं ज्ञापकम् । एवं तर्हि वृत इत्यत्रापि अलिटीत्यनुवर्त्तनाल्लिटि दीर्घनिषेधादन्यत्र उभयस्मिन् सिद्धे वाग्रहणं ज्ञापकमीट इटा ग्रहणाभावस्य । प्रत्यये

॥ भा० ॥ आचार्यप्रवृत्तिर्ज्ञापयति न टिता सवर्णानां ग्रहणं भवतीति । यदयं ग्रहोऽलिटि दीर्घत्वं शास्ति । नैतदस्ति ज्ञापकम् । नियमार्थमेतत् स्यात् । ग्रहोऽलिटि दीर्घ एवेति । यत्तर्हि वृतो वेति विभाषां शास्ति । सर्वेषामेव परिहारः । भाव्यमानेन सवर्णानां ग्रहणं नेत्येवं न भविष्यति । प्रत्यये भूयान् परिहारः । अनभिधानात्प्रत्ययः सवर्णान्न ग्रहीष्यति । यान् हि प्रत्ययः सवर्णान् गृह्णीयाद् न तैरर्थस्याभिधानं स्यात् । अनभिधानान्न भविष्यति । इदं तर्हि प्रयोजनम् । इह केचित्प्रतीयन्ते केचित्प्रत्याय्यन्ते । ह्रस्वाः प्रतीयन्ते ॥

॥ कै० ॥ भूयानिति । साधारणोऽसाधारणश्चेत्यर्थः । प्रत्यय इत्यन्वर्था संज्ञा कृता येनार्थं प्रतियन्ति स प्रत्ययः । न च दीर्घप्लुतयोरर्थस्याभिधानमस्ति । ह्रस्वा इति । प्रतीयन्ते श्रूयन्ते उच्चार्यन्ते अणादिचोदनास्वित्यर्थः ॥

॥ वि० ॥ संग्रहणं वारयितुमावश्यकीतिभावः । साधारणश्चेति । भूयानित्युक्तिर्नापूर्वाऽनेकसमाधानाभिप्राया किन्तु सूत्रोक्ताप्रत्ययग्रहणमपेक्ष्येति भूयानिति प्रतिज्ञायैकपरिहारोपन्यासेऽपि न विरोध इतिभावः । नन्वस्य च्वावित्यादाविवाऽर्थाभिधानासमर्थस्यापि सवर्णस्य ग्रहणं स्यादत आह । प्रत्यय इतीति । प्रत्ययविधौ सवर्णग्रहणे हि तेषामपि प्रत्ययत्वमेष्टव्यम् । तच्चाऽन्वर्थत्वादसम्भवीति न तत्र सवर्णग्रहणमिति भावः । उच्चार्यन्त इति । उच्चारणं चाऽत्र साक्षाच्छब्देन बोधनं विवक्षितम् । अतोऽणादिशब्दप्रतीयमानेकारादिभिः संवर्णानां ग्रहणं सिद्धम् ॥

॥ वि० ॥ ह्रस्वैर्गृह्णीतेरिति । प्रकृतसूत्रस्थाणपदेनेतिशेषः । ननु प्रत्याहारसूत्रोपदिष्टा एवाण इति कथमाकारो ग्राहक इत्यत आह । यथैवेति । नचाऽऽचरसमाम्नायिकविषयकः प्रतिषेधः प्रत्याख्यमानविषयं तु सवर्णग्रहणमिति वैपरीत्यं किन्न स्यादितिवाच्यम् । तथासत्यको विधीयमानस्य पूर्वसवर्णदीर्घस्य कुमार्यावित्यादावप्राप्ते दीर्घाज्जसिचेति प्रतिषेधोऽनर्थकः स्यादितिभावः । एवञ्च वर्णसमाम्नायपठितानामेव ग्राहकत्वबोधनार्थमप्रत्ययपदमिति तात्पर्यम् । उभयार्थम् । ह्रस्वदीर्घोभयविध्यर्थम् । एवञ्च यत्नाधिक्यमेवासिद्धमितिभावः । न्याय्य एवेति । अनण्त्वादित्ययमित्यर्थः ।

॥ कै० ॥ दीर्घा इति । ह्रस्वैर्गृह्णीतेरण्त्वाद्दीर्घाणां ग्रहणात् । तत्राष्टन आ विभक्तावित्यत्राकारो ग्राहको माभूदित्यर्थः । यथैव हि अण्त्वादाकारो रपरत्वादिकार्यं प्रतिपद्यते तथा ग्राहकत्वमपि प्रतिपद्येतेतिभावः । कथं पुनरप्रत्यय इत्यस्याप्रत्याख्यमान इत्यर्थः । अन्तर्भावितण्यर्थाद्देतेः कर्मण्युञ्विधानात् । यत्नाधिक्यादिति । ननु च ह्रस्वोच्चारणे अर्द्धमात्रिकस्य मात्रिक एव स्यादिति दीर्घोच्चारणमु-

॥ भा० ॥ दीर्घाः प्रत्याख्यन्ते । यावच्च ब्रूते प्रत्याख्यमानेन सवर्णानां ग्रहणं नेति तावदप्रत्यय इति । कं पुनर्दीर्घः सवर्णग्रहणेन गृह्णीयात् । ह्रस्वम् । यत्नाधिक्यान्न भविष्यति । प्लुतन्तर्हि गृह्णीयात् । अनण्त्वान्न ग्रहीष्यति । एवं तर्हि सिद्धे सति यदप्रत्यय इति प्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यो भवत्येषा परिभाषा भाव्यमानेन सवर्णानां ग्रहणं नेति । किमर्थं पुनरिदमुच्यते ॥

॥ कै० ॥ भयार्थं स्यात् । एतत्तु न निरूपितं न्याय्य एवात्र परिहारो विधास्यते । अनण्त्वादिति । अत्र हि सूत्रे प्रत्याहारसन्निविष्टा एव गृह्यन्ते स्वात्मनि क्रियाविरोधाददनिष्पादाद् ग्रहणकशास्त्रान्तराभावाच्च अत्र सूत्रे अकारादिभिराकारादीनां ग्रहणासंभवोऽन्येषु प्रदेशेषु अनेन सूत्रेणाकारादिभिराकारादयो गृह्यमाणा अणादिकार्याणि लभन्ते । भाव्यमानेनेति । प्रतीयते विधीयत इति यौगिकस्यात्र प्रत्ययस्य ग्रहणमितिभावः । किमर्थं पुनरिति । आकृतिनिर्देशात् सिद्धमितिप्रश्नः ॥

॥ वि० ॥ यदुक्तं तथैवेति तत्राह । अत्र हीति । स्वात्मनि क्रिया स्वस्मिन्प्रवृत्तिः । विरोधे हेतुमाह । अनिष्पादादिति । अर्थाबोधादित्यर्थः । नन्वल्पविषयेणाप्रत्यय इत्यनेन कथं वहुविषयपरिभाषार्थः शक्यते प्रतिपादयितुमत आह । प्रतीयत इति । भाष्ये ज्ञापयतीत्यस्य योगेन बोधयतीत्यर्थः । अप्रत्यय इति च वाक्यभेदेन निषेधार्थमणित्यस्य च नात्र संबन्धः । तेनोक्तसकलार्थलाभ इतिभावः । वस्तुत एकदेशानुमतिद्वारा तां परिभाषां ज्ञापयतीतिभाष्याचरार्थः । विधीयत इत्यर्थे प्रतीयत इत्यस्य प्रयोगादृष्ट्या कैयटोक्तं चिन्त्यम् । आकृतीति । प्रत्याहारसूत्रेष्वस्य च्वावित्यादिषुचेत्यर्थः ॥



॥ वि० ॥ नेयमुदिद्विषया शङ्का चुत्वादिजातौ मानाभावेन तस्याऽऽवश्यकत्वादित्याशयेनाह । उदिदिति । कालादिभिन्नस्येति । एकोऽवर्ण उदात्तत्वादिकं ध्वनिगतमिति पक्षेऽपि उपाधिभेदभिन्नत्वाद् ग्रहणं न सिध्यतीति भावः । अनन्ताऽवर्णव्यक्तय इति पक्षे तु अग्रहणं स्पष्टमेवेति बोध्यम् । नन्वेतत्प्रयोजनमस्य च्वावित्यादौ वा अगादिप्रत्याहारेषु वा । तत्राद्यं तत्राऽनुवृत्तिनिर्देश इत्यादिना दूषयिष्यति नान्त्य इत्याह । प्रत्याहारग्रहण इत्यादि । प्रत्याहारग्रहणे सवर्णग्रहणमिति वार्त्तिकस्य द्वेधार्थः । अक इत्यादावीकारादीनामगादिसंज्ञाभिर्ग्रहणं न प्राप्नोत्यनुपदेशादचरसमाम्नाये तेषामनुच्चारणादित्यर्थस्त-

॥ कै० ॥ अण् सवर्णस्येति । उदिद्ग्रहणस्याऽविचारयिष्यमाणत्वादेवमुक्तम् । व्यक्तिनिर्देशे कालादिभिन्नस्य ग्रहणान्न प्राप्नोतीति भावः । प्रत्याहारग्रहण इति । अकोऽचीति यत्र संज्ञया प्रत्यायनमिकारादीनां तत्र तैरन्येषां ग्रहणं न स्याद् यत्र स्वरूपेणोच्चार्यन्ते अस्य

॥ भा० ॥ अण् सवर्णस्येति स्वराऽऽनुनासिक्यकालभेदात् । अण् सवर्णस्येत्युच्यते । स्वरभेदादानुनासिक्यभेदात् कालभेदाच्चाण् सवर्णान्न गृह्णीयात् इष्यते च ग्रहणं स्यादिति । तच्चान्तरेण यत्नं न सिध्यतीत्येवमर्थमिदमुच्यते । अस्ति प्रयोजनमेतत । किन्तर्हीति । तत्र प्रत्याहारग्रहणे सवर्णग्रहणमनुपदेशात् । तत्र प्रत्याहारग्रहणे सवर्णानां ग्रहणान्न प्राप्नोति अकस्सवर्णे दीर्घ इति । किं कारणम् । अनुपदेशात् । यथाजातीयकानां संज्ञा कृता तथाजातीयकानां सम्प्रत्यायिका स्यात् ह्रस्वानां च क्रियते ह्रस्वानामेव संप्रत्यायिका स्यात् दीर्घाणां न स्यात् ॥

॥ कै० ॥ च्वौ यस्येतिचेति च तत्रैवैषां ग्राहकत्वं स्यात् । अनुपदेशादिति । अनुच्चारणादित्यर्थः । न हि प्रत्याहारे दीर्घा उच्चारिता यतोऽगादिचोदनाभिर्गृह्येरन् । अथवा अकोऽचीत्यादावनुच्चारिता इकारादयो दीर्घाणां प्रत्यायका न स्युरित्यर्थः ॥

॥ वि० ॥ द्वाह । यत्र संज्ञयेति । एकस्यैव युगपत्प्रत्याय्यप्रत्यायकत्वयोर्विरोधादित्यर्थः । यत्र स्वरूपेणेति । इदञ्चिन्त्यम् । ध्वन्यानन्त्येतस्याण्त्वाभावात् । तस्मात्तु स्वरूपेणोच्चार्यन्ते अक इत्यादावकारादिरिति वक्तुमुचितम् । प्रत्याहारे अइउणित्यादौ । भाष्ये यथाजातीयकानामिति । वर्णसमाम्नायपठितानामित्यर्थः । संज्ञेति । आदिरन्त्येनेति कृताणादिसंज्ञेत्यर्थः । यद्वाऽगादावीकारादिभिर्ह्रस्वैर्दीर्घाणामग्रहणं कुतोऽनुपदेशादकोऽचीत्यादाविकारादीनामनुच्चारणादित्यर्थस्तदाह । अथवेति । भाष्यस्वारस्यं त्वाद्यव्याख्यायामेव ॥

॥ वि० ॥ उच्चार्यमाणैरेवेति । पुस्तकदर्शनादौ व्यभिचारादित्यर्थः । सन्निहिता इति । बुद्धिसन्निहिता इत्यर्थः । अयं भावः । शब्दा उपस्थिता बोधं जनयन्ति । उपस्थितिस्तु स्मृतिरूपा प्रत्यक्षरूपा च नत्वन्त्यैवेति नियमः । लिपिस्मारितपदैर्बोधानापत्तेरिति । सन्निधानमिति । प्रतीतिरित्यर्थः । यथायोगमुच्चारणेन संज्ञया वेत्यर्थः । प्रतीयमानो हीति । यद्यप्युच्चारणे प्रधानमपि अर्थप्रतीतावङ्गभावम्प्रतिपद्यते तथाप्युच्चारणकृतायास्तत्त्वतिविम्बविशिष्टस्फोटाभिव्यक्तेश्चिरस्थायितयोपपद्यते । शब्दज्ञानमात्रस्य तु न तदभिव्यञ्जकत्वम् । वक्ष्यमाणहेतोरिति भावः । अन्यस्येति । दीर्घादिरूपशब्दस्येत्यर्थः । भाष्ये ह्रस्वसम्प्रत्ययादिति । तृतीयातत्पुरुषः । ऋगित्युक्ते सम्पाठमात्रं गम्यते । एतेनोच्चारितानामेव प्रत्यायकत्वे रहसि पुस्तकमीक्षमाणस्य

॥ कै० ॥ ननु चेति । उच्चार्यमाणैरेव प्रत्यायकैर्भवितव्यमिति नास्ति । सन्निहितास्तु प्रत्यायकास्तच्च सन्निधानं यथायोगमस्त्येवेत्यर्थः । उच्चार्यमाणेति । प्रतीयमानो हि प्रधानं सत्कथमन्यप्रत्यायनेऽङ्गभावं तदैव गच्छेदित्यर्थः । शब्दस्यावचन-

॥ भा० ॥ ननु च ह्रस्वाः प्रतीयमाना दीर्घान् सम्प्रत्याययिष्यन्ति । ह्रस्वसम्प्रत्ययादिति चेदुच्चार्यमाणशब्दसम्प्रत्यायकत्वाच्छब्दस्यावचनम् । ह्रस्वसंप्रत्ययादितिचेदुच्चार्यमाणश्शब्दस्सम्प्रत्यायको भवति न सम्प्रतीयमानः । तद्यथा । ऋगित्युक्ते सम्पाठमात्रं गम्यते ॥

॥ कै० ॥ मिति । प्रतीयमानशब्देनान्यस्याप्रत्यायनमित्यर्थः । ऋगित्युक्त इति । यद्यपि प्रकरणवशाद्विशिष्टसन्निवेशापि ऋक्छब्देन ऋक् प्रत्याय्यते । तथापि सा स्वार्थन्न प्रत्याययतीत्यर्थः ॥

॥ वि० ॥ बोधानापत्तेर्वाचकज्ञानसामान्यस्यैव बोधे तन्त्रत्वेनेदमयुक्तमित्यपास्तम् । मानसजपस्थल इव तत्रापि स्वीयसूक्ष्मोच्चारणाद्बोधेनाद्यतः । जपे हि मन्त्राणां तैस्वर्यनियमेन तत्तत्स्थानेषूच्चादिदेशोपलभ्यमानत्वरूपोदात्तत्वादेर्मात्राकालिकत्वादिरूपह्रस्वत्वादेश्च विनोच्चारणमनभिव्यक्तेः । यद्वा लिपेरेव चेष्टादिवत्सङ्केतेन बोधकत्वमत एव लिपौ शब्दत्वभ्रमो बालानाम् । यद्वा । लिपावनादेश्शब्दतादात्म्याध्यासाद्बोधकत्वम् । लिपौ शब्दत्वबाधज्ञानवतां पण्डितानामप्यन्तःकरणादावात्मत्वप्रत्यये भ्रमत्वं जानतामनादिसिद्धारोपेणैव व्यवहारवद्बोधोऽपि । ननु ऋगित्युक्ते तद्विशेषाप्रतीतेरर्थप्रतीतिसम्भावनाया अप्यभाव ऋक्त्वस्य वेदत्वस्य चार्थप्रतीतिजनकतानवच्छेदकत्वादत आह । यद्यपीति । ऋक्शब्देन विशिष्टसन्निवेशापि ऋक् प्रत्याय्यत इत्यन्वयः । यत्र सङ्केतादिवशादृगित्युक्तेऽग्निमीळे पुरोहितमित्याद्यानुपूर्वीप्रकारेण बोधस्तत्रापि सा स्वार्थं बोधनादिक्रियाकर्मत्वेन न प्रत्याययतीतिभावः ॥



॥ वि० ॥ प्रत्यायनमिति । तच्चैतत्सूत्रेणैवेतिबोध्यम् । अनेन तत्प्रत्यायनमशक्यमित्याह । भाष्येऽवरकालत्वादिति । परा सूत्रादिति । सूत्रात् प्रत्याहारसूत्रात् परा परकाला क्रियत इत्यर्थः । तेषामनादित्वादेषां पाणिनिकृतत्वादितिभावः । अवरकालैवेति । वाक्यार्थज्ञाने पदार्थज्ञानस्य कारणत्वादितिभावः । शाब्दक्रमोष्टाध्यायीक्रमः । प्रत्याहारोत्तरकाला सवर्णसंज्ञेति । नाज्झलावित्येतद्विषयनिर्णयोत्तरं तत्परिहारेण सवर्णपदशक्तिग्रहस्यैव

॥ कै० ॥ एवन्तर्हीति । अइउणिति प्रत्याहार एवाकारादिभिराकारादीनां ग्रहणात् तेषामप्यणादिसंज्ञाभिर्ग्रहणं भविष्यतीत्यर्थः । उपदेश इति । प्रत्यायनमित्यर्थः । करिष्यत इति । व्याख्यास्यते । अवरकालत्वादिति । निष्पन्नेष्वङ्गेष्वनयाऽन्यत्वाऽस्य

॥ भा० ॥ एवन्तर्हि वर्णपाठ एवोपदेशः करिष्यते । वर्णपाठ उपदेश इतिचेदवरकालत्वात् परिभाषाया अनुपदेशः । वर्णपाठक्रम उपदेश इतिचेदवरकालत्वात् परिभाषाया अनुपदेशः । किं परा सूत्रात् क्रियत इत्यतोऽवरकाला । नेत्याह । सर्वथाऽवरकालैव । वर्णानामुपदेशस्तावत् । उपदेशोत्तरकालेत्संज्ञा । इत्संज्ञोत्तरकाल आदिरन्त्येन सहेतेतिप्रत्याहारः । प्रत्याहारोत्तरकाला सवर्णसंज्ञा । सवर्णसंज्ञोत्तरकालमणुदित्सवर्णस्य चाऽप्रत्यय इति । सैषाऽवरकाला उपदेशोत्तरकाला वर्णानामुत्पत्तौ निमित्तत्वाय कल्पयिष्यत इत्येतन्न । तस्मादुपदेशः कर्तव्यः ॥

॥ कै० ॥ च्वावित्यादौ सवर्णानां ग्रहणं भवति नाङ्गेषु नाऽपि स्वात्मनि अनिष्पन्नत्वादितिभावः । सर्वथेति । आर्थक्रमेणाऽपि न शाब्दक्रमेणैवेत्यर्थः । वर्णानामुत्पत्ताविति । अइउणित्यत्र इयमेव वर्णानाकारादीनुत्पादयतीत्येतन्नास्ति । तस्मादिति । प्रत्याहार एव दीर्घप्लुता अपि पठनीया इत्यर्थः ॥

॥ वि० ॥ व्यवहारोपयोगित्वादिति भावः । वर्णानामुत्पत्ताविति । प्रतीतावित्यर्थः । अक इत्यादावाद्यवर्णेष्वस्या एव प्रत्यायकत्वादध्याहारेण व्याचष्टे । अइउणिति । उत्पादयतीति । प्रत्याययतीत्यर्थः । प्रत्याहारे अइउणित्यादौ । नच प्रत्याहारेषु तद्वाच्यवाच्ये लक्षणाङ्गीकारान्न दोषः । उक्तभाष्यरीत्या तद्वाच्यानां प्रत्यायकत्वाभावेन तेषामशक्तत्वेन लक्ष्यतावच्छेदकलक्षणामूलसम्बन्धज्ञानयोर्दुरूपपादत्वात् ॥

॥ वि० ॥ एवं प्रत्याहारेषु सूत्रप्रयोजनाभावमुक्त्वा अस्य च्वावित्यादावपि तमाह । तत्रानुवृत्तिनिर्देश इति भाष्ये । वृत्तिं वर्णसमाम्नायमनुगतस्तत्सदृशोऽनुवृत्तिरकारादिस्तस्य निर्देशः स्वरूपेणोच्चारणमित्यर्थः । तत्र सवर्णाग्रहणे हेतुमाह । व्यक्तीति । अनन्ता व्यक्तय इतिपक्षे इत्यर्थस्तदा हावान्तरभेदेति । जात्येकत्वेऽपि व्यक्तीनां परस्परं भेदसंभवादित्यर्थः । एकाऽवर्णव्यक्तिरितिपक्षे तु यद्यपि सिध्यति तथापि सोऽसंगतः । उदात्तादिविरुद्धधर्माध्यासात् । यदि तु ध्वनिनिष्ठास्ते तदा कत्वखत्वादिकमपि तन्निष्ठमस्तु किं वर्णेन चेदनन्ता एवेतिभावः । अनणो वचनादपि कथं ग्राहकत्वमत आह । अणसदृश इति ।

॥ कै० ॥ तत्रानुवृत्तीति । व्यक्तिपक्षे सत्यपि सूत्रारम्भेऽवान्तरभेदसम्भवात् ग्रहणं न सिध्यतीत्यर्थः । वचनादिति । अणसदृशोऽणिति ग्रहीष्यत इत्यर्थः । यत्रेति । अनन्तरोक्तमुभयं यत्र नास्ति अकोऽचीत्यादौ । अत्र ह्यनुबन्धेन चिह्नेन प्रत्याहारस्थ एव निर्दिष्ट इत्यणत्वमुच्चारणं चास्ति । तत्राकार उच्चारित आदिरन्त्येन सहेतेतिमध्यपातिनां स्वरूपस्य च ग्राहकोऽस्माच्च वचनात्सवर्णानामपीत्यर्थः । एवं

॥ भा० ॥ तत्रानुवृत्तिनिर्देशे सवर्णाग्रहणमनण्त्वात् । तत्रानुवृत्तिनिर्देशे सवर्णानां ग्रहणं न प्राप्नोति । अस्य च्वौयस्येति च । किं कारणम् । अनण्त्वात् । नह्येतेऽणो येऽनुवृत्तिनिर्देशे । के तर्हि । येऽक्षरसमाम्नाय उपदिश्यन्ते । एवं तर्ह्यनण्त्वादनुवृत्तौ न अनुपदेशाच्च प्रत्याहारे न । उच्यते चेदमण् सवर्णान् गृह्णातीति तत्र वचनाद्भविष्यति । वचनाद्यत्र तन्नास्ति । नेदं वचनाल्लभ्यम् । अस्ति ह्यन्यदेतस्य वचने प्रयोजनम् । किम् । ये एते प्रत्याहाराणामादितो वर्णास्तैः सवर्णानां ग्रहणं यथा स्यात् । एवं तर्हि सवर्णेऽण्ग्रहणमपरिभाष्यमाकृतिग्रहणात् ॥

॥ कै० ॥ व्यक्तिपक्षे सत्यपि सूत्रारम्भे नास्तीष्टसिद्धिराकृतिपक्षे तु सूत्रं न कर्त्तव्यमित्याह । सवर्ण इति । प्रत्याहारे अनुवृत्तिनिर्देशे च सर्वत्र जातिरुपदिश्यते नान्तरीयकं व्यक्त्युच्चारणम् । अत्वं च ह्रस्वदीर्घप्लुतेषु विद्यते यथा गोत्वं कृशे पिण्डे स्थूले शुक्ले कृष्णे चेतिभावः ॥

॥ वि० ॥ उभयम् । अनण्त्वमनुच्चारणं च । मध्यपातिनामिति । दृष्टान्तार्थम् । नास्तीति । अइउणित्यादावत्वादिजातिनिर्देशादेषामणत्वं प्रत्याहारग्रहणेषु च न दोषः । त्वादय इत्यादिनिर्देशाश्चावैवार्थे लिङ्गमित्युच्यते तदा सूत्रमेव व्यर्थमित्याह । आकृतीति । प्रत्याहारे अइउणित्यादिसूत्रे । अनुवृत्तिनिर्देशे अस्य च्वावित्यादौ । उपदिश्यते । उच्चार्यते प्रत्याय्यते वा । नान्तरीयकमिति । जातेः साक्षादुच्चारणासंभवात्तदुच्चारणम् । किञ्च । जातौ कार्यान्वयस्य व्यक्तिं विना साक्षादसंभवात्तदुच्चारणं तद्बोधनमित्यर्थः । तत्र दीर्घादिव्यक्त्याक्षेपे बीजमाहात्वं चेति । प्रमाणकृतभेदे दृष्टान्तमभिधाय गुणकृतभेदेऽप्याह । शुक्ले इति ॥



॥ वि० ॥ श्रुतिः । श्रवणोपलब्धिः । भेदाद्भेद इति । जातेरितिशेषः । सत्यपीति । श्रुतिभेदो हि व्यक्तिभेदसाधको नाकृतिभेदे साधक इतिभावः । अत एव ह्रस्वोऽयमकारो दीर्घोऽयमकार इति अत्वेन सामानाधिकरण्यानुभवः । इकारादिष्वत्वमननुभवाच्च । अत एवोदात्तादयो न जात्यन्तरप्रयोजका इतितात्पर्य्यम् । नच आकारोऽयं न अकार इति प्रतीत्यनापत्तिः । तस्या व्यक्तिभेदविषयकत्वात् । भाष्येऽनेकान्तेनेति । अनियमेनेत्यर्थः ।

॥ कै० ॥ ननु चान्येति । श्रुतिभेदाद्भेद इतिमन्यमानस्य प्रश्नः । अनन्यत्वाच्चेति । सत्यपि श्रुतिभेदे एकाकृतियोगोऽस्त्येव यथा

॥ भा० ॥ सवर्णेऽण्ग्रहणमपरिभाष्यम् । कुतः । आकृतिग्रहणात् । अवर्णाकृतिरुपदिष्टा सर्वमवर्णकुलं ग्रहीष्यति । तथेवर्णाकृतिस्तथोवर्णाकृतिः । ननुचान्या आकृतिरकारस्यान्याऽऽकारस्य च । अनन्यत्वाच्च । अनन्याकृतिरकारस्याऽऽकारस्य च । अनेकान्तो ह्यनन्यत्वकरः । यो ह्यनेकान्तेन भेदो नासावन्यत्वं करोति । तद्यथा । न यो गोश्च गोश्च भेदः सोऽन्यत्वं करोति । यस्तु खलु गोश्चाऽश्वस्य च भेदः सोऽन्यत्वं करोति । अपर आह । सवर्णेऽण्ग्रहणमपरिभाष्यमाकृतिग्रहणादनन्यत्वम् । सवर्णेऽण्ग्रहणमपरिभाष्यम् । आकृतिग्रहणादनन्यत्वं भविष्यति । अनन्याकृतिरकारस्याऽऽकारस्य च । अनेकान्तो ह्यनन्यत्वकरः । यो ह्यनेकान्तेन भेदो नासावन्यत्वं करोति । तद्यथा । न यो गोश्च गोश्च भेदः सोऽन्यत्वं करोति यस्तु खलु गोश्चाश्वस्य च भेदः सोऽन्यत्वं करोति ॥

॥ कै० ॥ कृशे स्थूलेऽपि च गोपिण्डे गोत्वयोगः । यो हीति । अभेदस्यापि प्रत्यभिज्ञानात्सद्भाव इत्यर्थः ॥

॥ वि० ॥ अभेदेन सामानाधिकरण्य इतिभावः । तदाह । अभेदस्यापीति । प्रत्यभिज्ञानादिति । स एवायमितिप्रत्यभिज्ञानादित्यर्थः । अकारोऽकार इत्येकाकारप्रत्ययाच्चेत्यपि बोध्यम् । नासावन्यत्वमिति । भेदप्रतीतिमेवेत्यर्थः ॥

७६६

॥ वि० ॥ प्राणीति । यद्यपि प्राणित्वं न जातिस्तथापि साधारणधर्मत्वाभिप्रायेणोक्तम् । गवाश्वरूपेति । गोत्वाश्वत्वरूपेत्यर्थः । परे तु ह्रस्वषड्भेदहत्त्येव अत्वं दीर्घषड्भेदहत्त्येवात्वमित्यादिर्नन्नुचेति भाष्याशयः । सकलव्यापकमत्वमप्यस्तीत्युत्तरम् । ननु व्यापकजात्यैक्येऽपि व्याप्यजात्या भेदोऽप्यस्तीत्यत आह । अनेकान्तो हीति । व्यापकधर्मेण समानाधिकरणव्याप्यधर्मकृतो भेदः केवलभेदबुद्धिं करोतीत्यर्थ इत्याहुः । ननु जातिनिर्द्देशे अष्टन आ इत्यादावपि तन्निर्द्देशादकारादयः स्युर्यत्नाधिक्यं तूभयार्थं स्यात् । ह्रस्वोच्चारणे तु अर्द्धमात्रिकेन तस्यान्तरतम्याद् ह्रस्व एव स्यादत आह । अष्टन इति । दीर्घव्यक्तीति ।

॥ कै० ॥ यस्त्विति । अत्रापि यदा प्राणी न हन्तव्य इतिप्राणित्वेनाश्रयणं तदा अभेद एव गवाश्वरूपाश्रये तु भेद इतिभावः । अष्टन आ विभक्तावित्यत्र तु यत्नाधिक्याद्दीर्घव्यक्तिसमवेतं सामान्यं गृह्यते । यथा पूर्ववया ब्राह्मणः प्रत्युत्थेय इति विशिष्टव्यक्तिस्थं ब्राह्मण्यमाश्रीयते । अपर आहेति । व्यक्तिरेव शब्दार्थः । जातिस्त्वशब्दार्थोऽप्यभेदप्रत्ययहेतुरस्तीति सर्वथा व्यक्तीनामभेदाश्रयणादेकव्यक्तिनिर्द्देशेऽपि सर्वव्यक्तीनां ग्रहणं सिध्यतीत्यर्थः । अत्र पक्षे आकृतिग्रहणमाकृतेरेकाकारप्रत्ययनिमित्तत्वेन प्रतिपत्तिरुच्यते ॥

॥ वि० ॥ व्यक्तेरुपलक्षणत्वे आन्तरतम्याद्ध्रस्व एव स्यादिति यत्नाधिक्यानर्थक्यं तदवस्थमितिविशेषणत्वमेव तस्या इतिभावः । अत्वातिरिक्तमात्वादि नास्त्येवेति तात्पर्य्यम् । केचित्तु दीर्घषड्भेदहत्त्यात्वजातेरेवात्वव्याप्यायास्तत्र निर्द्देश इतिवदन्ति । अशब्दार्थ इति । शब्दजन्यप्रतीतिविशेष्यत्वाभाववानित्यर्थः । यद्वा । शक्यतावच्छेदकत्वेऽप्यशक्य इत्यर्थः । सर्वव्यक्तीनामिति । जातिवैशिष्ट्येन प्रत्येकहत्ति परस्परभेदत्यागपूर्वकमभेदेनैकरूप्येणाऽऽश्रयणाज्जात्याक्रान्तसर्वव्यक्तीनां ग्रहणं सिध्यतीत्यर्थः । पूर्ववार्त्तिकेऽणग्रहणाकरणे आकृतिग्रहणं हेतुः । आकृतेरपि भेदशङ्कायामनन्यत्वाच्चेतिवार्तिकखण्डः । अपरमते अणग्रहणाकरणे सर्वव्यक्तीनामनन्यत्वं हेतुरनन्यत्वे आकृतिग्रहणम् । आकृतेर्ग्रहणं विशेषणत्वेनाश्रयणं रूपसामान्यादित्ययमाकृतिग्रहणादित्यस्यार्थोऽपरमत इत्येके ॥

७६७

॥ वि० ॥ जात्याश्रयणमावश्यकमित्याह । तदच्चेति । पूर्वा परा वेति । उभयोरपि झल्त्वं न स्यात् । अन्यतरस्य प्रत्याहारसूत्रोपात्तादन्यत्वादितिभावः । अवात्तामिति । वसेर्लुङि तसस्तामि हट्टौ सः सीति तत्वे झलो झलीति सिज्लोपे रूपम् । ननु झल इति सूत्रं कचरितार्थमत आह । अबुद्धेति । बुधेर्लुङि रूपम् । भेद एवेति । व्यक्त्योः परस्परं भेद एवेतिभावः । भाष्येऽनेकान्त इति । उपात्ताभेदकधर्म-

॥ कै० ॥ तदच्चेति । यथाऽऽकृतिग्रहणादणसु कार्यं सिध्यति तथा हल्ष्वपि आकृतिग्रहणादेव सिध्यति । व्यक्तिनिर्द्देशपक्षे तु एकैव तकारव्यक्तिर्झल्व्यपदेशमासादयेत् पूर्वा परा वेत्यवात्तामितिलोपो न स्यात् । अबुद्धेत्यादावेव तु स्यात् । धातुप्रत्ययावयवयोस्तकारयोर्भेद एवेतिचेत् । तत्राह । अनेकान्त इति । द्रुतेति । हल्ग्रहणेष्वेवेदमुच्यते । यत्रैतन्नास्ति । अण् सवर्णान्

॥ भा० ॥ तदच्च हल्ग्रहणेषु । एवञ्चकृत्वा हल्ग्रहणेषु सिद्धं भवति । झलो झलि । अवात्ताम् । अवात्तम् । अवात्त । यत्रैतन्नास्ति । अण् सवर्णान् गृह्णातीति । अनेकान्तो ह्यनन्यत्वकर इत्युक्तार्थम् । द्रुतविलम्बितयोश्चानुपदेशान्मन्यामहे । आकृतिग्रहणात् सिद्धमिति । यदयं कस्याञ्चिद्वृत्तौ वर्णानुपदिश्य सर्वत्र कृती भवति । अस्ति प्रयोजनमेतत् । किं तर्हीति । वृत्तिपृथक्त्वं तु नोपपद्यते । वृत्तेः पृथक्त्वं नोप पद्यते । तस्मात्तपरनिर्द्देशात्सिद्धम् । तस्मात्तत्र तपरनिर्द्देशः कर्तव्यः । न कर्तव्यः ॥

॥ कै० ॥ गृह्णातीति । अणसु तु व्यक्तिनिर्द्देशेऽपि ग्रहणकशास्त्रेण स्यादेव वृत्तिभिन्नस्य ग्रहणम् । वृत्तिपृथक्त्वमिति । ह्रस्वदीर्घादिप्रमाणलक्षणापि वृत्तिर्न भेदिका स्यादिति खट्वाभिरित्यैस् प्रसज्येतेतिभावः ॥

॥ वि० ॥ समानाधिकरणो भेदकधर्म इत्यर्थः । प्रकृतेऽभेदकधर्मस्तत्वम् । प्रयोगार्थं तु मध्यमेत्युक्तेर्द्रुतविलम्बितयोरित्युक्तम् । ह्रस्वदीर्घादीति । वृत्या कालप्रमाणेन पृथक्त्वमिति तृतीयासमास इतिभावः । भाष्ये तु शेषविवक्षया पष्ठी चेतौ पञ्चमी वा ॥

॥ वि० ॥ आकृतिग्रहणादिति । तदुक्तमइउण्सूत्रे भाष्ये तदत्र तपरकरणम् एवञ्च कृत्वा तपराः क्रियन्ते आकृतिग्रहणेनातिप्रसक्तमितिकृत्वेति । एकाकृतियोग इति । तन्मात्रनिष्ठेत्यादिः । उदिदिति कुचुटुतुपूनां प्राचां संज्ञा तयेहापि व्यवहारः । ननु सर्वत्रैतत्संज्ञा प्राप्नोति । अनुवादे तदप्राप्तेरितिबोध्यम् । नन्वण्ग्रहणप्रत्याख्यानेऽनुवादेष्विव विधावपि जातिनिर्देशात्सर्वग्रहणप्रसङ्ग इत्यत आह । भाव्यमानेष्विति । यथाश्रुतमिति । जातिविशेषावच्छिन्नव्यक्तिविशेषरूपमित्यर्थः । उत्पत्तिवाक्यत्वादिति । विधिवाक्यत्वादित्यर्थः । विधौ हि प्रमित्सितत्वाद्विशिष्टोपादानेन वाक्यार्थभेदोऽनुवादे त्वेतस्य सिद्धत्वेनाऽप्रमित्सितत्वात्तद्विशेषणोपादानं न वाक्यभेदमन्तरेण भवति सचाऽन्याय्य इतिभावः । यत्तु क्वचिद्विधावपि व्यक्त्यन्तरस्योपादानं तद्विव उदित्यादौ तपरत्वाक्षिप्तादिति

॥ कै० ॥ क्रियत इति । अवश्यकर्तव्यतां दर्शयति व्यक्तिपक्षेऽण् सवर्णान् गृह्णातीतिप्रसङ्गः । सूत्रप्रत्याख्याने त्वाकृतिग्रहणात् । उदिद्ग्रहणं कर्तव्यमेव नहि वर्ग्याणामेकाकृतियोगोऽस्ति । कृते तु सूत्रे कुहोश्चुरित्यादौ भाव्यमानस्य उदित्त्वसामर्थ्याद्प्रत्यय इति निषेधो नावतरतीत्यण्स्वेवायं निषेधः । प्रत्याख्यानपक्षे भाव्यमानेषु यथाश्रुतं रूपमूह्यत इत्याकृतिग्रहणेऽपि भिन्नकालानां ग्रहणं न भवति यथा

॥ भा० ॥ क्रियते न्यास एव । अतो भिस ऐसिति । अणुदित्सवर्णस्य चाप्रत्ययः ॥ ❁ ॥

॥ कै० ॥ पशुना यजेत पशुमालभेत्युत्पत्तिवाक्यत्वात् संख्या विवक्ष्यते । उदात्तादयस्त्वभेदका इत्युक्तम् । अनुवादे तु नान्तरीयकत्वादेकव्यक्त्युच्चारणेऽपि सकलव्यक्तिग्रहणम् । यथा ग्रहं सम्मार्ष्टीति सर्वेषां ग्रहाणां प्राजापत्या नवग्रहा इत्यादिभ्यो ज्ञातानां संमार्जनम् ॥ ❁ ॥

॥ वि० ॥ द्रष्टव्यमित्याहुः । नान्तरीयकत्वादिति । अनेन नान्तरीयकविशेषणविषय एव विवक्षाऽविवक्षाविचारं प्रतिध्वनयति । अत एव न श्रेयांसं प्रबोधयेदित्यादौ अनुवाद्यविशेषणश्रेयस्त्वादेर्विवक्षायामपि न दोषः । वस्तुतोऽत्र व्याख्यानमेव शरणम् । नान्तरीयकसंख्यालिङ्गविषयन्यायस्य प्रधानव्यक्तिविषयकत्वानौचित्यात् । उपेयिवानित्यादौ उपेत्यविवक्षाया नञो विवक्षायाश्च दर्शनात् । ऋकारेण लृकारग्रहणाय तु लृवर्णस्य ऋवर्णवद्भावो वाच्य इति तात्पर्यम् । परे तु जातिपक्षेऽपि तपरसूत्रस्य जातिग्रहणप्राप्तसवर्णग्रहणनियमार्थत्वात् तत्प्रयुक्तसवर्णग्रहणनिषेधायाप्रत्यय इति पृथक्कार्यमेव । ध्वनितञ्चेदं ज्यादादीयस इति सूत्रे भाष्ये । किञ्च तत्र व्यक्तिविवक्षायां यत्रकचित् प्रयोगे एकाकारव्यक्तिः साध्वी स्याद् न प्रयोगान्तर इति व्यक्तिविवक्षया समाधानं दुर्घटमित्याहुः ॥ ❁ ॥



॥ वि० ॥ तपरस्तत्कालस्य । युजेः सम्बन्धवाचकत्वेन सम्बन्धस्योभयनिरूप्यत्वेन सम्बन्ध्यन्तराकाङ्क्षायामाह । न्यायेनेति । प्रसिद्धत्वादिति । निष्ठान्तयुजेः प्रायो न्यायसम्बन्धिन्येव प्रयोगादित्यर्थः । नन्वेवं युज्यर्थेऽन्तर्भूतत्वादप्रयोग इति कुतो नोच्यत इत्यत आह । धात्वर्थे इति । यद्ययमन्तर्भूतः स्यात्तदा न्यायेनायुक्त इति प्रयोगो न स्यादितिभावः । दण्डेनायुक्त इत्यादि च न स्यादित्यपि बोध्यम् । एतेन मेघो वर्षतीत्यादौ प्रसिद्ध्या जलमित्यादेरप्रयोगादकर्मकतेतिनव्योक्तिः परास्ता । भाष्ये प्रतिनिर्दिश्यत इति । सामानाधिकरण्येन विशेष्यत इत्यर्थः । तदित्ययञ्च वर्ण इत्यस्य साकाङ्क्षत्वादाह । परा-

॥ कै० ॥ तपरः । अयुक्त इति । न्यायेनासम्बद्ध इत्यर्थः । न्यायशब्दस्य प्रयोगः प्रसिद्धत्वान्न कृतः । कदाचित्प्रसिद्धार्थस्याऽपि प्रयोगो दृश्यते न्यायेनायुक्तमिति । धात्वर्थेऽन्तर्भूतस्य प्रयोगाभावः । न हि भवति जीवतिप्राणानिति । तदित्यनेनेति । स कालो यस्येति कालसामानाधिकरण्येन तच्छब्दोपादानात् । तदित्ययञ्च वर्ण इति । परामृष्ट इत्यर्थः । तपरशब्दवाच्यस्याऽर्थस्य

॥ भा० ॥ तपरस्तत्कालस्य । अयुक्तोऽयं निर्देशस्तत्कालस्येति । तदित्यनेन कालः प्रतिनिर्दिश्यते तदित्ययञ्च वर्णः । तत्राऽयुक्तं वर्णस्य कालेन सह सामानाधिकरण्यम् ॥

॥ कै० ॥ तच्छब्देन परामर्शात् । वर्णस्येति । वर्णवाचिनस्तच्छब्दस्येत्यर्थः । कालेनेति । कालवाचिनेत्यर्थः । कालो हि प्रसिद्धपरिमाणा क्रियाऽप्रसिद्धपरिमाणस्य क्रियान्तरस्य परिच्छेदिका यथा दिवसमधीत इति दिवसशब्देनोदयादिरस्तमयान्त आदित्यगतिप्रबन्ध उच्यते सचाऽध्ययनस्य परिच्छेदकत्वात्कालः । वर्णस्तु क्रियात्मको न भवति ॥

॥ वि० ॥ स्पष्ट इति । वर्णस्यैव परामर्शे हेतुमाह । तपरेति । तः परो यस्मादितिविग्रहेऽवध्यवधिमतोः साजात्यात्सवर्णत्वस्य वर्णनिष्ठत्वाच्च तेन वर्ण एवोच्यत इतिभावः । एकार्थवृत्तित्वरूपसामानाधिकरण्यस्य शब्दधर्मत्वात् कथं वर्णस्य कालेनेति भाष्यमत आह । वर्णवाचिन इति । सामानाधिकरण्यानुपपत्तिप्रदर्शनाय कालस्वरूपमाह । कालो हीति । अपरिच्छिन्नस्य विभोः कालस्य व्यवहारानुपयोगित्वादाह । प्रसिद्धेति । वर्णस्त्विति । गुणरूपत्वाद् द्रव्यरूपत्वाद्वेत्यर्थः । जन्यमात्रं कालोपाधिरिति तु न युक्तं दिवसादिव्यवहारस्य सूर्यक्रियादिभिरेव दर्शनादितिभावः । एतत्कालस्वरूपकथनं कालाः परिमाणिनेतिसूत्रस्थभाष्यविरुद्धमिति तत्रैवोपपादयिष्यते ॥

॥ वि० ॥ सैवेति । तज्जातीयेत्यर्थः । तदीया क्रियेति । उच्चारणरूपेत्यर्थः । क्रियान्तरस्य । वर्णान्तरोच्चारणस्य । वर्ण एवेति । वर्णाश्रित-क्रियागतपरिच्छेदकत्वस्याऽऽश्रये उपचाराद्वर्णपरामर्शिनस्तच्छब्दस्य मुख्यवृत्तेरेव कालशब्देन सामानाधिकरण्यमित्यर्थः । पूर्वव्याख्यातो विशेष-

॥ कै० ॥ तस्य काल इति । यैव एकस्य वर्णस्य परिच्छेदिका क्रिया निमेषादिः सैव यस्य परस्य स तत्कालकालः । उष्ट्रमुख इति । गम्यमानार्थत्वाद् द्वितीयमुखशब्दाऽप्रयोगः । उष्ट्रो मुखमस्योष्ट्रमुखः । न च प्राणी प्राण्यन्तरस्य मुखमिति सामर्थ्यात्सा-दृश्यप्रतीतिः । समग्रेण चोष्ट्रेण मुखस्य सादृश्याभावादुष्ट्रशब्दोऽवयवे वर्त्तते मुखेनैव मुखस्य सादृश्यं प्रसिद्धमिति सामर्थ्यादुष्ट्रमु-

॥ भा० ॥ कथन्तर्हि निर्देशः कर्त्तव्यः । तत्कालकालस्येति । किमिदं तत्कालकालस्येति । तस्य काल-स्तत्कालः । तत्कालः कालो यस्येति सोऽयं तत्कालकालस्तत्कालकालस्येति । स तर्हि तथा निर्देशः कर्त्तव्यः । न कर्त्तव्यः । उत्तरपदलोपोऽत्र द्रष्टव्यः । तद्यथा । उष्ट्रमुखमिव मुखमस्य सोऽयमुष्ट्रमुखः । एवं तत्काल-कालस्तत्कालस्तत्कालस्येति । अथवा साहचर्यात्ताच्छब्द्यं भविष्यति । कालसहचरितो वर्णः । वर्णोऽपि काल एव । किं पुनरिदं नियमार्थम् । आहोस्वित् प्रापकम् । कथञ्च नियमार्थं स्यात् कथं वा प्रापकम् । यद्यत्राऽण्ग्रहणमनुवर्त्तते ततो नियमार्थम् । अथ निवृत्तं ततः प्रापकम् । कश्चात्र विशेषः ॥

॥ कै० ॥ खमिव मुखमस्येत्यर्थो गम्यते । एवमिहाऽपि वर्णः कालो न भवतीति सामर्थ्यात्तदीया क्रिया क्रियान्तरपरिच्छिन्ना सती क्रियान्तरस्य परिच्छेदिकेति वर्ण एव परिच्छेदक उच्यते । अथवेति । वर्णसहचरितायां क्रियायां तच्छब्दो वर्त्तते स कालो यस्येति तद्वर्णसमवेता क्रिया परिच्छेदिकाऽस्येत्यर्थः । यथाऽश्मादि द्रव्यं द्रव्यान्तरपरिच्छिन्नं सुवर्णादीनां परिच्छेदकं तद्वत् क्रियापीत्यर्थः ॥

॥ वि० ॥ माह । वर्णसहेति । अनेन लक्षणाबीजं सम्बन्धो दर्शितः । क्रियायाः परिच्छेदकत्वं सापेक्षं न स्वत इति दृष्टान्तेनाह । यथेति । भाष्ये प्रापक-मिति । स्वतन्त्रविधायकमित्यर्थः ॥



॥ वि० ॥ षण्णामिति । अनुनासिकाकारस्य वृद्धिसंज्ञायां फलाभावादवसाने तदभावाच्चेदं चिन्त्यम् । अत एव वार्त्तिके स्वरभिन्नेत्येवोक्तं न तु गुणभिन्नेति । भाष्येऽप्युदात्तानुदात्तस्वरितानामित्येव पाठः । ननु तत्र तपरत्वसामर्थ्यादस्य सूत्रस्याऽऽवृत्तिमङ्गीकृत्याऽऽवृत्तस्याण्ग्रहणाननुवृ-त्त्या विध्यर्थत्वान्न दोष इत्यत आह । तपरकरणमिति । नन्वाकडारादन्यत्र संज्ञासमावेशदर्शनाद्विप्रतिषेधादित्ययुक्तमत आह । विरोधो हीति । न हि संज्ञासमावेशे संज्ञात्वं प्रयोजकं किन्तु विरोधाभाव इतिभावः । संख्याकृतव्यवहारस्य परस्परपरिहारेणैव दृष्टत्वादत्र युगपदसंभवरूपो विरोध इति तात्पर्य्यम् । तपरत्वसामर्थ्यात्

॥ कै० ॥ दीर्घग्रहण इति । भेदका उदात्तादय इतिभावः । तत्र वृद्धिरादैजिति षण्णामाकाराणां वृद्धिसंज्ञेष्यते एकस्यैव तु दी-र्घस्य स्यात् तपरकरणं त्वैजर्थमेव स्यात् । ह्रस्वग्रहण इति । अतो भिस ऐस् इत्यकारग्रहणे पूर्वसूत्रेण दीर्घप्लुतयोर्ग्रहणं प्राप्नोति । इदं

॥ भा० ॥ तपरस्तत्कालस्येतिनियमार्थमितिचेद्दीर्घग्रहणे स्वरभिन्नाग्रहणम् । तपरस्तत्कालस्येतिनियमार्थमिति चेद्दीर्घग्रहणे स्वरभिन्नानां ग्रहणं न प्राप्नोति । केषाम् । उदात्तानुदात्तस्वरितानुनासिकानाम् । अस्तु तर्हि प्रापकम् । प्रापकमितिचेद् ह्रस्वग्रहणेदीर्घप्लुतप्रतिषेधः । प्रापकमितिचेद् ह्रस्वग्रहणे दीर्घप्लुतयोः प्रतिषेधो वक्तव्यः । न वक्तव्यः । विप्रतिषेधात् सिद्धम् ॥

॥ कै० ॥ हि सूत्रमनण्ग्रहणे चरितार्थम् । विप्रतिषेधादिति । विरोधो ह्यत्र विद्यते यदि पूर्वसूत्रेणाकारः सवर्णानां ग्राहकस्तदा-ष्टादशानां ग्रहणप्रसङ्गोऽनेन तु षण्णाम् । तत्र परत्वादनेनैव तपरोऽण् सवर्णानां तत्कालानां स्वरूपस्य च ग्राहकः । नन्वत इति तकारोच्चा-रणसामर्थ्यादनेनैव ग्रहणं भविष्यति किं विप्रतिषेधाश्रयेण । नैतदस्ति । मुखसुखार्थस्यापि तकारस्य दर्शनात् । ऋत इद्धातोरिति यथा ॥

॥ वि० ॥ प्रतिलक्ष्यं लक्षणभेदाच्चातो भिस इत्येतद्विषयं तपर इति लक्षणमनवकाशमिति न युक्तो विप्रतिषेध इति शङ्कते । अत इतीति । तपरत्वस्य संदिग्धत्वाद् विप्रतिषेधोपपत्तिरित्युत्तरयति । नैतदिति । ऋत इति । अत्र भाव्यमानत्वेन सवर्णाग्राहकत्वाद्यथा तपरत्वं मुखसुखार्थं तथेत्यर्थः । ऋत इतितपरत्वं तु गुणान्तरयुक्त-संग्रहार्थम् । अन्यथोदात्तोच्चारणे जीर्ण इत्यत्र क्ते प्रत्ययसंनियुक्ताद्युदात्तत्वे शेषनिघाते चोदात्तत्वाभावान्न स्यात् । अनुदात्तोच्चारणे जीर्य्यतीत्यत्र न स्यादितिभावः ॥

॥ वि॰ ॥ भिन्नकालानिति । परत्वेन पूर्वसूत्रबाधादितिभावः । अप्राप्तिरेवात्र निवृत्तिः । भाष्ये यद्येवमित्यस्य एतद्विषये पूर्वसूत्राप्रवृत्ता-वित्यर्थः । यस्यां वृत्तौ तपरकरणं तदन्यत्र वृत्तौ प्रयोगे ऐसादीनामुपसंख्यानं कार्यमितितात्पर्य्यम् । अभ्यासार्थे द्रुता वृत्तिः प्रयोगार्थे तु मध्यमा शिष्याणामुपदेशार्थं वृत्तिरिष्टा विलम्बितेति वृत्तिषु उपलभ्यय एव भिन्नकाला वर्णास्तु तत्काला एवेत्यभिसन्धाय भाष्ये किं पुनरितिप्रश्नः । तत्तत्कालावच्छिन्नता-

॥ कै॰ ॥ यद्येवमिति । यद्ययं योगस्तत्कालान् प्रतिपादयन् भिन्नकालान् निवर्तयतीत्यर्थः । त्रिभागाधिका इति । द्रुतं श्लोकस्यचं

॥ भा॰ ॥ अण् सवर्णान् गृह्णातीत्येदस्तु तपरस्तत्कालस्येत्येतद्भवति विप्रतिषेधेन । अण् सवर्णान् गृह्णातीत्य-स्यावकाशः । ह्रस्वा अतपरा अणः । तपरस्तत्कालस्येत्यस्यावकाशः । दीर्घास्तपराः । ह्रस्वेषु तपरेषूभयं प्राप्नोति । तपरस्तत्कालस्येत्येतद्भवति विप्रतिषेधेन । यद्येवं द्रुतायां तपरकरणे मध्यमविलम्बितयोरुपसंख्यानं कालभेदात् । द्रुतायां तपरकरणे मध्यमविलम्बितयोरुपसंख्यानं कर्त्तव्यं तथा मध्यमायां द्रुतविलम्बितयोस्तथा विलम्बितायां द्रुतमध्यमयोः । किं पुनः कारणं न सिध्यति । कालभेदात् । ये द्रुतायां वृत्तौ वर्णास्त्रिभागाधिकास्ते मध्यमायाम् । ये च मध्यमायां वर्णास्त्रिभागाधिकास्ते तु विलम्बितायाम् ॥

॥ कै॰ ॥ वोच्चारयति वक्तरि नाडिकाया यस्या नव पानीयपलानि स्रवन्ति तस्या एव मध्यमायां वृत्तौ द्वादश पलानि स्रवन्ति । नवानां त्रिभागास्त्रीणि पलानि तदधिकानि नव द्वादश सम्पद्यन्ते विलम्बितायां तु वृत्तौ षोडश पलानि स्रवन्ति ॥

॥ वि॰ ॥ त्वोष्ठपुटव्यापारजन्या भिन्नकाला एवेत्याशयेन कालभेदादित्युत्तरम् । त्रिभागाधिका इति । तृतीयभागाधिका इत्यर्थः । कैयटात्तथा प्रतीतेः । त्रयो भागा अधिका इत्यर्थस्तूचितः । केवलसंख्यावाचकानां पूरणप्रत्ययान्तार्थकत्वे मानाभावात् । तत्रासाधुत्वाच्चेतिपरे । यस्या नाडिकाया इति । सुषुम्णाया इत्यर्थः । पलानि । बिन्दवः । ब्रह्माण्डसम्बद्धा साऽमृतबिन्दुस्राविणीतिप्रसिद्धिर्योगिनाम् ॥



॥ वि॰ ॥ भाष्ये सिद्धं त्विति । उत्पत्तिपक्षेऽपि उपलब्धीनामेव कालभेदाद् वृत्तिवैविध्यम् । वर्णास्तु वृत्तिभेदेऽप्येकरूपा एवेति भावः । अवस्थिताः । नियतकालाः । चिराचिरवचनात् । चिराचिरकालोच्चारणजनकयत्नाद् जायमानवैकृतध्वनेरुपलब्धीनामेव भेद इतिभावः । उपचयापचयौ कालवृद्धिह्रासौ । अलस्यादिभेदादिति । आलस्यादिना गतिक्रियाया भेदेऽपि यथा न मार्गभेदस्तथाऽऽलस्यादिनोच्चारणक्रियातो वैकृतध्वनिभेदेऽपि न वर्णस्वरूपभेद इतिभावः । तद्भेदे । प्रयत्नभेदे । तद्भेदेनेति तृतीयान्तः क्वचित्पाठः । वृत्तिभेदात् । द्रुतादिवृत्तिभेदात् । भिन्नकाला एवेति । चिराचि-

॥ कै॰ ॥ सिद्धं त्विति । सर्वासु वृत्तिषु न वर्णानामपचयापचयौ । यथा गन्तॄणामालस्यादिभेदात् गतिभेदेऽपि न मार्गभेद इत्यर्थः । विषम इति । वर्णाः प्रयत्नजन्याः । तद्भेदे वृत्तिभेदाद्भिन्नकाला एव । अध्वा तु व्यवस्थित एव न गन्तृक्रियाजन्यः ।

॥ भा॰ ॥ सिद्धं त्ववस्थिता वर्णा वक्तुश्चिराचिरवचनाद्वृत्तयो विशिष्यन्ते । सिद्धमेतत् । कथम् । अवस्थिता वर्णा द्रुत-मध्यमविलम्बितासु । किंकृतस्तर्हि वृत्तिविशेषः । वक्तुश्चिराचिरवचनाद् वृत्तयो विशिष्यन्ते । वक्ता कश्चिदाश्वभिधायी भवति आशु वर्णानभिधत्ते कश्चिच्चिरेण कश्चिच्चिरतरेण कश्चिच्चिरतमेन । तद्यथा । तमेवाध्वानं कश्चिदाशु गच्छति कश्चिच्चिरेण कश्चिच्चिरतरेण कश्चिच्चिरतमेन । रथिक आशु गच्छति आश्विकश्चिरेण पदातिश्चिरतरेण शिशुश्चिरतमेन । विषम उपन्यासः । अधिकरणमत्राऽध्वा व्रजिक्रियायाः । तत्राऽयुक्तं यदधिकरणस्य वृद्धिह्रासौ स्याताम् । एवन्तर्हि स्फोटः शब्दः ॥

॥ कै॰ ॥ एवन्तर्हीति । व्यक्तिस्फोटोऽत्र विवक्षितः स च नित्यः । एतच्च येनोच्चारितेनेत्यत्र पस्पशायां विचारितमिति तत एव बोद्धव्यम् ॥

॥ वि॰ ॥ रोपलब्ध्युपयोगिवृद्धिह्रासयुक्ता एवेत्यर्थः । अयं भावः । उत्पत्तिवादिनो वर्णोत्पत्तिं प्रत्युच्चारणव्यापारस्य कारणत्वात् तावत्तावत्काला-वच्छिन्नोच्चारणेन ह्रस्वदीर्घादेरिव द्रुतादेरपि तावत्कालस्यैवोत्पत्तिः स्यात् । नचाऽनुनिष्पादी ध्वनिरेव तत्कालो न तु वर्ण इतिवाच्यम् । विनिगमनाविरहादिति । अतो नित्यमतिरिक्तं स्फोटमादाय समाधत्ते । भाष्य एवं तर्हीति । अत्रेति । भाष्य इत्यर्थः । सच नित्य इति । आकाशादिवदितिभावः । ननु स्फोटोऽसिद्धस्तन्नित्यत्वञ्चेत्यत आह । एतच्चेति । स एवायमकार इतिप्रत्यभिज्ञानाद् एकं पदमिति प्रत्ययाच्च तत्सिद्धिरित्यन्यत्र विस्तरः ॥

॥ वि० ॥ ननु ध्वनिरपि शब्दविशेष एव स कथं शब्दगुणोऽत आह । शब्दस्येति । व्यञ्जकत्वेन स्फोटोपलब्धिप्रतिबन्धकस्तिमितवाय्वपसरणद्वारा स्वधर्मरूषिततदुपलब्धिहेतुत्वेनेत्यर्थः । तद्विषयायाः पुनः पुनरुपलब्धेर्नैरन्तर्येऽपि न वर्णभेद इति दृष्टान्तेनोपपादयति । तद्य-थेति । पुनः पुनरुपलम्भोऽविच्छेदेन दर्शनम् । ह्रस्वदीर्घेत्यादि । तमेवायं विलम्बितमुच्चारितवानन्यो द्रुतमितिवदिह व्यक्तिप्रत्यभिज्ञानाभावादितिभावः । एवञ्च परिदृश्यमानकालभेद उपलब्धिगत एवेति तात्पर्य्यम् । अत्रेदं बोध्यम् । एक एव स्फोटस्तत्तद्वर्णैस्तत्तद्रूपेणाऽभिव्यज्यते । ध्वनिः शब्दगुण इति भाष्ये ध्वनिशब्देन वर्णा वैकृतध्वनिश्च । तत्र वैकृतध्वनेः स्फोटस्य तत्तद्रूपेण पुनः पुनरभिव्यक्तिः कार्यमिति तदभिव्यक्तस्फोटस्य तत्कालत्वमेव । ह्रस्वदीर्घप्लुतरूप-स्फोटस्तु भिन्नकालावच्छिन्नैर्विजातीयैर्ध्वनिभिरभिव्यक्तो भिन्न एव लौकिकैर्ध्वनिगतभेदेन तद्भेदस्यापि संप्रत्ययात् । कैयटे ह्रस्वदीर्घप्लुतास्तु स्वत एव भिन्ना

॥ कै० ॥ शब्दगुण इति । शब्दस्य गुणः उपकारको व्यञ्जकत्वेनेत्यर्थः । तद्यथा । घटः पुनः पुनर्दृश्यमानोऽपि न भेदमवलम्बते तथा विलम्बितायां दृत्तावकार एव पुनः पुनरुपलभ्यत इति

॥ भा० ॥ ध्वनिः शब्दगुणः । कथम् । भेर्याघातवत् ॥

॥ कै० ॥ दृत्तिभेदेऽपि वर्णस्य भेदो न गृह्यते इति सर्वदृत्तिषु तत्कालत्वम् । ह्रस्वदीर्घप्लुतास्तु स्वत एव भिन्ना भिन्नैर्ध्वनिभिर्व्यज्यन्त इति तेषां कालभेदः ॥

॥ वि० ॥ इत्यस्य व्यञ्जकभेदेनाऽऽरोपितभेदा एव भिन्नैर्ध्वनिभिर्वर्णैर्व्यज्यन्त इत्यर्थः । विलम्बितादिदृत्तौ तु स्फोट एकजातीय एव । ध्वनिकृता दृद्धि-रित्यस्य वैकृतध्वनिकृतोपलब्धिकालदृद्धिरित्यर्थः । वर्णोपरागाभिव्यक्तिजनकयत्नीयकालोपरागेणैव स्फोटस्य भानम् । अत एवाऽस्य प्राकृतत्वेन व्यवहारः । अयं तु वैकृतः । तच्चं चालस्यादिकृतत्वात् । वर्णाभिव्यक्त्युत्तरकालस्थायम् । अयं तूपलब्धेरेव पौनः पुन्ये कारणम् । पौनःपुन्यञ्चाविच्छेदेनोपलब्धि-धारामात्रेण न तु विच्छिद्योपलब्ध्या । एतदवच्छिन्नत्वेन तु न स्फोटोपलब्धिः । ह्रस्वाकार एवायमितिप्रत्यभिज्ञानात् । आरोपे सति निमित्तानुसरणं नतु निमित्तमस्तीत्यारोप इति न्यायात् । उत्पत्तिवादिनां त्विवं वक्तुमशक्यमिति स्पष्टमेवेति ॥



॥ वि० ॥ ननु भेर्याघातो भेरीदण्डादिसंयोगविशेषः स कथं गच्छेदत आह । भेरीमिति । कर्मण्यणितिभावः । भाष्ये आहत्य तं शब्द-मुपलभमान इतिशेषः । ननु दृष्टान्ते ध्वनेरुपलभ्यमानस्य भेदो न तथेह वर्णस्य द्रुतादिष्विति वैषम्यमत आह । उपलब्धिसामान्ये इति । यथा तत्र तस्य ध्वनेस्तावत्कालमुपलम्भस्तथेहापि तत्तद्दृत्तौ तावत्तावत्कालं तत्तदभिव्यञ्जकरूपरूषितत्वेन परिच्छिन्नस्यैव स्फोटस्योपलम्भमात्रमित्येतावत्येव दृष्टान्तः । नचैतावता स्फोटभेद इति तात्पर्यम् । ननु भेर्याघातस्थले स्फोटाभावात् स्फोटस्तावानेवेत्यनुपपन्नमत आह । दार्ष्टान्तिकेति । भाष्ये ध्वनिः स्फोटश्च । स्त इति शेषः । किन्तदित्यत आह । शब्दानामिति । व्यञ्जकत्वेन । उपलब्धिजनकत्वेन । वैकृतध्वनेरप्युपलब्धिपौनःपुन्यकारणत्वाद्व्यञ्जकत्वमिति भावः । तदुपक्र-मेणैव भाष्यप्रवृत्तेस्तदुभयं स्वभावतः सिद्धमिति शेषः । नतु तत्र प्रमाणान्तरापेक्षेति भावः । योगिप्रत्यक्षसिद्धं चैतदुभयमितितात्पर्यम् । इदमेव कैयटेन प्रमाणे-

॥ कै० ॥ भेर्याघात इति । भेरीमाहन्तीति भेर्याघातः । उपलब्धिसामान्ये दृष्टान्तः । यथा प्रयत्नवशादुत्पन्नो भेरीशब्दः कश्चिदल्पकालमुपलभ्यते कश्चिच्चिरं कश्चिच्चिरतरञ्च एवं दृत्तिषूपलब्धीनां कालभेदो विषयस्य त्वभेद एव । स्फोटस्तावानेवेति ।

॥ भा० ॥ तद्यथा भेर्याघातः । भेरीमाहत्य कश्चिद्विंशतिपदानि गच्छति कश्चित्त्रिंशत् कश्चिच्चत्वारिंशत् स्फोटस्तावानेव भवति ध्वनिकृता दृद्धिः । ध्वनिः स्फोटश्च शब्दानां ध्वनिस्तु खलु लक्ष्यते । अल्पो महांश्च केषाञ्चिदुभयं तत्स्वभावतः । तपरस्तत्कालस्य ॥ ❁ ॥

॥ कै० ॥ दार्ष्टान्तिकोपन्यासः । ध्वनिः स्फोटश्चेति । व्यञ्जको व्यङ्ग्यश्चेत्यर्थः । शब्दानां व्यङ्ग्यानां सम्बन्धी व्यञ्जकत्वेन यो ध्वनिः स एव महानल्पश्च लक्ष्यते व्यङ्ग्यस्त्वभिन्नकाल एवेत्यर्थः । उभयमिति । व्यङ्ग्यो व्यञ्जकश्च प्रमाणेन स्वभावतः स्वरूपेण सिद्धावित्यर्थः । केषाञ्चिदिति । व्यक्तानामुभयं गृह्यते अव्यक्तानान्तु ध्वनिरेव ॥ ❁ ॥

॥ वि० ॥ नेत्यनेनोक्तम् । वस्तुतस्तु भेर्याघातस्थलेऽपि स्फोट एव भेरीताडनाभिव्यक्तः श्रोत्रग्राह्यः शब्दानाञ्चिराचिरोपलब्धिकराल्पत्वमहत्त्ववान् वैकृतध्वनि-रेवाल्पत्वादिना लक्ष्यते । महत्त्वञ्चिरकालत्वम् । वैकृतध्वनिस्फोटयोः प्रमाणमाहोभयं तदिति । तदुक्तं हरिणा । वर्णस्य ग्रहणे हेतुः प्राकृतो ध्वनिरिष्यते । ग्रहणे तत्तत्कालकत्वेन ग्रहणे । दृत्तिभेदे निमित्तत्वं वैकृतः प्रतिपद्यते इति । शब्दस्योर्द्धमभिव्यक्तेर्दृत्तिभेदाय वैकृत इति च । उभयमित्यावृत्त्या योजनीयम् । उभयं गृह्यत इतिशेषः । तेन व्यक्तवाचामुभयम् । अव्यक्तवाचां वर्णधर्मानाक्रान्तध्वनिरेवेत्यर्थः । ध्वनिपदेन प्राकृतवैकृतावुभावप्युच्येते । ग्रहणकर्मीभूतमुभयन्तु प्राकृ-तवैकृतध्वनिस्फोटरूपम् । वैकृतस्याल्पत्वादि चिराचिरोपलब्ध्यनुमेयमिति बोध्यम् ॥ ❁ ॥

॥ वि० ॥ आदिरन्त्येन । संज्ञयैवेति । संज्ञाबोधकेनान्त्यसमभिव्याहृतेच्छब्दसहितादिशब्देनेत्यर्थः । आक्षेपप्रकारमाह । आद्यन्त्यौचेति । यद्यप्यादिशब्दः परमावमपेक्षते अन्त्यश्च पूर्वमावं तथापि सह प्रयुज्यमानौ मध्यापेक्षाविति भावः । मध्यमानामेवेत्येवकारः सौलभ्यद्योतकः । स्वंरूपमित्यनुवर्त्तनादिति । अन्येतु आद्यन्त्यशब्दाभ्यामवयववाचकाभ्यामवयवी समुदाय आक्षिप्त इति सम्बन्धित्वेनाविशेषादादेरपि ग्रहणम् । अन्त्यस्य तु न । आचारादप्रधानत्वाल्लोपश्च बलवत्तर इत्युक्तेरन्यानुबन्धानामिवास्यापि संज्ञाकार्याभावात् । स्वशब्देन विशेषणीभूताऽन्त्यमात्रपरामर्शसम्भवेऽपि विशिष्टपरामर्शे बाधकाभावेनाप्रधानतृतीयानिर्देशादित्यनया युक्त्या न निर्वाहः । एतत्फलितार्थकथनमेव भाष्ये स्वस्य च रूपस्येति । तेन चाद्यन्त्यशब्दौ पूर्वापरशब्दवन्नावधिमच्छब्दौ किन्त्ववयवशब्दाविति

॥ कै० ॥ आदिरन्त्येन । असम्प्रत्यय इति । अप्रतिपत्तिरित्यर्थः । संबन्धिशब्दैर्वेति । संज्ञयैवाक्षिप्तः संज्ञीत्यर्थः । आद्यन्त्यौच मध्यापेक्षाविति मध्यमानामेव संज्ञित्वम् । स्वं रूपमित्यनुवर्तनात्स्वस्य च रूपस्य च । सहग्रहणादाद्यन्त्यौ समुदितौ संज्ञेतीको यणचीति

॥ भा० ॥ आदिरन्त्येन सहेता । आदिरन्त्येन सहेतेत्यसम्प्रत्ययः संज्ञिनोऽनिर्देशात् । आदिरन्त्येन सहेतेति असम्प्रत्ययः । किं कारणम् । संज्ञिनोऽनिर्देशात् । नहि संज्ञिनो निर्दिश्यन्ते । सिद्धं त्वादिरिता सह तन्मध्यस्येतिवचनात् । सिद्धमेतत् । कथम् । आदिरन्त्येन सहेता गृह्यमाणः स्वस्य च रूपस्य ग्राहकस्तन्मध्यानाञ्चेतिवक्तव्यम् । सम्बन्धिशब्दैर्वा तुल्यम् । सम्बन्धिशब्दैर्वा तुल्यमेतत् । तद्यथा । संबन्धिशब्दाः । मातरि वर्त्तितव्यम् । पितरि शुश्रूषितव्यमिति । नचोच्यते स्वस्यां मातरि स्वस्मिन् पितरीति । सम्बन्धाच्च गम्यते या यस्य माता यो यस्य पितेति । एवमिहाप्यादिरन्त्य इति संबन्धिशब्दावेतौ । तत्र सम्बन्धादेतद्गन्तव्यम् । यं प्रति य आदिरन्त्य इति च भवति तस्य ग्रहणं भवति स्वस्यच रूपस्येति ॥ ❁ ॥

॥ कै० ॥ समुदायादेव विभक्त्युत्पत्तिर्न्नादिमावात् । स्वं रूपं त्वादेरेव गृह्यते नान्त्यस्य तस्याप्राधान्यादिति दध्यत्रेति केवल एव यकार आदेशः प्रवर्त्तते न तु णकारसहितः ॥ ❁ ॥

॥ वि० ॥ सूचयतीत्याहुः । समुदायादेवेति । तस्यैव संज्ञिनार्थेनार्थवत्तया प्रातिपदिकत्वादितिभावः । ननु स्वं रूपमित्यस्यानुवृत्तौ तेनादिवदन्त्यस्यापि परामर्शः स्यात् किञ्च सहग्रहणेन संज्ञात्व इव संज्ञित्वेऽपि साहित्यापत्तावन्त्यसहितादेर्विशिष्टस्य यणितिरूपस्य संज्ञित्वे दध्यत्रेत्यादौ णकारसहितः स्यादत आह । स्वंरूपंत्विति । अत्र वदन्ति । समुदितस्य संज्ञात्वे प्रत्याहारेष्वाद्या वाचकास्तत्र ग्रहणकशास्त्रं सावकाशमिति ग्रहणकसूत्रस्थभाष्यविरोधः । टिघुभाद्येकदेशवदस्यापि ग्राहकत्वप्रसक्त्यभावात् । तस्मादाद्यवर्ण एव वाचकः । अन्त्यस्तु तात्पर्यग्राहकः सहग्रहणात्तु विशिष्टे तदारोपाद्विशिष्टाद्विभक्त्युत्पत्तिरिति द्योतकान्तरवैषम्यमिति ॥ ❁ ॥



॥ वि० ॥ येन विधिः । ननु येनेति करणे तृतीया न कर्त्तरि षष्ठ्यापत्तेः । शास्त्रे करणञ्च विशेषणमेवेत्यग्रे भाष्यकृद्वक्ष्यति । तदन्तस्येति बहुव्रीहिः । एवञ्चेको यणित्यादौ विशेष्याभावात् कथमतिव्याप्तिरत आह । शब्दानुशासनेति । वस्तुतोऽस्यार्थस्य भाष्येऽग्रे वक्ष्यमाणत्वान्नैतं पूर्वपक्षी जानातीति विशेष्यप्रदर्शनं व्यर्थम् । यत्सम्बन्धी विधिः स तदन्तस्य संज्ञेति सूत्रार्थं मत्वा शङ्का अत एवाग्रे विधेयेनापि तदन्तविधिं वक्ष्यति । विधिरिति च भावे किः । सौत्रत्वाच्च तृतीयेत्याहुः । नन्वयनमित्यादितश्चयनमित्याद्यर्थाबोधाद् अर्थाभिधानयोग्यस्यैवाऽऽदेशत्वात्कथमत्राऽऽदेशोऽत आह । प्रकरणेति । भाष्ये यथैवेति ।

॥ कै० ॥ येन । इह कस्मादिति । शब्दानुशासनप्रस्तावात् शब्दरूपमिका विशेष्यत इत्यस्ति तदन्तस्य प्रसङ्गः । येऽनेकाल इति । ततश्च चयनजयनादिष्वयनमिति प्राप्नोति । प्रकरणादिवशाच्चाचादिष्विवार्थविशेषावगतिः स्यात् । निर्दिश्यमानस्यादेशा इत्यनाश्रितं

॥ भा० ॥ येन विधिस्तदन्तस्य । इह कस्मान्न भवति इको यणचि । दध्यत्र । मध्वत्र । अस्तु । अलोऽन्त्यस्य विधयो भवन्तीत्यन्त्यस्य भविष्यति । नैवं शक्यम् । ये अनेकाल आदेशास्तेषु दोषः स्यात् । एचोऽयवायाव इति । नैष दोषः । यथैव प्रकृतितस्तदन्तविधिर्भवति एवमादेशतो भविष्यति । तत्रैजन्तस्यायाद्यन्ता आदेशा भविष्यन्ति । यदिचैवं क्वचिद्वैरूप्यं तत्र दोषः स्यात् । ब्रह्मेन्द्रः ब्रह्मोदकम् । अपिचान्तरङ्गर्बहिरङ्गे न प्रकल्प्येयाताम् ॥

॥ कै० ॥ परिहारान्तरविवक्षया । यदिचैवमिति । आङ्गुण इत्यादौ ! अत्र ह्यादित्यकारान्तो गृह्यते अचीति चाजादिस्तेन खट्वेन्द्र इत्यादाववर्णान्तस्य समुदायस्याजादेश्च गुणप्रसङ्गाद्वैरूप्यप्रसङ्गः । षष्ठीनिर्देशाच्च निर्दिश्यमानस्येत्यपि नास्ति ॥

॥ वि० ॥ एचा तदन्तविधावयादेः कार्य्यत्वम् । अयादेस्तु तदन्तविधौ साधुत्वस्यायादिना बोध्यमानतया कार्यत्वमितिविवेकः । अजादिरिति । यस्मिन् विधिरिति परिभाषणादितिभावः । षष्ठीनिर्देशादिति । पूर्वपरयोरिति षष्ठी तु साधारणीतिभावः । तदादितदन्तविध्युपस्थितिसामर्थ्याच्च तदप्रवृत्तिर्बोध्या । अत एवालोन्त्यस्येत्यादेरप्यप्रवृत्तिरित्याहुः । भाष्येऽन्तरङ्गर्बहिरङ्गे इति । वर्णमात्राश्रयत्वेन वर्णस्यान्तरङ्गत्वमिष्यते तदपि चेत्समुदायस्य न कोऽपि विशेषः स्यादितिभावः ॥

॥ वि० ॥ अन्तरङ्गलक्षणस्येत्यस्य तत्त्वाभिमतस्येत्यर्थः । बाधक इत्यस्य तव मते उभयोः समत्वेन परत्वादितिशेषः । गुणः पुगन्तेत्यनेन । गुणोऽचीति । इकारस्येतिशेषः । गुणः पञ्चकाश्रयः । ऊठ् तु चतुष्काश्रय इतिविवेकः । नानेति । अचि यण् प्रत्यये गुण इति भावः । इदं चिन्त्यम् । इयायेत्याद्यसिद्धेः । ज्ञापकासंभवाच्च । केचित्त्वत्रापि तदादितदन्तविधावस्य वार्णत्वाभावात्तद्प्रवृत्तिः सा वक्तुं चाऽशक्या । वार्णाप्रसिद्धेरिति भाष्याशयः । यद्वा तदप्रवृत्तिरनित्यत्वादुभयसं-मतेति भाष्याशय इत्याहुः । व्याहतिं निराकरोति । असतीति । सति तु तस्मिन्नान्तरङ्गत्वमितिभावः । इदं तु बोध्यम् । एवमपीगन्तशब्दाजादिशब्दमात्रापेक्षत्वं यणो

॥ कै० ॥ स्योन इति । सिवेर्बाहुलकादौणादिके नप्रत्यये गुणो वलोप ऊडिति कार्य्यत्रयप्रसङ्गः । तत्रापवादत्वादूठा वलोपो बाध्यते गुणस्त्वन्तरङ्गत्वाद्बाध्यते । गुणो ह्यङ्गसंबन्धिनीमिग्लक्षणां लघ्वीमुपधामार्द्धधातुकं चाश्रयति ऊठ् तु वकारान्तमङ्गमनुना-सिकादिञ्च प्रत्ययमित्यल्पापेक्षत्वादन्तरङ्गः । तत्र कृते गुणश्च प्राप्नोति यणादेशश्च । तत्र वर्णमात्रापेक्षत्वाद्यणादेशोऽन्तरङ्गः

॥ भा० ॥ तत्र को दोषः । स्योनः स्योना । अन्तरङ्गलक्षणस्य यणादेशस्य बहिरङ्गलक्षणो गुणो बाधकः प्रसज्येत । ऊनशब्दमाश्रित्य यणादेशो नशब्दमाश्रित्य गुणः ॥

॥ कै० ॥ प्रवर्त्तते नानाश्रयत्वाद्वार्णादाङ्गं बलीय इत्येतन्नास्ति यत्रैकाश्रये वार्णाङ्गे यथा कार इति घञाश्रये यणवृद्धी तत्रै-वास्य प्रवृत्तिः । यदि च इको यणचीत्यत्र तदन्ततदादिविधी स्यातां तदा यणादेशस्याऽन्तरङ्गत्वाभावात् परत्वाद्गुणादेशः स्यात् । अन्तरङ्गलक्षणस्येति । असति तदन्ततदादिविधित्वे योऽन्तरङ्गस्तस्येत्यर्थः । एवं बहिरङ्गलक्षणो गुण इतिव्याख्येयम् ॥

॥ वि० ॥ गुणस्य तूक्तरीत्या पदार्थपञ्चकापेक्षत्वमिति कथन्न बहिरङ्गत्वम् । तस्मात् संज्ञापेक्षं न बहिरङ्गं गुणादूठ् तु नित्यः । सिद्धान्ते ऊठि कृते यणा बाधाद्गुणो न नित्यः । इदानीं तदसिद्धिरपि दोष इतिभाष्याशय इति । एवमिति । सति तदादितदन्तविधित्वे यणा तुल्यनिमित्त इति न स बहिरङ्ग इति भावः । भाष्ये ऊनशब्दमा-श्रित्येत्यादिना यणो बहिरङ्गत्वं गुणस्यान्तरङ्गत्वं दर्श्यते । एवञ्च परत्वाद्गुणः स्यादिति कैयटश्चिन्त्यः । अनेन हि भाष्येण परिभाषायामङ्गशब्दो निमित्तपरो न तु स्थान्यादि-परोऽपीतिसूचयति । यण्निमित्तोनशब्दावयवत्वेन नशब्दस्य ततो बहिष्ट्वाभावः । गुणनिमित्तनशब्दादूनशब्दस्य बहिर्भूतोकारघटितत्वाद्यणो बहिरङ्गत्वमितिभावः ॥



॥ वि० ॥ भाष्येऽल्विधिश्चेति । स्थानिवदित्यत्र अलो जायमानो विधिरित्यर्थः । अलोऽन्त्यस्यादेशो नेति नियमेनेतिशेषः । थिन्नित्यस्येति । कदाचिदिन्नित्यस्येत्यपि बोध्यम् । सर्वथाऽऽदेशस्य स्थानिवत्त्वात्सुलोपः स्यादितिभावः । नन्वेवमनेकाल् शिदितियर्थं कदाचिदेकाल्त्वस्यापि सर्वादेशत्वसिद्धेरत आह । अनेकालिति । सर्वस्येवेति । षष्ठीनिर्दिष्टसर्वस्यैवेत्यर्थः । प्रकृतं नाम पूर्वत्र निर्दिष्टमनुवर्तमानञ्चेद् ईदूदेद्द्विवचनमित्यत्र तदन्तविधिर्न स्यादत आह । प्रस्तुत इति । प्रस्तावश्च बुद्धिसन्निधिः । भाष्ये प्रस्तुत इत्यर्थकप्रकृते इत्यस्य विशेष्ये इतिशेषः । तदन्तविधिभाज इति । तदन्तश्चासौ विधिभाक् चेति

॥ कै० ॥ अल्विधिश्चेति । अलोऽन्त्यस्येत्यत्रापि तदन्तविधिसद्भावादन्त्यालन्त्यस्य समुदायस्य कार्येण भाव्यमिति द्यौः पन्था इत्यत्रालोऽन्त्यस्यादेशो न प्राप्नोतीत्यर्थः । तत्र कदाचित्पथिन्नित्यस्याकारः स्यात् कदाचित् थिन्नित्यस्य । अनेकाल् शित्सर्वस्येत्येतत्तु सर्वस्येवेति नियमार्थं स्यात् । प्रकृत इति । प्रस्तुते । प्रस्तावश्च क्वचित्साक्षात् तदन्तविधिभाजो निर्देशात् । यथेदूदेद्द्विवचनं प्रगृह्यमित्यत्र द्विवचनस्य । क्वचिदधिकारात् यथेरजित्यत्र

॥ भा० ॥ अल्विधिश्च न प्रकल्पेत । द्यौः पन्थाः स इति । तस्मात् प्रकृते तदन्तविधिरिति वक्तव्यम् । न वक्तव्यम् । येनेति करण एषा तृतीया ॥

॥ कै० ॥ धातोः । क्वचिदाक्षेपात् यथेको झलित्यत्र सना धातोः । करण एषेति । विधिशब्दः कर्म्मसाधनो येन करणेन कार्यं विधीयते स शब्दस्तदन्तस्य संज्ञेत्यर्थः । तेन विशेषणेन विशेष्यस्य तदन्तविधिर्भवति नान्यथा । इको यणचीत्यादौ च विशेष्यस्यासन्निधानात्तदन्तविधेरभावः ॥

॥ वि० ॥ कर्म्मधारयः । तदन्तशब्दे च बहुव्रीहिरिति बोध्यम् । शब्दरूपं विशेष्यमादाय तु अस्य न सर्वत्र प्रवृत्तिरव्यावर्त्तकत्वादितिभावः । कर्म्मसाधन इति । भावसाधनत्वेऽपि न बाधकं प्रसिद्धत्वादेव विधेयं कर्म्म लभ्यते । स शब्द इति । इह शास्त्रे प्रायः शब्दस्यैव कार्यकरणत्वादितिभावः । तेन विशेषणेनेति । कार्यवि-धावितिशेषः । विशेषणत्वलाभोऽत्रैवम् । करणस्य व्यापारवत्त्वनियमादन्येषां च व्यापाराभावाद्विशेषणमेवात्र करणशब्देनोच्यते तस्य चेतरव्यावृत्तिकरणमेव व्यापार इति भावः । तत्र प्रत्यासत्त्या शब्दप्रयोज्योपस्थितिविषयविशेषणमेव प्रायेण तदन्तग्राहकमिति इको यणचीत्यादौ न दोषः । क्वचित्तु सति गमकेऽतादृशं शब्दरूपं विशेष्यमादायापि तदन्तविधिरितिभावः । तदपि अन्तरङ्गत्वात्समानाधिकरणविशेषणमेवेतिबोध्यम् ॥

॥ वि० ॥ भाष्येऽन्येन चान्यस्येति । अनेन यस्य कार्यं यस्मिन् परतस्तयोरकरणत्वं दर्शितम् । अन्यस्येत्यन्यस्मिन्नित्यस्याप्युपलक्षणम् । समाशो भोजनम् । सेनाङ्गत्वादेकत्वं प्राप्नोतीत्यत आह । बह्विति । बह्वर्थवाचिपूर्वोत्तरपदकत्वाभावाद्द्वन्द्वस्येत्यर्थः । तस्य । गृह्यमाणस्य । उपाधय इति । विशेषणानीत्यर्थः । प्राप्नुवन्ति । उपाधय इत्यनुकर्षः । वार्त्तिके तदन्तोपाधीतिभावप्रधानो निर्देश इति बोध्यम् । तदन्तसंज्ञायामप्यकारस्याऽस्तु

॥ कै० ॥ हस्त्यश्वरथपदातिभिरिति । बहुप्रकृतित्वाभावादेकवद्भावाभावः । ग्रहणोपाधीनामिति । गृह्यत उच्चार्यत इतिग्रहणं तस्य ये

॥ भा० ॥ अन्येन चान्यस्य विधिर्भवति । तद्यथा । देवदत्तस्य समाशं शरावैरोदनेन च यज्ञदत्तः प्रतिविधत्ते । तथा संग्रामं हस्त्यश्वरथपदातिभिः । एवमिहाप्यचा धातोर्यतं विधत्ते अकारेण प्रातिपदिकस्य इञं विधत्ते । येन विधिस्तदन्तस्येतिचेद् ग्रहणोपाधीनां तदन्तोपाधिप्रसङ्गः । येनविधिस्तदन्तस्येति चेद् ग्रहणोपाधीनां तदन्तोपाधिताप्रसङ्गः । ये ग्रहणोपाधयस्ते तदन्तोपाधयः स्युः । तत्र को दोषः । उतश्च प्रत्ययादसंयोगपूर्वादिति असंयोगपूर्वग्रहणमुकारान्तविशेषणं स्यात् । तत्र को दोषः । असंयोगपूर्वग्रहणेन इहैव प्रर्युदासः स्यात् । अच्नुहीति । इह न स्याद् आमुहि शक्नुहीति । तथोदोष्ठ्यपूर्वस्येति ओष्ठ्यपूर्वग्रहणमृकारान्तविशेषणं स्यात् । तत्र को दोषः । ओष्ठ्यपूर्वग्रहणेन इह प्रसज्येत ॥

॥ कै० ॥ उपाधय इष्यन्ते तदन्तस्य संज्ञिनः प्राप्नुवन्ति संज्ञा हि संज्ञिप्रत्यायने विशेषणभावमापन्ना कथमात्मनो विशेषणसम्बन्धमनुभवेत् ॥

॥ वि० ॥ विशेषणेन सम्बन्धो विरोधाभावादत आह । संज्ञा हीति । विशेषणभावम् । गुणभावम् । यद्वा संज्ञिप्रत्यायने तद्बोधे सति विशेषणत्वमापन्नेत्यर्थः । आत्मनेतिपाठे स्वयमित्यर्थः । आत्मन इतिपाठे तु सम्यगेव । गुणानाञ्च परार्थत्वात् पदार्थैकदेशत्वाच्चेति न्यायादितिभावः । अवधित्वेति । अवधित्वं च तदनारम्भकत्वे सति पञ्चम्यन्तपदवाच्यत्वरूपं पूर्वादियोगे अवयवित्वञ्च तदारम्भकत्वमिति ते एकस्य न सम्भवत इत्यर्थः ॥



॥ वि० ॥ ओष्ठ्यः पूर्वो यस्मादितिविग्रहे एष दोषः । षष्ठ्यर्थे बहुव्रीहौ तु यद्यपि पूर्वशब्दस्य प्रथमावयववाचित्वाद्धात्ववयवत्वमोष्ठ्यस्य लभ्यत इति नायं दोषस्तथाऽपि सुस्फूर्षतीत्यादौ दोषो बोध्यः । एवमुतश्चेति सूत्रे पूर्वशब्दस्यावयववाचित्वे प्रत्ययविशेषणत्वासम्भवः । संयोगपूर्वकोकारान्तप्रत्ययाभावेनाऽव्यावर्त्तकतयाऽसंयोगपूर्वादिति निषेधस्य वैयर्थ्यापत्तेः । नचाङ्गविशेषणत्वं चिणु इत्याद्यसिद्धेरतो व्यवस्थावाची पूर्वशब्दः श्रूयमाणप्रत्ययविशेषणम् । तदुक्तं भाष्ये पूर्वग्रहणमुकारान्तविशेषणमिति । नचासंयोगादितिवक्तव्ये पूर्वग्रहणाद्विशेषणस्याप्युकारस्य विशेषणमिति न दोष इति वाच्यम् । वाच्यइत्याऽलाभात् । किञ्च व्यवहिते चिणु इत्यादावपि निषेधार्थं पूर्वग्रहणं स्यादितिभावः । भाष्ये निपूर्त्ता इत्यत्र न ध्याख्येतिनत्वनिषेधः । विशेषणविशेष्यभावे

॥ कै० ॥ सङ्कीर्णमिति । ओष्ठ्यः पूर्वो यस्मादृकारन्ताद्धातोस्तस्योत्त्वमित्येव सूत्रार्थः स्यात् तत्र च सूत्रार्थे धात्ववयवत्वमोष्ठ्यस्याऽऽश्रयितुन्न युज्यते अवधित्वावयवित्वयोरेकस्य विरोधात् । सिद्धन्त्विति । वृद्ध्यादिसंज्ञा गुणप्रधानभावानपेक्षा एव प्रदेशेषु

॥ भा० ॥ सङ्कीर्णं संगीर्णमिति । इह च न स्याद् निपूर्ताः पिण्डा इति । सिद्धन्तु विशेषणविशेष्ययोर्यथेष्टत्वात् । सिद्धमेतत् । कथम् । यथेष्टं विशेषणविशेष्ययोर्योगो भवति ॥

॥ कै० ॥ संज्ञिनं प्रत्याययन्ति इयन्तु संज्ञा गुणप्रधानभावापेक्षत्वात्कार्यकाला तत्रोतश्च प्रत्ययादित्यादौ विशेषणसम्बन्धमनुभूय विशेष्येण सम्बन्धमुकारादिरनुभवतीति यथोक्तदोषाऽभावः ॥

॥ वि० ॥ कामचारेऽपि संज्ञासूत्रस्य प्रबलत्वात्पूर्वं तदन्तविधिरेव स्यादत आह । वृद्ध्यादीति । एवञ्च विशेषणत्वज्ञानसापेक्षतयाऽवान्तरवाक्यार्थबोधोत्तरमेव प्रवृत्त्या बहिरङ्गत्वादस्य पूर्वमुकारादीनामेव तद्विशेषणमितिभावः । गुणप्रधानभावानपेक्षा इति । एवञ्च तत्र वाक्यभेद एवेतिभावः । इयन्त्विति । तदपेक्षत्वाद्विधिवाक्यैकवाक्यतापन्नैवेत्यर्थः । यदुक्तं संज्ञा हीति तत्राह । तत्रेति । गुणः कृतात्मसंस्कारः प्रधानोपकाराय महते प्रभवतीतिन्यायादितिभावः । भाष्ये यथेष्टमिति । विशिष्टे वैशिष्ट्यं विशिष्टस्य वैशिष्ट्यं विशेष्ये विशेषणं तत्र च विशेषणान्तरमेकत्र द्वयमितियोगेषु यथेष्टमित्यर्थः । एवञ्च व्याख्यानात् प्रकृते विशिष्टवैशिष्ट्यमितिरीत्येव बोधो न तु विशेष्ये विशेषणमितिरीत्येति तात्पर्यम् ॥

॥ वि० ॥ सुबन्तस्येति । सुपेत्युपस्थितस्येतिशेषः । तद्विशेषणत्वेनेति । सुबन्तैः श्रितादिभिरित्यर्थ इतिभावः । श्रितान्तमिति । विसर्गान्तस्य तदन्तत्वाभावादितिभावः । सम्बुद्ध्यन्तमिति । इदमुपलक्षणं कष्टं परमश्रिता इत्यादेः । तदन्तविध्यभाव इति । नडादीनां विशेष्यत्वात्प्रातिपदिकस्य विशेषणत्वेऽपि तदन्तस्य नडादेरसम्भवादितिभावः । अत्र वदन्ति । एवं हि कृष्णाश्रितमित्यादेरप्यसिद्धिरितिभाष्यस्य निर्दलत्वापत्तिः । यत्तु सुपसहितैः श्रितादिभिरितिविवरणकृतः सिद्धान्ताशयवर्णनम् । तन्न । पूर्वकालैकेत्यादौ सुप इतिप्रथमान्ते तथार्थासम्भवात् । तस्मात् समर्थपरिभाषोपस्थितं समर्थपदार्थं प्रति विशेषण-

॥ कै० ॥ समासेति । श्रितादिभिः सुबन्तस्य विशेषणे सति प्राप्तस्तदन्तविधिः प्रतिषिध्यते प्रतिषेधद्वारेण चैतत् प्रदर्श्यते श्रितादयः प्राधान्येनाऽऽश्रयितव्याः । तद्विशेषणत्वेन च सुपेति । कष्टं परमश्रित इति । श्रितान्तमेतत् सुबन्तं न भवतीति सम्बुद्ध्यन्तमुदाहर्त्तव्यं परम-

॥ भा० ॥ यावता यथेष्टम् । इह तावदुतश्च प्रत्ययादसंयोगपूर्व्वादिति नासंयोगपूर्वग्रहणेन उकारान्तं विशेष्यते किन्तर्हि उकार एव विशेष्यते उकारो योऽसंयोगपूर्वस्तदन्तात्प्रत्ययादिति । तथा उदोष्ठ्यपूर्वस्येति नौष्ठ्यपूर्वग्रहणेन ॠकारान्तं विशेष्यते ॠकारान्तो यो धातुरोष्ठ्यपूर्व इति किन्तर्हि ॠकार एव विशेष्यते ॠकारो य ओष्ठ्यपूर्वस्तदन्तस्य धातोरिति । समासप्रत्ययविधौ प्रतिषेधः । समासविधौ प्रत्ययविधौ च प्रतिषेधो वक्तव्यः । समासविधौ तावत् । द्वितीया श्रितादिभिः समस्यते । कष्टश्रितः । नरकश्रितः । कष्टं परमश्रित इत्यत्र माभूत् । प्रत्ययविधौ नडस्यापत्यं नाडायनः । इह न भवति सूत्रनडस्यापत्यं सौत्रनाडिः ॥

॥ कै० ॥ श्रितेति । एतत् प्रत्ययलक्षणेन सुबन्तं भवति श्रितान्तं च श्रूयते सौत्रनाडिरिति । अनुशतिकादित्वादुभयपदवृद्धिः । नडादीनि प्रातिपदिकेन विशेष्यन्त इति तदन्तविध्यभावः ॥

॥ वि० ॥ तया प्राप्ततदन्तविधेर्निषेधार्थमिति भाष्याशयः । उपस्थितसमर्थपदञ्च सुबीयतत्तत्पदोत्तरविभक्तिसमानविभक्त्यन्तं तस्य च तत्प्रकृतिके लक्षणया सुपेत्यनेनान्वयः । न हि सामर्थ्यं सुबन्तेनैवेति नियमः कुम्भकार इत्यादौ सुपः प्राग्भागेऽपि तदङ्गीकारात् । परिपूर्णं पदमिति न्यायस्तु यस्योत्तरत्रा-काङ्क्षयाऽन्वयस्तद्विषयो न तु यत्रान्वयस्तद्विषय इति कुत्सित इति सूत्रभाष्यात् स्पष्टमेवोपलभ्यते इति दिक् ॥



॥ वि० ॥ तत्र यद्यपीति । एवञ्च ङीबभावेऽपि ङीषा सिद्धिरितिभावः । किं नद्या इति । सत्यति पाठे उपसर्ज्जने ङीषप्राप्तौ ङीपि तस्योदात्तत्वाय तद्व्यारितार्थ्याच्चिन्त्यमिदम् । एवञ्च तस्यावश्यकत्वे पाठो निष्फल इत्यन्यदिति कश्चित् । नन्विञो ञित्त्वाद्वृद्धिस्वराद्यर्थात्तदन्तविधिस्तत्र न हि अभ्र-व्दस्य यस्येतिचेतिलोपे तेषां संभवोऽस्तीत्यत आह । उत्तरार्थमिति । वाहविरित्यादौ स्वरादिसिद्धये इतिभावः । अकचीति । सर्वजसिति स्थितेऽन्तरङ्गानपीतिन्या-

॥ कै० ॥ अतिमहतीति । महान्तमतिक्रान्तेति प्रादिसमासः । तत्र यद्यपि गौरादिषु वृहत् महदितिपठ्यते तथापि अनुपसर्जना-धिकारात् तत्र ङीष् न भवतीति उगिल्लक्षणो ङीप् प्रार्थ्यते । अन्ये तु गौरादिष्वेतयोः प्रमादपाठमाहुः । तथाचोक्तं नद्यजाद्युदात्तत्वे

॥ भा० ॥ किमविशेषेण । नेत्याह । उगिद्वर्णग्रहणवर्जम् । उगिद्ग्रहणं वर्णग्रहणञ्च वर्जयित्वा । उगिद्-ग्रहणम् । उगितश्च भवती अतिभवती महती अतिमहती । वर्णग्रहणम् । अत इञ् दाक्षिः प्लाक्षिः । अस्ति चेदानीं कश्चित्केवलोऽकारः प्रातिपदिकं यदर्थो विधिः स्यात् । अस्तीत्याह । अततेर्डः अस्तस्यापत्यमिः । अकच्श्वम्वतः सर्वनामाव्ययधातुविधावुपसंख्यानम् । अकच्वतः सर्वनामाव्ययविधौ श्वम्वतो धातुविधावुपसं-ख्यानं कर्त्तव्यम् । अकच्वतः । सर्वके विश्वके । अव्ययविधौ । उच्चकैः नीचकैः ॥

॥ कै० ॥ वृहन्महतोरुपसंख्यानमिति । ङीपि सति उदात्तस्य सिद्धत्वात् किं नद्या उदात्तविधानेन । अत इञिति । तदन्तविधा-वसति ञित्करणमुत्तरार्थं स्यात् । सर्वक इति । अकचि कृते शीभावो न स्यात् । उच्चकैरिति । तथैवाकचि कृते लुग्न स्यात् । उच्चकै-रधीयानेत्यव्ययानां प्रतिषेध इति पराङ्गवद्भावनिषेधो न स्यात् । उच्चकैर्मुखमिति नाव्ययदिक्शब्देति मुखस्वरनिषेधो न स्यात् ॥

॥ वि० ॥ येन शीभावादि वाधित्वाऽकचि यस्मात् प्रत्ययविधिरित्युक्तेरप्रत्यय इतिनिषेधाभावे प्रातिपदिकत्वेन सुपो लुकि पुनर्जसि शी न स्यादित्यर्थः । लुगिति । यद्यपि हल्ङ्यादिसूत्रेणाऽपि सोर्लोपः सिध्यति तथाऽपि सर्वविभक्त्युत्पत्तिपक्षे इदम् । पराङ्गेति । तथाचामन्त्रिताद्युदात्तत्वं स्यात् चितः सप्रकृतेरित्यन्तोदात्तश्चेष्यत इतिभावः ॥

॥ वि० ॥ अन्ये त्वाहुरिति । श्नमो मित्त्वेन परश्चेत्यस्य तत्राप्रवृत्तौ तत्संनियोगशिष्टाद्युदात्तत्वाप्रवृत्त्या शेषनिघातेन तस्यानुदात्तत्वप्राप्तिरिति-भावः । ननु भिनत्तीत्यादौ यदागमा इतिन्यायेन न दोष इतिचेन्न । अवयवानामवयविग्रहणेन ग्रहणं हि तद्बीजम् । नचात्र तदस्ति । अन्त्या-वयव इत्यंशस्याप्रवृत्त्याऽवयवत्वे मानाभावात् । यस्य विहितस्तदन्तावयव इति तदर्थात् । एवञ्च नन्दतीत्यप्येतदुदाहरणं बोध्यम् । भाष्ये च श्नम्वत इत्युपलक्षणं बोध्यमितिकश्चित् । ननु तदन्तान्तस्येति पाठेऽपि विशेष्यासंनिधानात् कथं सर्वादीनीत्यादावस्य प्रवृत्तिरत आह । तत्रेति । अव्ययेत्यस्यान्वर्थेत्यादिः । वस्तुतः

॥ कै० ॥ भिनत्तीति धातोरन्त उदात्तो भवतीति उदात्तत्वं न स्यात् । प्रत्ययस्वरेण तु तत्सिध्यतीत्यभिनोऽत्रेति दश्चेति धातो-र्विधीयमानं रुत्वं न स्यादिति वक्तव्यम् । अन्ये त्वाहुः । भिनत्तीत्यत्रागमानुदात्तत्वेन प्रत्ययस्वरस्य बाधितत्वात् सतिशिष्टः स्वरो

॥ भा० ॥ श्नम्वतः । भिनत्ति छिनत्ति । किं पुनः कारणं न सिध्यति । इह तस्य वा ग्रहणं भवति तदन्तस्य वा नचेदं तद् नापि तदन्तम् । सिद्धं तु तदन्तान्तवचनात् । सिद्धमेतत् । कथम् । तदन्तान्तवचनात् । तदन्तान्तस्येति वक्तव्यम् । किमिदं तदन्तान्तस्येति ॥

॥ कै० ॥ धातुस्वर एष्टव्यः । सिद्धं त्विति । सर्वशब्दस्य योऽन्तोऽकारः सोऽन्तः सर्वकशब्दस्य । एवमन्यत्रापि योज्यम् । तत्र सर्वनामा-नीत्यन्वर्थसंज्ञाचिप्तः संज्ञी सर्वादिभिर्विशेष्यते । अव्ययसंज्ञाचिप्तः स्वरादिभिः । धातुसंज्ञाभाजो वाप्रकारा भूवादिभिरितिभावः ॥

॥ वि० ॥ शब्दरूपं विशेष्यमादाय वाचनिक एवोभयत्रापि तदन्तविधिरिति वक्ष्यते । इदं तु चिन्त्यम् । शब्दसंज्ञिनोऽसत्त्वे हि स्यादप्याक्षेपः सत्त्वे त्वाक्षेपे आक्षिप्तस्य वा विशेष्यत्वे मानाभावात् । किञ्चान्वर्थत्वं योगरूढत्वं योगरूढस्थले हि योगान्वितरूढार्थस्यैव प्रतीतिर्दृष्टा न तु तयोः परस्परमुद्देश्यविधेयभाव इति कस्य विशेष्य-तया तदन्तविधिः स्यादिति बोध्यम् । वाप्रकारा इति । वासदृशा इत्यर्थः । भूवादय इतिसूत्रे द्वन्द्वैकशेषगर्भो बहुव्रीहिरितिभावः । एवं हि प्रभूपराभू इत्यादीनामपि धातुसंज्ञा स्यादिति अडाद्यव्यवस्थापत्तिरिति चिन्त्यमिदम् । तस्मादयं समाधिरकञ्चिषय एवेति बोध्यम् । एरजित्यादौ तु व्यपदेशिवद्भावेनैतन्न्यासे सिद्धिर्बोध्या ॥



॥ वि० ॥ ननु सामर्थ्यादिति । उष्ट्रमुखवत् तदभावादित्यर्थः । यथाऽवयवेति । अवयवी प्रत्यवयवमवयवान्तरसन्निधौ समवेत इतिभावः । नन्वेवमपि भूयोऽवयवसन्निकर्षस्यैवावयविप्रत्यक्षे हेतुत्वादेकावयवदर्शने तद्बुद्ध्यभाव इत्यरुचेराह । अथवेति । ननु मुख्यविशेषणे चरितार्थं सूत्रं कथमारोपिते स्यादत आह । गौणेनापीति । स्वरितत्वगुणयोगाद्यथाऽन्यत्रारोपितार्थकस्य ग्रहणं तथेहापीत्यर्थः । तदेवाह । छत्रेत्यादि । छत्रं गुरुच्छिद्रावरणं

॥ कै० ॥ उत्तरपदलोप इति । वाचनिकोऽत्र लोपो न तु सामर्थ्याद्गम्यमानार्थस्य निवृत्तिरित्याहुः । अन्ये तु वर्णयन्ति यथाऽवयवदर्शनात् गौरित्यवयविविषया बुद्धिरुदेति तथेहापि सर्वशब्दस्य योऽवयवोऽन्त्यस्तत्रैव सर्वशब्दविषयबुद्ध्युत्पत्त्या तदवय-

॥ भा० ॥ तस्यान्तस्तदन्तस्तदन्तोऽन्तो यस्य तदिदं तदन्तान्तं तदन्तान्तस्येति । स तर्हि तथा निर्देशः कर्तव्यः । न कर्तव्यः । उत्तरपदलोपोऽत्र द्रष्टव्यः । तद्यथा । उष्ट्रमुखमिव मुखमस्य उष्ट्रमुखः खरमुखः । एवमिहापि तदन्तान्तस्य तदन्तस्येति ॥

॥ कै० ॥ वान्तः सर्वशब्दान्त इति व्यपदिश्यते । अथवाऽवयवे समुदायरूपारोपात् तदन्तता भविष्यति । गौणेनापि ह्यर्थेन शास्त्रव्यवहारो दृश्यते । छत्रपार्श्वायःशूलदण्डाजिनशीतोष्णहस्वादिषु ॥

॥ वि० ॥ गौणोच्यते तत्रैव हिच्छात्र इष्यते । एवं पार्श्वशब्दोऽनृजूपाये अयःशूलशब्दस्तीक्ष्णोपाये दण्डाजिनो दम्भे शीतोऽलसे उष्णः शैघ्र्ये गौणः । तत्रैव पार्श्विकायःशूलिकदाण्डाजिनिकशीतकोष्णकादिप्रयोगेष्टेः । तस्यादित इत्यत्र चार्धह्रस्वशब्दोऽर्धमात्रालाक्षणिक इत्याद्यूह्यम् । आदिनाधारोऽधिकरणमित्यादिसंग्रहः ॥

॥ वि० ॥ मध्यपातिन इति । यस्याकजादिस्तदेकदेशत्वेनाकजादेर्विज्ञानादितिवार्त्तिकार्थः । भाष्येऽक्रपरिमाणानामिति । अत्र परिमाणमानुपूर्वीविशेषोऽपि । परिमाणेत्युपलक्षणं परिच्छिन्नार्थानां तदाह । संख्येति । भाष्येऽर्थानामिति । संज्ञिभूतानां शब्दानामित्यर्थः । नन्वधि-

॥ कै० ॥ तदेकदेशविज्ञानादिति । मध्यपातिनोऽकजादयस्तदेकदेशा इति तत्त्वबुद्धिं न विघ्नन्ति । अक्रपरिमाणानामिति । परिच्छिन्न-

॥ भा० ॥ तदेकदेशविज्ञानाद्वा पुनः सिद्धमेतत् । तदेकदेशभूतस्तद्ग्रहणेन गृह्यते । तद्यथा । गङ्गा यमुना देवदत्तेति । अनेका नदी गङ्गां यमुनां च प्रविष्टा गङ्गायमुनाग्रहणेन गृह्यते । देवदत्तास्थो गर्भो देवदत्ताग्रहणेन गृह्यते । विषम उपन्यासः । इह केचिच्छब्दा अक्रपरिमाणानामर्थानां वाचका भवन्ति । य एते संख्याशब्दाः परिमाणशब्दाश्च । पञ्चसप्तेति एकेनाप्यपाये न भवन्ति । द्रोणः खारी आढकमिति नैवाधिके भवन्ति न न्यूने । केचिद् यावदेव तद्भवति तावदेवाहुः । य एते जातिशब्दा गुणशब्दाश्च तैलं घृतमिति खार्यामपि भवति द्रोणेऽपि । शुक्लो नीलः कृष्ण इति हिमवत्यपि भवति घटकर्णिकामात्रेऽपि द्रव्ये । इमाश्चापि संज्ञा अक्रपरिमाणानामर्थानां क्रियन्ते ताः केनाधिकस्य स्युः ॥

॥ कै० ॥ परिमाणानामित्यर्थः । यावदेवेति । अल्पमधिकं वेत्यर्थः । इमाश्चापीति । सर्वाद्युपादानेन संज्ञाः क्रियमाणाः कथं सर्वकादीनां भवन्ति नित्या हि शब्दा विकारोपजनरहिता इति सर्वशब्दः सर्वकशब्द इति न वक्तुं शक्यत इत्यर्थः ॥

॥ वि० ॥ कगद्धादिजननेऽपि शुनः श्वत्ववदकस्याऽधिकस्योपजनेऽपि सर्वकस्य सर्वशब्दत्वमक्षतमेवेत्यत आह । नित्या इति । वस्तुतः परिच्छिन्नपरिमाणकग्रहणे एकदेशविकृतन्यायस्याप्यप्रवृत्तिरितिभाष्याशयः ॥



॥ वि० ॥ ननु नित्यशब्दवादेऽकच्वतः शब्दान्तरत्वादकजादेः सर्वाद्येकदेशत्वमसिद्धमत आह । यद्यपीति । अव्यतिरेककृत इति । अनवयवत्वेऽपि ज्ञापकाङ्गेदबुद्धिं न कुर्वन्तीत्यर्थः । एकदेशसादृश्यञ्च मध्यपातित्वेन बोध्यम् । ननु सर्वनामत्वे संज्ञोपसर्जनप्रतिषेधवार्तिकारम्भेण

॥ कै० ॥ एवं तर्हीति । यद्यपि नित्याः शब्दास्तथापि प्रक्रियायामकजादयो विधीयमाना ज्ञापकादव्यतिरेककृत इत्यर्थः । प्रयोजनमिति । अन्वर्थसंज्ञाचिह्नः संज्ञी सर्वादिभिर्विशेष्यते अपूर्वो वा तदन्तविधिरुपसंख्यायते । एवमुत्तरत्र विज्ञेयम् । उपपदविधाविति । भयाद्यादिभिः कर्म विशेष्यते । चेमप्रियमद्रे णचेत्यत्र तु कर्मणा चेमादय इति तदन्तविध्यभावः । प्रतिषेध

॥ भा० ॥ एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति तदेकदेशभूतं तद्ग्रहणेन गृह्यते इति । यदयं नेदमदसोरकोरिति सककारयोरिदमदसोः प्रतिषेधं शास्ति । कथं कृत्वा ज्ञापकम् । इदमदसोः कार्य्यमुच्यमानं कः प्रसङ्गो यत्सककारयोः स्यात् । पश्यति त्वाचार्यस्तदेकदेशभूतं तद्ग्रहणेन गृह्यते इति ततः सककारयोः प्रतिषेधं शास्ति । कानि पुनरस्य योगस्य प्रयोजनानि । प्रयोजनं सर्वनामाव्ययसंज्ञायाम् । सर्वे परमसर्वे विश्वे परमविश्वे उच्चैः परमोच्चैः । नीचैः परमनीचैरिति । उपपदविधौ भयाद्यादिग्रहणम् । प्रयोजनम् । भयंकरः । अभयंकरः । आढ्यंकरणं स्वाढ्यंकरणम् । ङीब्विधावुगिद्ग्रहणम् । प्रयोजनम् । भवती अतिभवती । महती अतिमहती । प्रतिषेधे स्वस्रादिग्रहणम् । प्रयोजनम् ! स्वसा परमस्वसा । दुहिता परमदुहिता । अपरिमाणविस्ताद्रिग्रहणाच्च प्रतिषेधे । प्रयोजनम् । अपरिमाणविस्ताचितकम्बल्येभ्यो न तद्धितलुकीति । द्विविस्ता द्विपरमविस्ता । त्रिविस्ता त्रिपरमविस्ता । द्व्याचिता द्विपरमाचिता ॥

॥ कै० ॥ इति । विधीयत इति विधिः सामान्येन गृह्यते इति प्रतिषेधेपि तदन्तविधिर्भवति । स्वस्रादिभिः प्रातिपदिकस्य विशेषणात् । द्विपरमविस्तेति । द्विगुना संनिधापितमुत्तरपदं विस्तादिभिर्विशेष्यते इति तदन्तविधिः ॥

॥ वि० ॥ वार्तिकृतोऽन्वर्थत्वं नेष्टं किञ्च संज्ञिनामुपात्तत्वेनाचेपे मानाभाव इत्यत आह । अपूर्वो वेति । एतद्वार्तिकमूलाद् व्याख्यानादव्यावर्त्तकमपि शब्दरूपं विशेष्यमादाय तदन्तविधिरितिभावः । भयं चाद्यादिचेति द्वन्द्वमभिप्रेत्याह । चेमेति । विधीयत इति । सूत्रे विधिशब्देन प्रतिषेधविरोधो न विवक्षित इतिभावः ॥

॥ वि॰ ॥ ननु स्वं रूपमित्यनुवृत्त्या स्वस्याऽपि संज्ञासिद्धौ किं तस्य चेत्यनेनात आह । स्वमिति । तेन सूत्रप्रत्याख्यानादितितात्पर्यम् । प्रत्ययान्तत्वादिति । स्त्रीप्रत्ययान्तत्वादित्यर्थः । स्वरूपविधिविषयैवेति । प्रातिपदिकविशेषोपादानविहितकार्यविषयैवेत्यर्थः । किं पुनः कारण-मितिभाष्ये कारणशब्दः प्रयोजनवाची । तज्ज्ञापयतीति । बोधयतीत्यर्थः । अन्तग्रहणं नियमार्थमितितात्पर्यम् । नात्र तदन्तादिति । ननु समासप्रत्ययविधावित्यस्य

॥ कै॰ ॥ दितिग्रहणाच्चेति । परमदित्यादिभ्यस्त्वनभिधानाद् ण्यो न भवति । तस्य चेति । स्वं रूपमित्यस्यानुवृत्तिं वार्त्तिककारो नेच्छति तथाचाद्यन्तवदित्यत्र येन विधिस्तदन्तस्य इतिप्रयोजनमवोचत् । व्यपदेशिवद्भावोऽप्रातिपदिकेनेति । ननु रोणीशब्दो न प्रातिपदिकं

॥ भा॰ ॥ दितिग्रहणाच्च । प्रयोजनम् । दितेरपत्यं दैत्यः । अदितेरपत्यमादित्यः । दित्यदित्यादित्येत्यदि-तिग्रहणं न कर्त्तव्यं भवति । रोण्या अण् । रोण्या अण्ग्रहणाच्च प्रयोजनम् । आजकरौणः । सैंहिकरौणः । तस्य च । तस्यचेतिवक्तव्यम् । रौणः । किं पुनः कारणं न सिध्यति न तदन्ताच्च तदन्तविधिना सिद्धं केवलाच्च व्यपदेशिवद्भावेन । व्यपदेशिवद्भावोऽप्रातिपदिकेन । किं पुनः कारणं व्यपदेशिवद्भावोऽप्रातिपदिकेन । इह सूत्रान्ताड् ढग्भवति दशान्ताड् डो भवतीति केवलादुत्पत्तिर्माभूदिति । नैतदस्ति प्रयोजनम् । सिद्धमत्र तदन्ताच्च तदन्तविधिना केवलाच्च व्यपदेशिवद्भावेन । सोऽयमेवं सिद्धे सति यदन्तग्रहणं करोति तज्ज्ञापय-त्याचार्यः सूत्रान्तादेव दशान्तादेवेति । नात्र तदन्तादुत्पत्तिः प्राप्नोति ॥

॥ कै ॥ प्रत्ययान्तत्वात् । नैष दोषः । अप्रातिपदिकेनेत्यत्र वाक्ये प्रातिपदिकग्रहणे लिङ्गविशिष्टस्याऽपि ग्रहणमिति वचनात् स्त्री-प्रत्ययान्तैरपि व्यपदेशिवद्भावो न भवति । न च लिङ्गविशिष्टपरिभाषा स्वरूपविधिविषयैवेति प्रातिपदिकसूत्रे वक्ष्यते ॥

॥ वि॰ ॥ विशेषणविशेष्यभावव्यत्यासतात्पर्यग्राहकतया दित्यादाविवात्रापि तदन्तविधिसंभवेनान्तग्रहणसामर्थ्यादेव केवलेऽप्रवृत्तावप्रातिपदिकेनेति व्यर्थम् । एतेन ग्रहणवतेति निषेधात्तदन्तविधिर्दुर्लभ इत्यपास्तम् । किञ्च परमदित्यादिभ्य इवाऽनभिधानेन केवलेऽप्रवृत्तिरितिव्यर्थैव सेति चेन्न । विशेषणविशेष्यभावव्यत्या-सतात्पर्य्यग्राहकतया समासेत्यादिप्रतिषेधवचनवदस्याप्यावश्यकत्वात् सूत्रभाष्यवार्त्तिकारूढतात्पर्यग्राहकाभावेऽपि तदन्तविधिकल्पनेऽतिप्रसङ्गापत्तेः । अत एवोगि-दर्णग्रहणवर्ज्जमित्यादेश्चारितार्थ्यम् । अनभिधानेन प्रत्याख्यानन्तु न चमत्कारकारि ॥



॥ वि॰ ॥ सा तर्ह्येषेति । व्यपदेशिवद्भावोऽप्रातिपदिकेनेत्येषा । यदयमिति । पूर्वादित्यंशो ज्ञापक इत्यर्थः । सर्वस्मादिति । पूर्वशब्दव्यति-रिक्तादपीत्यर्थः । भाष्ये यत्तर्हि योगविभागमिति । नचेष्टादिभ्यश्चेत्यत्रानुवृत्त्यर्थं तथा पाठोऽत एवानिष्टीति प्रयोगसिद्धिरिति वाच्यम् । एतद्भा-ष्यप्रामाण्येन तत्प्रयोगाभावानुमानात् । प्रकारान्तरेण सिद्धौ तु नास्माकं क्षतिः । एकयोगेऽपि तावति स्वरितत्वप्रतिज्ञासामर्थ्येन तावत उत्तरत्रानुवृत्तिसिद्धेश्चेतिदिक् । एवञ्च रोणीत्यादौ केवलस्याप्राप्तेस्तस्य चेति वक्तव्यमितिसिद्धम् । ननु तदन्तविधिविषये तस्यचेत्यनेन केवलादपि चेद् व्यपदेशिवद्भावोऽप्रातिपदिकेनेति व्यर्थमत आह ।

॥ कै॰ ॥ सपूर्वादिनिमिति । पूर्वग्रहणेत्युक्ते सपूर्वादिनिरित्युच्यमाने सर्वस्मात् सपूर्वात्प्राप्नोतीति कथं ज्ञापकमित्यर्थः ।

॥ भा॰ ॥ इदानीमेव ह्युक्तं समासप्रत्ययविधौ प्रतिषेध इति । सा तर्ह्येषा परिभाषा कर्त्तव्या । न कर्तव्या । आचार्यप्रवृत्तिर्ज्ञापयति । व्यपदेशिवद्भावोऽप्रातिपदिकेनेति । यदयं पूर्वादिनिः सपूर्वाच्चेत्याह । नैतदस्ति ज्ञापकम् । अस्ति ह्यन्यदेतस्य वचने प्रयोजनम् । किम् । सपूर्वादिनिं वक्ष्यामीति । यत्तर्हि योगविभागं करोति इतरथा पूर्वात्सपूर्वादिनिरित्येव ब्रूयात् । किं पुनरयमस्यैव शेषस्तस्यचेति । नेत्याह । यच्चानुक्रान्तं यच्चानुक्रंस्यते सर्वस्यैव शेषस्तस्यचेति । रथसीताहलेभ्यो यद्विधौ ॥

॥ कै॰ ॥ यच्चानुक्रान्तमिति । अप्रातिपदिकेनेति तु निषेधो यत्रान्तग्रहणं सूत्रेणैवोपात्तं तत्र । यथा दशान्ताद् ड इति दशाधिका अस्मिन् शत इत्यत्र न भवति । यद्विधाविति । ठग्विधौ तु तदन्तविधेरभावात्पारमहलिक इतिठञ्भवति ॥

॥ वि॰ ॥ अप्रातिपदिकेनेति । ज्ञापकस्य सजातीयापेक्षत्वादिति भावः । अत एव पूर्वादिनिरित्येव तदन्तविधिना सिद्धे सपूर्वाच्चेत्यस्य ग्रहणवतेतिपरिभाषाज्ञा-पकत्वं कैयटोक्तं संगच्छते । यत्रान्तेति । अन्तग्रहणमुपलक्षणम् । अत एवैकगोपूर्वादित्यस्य केवलैकशब्दे न प्रवृत्तिः । ग्रहणवतेत्यपि प्रत्ययविधौ निषेधस्यैवानु-वादकं लाघवात् । स्पष्टञ्चेदमसमासे निष्कादिभ्य इति सूत्रे भाष्यकैयटयोः ॥

॥ वि० ॥ रथ्ये तद्वहति रथेतियत् सीत्ये नौवयोधर्मेति हल्ये मतजनहलात्करणजल्पकर्षेष्विति यत् । भाष्ये परमरथ्य इति । रथाद्रथाङ्ग-वोढ्रीरित्येवं शैषिकप्रकरणे पाठे सिद्धे तद्वहतीत्यत्र रथग्रहणं रथांशे तदन्तविधौ ज्ञापकं शैषिके यति हि द्विरथ इत्यादौ द्विगोर्लुगितिलुक् तत्र सूत्रेऽचीति न सम्बध्यतेऽनभिधानाच्च नातिप्रसङ्गः । वहत्यर्थे तु द्विरथ्य इत्येव । तस्याप्राग्दीव्यतीयत्वात् । इतरयोस्तु वाचनिक एव । यत्तु हलसीराट्ठगित्यपि तस्येदं तद्वहतीत्यधिकारे च द्विः पठ्यते तत्तु इदंशब्देन वोढृरूपार्थाग्रहणज्ञापकं तदाह । ठञ्ञ भवतीति । भाष्ये सुपाञ्चालक इत्यादि । जनपदेत्यधिकारे अवृद्धादपि

॥ कै० ॥ ऋतोरिति । ऋतुवाचिनः शब्दाद्यो वृद्धिमान् प्रत्ययस्तद्विधानेऽवयवानां तदन्तविधिः । शरदः पूर्वो भागः पूर्वशरत् तत्र भवमिति ऋतुलक्षणोऽण् । तत्र वृद्धिमदिति वचनात्प्रावृष एण्य इत्यत्र तदन्तविधिर्न भवति तेन ऋत्वणेव भवति

॥ भा० ॥ प्रयोजनम् । रथ्यः परमरथ्यः सीत्यं परमसीत्यं हल्या परमहल्या । सुसर्वार्द्धदिक्छब्देभ्यो जनपदस्य । प्रयोजनम् । सु । सुपाञ्चालकः सुमागधकः । सु । सर्व । सर्वपाञ्चालकः सर्वमागधकः । सर्व । अर्द्ध । अर्द्धपाञ्चालकः । अर्द्धमागधकः । अर्द्ध । दिक्शब्द । पूर्वपाञ्चालकः । अपरपाञ्चालकः । पूर्वमागधकः । अपरमागधकः । ऋतोर्वृद्धिमद्विधाववयवानाम् । प्रयोजनम् । पूर्वशारदम् । अपरशारदम् । पूर्वनैदाघम् । अपरनैदाघम् ॥

॥ कै० ॥ पूर्वप्रावृषमिति । प्रावृट्शब्दो वर्षापर्यायः । अवयवानामिति किम् । पूर्वस्यां शरदि भवं पौर्वशारदिकमित्यण् न भवति कालाट्ठञित्येव भवति । तत्र हि यथाकथञ्चित्कालवाचिनो गृह्यन्ते ॥

॥ वि० ॥ वह्नितिवुञ् तद्विधौ चायं तदन्तविधिः । सुसर्वार्द्धाज्जनपदस्य दिशो मद्राणामित्युत्तरपदवृद्धिः । वृद्धिमानिति । वृद्धिनिमित्तमित्यर्थः । अवयवानामिति । पूर्वपदत्वे इतिशेषः । पूर्वापराधरेत्येकदेशिसमासः । सन्धिवेलाद्यृत्वित्यण् । अवयवादृतोरित्युत्तरपदवृद्धिः । ननु शरच्छब्द एव कालवाची न पूर्वशरच्छब्द इति कथं ठञित्यत आह । तत्र हीति । अत एव सन्धिवेलादिसूत्रे नक्षत्राणां कालेन विशेषणं संगच्छते ॥



॥ वि० ॥ भाष्ये ठञ्विधौ संख्याया इति । तदस्य परिमाणं संख्यायाः संज्ञेति सूत्रे इति भावः । द्वे षष्टी परिमाणमस्येति । संघादिरस्य विशेष्यः । प्रतिषेधादिति । आर्हादगोपुच्छेत्यनेन तस्य प्रत्ययप्रतिषेधत्वात्तत्र तदन्तविधिभविष्यत्येव । तेन प्राग्वतेरिति ठञ्विधायके संख्यायाः संज्ञेतिसूत्रे तदन्तविधिसत्त्वेन प्राग्वतेरित्यधिकारप्राप्तठञ् भवतीत्यर्थः । पुनः प्रत्ययार्थसमर्थेति । अस्येति प्रत्ययार्थः । तदितिसमर्थविभक्तिः । अनुवर्त्तमानस्य लुक्सम्बद्धतया पुनरुपादानेन तद्विलक्षणत्वसूचनाद्नेन विहितस्य लुगभाव इत्यर्थः । कृते वेति । अनुवर्त्तमानसोऽस्येतिसहितपरिमाणमित्यनेन विहितस्य लुकि

॥ कै० ॥ द्विषाष्टिकमिति । द्वे षष्टी परिमाणमस्येति समासे कृते आर्हादिति ठञ्ञ भवति संख्यायास्तदन्तविधौ सति संख्यान्तादपि ठक्प्रतिषेधात् तेन प्राग्वतेरिति ठञ् भवति । अध्यर्द्धपूर्वेति लुञ्ञ भवति । सोऽस्यांशवस्नभृतय इत्यतः सो-

॥ भा० ॥ ठञ्विधौ संख्यायाः । प्रयोजनम् । द्विषाष्टिकं पञ्चषाष्टिकम् । धर्माच्चञ् । प्रयोजनम् । धर्मञ्चरति धार्म्मिकः । अधर्मञ्चरति अधार्म्मिकः । अधर्माच्चेति न वक्तव्यं भवति ॥

॥ कै ॥ ऽस्येत्यनुवर्त्तमाने तदस्य परिमाणमित्यत्र पुनः प्रत्ययार्थसमर्थविभक्तिनिर्देशात् कृते वा लुकि पुनस्तन्निर्देशसामर्थ्यात् पुनः प्रत्ययः । तद्विधानसामर्थ्याच्च पुनर्लुगभावः ॥

॥ वि० ॥ पुनस्तदस्य परिमाणमिति वचनसामर्थ्यात् स्वार्थे तज्जातीयप्रत्यये तस्य विधानसामर्थ्याद् द्विगुनिमित्तत्वाभावाद्वा लुगभाव इत्यर्थः । इदं वृत्तिकारमतेनोक्तम् । वस्तुतस्तु तदस्येति पुनरुपादानमात्रेणार्हीयत्वापगमे तच्चेऽपि लुगभावे वा द्वे षष्टी जीवितपरिमाणमस्येत्यर्थेऽनेन ठञि लुकमाशङ्क्य कालादित्यधिकारस्थेन तमधीष्ट इति सूत्रेण ठञा द्विषाष्टिकः साधितो भाष्ये कालग्रहणेन यथाकथञ्चित्कालवाचिनो ग्रहणमिति चोक्तं तद्विरुध्येत । त्वद्रीत्याऽनेनापि ठञि लुगभावात् । तस्माद् द्वे षष्टी परिमाणमस्य संघस्य स परिमाणमस्येति भाष्योदाहरणार्थः । तत्र द्विगुनिमित्तत्वाभावान्न लुक् । संघे द्विषष्ठ्यानतिरेकस्यापि सत्त्वात् तस्यापि संख्याशब्दत्वमित्यपरे ॥

॥ वि० ॥ भाष्ये पदाङ्गेति । तदन्तविधेरपवादोऽयम् । अत एव तस्यचेतिपुनरभिहितं तदन्तविधौ हि बहुचपूर्वेऽपि स्यात् तच्च नेष्टमिति वार्त्तिकाशयः । पदशब्देनेति । अत एव भाष्ये उत्तरपदाधिकारे प्रयोजनदानम् । तदन्तविध्यपवादत्वादस्यापि विशेषण एव प्रवृत्तिरित्याशयेनाह । उत्तरपदेनेति । शब्दरूपं विशेष्यमादायेत्यन्ये । समासान्तनिषेध इति । ऋक्पूरबितिप्राप्ते । अत एव ह्यन्तरुपसर्गेतीत्त्वं न तत्र ह्यप इतिकृतसमासान्तानुकरणं व्यत्ययेन षष्ठ्यर्थे प्रथमा । अत्रचेदमेव भाष्यं मानमित्याहुः । तत्वमपीति । वार्तिकस्थेन दीर्घविधावितिविषयनिर्देशेनेदं विरुध्यते ।

॥ कै० ॥ पदाङ्गाधिकार इति । पदशब्देनोत्तरपदं गृह्यते पदैकदेशलोपात् उत्तरपदेन सामर्थ्यादाचिप्तं पूर्वपदमिष्टकादिभिर्विशेष्यते ।

॥ भा० ॥ पदाङ्गाधिकारे तस्य च तदुत्तरपदस्य च । पदाङ्गाधिकारे तस्य च तदुत्तरपदस्य चेतिवक्तव्यम् । पदाधिकारे किं प्रयोजनम् । प्रयोजनमिष्टकेषीकामालानां चिततूलभारिषु । इष्टकचितं चिन्वीत पक्वेष्टकचितं चिन्वीत । इषीकतूलेन मुञ्जेषीकतूलेन । मालभारिणी कन्या उत्पलमालभारिणी कन्या । अङ्गाधिकारे किं प्रयोजनम् । प्रयोजनं महदप्स्वसृनप्तृणां दीर्घविधौ । महान् परममहान् । महत् । अप् । आपस्तिष्ठन्ति स्वापस्तिष्ठन्ति । ऋप् । स्वसृ । स्वसा स्वसारौ स्वसारः परमस्वसा परमस्वसारौ परमस्वसारः । स्वसृ । नप्तृ । नप्ता नप्तारौ नप्तारः । एवं परमनप्ता परमनप्तारौ परमनप्तारः । पद्युष्मदस्मदस्थ्याद्यनडुहो नुम् । पद्भावः प्रयोजनम् । द्विपदः पश्य । अस्तिचेदानीं कश्चित्केवलः पाच्छब्दो यदर्थो विधिः स्यात् । नास्तीत्याह । एवन्तर्हि अङ्गाधिकारे प्रयोजनं नास्तीति कृत्वा पदाधिकारस्य प्रयोजनमुक्तम् ॥

॥ कै० ॥ महदप्स्वस्विति । महदादिभिरङ्गं विशेष्यते । स्वाप इति । न पूजनादिति समासान्तनिषेधः । अपो भीति तत्वमपि स्वद्भिरिति भवति । द्विपद इति । पादः पदित्यत्र पाच्छब्देनाङ्गं विशेष्यते ॥

॥ वि० ॥ भाष्ये पद्युष्मदस्मदस्थ्यादीति समस्तं पृथक् पदम् अनडुह इति त्वसमस्तमेव । अन्यथा नुमोऽनडुच्छब्दमात्रान्वयित्वेनासामर्थ्यात्समासो न स्यात् । पदादयोऽनडुहो नुम्च तदन्तविधिं प्रयोजयन्तीत्यर्थः । समासे एव पादस्य लोप इत्यन्तलोपविधानात् सामर्थ्यादेव तदन्तविधिर्भविष्यतीत्याशयेन काक्वा पृच्छति । भाष्येऽस्तिचेति । आचार्यदेशीय आह । एवन्तर्हीति । सन्निधेर्लिङ्गं बलीय इतिभावः ॥



॥ वि० ॥ तदन्तविधिरिति । तदपवाद उत्तरपदविधिरित्यर्थः । अर्थाधिकाराश्रयेण परिहरति । नैषेति । नन्वेवं पादशब्देन तदन्तविध्यभावे परमपत्काषिणावितिपूर्वोदाहृतासङ्गतिरत आह । एवञ्चेति । अर्थभेदेन तत्साध्वितिभावः । पादशब्दादाख्यानणिचि णिनिमित्तक-

॥ कै० ॥ पादस्य पदेति । ननु पद्भावे तदन्तविधिरुक्तोऽयं तु पदभावविधिः । नैष दोषः । पादशब्देन पूर्वपदस्य विशेषणात्पद्भावे तदन्तविधिः । अनेनैव न्यायेन पदभावेऽपि तदन्तविधिप्रसङ्गः । यथाभूतः पूर्वसूत्रे पादशब्दो निर्दिश्यते तथाभूतस्योत्तरत्रानुमानात् । एवन्तर्हीति । एवञ्च परमपादेन कषतीतिविवक्षायां परमपादकाषीति भवति यदा तु परमः पत्काषीति

॥ भा० ॥ हिमकाषिहतिषु च । यथा पत्काषिणौ पत्काषिणः । एवं परमपत्काषिणौ परमपत्काषिणः । यदि तर्हि पदाधिकारे पादस्य तदन्तविधिर्भवति । पादस्य पदाज्यातिगोपहतेषु यथेह भवति । पादेनोपहतं पदोपहतम् । अत्रापि स्यात् । दिग्धपादेनोपहतं दिग्धपादोपहतमिति । एवन्तर्ह्यङ्गाधिकार एव प्रयोजनम् । ननुचोक्तं न केवलः पाच्छब्द इति । अयमस्ति पादयतेरप्रत्ययः पात् । पदः पदा पदे । पत् । युष्मत् अस्मत् । यूयं वयम् । परमयूयं परमवयम् । अस्थ्यादि । अस्थ्ना दध्ना सक्थ्ना । परमास्थ्ना परमदध्ना परमसक्थ्ना । अनडुहो नुम् । अनड्वान् परमानड्वान् । द्युपथिमथिपुंगोसखिचतुरनडुत्त्रिग्रहणम् । प्रयोजनम् । द्यौः सुद्यौः । पन्थाः सुपन्थाः । मन्थाः परममन्थाः । पुमान् परमपुमान् । गौः सुगौः ॥

॥ कै० ॥ विवक्षा तदा परमपत्काषीति भवति । पादयतेरिति । पदेर्ण्यन्तादित्यर्थः । परमपन्था इति क्वचित्पाठः स त्वयुक्तः समासान्तविधानात् । न पूजनादित्यत्र पूजायां स्वतिग्रहणमितिवचनान्नास्ति निषेधः । तस्मात्सुपन्था इतिपाठः । परमगौरित्यप्यपपाठः । गोरतद्धितलुकीति टच्विधानात् तस्मात् सुगौरितिपाठः ॥

॥ वि० ॥ टिलोपस्य स्थानिवत्त्वात्पदादेशाऽप्राप्तेराह । पदेरिति । क्वौ लुप्तमिति निषेधान्न णिलोपस्य स्थानिवत्त्वमित्यर्थः । अत एव पादस्य पादहस्त्यादिभ्य इति नासूत्रि तथासति तस्यैव प्रतिपदोक्तत्वात्पद्भावः स्यान्नास्येतितात्पर्यम् ॥

॥ वि० ॥ इह । द्युपथीति प्रयोजनवार्तिके । इत्यत एवेति । पद्युष्मदितिवार्तिकस्थादित्यर्थः । आदित्यधिकारादिति । आच्छीत्यतः । अन्यथा नुम् बाधकः स्यात् । अम् च नुमो बाधकः स्यादितिभावः । अन्यथाऽमामोरेवेति । चतुस्साहचर्यादितिभावः । अन्यत्रचेति

॥ कै० ॥ परमसखायाविति बहुव्रीहिः । तत्पुरुषे तु टचा भाव्यम् । अनडुच्छब्दस्येह प्रपञ्चार्थः पाठः । अनडुहो नुम् इत्यत एव वचनादादित्यधिकारादमामोः कृतयोर्नुम्विधानात् नुम्विधौ तदन्तविधिना अमामोरपि तदन्तविधेराक्षेपात् । अन्ये त्वाहुः । असतीह पुनर्ग्रहणे यत्रैव नुम् क्रियते तत्रैवामामौ तदन्तस्य स्याताम् । परमानड्वाह इत्यत्र त्वाम्न स्यादिति पुनः पाठः कर्त्तव्यः पूर्वत्रापि पाठो

॥ भा० ॥ सखा सखायौ सखायः सुसखा सुसखायौ सुसखायः परमसखा परमसखायौ । चत्वारः परमचत्वारः । अनड्वाहः परमानड्वाहः । त्रयाणाम् परमत्रयाणाम् । त्यदादिविधिभस्वादिस्त्रीग्रह-णम् । प्रयोजनम् । सः । अतिसः । भस्त्रका भस्त्रिका बहुभस्त्रका बहुभस्त्रिका निर्भस्त्रका निर्भस्त्रिका । स्त्रीग्रहणं च प्रयोजनम् । स्त्रियौ स्त्रियः । राजस्त्रियौ राजस्त्रियः । वर्णग्रहणं च सर्वत्र । प्रयोजनम् । क्व सर्वत्र । अङ्गाधिकारे चान्यत्र च । अन्यत्रोदाहृतम् । अङ्गाधिकारे । अतो दीर्घो यञि सुपि च । इहैव स्यात् आभ्याम् । घटाभ्यामित्यत्र न स्यात् ॥

॥ कै० ॥ नुमर्थः कर्त्तव्यः । अन्यथा अमामोरेव तदन्तविधिः स्यान्न तु नुम्विधौ । अति स इति । शोभनः स इत्यर्थः । उपसर्ज्जने तु तच्छब्दार्थे अतितदितिभवति । बहुभस्त्रिकेति । नञ्पूर्वाणामपीति न वक्तव्यं भवति । वर्णग्रहणञ्चेति । यद्येवमुगि-दर्णग्रहणवर्जमित्यत्र किमर्थं वर्णग्रणम् । उच्यते । प्रत्ययविधौ तदन्तविधिप्रतिषेधाद्वर्णग्रहणे प्रत्ययविधौ प्रतिषेधाशङ्कानिरासार्थम् ॥

॥ वि० ॥ भाष्यादङ्गाधिकारादन्यत्र प्रत्ययविधानेऽपि वर्णग्रहणे तदन्तविधिरिति मत्वा नोदयति । यद्येवमिति । अन्यत्रेत्यनेन भाष्येणोक्तो झलित्यादौ निषेधाभावात्तदन्तविधिरनुज्ञायते । एवञ्च प्रत्ययविधौ वर्णग्रहणे स प्रतिषेध एव स्यादतस्तत्र वर्णग्रहणमिति परिहरति । उच्यत इति ॥



॥ वि० ॥ सिद्धे तदन्तविधाविति । उक्तवचनेन वाचनिक इत्यर्थः । यत्तु प्रत्ययाक्षिप्तप्रकृतिप्रत्ययावयवकसमुदायस्य विशेषणादेतत्सूत्रसिद्ध एव स इति । तन्न । तादृशार्थस्य नियताक्षेपे आक्षिप्तस्य वा शाब्देऽन्वये मानाभावात् । किञ्च । वनो रचेत्यादौ समासप्रत्ययविधावित्यनेनाऽस्यापि निषेधापत्तिः । मम तु सौत्रस्यैव स निषेध इति न दोषः । पञ्चम्यन्तात् परः प्रत्ययो यत्र कार्यान्तरविधानायाऽनूद्यते तद्भिन्नस्थले प्रत्ययग्रहणं तदन्तविधेः प्रयोजन-मितिवार्त्तिकार्थस्तदाह । यत्रेत्यादि । परिगृह्यते । अनूद्यते । नत्वं स्यादिति । इषत्तीर्णेत्यादौ धातोस्तकारस्य तत्पूर्वदस्य च तत् स्यादित्यर्थः । न च संज्ञाविधाविति । संज्ञया विधावित्यर्थ इत्यभिमानः । यत्र हीति । संज्ञाया विधौ स निषेधो न तु संज्ञया विधौ । तर्हीति । प्रदेशेषु तदन्तग्रहणं यदि तर्हीत्यर्थः । पुनस्तदन्तेति ।

॥ कै० ॥ प्रत्ययग्रहणं चापञ्चम्या इति । प्रत्ययग्रहणे यस्मात् स विहित इति सिद्धे तदन्तविधावपञ्चम्या इतिप्रतिषेधार्थं वचनम् । यत्र पञ्चम्य-न्तात् परः प्रत्ययः कार्यान्तरविधानाय परिगृह्यते तत्र तदन्तविधिर्माभूद् यथा रदाभ्यामित्यत्र । तत्र हि तदन्तविधौ रेफदकाराभ्यामुत्तरो यो निष्ठान्तस्तस्य नत्वं स्यात् । न च संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिर्नास्तीति निषेधावतारः । यत्र हि संज्ञाविधानं तत्रायं निषेधः । इह तु

॥ भा० ॥ प्रत्ययग्रहणञ्चापञ्चम्याः । प्रत्ययग्रहणं च अपञ्चम्याः प्रयोजनम् । यञिञोः फग्भवति । गार्ग्यायणः । वात्स्यायनः ॥

॥ कै० ॥ निष्ठानुवादेन नत्वविधिः । संज्ञाविधौ तर्हि तदन्तविधिनिषेधस्य किं फलम् । उच्यते । यदि संज्ञाविधौ प्रत्ययग्रहणे तदन्तस्य संज्ञा स्यात् प्रदेशेषु पुनस्तदन्तविधिः स्यादिति प्रत्ययान्तान्तं गृह्येत तस्मात्संज्ञाविधावपि तदन्तविधिनिषेधो रदाभ्यामित्यत्र च । अपञ्चम्या इत्यस्य नाय-मर्थः । यत्र पञ्चम्यन्तात्प्रत्ययो विधीयते तत्र तदन्तविधिर्न भवतीति । एवं हि व्याख्यायमाने ञितश्च तत्प्रत्ययादित्यत्र तत्प्रत्ययादेवाञि विधीयमाने तस्यैवाङ्गसंज्ञायां वृद्धिस्वरौ स्यातां न तु तदन्तस्येतीति ॥

॥ वि० ॥ घादिभिरुत्तरपदस्य विशेषणादितिभावः । तस्मादिति । संज्ञाविधौ प्रत्ययग्रहण इति प्रत्ययग्रहणे चापञ्चम्या इति वचनाभ्यामितिभावः । नायमर्थ इति । प्रत्यासत्त्या चास्यार्थस्य प्रसक्तिः । पञ्चम्यन्तादिति । पञ्चम्यन्तनिर्दिष्टप्रत्ययादित्यर्थः । समासप्रत्ययविधाविति तु सौत्रस्य निषेध इति न तेनाऽस्य गतार्थतेतिभावः । तत्प्रत्ययादेव । विकारावयवविहितप्रत्ययादेव । एवं चोद्भ्विकारादौ ञ्कादञि वुञ एव वृद्धिस्वरौ स्यातामित्यर्थः । भाष्ये यञिञोः फगिति । यद्यपि ङ्याप्प्रातिप-दिकादित्यधिकारादपञ्चम्या इतिनिषेधस्तत्र प्राप्नोति तथापि न तद् व्यधिकरणं विशेषणं किन्तु यञिञोरितिपञ्चम्यर्थे षष्ठीसत्त्वात् तस्य समानाधिकरणं विशेष्यमिति अपञ्चम्या इत्यस्याऽविषयोऽयमितिभावः ॥

७९६

॥ वि० ॥ तस्मादिति । प्रत्ययग्रहणे यस्मात् स विहित इति नियमोऽत्रापि तदन्तविधावपेक्ष्य एव । एतत्सिद्ध एव च तदन्तविधिस्तत्रानूद्यते उक्तनियमबोधनाय । अन्यथा परमगार्ग्यशब्दात् फकि पारमगार्ग्यायण इतिस्यादितिन्यायव्युत्पादनार्थमित्यर्थः । नन्वेतद्रीत्या परमश्चासौ गार्ग्यायण इति भाष्योदाहरणार्थः । नहीदृशेऽर्थे परमगार्ग्यशब्दस्य प्रकृतित्वसंभावनापीति कथमेतन्न्यायप्रदर्शनमनेन भाष्येणेति चेन्न । परमगार्ग्यैकदेशगार्ग्यशब्दादेव प्रत्ययः परमगार्ग्यस्यापत्यमित्यर्थेऽपि उक्तन्यायादित्यदोषात् । विशिष्टैकार्थीभावेऽवयवेनापि तस्य सत्त्वमस्त्येव निष्कृष्यैकार्थीभाव एव वृत्तौ निमित्तमित्यत्र न मानम् । अत एवानुपसर्जनादितिसूत्रे कुम्भकारीशब्दैकदेशात् कारीशब्दादप्युत्पत्तिः शङ्किता भाष्ये । अस्य कैयटस्याप्यत्रैव तात्पर्यम् । एतन्न्यायेत्यस्यापि यस्माद्विहित इत्यादिन्यायेन समस्तैकदेशात्प्रत्यय इत्येतन्न्यायेत्यर्थः । नचैवं सुपिच रोः सुपीत्यादौ सुबन्ते इत्यर्थापत्तिः । न हि तत्र पञ्चम्यन्तात्परत्वेन प्रत्ययो विशेष्यत

॥ कै० ॥ परमगार्ग्यायण इति । तत्र गार्ग्यायण इत्येवोदाहरणम् । गार्ग्यशब्दाद्यञन्ताद् फग्विधानाद् नत्वत्र परमगार्ग्यशब्दात्प्रत्ययस्तस्य यञन्तत्वाभावात् । तस्माच्च फकि विधीयमाने पारमगार्ग्यायण इत्यनिष्टरूपप्रसङ्गः । तस्मादेतन्न्यायव्युत्पादनार्थं परमगार्ग्यायण इत्युपन्यस्तम् ।

॥ भा० ॥ परमगार्ग्यायणः परमवात्स्यायनः । दाचायणः परमदाचायणः । अपञ्चम्या इति किमर्थम् । दृषत्तीर्णा परिषत्तीर्णा ॥

॥ कै० ॥ उत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तविध्यभावो लेखग्रहणेन ज्ञापितः । तत्र रदाभ्यामित्यत्र निष्ठायाः प्राधान्येनाश्रयणात्तदन्तविध्यभावः । स्यतासील्लुटोरित्यत्र धातोरित्यधिकारादपञ्चम्या इति निषेधाल्लृलुटोर्वा प्राधान्येनाश्रयणात्तदन्तविध्यभावः ॥

॥ वि० ॥ इति वाच्यम् । तस्मिन्निति परिभाषया सुपि परे इत्यर्थे नियमेन कस्मादित्यवधिसाकाङ्क्षत्वेनोपस्थिताङ्गादेरेवावधित्वेनान्वयेन पञ्चम्यन्तस्य विशेषणत्वेन निषेधप्रवृत्तेरित्याहुः । ननु येननाप्राप्तिन्यायेनायं निषेधो वाचनिकतदन्तविधेरेवेति घरूपेत्यादौ उत्तरपदस्य विशेष्यतया प्राप्ततदन्तविधिः स्यादेवेत्यत आह । उत्तरपदेति । अन्यथा हृदयस्य हृल्लेखयदणित्यत्राणग्रहणेनैव सिद्धे लेखग्रहणं व्यर्थं स्यात् । लेख इत्यणन्तमेव तत्र गृह्यते घञन्तस्य त्वनभिधानात्तत्राग्रहणमेवेति भावः । अयमपि निषेधो विशेषणविशेष्यभावव्यत्याससूचक एवेत्याह । तत्रेति । प्राधान्येनेति । शब्दरूपापेक्षयेत्यर्थः । धातोरिति । इदं स्यतासिविशेषणमिति चिन्त्यमिदम् । सुपिचेत्यादावस्मदुक्तरीत्यैवात्रापि समाधानं बोध्यम् ॥

७९७

॥ वि० ॥ नन्वलाऽनर्थकेनेत्ययुक्तमर्थवत्परिभाषया विरोधादत आह । अर्थवदिति । स्थितमिति । स्वं रूपमित्यत्रेतिशेषः । कुतो हेतोरित्यत आह । वर्णरूपतया तस्येति । वर्णरूपतया यस्येतिपाठे नार्थवत्तारूपमित्यतः प्राक् तस्य हीतिशेषो बोध्यः । अर्थवत्तेति । तत्त्वसमानाधिकरणं रूपमित्यर्थः । वर्णसमुदायग्रहणं प्राप्तमितिपाठेऽनर्थकेत्यादिः । तदपि प्राप्तमितिशेषः । गुणत्वादिति । तदन्तविधिनियमशेषत्वादित्यर्थः । वर्णसमुदायेन

॥ कै० ॥ अलैवानर्थकेनेति । अर्थवद्ग्रहणेनानर्थकस्येति वर्णनिर्देशेषु नाश्रीयत इतिस्थितम् । वर्णरूपतया यस्य शब्दस्याश्रयणं नार्थवत्तारूपमाश्रीयते । तत्र वर्णग्रहणं च सर्वत्रेत्यत्र वर्णग्रहणे जातिग्रहणाद्वर्णसमुदायग्रहणं प्राप्तमनेन

॥ भा० ॥ अलैवाऽनर्थकेन नान्येनानर्थकेनेतिवक्तव्यम् । किं प्रयोजनम् ।
हन्ग्रहणे प्लीहन्ग्रहणं माभूत् । उञ्ग्रहणे गर्मुञ्ग्रहणम् । स्त्रीग्रहणे शस्त्रीग्रहणम् ॥

॥ कै० ॥ नियमेन निवार्यते । अलैवेति चैकत्वसंख्या गुणत्वाद्विवच्यते । नियमविधानसामर्थ्याद्वा । हन्ग्रहण इति । तेन प्लीहानावितिदीर्घो भवति । उञ्ग्रहण इति । उदः स्थास्तम्भोरित्यत्र । तेन गर्मुत् स्थास्यतीति पूर्वसवर्णाभावः । शस्त्रीग्रहणमिति । तेन शस्त्र्याविति स्त्रिया इतीयङ् न भवति ॥

॥ वि० ॥ चेत्तदन्तविधिस्तत्र्यर्थवतैवेति फलितम् । अन्ये तु अङ्गाधिकारे तदन्तविधेरतिप्रसङ्गस्य निवारणायेदम् । वर्णग्रहणं चेत्यन्वाख्यानवार्त्तिके ज्ञापकसिद्धजातिग्रहणे न मानम् । एवमलैवेत्यत्रापि एकत्वसंख्या गुणत्वादित्यपि चिन्त्यम् । जातिपरत्वे तद्गतसंख्याया एव तदुत्तरविभक्तिवाच्यत्वेन तद्विवक्षयाऽपि दोषानुद्धारादित्याहुः । दीर्घो भवतीति । इन्हन्निति नियमेनानिवर्तितत्वादितिभावः । अर्थवत्परिभाषासिद्धार्थानुवादोऽयम् ॥

॥ वि० ॥ संपर्युपेभ्य इति । वृत्तिपाठमनुसृत्येदम् । तस्योच्छब्देनेति । वा पदान्तस्येत्यतः पदग्रहणमनुवर्त्य तस्योदा विशेषणादुदन्तस्य पदस्येत्यर्थ उचितः । नन्वव्यभिचारात्तवर्गेणोदोऽपि विशेषणं व्यर्थमत आह । वा निवृत्तत्वादिति । पदग्रहणमपि फलाभावान्निवृत्तं विशेषणं चेत्यपि

॥ कै० ॥ पायसं करोतीति । संपर्युपेभ्यः इति सुण् न भवति । तत्र हन्ग्रहणे स्त्रीग्रहणे चाङ्गस्य विशेष्यत्वात् स्यात्तदन्तविधिः उदःस्थेत्यत्र तोरित्यधिकारात् तवर्गान्तस्योच्छब्देन विशेषणात् स्यात्तदन्तविधिः । प्रतिषेधविज्ञाने तु न भवति उद एव तवर्गेण विशेष्यत्वात् तोरित्यस्य वा निवृत्तत्वात् । संग्रहणे पदप्रकरणात्तदन्तविधिः स्यादिति निवार्यते । पदेन समादयो विशेष्यन्ते इति तदन्तविध्यभावः । पायसं करोतीति करोतेर्भूषणार्थवृत्तिता संभवतीति सुट् स्यात् । किमर्थमिति । अत्रैवानर्थकेनेत्येतद्वाच्यिष्यते । अस्य हि नियमस्य स्त्रीहानावित्यादि

॥ भा० ॥ संग्रहणे पायसं करोतीति माभूत् । किमर्थमिदमुच्यते न पदाङ्गाधिकारे तस्य च तदुत्तरपदस्यचेत्येव सिद्धम् । नचेदं तद् नापि तदुत्तरपदम् ॥

॥ कै० ॥ प्रयोजनं तच्चान्यथा सिध्यति अङ्गाधिकारे हन्ग्रहणं स्त्रीग्रहणं चास्ति एङः पदान्तादतीति पदाधिकारे संग्रहणं वा पदान्तस्येत्यतः पदग्रहणानुवर्त्तनादुदः स्थास्तम्भोरितिपूर्वसवर्णः पदाधिकारे विधीयते पदाङ्गाधिकार इत्यत्र च केवलपदाधिकारोऽपि ग्रहीष्यते उत्तरपदाधिकारोऽपि ततश्च स्त्रीहानावित्यादिषु दोषो न भवति नहि स्त्रीहानावित्यत्र हनित्यङ्गं नापि तदुत्तरपदमितिप्रश्नः ॥

॥ वि० ॥ बोध्यम् । पदप्रकरणात् ! एङः पदान्तादतीत्यतः । नन्वत्र करोतिर्न भूषणार्थोऽत आह । भूषणेति । पायसं भूषयतीत्यर्थसंभवादितिभावः । केवलपदाधिकारोऽपीति । अन्यथाऽसन्देहायोत्तरपदेत्येव वदेदितिभावः । भाष्ये नापीति । समासचरमावयवे तस्य रूढत्वादितिभावः ॥



॥ वि० ॥ नन्वेवं तदन्तविध्यभावे दृषदृणावित्याद्यसिद्धिस्तदन्तविधौ तु स्त्रीहानावित्यत्र दोषोऽत आह । अत्रैवेति । ननु वार्तिकोक्तोऽपि फलतस्तदन्तविधिरेवेत्यत आह । प्राथम्येति । सौत्रतदन्तविधिरेव ज्यायान् न तु वार्त्तिकोक्तोत्तरपदस्येत्यंश इति नियम आवश्यक इतिभावः ।

॥ कै० ॥ तन्न वक्तव्यमिति । पदाङ्गाधिकार इत्येतदित्यर्थः । अत्रैवाऽनर्थकेनेति वचनेनाऽर्थवता तदन्तविधिसद्भावादितिभावः । तदन्तविधिरेवेति । प्राथमकल्पिकः सूत्रेणैव तदन्तविधिः स एव त्वत्रैवानर्थकेनेति नियम्यते । परमातिमहानिति । परमश्चासावतिमहानितिसमासः । तत्र परमादिर्महच्छब्दो न भवति नापि महच्छब्दोत्तरपदः । अतिमहच्छब्दोत्तरपदत्वादिति

॥ भा० ॥ तन्न वक्तव्यं भवति । किं पुनरत्र ज्यायः । तदन्तविधिरेव ज्यायान् । इदमपि सिद्धं भवति । परमातिमहान् । एतद्धि नैव तद् नाऽपि तदुत्तरपदम् । अनिनस्मन्ग्रहणानि च । अर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति । अन् । राज्ञेत्यर्थवता साम्नेत्यनर्थकेन । अन् । इन् । दण्डीत्यर्थवता वाग्मीत्यनर्थकेन । इन् । अस् । सुपया इत्यर्थवता सुस्रोता इत्यनर्थकेन । अस् । मन् । सुशर्म्मा इत्यर्थवता सुप्रथिमा इत्यनर्थकेन । मन् ॥

॥ कै० ॥ सान्तमहत इति दीर्घत्वं न स्यात् । अनेनैव न्यायेनोगिल्लचणो नुमागमोऽपि न स्यात् तदन्तविधिना त भवति । सुस्रोता इति । अनागमकानां सागमका आदेशा इत्याश्रयणादत्रास आनर्थक्यमर्थवतो ह्यागम इतिन्यायाश्रये त्वर्थवानेवाऽस्शब्दः ॥

॥ वि० ॥ परमादिरिति । परमादिः समास उद्देश्यो महच्छब्दो न भवतीतिविधेयं बोध्यम् । भाष्येऽनिनिति । अल्लोपोऽनः इन्हन्पूषेति अत्वसन्तस्य मन इत्यादिषु वर्त्तमानानीत्यर्थः । अर्थवानेवासिति । इदं चिन्त्यम् । कृते ह्यागमे तद्विशिष्टस्यैवार्थवत्ताया न्याय्यत्वादन्यत्र भाष्ये स्पष्टमुक्तत्वाच्च ॥

॥ वि० ॥ नान्येनेति । अत एवैको यणचीत्यादौ न दोषः । यस्मिन्विधिरितिवाचनिकमेव यस्मिन्निति सप्तम्यन्तोपलक्षणं सप्तम्यन्तं यत्र विशेषणं तत्रेतितियावत् ॥ ❁ ॥ वृद्धिर्यस्य । ननु वृद्धिग्रहणाभावे सर्वत्र वृद्धसंज्ञायां विशेषणान्तराणां वैयर्थ्यमेव स्यादितितन्मात्राचेपोऽनुपपन्न इतिशङ्कते । असतीति । संकोचे प्रमाणाभावादच्शब्देन सर्वेष्वचु गृहीतेषु तदादिः समीपो हलेव भवतीति परिहरति । यस्येति । नन्वचामिति निर्द्धारणे

॥ कै० ॥ यस्मिन्विधिरिति । तदन्तविध्यपवादस्तदादिविधिः । अत एव विशेषणेन भवति नान्येन ॥ ❁ ॥ वृद्धिर्यस्य । वृद्धिग्रहणमिति । असति वृद्धिग्रहणे कथं सर्वस्य वृद्धसंज्ञा न भवतीतिचेत् । यस्याचामादिर्भिन्नजातीयो हल् तद्वृद्धमित्यजादि

॥ भा० ॥ यस्मिन्विधिस्तदादावल्ग्रहणे । यस्मिन्विधिस्तदादावितिवक्तव्यम् । किं प्रयोजनम् । अचिश्नुधातुभ्रुवां य्वोरियङुवङाविति इहैव स्यात् श्रियौ भ्रुवौ श्रियो भ्रुव इत्यत्र न स्यात् ॥ ❁ ॥ वृद्धिर्यस्याचामादिस्तद्वृद्धम् । वृद्धिग्रहणं किमर्थम् । यस्याचामादिस्तद्वृद्धमितीयत्युच्यमाने दात्ता राचिताः । अत्रापि प्रसज्येत ॥

॥ कै० ॥ व्यावर्तितं स्यात् । दात्ता इति । असति वृद्धिग्रहणे निर्द्धारणहेतोर्धर्मस्यानुपादानादादिशब्दः समीपार्थो विज्ञायेत दत्तशब्दो रचितशब्दश्चात्र क्रियाशब्दो द्रष्टव्यः । नामधेयस्य तु पक्षे भवत्येव वृद्धसंज्ञा । प्रस्थेऽवृद्धमित्यत्र यदा नामधेयत्वादवृद्धाः पक्षे कर्क्यादयस्तदर्थं प्रतिषेधः स्यात् ॥

॥ वि० ॥ षष्ठी निर्द्धारणं च तुल्यजातीयस्येति यस्यादिरचां मध्ये कश्चिदिति विज्ञायमाने दत्तादौ नातिप्रसक्तिरत आह । असतीति । समीपार्थ इति । पूर्वसमीपार्थ इत्यर्थः । एवञ्च तन्निरूपितसम्बन्धे षष्ठी न तु निर्द्धारण इतिभावः । यस्याऽचामादिर्हलित्यर्थः स्यादिति तात्पर्य्यम् । नामधेयस्य त्विति । वा नामधेयस्येतिवचनादितिभावः । भाष्येऽत्रापीति । अणप्रकृतावपीत्यर्थः । नन्वेवं हलादेः सर्वस्य वृद्धत्वे प्रस्थेऽवृद्धमितिसूत्रे कर्क्यादिप्रतिषेधोऽनर्थकोऽत आह । प्रस्थ इति ॥



॥ वि० ॥ तदित्यस्यानुपादान इति । तदित्यस्याप्यनुपादाने इत्यर्थः । वृद्धेरेवेति । तथाच प्रदेशेषु त्यदादिविषये मुख्यो वृद्धशब्दोऽन्यत्र वृद्धघटिते लाक्षणिक इति वैरूप्यप्रसङ्ग इतिभावः । ननु मालादीनामिति लिङ्गादादिसहचरितो यस्य वृद्धिस्तस्यापि संज्ञा स्यादत आह ।

॥ कै० ॥ यस्येतिव्यपदेशायेति । संज्ञिन इतिशेषः । अन्यथा तच्छब्देन किं प्रत्यवमृश्येत तदित्यस्यानुपादाने च वृद्धेरेव वृद्धसं-

॥ भा० ॥ वृद्धिग्रहणे पुनः क्रियमाणे न दोषो भवति । अथ यस्य ग्रहणं किमर्थम् । यस्येति व्यपदेशाय । अथाज्ग्रहणं किमर्थम् । वृद्धिर्यस्यादिस्तद्वृद्धमितीयत्युच्यमाने इहैव स्यात् एतिकायनीयाः । औपगवीयाः । इह न स्यात् । गार्गीया वात्सीया इति । अज्ग्रहणे पुनः क्रियमाणे न दोषो भवति । अथादिग्रहणं किमर्थम् । वृद्धिर्यस्याचां तद्वृद्धमितीयत्युच्यमाने सभासन्नयने भवः साभासन्नयन इत्यत्रापि प्रसज्येत । आदिग्रहणे पुनः क्रियमाणे न दोषो भवति । वृद्धसंज्ञायामजसंनिवेशादनादित्वम् । वृद्धसंज्ञायामजसन्निवेशादादिरित्येतन्नोपपद्यते । नह्यचां सन्निवेशोऽस्ति । ननु चैवं विज्ञायते अजेवादिरिति ॥

॥ कै० ॥ न्याप्रसङ्गः । गार्गीया इति । न हि गार्ग्यशब्दस्य वृद्धिरादिः किं तर्हि हल् । मालादीनां चेत्येतत्तु नामधेयार्थं स्यात् ॥

॥ वि० ॥ मालादीति । भाष्येऽथादीति । अचामितिषष्ठ्युपादानसामर्थ्यादादिशब्दोऽध्याहरिष्यत इतिप्रश्नः । यस्यावयविनोऽवयवानामचां मध्ये वृद्धिरप्यवयव इत्यध्याहारं विनैवार्थसम्भवेऽध्याहारे मानाभाव इत्युत्तराशयः ॥

॥ वि० ॥ तत्र प्रसङ्गादादिग्रहणसत्त्वासत्त्वयोराद्यन्तवत्सूत्रस्थैकग्रहणप्रयोजनं दर्शयति । सति चेति । असत्येकग्रहणे पूर्वसत्त्वितेऽपि भाशब्दाकारे आदिवत्त्वात् सभासन्नयनस्यापि वृद्धत्वं स्यादितिभावः । अच इति । एरच इत्यर्थः । तत्र हि धातोरित्यधिकार इति भावः । घञचोः स्वरे विशेषः । नन्वेवं यस्य वृद्धिरवयव इत्येव सिद्धेऽचामितिव्यर्थमत आह । अचामिति । तथाच राट्शब्दादेर्वृद्धत्वं नेतिभावः । कृते त्वादिग्रहणे यत्र वृद्धेरादित्वमेवाजपेक्षया नत्वनादित्वं तस्यैव तेन ग्रहणान्न सभासन्नयने दोषः । अचामितिवहुत्वमविवक्षितं तेन मालीयादिसिद्धिः । ननु यत्र हलघटिता अच एव

॥ कै० ॥ सभासन्नयन इति । सतिचेहादिग्रहणे आद्यन्तवत्सूत्र एकग्रहणस्य सभासन्नयनशब्दः प्रत्युदाहरणम् । असति त्विहादिशब्दे दरिद्रातेरिवर्णान्तलक्षणस्याचोऽभाव एकग्रहणस्य प्रयोजनम् । अचामिति तु बहुत्वं संख्याविवक्षार्थं स्यात् । नह्यचामिति । सर्वस्य प्रातिपदिकस्याज्झल्समुदायरूपत्वात् । अचामित्यनेन च केवलानामचां समुदायः सन्निवेशरूपो निर्दिष्टः । पौर्वापर्येणावस्थानं सन्निवेशः स च केवलानामचां नास्ति । ननुचैवमिति । अचां सन्निवेशस्यासम्भवादचां मध्येऽजपेक्षया यस्य वृद्धिरादिरिति विज्ञास्यत इत्यर्थः ॥

॥ वि० ॥ सन्निविष्टास्तत्रास्य प्रवृत्तिरुचिता नतु हलन्तरितेष्वचु इति मन्यमानः शङ्कते । भाष्ये वृद्धसंज्ञायामिति । नन्वस्त्येव मातृकापाठे सन्निवेशोऽत आह । सर्वस्येति । वृद्धत्वप्रयुक्तकार्यभाज इत्यर्थः । वृद्धत्वनिबन्धनकार्यस्य प्रातिपदिके सत्त्वादितिभावः । अचामित्यनेन च केवलानामिति । सर्वपदानां सावधारणत्वेन प्रथमतस्तथैव प्रतीतेरितिभावः । अज्मात्रसम्बन्धिनो यस्य समुदायस्याऽऽदिर्वृद्धिरित्यर्थः स्यादिति तात्पर्यम् । ननु प्रथमान्ताच्पदाभावादजेवादिरित्ययुक्तमत आह । अजिति । निर्द्धारणषष्ठ्याश्रयणान्निर्द्धारणस्य समानजातीयविषयत्वाच्च तल्लाभ इतिभावः । अज्झल्समुदायेऽप्यजपेक्ष एवादिर्ग्रहीष्यते इतिभाष्याक्षरार्थः ॥



॥ वि० ॥ वृद्धिविशेषणार्थेति । तस्याः प्रधानत्वादचामिति तस्या एव विशेषणं स्यादित्यर्थः । यदीयादिर्वृद्धिरज्मध्यवर्तिनीत्यर्थः । निर्द्धार्यमाणनिर्द्धारणावध्योः सजातीयत्वाच्च वृद्धेरच्त्वलाभः । तत्र वृद्धेरच्त्वाव्यभिचाराद् विशेषणसामर्थ्येन आचरसमाम्नायिकाज्रूपलक्षणवृद्धिपरिग्रह इतिभावः । आकारस्य निवृत्तिप्रसङ्ग इति । वृद्धसंज्ञानिमित्तत्वनिवृत्तिराकारस्य स्यादित्यर्थः । तत्रासाधारणं प्रत्युदाहरणमाह । ततश्चेति । भाष्योक्तस्य

॥ कै ॥ नैवं शक्यमिति । वृद्धिविशेषणार्थां निर्द्धारणे षष्ठी स्यात् । अचां मध्ये अज्रूपा या वृद्धिरित्याकारस्य निवृत्तिप्रसङ्गः । आकारो ह्यनजेव सन् केवलमच्कार्याणि ग्रहणकशास्त्रेण लभते ततश्चाश्वलायन इत्यत्र न स्यात् गार्ग्य इत्यत्र चाकारस्यानच्त्वात्

॥ भा० ॥ नैवं शक्यम् । इहैव प्रसज्येत । औपगवीयाः । इह न स्यात् । गार्गीयाः । एकान्तादित्वं तर्हि विज्ञायते । एकान्तादित्वे च सर्वप्रसङ्गः । इहापि प्रसज्येत । सभासन्नयने भवः साभासन्नयन इति ॥

॥ कै० ॥ समुदायानादित्वाच्च न स्यात् । एकान्तादित्वे चेति । एकान्ता अवयवा अचः प्रातिपदिकस्य तेषामचाम् आदिर्वृद्धिर्यस्य तद्वृद्धमित्यर्थः । सर्वप्रसङ्ग इति । नह्यत्र विशेष उपादीयते सर्वेषामचामादिर्वृद्धिरिति ततश्च मध्येऽपि वर्तमान आकारोऽन्याजपेक्षया आदिरितिसभासन्नयने संज्ञाप्रसङ्गः । आदिग्रहणं त्वन्त्यनिवृत्त्यर्थं स्यात् । खट्वेति ॥

॥ वि० ॥ साधारणत्वं ध्वनयन्नाह । समुदायेति । यस्येत्याद्यपेक्षया षष्ठीतिभावः । एवं यस्येति आद्युपजनितव्यतिरेके षष्ठीमङ्गीकृत्याऽचामिति निर्द्धारणषष्ठ्यां दोषोऽभिहितः । अनुपजनितव्यतिरेके यस्येतिषष्ठ्यामपि तं वक्तुं भाष्ये एकान्तादित्वमुक्तं तद्व्याचष्टे । एकान्ता इति । यस्य प्रातिपदिकस्येति सम्बन्धः । एवञ्च यत्प्रातिपदिकावयवभूताऽचामादिर्वृद्धिस्तत्प्रातिपदिकं वृद्धमितिसूत्रार्थः । नन्वादिशब्दोपादानादेव सर्वेषामचामितिलप्स्यतेऽत आह । आदिग्रहणमिति ॥

॥ वि० ॥ उभयरूपत्वेऽपीति । अज्भल्रूपत्वेऽपीत्यर्थः । यस्येति नाचां विशेषणं तेषामन्यविशेषणत्वाद् नाप्यादेर्व्यवहितत्वात् किन्तु वृद्धेः । अचामितिचादेर्विशेषणं सन्निधानाद् न वृद्धेर्व्यवहितत्वात् । एवञ्च यस्य वृद्धिरचामादिरित्युक्ते लब्धस्याऽजपेक्षादित्वस्योपपत्तये मध्ये वर्तमानापि हलाकृतिर्न विवक्ष्यत इतिभावः । सकलाजिति । संकोचे मानाभावः । सतोऽपीति । आदौ मध्ये वेति शेषः । अचामितीति । केवला-

॥ कै० ॥ सिद्धमिति । उभयरूपत्वेऽपि प्रातिपदिकस्याऽजाकृतिरचामिति वचनादाश्रीयते । विद्यमानापि हलाकृतिर्न विव-क्ष्यते । तेनाऽयमर्थः । यस्य शब्दस्य सकलाऽजपेक्षया वृद्धिरादिस्तद्वृद्धमिति । यथा पङ्क्तौ ब्राह्मणानामादिमानयेत्युक्ते सतो-ऽपि शूद्रादीननादृत्य ब्राह्मणजातीयापेक्षया यो ब्राह्मण आदिः स आनीयते । व्यञ्जनस्येति । आचामितिवचनाद्विद्यमानान्यपि

॥ भा० ॥ सिद्धमजाकृतिनिर्देशात् । सिद्धमेतत् । कथम् । अच आकृतिर्निर्दिश्यते । एवमपि व्यञ्जनै-र्व्यवहितत्वान्न प्राप्नोति । व्यञ्जनस्याऽविद्यमानत्वं यथान्यत्र । व्यञ्जनस्याविद्यमानवद्भावो वक्तव्यो यथाऽन्यत्रापि व्यञ्जनस्याविद्यमानवद्भावो भवति । क्वान्यत्र । स्वरे ॥

॥ कै० ॥ व्यञ्जनानि न विवक्षितानीत्यर्थः । यथान्यत्रेति । यथा स्वरविधावयोग्यत्वाद्व्यञ्जनमविद्यमानवदेवमिहाप्यचामिति वचनादित्यर्थः । ह्रस्वनुड्भ्यामिति स्वरविधौ नुड्ग्रहणाल्लिङ्गाद्व्यञ्जनं व्यवधायकमेवेत्युदश्वित्वानितिमतुप उदात्तत्वं न प्रवर्तते ॥

॥ वि० ॥ च्सन्निवेशासम्भवादितिभावः । स्वरविधाविति । स्वरे विधेये इत्यर्थः । अयोग्यत्वादिति । स्वराणामज्धर्मत्वादितिभावः । अत एव यतोऽनाव इत्यनाव इति प्रतिषेधः सार्थकः । नुड्ग्रहणादिति । हल्स्वरप्राप्तिविषयकमेवाऽनाव इतिज्ञापकमितिभावः । अन्यथा नुटोऽविद्यमानत्वाद्चखानित्यादौ ह्रस्वा-दित्येव मतुप उदात्तत्वं सिद्धमिति तद्वैयर्थ्यं स्यादिति तत्तात्पर्यम् ॥



॥ वि० ॥ पौरुषेयमिति । आधुनिकमित्यर्थः । गृह्यते इति । अत्र वार्तिके इत्यादिः । अत एवैङ् प्राचां देशे इति चरितार्थं रूढमात्रस्य नामत्वेन ग्रहणे तद्वैयर्थ्यं स्पष्टमेव । घटीय इति गहादित्वात्साधु घाट इति त्वसाधु । अत एव भाष्ये देवदत्तशब्द उदाहृत इतिभावः । भाष्ये गोत्रान्ताद्वेति । गोत्रप्रत्ययान्तोत्तरपदादित्यर्थः । चारायणो गोत्रान्तो यथाऽसमासे वृद्धत्वाच्छं लभते तथा समासे वृद्धत्वाभावेऽपीत्यर्थः । वेत्यनेन वृद्धसंज्ञा वा

॥ कै० ॥ वा नामधेयस्येति । पौरुषेयं नाम गृह्यते । कम्बलचारायणीया इति । कम्बलप्रियस्य चारायणस्य शिष्या इत्यर्थः ।

॥ भा० ॥ वा नामधेयस्य । वृद्धसंज्ञा वक्तव्या । देवदत्तीयाः । दैवदत्ताः । यज्ञदत्तीयाः । याज्ञदत्ताः । गोत्रोत्तरपदस्य च । गोत्रोत्तरपदस्य च वृद्धसंज्ञा वक्तव्या । कम्बलचारायणीयाः । ओदनपाणिनीयाः । घृतरौ-ढीयाः । गोत्रान्ताद्वाऽसमस्तवत् । गोत्रान्ताद्वा असमस्तवत्प्रत्ययो भवतीति वक्तव्यम् । एतान्येवोदाहरणानि । किम-विशेषेण । नेत्याह । जिह्वाकात्यहरितकात्यवर्जम् । जिह्वाकात्यं हरितकात्यञ्च वर्जयित्वा । जैह्वाकाता हारितका-ताः । किं पुनरत्र ज्यायः । गोत्रान्ताद्वाऽसमस्तवदित्येव ज्यायः ॥

॥ कै० ॥ ओदनपाणिनीया इति । पणिनोऽपत्यमित्यण् गाथिविदथीति प्रकृतिभावाट्टिलोपाभावः । पाणिनस्यापत्यं युवेतीञ् तस्य छात्रा इति विवक्षिते यूनि लुगितीञो लुक् तेनेञश्चेत्यण् न भवतीतिच्छो भवति ॥

॥ वि० ॥ कर्तव्या इदमपसंख्यानं वेत्युक्तं भवति । युवेतीञिति । प्रकृते च गोत्रशब्देनापत्यमात्रम् । अपत्याधिकारादन्यत्वादितिभावः । नन्वोदनपाणिनीया इत्यत्र वृद्धत्वे छोऽसमस्तवदतिदेशे इञन्तत्वादिञश्चेत्यणितिभेदः स्यादत आह । तेनेञश्चेति । येन यूनि विहितो न गोत्रे तेनेत्यर्थः । इञश्चेत्यत्र गोत्र इतिवर्तते पारिभाषिकं च तत्र गोत्रं गृह्यते इतिभावः । यत्तु तेन लुकेति तन्न प्रत्ययलक्षणस्य दुर्वारत्वात् । भाष्ये जिह्वाकात्यादिवर्जनं वृद्धसंज्ञापक्षेऽपि द्रष्टव्यम् ॥

॥ वि० ॥ अणिति । स च केवलेभ्यः कण्वादिभ्यश्छस्यापवादः । वृद्धसंज्ञापक्षे तु समुदायस्य कण्वादिषु पाठाभावात् प्रत्ययविधौ तदन्त-
विधिप्रतिषेधाच्च न तत्प्राप्तिरिति भावः ॥ ❋ ॥ त्यदादीनि च । भाष्येऽनुवर्त्तत इति । पूर्वसूत्रात्परतो गच्छति नवेति विचारः । ननूप-
सर्जनानां गणबहिर्भावेन कथन्त्यदादित्वमत आह । आदीति । सामर्थ्याद्भूतपूर्वगतिराश्रयिष्यत इतिभावः । अचामित्यस्य त्विति । इहादिग्रहणसम्बन्ध एव

॥ कै० ॥ पैङ्गलकाण्वा इति । कण्वादिभ्यो गोत्र इत्यण् वृद्धसंज्ञायान्तु छः स्यात् ॥ ❋ ॥ त्यदादीनि च । त्वात्पुत्रा इति ।
आदिग्रहणानुवृत्त्याऽन्यथानुपपत्त्योपसर्जनानामपि त्यदादित्वं स्यादितिभावः । अचामित्यस्य तूत्तरार्थैवानुवृत्तिः स्यात् तत्सम्बन्ध-
स्येहायोग्यत्वान्निर्द्धारणस्य समानजातीयविषयत्वात् । त्वदीय इति । व्यपदेशिवद्भावोऽत्र नास्ति अप्रातिपदिकेनेति निषेधात् ।

॥ भा० ॥ इदमपि सिद्धं भवति । पिङ्गलकाण्वस्य छात्राः पैङ्गलकाण्वाः ॥ ❋ ॥ त्यदादीनि च ।
यस्याचामादिग्रहणमनुवर्त्तते उताहो न । किञ्चातः । यद्यनुवर्तते इह च प्रसज्येत त्वत्पुत्रस्य छात्रास्त्वा-
त्पुत्राः । इह च न स्यात् त्वदीयो मदीय इति । अथ निवृत्तम् एङ् प्राचां देशे यस्याचामादिग्रहणं
कर्तव्यम् । एवन्तर्ह्यनुवर्तते । कथं त्वात्पुत्रा मात्पुत्रा इति । सम्बन्धमनुवर्तिष्यते ॥

॥ कै० ॥ सम्बन्धमिति । द्वितीयान्तमेतत् । सम्बन्धमनुरोत्स्यते न हास्यतीत्यर्थः । अथवा सम्बध्यत इति सम्बन्धः कर्मणि
घञ् नपुंसकेऽपि बाधकाभावाद्भवति । वृद्धिग्रहणसम्बद्धमादिग्रहणमिहानुवर्तत इति नास्ति तस्य त्यदादिभिः सम्बन्धः ॥

॥ वि० ॥ भाष्यतात्पर्य्यमिति भावः । व्यपदेशिवद्भावेन केवलेऽपि सिद्धमिति इह च नेति भाष्यमयुक्तमत आह । व्यपदेशिवदिति । स निषेधः प्रत्ययविधौ
तन्मात्रोपयोगिसंज्ञाविधौ चेतिभावः । तदनाश्रित्यैवेदम् । ननु नपुंसके भावे क्तल्युटौ घञजपवादौ स्त्र्यधिकारात् परतो वासरूपविधिश्च नेति सम्बन्धमिति
नपुंसकप्रथमैकवचनमनुपपन्नमत आह । द्वितीयान्तमिति । नपुंसकेऽपीति । घञजपः पुंसीति भावघञ्विषयकं क्वाचित्कञ्चेतिभावः ॥



॥ वि० ॥ चेतनावतस्त्यागोपादाने सम्भवतो यस्यादिरित्यस्य तु कथं ते स्यातामत आह । एतदिति । योग्यत्वादादिरित्यस्यैङित्येकवचनान्तेन
सम्बन्ध इतिशेषः । तुल्यजातीयस्येत्युपलक्षणं त्यदादीनीत्यनेनाऽऽदिरित्यस्य भिन्नविभक्तिकत्वाच्चेत्यपि बोध्यम् ॥ ❋ ॥ एङ् प्राचाम् । कुणिनेति ।
विधेयसम्बन्धलाभात्प्राग्ग्रहणमाचार्यनिर्देशार्थमन्यथा प्राग्देश इत्येव वदेदितिभावः । लक्ष्यावैषम्याय च व्यवस्थितविभाषाश्रयणं तत्फलमाह । तेनेति । अन्येन त्विति ।

॥ कै० ॥ तद्यथेति । एतद्दर्शयति । स्वरितत्वप्रतिज्ञानादुत्तरसूत्र एव योग्यत्वाद्यस्याचामादिरितिसम्बध्यते एङ् यस्याचामादिस्तद्वृद्ध-
मितिवाक्यार्थसम्पादनाय । इह त्वयोग्यत्वात् सम्बन्धानुपपत्तिः । तुल्यजातीयस्य निर्द्धारणात् त्यदादीनाञ्चाज्रूपत्वाभावाद्यस्याऽचामाद-

॥ भा० ॥ वृद्धिर्यस्याचामादिस्तद्वृद्धं त्यदादीनि च वृद्धसंज्ञानि भवन्ति । वृद्धिर्यस्याचामादिस्तद्वृद्धम् । एङ् प्राचां
देशे यस्याचामादिग्रहणमनुवर्त्तते वृद्धिग्रहणं निवृत्तम् । तद्यथा । कश्चित्कान्तारे समुपस्थिते सार्थमुपादत्ते स यदा
निष्क्रान्तकान्तारो भवति तदा सार्थं जहाति ॥ ❋ ॥ एङ् प्राचां देशे । एङ् प्राचां देशे शैषिकेष्वितिवक्तव्यम् ॥

॥ कै० ॥ यत्त्यदादय इति तत्सम्बन्धाभावात् ॥ ❋ ॥ एङ् प्राचाम् । कुणिना प्राग्ग्रहणमाचार्यनिर्देशार्थं व्यवस्थितविभाषात्वञ्चे-
तिव्याख्यातं तेन क्रोडो नामोदग्रामस्तत्र भवः क्रौड इत्यणेव भवति । अन्येन तु प्राग्ग्रहणं देशविशेषणं व्याख्यातं तेन देवदत्तो नाम
वाहीकेषु ग्रामस्तत्र भवो दैवदत्त इत्यवृद्धत्वाट् ठञ्ञिठौ न भवतः । भाष्यकारस्तु कुणिदर्शनमशिश्रियत् ॥

॥ वि० ॥ श्रुतान्वये सम्भवत्यन्येनान्वयोऽनुचित इति तद्भावः । वाहीकश्च देशविशेषस्तत्र स ग्रामः प्राग्देशबहिर्भूतः । वाहीकदेशश्चोभयसम्बद्धः प्राग्देशबहि-
र्भूतो वा । अत एवाश्वयात्र्यवितिसूत्रे शाकलनाम्नो ग्रामस्य उदीच्यवाहीकोभयरूपता भाष्यकृतोक्ता । एतेनोभयबहिर्भूता वाहीका इत्यपास्तम् ॥

॥ वि० ॥ वाहीकग्रामाविति । श्राद्ये अस्याप्राग्देशीयाविति शेषः पूरणीय इतिबोध्यम् । अन्यथा कुणिमताश्रयणेऽस्य प्रमाणता नोपपद्येत । ठञ्ञिठाविति । वाहीकग्रामेभ्यश्चेत्यत्र वृद्धादित्यनुवृत्तेः । प्रागुदग्विभागस्तु शरावत्यास्तु योऽवधेः देशः प्राग्दक्षिणः प्राच्य उदीच्यः पश्चिमोत्तर इत्यमरेण दर्शितः । शरावती चोत्तरपूर्वाभिमुखीत्येके । ऐशानीतो नैर्ऋत्यां पश्चिमाब्धिगामिनी सेत्यन्ये । उभयथापि प्रागुदक्स्वरूपे न विवादः। वाहीकलक्षणञ्च पञ्चानां सिन्धुषष्ठानामन्तरं ये समाश्रिताः । वाहीका नाम ते देशा न तत्र दिवसं वसेदिति कर्णपर्वणि । एवञ्च धर्मबहिर्भूतत्वाद्वाहीकत्वम् । शतद्रुविपाशैरावती-

॥ कै० ॥ सेपुरं स्कौनगरञ्च वाहीकग्रामौ । तत्र वृद्धत्वाद्वाहीकग्रामेभ्यश्चेति ठञ्ञिठौ भवतः । शैषिकेष्विति वचना-दपत्यविकारयोर्वृद्धलक्षणप्रत्ययाभावः । कौडदेवदत्तयोस्त्वप्राग्देशवाचिनोर्व्यवस्थितविभाषया न भवतीति प्राग्देशवाचिनस्तु

॥ भा० ॥ सैपुरिकी सैपुरिका । स्कौनगरिकी स्कौनगरिकेति ॥ ❁ ॥ इति श्रीमद्भगवत्पतञ्जलि-विरचिते व्याकरणमहाभाष्ये प्रथमाध्यायस्य प्रथमे पादे नवममाह्निकम् पादश्चायं समाप्तः ॥ ❁ ॥

॥ कै० ॥ देवदत्तस्य वृद्धसंज्ञत्वात् काश्यादित्वात् वृद्धलक्षणौ ठञ्ञिठौ भवतः ॥ ❁ ॥ इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे प्रथमाध्यायस्य प्रथमे पादे नवममाह्निम् पादश्चायं समाप्तः ॥ ❁ ॥

॥ वि० ॥ वितस्ताचन्द्रभागेतिपञ्चनद्यः सिन्धुः षष्ठस्तन्मध्यदेशो वाहीक इति तद्व्याख्यातारः । कुणिमताश्रयणे शैषिकेष्वित्यस्य वैयर्थ्यं व्यवस्थितविभाषयैव सिद्धेः । अतोऽन्यमताश्रयेणैव भाष्यम् । भाष्यप्रामाण्याच्चैतावबाहीकग्रामावपीत्यन्ये । भाष्योक्तव्यवस्थितविभाषातिरिक्ता न व्यवस्थिता इत्यस्यार्थस्य शैषिकेष्वि-तिज्ञापकमित्यपरे । अपत्येत्यादि । उदीचां वृद्धादिति नित्यं वृद्धेतिचेति सर्वेष्टसिद्धिः ॥ ❁ ॥ इति कालोपनामकशिवभट्टसुतसतीगर्भजनागोजिभट्टविरचिते महाभाष्यप्रदीपोद्द्योते प्रथमाध्यायस्य प्रथमे पादे नवममाह्निकम् पादश्चायं समाप्तः ॥ ❁ ॥

